अथ वादे निग्रहस्थानानि कानिचित् सन्ति कानिचिन्नेति किमयं पदार्थानां नियोगः, अथ तथाभूतानामन्वाख्यानमिति ? किं चातः ? यदि तावन्नियोग एवं भवतैवं मा [1]भूतेति पदार्थान्नियुञ्जानो भवानुपेक्षणीयः । अथ स्वरूपत एवावस्थिताः पदार्थाः,ताननुजानाति भवानिति कस्मान्निग्रहस्थानानि कानिचिद् वादे भवन्ति, कानिचिन्नेति वक्तव्यम् । न, लक्षणपरतन्त्रत्वादर्थतथाभावस्येति ब्रूमः । न पदार्था वक्तुर्नियोगमनुविधीयन्ते, [2]यथा तु भवन्ति तथाभूता एवार्था अन्वाख्यायन्ते । सोऽयं लक्षणपरतन्त्रं तत्त्वमन्वाचक्षाणो नाभ्याख्येयः पदार्था भवता नियुज्यन्त इति, वादस्य शिष्यादिविषयत्वात् । न च शिष्यादिभिः सह वादं कुर्वाणेनापि अप्रतिभादिचोदना[3] कार्या, तावदस्याभिधेयं यावदसौ बोधितो [4]भवतीति । प्रमाणप्रतिरूपकत्वात् तु हेत्वाभासानामवरोध[5] इति । किं कारणम् ? भ्रान्तेः पुरुषधर्मत्वात् । पुरुषधर्म एवायं भ्रान्तिरिति । सोऽयं भ्रान्त्या प्रमाणं ब्रुवन् प्रमाणाभासमपि ब्रूते । अतोऽस्य निग्रह इति । कः पुनः शिष्याचार्ययोर्निग्रह इति ? विवक्षितार्थाप्रतिपादकत्वम् । न्यूनाधिकापसिद्धान्तानां वादे कथमवतारः ? प्रमाणसामान्यादेव । न्यूनस्यापि प्रमाणसामान्यम् । अधिकस्यापि [6]प्रमाणसामान्यमस्ति । अवयवहीनता चावयवाधिकता च वाक्यस्य भ्रान्त्या भवत इत्यस्त्यवतारः[7] । **जल्पवितण्डयोस्तु निग्रहस्थानानीति** । विजिगीषुर्जल्पवितण्डाभ्यां प्रत्यवस्थेयः[8] । तस्य यथासंभवं निग्रहस्थानानि वक्तव्यानीति नोपेक्षणीयः ॥

छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनम्, परवाक्ये पर्यनुयोगः परिज्ञानार्थमेव केवलम् । छलजातिनिग्रहस्थानानि स्वयं न प्रयोज्यानीति[9] । जातेस्तु[10] **स्वयं च सुकरः प्रयोग** इति । न, व्याघातात् । स्ववाक्ये परिवर्जनं सुकरश्च प्रयोग इति व्याहतम् । यदि सुकरः प्रयोगः, न स्ववाक्ये परिवर्जनम् । अथ स्ववाक्ये परिवर्जनम्, न सुकरः प्रयोग इति व्याघातः । न व्याघातः, प्रश्नापाकरणार्थत्वात् । स्वयं च सुकरः प्रयोग इति किमुक्तं भवति ? परेण जातौ प्रयुक्तायां प्राश्निकान् ब्रवीति जातिरनेन प्रयुक्तेति । त एवं प्रत्यनुयुञ्जीरन्[11] कथं जातिः, कतमा जातिरिति । अतो जात्यभिज्ञः सुखं[12] शक्नोति वक्तुम् एवं जातिः, इयं च जातिरिति । एवं च सुकरः प्रयोग इति । तस्मादेते संशयादयः पदार्थाः प्रमाणे[13] प्रमेये चान्तर्भवन्तो विद्याप्रस्थानभेदज्ञापनार्थं पृथगुपदिष्टा इति ॥

---

१. मा भवतेति, एवं पदार्थाननुयु° C २. यथानुभवन्ति J ३. °देशना C ४. भवतीति नास्ति J ५. अविरोधः C ६. प्रमाणसामान्यमस्तीति पतितम् C ७. °त्यस्यावतारः C ८. विजिगीषुभिः प्रत्यवस्थेयम् C ९. प्रयोक्तव्यानि । C १०. जातेश्च C ११. पर्यनुयु° C १२. सुखमिति नास्ति C १३. प्रमाणेषु J

**सेयमान्वीक्षिकी** न्यायविद्या **प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपः सर्वविद्यानां** भवति, प्रकाशकत्वात् प्रदीपः[1]। प्रमाणादिप्रतिपादितमर्थमितरा विद्याः प्रतिपद्यन्त इति। किमितरासु विद्यासु प्रमाणादीनि न सन्ति? न सन्तीत्याह। कथं न सन्ति? अनधिकारात्। न ता विद्याः प्रमाणादिपरिज्ञानेनाधिक्रियन्त इति, प्रमाणादिप्रकाशिते त्वर्थे ताः प्रवर्तन्त इति। **उपायः सर्वकर्मणामिति**। [2]प्रमाणप्रकाशितानां करणादुपायः। यस्मात् [3]प्रमाणप्रकाशितमर्थमितरा विद्याः कुर्वन्ति। **आश्रयः सर्वधर्माणामिति**, सर्वविद्योपकारकत्वादाश्रयः। सर्वासां विद्यानामियमुपकरोति, उपकारित्वादाश्रयो राजभृत्यवदिति ॥

**तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यम्**। सर्वासु विद्यासु तत्त्वज्ञानमस्ति निःश्रेयसाधिगमश्चेति। त्रय्यां तावत् किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति? तत्त्वज्ञानं तावदग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानमनुपहतादिपरिज्ञानं च। निःश्रेयसाधिगमोऽपि स्वर्गप्राप्तिः। तथा ह्यत्र स्वर्गः फलं श्रूयत इति। अथ वार्तायां किं तत्त्वज्ञानं को वा निःश्रेयसाधिगम इति? भूम्यादिपरिज्ञानं तत्त्वज्ञानम्। भूमिः कण्टकाद्यनुपहतेत्येतत् तत्त्वज्ञानम्। निःश्रेयसं सस्याधिगमस्तत्फलम्[4]। दण्डनीत्यां किं तत्त्वज्ञानं को वा निःश्रेयसाधिगम इति? सामदानभेददण्डानां यथाकालं यथादेशं यथाशक्ति विनियोगस्तत्त्वज्ञानम्। निःश्रेयसमपि पृथिवीविजय इति। **इह त्वध्यात्म[5]विद्यायामात्मादिज्ञानं तत्त्वज्ञानम्, निःश्रेयसाधिगमोऽपवर्गप्राप्तिरिति**।

यत् पुनः प्रमाणादितत्त्वज्ञानान्निःश्रेयसम्, न तद् विवक्षितम्। मदमानादिनिमित्तत्वाद् वादादिपरिज्ञानस्य नाभिसंबन्धो निःश्रेयसेनेति केचित्। न चानभिसंबद्धं[6] प्रतिपादयतीति अयुक्तमुक्तं प्रमाणादितत्त्वज्ञानान्निःश्रेयसमिति। न, सूत्रार्थापरिज्ञानात्। सूत्रार्थं नो न व्यज्ञासीः, यत एवं [7]प्रत्यपस्थाः। क एवं सूत्रार्थं वर्णयन्ति प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसमिति? अपि तु यत्परिज्ञानान्निःश्रेयसं [8]तदनन्तरसूत्रे वक्ष्यामः। उक्तं च **आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम इति**। यच्चेदमुच्यते, [9]मदमानादिनिमित्तभूता वादादय इति, एतच्च न, असति भावात् सति चाभावात्। असति वादादिज्ञाने रागादयः सनकादीनां भवन्ति, सति च तत्त्वविदां न भवन्ति। तस्मान्न निमित्तं वादादिपरिज्ञानं रागादीनामिति ॥१॥

---

१. प्रदीपवत् C  २. प्रकाशितानां C  ३. प्रमाणादि J  ४. कृष्याद्यधिगमश्च निःश्रेयसमिति, तत्फलत्वात् C  ५. °विद्यायाः J  ६. °संबन्धं J  ७. प्रत्यवास्थाः J  ८. तदुत्तरसूत्रे C  ९. °निमित्तं वादा° C

# ॥ न्यायवार्त्तिकतात्पर्यटीका ॥

विश्वव्यापी विश्वशक्तिः पिनाकी
विश्वेशानो विश्वकृद् विश्वमूर्त्तिः ।
विश्वज्ञाता विश्वसंहारकारी
विश्वाराध्यो राधयत्वीहितं नः ॥

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तायिने ॥
ग्रन्थव्याख्याच्छलेनैव निरस्ताखिलदूषणा ।
न्यायवार्त्तिकतात्पर्यटीकास्माभिर्विधास्यते ॥
इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥

अथ भगवताक्षपादेन निःश्रेयसहेतौ शास्त्रे[1] प्रणीते, व्युत्पादिते च भगवता[2] पक्षिलस्वामिना, किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः[3] सूत्रकारोक्तशास्त्रप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति—**यदक्षपाद** इति ॥

यद्यपि **भाष्यकृता** कृतव्युत्पादनमेतत्, तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमिति **उद्द्योतकरेण**[4] स्वनिबन्धोद्द्योतेन तदपनीयत इति प्रयोजनवानारम्भ इति । सूत्रोक्तप्रयोजनानुवादश्च प्रयोजनवच्छास्त्रव्युत्पादनेन स्वनिबन्धस्य प्रयोजनवत्तां प्रेक्षावत्प्रवृत्त्यङ्गं दर्शयितुम्, व्युत्पादनमात्रस्य च काकदन्तपरीक्षाग्रन्थसाधारण्येन प्रेक्षावत्प्रवृत्त्यनङ्गत्वात् । अत्र चैकविंशतिप्रभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः **शमः**, तस्मै । कस्य ? **जगतः** । परमकारुणिको हि भगवान् मुनिः[5] जगदेव दुःखपङ्कमग्नमुद्दिधीर्षुः शास्त्रं प्रणीतवान् । तत्र यदि कश्चिन्न प्रवर्तेत, किमायातं शास्त्रस्य ? न चानधिकृतपुरुषव्युत्पादनेनास्य तपोनिधेः कश्चिदस्ति दोषः । तथा च विश्वामित्रस्त्रिशङ्कुं याजयामास, वशिष्ठश्चाधमयोनिजामक्षमालामुपयेमे । तपःप्रभाव एव हि तादृशस्तेषां यत एवंविधाः पाप्मानो विलीयन्त इति । न

---

१. प्रतिपादिते J २. अत्रभवता J ३. °रोक्तप्रयो° C ४. स्वेति नास्ति J
५. हि मुनिः C

चास्मदादीनां मन्दतपसामयं प्रसङ्गः। न हि गजानामुदर्यं तेजो वटकाष्ठमशितं पचतीत्यस्मदादीनामप्युदर्येण तेजसा तथा भवितव्यम्। कुतार्किकैर्दिङ्नागप्रभृतिभिराहितमज्ञानं **कुतार्किकाज्ञानमिति** ॥

अविगीतशिष्टाचारपरम्पराप्राप्तः परमशिष्टेन वार्त्तिककारेण कृतोऽपीष्टदेवतानमस्कारो न शास्त्रे[1] निवेशितः। न खल्वन्यदपि मङ्गल्यं शास्त्रे निवेशितम्, प्रसिद्धतरतया तु मङ्गल्यान्तरवच्छिष्या अवगमिष्यन्तीति सर्वमवदातम् ॥

तत्र संक्षेपतः प्रथमसूत्रमनूद्य तस्य तात्पर्यमाह—**प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रम्। तस्य** शास्त्रस्य **अभिसंबन्धवाक्यम्।** आदिग्रहणेन क्रमप्राप्तस्यैव प्रथमं व्याख्यानं युक्तम्, न द्वितीयादेरिति दर्शितम्। अभिमतः संबन्धोऽभिसंबन्धः, शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः। तस्य इदं[2]सूत्रवाक्यमभिसंबन्धवाक्यम्। प्रमाणादिपदार्थतत्त्वज्ञानादित्यत्र हि [3]ज्ञायतेऽनेनेति ज्ञानमिति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमुच्यते। पञ्चम्या च तस्य हेतुत्वम्। न हि विषघ्नमन्त्रवत् [4]स्वरूपमात्रेण तदविवक्षितार्थं निःश्रेयसहेतुरिति पदार्थतत्त्वावगमकरणतया शास्त्रमपदिशति,[5] न तु स्वरूपेण। तेन शास्त्रस्य निःश्रेयसे कर्तव्ये प्रमाणादितत्त्वावगमोऽवान्तरव्यापार इत्युक्तं भवति। तथा च प्रमाणादिपदार्थतत्त्वं प्रतिपाद्यम्, प्रतिपादकं च शास्त्रमिति शास्त्रप्रमाणादिपदार्थतत्त्वयोर्ज्ञाप्यज्ञापकभावश्च[6] प्रमाणादिपदार्थतत्त्वज्ञाननिःश्रेयसयोः कार्यकारणभावलक्षणश्च संबन्धः सूचितो भवति। तदिदमभिधेयसंबन्धप्रयोजनप्रतिपादनार्थत्वं प्रथमसूत्रस्य। [7]पत्पदार्थतत्त्वज्ञानस्य च यथा निःश्रेयसाधिगमं प्रत्युपयोगः तथाग्रे निवेदयिष्यते। विनिश्चिताप्तभावाश्च मुनेराप्तत्वेन तद्वाक्यात् प्रयोजनादि विनिश्चित्य प्रवर्त्स्यन्ति। आप्तत्वाविनिश्चये त्वर्थसंशयात्[8]। न खलु कृष्यादावपि विनिश्चितसस्याद्यधिगमानां प्रवृत्तिः, अन्तरावग्रहादिप्रतिबन्धेन फलानुत्पादस्यापि संभवात्। न च प्रयोजनादिवाक्याभावेऽपि[9] संशयस्य साधकबाधकप्रमाणाभावेन न्यायप्राप्तत्वेन तदभिधानमनर्थकमिति साम्प्रतम्, विशेषस्मृत्यनपेक्षस्य संशयस्यानुत्पादात्। वाक्यात् तु विशेषस्मृतिरिति नानर्थक्यम्[10] ॥

तदेवं प्रथमसूत्रतात्पर्यमुक्त्वा भाष्यस्यादिवाक्यतात्पर्यमाह—**प्रमाणतोऽर्थप्रतिपत्तावित्येवमादि[11] तस्यानुसन्धानवाक्यम्।** तस्य शास्त्रस्य निःश्रेयसाधिगमेन

१. ग्रन्थे C २. सूत्रं वाक्यम् C ३. तत्त्वं ज्ञायते……तत्त्वज्ञानम् C ४. स्वान्वयमा॰ C ५. उपदि॰ C ६. चकारो नास्ति C ७ यत् C J, अत्र पदार्थकः पच्छन्दोऽभिप्रेतः। ८. ॰सन्देहात् C ९. ॰संशयाभावे॰ C १०. नानर्थकम् C ११. ॰वित्यादि C

सह सूत्रेण घटितस्य । कुतश्चिन्निमित्ताद् विघटनशङ्कायाम् अनु सूत्रघटनायाः पश्चात् सन्धानं घटनम् अनुसन्धानम् , तस्य वाक्यमनुसन्धानवाक्यमिति ॥

एवं किलात्र शङ्क्यते—यदशक्यानुष्ठानोपायोपदेशकं तदनर्थकम् , यथा ज्वहरतक्षकचूडारत्नालङ्कारोपदेशकं वचनम्[1] । तादृशं चेदं शास्त्रमिति । तथा हि प्रमेयादीनां तावत्पदार्थानां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनम् । न हि प्रमाणं तत्त्वेनानवधारितं बोधकत्वमात्रेण स्वगोचरावधारणायालं तावन्मात्रस्य तदाभाससाधारण्यात्, अपि तु बोधकत्वैकार्थसमवेतेनाव्यभिचारित्वेन । तदेव हि प्रामाण्यम् । तच्चाशक्यावधारणम् । तदनवधारणाच्च प्रमेयादयो दुरवधारणाः । तथा हि विज्ञानस्य तावत्प्रामाण्यं स्वतो वा निश्चीयते, परतो वा ? न तावत् पूर्वः कल्पः । न खलु विज्ञानमनात्मसंवेदनमात्मानमपि गृह्णीयात् , प्रागेव तत्प्रामाण्यम् । नापि विज्ञानान्तरम्, तद्विज्ञानमित्येव गृह्णीयात् , न पुनरस्याव्यभिचारित्वम्[2] । ज्ञानत्वमात्रं च तदाभाससाधारणमिति न स्वतः प्रामाण्यावधारणम् । एतेन स्वसंवेदननयेऽपि अव्यभिचारग्रहणं प्रत्युक्तम् । नापि परतः । परं हि तद्गोचरं वा ज्ञानमभ्युपेयेत, अर्थक्रियानिर्भासं वा ज्ञानम् , तद्गोचरनान्तरीयकार्थान्तरदर्शनं वा । तच्च सर्वं स्वतोऽनवधारितप्रामाण्यमाकुलं सत् कथं पूर्वं प्रवर्तकं ज्ञानमनाकुलयेत् ? स्वतो वास्य प्रामाण्ये किमपराद्धं प्रवर्तकज्ञानेन येन तस्मिन्नपि तन्न स्यात् । न च प्रामाण्यं ज्ञायते स्वतः इत्यावेदितम् । यदा च संवेदनप्रामाण्यमुक्तेन क्रमेण दुरधिगमं तदा कैव कथेन्द्रियादीनामव्यभिचारिसंवेदनकार्यव्यङ्ग्यप्रमाणभावानाम् ? तदेवं दृष्टार्थाः प्राणभृतां व्यवहारा भवन्तु सन्देहादपि यथातथा, अदृष्टार्थास्तु बहुवित्तव्यायाससाध्या वैदिका व्यवहारा दत्तजलाञ्जलयः प्रसक्ताः । तस्मात् प्रमाणादिपदार्थतत्त्वज्ञापनद्वारेण[3] न शास्त्रं निःश्रेयसेन संबध्यत इति । सेयमाशङ्का प्रामाण्यज्ञानोपायकथनेनादिवाक्येन भाष्यकृता निराकृता । तथा हि प्रमाणमर्थवदिति नित्ययोगे मतुप् । नित्यता चाव्यभिचारिता । तेनार्थाव्यभिचारीत्यर्थः । इयमेव [4]चार्थाव्यभिचारिता प्रमाणस्य [5]यद्देशकालनरावस्थान्तराविसंवादोऽर्थस्वरूपप्रकारयोस्तदुपदर्शितयोः । अत्र हेतुः **प्रवृत्तिसामर्थ्यात्** समर्थप्रवृत्तिजनकत्वात् । यदि पुनरेतदर्थवन्नाभविष्यत् , न समर्थप्रवृत्तिमकरिष्यत् , यथा प्रमाणाभास इति व्यतिरेकी हेतुः । अन्वयव्यतिरेकी वा । अनुमानस्य स्वतः प्रमाणतया अन्वयस्यापि संभवात् । प्रवृत्तिजनकत्वं तु

---

१. °रत्नाहरणोप° वाक्यम् C २ °चारम् J ३. °ज्ञानद्वा° C ४. चास्याव्य° J
५. °कालान्तरावस्था° C

प्रमाणस्य न साक्षात्, किं त्वर्थप्रतिपत्तिजननद्वारेणेत्याह—**प्रमाणतोऽर्थप्रतिपत्ताविति**। सर्वस्य चास्योपपत्तिं वार्त्तिकव्याख्यानावसरे निवेदयिष्यामः॥

स्यादेतत्। भवन्तु प्रमाणादयः पदार्थाः शक्यज्ञानाः, शास्त्रेण तु ते नाभिधीयन्त इति न निःश्रेयसेन संगतिः शास्त्रस्येत्यत आह—**शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात्**। यद्यपि श्रेयो दुःखनिवृत्तिमात्यन्तिकीं वक्ष्यति, तथापि सोपायैव सा अत्र श्रेयःशब्देन विवक्षिता, तन्मात्रस्य शास्त्राविषयत्वात्। तदयमर्थः। शास्त्रं तावदेतत् पुरुषश्रेयः सहोपायेनाभिधत्त[1] इत्यनुभवसिद्धं [2]सदशक्यानुष्ठानतयापवदितव्यम्। सा चेदशक्यानुष्ठानतापनीता[3] प्रमाणत इत्यादिना संहितं निःश्रेयसेन सह शास्त्रमिति। शास्त्रस्येत्यादि ग्रहणकवाक्यं विवृणोति—**शास्त्रं पुनरित्यादिना उपभोगात् प्रक्षयेणेत्यन्तेन**। प्रमाणादिवाचकपदग्रहणेन तल्लक्षणानि च तत्परीक्षाश्चोपलक्षयति। तथा च **पञ्चाध्यायी शास्त्र**मित्युक्तमित्यविरोधः। पञ्चाध्यायीत्यनेन व्यूहः समूहिनामुचितानुपूर्वी। उपलक्षकपदस्वरूपमाह—**पदं पुन**रिति। एकस्मृतिसमारूढा वर्णा एकार्थप्रतिपादनावच्छिन्नाः समूहः। एवं स्वार्थस्मृत्यवान्तरव्यापाराणां सूत्रपदानां नानापदार्थविशिष्टैकपदार्थरूपवाक्यार्थप्रत्यायनकार्यावच्छिन्नानां[4] समूहो वेदितव्यः। एवं च क्वचित् केनचिदर्थेनैकेन सूत्रवाक्यानामेकवाक्यत्वं समूहः प्रकरणम्। प्रकरणानामपि कयाचित् स्वार्थसंगत्या समूह आह्निकम्। एवं तत्र तत्र वेदितव्यम्। एताश्च प्रकरणाह्निकाध्यायार्थसंगतीस्तत्र तत्र लेशतो दर्शयिष्यामः॥

तदेवं शास्त्रस्वरूपं दर्शयित्वा नान्तरेण तदर्थकथनं पुरुषश्रेयोऽभिधायकत्वमस्य सिध्यतीति तदर्थं कथयति—**तत्पदार्था इति**। ननु प्रमाणादीनां प्रतिनरमानन्त्येन दुर्ज्ञानत्वमिति तदवस्थमेवानर्थक्यं शास्त्रस्य प्रसक्तमित्यत आह—**षोडशात्मानः**। आत्मा स्वभावः प्रमाणादीनां प्रमाणत्वादिसामान्यविशेष इति यावत्। एतदुक्तं भवति। आन्तर्गणिकभेदादानन्त्येऽपि स्वसामान्यविशेषैः संगृहीता न दुर्ज्ञाना इति यतोऽस्य पदार्थाः प्रमाणादयः, **तत्** तस्मात् शास्त्रं पुरुषश्रेयोऽभिधत्ते॥

स्यादेतत्। प्रमाणादयः पदार्थाः प्रामाणिका अप्रामाणिका वा? अप्रामाणिकत्वे कल्पनामात्रनिर्मिताः कथं निःश्रेयसाय कल्पन्ते? न च षोडशात्मानः कल्पनाः कोशस्यानन्तप्रसरत्वात्[5]। प्रामाणिकत्वे वा प्रमाणादेव तत्सिद्धेः शास्त्रस्य वैयर्थ्यमित्यत आह—

---

१. °श्रेयोऽभि° C २. तदशक्यानुष्ठानोपायोपदेशतया° J ३. °नुष्ठानोपायोपदेशताऽप° J ४. °ष्टैकार्थप्रत्ययैककार्या° C ५. °प्रसव J

**प्रत्यक्षेति** । प्रत्यक्षानुमानाधिगतग्रहणेनाप्रामाणिकत्वं निषिद्धम् । अतएव **वस्तुतत्त्वमिति** । प्रमाणादयः पदार्था नोपमानविषया इति नोपमानमुपन्यस्तम् । यद्यपि प्रमेयमात्माद्यपवर्गान्तलक्षणमागमिकं तथाप्यागमस्याप्तप्रणेतृकतया तत्रापि मूलभूतमनुमानं प्रत्यक्षं वास्तीति प्रत्यक्षानुमाने एव दर्शिते । ननूक्तं प्रामाणिकत्वे शास्त्रवैयर्थ्यमित्यत आह—**तस्य विषय** इति । व्यवहरमाणा अपि[1] प्रमाणैर्लौकिका वैनयिकबुद्धिविरहिणो नैतान् पदार्थान् विविञ्चते । अविविक्ताश्चैते न निःश्रेयसाय कल्पन्त इति **अनधिगते**त्युक्तम् । आध्यात्मिकी शक्तिः शुश्रूषादिः । पुरुषेत्युक्तम् । तत्र विवक्षितं पुरुषविशेषं ग्रहीतुं संभविनः पुरुषप्रकारान्[2] दर्शयति—**पुरुषः पुनरिति** । हेयं दर्शयति—**तत्रेति** । उपादेयानाह—**इतर इति** । **अपेक्षा** जिज्ञासा । सा सन्दिग्धस्य तावदस्ति शिष्यस्य । विप्रतिपन्नस्य तु साक्षिणां पुरतो जल्पवितण्डाभ्यां शिष्यमाणस्य विगलितेऽहङ्कारे सन्दिग्धस्य सञ्जातजिज्ञासस्य सापेक्षस्य सतः । अप्रतिपन्नस्यापि केनचित् प्रकारेण सन्देहमापाद्य सापेक्षीकृतस्य प्रतिपाद्यता । तदिदमुक्तम्—**इतरे सापेक्षाः सन्तः प्रतिपाद्या** इति । असन्दिग्धोऽपि तत्त्वप्रतिपादनाय कारुणिकेन सन्दिग्धः कृत्वा प्रतिपाद्यत इति । तत् किं सापेक्षमधिकृत्य शास्त्रं प्रवृत्तम् ? तथा च प्रमातॄणां न प्रमाणान्तरे प्रवृत्तिः स्यादित्यत आह—**ते यदेति** । कश्चिद् विषयं जिज्ञासवो यदेन्द्रियाद्यपेक्षन्ते, तदा प्रत्यक्षेण प्रतिपाद्याः । एवमुत्तरमपि योज्यम् । अयमभिसन्धिः, न दृष्टप्रयोजनोपयोगिवस्तुजिज्ञासा इहापेक्षाभिमता, किं तु निःश्रेयसोपयोगिपदार्थजिज्ञासा । सा चास्मिन्नेव शास्त्रे प्रवृत्तिहेतुः, नान्यत्र । तदिदमुक्तम्—**यदा पुनरिति** । परमपुरुषार्थसाधनं तु जिज्ञासव इति शेषः । इहाभिमतं श्रेयो निर्धारयितुं श्रेयोमात्रप्रकारान् आह—**श्रेयः पुनः सुखमहितनिवृत्तिश्च** । तत्राप्यवान्तरप्रकारानाह—**तच्छ्रेयः** सुखं दुःखनिवृत्तिश्च **भिद्यमानं द्विधा व्यवतिष्ठते** । तदाह—**दृष्टादृष्टभेदेन** । न व्यासज्य किं तु प्रत्येकमित्याह—**दृष्टं सुखं** स्रक्चन्दनवनितादिभोगजन्म । **अदृष्टं** सुखं स्वर्गादि । एवं च दुःखनिवृत्तिरपि श्रेयो दृष्टमदृष्टं चेति योजनीयं चकारलोपात् । अहितनिवृत्तेः श्रेयस आत्यन्तिकानात्यन्तिकत्वेन[3] दृष्टादृष्टस्य भेदमाह—**अहितनिवृत्तिरपीति** । अभिमतं श्रेयो निर्धारयति—**आत्यन्तिकीति** । **पुनरिति** निर्धारणमवद्योतयति । आत्यन्तिकत्वं निवृत्तेर्निवृत्तस्य पुनरनुत्पादः । स च कार्यकारणतदनुषङ्गिनिवृत्त्या लक्ष्यते । न ह्यकारणं कार्यं जायते । तदिदमुक्तम्—**एकविंशतिप्रभेदभिन्नदुःखहान्येति** । गौणमुख्यभेदेन चैक-

---

१. °माणाभावे C २ संभाविनः पुरुषान् C ३. °त्यन्तिकत्वानात्यन्तिकत्वे तद्दृ° C

विंशतेः शरीरादीनां दुःखत्वप्रकारानाह—**एकविंशतीति**। षष्ठमिन्द्रियं मनः। तस्य विषय इच्छाद्वेषप्रयत्नाः। यद्यपि विषयः शरीरमपि तथाप्यन्यथास्य दुःखहेतुभाव इत्याह—**शरीरमिति** शरीरावच्छिन्न आत्मप्रदेशो दुःखायतनमिति शरीरं दुःखायतनमुक्तम्। इन्द्रियविषयबुद्धीनां दुःखत्वोपचारे कारणमाह—**इन्द्रियाणीति**। तत्रेन्द्रियाणि तावद् गन्धादिविषयबोधनात्, विषया बोध्यत्वात्। बुद्धयस्तु साक्षाद् दुःखसाधनानीति दुःखत्वेनोपचर्यन्ते। [1]सुखस्य दुःखत्वोपचारबीजमाह—**सुखमिति**। साधनपारतन्त्र्यं क्षयित्वं काम इति दुःखहेतवः सकलसुखानुसङ्गिनः, तस्मात् सुखमपि दुःखानुषङ्गि। उक्तप्रकारदुःखहानिसाधनमाह—**तस्य हानिरिति**। संशयादितत्त्वज्ञानपरिशोधितपरमन्यायमार्गः खलु हेयोपादेयभूतद्वादशविधप्रमेयतत्त्वपरिभावनभुवा प्रसंख्यानेन निर्मृष्टनिखिलप्रवृत्तिहेतुदोषानुषङ्गोऽप्रवर्तमानो न शरीरेन्द्रियादिहेतुमपूर्वधर्माधर्मप्रचयमातनोति[2]। अनादिभवपरम्परोपात्तं च धर्माधर्मप्रचयमनन्तमप्यनियतविपाकसमयमपि प्रसंख्यानपरिपाकप्रभावात् परितस्तत्तदुपभोगभागिनः कायान् निर्माय तत्तत्फलोपभोगात् प्रक्षिणोति। अचिन्त्यसामर्थ्यातिशयो हि समाधिः। यथाहुरत्रभवन्तः[3],

को हि योगप्रभावादृते अगस्त्य इव समुद्रं पिबति, स इव च दण्डकारण्यं सृजति?
[ योगभाष्ये ८.१० ]

इति। सेयमात्यन्तिकी दुःखनिवृत्तिः श्रेयः। तदिदमुक्तम्—शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वादिति॥

स्यादेतत्। केवलस्य दुःखस्यात्यन्तिकी निवृत्तिः श्रेयः पुरुषप्रवृत्त्यङ्गम्। इयं तु दुःखवत् सुखस्याप्यात्यन्तिकी निवृत्तिरिति कथं श्रेयः, कथं च प्रेक्षावत्प्रवृत्त्यङ्गमित्यत आह—**पुरुषा रागादिमन्त** इति। यद्यपि रागादिमतां पृथग्जनानामेतन्न प्रवृत्त्यङ्गम्, ते हि मधुविषसंपृक्तमप्यन्नं मधुरतया आपातरमणीयं [4]विषविषङ्गात्तु मारयतु मा वा मीमरदुपयुञ्ज्महे[5] तावदापातसुखम्, को हि हस्तगतं पादगतं करोतीति विचिन्त्योपभुञ्जते। विवेकिनस्तु आयतिमालोचयन्तः स्वर्गमपि कुपितफणिफणामण्डलच्छायप्रतिम[6] इत्यपजहति। तेन मा भूदेतद् रागादिमतां प्रवृत्त्यङ्गम्, विवेकिनां तु भविष्यति। अविवेकिनामपि चाप्रतिपन्नविप्रतिपन्नानां विवेकाधानोपायः पूर्वमावेदितः। शास्त्रप्रवृत्त्यङ्गमात्रमेव चेह विवेको वैराग्यमभिमतमिति। **प्रवृत्तेर्द्वैविध्यम्** ऐकरूप्यं द्वैरूप्यं च।

---

१. सुखे दुःखोपचारे C २. °माचिनोति J ३ °भवन्तः पतञ्जलिपादाः C, तत्तु न सम्यक्, योगसूत्रेष्वस्य संदर्भस्यादर्शनात्। ४. °षङ्गान्मार° C ५. दुपभुञ्जते तावदापाततः C ६. °भोगिफणा......च्छायाप्र° J

पुरुषभेदो[१] रागवैराग्याभ्याम्, प्राप्तव्यस्य सर्वस्य सुखस्य दुःखसंभेदेनानिष्टपक्षनिक्षेपादनिष्टप्रतिषेधार्थैव प्रवृत्तिर्विवेकिनामेकरूपैव। अविवेकिनां तु प्रवृत्तिर्द्विरूपेत्युक्तम् ॥

तदनेन प्रपञ्चेन प्रमाणतोऽर्थप्रतिपत्तावित्यादिवाक्यस्य तात्पर्यमभिधाय तदवयवं प्रवृत्तिसामर्थ्यादिति विवरीतुं [२]भूमिमारचयति—**प्रवृत्तेरपीति**। दृष्टं प्रवृत्तिसामर्थ्यं हेतुरिति रागादिमत्प्रवृत्तिसामर्थ्यमुपन्यस्तम्, न तु वीतरागानाम्। न हि तत्प्रवृत्तेर्निःश्रेयसाधिगमलक्षणफलसंबन्धो दृष्टो निःश्रेयसस्यालौकिकत्वात्। **प्रमाणस्यार्थवदनर्थकत्वाद्** इत्ययुक्तम्, प्रमाणमनर्थकमिति हि विप्रतिषिद्धमित्यत आह—**प्रमाणं तावदिति**। न ह्यप्रमाणमप्रमाणमिति गृहीतं प्रवृत्त्यै कल्पते। किं तर्हि? प्रमाणमिति। न चाप्रमाणे [३]प्रमाणाभिमानो विना प्रमाणादिसाधर्म्यादिति तत्साधर्म्यं पृच्छति—**किं पुनरिति**। उत्तरम्—**सामान्यपरिच्छेदकत्वम्**। तद्विवृणोति—**प्रमाणेनापीति**। रजतविज्ञानमपि पुरोवर्ति शुक्लभास्वरं सद्द्रव्यं परिच्छिनत्ति, शुक्तिकाज्ञानमपि। केवलमेकस्मिन्नेव विषये रजतसमारोपापवादाभ्यां बुद्ध्योर्बाध्यबाधकभाव इति भावः। तदेवमुभयतः प्रवृत्तिः समर्थात् प्रमाणादेव, नाप्रमाणादर्थव्यभिचारिण इत्याह—**सोऽयं प्रमातेति**। ततश्च सिद्धः समर्थायाः प्रवृत्तेरनर्थवद्व्यतिरेक इत्यभिसन्धिः। तथा च समर्था प्रवृत्तिरनर्थवद्व्यतिरेकसंपन्नप्रमाणस्यार्थवत्त्वे[४] हेतुरित्याह—**तस्याः** समर्थायाः प्रवृत्तेर्हेतोः पुनः प्रमाणस्यार्थवत्त्वमर्थाव्यभिचारित्वम्। असमर्था त्वनन्तरापि न संबध्यते योग्यताविरहात् ॥

संप्रत्यादिवाक्यमाक्षेप्तुमनुवदति—**प्रमाणत** इति। आक्षिपति—**परस्परेति**। समाधत्ते—**नेति**। आक्षेपवाक्यं विभजते—**यदि प्रमाणत** इति। न तावदर्थप्रतिपत्तिः प्रवृत्तिहेतुरपि तु तद्विनिश्चयः। न च तन्मात्रम्, अपि तु [५]तदर्थजातीयस्य [६]श्रेयोहेतुतामसकृदुपलभ्य संप्रत्युपलभ्यमानस्यार्थस्य तज्जातीयतया श्रेयोहेतुभावानुमानसहितो विनिश्चयः[७] प्रवृत्तिहेतुः। सेयं श्रेयःसाधनतानुमानसहिता प्रमाणतोऽर्थप्रतिपत्तिर्विनिश्चितिः समर्थप्रवृत्तिनिमित्तमुक्ता। न चार्थविनिश्चयः प्रामाण्यावधारणमन्तरेण, प्रामाण्यावधारणं [८]च श्रेयोहेतुतानुमाननिमित्तव्याप्तिग्रहणं च न समर्थां प्रवृत्तिं विना, न च समर्था प्रवृत्तिस्ताभ्यां विनेति परस्पराश्रयता। तदिदमुक्तम्, यदि पूर्वं प्रमाणतोऽर्थप्रतिपत्तिः विनिश्चितिरपेक्षितोपायतानुमानसहिता[९] प्रवृत्तिसामर्थ्यमन्तरेण किमिति प्रतिपद्यते निश्चि-

१. पुरुषे C २. °मिरचनां करोति J ३. °णमित्व° C ४. °संपन्नाप्र° J
५. तज्जातीयस्य J ६. °हेतुतयाऽसकृदुपलभ्यमान° C ७. °सहिता विनिश्चितिः C
८. चार्थश्रेयो° J ९. °रपेक्षितानु° C

नोति अपेक्षितोपाय एवेति च तोयमेवेति चेति ? समाधानं विभजते—**तच्च नैवमिति ।** यत् तावदुक्तम्, प्रमाणस्य दुरवधारणत्वादर्थविनिश्चयाभावान्न प्रवृत्तिसामर्थ्यमिति, तत्र ब्रूमः—सत्यम्, न स्वतः प्रामाण्यं शक्यावधारणम् । परतस्तु दृष्टार्थेष्वनभ्यासदशापन्नेषु प्रवृत्तिसामर्थ्यादेव तद् गम्यते । अर्थप्रतीत्यधीना तु प्रवृत्तिर्नार्थावधारणाधीना, अर्थसन्देहादपि[1] प्रेक्षावतां प्रवृत्तेः[2] । नो खल्वपायताविनिश्चयेनापि प्रवर्तमाना न अनागतफले सन्दिहते । तदमी संदिहाना अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात् प्रमाणस्य तत्त्वं विनिश्चित्य तज्जातीयस्यान्यस्याभ्यासदशापन्नस्य प्रवृत्तिसामर्थ्यात् प्रागेव तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणात् अर्थविनिश्चयेन प्रवर्तन्ते । एवं च दृष्टार्थमन्त्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनावधार्य तज्जातीयस्याप्तोक्तस्यादृष्टार्थस्य[3] वेदस्य विनापि प्रवृत्तिसामर्थ्यं प्रामाण्यावधारणमाप्तोक्तत्वेन निवेदयिष्यते[4] । न च फलज्ञानं परीक्ष्यते प्रेक्षावद्भिः, तस्य यादृशतादृशस्यापीष्टत्वादिष्टलक्षणत्वाच्च फलस्य तत्साधनत्वं ते[5] परीक्षन्ते । तथा हि तोयज्ञानम्, पिपासोस्तत्र प्रवृत्तिः, प्रवृत्तस्य तदाप्तिः, आप्तस्य पानम्, पानेन चोदन्योपशान्तिरित्येतावतैव प्रमाता कृती भवति, न पुनरुदन्योपशममपि परीक्षते, तस्य यादृशतादृशस्यापीष्टत्वादिति केचित् । वयं तु ब्रूमः, फलज्ञानमप्यभ्यासदशापन्नतया तज्जातीयत्वेन लिङ्गेनावधृताव्यभिचारमेव[6] । एवं तत्पूर्वं तत्पूर्वतरं तत्पूर्वतममिति । न च संप्रतितनस्य फलज्ञानस्य प्रामाण्यावधारणायेदानीमेव पूर्वस्य फलज्ञानस्य तज्जातीयत्वेन प्रामाण्यावधारणे सत्यनवस्थेति वाच्यम् । पूर्वतरसाधर्म्येण पूर्वमेव पूर्वस्यावधृतप्रामाण्यत्वात्[7] । एवं पूर्वतमसाधर्म्येण पूर्वतरस्य । एवं तत्पूर्वसाधर्म्येण पूर्वतमस्येत्यनादितयैवात्र परिहारः । एतेषु च मध्ये यत्फलज्ञानं स्वप्नाद्युपभोगतुल्यतया शङ्कितव्यभिचारं तदनभ्यासदशापन्नम् । अतः प्रवृत्तिसामर्थ्यं तत्र प्रामाण्यावधारणाय [8]विनिवेशनीयमित्यर्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोरनादित्वमुक्तम् । अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनोऽन्यस्य वा निरस्तसमस्तव्यभिचारशङ्कस्य स्वत एव प्रामाण्यमनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात् । न हि लिङ्गाकारं ज्ञानं लिङ्गं विना, न च लिङ्गं लिङ्गिनं विनेति स्वत एव[9] गृहीताव्यभिचारलिङ्गसमुत्थं निष्कम्पमुपपद्यते ज्ञानम् । प्रत्यक्षज्ञानं त्वर्थादुत्पद्यमानमपि न गृहीताव्यभिचारात्, अपि तु सत्तामात्रेणावस्थितात् । न च कारणान्तराण्यपीन्द्रियादीनि अस्यार्थेन गृहीताव्यभिचाराणि न चार्थेनाव्यभिचाराणि ।

---

१. °देव J　२. प्रवृत्तिः C　३ °जातीयस्यादृष्टा° C　४. द्रः २।१।६८　५. °धनं त्वेते J　६. °नावधारिताव्य° C　७ °प्रमाणत्वात् C　८. °मित्यर्थः । प्रतिपत्ति° C　९. विनेति । अत° C

शाब्दं तु ज्ञानं नार्थादुत्पद्यते, तदभावेऽपि सति शब्दे भावात्। नापि लिङ्गस्येव शब्दस्यार्थाव्यभिचारः, किं तु सङ्केतग्रहणमात्रात् पदार्थप्रत्यायनेन [1]वाक्यार्थमधिगमयति शब्दः। तस्मात् प्रत्यक्षशाब्दविज्ञानयोर्न स्वतोऽव्यभिचारग्रह इति। प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वा लिङ्गमर्थाव्यभिचारायानुसरणीयम्, ज्ञानगततज्जातीयत्वलिङ्गग्राहिणश्च ज्ञानस्य मानसप्रत्यक्षस्य तादृशस्यादृष्टव्यभिचारतया[2] परितो निरस्तसमस्तविभ्रमाशङ्कस्य स्वतः प्रामाण्यमिति नानवस्था। एतेनोपमानं व्याख्यातम्। संवेदनस्य चार्थाव्यभिचारिताकथनेन तत्कारणानामिन्द्रियादीनामपि प्रमाणत्वमुक्तं वेदितव्यम्। न ह्यव्यभिचारिविज्ञानजनकत्वादन्यदेषां प्रामाण्यम्[3]। न चार्थव्यभिचारिणामिन्द्रियादीनां कथमर्थाव्यभिचारिविज्ञानजनकत्वमिति सांप्रतम्, कारणस्वभावनियोगपर्यनुयोगयोरशक्यत्वात्। तस्मादर्थसन्देहादनभ्यासदशापन्नात् प्रमाणतोऽर्थप्रतिपत्तौ[4] प्रवृत्तिसामर्थ्यसंभवात् प्रवृत्तिसामर्थ्यज्ञानस्य चाभ्यासदशापन्नस्य तज्जातीयत्वेन प्रामाण्यानुमानादनभ्यासदशापन्नस्य तु [5]प्रवृत्तिसामर्थ्यान्तरज्ञानेन प्रामाण्यानुमानादनादित्वान्नार्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोः परस्पराश्रयत्वमस्तीति। अर्थस्यापेक्षितोपायतानुमानप्रवृत्तिसामर्थ्ययोः परस्परापेक्षित्वमवशिष्यते। तत्राप्यनादितापरिहारः। उत्पन्नमात्रकस्य हि बालकस्य स्तनं दृष्ट्वा प्राग्भवीयस्तज्जातीयापेक्षितानुभवजनितः संस्कार आविरस्ति। ततश्च[6] स्मरणम्। ततोऽपेक्षितोपायतानुमानम्। ततः प्रवृत्तिः। ततस्तस्याः सामर्थ्यम्। एवं पूर्वस्मिन् पूर्वस्मिन् जन्मनीत्यनादितया न बीजाङ्कुरवत् परस्परापेक्षितेति। **अर्थप्रतिपत्तिरिति**। अर्थप्रतिपत्तिश्चार्थस्यापेक्षितोपायताप्रतिपत्तिश्चेत्यर्थः। तस्मात् सर्वमवदातम्॥

तदनेनोक्तेन क्रमेण प्रमाणतोऽर्थप्रतिपत्तावित्यस्य शास्त्रानुसन्धानवाक्यत्वं[7] तात्पर्यं च समाहितम्। इदानीमस्यैव [8]तात्पर्यान्तरमाह—**प्रमाणप्रवृत्त्योर्वेति**। तत्रेदममाशङ्क्यते मुनिर्हि प्रत्यक्षसंशयादिव्युत्पादनद्वारेण साक्षाच्चानेन शास्त्रेणान्वीक्षिक्या हेयोपादेयभावावस्थितद्वादशविधप्रमेयव्युत्पादकं न्यायमनुमानापरनामानं निःश्रेयससिद्धये व्युत्पादयांबभूव। न च न्यायतः प्रमाणात् प्रमेयतत्त्वनिश्चयमात्रान्निःश्रेयसाधिगमः। अपि [9]त्वाद्यन्तवर्जं दशानां प्रमेयाणां दुःखसंज्ञाभावनम्, आत्मनश्च याथात्म्यभावनमित्यादिभ्यः प्रवृत्तिभ्य[10] आत्मतत्त्वसाक्षात्कारवैराग्यपरिपाकक्रमेणापूर्वयोर्धर्माधर्मयोरनुत्पादेनोत्पन्नयोश्चोप-

१. °र्थमवग° C २. ग्राहिणश्च मानस° तादृशो॰दृष्ट° J ३. °दन्यत्प्रा° C ४. °पन्नात् प्रवृत्तौ प्रमाणतो° C ५. °र्थ्यानन्तर° C ६. ततः तत्स्म° J ७. तात्पर्यं च C ८. तात्पर्यमाह C ९. °न्तवर्तिनां C १०. प्रवृत्तिभिः C

भोगात् प्रक्षयेणेति। तथा च निःश्रेयसं प्रत्यन्तरङ्गत्वात्[1] प्रमाणान्न्यायात् प्रवृत्तिरेव बलीयसी, न न्यायः। तस्मात् प्रवृत्तिरेव व्युत्पादनीया न [2]प्रमाणं निःश्रेयसहेतुरपि प्रवृत्तेरन्तरङ्गत्वात्। तत्रेदमुपतिष्ठते प्रमाणतोऽर्थप्रतिपत्तौ सत्यां प्रवृत्तेः सामर्थ्यं फलेनाभिसंबन्धो, न तु प्रमाणतोऽसत्यामर्थप्रतिपत्तौ। तस्मादर्थवत् प्रयोजनवत् प्रमाणमपि प्रवृत्तिवदेव। एतदुक्तं भवति, यथान्तरङ्गतया प्रवृत्तिर्बलीयसी एवं मूलकारणतया प्रमाणमपि। न [3]ह्यप्रमाणात् प्रवृत्तिः फलेनाभिसंबध्यते[4]। तस्मात् तुल्यमुभयमपि। तथापि प्रमाणव्युत्पादनेन प्रवृत्तिरपि व्युत्पादिता भवतीति प्रमाणस्य व्युत्पादनमकारि शास्त्रेण, न तु प्रवृत्तेः। सामान्याभिधानं च परमन्यायपरम्, तस्यैव प्रकृतत्वादिति। प्रामाण्यज्ञानोपायप्रतिपादनपरतयानुसन्धानवाक्यत्वमस्य पूर्वमुक्तम्। संप्रति परपर्यनुयोगमुखेनास्यानुसन्धानवाक्यत्वं प्रतिपादयति——**लोकवृत्तेति**। तथा हि प्रमाणप्रतिपत्त्युपायं प्रत्याचक्षाणक एवं प्रष्टव्यो जायते, किं भवान् प्रमाणेन प्रमाणज्ञानोपायं प्रत्याचष्टे, अप्रमाणेन वेति? यदि ब्रूयात् प्रमाणेनेति, स प्रतिवक्तव्यः, प्रमाणज्ञानोपायमविद्वान् कथं भवानेवमाहेति? अप्रमाणेनेति चेदनुज्ञया वर्तितव्यम्। अथ प्रमाणेनागृहीतप्रामाण्येनेति, वाङ्मनसयोर्विसंवादः। तस्मादनिच्छतापि त्वया लोकवृत्तमनुसरणीयम्। अन्यथा नासि लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीयः स्या इति। तदिदं लोकवृत्तमाक्षेपसारं बोधयितुमनेन भाष्येणानूद्यते **प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणं** यतोऽतः सर्वः प्रमाता प्रमाणेनावगतार्थवत्त्वेनार्थमवधार्य प्रवर्तमानः फलमुपलभत इति लोकवृत्तम्। तत् प्रमाणत इत्यादिना वाक्येन कारणप्रदर्शनद्वारेणानूद्यते॥

अस्यैव भाष्यस्य तात्पर्यान्तरं वक्तुं भूमिमारचयति——**हेयहानेति**। अर्थोऽर्थशब्दः प्रमाणतोऽर्थप्रतिपत्तावित्यत्र स्थितः पदं वाचकं येषां तानि तथा। एतद्वार्त्तिकग्रन्थस्यैतादृशं व्याख्यानम्, भाष्यगतस्य त्वन्यथा भविष्यति। **उपायः शास्त्रमिति**। शास्त्रशब्दस्तदर्थपरः, अर्थस्यापि शब्दवच्छास्त्रशरीरत्वात्। अत्र च हेयहानाधिगन्तव्यपदैः प्रमाणप्रमेययोरुपादानाद् गोबलीवर्दन्यायेन संशयादिषु निग्रहस्थानान्तेषु शास्त्रपदं प्रवर्तते। तेनोपायपदेन संशयादयो निग्रहस्थानान्ता एवोक्ता इति। ग्रहणकवाक्यं विवृणोति——**हेयमिति**। तात्पर्यमाह——**एतस्मिंश्चेति**। चेन प्रमाणप्रमाप्रमातृप्रमेयरूपं चतुर्वर्गान्तरमपि सूचयति। तत्र हेयादिचतुर्वर्गे [5]चार्यमाणतयार्थपदसूचिते प्रमाणादिचतुर्वर्गे च प्रमाणस्य प्राधान्यप्रदर्शनार्थमिदं भाष्यम्। यद्यपि चतुर्वर्गद्वयतत्त्वावगमो निःश्रेयसाधिगमहेतुः, तथापि प्रमाणमेव

१. ०यसप्राप्तेः कारणत्वात् C २. न्यायो C ३. नत्व० C ४. ०ते किं तु प्रमाणात् C ५. चार्थ्यमा० C

प्रधानम्, तन्मूलत्वादितरसिद्धेः । तदिदमुक्तम्, **अर्थवदिति** । अतिशायने मतुप् । प्रमात्राद्यपेक्षया हेयाद्यपेक्षया चातिशयेन प्रयोजनवत् प्रमाणम् । कस्मात् ? प्रमाणतोऽर्थप्रतिपत्तौ सत्यां प्रवृत्तस्य प्रमातुस्तदितरप्रतिलम्भात् । प्रमायाश्च तत्कार्यत्वात् । तदिदमुक्तम्—**प्रवृत्तिसामर्थ्यादिति** । तदेतस्मात् प्राधान्याद् विवक्षाभेदेन त्रिवर्गद्वयात् प्रागुद्देशः प्रमाणस्येति । एतेन यदाहुरेके यदि प्राधान्यात् प्राथम्यं [1]तत् प्रमेयस्यैव, अर्थोपायत्वात् [2]तत् संशयादीनाम्, तेषां प्रमाणोपायत्वात्, कस्माच्च[3] प्रमात्रादिभ्यः प्राथम्यं प्रमाणस्येति ? तन्निरस्तं भवति, प्रमाणोपायानामपि संशयादीनां प्रमाणाधीनत्वादिति । नन्ववगतम्, अर्थपदतया हेयादिचतुर्वर्गो दर्शित इति ; प्रमाणादिचतुर्वर्गस्तु कथं प्रदर्शित इति पृच्छति—**कथं पुनरिति** । उत्तरं **प्रमाणप्रमेयाधिगतय** इति ॥

तदेवं तात्पर्यं व्याख्यायावयवार्थं व्याख्यातुमुपक्रमते—**तदिदं वाक्यमवयवश उपन्यस्य वर्ण्यते** व्याख्यायतेऽवयवश इति । [4]तत्रास्यावयवेषु व्याख्यातव्येषु प्राथम्यात् प्रमाणत इति विवृणोति—**तत्रेति** । विभजते—**प्रमाणत इतीयं निमित्तपञ्चमी** । [5]निमित्तपञ्चमी चेत् कस्मात् प्रमाणादिति नाभिहितमित्यत आह—**अस्येति** । प्रमाणत इत्येवंरूपस्याभिधानं वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं चेति । वचनव्याप्त्यर्थमिति मृष्यामहे, न तु विभक्तिव्याप्त्यर्थमिति, पञ्चमीव्यतिरेकेण तसेरभावादित्याह—**कथं पुनरिति** ? परिहरति—**लभ्यत** इति । व्याप्तेः प्रयोजनं पृच्छति—**किं सिद्धं भवतीति** । उत्तरं—**वचनव्याप्त्या संप्लवो व्यवस्था च** । तदुभयं विभजते—**प्रमाणेनेति** । यत्र द्वयोर्बहूनां वा संप्लवः प्रमाणानां तत्रैकैकस्याप्यस्ति प्रतिपत्तिसाधनत्वं प्रमाणस्येति कथयितुं संप्लवावसरेऽपि प्रमाणेनेत्युक्तम् । अतएव व्यवस्थायामेवकारः **प्रमाणेनैवेति** । विभक्तिव्याप्तेः प्रयोजनमाह—**विभक्तिव्याप्त्या हेतुकरणभावः** । गम्यते इत्यनुषज्यते । तद्विभजते—**प्रमाणादर्थाधिगतिर्भवतीति हेतुत्वं गम्यते** । प्रमाणेनार्थाधिगतिर्भवतीति करणरूपोऽर्थो गम्यत इति संबन्धः । कस्मात् पुनः करणार्थो गम्यत इत्यत आह—**प्रमाणेनेति** । अर्थमर्थाधिगतिं साधयतीति साधकतमत्वात् । अत्र च करणभावनान्तरीयकस्य हेतुभावस्य पञ्चम्या अभिधानं प्रमाणफलयोस्तादात्म्यप्रतिषेधार्थम्, भेदाधिष्ठानत्वाद्धेतुफलभावस्य, न खलु परशुरेव च्छिदेति । प्रमाणप्रातिपदिकलब्धकरणत्वानुवादश्च प्रमाकारकान्तरेभ्योऽभ्यर्हितत्वेनास्य व्युत्पाद्यत्वं च प्राथम्यं च युक्तमिति दर्शयितुं संप्लवमाक्षिपति—**संप्लवेति** । समाधत्ते—**नेति** ।

---

१. ततः J २. ततः C ३. कस्मात् C ४. तत्रावयवेषु C ५. निमित्तपञ्चमीति पतितम् C

आक्षेपं विभजते—**स्यान्मतिरिति**। विशिष्टो भिन्नो विषयो येषां तानि तथा। बहुवचनमान्तर्गणिकभेदाभिप्रायम्। अर्थसामर्थ्यसमुत्थं हि प्रत्यक्षमर्थगोचरम्। स एवार्थः प्रत्यक्षगोचरो यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति। न च सामान्यं निरस्तसमस्तार्थक्रियासामर्थ्यमेवं भवितुमर्हति। स्वलक्षणं तु स्यात्। [१]तदेव हि परमार्थसत्, अर्थक्रियासामर्थ्यलक्षणत्वाद् वस्तुनः। एतदेवास्य स्वमसाधारणं लक्षणं यद्देशतोऽननुगमेनादेशात्मकस्य [२]परमाणुत्वम्, कालतोऽननुगमेन च क्षणिकत्वम्। तस्मात् स्वलक्षणविषयं प्रत्यक्षम्। न च स्वलक्षणमनुमानस्यापि गोचरः। तद्धि गृहीतप्रतिबन्धलिङ्गहेतुकम्। प्रतिबन्धश्च तादात्म्यतदुत्पत्तिलक्षणः स्वलक्षणविषयोऽशक्यग्रह इति सामान्यधर्मावाश्रयते। न च सामान्यमेकमनेकदेशकालावस्थासंसर्गि भवितुमर्हति। तदिदमनादिवासनोद्भूतविकल्पाधिष्ठानं विकल्पाकारस्य वा अलीकस्य वा [३]बाह्यत्वमनुमानगोचरोऽभ्युपेयम्। तच्च भावाभावसाधारण्याच्च बाह्यसादृश्याच्च नियतप्रतिभासत्वाच्चान्यव्यावृत्तिनिष्ठम्[४]। यत् खलु भावाभावसाधारणम्, तदन्यव्यावृत्तिनिष्ठमेव यथा अमूर्तत्वम्। तद् विज्ञानादौ भावे शशविषाणादौ चाभावे साधारणम्। भावाभावसाधारणश्च विकल्पगोचरोऽस्ति [५]घटो नास्ति घट इति। यदि पुनरसाधारणो भावो भवेद् अस्तिशब्दो न प्रयुज्येत, पुनरुक्तत्वात्। नास्तीत्यपि न [६]वक्तव्यं विरोधात्, एवमभावासाधारण्येऽपि वाच्यम्। न चालीकस्य सर्वसामर्थ्यविरहिणः परमार्थसत्ता स्वलक्षणेन सादृश्यं मन्यतेऽन्यव्यावृतेः। न च गौरिति नियतौ बुद्धिव्यपदेशौ विनाश्वादिव्यावृत्तिम्। तस्मात् सामान्यमन्यव्यावृत्तिरूपमबाह्यं बाह्यभेदाग्रहाद् बाह्यत्वेनावगाह्यमानमनुमानं बाह्ये प्रवर्तयति। पारम्पर्येण च बाह्यप्रतिबन्धाद् बाह्यं प्रापयत् संवादकं सद् भ्रान्तमपि प्रमात्राशयवशात् प्रमाणम्। तदस्य न स्वलक्षणं गोचरः[७]। प्रत्यक्षमपि न सामान्यगोचरमित्यावेदितम्। न चाभ्यामन्यत् प्रमाणमस्ति, प्रमाणस्य सतोऽत्रैवान्तर्भावात्, अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः। न च सामान्यविशेषाभ्यामन्यदस्ति प्रमेयान्तरं यत्रैते तत् संप्लोष्येते इत्यर्थः॥

समाधानवाक्यं विवृणोति—**एतच्च नेति**। यथा चैतत् तथा तत्र तत्र निवेदयिष्यते। विशेषो व्यवच्छेदकः। स च वक्रकोटरादिरन्त्यश्च। व्यवस्थासङ्करोदाहरणान्याह—**इन्द्रियवदिति**। संप्लवममृष्यमाण आह—**अधिगततत्त्वादिति**। समाधत्ते—**नान्यथेति**। आक्षेपं विवृणोति[८]—**यदीति**॥

---

१. ॰देव परमा॰ C २. परमार्थत्वम् C ३. स्वमनुमा॰ C ४. ॰त्तिरूपम् J ५. अस्ति घटोऽस्ति नास्ति C ६. स्यात् वि॰ J ७. स्वलक्षणगोचरत्वम् J ८. विभजते C

स्यादेतत् । नास्ति वैयर्थ्यमधिगतीनामाशुतरविनाशितया तद्गोचराधिगत्यन्तरोत्पादं प्रति प्रमाणान्तरस्यार्थवत्त्वादित्यत आह—**अधिगतं चार्थमधिगमयता प्रमाणेनेति** । यद्यप्यधिगतय आशुतरविनाशिन्यः, तथाप्येकतरप्रमाणजनितार्थाधिगतिलब्धजन्मनः संस्कारादेव स्थायिनस्तदर्थस्मृतिसन्ततिसंभवाद् अधिगतमर्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यादिति । समाधिवाक्यं विवरीतुमनुवदति—**नान्यथेति** । विवृणोति—**न ब्रूम** इति । अयमभिसन्धिः, न हि प्रमाणकारणानि प्रेक्षावन्ति, येनैवमालोचयेयुः—[१]जनितमेव प्रमाणमन्यतमेनास्मासु, वयमिहोदास्महे इति । नापि [२]स्वकारणबललब्धजन्मानि प्रमाणानि दर्शितोऽयमर्थोऽन्यतमेन चास्मासु प्रमाणेन, कृतमस्माभिरिति विरन्तुमर्हन्ति । प्रमातुश्चेतनत्वादयमनुयोग इति चेत्—न, प्रियतमस्य वस्तुनोऽनेन भूयो भूयः प्रमित्सितत्वात् । अप्रमित्सितस्यापि च दुर्जनवचनादेः प्रमेयस्यानेन प्रमीयमाणत्वात् । तस्मान्न प्रमात्रभिसन्धानात् प्रमाणस्य प्रवृत्तिरप्रवृत्तिर्वार्थे, किं तु सामर्थ्यात् । अन्यथाग्निदाहादिदुःखस्याप्रत्यक्षत्वप्रसङ्गः ॥

यत्तु प्रमाणं प्रमित्साधीनप्रवृत्ति तद्यदि प्रमाता न व्यापारयेत् किमायातं प्रमाणस्य ? न हि तोयमपि पिपासुना न पीयत इति तस्य पिपासोपशमनशक्तिरपैति । तस्मात् [३]प्रत्युत्पन्नकारणसामग्रीजनिता बुद्धिः प्रमा । तज्जनकानि च प्रमाणानि समानविषयाण्यपि । स एव चानेन सामग्रीभेदः प्रदर्शितः [४]**अन्यथा प्रत्यक्षेणेत्यादिना** । यद्यपि साक्षात्कारासाक्षात्कारादिरपि प्रकारभेदोऽस्ति, तथाप्यसौ प्रकृतानुपयोगान्नोक्तः । यदि च द्रव्यं त्वचा गृहीतमिति कृतं चक्षुषा, चक्षुषा वा गृहीतमिति कृतं त्वचेत्युच्येत, न रूपविज्ञानं वा स्पर्शविज्ञानं वोपजायेत । [५]तदर्थं चक्षुर्वा त्वग्वाभ्युपेतव्यम् । तथा च संप्लववैयर्थ्येऽपि व्यवस्थायां न वैयर्थ्यमित्याह—**विषयान्तर** इति । प्रकृतमुपसंहरति—**तस्मादिति** ॥

विभक्त्यर्थं निरूप्य प्रातिपदिकार्थनिरूपणमवतारयति—**प्रमाणेति** । [६]अत्र चावधार्यतेऽनेनेत्यवधारणं विचार इति । विचारणाय भावभवितारौ पृच्छति—**किं पुनरिति** । [७]केचिदाहुः, अनधिगतार्थगन्तृ[८] प्रमाणमिति । विषयसारूप्यं साकारस्य विज्ञानस्येत्यन्ये[९] । विज्ञानस्यैवानाकारस्यात्मानात्मप्रकाशनसामर्थ्यमित्यपरे[१०] । उपलब्धिसाधनमिति वृद्धाः[११] ।

---

१. यज्जनित° C २. °कारणलब्धजन्मा° ३. प्रत्यक्षका° C ४. अन्यथा तुप्रत्य° C ५ तेनेत्यधिकम् J ; तदर्थं चक्षुस्त्वक् चाभ्युपेयेते C ६. अत्र चेति नास्ति C ७ मीमांसकाः ८. °तार्थबोधनं J ९ सौत्रान्तिकाः १०. वैभाषिकादयः ११ नैयायिकादयः

तस्माद् विप्रतिपत्तेः संशयात् प्रश्नः। भावप्रश्नव्याख्यानेन भवितृप्रश्नो व्याख्यातः। उत्तरम्——उपलब्धिहेतुः प्रमाणम्। न च संशयविपर्यासरूपोपलब्धिकारणयोः प्रसङ्गः, अर्थवदित्यधिकारात्, तयोश्चोपदर्शितार्थव्यभिचारेणानर्थवत्त्वात्[1]। नो खलु विकल्प्यमानं वस्त्वस्ति, अर्थक्रियासु वोपयुज्यते ॥

स्यादेतत्। स्मृतिहेतोरपि प्रामाण्यप्रसङ्गः। न ह्यसौ नोपलब्धिहेतुः। न चार्थसहकारि प्रमाणमिति संस्कारस्यार्थसहकारिताविरहादप्रामाण्यमिति सांप्रतम्, नदीपूरस्य पिपीलिकाण्डसंचरणस्य चातीतानागतवर्षलिङ्गस्य, शब्दस्यातीतानागतगोचरस्यार्थसहकारिताविरहिणश्चाप्रमाणत्वप्रसङ्गात्। ज्ञापकत्वेन कार्यत्वेन वा कथञ्चिदर्थसंबन्धे संस्कारस्यापि तत् समानमिति तस्यापि स्मृतिरूपोपलब्धिहेतोः प्रामाण्यं प्रसक्तम्। मैवम्, प्रमाणशब्देन तस्यापास्तत्वात्। प्रमासाधनं हि प्रमाणम् न च स्मृतिः प्रमा। लोकाधीनावधारणो हि शब्दार्थसबन्धः। लोकश्च संस्कारमात्रजन्मनः स्मृतेरन्यामुपलब्धिम् अर्थाव्यभिचारिणीं प्रमामाचष्टे। तस्मात् तद्धेतुः प्रमाणमिति न स्मृतिहेतौ प्रसङ्गः। अनधिगतार्थगन्तृत्वं च धारावाहिकविज्ञानानामधिगतार्थगोचराणां लोकप्रसिद्धप्रमाणभावानां प्रामाण्यं विहन्तीति नाद्रियामहे। न च कालभेदेनानधिगतगोचरत्वं धारावाहिकानामिति युक्तम्, परमसूक्ष्माणां कालकलाभेदानां पिशितलोचनैरस्मादृशैरनाकलनात्। न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्तितत्वात् पुरुषस्य प्रापितत्वाच्चोत्तरेषाम्, अप्रामाण्यमेव विज्ञानानामिति वाच्यम्[2]। न हि विज्ञानस्यार्थप्रापणं प्रवर्तनादन्यत्, न च प्रवर्तनमप्यर्थप्रदर्शनादन्यत्। तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्तकं प्रापकं च। प्रदर्शनं च पूर्ववदुत्तरेषां विज्ञानामभिन्नमिति कथं पूर्वमेव विज्ञानं प्रमाणं नोत्तराण्यपि ? पुरुषापेक्षया तु प्रामाण्ये चन्द्रतारकादिविज्ञानस्य पुरुषानपेक्षितस्याप्रामाण्यप्रसङ्गः। न चातिदवीस्तया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितम्, तस्योपेक्षणीयार्थविषयत्वात्। न चोपेक्षणीयम् अप्यनुपादेयत्वाद्धेयमिति निवेदयिष्यते। उपलब्धिहेतुं च प्रमाणं वदता अनधिगतार्थगन्तृत्वं चार्थसारूप्यं चात्मानात्मप्रकाशनशक्तिश्च प्रमाणमिति निरस्तानि भवन्ति। उपलब्धिमात्रस्यार्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देनाभिधानात्। हेतुग्रहणेन सारूप्यशक्त्योः फलादभिन्नयोरपाकरणात् हेतुहेतुमद्भावस्य तादात्म्येऽनुपपत्तेरिति। उपलब्धिहेतुत्वं च प्रमाणत्वम्। भवितृव्याख्यानेन भावो व्याख्यातः। तदेवं ज्ञानमज्ञानं वा उपलब्धिहेतुः प्रमाणम्। तस्य भावस्तत्त्वमिति स्थितम् ॥

---

१. त्वात् C २. साम्प्रतम् J

तदेतदतिव्यापकत्वेनाक्षिपति––**समानत्वादिति**। समाधत्ते **अयं विशेष इति**। अयमर्थः, सर्वः कर्त्ता करणगोचरव्यापारो न तु साक्षात् फले व्याप्रियते। करणं च द्विधा सिद्धमसिद्धं च[1]। तत्र सिद्धं परश्वादि दारुद्वैधीभावायोद्यम्योद्यम्य दारुणि निपातयन् दारु च्छिनत्तीत्युच्यते। न तु साक्षात् कर्तृव्यापारगोचरो दारुद्वैधीभावः, किं तु स्पर्शवद्वेगवतः करणीभूतस्य परशोः संयोगस्योद्यमननिपातनलक्षणस्तु कर्तृव्यापारः परशुगोचर एव। एवं स्वर्गकामोऽपि कर्ता न साक्षात् स्वर्गे व्याप्रियते, किं तु तत्करणं यागमसिद्धं साधयति। स्वर्गस्तु यागव्यापारादेवापूर्वाभिधानात् चेतनाश्रयाद् देशकालावस्थाभेदासादितपरिणतिविशेषात् साक्षादुत्पद्यते। तद्वदिहापि प्रमाता सिद्धमिन्द्रियादि, असिद्धं च[1] तत्सन्निकर्षादि व्यापारयन्नुत्पादयन् वा[2] करण एव चरितार्थः। करणं त्विन्द्रियादि तत्सन्निकर्षादि वा नान्यत्र चरितार्थमिति साक्षादुपलब्धावेव फले व्याप्रियते। प्रमेयस्य तु प्रत्यक्षादन्यत्रोपलब्धिहेतुभाव एव तावन्नास्ति, केवलं प्रमाणविषयभावमात्रेणोपयुज्यते। यत्राप्यस्य हेतुभावः प्रत्यक्षेऽभिप्रेयते, तत्रापीन्द्रियसंबन्धमात्रे उपयुज्यते प्रमेयम्। इन्द्रियमेव तु तत्तत्सन्निकर्षादि वा[3] साक्षात् प्रमाहेतुः। ततः सिद्धमेतत् न प्रमाता साक्षात् प्रमाहेतुः कर्तृत्वात्। यो यः कर्ता स सर्वो न साक्षात् फलहेतुः, यथा[4] व्रश्चनयजमानादिः। तथा[5] चायम्। तस्मात् तथा। तथा प्रत्यक्षं[6] प्रमेयं न साक्षात् प्रमाहेतुः, प्रमेयत्वात्। यद् यत् प्रमेयं तत्तत् सर्वं न प्रमाहेतुरनुमेयादिवत्। तथा चैतत्[7]। तस्मात् तथेति। तदिदं प्रमातृप्रमेययोः प्रमाणे चरितार्थत्वमचरितार्थत्वं च प्रमाणस्य, तस्मात् तदेव फलहेतुः। प्रमातृप्रमेये तु फलोद्देशेन प्रवृत्ते इति तद्धेतू कथञ्चिदिति। चोदयति **अकरणेति**। नाकरणः कर्ता प्रमाणमपि व्याप्तुमर्हतीत्यर्थः। परिहरति––**न, इन्द्रियार्थेति**। [8]यदा ज्ञानं प्रमाणं तदा ज्ञानस्य प्रमाणस्योत्पत्तावित्यर्थः। पुनश्चोदयति––**यदि तर्हीति**। परिहरति––**तस्मिन्नपीति**। चोदयति––**यदि प्रमातृप्रमेयाभ्यां सद्भ्यां प्रमाणमिति**। प्रमाणमन्तरेण प्रमाया अभावात् प्रमातृप्रमेययोः असिद्धिरित्यर्थः। पृच्छति––**कथमिति**। उत्तरम्––**प्रमाणमितीति**। अथ[9] स्वरूपमात्रमेव कारकं कस्मान्न भवति, तच्च क्रियासंबद्धस्य पुरस्तादप्यस्तीत्यत आह–**न च द्रव्यमात्रमिति**। अस्तु तर्हि तदीयोऽवान्तरव्यापारः प्रधानक्रियायां साध्यायां कारकम्[10], तस्यापि प्रधानक्रियायां निमित्तत्वादित्यत आह––**न च क्रियामात्रमिति**। न हि स्वरूपेण देवदत्तो व्रश्चनः, नापि

---

१. वा J २. वेति नास्ति C ३. °र्षादिना C ४. व्रश्चनः। यथा वा यज° C ५. चायमिति नास्ति C ६. प्रमेये C ७. चैतत्तथा C ८. यदि C ९. °पमेव C १०. क्रियायां कारणम् C

तदीयो व्यापार उद्यमननिपातनादिर्लोष्टाद्याश्रयः । क्व तर्हि कारकशब्दः प्रवर्तत इत्यत आह—**कारकशब्दो हीति** । प्रधानक्रियासाधने हेतौ अवान्तरक्रियाविशेषयुक्ते कारकशब्दः प्रवर्तते । [1]द्वैधीभावे हि फले प्रधानव्यापारे कर्तुः करणगोचर [2]उद्यमननिपातनादिः अवान्तरव्यापारः । कर्मणश्च दारुणः स्पर्शवद्वेगवत्तीक्ष्णतरकुठारसंयोग एवावान्तरव्यापारः । तेन हि दारु स्वावयवपरिस्पन्दलब्धजन्मनोऽवयवविभागाद्[3] द्वैधीभावमनुभवति । [4]तस्मादवान्तरप्रधानव्यापारसंपन्नं कारकमिति सामान्यतः प्रसाध्य प्रकृते योजयति—**प्रमातृप्रमेयशब्दौ चेति** । **तावन्तरेण क्रियां** प्रधानक्रियामित्यर्थः । परिहरति—**न, पाचकादिशब्दवदिति** । लोकाधीनावधारणः खल्वयं शब्दार्थसंबन्धः । लोकश्चातीतानागतवर्तमानक्रियासंबन्धमात्रविवक्षया कारकशब्दान् प्रयुङ्क्ते, पाचकमानय पक्ष्यतीति च, पाचकोऽयमपाक्षीदिति च, पाचकोऽयं पचतीति च तुल्यवत् त्रैकाल्यविषयप्रयोगदर्शनम् । तत् कस्य हेतोरपचत्यपि पाकसंबन्धं प्रत्यस्ति स्वरूपशक्तिर्देवदत्तादाविति ? द्वयी हि शक्तिः कारकाणां कार्योपजननं प्रति स्वरूपं च सहकारिग्रामसमवधानं च । तत्रासत्यपि [5]सहकारिग्रामसमवधाने कारकशब्दानां प्रवृत्तेः, सत्यपि च स्वरूपे त्रैकाल्यव्यापिनि त्रैकाल्ययोगिकार्यासंभवेऽप्रवृत्तेः[6] त्रैकाल्ययोगिकार्योपहितमर्यादमेव स्वरूपं कारकशब्दानां प्रवृत्तौ निमित्तमिति । असत्यपि प्रत्युत्पन्नप्रमाहेतुप्रमाणसंबन्धे प्रमातृप्रमेयशब्दयोः प्रवृत्तिरिति उपपन्नं प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति । तत् प्रमाणमुपलब्धिसाधनं साक्षात्, न प्रमातृप्रमेये इति सिद्धम् ॥

सत्यपि चोपलब्धिसाधनत्वे प्रमातृप्रमेययोरुपलब्धिहेतुरित्यत्राप्रसङ्गं[7], साधकतमासाधकतमयोः साधकतमे कार्यसंप्रत्ययात्[8] सातिशयत्वेनोद्भूतत्त्वात् तस्येत्याह—**साधकतमत्वाद् वेति** । साधकतमार्थं पृच्छति—**कः पुनरिति** । उत्तरम्—**प्रमाणस्य भावाभावयोः** प्रमायाः कार्यस्य **तद्वत्ता** भावाभाववत्ता साधकतमार्थः । लक्ष्यलक्षणयोरभेदविवक्षया सामानाधिकरण्यम्, न तु प्रमातृप्रमेयान्वयव्यतिरेकानुविधानमप्यस्ति प्रमाया[9] अन्वयव्यतिरेकयोरित्यत आह—**न प्रमातरीति** । प्रमातृप्रमेयाभ्यां सह प्रमोत्पादस्यान्ययोगव्यवच्छेदेन संबन्धः । प्रमाणेन[10] तु संबन्धः प्रमोत्पादस्यायोगान्ययोगव्यवच्छेदाभ्यामित्यतिशयः प्रमाणस्य । प्रमातृप्रमेये हि प्रमाणोपक्षीणवृत्तिनी न प्रमायां व्याप्रियेते । [11]तेनान्तरायसंभवान्नावश्यं प्रमातृप्रमेयव्यापारे सति प्रमा भवति ।

---

१. °भावो हि फलं प्रधानं C २. °निपातने C ३. °स्पन्दजन्मनावयवविभागं C ४. °वान्तरव्या° C ५. °कारिसमव° J ६. °वे प्रवृ° C ७. °रित्यप्र° C ८. °तमे संप्र° C ९. °मप्यप्र° C १०. सह प्रमो° शयः । C ११. °न्तरान्तराय J

प्रमाणस्य व्यापारे तु प्रमा भवत्येवेति कल्पान्तरमाह—**यद्वान् वा प्रमिमीते सोऽतिशयः**। प्रमिमीत इति स्वतन्त्रं कर्तारं दर्शयति प्रतिपाद्यात् करणाद् व्यवच्छेत्तुम्। यद्वानेवेति च सावधारणाम्। तत्र यद्वानिति कर्त्रन्तरं व्यवच्छिनत्ति। न हि कर्ता कर्तृमान्, किं तु प्रमाणवान्। स्वतन्त्रो ह्याश्रयः परतन्त्रेणाश्रीयते। कर्त्रधीनं हि करणमित्यावेदितम्। प्रमाता प्रमेयवानपि क्वचिद् भवेत् तत्तन्त्रत्वात् प्रमेयस्य। न तु प्रमेयवानेव, अनुमानादिषु प्रमेयस्यातीतत्वादिना तद्वत्ताविरहात्। न तु लिङ्गादिज्ञानवान् न कदाचिदित्यवधारणफलम्। सोऽयं विशेषः प्रमातृप्रमेयाभ्यां प्रमाणस्य। अस्यैव च विशेषस्यातिशयत्वमन्वयव्यतिरेकाभ्यामादर्शयति—**प्रमाणे सतीति**। कल्पान्तरमाह—**सतोर्वेति**। पूर्वेण भावप्रधानोऽतिशयो यादृशस्य दर्शितः, तादृशस्यैवेह व्यतिरेकप्रधानोऽतिशय इति विशेषः। अकर्तृत्वमहेतुत्वमित्यर्थः। कल्पान्तरमाह—**संयोगवच्चरमभाविता वा**। [१]सेतिकर्तव्यताकं हि व्याप्रियमाणं करणम्, न तु [२]चक्षुरादिस्वरूपम्। करणादिशब्दप्रवृत्तिनिमित्तमात्रं तु स्वरूपं स्यादिति पूर्वमावेदितम्। तच्च सिद्धमसिद्धं वा प्रमातृप्रमेयव्यापारस्य पश्चादेव तथात्वेन संपद्यत इति चरमभावीत्युच्यते। सोऽयमस्य चरमभावितातिशयः, यथा तन्तूनां पटे जनयितव्येऽन्त्याः संयोगभेदा यदनन्तरं पट उत्पद्यत एवेति। कल्पान्तरमाह—**प्रतिपत्तेरानन्तर्यं वा**। यत एव प्रमाणं चरमभावि, अतएव तदनन्तरं प्रतिपत्तेः प्रमाया भावात्। प्रतिपत्तेरानन्तर्यमेव प्रमाणस्यातिशयः। **स चेति**। चोऽवधारणे। इदमपि लक्ष्यलक्षणयोरभेदविवक्षयोक्तम्। कल्पान्तरमाह—**असाधारणकारणता वा**। चतस्रः खल्विमाः प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजोऽनुभूयन्ते। न च प्रमाता तद्भेदहेतुः, तस्य साधारण्यात्। न च प्रमेयमेकस्यापि प्रमेयस्य संप्लवे सर्वप्रतिपत्तिसाधारण्यात्। प्रमाणानि तु यथायथं [३]चतसृष्वपि प्रमितिष्वसाधारणानीति भिन्नबुद्धिव्यपदेशनिबन्धनानि। तदिदमसाधारण्यमतिशयः। अशेषः पुरुषः प्रमातात्र विवक्षितः[४]। कल्पान्तरमाह—**प्रमाकारणेति**। प्रमाया असमवायिकारणं खल्वात्ममनःसंयोगः। स च सर्वप्रमासाधारणः[५]। नासौ प्रमात्रा प्रमेयेण वा शक्यो विशेष्टुम्, तयोरपि तद्वदेव साधारण्यात्। असाधारणं तु प्रमाणं यथायथमात्ममनःसंयोगमवच्छिनत्ति। एवं सुखादिप्रमेयाणामपि मन एवासाधारणं व्यवच्छेदकं द्रष्टव्यम्। सोऽयमस्यातिशयः। अतिशयातिशयिनोरभेदविवक्षया **अतिशयशब्दवाच्यम्** इत्युक्तम्॥

---

१. इतिक° C २. कारणादि° C ३. °ष्वसाधार° C ४. क्षित इति J
५. संयोगः सर्व° C

क्रमप्राप्तमर्थग्रहणं तात्पर्यतो व्याचष्टे—**अर्थग्रहणमिति**। कस्मात् पुनर्निषिध्यते प्रमाणविषया प्रतिपत्तिरित्यत आह—**यतो न प्रमाणविपर्ययेति**। **इतिकर्तव्यता** अनुष्ठानम्, तस्मिन्। अर्थ्यत इत्यर्थः, तोयकण्टकादिः। तस्य तथाभावोऽर्थनीयत्वम्। तच्च सुखदुःखसाधनत्वम्। सुखसाधनं खलूपादेयत्वेन दुःखसाधनं च हेयत्वेनार्थ्यते[1]। तात्पर्यान्तरमाह—**उपेक्षणीयेति**। उपेक्षणीयविषये प्रमाणे प्रवृत्तिसामर्थ्यं नास्तीति तत्प्रतिषिध्यते। न च तदप्रमाणमिति। [2]तस्यापि दृष्टप्रमाणसाधर्म्येण लिङ्गेन प्रामाण्यानुमानादिति। चोदयति—**प्रमाणाग्रहणमिति**। समर्थप्रवृत्तिजनिका हि प्रतिपत्तिर्नाप्रमाणाद्भवतीत्यर्थादेव प्रमाणादिति गम्यत इत्यर्थः। परिहरति—**न प्रमाणविशेषज्ञापनार्थत्वात्**। अयमभिसन्धिः, प्रवृत्तिसामर्थ्येन हि कार्येण प्रमाणस्यार्थवत्त्वमनुमातव्यम्। न चैतत् साक्षात् प्रमाणस्य कार्यम्, किं त्वर्थप्रतिपत्तेः। तदनन्तरं हि समर्था प्रतिपत्तिरुपजायते। अर्थप्रतिपत्तिस्तु प्रमाणकार्येति समर्था प्रवृत्तिः प्रमाणकार्या सती प्रमाणस्यार्थवत्त्वमनुमापयति[3]। तस्मादर्थगम्यमपि प्रमाणमर्थप्रतिपत्तिकरणत्वेन[4] द्योतनीयम्। अन्यथा प्रमाणमर्थवदर्थप्रतिपत्तेः समर्थप्रवृत्तिजनकत्वादिति किं केन संगतम्? प्रमाणस्य विशेषः प्रमाणाभासाद् व्यावृत्तिः, तस्य ज्ञापनम्। स एवार्थो यस्य [5]प्रमाणग्रहणस्य तत् तथोक्तम्। तस्य भावस्तत्त्वम्। तस्मादेतदुक्तं भवति—प्रमाणकार्याया अर्थप्रतिपत्तेः प्रवृत्तिसामर्थ्यं न तदाभासकार्यायाः। तस्मात् प्रमाणस्यार्थवत्त्वं गम्यत इति। तदिदमुक्तम्—**तद् येह प्रमाणेन प्रतिपत्तिः सा प्रवृत्तिसामर्थ्यं प्रतिपादयति प्रमाणम्**। अयमर्थः। प्रमाणं कर्तृ, प्रवृत्तिसामर्थ्यं प्रतिपद्यमानं प्राप्नुवत्तत् प्रतिपादयति प्रापयति प्रमाणकार्यार्थप्रतिपत्तिरिति। इदमपि प्रमाणग्रहणस्य प्रयोजनमित्याह—**न च प्रमाणग्रहणमिति**। एकदेशिव्याख्यानमुपन्यस्यति—**सुखेति**। न केवलं सुखदुःखहेतुत्वादर्थ्यमानत्वात्[6] ज्ञायमानत्वाच्च[7]। दूषयति—**नेति**। सर्वस्य सुखदुःखतद्धेतुत्वेन हेयपक्षनिक्षेपात् उपादेयानां प्रमाणशास्त्रापवर्गाणामभावप्रसङ्गाद् व्याघातः। **अविवक्षितत्वाच्चेति**। चशब्दसमुच्चितमशक्यहानत्वं हेत्वन्तरमादर्शयति—**न च प्रमाणादिहानमिति**। सुखदुःखतद्धेतवो हि हेयाः सन्तो हानोपायमपेक्षन्ते। न च प्रमाणादेरन्यः तदुपायः संभवति। न च प्रमाणादिः स्वोच्छेदाय पर्याप्तः। न चास्मादपवर्गो नाधिगम्यते। तस्मान्न शक्यं प्रमाणादिना प्रमाणादिहानमिति। न चैतन्निःश्रेयसहेतुं शास्त्रं प्रणयतः सूत्रकारस्य तदनुवर्तिनो वा भाष्यकारस्य विवक्षितमित्याह—**न च प्रमाणा-**

१. °नार्थ्यं J २. समर्थस्यापि C ३. °वत्त्वं प्रमापयति C ४. °कारणत्वेन J ५. °माण ग्रहणस्येत्याद्यर्थप्रतिपत्तेरित्यन्तो भागो भ्रष्टः J ६. °दर्यमाण° J ७. जायमान° C

**दिहानं विवक्षितम्** । तस्मादस्मद्व्याख्यानमेव शोभनमित्याह—**किं त्विति** । [1]प्रवृत्तिसामर्थ्याधानयोग्यत्वममधिकारः । तस्मात् सुखदुःखतद्धेतुरूपार्थप्रतिपत्तिरेव हि समर्थां प्रवृत्तिमाधत्ते, न त्वर्थमात्रप्रतिपत्तिरित्यर्थः । न केवलं व्याघाताशक्यहानाविवक्षितत्वैरर्थपदेन[2] न सर्वसंग्रहोऽशक्यत्वादपि न सर्वसंग्रह इत्याह—**न संविद** इति । सुखदुःखतद्धेतुतया न संविदो ग्रहणं संग्रहः सर्वमध्यपतिताया अपि । कुतः ? अनधिकारात्, सुखदुःखतद्धेतुयोग्यताविरहात् । नाप्यर्थ्यमानत्वेन संग्रह इत्याह—**अकर्मत्वाच्च** । न तावत् सर्वा एव संविदः संविद्गोचरा मनोयोनयः संवेद्या भवितुमर्हन्ति । एकनीलविषयसंवित्परम्परामात्र एव पुरुषायुषसहस्रपर्यवसानात्, विषयान्तरसंचाराभावप्रसङ्गाच्च[3] । तस्मादनवस्थाभयादन्ते कस्याश्चित् संविदोऽसंवेद्यतया फलमात्रत्वमभ्युपेयम् । तथा च सा नार्थ्यते[4] । न च सुखदुःखे तद्धेतुरिति न सर्वसंग्रहः संविदोऽसंग्रहादित्यर्थः ॥

तदेवमादिवाक्यं[5] व्याख्याय भाष्यवाक्यान्तरमवतार्य तत्रैकदेशिव्याख्यानं दूषयितुमुपन्यस्यति—**सोऽयं प्रमाणार्थ** इति । दूषयति—**नोभयस्यापि परिसंख्यातत्वात्, अर्थस्तु सुख**मित्यादिना भाष्यग्रन्थेन । कार्यकारणाभ्यामुभयत्वम् । **प्राणभृद्भेदस्यापरिसंख्येयत्वादिति** च हेतुः[6] श्वेतः प्रासादः काकस्य कार्ष्ण्यादितिवन्न प्रतिज्ञार्थेन सङ्गच्छते इत्याह—**प्राणभृद्भेदस्य चेति** । तदेतदेकदेशिमतदूषणमस्मिन् व्याख्याने[7] नास्तीत्याह—**नार्थशब्दस्येति** । चन्दनादिविषयं प्रमाणं सुखप्रयोजनमेव, कण्टकादिविषयं च प्रमाणं दुःखोत्पादप्रयोजनमेवेत्येतदुभयं परिसंख्यातुं नियन्तुमशक्यमित्यर्थः ॥

एवं किलात्र शङ्क्यते, सुखदुःखहेतुभावो वस्तूनां स्वाभाविको भवेन्न वा ? स्वाभाविकत्वे नील इव[8] सर्वान् प्रत्यर्थः सुख इति करभवन्मनुष्याणामपि कण्टकः सुखः स्यात् । एवं निदाघेऽपि कुङ्कुमं सुखं स्यात् । चन्दनं च हेमन्तेऽपि सुखं भवेत् । एवं तृष्णज इवापां सुहितस्यापः सुखाः प्रसज्येरन् । अस्वाभाविकत्वे त्वनादिवासनावैचित्र्यलब्धजन्मपुरुषधर्मकल्पनानुपातिनः सुखदुःखादयो न प्रमाणप्रयोजनं भवितुमर्हन्तीति । तत्रेदमुपतिष्ठते—**सोऽयंप्रमाणार्थ** इति । निवेदयिष्यते हि क्षणभङ्गाधिकारे[9] यथा स्थेमभाजामपि वस्तुनामक्रमाणामपि क्रमवत्सहकारिकारणसमवधानवशादुपजनापायधर्माणः क्रमवन्तो धर्मा भवन्तीति, तदिहापि । यद्यपि न जात्या सुखदुःखहेतुभावो भावानां भवति[10], तथापि जातिदेशकालावस्थापुरुषभेदसहकारिसमवधानादुपपत्स्यते सुखदुःखहेतुभावोऽव्यवस्थयेति भावः ॥

---

१ वृत्तिसा° C २. पदेन सर्व° C ३. राभावात् J ४. नार्यते J ५. अनुसन्धिवाक्यं C ६ °दिति हेतुः C ७. °मस्मद्व्या° C ८. सर्व एव C ९. न्या. सू. ३. २. १०-१७ १०. भावानामिति नास्ति C, भवतीति नास्ति J

तत् सिद्धमेतत्, प्रमाणार्थोऽनियतः, अनियतप्राणभृद्भेदहेतुकत्वात्। यद्यदनियतकारणकं कार्यं तत्सर्वमनियतमेव, यथा अनियतकालमेघोदयनिबन्धनं वर्षम्। तथा चायम्। तस्मादनियत इति। कस्मात् पुनः प्रमात्रादिचतुर्वर्गे प्रमाणस्यैवार्थवत्त्वमुच्येत[1] न प्रमात्रादीनामपीत्याशङ्कानिराकरणार्थं भाष्यमनुवदन्नेव व्याचष्टे—**अर्थवति च समर्थे** सम्यगर्थेऽर्थाव्यभिचारिणीति यावत्। **प्रमाणेऽर्थवन्ति** भवन्ति **समर्थानि** सम्यगर्थानि प्रमात्रादीनि। अर्थस्य तु सम्यक्त्वमिदमेव यद् यादृशः प्रमाणेनोपदर्शितस्तस्य तथात्वं[2] न पुनरन्यथाभाव इति। यदा त्वादि**भाष्य**वाक्येऽर्थशब्दः प्रयोजनवचनः, तदैवं व्याख्यानम्—**अर्थवति च** प्रयोजनवति च यतः[3] समर्थं शक्तं प्रमाणं प्रतिपत्त्यादिक्रमेण पूर्वोक्तेन प्रयोजनं प्रति, अतः समर्थे **प्रमाणे प्रमात्रादीन्यर्थवन्ति** प्रयोजनवन्ति **भवन्ति,** यतस्तान्यपि प्रमाणवदेव समर्थानि शक्तानि प्रयोजनं प्रतीति, अत्र हेतुः **अन्यतमापाय** इति। तस्यार्थं व्याचष्टे—**अन्यतमत्वार्थ** इति। नन्वन्यतमशब्दो बहुष्वनिर्धारितविशेषमेकमाह[4], न तु साधकतममित्यत आह—**प्रकरणादिति।** साधारणशब्दो हि प्रकरणाद् विशेषे वर्तते। तद् यथा शिविकावहनप्रक्रमे पुरुषमानयेति पुरुषशब्दो विष्टौ। तद्वदिहापि प्रमात्रादिपरिहाण्या[5] प्रमाणस्यार्थवत्त्वाभिधाननियमप्रक्रम इति प्रमात्रादिभ्यः प्रमाणस्य विशेषो[6] वाच्य इति तत्रैवान्यतमशब्दो वर्तते। यद्यप्यर्थप्रतिपत्त्यर्थाव्यभिचारद्वारेण[7] प्रमाणस्याव्यभिचारो गम्यते दृष्टे विषये, तथाप्यदृष्टे विषये न तज्जनितप्रतिपत्त्यव्यभिचारेणाव्यभिचारः शब्दस्य प्रमाणस्य शक्यो विज्ञातुम्, प्रतीत्यव्यभिचारस्य प्रमाणाव्यभिचारग्रहणमन्तरेणाशक्यज्ञानत्वात्। तस्माद् दृष्टार्थस्य मन्त्रायुर्वेदस्य प्रवृत्तिसामर्थ्यावधृतार्थाव्यभिचारस्य [8]साधर्म्यादाप्तप्रणीतत्वादग्निहोत्रादिवाक्यानां प्रमाणानामव्यभिचारग्रहणपुरःसरमेव त्रिवर्गस्याव्यभिचारग्रहणम्। न पुनरत्र त्रिवर्गस्याव्यभिचारः[9] शक्योऽन्यतः परिच्छेत्तुम्। अदृष्टार्थविषयस्य च चतुर्वर्गस्येहार्थवत्त्वेन प्रयोजनं दृष्टार्थे सन्देहादपि व्यवहार सिद्धेः। तदिदं चतुर्वर्गे प्रमाणस्य प्राधान्यमिति ॥

चतुर्वर्गविभागपरे **भाष्ये** प्रमाता प्रथमं दर्शितः। [10]ततस्तस्य लक्षणमाह—**प्रमाता स्वतन्त्र** इति। स्वातन्त्र्यं पृच्छति—**किं पुनः स्वातन्त्र्यम्,** यस्याभिसंबन्धात् स्वतन्त्र इति ? **भाष्यकृता** [11]प्रमातोपलक्षितो न लक्षितः। न खल्वीप्साजिहासयोर्वा प्रवृत्तौ वा स्वातन्त्र्यं प्रमातृत्वम्, अपि तु प्रमायाम्। ईप्सादिस्वातन्त्र्येण तु तदुत्तरकालभाविना प्रमायां

१. वार्थं उच्यते C २. °र्शितस्तथावं C ३. यत् C ४. °र्धारितमेक° J
५. परिहाराय C ६. वाच्यस्तत्रैव C ७. °पत्त्यव्यभि° C ८. सामान्याद् C
९. त्रिवर्गव्यभि° C १०. तत्रास्य C ११. प्रमातृत्वोप C

स्वातन्त्र्यं पूर्वकालभाव्युपलक्षितम्[1]। तेन तच्चरितमनुवर्तमानो **वार्तिककृत्** उपलक्षणान्तरं कर्तृत्वोत्तरकालभाव्याह[2]—**कारकफलोपभोक्तृत्वम्** । न हि सर्वः कर्ता समस्तकारकजन्यं स्वर्गादि[3] वौदनादि वा भुङ्क्ते ऋत्विक्पाचकादिषु[4] च व्यभिचारदर्शनात्[5] । कारकस्य तु सतः कर्तृत्वोत्तरकालभाविनी फलोपभोक्तृता कर्तृत्वनान्तरीयकतया तदुपलक्षयति, यजमानस्य राज्ञश्च प्रैषादिना तत्तद्व्यापारे कर्तृत्वात् । यथाहुरत्रभवन्तः,

तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा युक्तं [6]तत्सर्वं पच्यर्थः ।

[ महाभाष्ये ३।१।२६ ]

इति ।

स्वातन्त्र्यलक्षणमाह—**तत्समवायो वा** । कारकाभिधानेन सन्निधापितां क्रियां तदिति सर्वनाम्ना परामृशति । यस्य हि व्यापारं प्राधान्येन धातुराख्यातप्रत्ययो वाभिधत्ते स स्वतन्त्रः कर्ता । तथा हि विक्लिद्यन्तीत्यत्र तण्डुलादयः कर्तारः, पचन्तीत्यत्र देवदत्तादयः । तत् कस्य हेतोः ? एकत्र तण्डुलादेर्व्यापार उपात्तोऽपरत्र देवदत्तादेरिति । प्राधान्येन चाशेषकारकनिवर्त्त्यत्वं प्रधानक्रियायाः[7], अवान्तरव्यापारभेदेऽपि प्रधानक्रियोद्देशेन समस्तकारकप्रवृत्तेरिति । **पुरुष** इति प्रकृतक्रियापेक्षम्, प्रमायाः पुरुषाश्रयत्वादिति । लक्षणान्तरमाह—**तत्प्रयोक्तृत्वमितराप्रयोज्यता वा** । तस्य चेतनस्य सर्वकारकाणि प्रति प्रयोक्तृत्वम्, तैश्च कारकैरप्रयोज्यता वा[8] । अचेतनस्य तु भाक्तं कर्तृत्वं न स्वाभाविकमिति भावः । परिसमाप्तिपदार्थं व्याचष्टे—**तत्त्वपरिसमाप्तिरिति** । तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्वम् । तच्च हानोपादानोपेक्षाभिः पर्यवस्यति । पर्यवसानं परिसमाप्तिः । विनियोज्यतेति वक्तव्ये योग्यताग्रहणमीप्सितेऽपि [9]दृष्टे वस्तुनि कुतश्चित् प्रतिबन्धात् पुरुषेणानुपात्ते मा भूत् तत्त्वापरिसमाप्तिरिति । यद्यपि हि तत् पुरुषेणानुपात्तं तथाप्युपादानयोग्यताप्रदर्शनादस्ति तत्त्वपरिसमाप्तिरिति । **तत्प्रतिषेधश्च** इत्यत्र तच्छब्देन हानोपादानलक्षणं विनियोगं परामृशति ॥

**किं पुनस्तत्त्वमित्यादि** भाष्यं व्याचिख्यासुस्तत्त्वप्रत्ययप्रकृतेस्तदोऽर्थं पृच्छति—**किं पुनरिति**। उत्तरम्—**सदसती तत्**[10] । प्रश्नं विभजते—**तस्य भावस्तत्त्वमित्यत्रेति**। उत्तरं विभजते—**सदसती तत्** । अथ कस्मात् प्रकृतिपुरुषौ वा, पञ्चस्कन्धा वा, परं ब्रह्माद्वैतं वा, जीवाजीवास्रवादयो वा सप्त, पृथिव्यापस्तेजोवायुरिति वा [11]चत्वारि

---

१ पूर्वभाव्यु° J २ कृत्वोत्तर° C ३. °जन्यसुखादि C ४. ऋत्विक्षु च सूपकारादिषु J ५ °चारात् C ६ यत्सर्वं J ७. °क्रियाया इति C ८. वेति नास्ति J ९. दृष्टे कुत° C १०. इति C ११. चत्वारीत्या° J

भूतानीत्यादीनि न तदो वाच्यानि भवन्तीत्यत आह---**प्रमाणविषयत्वेनाधिकारात्** । सूत्रभाष्यवाक्यतद्विवरणेषु प्रमाणं प्रमाणविषयश्चाधिकृतः[1] । न च **सांख्यादिसिद्धान्तभेदानुपातिनो**ऽर्थाः प्रमाणविषयाः । यथा चैतत् तथात्रैव[2] निवेदयिष्यते । उपसंहरति---**तस्मादिति** ॥

प्रकृत्यर्थं व्याख्याय प्रत्ययार्थं व्याचष्टे—**तद्भाव** इति, सदसतोर्यथासंख्यं विधायकप्रमाणविषयता सतो भावः, तत्प्रतिषेधश्चासतो भावः । तदिति विधायकप्रमाणविषयतां परामृशति । तत्प्रतिषेधेन च प्रतिषेधकं प्रमाणमुपस्थापितम् । तेन प्रतिषेधकप्रमाणविषयत्वमेव [3]तत्प्रतिषेध इत्यनेनोक्तं भवति । एतद् विभजते—**तयोः खल्विति** । शङ्कते—**प्रमाणविषयत्वादिति** । सर्वसामर्थ्यविरहेण त्वसत् सतो व्यावर्तते । यदि चासदपि प्रमाणविषयः, तर्हि नासमर्थम् । तथा च सदसतोरभेद इत्यर्थः । निराकरोति—**न, अनैकान्तात्** । न वयमसामर्थ्येनासतो भेदमाचक्ष्महे येनैवमुपालभ्येमहीति भावः । शङ्कां विभजते---**तत्र भवेदिति** । निराकरणं विभजते—**तच्च नेति** । गवादि चेतनम्, अचेतनं घटादीति । यदि सदसती समर्थे कुतस्तर्हि तयोर्भेद इत्यत आह—**स्वतन्त्रेति** । असदुपलब्धिरेव सदुपलब्धेरन्यानुपलब्धिः । ननु संयोगविभागादिषु सत्स्वपि परतन्त्रोपलब्धिकारणत्वमस्ति, तेषां संयुज्यमानविभज्यमानाद्यधीननिरूपणत्वादित्यत आह---**प्रतिषेधमुखेन प्रतिपद्यते** प्रतीयते । सतां केषाञ्चित् पारतन्त्र्येऽपि न निषेध्यनिषेधाधिकरणपारतन्त्र्यमित्यर्थः ॥

संप्रति सदुपलम्भकस्य प्रमाणस्यासदुपलम्भकत्वं [4]प्रतिपिपादयिषता **भाष्यकारेण** प्रदीपो दृष्टान्त उपन्यस्तः । स तु साध्यसमः; तस्यापि प्रमाणसामग्रीनिवेशादिति शङ्क्यमानोऽत्यन्तलोकप्रसिद्धतयास्य दृष्टान्तत्वं समर्थयते—**प्रदीपवदिति** । गोपालाङ्गना अपि हि किमत्रास्ति स्तेनोऽस्मद्धनं वा[5] अपवरके न वेति सन्दिहानाः प्रदीपमुपादाय समन्तादवलोक्यापवरकमस्तीहास्मद्धनं नास्ति स्तेन इति सममेव निश्चिन्वन्ति, न तु स्तेनाभावनिश्चयायोपायान्तरमुपाददते । [6]तेनागोपालाङ्गनमा च पण्डितरूपेभ्यः सिद्धः प्रदीपो दृष्टान्तः । तदिदमुक्तम्—**न ह्यसत्प्रतिपत्तावुपायान्तरमास्थीयते** लोकेन । अनाश्रयणे हेतुमाह—**प्रदीपेन दृश्यमाने हि घटादिकेऽर्थे** स्वतन्त्रे **नानेन समानजातीयं** तुल्योपलम्भयोग्यतं[7] **दृश्यान्तरमस्ति** । नीलपीतौ हि परस्पराभाववन्तौ, तेन नीलनिषेधे नावश्यं पीत-

१. ॰कृतम् C २. तत्रैव C, १।१।९ सूत्रं द्रष्टव्यम् । ३. तदिति नास्ति C ४. प्रतिपादयिष्यता C ५ ॰वरकं C । ६. ॰गोपालम् C ७. ॰योग्यं C

विधिः। भावाभावौ तु परस्पराभावात्मानौ, नो खल्वभावाभावो नाम कश्चिदन्यो भावरूपात्[1]। नापि भावाभावोऽन्योऽभावात्। तेन समानजातीयं दृश्यान्तरं निषेधन् दृश्यान्तराभावमेव विधत्ते प्रदीपः। तदेवं प्रदीपोपायस्य प्रतिपत्तुः प्रतीतिक्रममुक्त्वा परीक्षकाणामुपपत्तिक्रममाह—**यद्यभविष्यदिति**। यदि कश्चिदाशङ्केत दृश्यतामभावः प्रदीपेन भावोऽपि भविष्यतीति, तत्रैष परीक्षकाणां तर्क उपतिष्ठते—**यद्यभविष्यदिति**। तदेवं लौकिकपरीक्षकसंमतं दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयति—**एवं प्रमाणेनापि** इन्द्रियादिना **सति प्रमीयमाणे** इति। पूर्ववद् व्याख्येयम्। उपसंहरति—**तदेवमिति**। **सर्वं चैतदुपरिष्टादुपपादयिष्यते**। ननु यदि सदसती प्रमाणविषयौ, कस्मात् सद्भेदा इवासद्भेदा अपि **सूत्रकृता** नोच्यन्त इत्यत आह—**तत्र** तेषु सदसद्भेदेषु मध्ये **स्वातन्त्र्येणासद्भेदा न प्रकाशन्त इति नोच्यन्ते**। निषेध्यनिषेधाधिकरणाधीननिरूपणत्वादसद्भेदानां भावभेदतन्त्रं प्रकाशनमिति भावभेदकथनेनैवाभावभेदा अपि गम्यन्त इति नोक्ता इत्यर्थः। अथ वा कथिता एव येषां तत्त्वज्ञानं निःश्रेयसोपयोगि, ये तु न तथा न तेषां प्रपञ्चः अनुपयुक्तभावप्रपञ्च इव वक्तव्य इत्याह—**चतुर्वर्गानन्तर्भावाद् वा भावप्रपञ्चवद् अभावप्रपञ्च** इति। निःश्रेयसानुपयोगिनि भावप्रपञ्चे यथा चतुर्वर्गानन्तर्भावः, एवमभावप्रपञ्चेऽपीति। अथ निःश्रेयसोपयोगाभावः कुतोऽवगन्तव्यं[2] इत्यत आह—**भावोपदेशादेवाभाव उपदिष्टो भवतीति**। द्विविधं प्रमाणं भावोऽभावश्च, यथा कारणाभावेन कार्याभावज्ञानं यतो द्वितीयसूत्रसमुत्थानम्। प्रमेयेषु चापवर्ग एव मूर्धाभिषिक्तः। एवं प्रयोजनादिष्वपीति तत्र[3] तत्रोहनीयमिति। उपसंहरति—**अतश्चेति**॥

तदेवं तात्पर्यं व्याख्याय अवयवार्थं व्याख्यातुं भाष्यं पठति—**सच्च खलु षोडशधा व्यूढमुपदेक्ष्यत** इति। अत्र प्रथमे कल्पे चशब्दोऽवधारणे, खलु शब्दः स्पष्टार्थे[4]। सदेव षोडशधा व्यूढमुपदेक्ष्यते नासत्, तस्य सदधीनप्रकाशत्वादिति। द्वितीये तु कल्पे पारमार्थिके चः समुच्चये, खलुः अवधारणे, सति षोडशधैवोपदेक्ष्यमाणेऽसदप्युपदेक्ष्यत इत्यर्थः। प्रकृत्यर्थं व्याचष्टे—**व्यूह** इति। **सूत्रस्य** सप्रपञ्चं तात्पर्यं व्याख्याय अवयवार्थं व्याचिख्यासुना **भाष्यकारेण तासां खल्वासां सद्विधानामिति भाष्येण** सूत्रमवतार्य पठितं तदस्य **वार्तिककृत्** तात्पर्यमाह—**त एते सद्भेदा इति सूत्रम्**। त एते प्रमाणादयः सद्भेदा निःश्रेयसोपयोगिनो न गङ्गावालुकादयः। तस्मात् सत्सु[5]

---

१. भावद्वयात् C  २. ॰वगम्यते J  ३. ॰ष्वपि तत्र C  ४. स्पष्टावधारणे C
५. सन्तः C

प्रमाणादयः [1]षोडशैवोद्दिष्टा लक्षिताः परीक्षिताश्च । न गङ्गावालुकादयः सन्तोऽपि निःश्रेयसानुपयोगादिति भावः ॥

द्वन्द्वस्वरूपमाह—**सर्वपदेति** । द्वन्द्वपरिग्रहे तात्पर्यमन्वयव्यतिरेकाभ्यामादर्शयति—**सर्व एत** इति । बहुव्रीहिकर्मधारययोरसंभवात् षष्ठीसमासपरिग्रहे निग्रहस्थानस्यान्यपदार्थस्य[2] प्राधान्ये विवक्षितार्थहानप्रसङ्ग इत्यर्थः । **निर्देशे यथावचनं विग्रह** इत्यस्य **भाष्यस्य** तात्पर्यमाह—**यथावचनमिति** । अन्योन्यनिरपेक्षाणां प्रत्येकं प्रमाहेतुभावः प्रमाणानामिति हि बहुवचनप्रयोजनम् । प्रमेयेषु तु यद्यपि प्रमेयता वास्तवी प्रत्येकमस्ति तथाप्यपवर्गहेतुभावेन प्रमेयता समुदाये समाप्यते, न तु प्रत्येकम् । आत्मादीनामन्यतमस्याप्यतत्त्वज्ञाने संसारानतिवृत्तेरिति यदेव हि[3] निर्देशे वचनभेदस्य प्रयोजनम्, तदेव चोद्देशेऽपि, तयोरेकवाक्यत्वादिति भावः । **प्रमाणादीनामिति** विभक्त्यर्थव्याख्यानपरं **भाष्यं** पठित्वा पृच्छति—**कः पुनरिति** । उत्तरम्—**कारकाणामिति** । तद्विभजते—**यत्रेति** । **कारकार्थः** प्रधानक्रिया, यदुद्देशेन सर्वकारकप्रवृत्तिः । कारकग्रहणेन च तन्नान्तरीयकतया प्रधानक्रियाप्यानीतेति विवरणे सापि दर्शिता । यद्यपि स्वस्वामिभावादावपि संबन्धेऽन्तर्गतः क्रियाकारकसंबन्धोऽस्ति संबन्धमात्रस्य क्रियागर्भत्वात् तन्नान्तरीयकत्वाच्च कारकस्य, तथाप्यसौ न विवक्ष्यते । संबन्धमात्रमेव तु विवक्ष्यत इत्यर्थः । तत्र चोदयति—**तत्त्वस्येति** । षष्ठी चानर्थिका अव्यतिरेके तदनुपपत्तेरित्यपि द्रष्टव्यम्, तत्रानियमवाद्येकदेशी परिहरति—न, **उभयथापीति** । भावस्य भवित्रधीननिरूपणत्वाद्, भावनिरूपणमेव भवितृनिरूपणमाक्षिपति । **अभेदेऽपीति** । इषुस्थित्या[4] यथा तद्भावप्रतिषेध इषोर्भावो[5] धर्मो गतिः, तस्य प्रतिषेधः स्थितिः, तिष्ठतेर्गतिनिवृत्त्यर्थत्वात् । एवमत्रापि न प्रमाणप्रमेयादिमात्रमुच्यते तत्त्वग्रहणेनापि त्वर्थान्तरं तेष्वेव यत् यत् समारोपितं रूपमन्यथात्वमिति यावत् तत् प्रतिषिध्यते । **गतिमदिति** भावप्रधानो निर्देशः । यथा

द्व्येकयोर्द्विवचनैकवचने[6] ।

इति द्वित्वैकत्वयोरिति । संख्येवविवक्षायां तु द्व्येकेष्विति स्यात् । तेन गतिमत्त्वमर्थान्तरमिषोर्नभवतीत्यस्मिन्नर्थे इषोः स्थितिरिति वाक्यं प्रयुज्यत[7] इत्यर्थः । तदेतद् एकदेशिमतमर्थान्तरत्वनियमवादी दूषयति—**तन्नेति** । प्रमाणदिभ्योऽनर्थान्तरस्य तत्त्वस्य

---

१. षोडशधा लक्षिताः C　२. °स्योत्तरपदा° J　३. °रिति हि C　४. अभेदेपीषु° J
५. °षेधयोर्भावो C　६. पा. सू. १।४।२२　७. प्रसज्यते C

च इषोरनर्थान्तरस्य [1]गत्यभावस्य चासिद्धेः। यथा च भावातिरिक्तोऽभावस्तथा क्षणभङ्गाधिकारे[2] निवेदयिष्यते। प्रमाणाद्यतिरिक्तं च तत्त्वमनन्तरमेव दर्शयिष्यतीति। **तत्त्वस्य ज्ञानमित्यादि** भाष्यं व्याचष्टे—**तत्त्वं ज्ञायमानमिति**। उभयं पृच्छति—**किं पुनरिति**। तत्त्वप्रश्नस्योत्तरम्—**तत्त्वमिति**। निमित्तत्वं शक्तिः प्रमाणादीनाम्। सा च द्वयी स्वरूपलक्षणा सहकारिसाकल्यलक्षणा च, अतीन्द्रियस्य सामर्थ्यस्य नैयायिकैरनभ्युपेतत्वात्। शक्तेश्च भावत्वेन भवितृनिरूपणाधीननिरूपणत्वाद् भवितुरपि निरूपणं भवतीत्युक्तम्॥

अभिमतं निःश्रेयसं ग्रहीतुं निःश्रेयसद्वैविध्यमाह—**निःश्रेयसं पुनरिति**। तत्रादृष्टं निःश्रेयसं ग्रहीतुं दृष्टमतिप्रसङ्गापादनेन दूषयति—**एवं च कृत्वेति**। **सूत्रकारा**भिमतं निःश्रेयसमाह—**परं त्विति**। एतदुक्तं भवति, यद्यपि निःश्रेयसपदमभिमतमात्रवाचि प्रमाणादितत्त्वज्ञानस्य च दृष्टमपि निःश्रेयसं संभवति, तस्यैव ततः साक्षादुत्पत्तेः। तथाप्यात्मादिवाचकप्रमेयपदसमभिव्याहारादृष्टमेव निःश्रेयसमभिप्रेतं[3] **सूत्रकारस्य**। तत्र च प्रमाणादितत्त्वज्ञानस्यापि पारम्पर्येण हेतुभावोऽस्त्येवेति। चोदयति—**दृष्टमिति**। दृष्टे दर्शनमेव प्रमाणम्। अदृष्टं तु निःश्रेयसमप्रामाणिकं दर्शनाभावादित्यर्थः। परिहरति—**न, नास्ति अर्थस्य तथाभावात्**। अर्थ आत्मादिः। तस्य आगमानुमानसहकारिणा कारणाभावेन कार्याभावानुमानमेवात्रार्थे प्रमाणमिति भावः। ये तु वैयात्यात् मन्येरन्[4] पदार्थतत्त्वज्ञानमात्रमेव परनिःश्रेयसहेतुरिति, यथाहुः—

एको भावस्तत्त्वतो येन दृष्टः, सर्वे भावास्तत्त्वतस्तेन दृष्टाः।

इति, तान् प्रत्याह—**यदि पुनरिति**। न हि भावानां तत्त्वमन्यदतः प्रत्यक्षविषयीकृताद् रूपादिति भावः। मोक्षमाणा इति, सनि

मुचोऽकर्मकस्य गुणो वा[5]

इति गुणाभ्यासलोपौ। न केवलं वस्तुवृत्तिः, **सूत्रकारस्यापि** संमतमेतदित्यत आह—**पृथगुपदेशाच्च** प्रमेयस्य प्रमाणादिभ्यः। यदि च यत्किञ्चित्प्रमेयतत्त्वज्ञानान्निःश्रेयसस्य परस्य प्राप्तिः, किमर्थमात्मादिसूत्रेण द्वादशैव प्रमेयाणि, नाधिकानि न न्यूनानि चेत्यवधार्यते **सूत्रकारेण**? तस्मात् तदेव[6] साक्षादुपयोगि निःश्रेयसे न पदार्थमात्रमित्याह—**प्रमेयावधारणार्थायां चोत्तरसूत्रप्रक्रियायामकुशलः सूत्रकारः स्यात्**। कुतः? **प्रमेयस्य विहितत्वादाद्येन सूत्रेणेति**। तस्माद् यद्युपपत्तिः यदि च **सूत्रकारा**भिमतमुभयथापि प्रमेयतत्त्वपरिज्ञानं परस्य निःश्रेयसस्य हेतुः। तदनेन **आत्मादेरिति** भाष्यं व्याख्यातम्॥

---

१. प्रवृत्त्य° C २. ३.२.१०-१७. ३. °भिमत° J ४. न पदार्थ° C ५. पा. सू. ७.४.५७ ६. तदेतत् C

अथ किं तत्त्वज्ञानस्यात्मादिविषयस्यादृष्ट एव कोऽपि सामर्थ्यातिशयो यतः परनिःश्रेयसोत्पादः, मैवम् । किं तर्हि ? दृष्टयैव द्वारेत्याह **भाष्यकारः—तच्चैतदिति** निःश्रेयसहेतुभावाभिधानस्य **अनु** पश्चात् **उद्यते** अनूद्यते । तत्त्वज्ञानोत्पादे हि साक्षात्[1] तद्विषयमिथ्याज्ञानादिनिवृत्तिक्रमेणापवर्गोत्पाद इति द्वितीयसूत्रेणानूद्यते । तदेतद् भाष्यं तच्चैतदित्याद्यधिगच्छतीत्यन्तमनूद्य व्याचष्टे—**हेयमिति** । मिथ्याज्ञानमात्मादिषु प्रमेयेषु **अविद्या** तन्मूलं **तृष्णा** । उपलक्षणं चैतत्, द्वेषोऽपि द्रष्टव्यः । तन्मूलौ च **धर्माधर्मौ**, तदेतद्धेयम् । हानं तत्त्वज्ञानं हीयते ह्यनेनैतत् सर्वम् । **तस्य** प्रमाणस्य । **उपायः शास्त्रम्** । **अधिगन्तव्यो मोक्षः** । एवमवयवान् विभज्य तात्पर्यमाह—**एतानीति** । एतानि **चत्वार्यर्थपदानि** पुरुषार्थस्थानानि, न केवलं हेयाधिगन्तव्यभेदेन द्वादशविदं प्रमेयं दर्शयतः तद्विषयतत्त्वज्ञानाय च सोपकरणन्यायाभिधानप्रमाणव्युत्पादकं शास्त्रं प्रणयतः **सूत्रकारस्य** संमतम्, अपि तु सर्वेषामेवाध्यात्मविदामाचार्याणामिति भाष्यतात्पर्यमित्यर्थः ।

तत्र **संशयादीनां पृथग्वचनमनर्थकम्** इत्यादि चोद्यभाष्यं व्याचष्टे—**संशयाद्यग्रहणमिति** । सत्यमिति परिहारभाष्यं व्याचष्टे—**न विद्येति** । चोद्यं विवृणोति—**संशयादय** इति । परिहारं विवृणोति—**न विद्येति** । **प्रस्थानं** व्यापारः । तेषां पृथग्वचनमित्यादि भाष्यं [3]व्याचष्टे—तस्याः **संशयादीति** । न च वाच्यमस्तु विद्यात्रयमेव, कृतमान्वीक्षिक्या विद्ययेति, तस्या एव समस्तविद्यावदातीकरणहेतुत्वात् । यथा वक्ष्यति—**प्रदीपः सर्वविद्यानामिति । स चायं किंस्विदिति वस्तुविमर्शमात्रमनवधारणज्ञानं संशय** इति भाष्यम् । तद् व्याचष्टे—**तत्र** तेषु संशयादिषु, **संशयस्तावदिति** ज्ञानमवधारणं प्रत्यय इति पर्याया इति मन्वानश्चोदयति—**अनवधारणात्मक** इति । न ज्ञानमात्रपर्यायोऽवधारणशब्दः । अपि तु तद्विशेषनिश्चयवचनः किंस्विदिति दोलायमानस्योभयकोटिस्पृशः प्रत्ययस्यार्थेऽनवधारणात्मकस्यापि प्रत्यात्मं मानसेन प्रत्यक्षेणावधार्यमाणत्वादिति । परिहरति—**न व्याघात** इति । **तत्** तस्मात् **उभयमिति** । तत्र **नानुपलब्धे** इत्यादि **भाष्य**मवतारयितुं पृच्छति—**स कथं न्यायस्येति** । यदि न्यायस्याङ्गं संशयो भवेत्, सोऽपि व्युत्पाद्येतेति भावः । उत्तरम्—**यस्मादिति** । एतदाक्षिपति—**उपलब्ध** इति । पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः । प्रतिज्ञाद्यवयवसमूहो वा न्यायः । नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति ।

---

१. शास्त्रात् J २. ०विधं C ३. तद्व्या० J

तस्याश्रयो[1] विषय उपलब्ध उच्यमानो निर्णीत एव वक्तव्यः। सन्दिग्धे हि तस्मिन् हेतुः सन्दिग्धाश्रयतया असिद्धः स्यात्। यथेह नगनिकुञ्जे मयूरः केकायितापातादिति। तदापातसन्देहे[2] अतो न निर्णीतश्चेन्नोपलब्धः। ततश्चोपलब्धश्चानिर्णीतश्चेति व्याहतमित्यर्थः। परिहरति—**नास्ति व्याघात** इति। सामान्यतः पर्वतमात्रमुपलब्धं निर्णीतम्, तद्विशेषस्तु वह्निमत्त्वादिरनिर्णीत इति। पुनश्चोदयति—**एवमपीति**। उपलब्धो निर्णीत इति हि सामानाधिकरण्यात् समानविषयत्वं दर्शयति। तथा च व्याघातः। सामान्यविशेषभेदेन तु व्याघातं परिहरन् सामानाधिकरण्यं न समर्थयस इति भावः। परिहरति—**न, यथा तथेति व्यपदेशादिति**। सामान्यविशेषयोः सामानाधिकरण्यात्। य एव सामान्यतो निर्णीतः, स एव विशेषतोऽनिर्णीतोऽपि संभवतीति न व्याघात इत्यर्थः। **एवमर्थं** न्यायप्रवृत्त्यर्थम्, असन्दिग्धे न्यायप्रवृत्तेरनुपपत्तेः। न हि[3] करिणि दृष्टे चीत्कारेण तमनुमीमते प्रेक्षावन्त इति॥

प्रयोजनस्वरूपप्रतिपादनपूर्वकं प्रयोजनपदप्रयोजनप्रदर्शनार्थं भाष्यमनुभाषते—**अथ प्रयोजनम्**। व्याख्यातुं पृच्छति—**किं पुनरिति**। उत्तरं—**येनेति**। स्फुटतरमेवैतत् इत्यर्थः। पुनः पृच्छति—**केनेति**। एकदेशिमतेनोत्तरमाह—**धर्मेति**। तत्र काम इतीच्छामात्रं वोच्यते, कामिनीविषयो वा रागः? पूर्वस्मिन् कल्पे काम इत्येवास्तु कृतं धर्मादिभिः, सर्वेषामेव काम्यमानत्वात्। उत्तरस्मिन्नव्याप्तिः, सरकमृगयादीनां काम्यानामसंग्रहात्। धर्ममोक्षयोरपि नास्तिकान् प्रत्यप्रवर्तकत्वम्[4]। तस्मादयुक्तमेतदिति मन्वान आह—**वयं तु पश्याम** इति। सुखस्याप्त्या दुःखस्य हान्या विषयेण विषयिणं प्रत्ययमुपलक्षयति। असत्योरकारणत्वात्, सत्योर्वा अनर्थकत्वात् प्रवृत्तेरिति। तथापि सुखदुःखाप्तिहान्योरेव कर्तुः प्रवृत्तिप्रसङ्गो न तत्साधने, न ह्यन्यद्विजानाति इच्छति च करोति चान्यदिति घटते, अतिप्रसङ्गात्। न च फलं पुरुषप्रवृत्तिगोचरः, तत्साधनं तु तद्गोचरः। तत्साधनत्वविज्ञानात् तत्साधन एव प्रवर्तते। तन्नातिप्रसङ्ग इति चेत्? हन्त तर्हि तत्साधनत्वज्ञानमेव प्रवर्तयति, न फलज्ञानम्, ज्ञानेच्छाप्रवृत्तीनां कार्यकारणभूतानां सामानाधिकरण्येन संप्रतिपत्तेरित्यभिप्रायेणाह—**सुखदुःखसाधनभावाच्च[5] सर्वेऽर्थाश्चेतनं प्रयोजयन्तीति**। तुशब्दः फलाद् व्यवच्छिनत्ति। अत्रापि विषयेण विषयिणं प्रत्ययमुपलक्षयति। एतदुक्तं भवति, तोयमुपलभ्य तज्जातीयस्यापेक्षितसाधनतां दृष्टचरीमनुस्मरति। अथ तज्जातीयतया लिङ्गेन दृश्यमानस्यापेक्षितसाधनभावमनुमिमीते।

---

१. °स्याश्र यो C २. °तोयमनि° C ३. प्रत्यक्षेण करिणि C ४ °कत्वात् C
५. विषयेण प्रत्यय° C

अनुमाय च पिपासुः प्रवर्तते। तेनोपायज्ञानस्य साक्षात् पुरुषप्रवृत्तिहेतुत्वम्, फलस्य[1] त्वीप्सिततमस्योद्देशतयेति[2] सर्वं सुन्दरम्। **तदाश्रयश्च न्यायः प्रवर्तते** इति **भाष्यं** व्याचष्टे—**तदिदं प्रयोजनं न्यायस्येति**। आक्षिपति—**क इवि**। **समाधत्ते**—**उपकारकत्वमिति**। यथा राजाश्रितः पण्डित इति। उपकारकत्वमेव दर्शयति—**तन्मूलत्वादिति**। **विधिः** प्रवृत्तिः। न जातु निष्प्रयोजनां[3] काकदन्तादौ परीक्षामारभन्ते प्रेक्षावन्त इत्यर्थः। आक्षिपति—**का पुनरियमिति**। न्यायाश्रयत्वं प्रयोजनस्य प्रतिज्ञाय परीक्षाश्रयत्वसमर्थनमसङ्गतमिति भावः। उत्तरम्—**न्यायः**। तस्मान्नासंगतमित्यर्थः। नन्वेवमपि नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति व्युत्पत्त्या प्रत्यक्षादि प्रत्येकं न्यायः। न[4] चैतत् प्रत्येकं प्रयोजनमाश्रयते। अजिहासितानुपादित्सितानामप्यजिज्ञासितानामर्थानां प्रत्यक्षादिगोचरत्वदर्शनादित्याक्षिपति—**कः पुनरयं न्यायः?** समाधत्ते—**प्रमाणैरिति**। प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि। **तैरर्थस्य** लिङ्गस्य परीक्षणं परीक्षा। परीक्षितं तु लिङ्गं पञ्चावयवोपपन्नमनुमेयप्रत्ययफलं भावयत्येव, न त्वनुमेयार्थपरीक्षा। तस्य सन्दिग्धत्वेऽपि स्वरूपेण परीक्षानास्पदत्वादिति। नन्ववयवैश्चेदर्थपरीक्षणं न तर्हि प्रमाणैः, कार्यकारणयोरभेदाभावादित्यत आह—**किमुक्तं भवतीति**। न साक्षात् प्रतिज्ञादयोऽवयवा अर्थपरीक्षायामुपयुज्यन्ते। अपि तु स्वकारणतत्प्रमाणसूचनेन। तस्मात् प्रमाणानामवान्तरव्यापारः प्रतिज्ञादय इत्युपपन्नं प्रमाणैरर्थपरीक्षणम्। तदिदमुक्तम्—**प्रमाणव्यापारादितीति**। तस्मात् **नैकैकं प्रमाणमिति**। समस्तप्रमाणोपकरणत्वादेव चास्य परमत्वमित्याह—**सोऽयमिति**। पञ्चावयवोपपन्नतया च [5]प्रत्यक्षागमाश्रितत्वम्, न तद्विरोध इति [6]प्रदर्शनार्थं भाष्यमनुभाष्य तात्पर्यं व्याचष्टे—**प्रत्यक्षागमेति**। कथं पुनरनेन भाष्येण एतदुच्यत इत्यत आह—**यदिहानुमानेनेति**। **यत् पुनरनुमानमित्यादि** भाष्यं व्याचष्टे—**यत्र पुनरिति**। यत्र हि विरोधस्तत्र प्रमाणमूलानामवयवानां प्रतिज्ञादीनामितरेतरप्रतिसन्धानमेकवाक्यता नास्ति। प्रमाणविरोधेन योग्यताविरहिणां तत्पदार्थानां पारमार्थिकान्वयाभावादिति। **तीर्थं** दर्शनं तस्य **प्रतिरूपकः**। अदर्शनमिवं[7] दर्शयतीति यावत्। स खलु तादृशः पञ्चावयवप्रयोगो **लाभपूजाख्यातिकामैः** पण्डितव्यञ्जनैरुपवर्ण्यमानः प्रत्यवायाय, प्रागेवं[8] त्वपवर्गायेत्यर्थः। तदेवं समुदायतो **भाष्यं** व्याख्यायावयवविभागाय पठति—**यत् पुनरनुमानमिति**। [9]प्रत्यक्षविरुद्धोदा-

१. फलज्ञानस्य C २. °तयेति सु° J ३. °जने C ४. न °तत् प्रयो° J
५. प्रत्यया च प्रत्य° J ६. तत्प्रदर्श° C ७. °मेव दर्शनं प्रतिरूपयति दर्शनमिव C
८. °मानः न प्रत्ययाय प्रा° C ९. °विरोधोदा° C

हरणमाह—**अनुष्णोऽग्निरवयवी कृतकत्वाद् घटवदिति**। अत्र चोदयति—**कः पुनरिति**। इदमत्राकूतम्—रूपत्रयसंपन्नमेतत् कृतकत्वं न वा ? न चेत्, तत एव तर्हि तदनुमानाभासमिति[1] कृतं प्रत्यक्षविरोधेन। अथान्वयव्यतिरेकपक्षधर्मतासंपन्नमपि बाधितविषयतयैतदप्रमाणम् ? तदयुक्तम्, रूपत्रयसंपत्त्यां खल्वेतत् स्वसाध्येनाविनाभूतं भवति। न च बाधाविनाभावयोः सह संभवः। बाधायामपक्षधर्मो भवेत्, अनैकान्तिकश्च हेतुः। जिज्ञासितधर्मणो धर्मिणः [2]पच्यमानत्वेन पक्षत्वम्, न पुनः प्रत्यक्षावधृतसाध्यविरुद्धधर्मस्य[3]। तस्याजिज्ञासितत्वेनापक्षतया तद्धर्मस्यापक्षधर्मत्वान्न चैकान्तिकः[4]। साध्यधर्मिण्येव प्रत्यक्षोपस्थापितसाध्यधर्मविरुद्धधर्मवति दर्शनेन व्यभिचारात्। न च सपक्षासपक्षावेवान्वयव्यतिरेकगम्याविनाभावदर्शनविषयौ न पक्ष इति साम्प्रतम्। यदि हि पक्षं विहाय बहिरेव सपक्षासपक्षयोरविनाभावो गम्येत, तदा बहिर्व्याप्तिमात्रबलेन पक्षधर्मोऽपि हेतुर्न पक्षे साध्यं साधयेत्। असिद्धा हि तत्रास्य स्वसाध्येन व्याप्तिः। तदेतत् पण्डकमुद्वाह्य मुग्धायाः पुत्रप्रार्थनमिव। तस्मादन्तर्बहिर्वा सर्वोपसंहारेणाविनाभावोऽवगन्तव्यः। एवं च सिद्धः पक्षेऽपि व्यभिचारः साधनधर्मस्येत्यनैकान्तिकत्वम्। तथा च रूपत्रयसम्पन्नो हेतुर्बाधितविषयश्चेत्यसंभवः। तस्मात् सुष्ठूक्तम्—**कः पुनरस्यानुमानस्य** रूपत्रयसम्पन्नस्य **विरोधः ?** न ह्यस्ति संभवो रूपत्रयसंपन्नं विरुद्धं चेत्यर्थः। [5]अत्र समाधिमाह—**अनुमानाविषये प्रयोगः**। [6]वक्ष्यति ह्यनुमानाधिकारे यथानौपाधिकः संबन्धो हेतुसाध्ययोरनुमानाङ्गम्, न तु कार्यकारणभावादिरव्यापकत्वादतिप्रसङ्गाच्चेति। स चैवं प्रवर्तते—यो यः कृतकः स सर्वोऽनुष्णो यथा घटादिरिति। न च वह्नेरिव धूमसंबन्धे आर्द्रेन्धनसंयोगो गुर्वन्तेवासिनोः साहचर्ये इव स्वाध्यायाध्ययनमुपाधिः कृतकत्वानुष्णत्वयोः संबन्धे उपलभ्यते। सोऽयं शङ्कितः समारोपितो वा प्रयत्नेन पुनःपुनरन्विष्यमाणोऽनुपलभ्यमानस्तत्र तत्र घटादावुपाधिर्नास्तीति प्रत्यक्षेण, यद्यभविष्यद् घटादिवदेव व्यज्ञास्यत, विज्ञानाभावान्नास्त्येवेति तर्कसहायेन निश्चीयते। सोऽयं रूपेणेव रसस्य, श्वस्तनेनेव सवितुरुदयेनाद्यतनस्य तदुदयस्य, समुद्रवृद्ध्येव चन्द्रोदयस्य समानकालस्य, कृतकत्वस्यानुष्णत्वेन स्वाभाविक औत्सर्गिकः संबन्धः सामान्येन यो यः कृतकः स सर्वोऽनुष्ण इत्यवधारितः, न तु निर्विभज्य तेजोऽवयविनि। न हि सर्वोपसंहारवती व्याप्तिरेकदेशविषया भवितुमर्हति। एकदेशविषयत्वे यत्रैव न दर्शिता तेनैवानैकान्तिकत्वमाशंक्येत। तथा च तत्र तत्रैकदेशे प्रत्येकं व्याप्तिप्रदर्शनमशक्यम्, आनन्त्यात्।

---

१. °भासत्वमिति C २. पक्ष्यमाणत्वेन C ३. °साध्यधर्मविरुध्यस्य C ४. °र्मस्य पक्षधर्मत्वं न चैकान्तिकम् C ५. तत्र C ६. वक्ष्यते C, १.१.५. ७. °चर्ये इवाध्ययन° J

तस्मात् सर्वोपसंहारेणैव तदुपदर्शनम्, तदिह कृतकत्वमौत्सर्गिकसामान्यविषयव्याप्तिस्मरणसध्रीचीनं पक्षधर्मतावशात् विशेषे तेजोवयविनि साधयितुमनुष्णतोन्मुखं यन्न साधयेत् तत्[१] किं प्रत्यक्षेणापहृतविषयत्वात्, आहोस्विदनैकान्तिकत्वात्? न तावदनैकान्तिकत्वम्, प्रागेव सामान्यतोऽनौपाधिकसंबन्धस्यावधारणात्। [२]उष्णे तेजोवयविनि कृतकत्वस्य दर्शनाद् अनैकान्तिकमपक्षधर्मो वा कृतकत्वमिति चेत्—न, अनुमानेन सामान्यतोऽवधृतव्याप्तिना तस्यानौष्ण्यसाधनात्। प्रत्यक्षेण तेजोऽवयविन औष्ण्यग्रहेण तत्र[३] कृतकत्वस्य हेतोर्वृत्तावुत्पन्नमपि व्याप्तिविज्ञानं बाध्यते। ततश्चानैकान्तिकत्वादप्रवृत्तिरनुमानस्येति चेत्—न, अनुमानप्रवृत्तिविषये साध्यधर्मिणि हेतोर्व्यभिचारानुद्भावनात्। अन्यथा तद्गतसाध्यधर्मसन्देहे तत्रोपलभ्यमानः साधनधर्मः सन्दिग्धव्यतिरेकित्वादनैकान्तिकः स्यात्। सन्दिग्धसाध्यधर्मे दृष्टान्त इव साधनधर्मः। तथा चानुमानमात्रमुच्छिद्येत, प्रत्यक्षेण साध्यधर्मविपर्ययदर्शनात्। तेजोवयविनोऽनुष्णत्वेनासाध्यत्वम्, तथा चानैकान्तिकत्वम् अपक्षधर्मता वेति चेत्? तर्हि प्रत्यक्षेण साध्यविपर्ययसाधनं बाधनमित्यनर्थान्तरम्। तदिदमुक्तम्—यस्मिन् विषये तेजसोऽनुष्णत्वे एतत् प्रयुक्तम्, **स प्रत्यक्षेणापहृत** इति। एवं चानुमाने दूषिते कृतमपक्षधर्मत्वव्यभिचाराभ्यां तदुपजीविभ्यामिति भावः॥

यत् पुनः **दिग्नागेन** प्रत्यक्षविरुद्धमनुमानमुदाहृतं तदुपन्यस्यति—**अपरे पुनरिति**। अश्रावणः शब्दः कृतकत्वाद् घटादिवदिति ब्रुवाणः शब्दस्वरूपमेवापलपति। न हि श्रवणेन्द्रियादन्यदस्ति शब्दग्रहणकारणम्। न चागृह्यमाणः शब्दः सद्व्यवहारगोचरः। तस्मादेवंवादिनोऽभिप्रायव्याप्तमसत्त्वं शब्दस्य। तथा च प्रत्यक्षविरोध इति भावः। दूषयति—**तैस्त्विति**। सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत इत्युत्सर्गः। क्वचित् पुनर्विशिष्टं विधानमपि भवत्यनन्यगतित्वात्। तद्यथा—

लोहितोष्णीषा ऋत्विजः प्रचरन्ति।
सति विभवे न जीर्णमलवद्वासाः स्नातकः स्यात्[४]।

इति। तद्वदिहापि अश्रावणः शब्द इति श्रुतिवाक्ययोः सामर्थ्यात् श्रावणत्वविशेषणोपसंक्रान्तो निषेधो न विशेष्येण शब्देन सह संबध्यते। नापि श्रावणत्वनिषेधादार्थः[५] शब्दनिषेधो वाद्यभिप्रायव्याप्तः। वचनार्थविरोधिनोऽर्थस्यार्थगम्यत्वान्न तद्विरोधिनः श्रावणत्वनिषेधस्य चाधिकरणं शब्द इति न शब्दाभावे तन्निषेधोऽवकल्पते।

१. तत्र C २. उष्ण इति नास्ति C ३. तस्य C ४. गौतमधर्मसूत्रे १।९।४
५. निषेधार्थः C

न चाभावस्तुच्छ इति तृतीय उपपादयिष्यते। न च श्रावणत्वं प्रत्यक्षगोचरः। तद्धि शब्दश्रोत्रयोः संबन्ध,

कृत्तद्धितसमासेषु संबन्धाभिधानं त्वतल्भ्याम्।

इति कात्यायनीयवचनात्। न च प्रत्यक्षाप्रत्यक्षवृत्तिः संबन्धः प्रत्यक्षः। तस्मात् श्रावणत्वमप्रत्यक्षमिति नात्र प्रत्यक्षविरोधः। तदिदमुक्तम्—**इन्द्रियवृत्तीनामतीन्द्रियत्वादिति**। वृत्तिः स्वार्थे संबन्ध इत्यर्थः॥

आगमविरुद्धमुदाहरति—**शुचीति**। मन्वादिभिर्नरास्थिस्पर्शप्रतिषेधात्, स्पर्शे च प्रायश्चित्तोपदेशादशुचित्वं नरशिरःकपालादीनामिति। कापालिक आक्षिपति—**कथमिति**। नास्माकं वेदस्तन्मूला वा स्मृतयः प्रमाणमित्यभिप्रायः। उत्तरम्—**शुचि नरशिरःकपालमिति** ब्रुवता श्रुतिस्मृतीतिहासपुराणानपेक्षेणानुमानमात्रसहायेनात्र[1] वस्तुनि त्वया शुचिरूपोऽर्थो वक्तव्यः। **किमुक्तं भवति शुचीति**? यदि उच्येत स्प्रष्टुः प्रत्यवायाभावः? सिद्धान्ती पृच्छति—**स कस्येति** वाच्यम्। यद्यात्मन इति ब्रूयात् कापालिकः, अविगीता हि व्यवहारपरम्परास्माकं **कापालिकानां** नरशिरःकपालस्पर्शतदवस्थितान्नपानोपयोगलक्षणा, दाक्षिणात्यानामिवाहेनैवुकादिलक्षणा क्रिया श्रेयस्करी। तस्मादस्माकमप्रत्यवायकरतया शुचि नरशिरःकपालमित्यर्थः। तत्र सोपहासम् उत्तरमाह—**तदागमानुष्ठानतात्पर्यावस्थानात्**[2] कापालिकस्यैवमेतत्। श्रुतिस्मृतीतिहासपुराणलक्षणागमविहितमर्थमाचरतां तन्निसिद्धं च परिहरतां दाक्षिणात्यानामाहेनैवुकाद्यनुष्ठानमनादि अद्य यावदनुवर्तमानमविगीतमाम्नायमूलतामनुमापयति आत्मनः श्रेयोहेतुभावेन, न खल्वागमानपेक्षः सहस्रेणाप्यनुमानैरिममर्थमवगन्तुमर्हति। **कापालिकानां** त्वागमविहितमकुर्वतां कुर्वतां च तन्निषिद्धमर्थं प्रयत्नेनानादिरपि व्यवहारः [3]शाक्यमल्लकादीनामिव न वेदानुमानमूलमिति भावः। अथ **त्रयीविदां** नरशिरःकपालमप्रत्यवायहेतुरिति **ब्रूयात्**, तदा त्रय्या वक्ष्यमाणेन न्यायेन प्रामाण्योपगमादागमविरोधः, तदीयस्पर्शस्य त्रय्यां निषेधेन[4] प्रत्यवायहेतुत्वनिश्चयात्। अपि चागमानपेक्षोऽनुमानेन शौचं नरशिरःकपाले व्यवस्थापयन् प्रष्टव्यो जायते—**शुचि नरशिरःकपालमिति कोऽर्थः**? ननु य एव वाक्यात् प्रतीयते स एवार्थः, तत् किं पृच्छ्यत इत्यत आह—**विशेषस्य नरशिरःकपालस्य शौचविधानमेतत्**। ततः किमित्यत आह—विशेषविधानं च [5]शेषप्रतिषेधपरं

१. °मानसहा° J २. तदा स्वागमार्थतात्पर्यावस्थानात् C. ३. शाक्यभिन्नका° J. ४. °षेधात् J. ५. शेषे प्रतिषेधविषयम् C.

लोके दृष्टम्, यथा दक्षिणेन चक्षुषा पश्यतीति उक्ते न[1] वामेनेति गम्यते। तदिह यदि शुचि नरशिरःकपालम्, किमन्यदशुचीति वक्तव्यम्[2]। न हि नरोच्चारादीनामशुचित्वे प्रमाणमन्यदस्त्यागमात्। आगमप्रामाण्यं च न मन्यस इति भावः। अथ त्रयीविद्वेषाद् अनुमानपक्षपातिना त्वया सर्वमेव नरविट्कपालादि शौचपक्षे निक्षिप्यत इत्याह—**अथ सर्वमेव शुचि**। परिहरति—**दृष्टान्तो नास्ति**। कुतः? **सर्वस्य पक्षीकृतत्वात्**। चोदयति—**अथानुमानविरुद्धं कस्मादनुमानं न भवतीति**। न खलु प्रमाणत्वेन प्रत्यक्षागमाभ्यामनुमानस्य कश्चिद् विशेषो येन तौ बाधकावनुमानस्य नानुमानमिति[3] भावः। परिहरति—**एकस्मिन्ननुमानद्वयसमावेशाभावात्**। अयमभिसन्धिः—यत् तावदनुमानं पूर्वप्रवृत्तं तेन बाधितविषयं तद्बलभावि पश्चात्तनमनुमानं[4] न स्वकार्याय पर्याप्तम्, यथोक्तमश्रावणः शब्दः कृतकत्वाद् घटादिवदित्यस्यानुमानस्यानुमानविरोध[5] इति। लब्धस्वरूपं हि वस्तु क्वचित् किञ्चिन्निषिध्यते, न तु ज्ञानाकारालीके बहिरिति[6] तृतीये निवेदयिष्यते। तदिह श्रावणत्वं शब्दस्य निषेधतापूर्वं श्रवणमिन्द्रियमतीन्द्रियं[7] तद्ग्राह्यत्वं च वस्तुनी अनुमातव्ये शब्दोपलम्भलक्षणेन कार्येण। तथा चैतेनैवानुमानेनापहृतविषयमश्रावणत्वानुमानं चरममन्वयव्यतिरेकसंपन्नमपि न स्वोचितं कार्यं जनयति। एवं तनुभुवनादीनां न कर्तेश्वरोऽशरीरित्वान्मुक्तात्मवत् प्रयोजनाभावादित्याद्यपीश्वरधर्मिग्राहिमूलानुमानेनापहृतविषयतया न्यायाभासं वेदितव्यम्। तस्मात् परस्परानपेक्षसमानकालप्रवृत्तिसमर्थानुमानद्वयसमावेशाभावाभिप्रायमेतदुक्तम्। न ह्यनयोरन्यतरद् बाध्यं बाधकं वा संभवति, किं तु मिथः सत्प्रतिपक्षतया न प्रमां कुरुतः। कस्मात् पुनर्न समावेशोऽनुमानयोः? असमावेशो वा कुतः सत्प्रतिपक्षतेत्यत आह—**न ह्यन्वयव्यतिरेकसम्पन्ने**[8] इति। इहान्वयव्यतिरेकग्रहणेन समानबलयोरन्वयव्यतिरेकपक्षधर्मत्वासत्प्रतिपक्षत्वान्युपलक्षितानि। एतैः सम्पन्नयोर्यदि समावेश एकस्मिन् विषये भवेत्, तत एकतरस्य बाध्यत्वं बाधकत्वं वा गम्येतापि। न त्वेतदस्ति, असत्प्रतिपक्षतासम्पत्तेरभावादिति। उपसंहरति—**तस्मान्नानुमानविरुद्धम्** अनुमानं तुल्यबलम्, अपि तु सत्प्रतिपक्षमित्यर्थः। प्रत्यक्षमप्यनुमेयविरुद्धसाधनादनुमानस्य प्रतिपक्ष इति सत्प्रतिपक्षतयान्वयव्यतिरेकादिसम्पन्नस्यानुमानस्य न प्रत्यक्षेण तद्विरुद्धार्थोपसंहारिणा समावेश इति न बाध्यबाधकभाव इत्यभिप्रायेण चोदयति—**प्रत्यक्षविरोध्यपीति**। परिहरति—

---

१. °तीति न वामे° J. २. त्वया वक्त° C. ३. बाधकौ नत्वनु° C. ४. तदबलवत् पश्चादनु° C ५. घटवदित्यस्यानु° C ६. °कारालीकादिरिति C ७. निषिध्यता श्रवणनिन्द्रियं तत् C ८. °सम्पन्नयोः C

**न नेति**। तुल्यबलौ हि मिथः प्रतिपक्षौ भवतः, न तु दुर्बलोत्तमबलौ। न हि भवति तरक्षुः प्रतिपक्षो हरिणशावकस्य, किं तु समरकण्डूनिघ्नविषाणकोटिसमुल्लिखितगण्डशैलस्य विपिनमहिषस्य। तस्मात् पूर्वभावि प्रत्यक्षमनन्यथासिद्धं सदसत्प्रतिपक्षमनुमानं समानविषयसमावेशाद् बाधत इति युक्तमित्यर्थः ॥

चोदयति—**अथोपमानविरुद्धमनुमानं कस्मान्न भवति**? गोसदृशो गवय इत्यारण्यकस्य वाक्यं श्रुत्वा यदा नागरको वनं गतो गोसदृशं पिण्डमुपलभते, तदास्य वाक्यार्थानुभवाहितसंस्कारप्रबोधजनितस्मृत्यपेक्षं[1] गोसादृश्यज्ञानमुपमानं पुरोऽवस्थितस्य पिण्डस्य गवयशब्दवाच्यत्वज्ञाने[2] प्रमाणम्। तत्र यदि कश्चित् प्रमाणयेत् नैष पिण्डो गवयशब्दवाच्यो गोपिण्डसादृश्याद् गोपिण्डान्तरवदिति, तदिदमनुमानमुपमानेन बाधितविषयमस्त्वित्यर्थः। संप्रतिपत्तिरुत्तरम्—[3]**नोपमानविरुद्धं** न भवतीति अनुपज्यते। अस्ति चेत् कस्मान्नोक्तमित्यत आह—पूर्वप्रमाणविरोधानुविधानान्नोक्तमिति शेषः। तद् दर्शयति—**उपमानविरोध** इति। स्वफलद्वारा शाब्दं प्रमाणं दर्शयति—**आगमेति**। स्वफलद्वारैव प्रत्यक्षं प्रमाणं दर्शयति—**सारूप्यज्ञानमिति**। उपसंहरति—**प्रत्यक्षागमयोर्विरोधात्** विरोधाभिधानाद् **उक्तं तद्** उपमानविरुद्धमनुमानमिति[4] ॥

भाष्यमनुभाष्याक्षिपति—**तत्र वादजल्पाविति**। प्रयोजनस्वरूपोपयोगाभिधानानन्तरं दृष्टान्तपदे व्याख्यातव्ये तदुल्लङ्घनेन वादजल्पयोः कोऽवसर इत्यर्थः। अवसरमाह—**तेनानेनेति**। प्रयोजनव्याख्यानाङ्गमेवेदं न वादजल्पव्याख्याङ्गमित्यस्त्यवसर इति भावः। **तत्रशब्दार्थं** व्याचष्टे—**तस्मिन्न्यायाभासे** इति। वादजल्पकथयोर्हि न द्वयोर्वादिप्रतिवादिनोः साधने समीचीने संभवतः, वस्तुनि विरुद्धधर्मद्वयसमावेशाभावात्। तस्माद् द्वयोरेकस्य न्यायः, एकस्य तु न्यायाभास इति वादजल्पाभ्यां विविच्यते। न्यायाभास इति तु सन्निधानादुक्तम्, सन्निहितार्थत्वात् सर्वनाम्न इति। **वितण्डा तु परीक्ष्यते, सप्रयोजना निष्प्रयोजना वेति**। तुशब्दः प्रसिद्धप्रयोजनाभ्यां वादजल्पाभ्यां व्यवच्छिनत्ति। प्रतिपक्षस्थापनाहीना हि वितण्डोच्यते। तत्र स्थापनाहीनत्वात् प्रतिपक्षहीनेति प्रतीयते। [5]न खलु स्थापनाभावे स्थाप्यसंभवः। तथा वितण्ड्यते व्याहन्यतेऽनया प्रतिपक्षसाधनमिति व्युत्पत्त्या परपक्षोपघातेन पारिशेष्यात् स्वपक्षसिद्धिरस्याः प्रयोजनं प्रतीयते। तदेवं सन्दिग्धप्रयोजना सती वितण्डा परीक्ष्यते, प्रयोजनवती न वेति। तत्र यदि निष्प्रयोजना ततो न सर्वा विद्याः, सर्वाणि कर्माणि,

---

१. तत्स्मृत्य° C २. वाच्यत्वे C ३ नोपमा न C ४. °विरोधाभिधाना° C
५. न खलु स्थाप्य° C

तन्मुखेन च सर्वे प्राणिनः प्रयोजनेन व्याप्ताः, वितण्डाया एव कर्मरूपाया विचारूपाया वा निष्प्रयोजनत्वात्। अथ प्रयोजनवती, तत उपपन्ना प्रयोजनव्याप्तिः। किं तावत् प्राप्तम्? तत्र केचिद् ब्रुवते निष्प्रयोजना वितण्डेति। स्थापनाहीनतया तावत् स्थाप्यः पक्षो नास्ति। अवयवव्युत्पत्त्यापि परसाधनाविघातः प्रतीयते। न च तावन्मात्रेण[१] स्वपक्षसिद्धिरस्ति। न हि पर्वतनितम्बवर्तिनि धूमे असिद्धत्वादिना दूषिते वह्नेस्तत्राभावो निश्चीयते। तदिदमुक्तम्—**दूषणमात्रत्वादिति**। तमिमं निष्प्रयोजनवितण्डावादिनं प्रत्याह—**तच्च नैवमिति**। परसाधनदूषणेनास्य पारिशेष्यात् स्वपक्षः[२] सिध्यतु, मा वा सैत्सीत्, स तु स्वपक्षसिद्धयैव प्रयोजनेन प्रतिपक्षसाधनमाहन्तीति भावः। तदनेन **[स] यदि प्रयोजनमनुयुक्त** इत्यादि भाष्यं व्याख्यातम्। **अथ न प्रतिपद्यत** इत्यादि भाष्यं व्याचष्टे—**अथ पक्षमपीति**। अथापीत्यादि भाष्यं व्याचष्टे—**अथ परपक्षेति**। नास्तिको हि सदसदुभयानुभयरूपतया न विचारं सहन्ते[३] इति प्रमेयाणि सर्वथा दूषयति। तदयं परपक्षप्रतिषेधमात्रप्रयुक्तः प्रवर्तते। न त्वस्यास्ति पक्षो न च स्थापना[४]। तयोरपि प्रमेयपक्षपातितया दूष्यत्वादित्यर्थः[५]। **एतदपीत्यादि** भाष्यं व्याचष्टे—**तादृगेवैतत्**। एतद्विभजते—**एतस्मिन्नपि पक्षे चतुर्वर्गं चेत् प्रतिपद्यते सोऽस्य पक्षः**। प्रतिपत्तिरभ्युपगमः। यद्यपि स्थाप्य एव पक्षः, तथापि तन्नान्तरीयकतया अभ्युपगममात्रेण चतुर्वर्गोऽपि पक्ष उक्तः। कश्चतुर्वर्ग इत्यत आह—**चतुर्वर्ग** इति। एष साधनवादी ज्ञापयति—अहं वैतण्डिको जाने अनेन पञ्चावयवेन साधनवाक्येनेदं[६] साध्यं ज्ञाप्यत इति चतुर्वर्गः। तत्प्रतीत्या खल्वस्य वैतण्डिकस्य परपक्षनिषेधः प्रयोजनं सिध्यति। तथा च न निष्प्रयोजनोऽयं वैतण्डिक इत्यर्थः। द्वितीयं कल्पं दूषयति—**अथ न प्रतिपद्यत** इति। चतुर्वर्गनान्तरीयकत्वात् दूषणमपि न प्रतिपद्यते[७] इत्युन्मत्तवदुपेक्षणीय इत्यर्थः। अपरमपि नास्तिकवैतण्डिकं प्रति दोषमाह—**प्रतिपक्षेति**। असिद्धविरुद्धादिदोषो वाक्यस्य वैतण्डिकप्रयुक्तस्यार्थः। तं यदि प्रतिपद्यते सोऽस्य पक्षः। अथासिद्धविरुद्धादीनां सद्भावाभ्युपगमे [८]प्रमेयमध्यपातिनां प्रमेयमात्रविचारासहत्वाभ्युपगमो विघटत इति स्ववाक्याभिहितमेवासिद्धविरुद्धादि न प्रतिपद्यते, पूर्ववद्दोषः। नायं लौकिको न परीक्षक इति। तस्माद् वितण्डापि प्रयोजनवतीति नाव्यापकं प्रयोजनमिति सिद्धम्। सोऽयं प्रसक्तानुप्रसक्तिवादः प्रयोजनव्याख्यानाङ्गमित्याह—**उक्तं प्रयोजनमिति**॥

---

१. तन्मात्रेण J　२. °नास्य स्वप° C　३. सहते J　४. पक्षोऽनवस्थापनात् C　५. °पातिदूष्य° C　६. अहो वैतण्डिकोऽजनि अनेन पञ्चावयववाक्येन° C　७. °नान्तरीयकं स्वदूषणमपि प्रति° C　८. प्रमेयपक्षपा° C

दृष्टान्तपदव्याख्यानपरं **भाष्यमनुभाषते—प्रत्यक्षविषय** इति। आक्षिपति—**किमुक्तं भवतीति**। न तावद् यो यः प्रत्यक्षविषयः, स सर्वो दृष्टान्तः, अदृष्टान्तस्यापि प्रत्यक्षविषयत्वात्। नापि यो दृष्टान्तः स सर्वः प्रत्यक्ष विषयः, आगमादिविषयस्यापि दृष्टान्तत्वात्। तस्मादयुक्तमेतदित्याक्षेप इति। तत्समाधानभाष्यम्—**यत्रेति**। तद्व्याचष्टे—**लौकिकपरीक्षकाणां दर्शनविघातहेतुरिति**। एतच्च क्वचिल्लौकिकपरीक्षकाणाम्, [1]क्वचित् परीक्षकाणामिति मन्तव्यम्। अन्यथा यदप्रसिद्धं लौकिकानां केवलं पण्डितरूपवेदनीयं परमाण्वादि तस्या दृष्टान्तता स्यात्। अत्र च यो दृष्टान्तः स एवम्, न तु य एवं स दृष्टान्त इति द्रष्टव्यम्। एवंभूतव्याख्यानस्य प्रयोजनं दर्शयति—**एवं चेति**। तद् विभजते—**दर्शनाविघातेति**। न केवलं प्रमेयविरोधः सूत्रविरोधश्चेत्यत आह—**ततश्चोदाहरणसूत्रं व्याहन्यते**। यत् तेषु तेषु शास्त्रप्रदेशेष्वतीन्द्रियोदाहरणसूत्रं सिद्धान्ते पूर्वपक्षे वा यथा,

मन्त्रायुर्वेदप्रामाण्यवत् [ २. १. ६८ ],

अणुश्यामतानित्यत्ववत् [ ५. १. ६७ ]

इत्येवमादि, तद् व्याहन्यते। न तूदाहरणलक्षणसूत्रम्। तद्धि प्रत्यक्षविषयदृष्टान्तत्वेऽप्युपपद्यत एव। तस्माद् **भाष्ये** प्रत्यक्षवचनं दृष्टान्तविषयप्रमाणदार्ढ्यं लक्षयति। प्रत्यक्षमूलत्वाद् वा प्रत्यक्षो दृष्टान्तः, अन्यथानवस्थाप्रसङ्गादिति[2]। सोऽयं दृष्टान्तः प्रमेयेऽन्तर्भवन्नेवमर्थं पृथगुक्त इत्याह—**सोऽयमिति**। न्यायस्य पञ्चावयवात्मकस्य वचनसमूहस्य दृष्टान्तो मूलम्, अतस्तस्य पृथगुपदेशः। अतश्चास्य पृथगुपदेशो यत्—**सति तस्मिन्निति**। अनुमाननिमित्तत्वमाह—**पूर्वं प्रत्यक्षेति**। दृष्टान्तधर्मिणि दृढतरप्रमाणावधारितमित्यर्थः। शाब्दमूलतां दृष्टान्तस्य दर्शयति—**पूर्वं ज्ञातं चार्थमिति**। संबन्धग्रहणविषयोऽर्थो दृष्टान्तः, [3]संबन्धग्रहणं च शाब्दस्यापि ज्ञानस्य निमित्तं प्रथमश्राविणः [4]शब्दादर्थज्ञानाभावात्। तस्मादस्ति शाब्देऽपि दृष्टान्तस्योपयोग इति। अपरमपि पृथगुपादानप्रयोजनमाह—**नास्तिकस्येति**। अप्रपञ्चने हेतुमाह—**तदुक्तं भाष्य** इति॥

सिद्धान्तपदविवरणभाष्यं व्याचष्टे—**अभ्युपगमेति**। तद्विभजते—**अभ्युपगम इदमित्थम्भूतं चेति**। तद्विभजते—**इदमितीति**। इदमिति हि धर्मिविषयं सिद्धान्तं दर्शयति, धर्मी सर्वतन्त्रसिद्धान्तविषयः। इत्थमिति प्रतितन्त्राधिकरणाभ्युपगमसिद्धान्त-

१. क्वचिल्लौकिकानां क्व° C २ °प्रसङ्ग इति C ३. दृष्टान्तः सं° C ४. शब्दार्थ° C

विषयं दर्शयति । व्यवस्थायामुपलक्षणतया प्रतितन्त्रसिद्धान्तमात्रमुदाहरति—**इदं सांख्येष्वेवेति** । उपलक्षणतामुदाहरणस्याजानानश्चोदयति—**सर्वतन्त्रेति** । परिहरति—**योऽयमिति** । अभ्युपगमव्यवस्थितिरनभ्युपगमाद् व्यवच्छिनत्ति । न तु पुरुषविशेषे व्यवस्थापयतीति भावः[1] । अस्यापि प्रमेयान्तर्गतस्यापि सतः पृथगुपादानप्रयोजनमाह—**तस्य प्रमेय** इति । तत्र सर्वतन्त्रसिद्धान्तसिद्धस्तावद् विप्रतिपन्नानामपि वादिनां धर्मी, तस्य सर्वतन्त्रसिद्धान्तसिद्धस्य विशेषेषु प्रतितन्त्रसिद्धान्ताः प्रवर्तन्ते । तथा हि यदि घटो नाम न सर्वतन्त्रसिद्धान्तसिद्धः किमाश्रया अवयवी वा परमाणुसमूहो वा ज्ञानाकारो वा प्रधानपरिणामो वा ब्रह्मपरिणामो वा तद्विवर्तो वेति प्रतितन्त्रसिद्धान्ताः प्रवर्तन्ते ? कथं च प्रतितन्त्रसिद्धान्ताश्रया वादजल्पवितण्डाः प्रवर्तन्ते ? किमाश्रयश्च न्यायः स्यात् ? तथा यद्यधिकरणसिद्धान्तो न भवेत्, कथं साध्यसामान्यव्याप्तं साधनसामान्यमिति साधनविशेषात् साध्यविशेषो गम्येत ? तस्मादस्ति प्रमेयस्यापि सिद्धान्तस्य पृथगुपादानप्रयोजनम् । अभ्युपगमसिद्धान्तं चोपरिष्टाद् विचारयिष्यति **वार्त्तिककृत्** इति तत्प्रयोजनमिहास्माभिर्नोक्तमिति ॥

क्रमप्राप्तानवयवानाह—**अथावयवाः** । ननु यथा तन्तवः पटस्य समवायिकारणं किं तथैवैते प्रतिज्ञादयो वाक्यस्य ? नो खलु गगनगुणा वर्णाः समवायिकारणतां प्रतिपद्यन्त इत्याह—**वाक्यैकदेशा** इति । अवयवा इवावयवाः, न पुनः समवायिकारणम्, यथा ह्यवयवाः समुदायिन एकस्मिन्नवयविनि कार्ये धारयितव्ये च, एवमेकस्मिन् विवक्षितार्थप्रतिपादने[2] प्रतिज्ञादयोऽवयवा वाक्यस्य समुदायस्य समुदायिन इति । ननु वर्णानामाशुतरविनाशिनां क्रमवतामेककालत्वाभावे समुदायाभावात् कुतस्तत्समुदायो वाक्यम्, कुतश्चैकदेशतेत्याशयवानाक्षिपति—**किं पुनर्वाक्यम् ?** उत्तरम्—**पूर्वपदस्मृत्यपेक्षोऽन्त्यपदप्रत्ययः स्मृत्यनुग्रहेण प्रतिसन्धीयमानो विशेषप्रतिपत्तिहेतुर्वाक्यम्** । विशिष्यत इति विशेषः पदार्थ एकः, क्रिया वा कारकं वा प्रातिपदिकार्थो वा पदार्थान्तरविशिष्टो वाक्यार्थः । यथा सोमेन यजेत गोदोहनेन पशुकामस्य यस्य पिता पितामहो वा सोमं न पिबेत् स व्रात्य इति । तस्य विशेषस्यैकस्य प्रतिपत्तिहेतुः । तदेवं[3] समूहनिबन्धनं पदानामेककार्यत्वं सूचयति । को विशेषप्रतिपत्तिहेतुरित्यत उक्तम्—**अन्त्यपदप्रत्ययः** । अन्त्यं विशेष्यं विशेषणपूर्वकत्वात् । तस्य पदम् । न च तदविदितं सत्तामात्रेण चक्षुरादिवद् विशेष्यं प्रतिपादयतीत्यत उक्तम्—**प्रत्यय** इति । प्रतीयमानं विशेष्यवाचि पदं विशेष्यं बोधयति । प्रतीतिश्च नानुभवः, अपि तु स्मृतिः ।

१. °पयतीत्यभिप्रायः C २. °तव्ये, एवमेक⋯⋯विवक्षितार्थे C ३. तदनेन J

न हि क्रमवद्वर्णसमुदायः [1]पदं श्रवणेन्द्रियानुभवगोचरः संभवति, संभवन्ति तु प्रत्येकं वर्णाः । न चैते प्रत्येकं पदम् । न च पूर्ववर्णस्मृतिनिचयसहितोऽन्त्यवर्णानुभवः श्रोत्रज इति युक्तम्, स्मृतीनां स्वकार्यसंस्कारविरोधिनीनामसहभावात् । विनश्यदविनश्यदवस्थयोस्तूपान्त्यान्त्यवर्णस्मृत्यनुभवयोः स्यात् । न चैतावतार्थप्रत्ययः पूर्ववर्णस्मृतीनां तिरोभावात् । न च [2]पूर्ववर्णानुभवजनितसंस्कारसहकारिणः श्रवणादेव लब्धजन्मनः प्रत्ययस्यैकस्याध्यस्ततत्स्मृत्यनुभवरूपवैचित्र्यस्य सदसद्वर्णावगाहिनो विषयभावमापन्ना वर्णा अर्थधियमादधतीति साम्प्रतम्; संबन्धसंवेदनाहितसंस्कारोद्बोधसमयजन्मना [3]स्वजनितेन संस्कारेण संबन्धस्मृत्युत्पत्तिसमये विनाशात् पदार्थावबोधकत्वानुपपत्तेः । तस्मात् स्मृतिरेव प्रत्ययः । अतएवाध्ययनसमये गुरुमुखाद् गृहीतो वेदराशिर्वेदाङ्गोपाङ्गज्ञानसंस्कृतेन स्मर्यमाण एव तस्यार्थं बोधयति । एवं च यदा पदार्थप्रत्यायन एव पदानुभवो न कारणम्, तदा वाक्यार्थज्ञाने नानापदार्थस्मरणाकाङ्क्षायोग्यतासन्निधानावधारणादिव्यवहिते कैव कथेति । यदि तर्हि विशेष्यपदमेव स्मर्यमाणं विशिष्टमर्थमवगमयति कृतं पदान्तरैः, तत एव वाक्यार्थप्रतिपत्तेरित्यत उक्तम्—**पूर्वपदस्मृत्यपेक्षः** । पूर्वं विशेषणम्, तत्पूर्वकत्वाद् विशेष्यप्रतीतेः । तस्य पदं स्मर्यमाणपूर्वपदापेक्षः । यद्यपि स्मरणानि न सह संभवन्ति तथाप्येकस्मृतिसमारूढानि वा पदानि निरन्तरस्मृतिसंतानसमारूढानि वा परस्परापेक्षाणि । तथा च स्मर्यमाणं विशेष्यपदं विशेषणपदापेक्षं विशिष्टमर्थमवगमयतीति ॥

स्यादेतत् । पदमाला चेत् स्मर्यमाणा वाक्यार्थबोधनी, कृतं तर्हि पदार्थबोधनेन[4], कृतं च पदतदर्थसंबन्धबोधनेनेत्यत[5] उक्तम्—**स्मृत्यनुग्रहेणेति** । प्रत्येकं पदेभ्यो याः पदार्थस्मृतयस्तदनुग्रहेण । एतदुक्तं भवति, यद्यपि वाक्यार्थबोधनाय पदमाला प्रवृत्ता, तथापि पदार्थस्मृतिरवान्तरव्यापारभूता अपेक्षते काष्ठानीव पाकप्रवृत्तानि ज्वलनमवान्तरव्यापारम् । न च पदान्यगृहीतसङ्केतानि पदार्थान् स्मारयन्तीति उपपन्ना पदार्थस्मृतिसंबन्धसंवेदनयोरपेक्षेति । यदि हि पदार्थस्मृत्यपेक्षा पदमाला वाक्यार्थबोधनी, हन्त दशदाडिमानि षडपूपा भवन्तीत्येवमादीनामपि वाक्यार्थबोधकत्वं स्यादित्यत आह—**प्रतिसन्धीयमानः** । प्रतिपदं सन्धानं घटनं प्रतिसन्धानम् । तच्च स्वार्थद्वारेणाकांक्षायोग्यतासत्त्यधीनम्[6] । न च दशदाडिमादिवाक्यादिषु तदस्तीति न ततो वाक्यार्थावबोध इत्यर्थः । तदेवमेकस्मृतिसमारोहेण एकार्थावच्छेदेन च पदानां[7] समूहो वाक्यम् ।

---

१. पदश्रवणे° C २. पूर्वपूर्वानु° C ३. स्वजातेन C ४. °बोधेन J
५. °बोधेने° J ६. °तासन्निधानम् C ७. °देन पदा° C

तस्य भागा एकदेशा इति । यावतीत्यादि भाष्यमवतारयति—**ते कियन्तः ?** भाष्यव्याख्यानेनोत्तरम्—**यावद्भिरिति** । पृच्छति—**केति** । न हि समाप्तेर्निष्पत्तेरन्या सिद्धिरस्तीत्यभिप्रायः । उत्तरम्—**पदार्थस्येति** । धर्मिणः सिषाधयिषितधर्मविशिष्टत्वं वास्तवमित्यर्थः । [1]समाप्तिं पृच्छति—**केति** । उत्तरम्—**विशेषेति** । वास्तवो धर्मः सिद्धिः, तद्गोचरस्तु विनिश्चयः पुरुषधर्मो निष्पत्तिरिति विशेष इत्यर्थः । कियद्भिः किमभिधानैश्च विभागैः सिद्धिः परिसमाप्यत इत्याशङ्क्य भाष्यकृतोक्तम्—**तस्य पञ्चेति** । तद् व्याचष्टे—**समाख्येति** । **भाष्यम्** अनुभाष्याक्षिपति—**तत्रागम** इति । न ह्यागमवत् प्रतिज्ञावचनं निश्चायकम्, हेतुवचनादिवैयर्थ्यात् । निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायातिपातादिति । समाधत्ते—**आगमाधिगतस्येति** । आत्मादिप्रमेयप्रतिपादनोद्देशेन हि शास्त्रमेतत् प्रवृत्तम् । तन्नान्तरीयकतया न्यायं व्युत्पादयत् तमेव व्युत्पादयेत्, य आत्मादेः प्रमेयस्य साक्षात् निश्चायकः, तत्प्रतिपादकागमप्रामाण्यनिश्चायको वा । तस्य च न्यायविशेषस्याद्यो ऽवयवः प्रतिज्ञा, आगमार्थविषया साक्षात्, तद्विषयागमप्रमाण्यप्रतिपादकस्य च परम्परया । तस्मात् **आगमः** प्रतिज्ञा । आगमोपचारस्य च प्रयोजनमिदं [2]यदर्थसंवादेनागमेनानुगृह्यते न्यायः सप्रयोजनश्च भवति, आगमार्थज्ञानस्य निःश्रेयसहेतुभावेन निरूढत्वात् । तस्माद् यद्यपि न न्यायमात्रवर्तिनी प्रतिज्ञा आगमः, तथापि प्रकृतन्यायाभिप्रायेणैतद् द्रष्टव्यम् । तथा [3]चागमार्थसंबन्धेन प्रतिज्ञायाः कल्पितविषयत्वमपि पराकृतं वेदितव्यम् । यदाहुः एके—सर्वो ऽयमनुमानानुमेयव्यवहारो बुद्ध्यारूढेनैव धर्मधर्मिभावेन[4], न बहिःसदसत्त्वमपेक्षते इति ॥

तथानुमानस्य न्यायानुग्राहकत्वं हेतुवचनस्यानुमानत्वोपचारेण **भाष्यकारेणोक्तम्**—**हेतुरनुमानमिति** । तत् [5]खल्वनुमानप्रतिपादकं वचनं विषयतयानुमानेनानुग्रहीतव्यम् । न च लिङ्गदर्शनमात्रमनुमेयप्रतिपत्तिहेतुः[6], अपि तु संबन्धस्मृतिसहकारि । न च हेतुवचनमात्रात् सहकारितावगम्यते । तस्मान्न लिङ्गवचनमनुमानप्रतिपादकमिति कथमनुमानत्वोपचार इत्यत आह—**एवं लिङ्गदर्शनमात्रे** दृश्यमाने लिङ्गरूपे संबन्धस्मरणरहिते **हेतूपचारात्** अनुमानत्वोपचारात् हेतुरनुमानमित्युक्तं **भाष्यकृता** । तदेव विभजते—**यत्तु द्वितीयं लिङ्गदर्शनम्** । संबन्धग्रहणसमये लिङ्गदर्शनं प्रथमम्, तदपेक्षया

---

१. पृच्छति J २ पदार्थसं° C ३. चागमानुसन्धानेन C ४. °रूढेन धर्मधर्मिन्यायेनेति J ५. खलु हेतुवचनमनुमानप्रतिपादकं विषय° C ६. प्रत्ययहेतुः J

साध्यधर्मिणि लिङ्गदर्शनं द्वितीयम्, **तत्संबन्धस्मृतिव्यक्तिहेतुभावात्** स्मर्यतेऽनयेति स्मृतिः संस्कारः। तस्य व्यक्तिः कार्याभिमुखीकरणम्, तत्र हेतुभावात्। क्वचित् पाठः—संबन्धस्मृतिहेतुव्यक्तिहेतुभावादिति। स तु सुगम एव। अतो हेतुरित्युच्यते[1]। एतदुक्तं भवति, यत् तद्[2] द्वितीयं लिङ्गदर्शनं शुद्धमप्यापाततः संबन्धस्मृतिहेतुभावात् संबन्धस्मृतिसहकार्येव। तथा चानुमानम्। एवं च तत्प्रतिपादकस्य वचस उपपन्नोऽनुमानत्वोपचार इति सिद्धम्। एवं च वास्तवेन लिङ्गेन संबन्धात् तद्वचनस्य बुद्धिविकल्पितलिङ्गविषयत्वं परास्तं वेदितव्यम्। एवमन्येष्वप्यवयवेषु वक्ष्यमाणेष्वेतदेव प्रयोजनं योजनीयमिति। **उदाहरणं प्रत्यक्षमिति भाष्यम्**। तद्व्याचष्टे—**स्मृतिविषयस्येति**। यत्र प्रत्यक्षविषये पूर्वं व्याप्तिर्गृहीता तस्य स्मृतिरिति स्मृतिविषयस्य प्रत्यक्षतः पुनरुपदर्शनात् अविप्रतिपत्त्या पुनः स्मरणात् तत्स्मारकं वचनमुदाहरणं प्रत्यक्षम्, मूलभूतप्रत्यक्षप्रमाणसमुत्थत्वादिति॥

[3]**कः पुनरुपमानार्थ** इति। प्रत्यक्षमिव प्रत्यक्षमित्यत्रेवकारे तत्रोपमार्थः क इत्यर्थः। एतदेव विभजते—**यस्मादिति**। **उपमानमुपनय** इति भाष्यम्। तद्व्याचष्टे—**यथा तथेत्युपमानैकदेश** इति। उपनयो हि तथा चैतदिति प्रवर्तमान उदाहरणस्थं यथाशब्दार्थमपेक्षत इति यथा तथेति प्रवर्तत इति। किं पुनरुपमानं यस्यायमेकदेश इत्यत आह—**उपमानं खलु यथा गौस्तथा गवय इत्युपदेशोपयोगे**। उपयोगस्तदर्थविषयोऽनुभवः। तस्मिन् सति पश्चाद् वनं गतो नागरकः प्रत्यक्षेणादृष्टपूर्वं पिण्डं पश्यति। स्मरति चोपदेशार्थम्। पिण्डस्य च पुरोवर्तिनः स्मर्यमाणेन गवा सादृश्यं प्रत्यक्षेणैव पश्यति। तदेवंभूतं सारूप्यज्ञानं गवयशब्दवाच्योऽयं पिण्ड इति प्रतीतिहेतुरुपमानम्। तदेतस्योपमानस्योपदेशार्थस्मरणगवयपिण्डगोसारूप्यप्रत्यक्षरूपस्यैकदेशो सारूप्ये यो यथातथाभावः स उपनयेऽप्यस्तीत्येतावतोपमानत्वोपचार उपनय इत्यर्थः। सोऽयं सर्वप्रमाणविनिवेशेन परमो न्यायः स्तूयते। निगमनव्याख्यानभाष्यमनुभाष्याक्षिपति—**कः पुनरिति**। न खल्ववयवानां प्रमाणानां वा वाक्ये समवायः संबन्धः संभवतीति भावः। उत्तरम्—**एकवाक्येति**। **अभ्यारोपो** बुद्ध्या प्रतिसन्धानम्। सामर्थ्यं पृच्छति—**किं पुनरिति**। उत्तरम्—**इतरेतरेति**। सामर्थ्यं हि पदानां धर्मः। इह तु विभज्यमानानामवयवानां तन्मूलानां च प्रमाणानां साकाङ्क्षत्वमेव धर्मः सामर्थ्यम्। तदत्र समस्तरूपसम्पन्नलिङ्गप्रतिपादनमेकं प्रयोजनं विभज्यमानसाकाङ्क्षत्वं

---

१. स सुगम एव हेतुरित्यु° J  २. यत्तु C  ३. कः पुन……क इत्यर्थ इति पतितम् J

[१]चास्तीति सिद्धमेकवाक्यत्वमवयवानामिति । निगमनपदं व्युत्पादयति—**निगम्यन्त** इति । **सोऽयमिति** भाष्यमनुभाष्य पृच्छति—**कः पुनः परमशब्दस्यार्थ** इति । उत्तरम्—विप्रतिपन्नपुरुषप्रतिपादकत्वं पञ्चावयववाक्यस्य[२] परमत्वमिति । एतदेव व्यतिरेकमुखेन प्रतिपादयति—**एकैकश**[३] इति । यद्यपि लोके प्रत्यक्षादीनामेकैकशोऽपि[४] विप्रतिपन्नपुरुषप्रतिपादकत्वं तत्र तत्रोपलभ्यते, तथापि यदेतद् वेदप्रामाण्यमात्मादिप्रतिपादनं च निःश्रेयसोपयोगि, न तत् पञ्चावयववाक्यादेतच्छास्त्रोपदिष्टोपकरणाद् विना सिध्यतीत्यनेनाभिप्रायेण द्रष्टव्यम् । अवयवानां पृथगभिधानमाक्षेप्तुं विकल्पयति—**किं पुनरवयवा** इति । विकल्पप्रयोजनं पृच्छति—**किं चातः** ? उत्तरम्—**यदि प्रमाणान्तरमिति** । समाधत्ते[५]—**न प्रमाणान्तरमिति** । प्रयोजनान्तरमाह—**त एत** इति । यत एव वादादिप्रवृत्तिहेतवोऽत एव **तत्त्वव्यवस्थायाश्चाश्रया भवन्तीति** । पृच्छति—[६]**क** इति । न हि कुण्डमिव बदराणि तत्त्वव्यवस्थावयवानाश्रयतीत्यर्थः । उत्तरम्—**विशेषप्रतिपादकत्वम्** । धर्मविशिष्टोधर्मी[७] विशेषः । विशिष्यत इति व्युत्पत्त्या, तत्प्रतिपादकत्वमवयवानां तत्त्वव्यवस्थाश्रयत्वमित्यर्थः ॥

क्रमप्राप्ततर्कपदव्याख्यानार्थं भाष्यमनुभाषते—**तर्को न प्रमाणसंगृहीतः** । प्रमाणपदेन हि चत्वारि प्रमाणानि संगृहीतानि । न चैतेष्वन्यतमस्तर्क इत्यर्थः । अस्तु तर्हि प्रमाणपदसंगृहीतेभ्यः प्रमाणेभ्यः प्रमाणान्तरमसंगृहीतं प्रमाणपदेन प्रमेयपदेनेवा[८]-संगृहीताः संशयादयः प्रमेया इत्यत आह—**न प्रमाणान्तरम्** । **भाष्यमनुभाष्य** हेतुमाह—**अपरिच्छेदकत्वात्** अनिश्चायकत्वात् । तदेव व्यतिरेकमुखेन दर्शयति[९]—**प्रमाणमिति** । स्यादेतत् । अपरिच्छेदकत्वमसिद्धं तर्कज्ञानस्य संशयादिवद् गुणत्वेनात्मलिङ्गत्वात् । अन्यथा त्वकिञ्चित्करत्वादुपादानवैयर्थ्यमित्यत आह—**प्रमाणविषयविभागात् त्विति** । न हि वयं गुणत्वेनोत्पत्तिमत्त्वेन वा रूपेणानिश्चायकत्वं तर्कस्याचक्ष्महे, किं तु प्रमाणविषयविभागहेतुतया । न चैवमस्याकिञ्चित्करत्वमित्यर्थः । पृच्छति—**कः पुनरिति** । उत्तरम्—**युक्तायुक्तेति** । **इदं युक्तमिदमयुक्तमिति** । इतिकारेण युक्तायुक्तविषयं तर्कज्ञानं परामृशति । तदनेन तर्कस्य स्वरूपं दर्शितम् । तस्य व्यापारमाह—**यत् तत्र युक्तं भवति**, संभवति तदनुजानाति न त्ववधारयति

---

१. वास्तीति C २. ॰वयवस्य J ३. एकशः J ४. ॰मेकशोऽपि J ५. यदि प्रमाणान्तरमितिं । समाधत्ते इति भागो भ्रष्टः J ६. किमिति C ७. धर्मिविशिष्टो धर्मो J ८. ॰देन वा॰ C ९. तद्दर्शयति C

तर्कः। एतदुक्तं भवति प्रमाणं तत्त्वावधारणाय प्रवृत्तं[1] करणतया इतिकर्तव्यतामपेक्षते। तर्कश्च प्रमाणविषययुक्तायुक्तविचारात्मा प्रमाणं युक्ते तत्त्वे प्रवर्तमानमनुजानन् प्रमाणमनुगृह्णाति। तदनुगृहीतं प्रमाणं तत्त्वनिर्णयाय पर्याप्तम्[2]। न च प्रमाणविषये चेत् तर्कः प्रवर्तते कृतमस्य प्रमाणानुज्ञया, नन्वयमेव निश्चायकः कस्मान्न भवतीति साम्प्रतम्, तस्य प्रसङ्गतया पारतन्त्र्येण स्वयमसाधनत्वात्। अस्ति हि प्रसङ्गो न प्रसङ्गो हेतुः। तथा हि प्रत्यक्षमेव तावद् भूतले प्रवर्तमानं तद्विशेषणतया घटाभावेऽपि प्रवर्तमानं यद्यत्राभविष्यद् घटो भूतलमिवाद्रक्ष्यत, तेन सह तुल्यदर्शनयोग्यत्वात्। न च दृश्यते। तस्मान्नास्तीति तर्केणानुज्ञायमानं[3] घटाभावविशिष्टे भूतले प्रवर्तते केवलमेवेदं भूतलं नेह घट इति। एवं स्वर्गकामो यजेत इति शब्दोऽपि प्रवर्तमानः परमाप्तस्य भगवत ईश्वरस्य नियोगो नास्वर्गफलायां यागभावनायामवकल्पत इति समानपदेनोपात्तोऽपि दुःखतया धात्वर्थः साध्य इति न युक्तम्[4]। भिन्नपदोपात्तोऽपि पुरुषविशेषणमपि स्वर्ग एव भावनाफलं युक्त इति तर्केणानुज्ञायमानः प्रवर्तते। न च यद्यभविष्यद् घट इति वा यद्यभविष्यद् धात्वर्थः साध्य इति वा क्रियातिपत्तिरस्ति, यदाश्रयानिष्टप्रसङ्गेनायुक्तत्वमितरथा तु युक्तत्वम्, तत् तर्केण निश्चीयते। तस्मान्न प्रमाणम्। निश्चयाय तु प्रवृत्तं[5] प्रमाणं तद्विषयविवेचनेनानुगृह्णन् इतिकर्तव्यतात्वेनोपयुज्यते। यथोक्तम्—

मीमांसासंज्ञकस्तर्कः सर्ववेदसमुद्भवः।
सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवत्॥

पूजितविचारवचनो हि मीमांसाशब्दः। अयुक्तप्रतिषेधेन युक्ताभ्यनुज्ञानं तर्कः[6]। प्रमाणेतिकर्तव्यतात्वेन च प्रमाणाद् वेदादभेद[7] उक्तः। सोऽतो वेद इति अङ्गाङ्गिनोः अभेदविवक्षया। इतिकर्तव्यतात्वं चास्य साक्षाद् दर्शितम्।

धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥

इति सर्वमवदातम्। **तस्योदाहरणं भाष्ये कर्मेति**। कर्मकारणकमपूर्वं धर्माधर्माविति यावत्, कार्ये कारणत्वोपचारात्। एतदुपपादनाय पृच्छति—**कथं पुनरिति**। निकायविशिष्टाभिरपूर्वाभिः[8] शरीरेन्द्रियबुद्धिवेदनाभिरभिसंबन्धो जन्म,

१. प्रयुक्तम् C २. °निश्चयाय कल्पते J ३. तेन तर्केण C ४. साध्यो न युक्तः J ५. प्रवर्तमानं C ६. स तर्कः J ७. वेदादभेदः J ८. °ष्टाभिः शरीरे° J

तस्य कथं कर्मनिमित्ततेत्यर्थः । अत्र प्रमाणमनुमानमाह—**भेदवत्त्वात्**, विचित्रत्वादित्यर्थः । पृच्छति—**कः पुनरिति** । भेदमाह—**सुगतिरिति** । प्रमाणमुक्त्वा तस्येतिकर्तव्यताभूतं तर्कमवतारयति—**सोऽयं भेद** इति । यद्येकं निमित्तं स्याद् वैचित्र्यं न भवेत् । न ह्यभिन्नात् कारणात् कार्यवैचित्र्यमुपपद्यते, तस्याकस्मिकत्वप्रसङ्गात् । अत उक्तम्—**अनेकमिति** । नन्वनेकं यागादिब्रह्महत्यादिक्रियारूपं कारणमस्तु कृतमपूर्वैरित्यत उक्तम्—**अवस्थितम्** । यागादिका तु क्रिया आशुतरविनाशिनी न चिरभाविने स्वर्गाय कल्पत इत्यर्थः । अवस्थितं चेद् यागाद्याहितमपूर्वं धर्मोऽस्तीति सदैव सुखिना भवितव्यम् । एवमधर्मोऽस्तीति सदैव दुःखी स्यादिति[१] सुखदुःखयोः कादाचित्कत्वं व्याहन्येत । न ह्यवस्थितात् कारणादनवस्थितं कार्यमित्यत उक्तम्—**अनित्यम्** । [२]न ह्यवस्थानं नित्यतां ब्रूमः, किं तु तावदनेन [३]स्थातव्यं न यावदन्त्यसुखदुःखसंविज्ञानं जनयति, अथ नश्यतीति । ननु भिन्नानि सन्त्वपूर्वाणि, तथापि सर्वाणि [४]सर्वात्मसमवेतानि, यथावयवी स्वावयवेषु । तथा च सर्वसाधारण्यान्नोक्तवैचित्र्योत्पाद इत्यत उक्तम्—**एकद्रव्यम्** । एकद्रव्यं चेदस्तु तर्हि सर्वसाधारणे पृथिव्यादौ यत्र क्वचित् । तथापि वैचित्र्यानुपपत्तिरित्यत उक्तम्—**प्रत्यात्मनियतम्** । अथ पृथिव्याद्येव कारणं जन्मवैचित्र्ये कस्मान्न भवतीत्याशयवान् पृच्छति—**किं कारणमिति** कस्मात् कारणादित्यर्थः । उत्तरम्—**पृथिव्यादीनामिति** । [५]मा भूत् पृथिव्यादि, पृथिव्यादिगतं किञ्चिद् भविष्यतीत्यत आह—**पृथिव्यादिगतस्येति** । भाष्योक्तप्रमेयत्वे तर्कस्य हेतुमाह—**उपलब्धिविषयत्वादिति** ॥

तर्कानन्तरं निर्णय उद्दिष्टस्तर्कहेतुकत्वात् । तस्य स्वरूपमाह—**निर्णयस्तत्त्वज्ञानमिति** । [६]यद्येवमिन्द्रियापातजन्मप्रत्यक्षज्ञानमपि तत्त्वज्ञानमिति निर्णयः स्यादित्यत आह—**प्रमाणानामिति** । अनेन पञ्चावयववाक्यमुपलक्षयति । तत्र सतर्काणां प्रमाणानां समवायात् । परमार्थतस्तु तर्कपूर्वकस्तत्त्वविनिश्चयो निर्णय इति प्रत्यक्षादीनामपि तर्कसहायानां [७]निर्णयफलत्वमिति । स्यादेतत् । धूमादिगोचरेण निर्णयेन[८] वह्न्यादावनुमीयमाने प्रमाणमेव निर्णयो न फलमित्याशयवान् पृच्छति—**कदा पुनरिति** । विदिताभिप्रायस्योत्तरम्—**यदेति** । संकलय्य तर्कनिर्णयव्युत्पादनस्य

१. सर्वदैव दुःखिना भाव्यमिति C  २. तद्व्यवस्थानं न नित्य° C  ३. स्थातव्यं याव° C  ४. सर्वसम° J  ५. मा भूत्, पृथिव्यादिगतं C  ६. यद्येवमापात° J  ७. निर्णयः फलमिति C  ८. गोचरेण तत्त्वनिर्णयेन C

प्रयोजनमाह—**तावेताविति**। परीक्षकोऽत्र लोको लोकशब्देनोच्यते, तदितरस्य तर्कासंभवात्। **बुद्ध्वेति** परीक्ष्य निर्णयं कृत्वेत्यर्थः। शेषं निगदव्याख्यातम्॥

निर्णयानन्तरं वादव्याख्यानार्थं भाष्यम्—**वादः खल्विति**। तदनुभाष्योपपत्तिमाह—**वाद** इति। नाना प्रवक्तारो यस्मिन् स तथा। एकस्यापि शास्त्रकर्तुः पूर्वपक्षोत्तरपक्षसाधनदूषणप्रतिपादको वचनसमूहो वादः स्यादिति नानाप्रवक्तृक इत्युक्तम्। सिद्धान्तभेदानुविधानेन हि द्वावपि स्वसिद्धान्तानुरूपं साधनं दूषणं चाहतुरित्यर्थः। **प्रत्यधिकरणेत्यादि** भाष्यमनुभाष्याचष्टे—**प्रत्यधिकरणमस्य साधनम्**। अधिक्रियत इत्यधिकरणं साध्यम्, तदधिकृत्य साधनप्रवृत्तेः। प्रत्यधिकरणं साधनं यस्मिन् वादे स तथोक्तः। अस्यैवार्थं निष्कर्ष्टुं पृच्छति—**किमुक्तं भवति?** निष्कर्षति—**उभाभ्यां** वादिप्रतिवादिभ्यां स्वस्वसाध्ये **साधनं वक्तव्यम्**। तथा च नानाप्रवक्तृकत्वेन तुल्यत्वेऽपि वादस्य वितण्डायाः प्रत्यधिकरणसाधनत्वेन भेदः सिद्धो भवति। वितण्डायाः प्रतिपक्षस्थापनाहीनतया प्रत्यधिकरणसाधनत्वाभावात्। तथापि जल्पाद्भेदो वादस्य, अस्ति हि जल्पस्य प्रत्यधिकरणसाधनवत्त्वं च नानाप्रवक्तृकत्वं चेति। अत आह—**अन्यतरस्मिन्नधिकरणे निर्णय** इति। वादे हि तावद् ब्रूते, न यावदन्यतरस्मिन् पक्षे निर्णयो जातः, तत्त्वबुभुत्सोर्वादिनोर्वादेऽधिकारात्। जल्पे तु पुरुषशक्तिपरीक्षालक्षणेऽप्रतिभादिनापि [1]पराजयोपपत्तेर्नावश्यं तत्त्वनिर्णयः। तस्मादन्यतरनिर्णयावसानत्वेन जल्पाद् भेदो वादस्येति सिद्धम्। यथा चैतत्, तथोपरिष्टाद्[2] उपपादयिष्यते इत्याह—**तच्चेति**। तस्य स्वरूपं पृच्छति—**सोऽयमिति**। उत्तरम्—**वाक्येति**। चोदयति—**ननु चेति**। वाक्यसमूहश्च ज्ञानं चेति विप्रतिषिद्धमेतदित्यर्थः। परिहरति—**नेति**। साधनोपालम्भग्रहणस्य शब्दविषयत्वादविरोध इत्यर्थः॥

युगपदेव जल्पवितण्डे व्याचष्टे—**तद्विशेषाविति**। विशिष्येते भिद्येते इति विशेषौ। तस्माद् वादाद् विशेषौ भिन्नौ। भाष्यमनुभाष्य पृच्छति—**कः पुनर्विशेषः?** यद्योगाद् विशिष्टे वादात् जल्पवितण्डे इत्यर्थः। उत्तरम्—**अङ्गाधिक्यमङ्गहानिश्च** यथासंख्यम्। तदेव दर्शयति—**छलेति**। तत् किमिदानीं संशयादिभिरिवात्यन्तवैरूप्यं वादेन जल्पवितण्डयोः? नेत्याह—**एतावता विशेषेण कथामार्गभेद** इति एतावानेव विशेषो न सर्वथा, कथात्वेन संशयादिव्यावृत्तेनसामान्यविशेषेण त्रयाणामप्यभेदादित्यर्थः। अपरमपि भेदहेतुमाह—**विषयभेदाच्चेति**[3]। तद् विभजते—**शिष्या-**

---

१. °योत्पत्तेः J २. प्रतिपाद° C ३. °भेदाद्वेति C

दीति। शिष्यमाणोऽत्यन्तविपर्यस्तः दुर्ज्ञानावलेपदुर्विदग्ध इति यावत्। न त्वेवंभूतः शिष्यादिर्विपर्यस्तोऽप्यनवलिप्तत्वादिति भावः ॥

क्रमप्राप्तानां हेत्वाभासानां स्वरूपमाह—**अन्यतमेति**। पञ्चसु चतुर्षु वा लिङ्गरूपेष्वन्यतमं लिङ्गं धर्ममेकं द्वयं त्रयं वानुविदधाना अहेतवो हेतुवदाभासन्त इति हेत्वाभासा उक्ताः। **निग्रहस्थानेभ्य** इति भाष्यमवतारयितुमाह—**ते च निग्रहस्थानमिति**। अवतारयति—**निग्रहस्थानेति**। अवतार्य दूषयितुमेकदेशिमतेन व्याचष्टे—**यस्मात् किलैत** इति। किलशब्दोऽयमरुचौ। तदेतदेकदेशिव्याख्यानं दूषयति—**न, उभयथाप्यसंबन्धात्**। किं ये ये निग्रहस्थानेभ्यः पृथगुपदिश्यन्ते, ते सर्वे वादे चोद्यन्ते ? अथ ये ये वादे चोद्यन्ते ते सर्वे पृथगुपदिश्यन्ते इति ? उभयथाप्यनैकान्तिकत्वात् नाविनाभावलक्षणः संबन्ध इत्यर्थः। तदेतद् विभजते—**न वादे चोदनीयत्वमिति**। कस्माद्[१] उभयथाप्यविनाभावाभाव इत्यत आह—**यदि तावदिति**। तस्मात् नायमविनाभूतो हेतुर्वादे चोदनीयत्वं वा पृथगुपदेशो वा **भाष्यकारेणो**क्त इत्युपसंहरति—**तस्मादिति**। वादे[२] चोदनीयत्वादित्युपलक्षणम्, पृथगुपदेशादिति च[३] द्रष्टव्यम्। तदेवमेकदेशिमतं दूषयित्वा स्वमतेन **भाष्यं** व्याचष्टे—**एतदेव तु न्याय्यमिति**। निग्रहस्थानेभ्यो हेत्वाभासानां पृथगुपदेशे प्रयोजनं यद् भाष्याक्षरेभ्यः साक्षात् प्रतीयते। सामान्योपदेशेन विशेष उपदिष्टे विशेषोपदेशः प्रयोजनाधिक्यं सूचयति। यथा ब्राह्मणान् भोजय कठं चेति कठभोजने विशेषो गम्यते, तद्वदिहापि निग्रहस्थानोपदेशेनैव हेत्वाभासेषु लब्धेषु तेषां विशेषेणाभिधानं प्रयोजनाधिक्यं सूचयति[४]। एतावानेव **सूत्रकृतो** व्यापारो यत् सूत्रणं नाम। तत्र निग्रहस्थानविशेषाणां हेत्वाभासानां स्वरूपं वादस्य च तत्त्वनिर्णयावसानत्वमालोच्य वादे चोदनीया[५] भविष्यन्ति निग्रहस्थानत्वेन हेत्वाभासा नाप्रतिभादय इति प्रयोजनं वर्णयांचकार **भाष्यकारः**। स्यादेतत्। भवन्तु वादे चोदनीया हेत्वाभासाः, मा च भुवन्नप्रतिभादयः। किमेवमपीत्याह—**विद्याप्रस्थानप्रभेदज्ञापनार्थत्वात्**। वादजल्पवितण्डा विद्याः परम्परया निःश्रेयसोपयोगात्। तासां प्रस्थानं व्यापारः, तस्य भेदः, तज्ज्ञापनार्थत्वात्। अत एव **जल्पवितण्डयोस्तु** इत्याह[६]। चोदयति—**अथ कस्मादिति**। यदि वादे हेत्वाभासाः प्रयुज्येरन् ततो निग्रहस्थानत्वेन चोद्येरन्, न तु तेषामस्ति प्रयोगोऽप्रमाणत्वात् प्रमाणतर्कसाधनोपालम्भत्वाच्च वादस्य। तस्मात् निग्रहस्थानमात्रत्वं हेत्वाभासानाम्। [७]तथा च

---

१ कुतः C २ देशनीयत्वा° C ३. °दित्यपि C ४. वाक्यमिदं भ्रष्टम् C
५. देशनीया C ६. भाष्यकार इति शेषः। ७ तथा चाप्° C

न पृथगुपदेशः, निग्रहस्थानोपदेशेनैव लब्धत्वादित्यर्थः। परिहरति—**प्रमाणसामान्यादिति**। न खलुहेत्वाभासान् तद्बुद्ध्या प्रयुञ्जाते वादिप्रतिवादिनौ, अपि तु हेतुबुद्ध्या। तथा चास्ति तेषां वादे प्रयोग इति वादे निग्रहस्थानत्वेन हेत्वाभासाश्चोद्यन्ताम्, नाप्रतिभादीनीत्यर्थवान् पृथगुपदेशः। तदेतद् विकल्प्याक्षिपति—**वादे कानिचिदिति**। समाधत्ते—**न, लक्षणपरतन्त्रत्वादर्थतथाभावस्येति ब्रूमः**। लक्ष्यत इति लक्षणम्, समानासमानजातीयव्यावृत्तं रूपं वादस्य च निग्रहस्थानानां च। तदधीनो हि तेषां तथाभावो व्यवस्था। कानिचिदेव निग्रहस्थानानि वादे न तु सर्वाणीति सामान्यतोऽभिधाय तदेव लक्षणपरतन्त्रत्वमभिमते विशेषे योजयति—**वादस्येति**। उक्तमाक्षिपति—**प्रमाणप्रतिरूपकत्वादिति**। निश्चितौ हि वादं कुरुतः। निश्चयश्च प्रमाणफलमिति कुतोऽप्रमाणस्यावकाश इत्यर्थः। उत्तरम्—**भ्रान्तेरिति**। न निश्चयः सर्वः प्रमाणमूलोऽप्रमाणमूलस्यापि तस्य दर्शनात्, अन्यथा विपर्यासादप्रवृत्तिप्रसङ्गात्। वादिनोश्चाभ्रान्तत्वे वस्तुनो [१]विरुद्धधर्मद्वयसमालिङ्गितत्वमेकदा स्यादिति भावः। पृच्छति—**कः पुनः शिष्येति**। उपास्योपासकयोः परस्परं न ध्वंसनं संभवतीति भावः। उत्तरम्—**विवक्षितार्थाप्रतिपादकत्वम्** एव न खलीकार इति। हेत्वाभासानां च पृथक्करणं न वादे [२]तन्मात्रावधारणार्थम्, अपि तु यस्मिन्ननुद्भावितेऽपि निग्रहस्थाने तत्त्वप्रतिपत्तिव्याघातो भवति, [३]तस्य सर्वस्य संग्रहार्थम्। एवं च न्यूनाधिकापसिद्धान्ता अपि संगृहीता भवन्ति। तत्र पृच्छति—**न्यूनाधिकेति**। उत्तरम्—**प्रमाणेति**। **जल्पवितण्डयोस्त्विवति** भाष्यमनुभाष्योपपादयति—**जल्पवितण्डयोस्त्विति**। साहङ्कारो विजिगीषुरप्रतिभादिभिरपि निग्रहस्थानैस्तिरस्कृतो गलिताहङ्कारस्तत्त्वबुभुत्सुतां नीतः पश्चाद् वादेन व्युत्पाद्यत इत्यर्थः॥

छलजातिनिग्रहस्थानानां पृथगुपदेशप्रयोजनपरं भाष्यमनुभाषते—**छलेति**। [४]**उपलक्षणार्थमिति** भाष्यावयवं व्याचष्टे। **परिज्ञानार्थमेव**[५] **केवलम्**, परिज्ञानस्य फलमुक्तम्—**स्ववाक्ये परिवर्जनम्** अप्रयोगः, परवाक्ये चोद्भावनमिति। चोदयति—**छलजातिनिग्रहस्थानानीति**। अत्र हि जातेः स्ववाक्ये परिवर्जनमुक्त्वा पुनः स्वयं [६]प्रयोगो न युक्तः। कस्मात्? **व्याघातात्**। एतद् विभजते—**स्ववाक्य** इति। परिहरति—न व्याघातः। [७]कुतः? **प्रश्नापाकरणार्थत्वात्**। तद् विभजते—**स्वयं च**

१. °धर्मसमा° J २. तावन्मा° C ३. तस्य संग्र° C ४. °र्थं इति भाष्यावयवार्थं C ५. °र्थमपि C ६. प्रयोजनयुक्तः C ७. कुत इति नास्ति J

**सुकरः प्रयोग** इति अनेन भाष्येण किमुक्तं भवति ? **परेण** प्रतिवादिना **जातौ प्रयुक्तायां** [१]वादी **प्राश्निकान्** सभ्यान् **ब्रवीति जातिरनेन** प्रतिवादिना **प्रयुक्तेति** । **ते** प्राश्निका **एनं पर्यनुयुञ्जीरन्** हे वादिन् **कथं** केन प्रकारेण **जातिः** चतुर्विंशत्यां जातिषु **कतमा जातिरिति ?** सोऽयं प्राश्निकानां प्रश्नः । तदपाकरणार्थं स्वयं सुकरः प्रयोग इत्यर्थः । प्रकृतमुपसंहरति—**तस्मादेत** इति ॥

**सूत्रकारेण** शास्त्रस्यात्यन्तिकदुःखोपरमरूपनिःश्रेयसाधिगमः प्रयोजनमुक्तम् । **भाष्यकारस्तु** नास्त्येव तत् प्रेक्षावतां प्रयोजनम्, यत्रान्वीक्षिकी न निमित्तं भवतीत्याह—**सेयमान्वीक्षिकीति** । तदेतद् **भाष्यं** व्याचष्टे—**सेयमान्वीक्षिकी न्यायविद्येति** । यद्यपीतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते तथाप्येतद्विद्याप्रतिपाद्यमेव प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्ये तत्त्वे[२] प्रवर्तन्ते, न तु प्रमाणाद्यपि व्युत्पादयन्ति । यथा प्रत्यक्षाद्युपजीव्य प्रवर्तमानमनुमानं न प्रत्यक्षादिविषयमपि तदानीमेव गोचरयति । तदनेन विद्योपकरण-ग्रहणेन व्यापार आन्वीक्षिक्या दर्शितः । संप्रति विद्यानां यानि कर्माणि प्रतिपाद्यानि सामाग्निहोत्रकृष्यादीनि तत्राप्यान्वीक्षिक्युपाय इत्याह—**उपायः सर्वकर्मणां** विद्याव्युत्पाद्यानाम्, न तु [३]हालिकमृगय्वादिकर्मणामपि । न हि विद्यापदेभ्यो यावन्मात्रावगतिः, तावन्मात्रेण प्रेक्षावतां परितोषः । मा भूत्

आदित्यो वै यूपः

इत्यादिभ्य आदित्यादीनां यूपादिता । तस्मात् संशयपरीक्षाप्रमाणविनिवेश द्वारेण तदर्थतत्त्वमवधार्य तत्र त्रयी विनिवेशनीया । एवं दण्डनीतिवार्तयोरनुगन्तव्यम्[४] । [५]तस्मादान्वीक्षिकीपरिशोधितप्रमाणप्रकाशितं सामादि **इतरा विद्याः कुर्वन्ति** विषयमिति शेषः । अपि च द्रव्यगुणकर्मणामभिमतानभिमतोपायताप्रज्ञापनेन यथायथं[६] सर्वा विद्याः प्रेक्षावतः प्रवर्तयन्ति निवर्तयन्ति वा । तत्र किमविशेषेण साध्यसाधनेतिकर्तव्यतासु प्रवर्तयन्तु, आहोस्वित् साधनेतिकर्तव्यतामात्रे ? तत्र यदि साध्यांशोऽपि प्रवर्तनागोचरः, तदा[७] श्येनादिसाध्याया हिंसाया विहितत्वेन नानर्थवत्वम् । अथ [८]साध्यांशं रागतः प्राप्तमनूद्य साधनेतिकर्तव्यते एव विधीयेते, ततः श्येनादिसाध्याया हिंसाया अविहितत्वेन

न हिंस्यात् सर्वा भूतानि

इति प्रतिषेधादनर्थत्वम् । तदिह साध्यांशेऽप्रवर्तनमान्वीक्षिकीगम्यम् । एवमनुष्ठान-

---

१. यदि C   २. अथ तत्त्वे C   ३. °मृगयादि° C   ४. °रप्यवग° C   ५. यस्मात् C   ६. यथास्वं C   ७. ततः J   ८. साध्यं C

गताः प्रयोजकत्वाप्रयोजकत्वादय आन्वीक्षिकीगम्याः । एवं [1]वार्तादिष्वपीति । तदेवमान्वीक्षिकीमाश्रयन्ते सर्वविद्या इत्याह—**आश्रयः सर्वधर्माणाम्** सर्वासां विद्यानां पुरुषप्रवर्तना धर्माः, तेषामाश्रयः । **वार्तिककारस्तु** धर्मद्वारेण विद्यानामेवाश्रय इति व्याचष्टे—**सर्वविद्योपकारकत्वादाश्रयः, सर्वासां विद्यानामियमुपकरोति** । विद्यया प्रवर्तनायां कर्तव्यायामियं सहकारितयोपकरोतीत्यर्थः ॥

स्यादेतत् । व्युत्पाद्याश्चेत् प्रमाणादयः सर्वविद्योपयोगिनः, न तर्ह्यात्यन्तिकी दुःखनिवृत्तिरान्वीक्षिक्याः फलं निःश्रेयसपदादवगम्यते[2] । व्युत्पाद्यस्वभावालोचनया हि तद् गम्यते[3], स च विद्यान्तरसाधारण इति विद्यान्तराधिगम्येन निःश्रेयसेन सङ्करप्रसङ्ग इत्यत आह—**तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यम्** । विद्यान्तराणि तावद् यत् तत्त्वज्ञानं कुर्वन्ति[4] तत्स्वभावालोचनया हि तद्विद्यासाध्ये एव निःश्रेयसभेदे उपयुज्यन्ते[5] नान्यत्र। इह तु प्रमाणादि यद्यपि साधारणम्, [6]तथाप्यसाधारणात्मादिरूपप्रमेयसमभिव्याहृतं सदभिमत एव निःश्रेयसेऽवतिष्ठत इति । विशुद्धेनार्जनेन होमसाधनस्य द्रव्यस्य प्राप्तिः **स्वागतम्** । आदिग्रहणेन [7]क्रमपर्यन्ताङ्गग्रामसाकल्यं गृह्यते । श्वमार्जारादिभिरनुपघातः **अनुपहतत्वम्**[8] । आदिग्रहणाद् विशुद्धोऽभिसन्धिरिति । शेषमतिरोहितम् । वादादीनां निग्रहस्थानान्तानामुपदेशः पराभिभवोपायतया मदमानादिहेतुत्वेन निःश्रेयसपरिपन्थीति मन्वानश्चोदयति—**मदमानादीति** । परिहरति—**न, सूत्रार्थापरिज्ञानात्** । नायं सूत्रार्थः, सर्वेषां तत्त्वज्ञानं साक्षान्निःश्रेयसोपयोगीति, किं त्वात्मादितत्त्वज्ञानम् । [9]तदितरत् तु पारम्पर्येण । तत्र जल्पादीनां पराहङ्कारप्रशमनमवान्तरव्यापार इति न निःश्रेयसपरिपन्थिता, किं त्वानुकूल्यमित्यर्थः । मदमानादिनिमित्तत्वं[10] च हेतुरसिद्ध इत्याह—**यच्चेदमिति** । उपसंहरति—**तस्मान्न निमित्तं वादादिपरिज्ञानं रागादीनामिति** । इतिः सूत्रसमाप्तौ ॥१॥

१. ॰गम्या एव वार्ता॰ C २. ॰गम्येत C ३. गम्येत C ४. कुर्वन्तीति C
५. उपयुज्यते J ६. तथाप्यात्माप्यसाधारणात्मादिरूप॰ C ७. क्रमप्राप्ताङ्ग॰ C
८. अनुपहतम् J ९. तदितरेषां पार॰ C १०. ॰नादिहेतुत्वं C

# ॥ न्यायवार्त्तिकतात्पर्यपरिशुद्धिः ॥

[1]मातः सरस्वति पुनः पुनरेष नत्वा
बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि[2] ।
वाक्चेतसोर्मम तथा भव सावधाना
वाचस्पतेर्वचसि न स्खलतो यथैते ॥

**विश्वाराध्य** इत्यत्र विश्वशब्देन[3] संसारिचेतनवर्गो विवक्षितः, तस्यैव तदाराधकत्वात् । **विश्वेशान** इत्यत्र समीहितफलसंदोहः, तस्य भगवदेकाधीनत्वात् । **विश्वकृ**दित्यत्रोपादानसमूहः, तस्यैव तत्कृतिव्याप्यत्वात् । **विश्वसंहारकारी**त्यत्र यावदनित्यनिवहः, तस्यैव तद्विनाश्यत्वात् । **विश्वश क्ति**रित्यत्र यावत्कार्यस्तोमः, तस्यैव तच्छक्तिविषयत्वात् । **विश्वज्ञाते**त्यत्र यावज्ज्ञेयप्रपञ्चः[4], तस्यैव तज्ज्ञानविषयत्वात् । **विश्वव्यापी**त्यत्र यावन्मूर्त्तिमद्द्रव्यराशिः[5], तस्यैव विशेषतस्तद्व्याप्यत्वात्[6] । इतरस्य तु तद्द्वारा[7] । **विश्वमूर्ति**रित्यत्र [8]यावत्कारकग्रामः, तस्यैव साक्षात् तत्प्रयत्नाधिष्ठेयतया[9] अस्मदादिशरीरसमानत्वात् । अतएव न तत्र शरीरान्तरापेक्षा, साक्षात्प्रयत्नानधिष्ठेयेषु[10] हि[11] सा स्यात् दण्डादिवत् । न तु साक्षात्प्रयत्नाधिष्ठेयेषु शरीरवत्[12] । **पिनाकी**ति तु विशिष्टशस्त्रधारणनिमित्तक[13]नामसंकीर्तनेन प्रारब्धविघ्नस्य[14] प्रोत्सारणमेव समीहितमिति सूचयति । हेतुहेतुमद्भावेन शङ्कोत्तराभ्यां योजना ज्यायसी । यथावस्थितयोजनायां तु[15] अर्थपौनरुक्त्यप्रसक्तौ स्तुतित्वमेव[16] समाधानमध्यवसेयम्[17] इति ॥

**नमामी**त्यादि । **धर्मो** निवर्तकः । **विज्ञानं** शरीरादिविविक्तात्मसाक्षात्कारः । **वैराग्यं** रागाभावः । **ऐश्वर्यं** भूतेन्द्रियजयः । तच्छालिने, अतएव **निधये वाग्विशुद्धीनाम्** । अधर्महेतुको ह्यविवेकः । अविवेकहेतुकमवैराग्यम्, अवैराग्यमूलमनैश्वर्यम् । तन्मूलाश्च[18] वचसामविशुद्धयः । तिस्रः खल्वेताः । तत्र प्रथमा निरभिधेयता ।

---

१. ॐ नमो हेरम्बाय J हरिः ओम्, श्रीगणेशायनमः M. २. °म्यवेहि B. ३. °पदेन BM. ४. यावान्° JA; यावदाक्षेप° M. ५. यावान्मूर्तद्र° J; यावन्मूर्तद्र° B. ६. तत्प्राप्य JA. ७. °द्वारात् M. ८. यावान् J. ९. °ष्ठित° JA. १०. °यत्नाधिष्ठे° JA. ११ हि om JA १२. वत्ता M. १३ शस्त्रधरणनिमित्त J; शास्त्रधा° M. १४. प्रारब्धस्य विघ्नप्रो° JA १५. योजनाया वा M. °यास्तु A. १६. प्रसङ्गश्रुति° M. १७. °मवसेयम् J; माश्रियम् M. १८. च om JA.

द्वितीया विपरीताभिधेयता । तृतीया निष्प्रयोजनाभिधेयता । ता एताः कथं भूतेन्द्रियजयिनो महामुने[१]र्भविष्यन्ति ? अजितभूतस्य हि विवक्षोस्तथाविध[२]प्रयत्नानिष्पत्तेर्निरभिधेया वाक् भवति । अजितेन्द्रियस्य च[३] विपर्यासविप्रलिप्साहेतुको विपरीतार्थो वचनसन्दर्भः । अजितमनसश्च प्रमादोन्मादवतो निष्प्रयोजनः । एताश्च वचसामविशुद्धीः छलजातिनिग्रहस्थानेषु[४] **सूत्रकार** एव प्रपञ्चयिष्यति । सोऽयं न तथेति भवति **वाग्विशुद्धीनां निधिः** । अतएव **तायी**[५] तत्त्वाध्यवसायसंरक्षणक्षमसंप्रदायप्रवर्तकः ॥

[A]एवं परापरगुरून् नत्वा शिष्यबुद्धिसमाधानाय समाहितवैशिष्ट्यं दर्शयति[A] — **ग्रन्थेति** । ननु **तात्पर्यटीकेति** वदता[६] प्रवृत्तिपाटवार्थं ग्रन्थसंक्षेपो दर्शितः, न च शिष्याणां कथन्तासंबोधविधुराणां[७] राद्धान्तमात्रपरिग्रहः संक्षेपतो विवक्षितः । तथात्वे वा **उपनिषद**[८] एव सन्तु । सन्तु वा [९]शवमुष्टिन्यायेनाचार्योपदेशाः । किमनेनेत्यत आह— **निरस्ताखिलदूषणेति** । नन्वेवं ग्रन्थतात्पर्यं व्याख्येयम्, दूषणानि[१०] च निरस्यानीति पुनरपि ग्रन्थगौरवमित्यत आह— **ग्रन्थव्याख्याच्छलेनैवेति** ॥

ननु चिरन्तनेऽस्मिन् निबन्धे महाजनपरिगृहीते बहवो निबन्धास्तथाविधाः[११] सन्तीति[१२] कृतमनेन इत्यत आह— **इच्छामीति**[१३] । ननु यदि ग्रन्थकारसंप्रदायाविच्छेदेन ते निबन्धाः, कथं कुनिबन्धाः ? अथ संप्रदायो विच्छिन्नः, कथं तवापीयं विच्छिन्नसंप्रदाया **तात्पर्यटीका** सुनिबन्ध[१४] इत्यत आह— **अतिजरतीनामिति** । **उद्द्योतकर**संप्रदायो ह्यमूषां यौवनम् । तच्च कालपरिपाकवशाद् गलितमिव । किं नामात्र [१५]**त्रिलोचनगुरोः** सकाशादुपदेशरसायनमासादितममूषां पुनर्नवीभावाय दीयत इति युज्यते । न च[१६] कुनिबन्धपङ्कमग्नानां तदातुमुचितमतस्तस्मादुत्कृष्य[१७] स्वनिबन्धस्थले[१८] सन्निवेशनरूपसमुद्धरणमेव सांप्रतमित्यर्थः ॥

तत्र **भगवतोऽक्षपादस्य** मुनिषु मध्ये प्रवरत्वं श्रुत्यादिभ्य एव सुप्रसिद्धम्, किमनेन संकीर्तनेन[१९] ? न चैतदतिशयेन सांप्रतमुपयुज्यते । जगदुपशमनिदानशास्त्रप्रणेतृत्वं च[२०] तस्य तत्प्रणयनमेव प्रकटयदस्ति । तेनापि किं प्रकटितेन ? स्वनिबन्धस्य

---

१. मुनेः M. २. °भूत MB. ३. च om BM. ४. °स्थानैः JA. ५. तापी M. ६. ब्रुवता JA. ७. विधुरो JA. ८. चोपनिषद B. ९. शिव° MA. १०. दूषणं निरस्यामिति M. ११. तथाविधाः om BM. १२. इति om JA. १३. इच्छाम इति BM. १४. सुनिबन्धना M. १५. नाम तर्ककर्कशकुशाग्रीयधियः श्री° J. १६. तु JA. १७. °मिति तस्मादु° B, मुचितस्तस्मादु° M. १८. स्थूले M. भवतो° M. १९. संप्रकीर्तितेन JA. २०. तु J.

तद्विषयतापि तद्व्याख्यानादेव लभ्यत इति। किं तयापि कथितया? न चास्य न्यायमहोदधेरुत्तानताप्रतिभास एवाग्रतः[१] कर्तुमुचितः। तस्माद् भवितव्यमत्र तात्पर्येण। तदाह—**अथेति**। **तदपनीयत** इति। तदिति **दिङ्नागादि**समुत्थापितं शास्त्राच्छादकं कुहेतुसंतमसमपनेयत्वेन परामृशता[२] शास्त्रस्यैवायं निबन्ध इति दर्शितम्। **भाष्यस्य** च[३] तद्विवरणरूपस्य शास्त्रशरीररूपतया न शास्त्रादाधिक्यं[४] मन्यते, **मीमांसाया** इव वेदात्। अत एव [५]नात्रत्य**टीकायाः** **वार्त्तिकान्तेन** विरोधः[६]। एतेन शास्त्रस्य यो निबन्धो **भाष्यग्रन्थः** स **कुतार्किकाज्ञाननिवृत्तिहेतुः** करिष्यत इति व्याख्यानं[७] [८]**टीका**विरोधेनोपेक्षणीयम्। ननु **सूत्रोक्त**प्रयोजनानुवादः पुनः किमर्थम्? [A]न हीदमनूद्य किञ्चिद् विधेयं प्रतिषेध्यं वेह विद्यते[A] इत्यत[९] आह—**सूत्रेति**। अथ स्वनिबन्धस्य प्रयोजनवत्ताप्रदर्शनेन किं सिद्ध्यतीत्यत आह—**प्रेक्षावदिति**। ननु व्युत्पित्सवो व्युत्पत्तिमधिकृत्य प्रवर्तन्ते। [१०]अतो व्युत्पादनप्रवृत्तौ व्युत्पत्तिरेवामीषां प्रयोजनमिति किमपरेण प्रयोजनेनेत्यत आह—**व्युत्पादनमात्रस्येति**।

द्विविधं हि प्रयोजनं मुख्यं गौणं च। तत्र मुख्यं पुरुषार्थ एव। इतरत् तु तदङ्गमिति। तत्र मुख्यार्थिनः तत्साधनमभ्यर्थयमानाः[११] तत्र प्रवर्तन्त इति[१२] तदपि प्रयोजनमेवेति[१३]। अतो[१४] मुख्ये प्रयोजने सति गौणं प्रयोजनम्[१५], तस्मिंस्त्वसति तदपि न स्यादिति निष्प्रयोजनतैवावतिष्ठते। न च स्वातन्त्र्येणैवास्य मुख्यं प्रयोजनमस्तीत्यतो[१६] यस्येदमङ्गं तस्य[१७] मुख्यं प्रयोजनमस्तीति दर्शिते प्रेक्षावान्[१८] प्रवर्त्तितो भवतीत्यभिसन्धिः **वार्त्तिककृत** इत्यर्थः। इतोऽपि[१९] टीकाखण्डलकादन्तर्भावितफलवत्सन्निधावफलं तदङ्गमिति न्यायात् शास्त्राङ्गमेवेदं न **भाष्याङ्ग**मिति मन्तव्यम्। न हि **भाष्यस्य** स्वातन्त्र्येण मुख्यं प्रयोजनमस्ति येन **वार्त्तिकं** तदङ्गतामियात्[२०]। [२१][A]तस्माद् यथाश्रुति सुन्दरमिति[A]॥

ननु कर्मेन्द्रियनियमः शम इति सुप्रसिद्धं[२२] शान्तो दान्त इत्यादि**उपनिषत्सु**[२३], न चासौ पुरुषार्थः। अतो न मुख्यं प्रयोजनमित्यत आह—**अत्र चेति**। ननु

१. °ग्रहः M २. °मृषता J, °मर्शता M. ३. च om M ४. शास्त्राधि° BM ५. नात्र J ६. विशेषः M ७. °विरोधादुपेक्षणीयम् JA ८. AA in A only ९. ततो JA १०. इति om J ११. मर्थय° B १२. इति om J १३. प्रयोजनं भवति J १४. ततो J १५. निर्वहतीत्यधिकम् A १६. °मस्त्यतो J १७. तत् BM १८. वान् यत्र JA १९. इतश्च J २०. J adds इति २१. AA only in A २२. सुप्रसिद्धः M, प्रसिद्धः J २३. °दान्त उपरतः श्रद्धाचित्तो भूत्वा आत्मन्येवात्मानमनुपश्येत् A, इत्युप° M

जगतः शमायेति दुर्घटम्, असंभावितत्वादशक्यत्वाच्च। न तावत् कश्चित्[1] जगदुपचिकीर्षुः क्वचित् प्रवर्तते यतो मुनेरपि तथात्वं संभावयामः। पठन्ति च––मुनेरपि वनस्थस्येत्यादि। न च शक्यमेतत्, बुभुक्षूणां प्रवर्तयितुमशक्यत्वात्। न च जगदेव मुमुक्षति। तस्मादनुष्ठातैव व्युत्पाद्यः शास्त्रान्तरलब्धब्राह्मणत्वादिरूपः[2] शिष्यः। तस्य च रूपाणि शमदमादिसंपत्तिः नित्यानित्यविवेकः ऐहिकामुष्मिकभोगवैराग्यं मुमुक्षुता चेति[3]। यस्तु अनधिकार्येव प्रवर्तते कर्मकाण्ड इव ब्रह्मकाण्डे स[4] न फलभाग् भवति। तत्रैतत् स्यात्। न तावदुपेयविषयेयमधिकारचिन्ता, तस्य पुरुषप्रयत्नाविषयत्वात्, इष्यमाणतामात्रस्य चानिषेधात्। किं नाम उपायविषया, तस्यैव शास्त्रविषयत्वात्, पुरुषप्रवृत्तिविषयत्वाच्च[5]। इह चापवर्ग इव तदर्थतया तत्त्वज्ञानमप्युपेयमेव, असिद्धत्वात्। उपायस्तु प्रमाणम्, न च वेदाध्ययनवदनुमानस्य प्रत्यक्षस्य[6] चोपादानं शूद्रादिकं प्रति निषिद्धम्, येन तत्राप्येतस्यानधिकारः स्यात्। तथा सति [7]धूमादपि वह्निमधिगच्छन् प्रत्यक्षाद् वा प्रत्यवायी स्यात्, अधीयान इव वेदम्। [A]न चात्मगोचरे [8]प्रत्यक्षानुमाने शूद्रादेर्विशेषतो निषिद्धे स्नातस्य चण्डालदर्शनमिव ब्राह्मणादेः[A] प्रायश्चित्तानुपदेशात्, प्रत्युत[9]

स्त्रियो वैश्यास्तथा शूद्रा ये चान्ये पापयोनयः[10]।

इत्यादिस्मृतेरधिकार एवावसीयते। तस्माद् यथा स एव विशिष्टः स्वर्गो वैदिकयागाद्यनधिकृतेनापि उपायान्तरेण त्रैवर्णिकशुश्रूषादिना साध्यते, तथोपायान्तरेणानुमानादिना यद्यात्माधिगमः[11] क्रियते शूद्रेणापि, तदा कीदृशो दोषः? सत्यम्, किं त्वनुमानमप्यागमाविरोधेनानुसन्धीयमानमर्थनिश्चायकम्[12], न तु तद्विरुद्धमपि। यदाह—यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः सः[13] इति। स चागमाविरोधादविरोधनिश्चयः[14] तदर्थनिश्चयाधीनः। तत्र चानधिकृत एवायं शूद्रादिः। तन्निरपेक्षस्तु अनुमानमात्रशरणो नरशिरःपावित्र्यादिवदनर्थमेव समासादयेत्। तस्मादागमैकवाक्यतया प्रवृत्ते शास्त्रे तदधिकार्येवाधिकारीति शूद्रादयोऽनधिकृता इव। अतो[15] यावदधिकारिपरोऽयं जगच्छब्द इति केचित्।

---

१. कश्चिदेव B  २. ०ब्रह्मत्वा० JA  ३ द्रः शाङ्करभाष्यम् १ १.१. ४. प्रवर्तते ब्रह्मकाण्डे स कर्मकाण्डवत् JA, प्रवर्तते स कर्मकाण्ड इव ब्रह्मकाण्डे M ५. च om B  ६. ०ध्ययनं निषेधवदनुमानस्य प्रत्यक्ष वोपा० A वोपा० B  ७. धूमादयमग्नि० JA  ८. प्रत्युत B; न चैवं J for न च ९. om JB. १०. द्रः श्रीमद्भगवद्गीता ९।२२. येऽपि स्युः for ये चान्ये J. ११. ०गतः B. १२. निश्चयं कुर्यात् JA. १३. भाष्ये ३.८ १४. स एवागमाविरोधावि० J, स चागमविरोधावि B. १५. ततो JA.

तत्राह—**परमकारुणिको हीति**। सन्त्येव हि[1] केचित् करुणामृदुमनसो[2] येषां जगदेव मित्रम्। अन्यथा

भूतेभ्योऽभयं दत्त्वेति[3]

विधिवैयर्थ्यप्रसङ्गः। निष्कारणमेव परदुःखप्रहाणेच्छा कारुण्यम्। सा च यथैकं दुःखितं पश्यतो भवति, तथा जगदेव दुःखितं पश्यतः किं न स्यात्? भवति चेत्—तत्प्रहाणोपायप्रवृत्तौ का [4]नामानुपपत्तिः? ननु करुणार्द्रहृदयोऽप्ययं व्युत्पिसुमेव[5] व्युत्पादयेन्न तु[6] विपरीतम्, न हि बधिरेषु गायनो गायतीत्यत आह—**तत्र यदि न कश्चिदिति**। न हि रोगी मन्दभाग्यतया चरकाद्युपदेशे न प्रवर्तत इति तदर्थता तस्य निवर्तत इत्यर्थः॥

नन्वनधिकृतव्युत्पादने[7] प्रत्यवायमात्रकमपश्यन्नयं[8] कथमवधेयवचनः स्यात्, पश्यन् वा न प्रवर्त्तेत? कारुणिकतया पश्यन्नपि प्रवर्तते चेत्, प्रमादी स्यात्। तथा च परलोकादविभ्यतोऽस्य वचने कः श्रद्धास्यतीत्यत आह—**न चेति**। यद्यपि प्रहीन-मोहत्वादेवास्य[9] पापपुण्ययोरुत्पत्तिरेव नास्ति, वक्ष्यति हि

न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्येति[10]।

तथापि क्लेशहानेर्दुरूहत्वात् प्रत्यवायोत्पत्तिमभ्युपगम्य[11] तदभावाय तपःप्रभाव उक्तः। नन्वेवमपि[12]

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्[13]।

इत्यत आह—**तथा चेति**। न हि गाः पङ्कमग्नाः[14] [15]पङ्कप्रलेपभयादनुकम्पापरवशाः समर्था नोद्धरन्ति। अपि तूद्धृत्य पङ्कं [16]प्रक्षालयन्तीत्यर्थः। ननु यद्यनधिकृतः कथं फलभागी, तथा चेत् कथमनधिकृत इत्यभिसन्धायोक्तं प्रपञ्चयति—**तपःप्रभाव एव हीति**। यथा हि तेषां तपःप्रभावादेवंविधाः पाप्मानो विलीयन्ते, तथा तपःप्रभावादेव सत्यसंकल्पतया अनधिकारिणोऽपि फलभागिन इति न कश्चिद् विरोधः। न च

१. हि om JB. २. °र्द्रमनसो BM. ३. द्रः मनुसंहिता ६.३९ ४. नाम om JA ५. व्युत्पित्समानमेव JA ६. तद्धि JA ७. °दनेन BM ८. °वायमेत° M °वायमपश्यन् B, अयं om BM ९. °मोहादेरस्य JA १०. न्या.-सू ४, १, ६३ ११. उत्पत्ति° om BM. १२. अपि om B. १३. म. भा. वन. २.८९. १४. गां पङ्कलग्नां JA. १५. पङ्कलेप B. १६. प्र om B.

फलापेक्षया [1]तेषामनधिकारः । किं तर्हि ? कर्मापेक्षया । अनधिकृतेन तु कृतं कर्म विगुणं सन्न फलाय पर्याप्तमित्यपि न, विशिष्टयाजकसाद्गुण्यादेव[2] तस्य परिपूर्णत्वात् । याजक एव त्वयाज्यं याजयन् प्रत्यवायमासादयेत्, राज्ञः प्रतिगृह्णन्निव विद्वान् । स च तीव्रतरेण तपसैव विलीयत इत्यर्थः । तर्हि

महाजनो येन गतः स पन्थाः[3] ।

इति न्यायेन वयमप्यनधिकृतान् व्युत्पादयाम इत्यत आह—**न चेति** । ननु [4]कुतार्किकाणामज्ञानं निवर्तयता किमनेन शास्त्रस्योपकृतं स्यादित्याह—**कुतार्किकैरिति** । **अज्ञान**मसम्यग्ज्ञानम् ॥

इह कर्मारम्भे प्रारब्धस्यान्तरायविरहेण परिसमाप्तिं कामयमाना अभीष्टदेवतानमस्कारपूर्वकं प्रेक्षावन्तः प्रवर्तन्ते । दृश्यते च तत्र तत्र बहुशो व्यभिचारः कृतनमस्कारस्यापि समीहितासिद्धेः, विपरीतस्यापि समीहितसिद्धेः, [A]विपरीतस्यापि समीहितासिद्धेः[A] । न चात्र

वृष्टिकामः कारीरीं निर्वपेत् ।

इतिवत् [5]प्रारब्धपरिसमाप्तिकामो देवतां [6]नमस्कुर्यादिति श्रुतिरस्ति, येन व्यभिचारेऽपि कर्मकर्तृसाधनवैगुण्यं कल्पयामः । तस्माद[A]र्थकाम इह वटे प्रतिवसन्तं यक्षं पूजयेदितिव[A]दप्रामाणिकप्रसिद्धिविजृम्भितमेतदित्यभिसन्धाय किमु न कृतो **वार्त्तिककृता** इष्टदेवतानमस्कार इत्यत आह—**अविगीतेति** । प्रत्यक्षमिवाविगीतशिष्टाचारोऽपि श्रुतिसद्भावे प्रमाणमेव, निर्मूलस्य च शिष्टाचारस्यासम्भवात्[7] । अप्रमाणमूलकस्य[8] च प्रामाणिकविगानविरहानुपपत्तेः । तथा च सत्यभावः कर्मकर्तृसाधनवैगुण्यमवलम्बते । असति च भावो जन्मान्तरीयसुकृतसंपत्तिम्[9] । अन्वयव्यतिरेकाभावदर्शनं त्वागमेतरप्रमाणगोचरं कार्यकारणभावमपाकरोतीत्यर्थः[10] । यद्येवं किमनेन न कृत इत्यत आह—**परमेति** । यदि कृतः तत्[11] किमिन्द्रलुप्तेन[12] गतः, येन न दृश्यत इत्यत आह—**न निवेशित** इति । अत्रैव दृष्टान्तो **न खल्विति** । न खल्विष्टदेवतानमस्कारवत्

---

१. च तेषा° B, मनधि A. २. संबन्धादेव B. ३. म.भा.वन. ३१३. ११७.९ ४. तार्किकाणाम् B. ५. परि Om J. ६. नमस्कुर्वीतेति JA-A-A in A alone. ७. चाचारस्याभावात् JA. ८. अप्रामाणिकस्य M. ९. धर्मसम्पत्तिम् B. १०. B adds within brackets नत्वेवंभूतं शिष्टाचारं कार्यकारणभावमपाकरोतीत्यर्थः। ११. तत् Omitted J. १२. तत्किमिह° M.

तन्निवेशनमपि[१] क्वचिदुपयुज्यत इत्यर्थः। नन्वेवंभूतं शिष्टाचारं शिष्या अपि ग्राहयितव्याः। न च तन्निवेशनव्यतिरेकेण ते ग्राहिताः स्युरित्यत आह—**मङ्गल्यान्तरवदिति**[२] ॥

**तत्रेति**। शास्त्रे व्याख्यातव्ये। ननु [३]दण्डकसूत्रस्यानुवादो नास्तीत्यत उक्तं **संक्षेपत** इति। नन्वादिसूत्रत्वमस्य सुप्रसिद्धमेव, अभिसंबन्धवाक्यत्वात्, तत्किमनेन उदीरितेनेत्यत आह—**आदिग्रहणेनेति**। ननु शास्त्रनिःश्रेयसयोरनेन संबन्धो वर्ण्यते, ततः संबन्धवाक्यमिदमिति[४] युक्तम्, अभिस्तु किमर्थमित्यत आह—**अभिमत** इति। अस्ति हि शास्त्रनिःश्रेयसयोर्वाच्यवाचकभावलक्षणोऽपि[५] संबन्धः, न चासाविहाभिमतः, प्रेक्षावत्प्रवृत्त्यनङ्गत्वात्। न हि वाचकाद् वाच्यप्रतीतेर्वाच्यस्य निष्पत्तिः, यतो मुमुक्षुर्वाचके प्रवर्तताम्। उपाये तूपेयार्थी प्रवर्तते। तेन हेतुहेतुमद्भाव एव विवक्षित[६] इत्यर्थः[७]। ननु नात्र शास्त्रम्, तस्य निःश्रेयसहेतुत्वं वा श्रूयत इत्यत आह—**प्रमाणादीति**। रूढपदातिक्रमे किं तात्पर्यमित्यत आह—**न हीति**[८]। यद्यपि शिष्यते अनुशिष्यते प्रमाणादिकमनेनेति शास्त्रमिति व्युत्पत्त्या अत्रापि कारणता गम्यते, तथापि शासकसंबद्धव्यापारवत्तया, न तु शिष्यसंबद्धव्यापारवत्तया। सा चेह विवक्षिता। अन्यथा प्रमाणादीनि तत्त्वतो ज्ञात्वापि[९] तावन्न मुच्यते यावन्नानुशिष्यादिति। तदिदमुक्तम्—**पदार्थतत्त्वावगमकरणतयेति न[१०] स्वरूपेणेति** च। ननु हेतुत्वकरणत्वे[११] न विषयभेदेन भवितुमर्हत[१२] इत्यत आह—**तेनेति** ॥

उभयोरपि हेतुः शास्त्रं करणं च। किं तु पदार्थतत्त्वे ज्ञापकतया निःश्रेयसे तद्व्यापारवतः [१३]करणतयेत्यर्थः। तदिदमुक्तम्—**तथा चेति**। एवं च सति शास्त्रस्य निःश्रेयसे कर्त्तव्ये पदार्थतत्त्वज्ञानस्य निरुक्तिबलेन व्यापारत्वे[१४] दर्शिते व्यापारव्यापारिणोः कार्यकारणभावः। तथा व्यापारवता शास्त्रेण व्यापारविषयस्य प्रमाणादेः प्रतिपाद्यप्रतिपादकभावः। तथा व्यापारविषयेण प्रमाणादिना व्यापारस्य तत्त्वज्ञानस्य विषयविषयीभावः। तथा व्यापारेण तत्त्वज्ञानेन व्यापारफलस्य निःश्रेयसस्य कार्यकारणभावः। तथा व्यापारविषयफलयोर्हेतुहेतुमद्भावः संबन्धः सूचितो नान्तरीयकत्वात्। न ह्यतद्धेतुकस्तद्व्यापारो नाम, नाप्य-

---

१. तन्निवन्धन॰ B निवेशित॰ A. २. मङ्गला B. ३. दण्डके M. ४. अनेन संबन्धवाक्यमिति B, इदम् om M. ५. ॰भावोऽपि B. ६. एवाभिमतः JA. ७. इत्यर्थः om B. ८. तेनेति M. ९. अपि om B. १०. न तु B. ११. हेतुकारककरणत्वे M. १२. भवतः for भवितुमर्हतः J. १३. कारक॰ JA. १४. व्यापारेऽत्र M.

तत्कर्म तद्व्यापारविषयः, नापि तत्फलाननुगुणस्तद्व्यापारः, तद्व्यापारविषयो वेति पञ्चसु वक्तव्येषु उपलक्षणार्थं द्वयमाह—**शास्त्रप्रमाणादिति**। एनमेव[१] व्युत्पत्तिलभ्यं व्यापारमभिप्रेत्य[२] **तत्त्वस्य ज्ञानमिति कर्मणि षष्ठी भाष्यकारेण** दर्शितेति न करणव्युत्पत्तिर्विरुद्धा ॥

ननु शिष्याचार्यशास्त्रतद्व्याख्यानानामपि संबन्धाः कैश्चित् [३]समानतान्त्रिकैः [४]प्रदर्शिताः। ते कस्मान्न प्रदर्श्यन्त इत्यत आह—**तदिदमभिधेयेति**। न ह्यस्तीत्येतावन्मात्रेणैव[५] प्रदर्शनीयम्। किं नाम? यावत्यप्रतिपादिते प्रेक्षावत्प्रवृत्तिर्न स्यात्, तावत् प्रदर्श्यते। न च शिष्याचार्यादिसंबन्धाः प्रेक्षावत्प्रवृत्त्यङ्गम्[६], तेषां प्रवृत्तिफलत्वात्[७]। [A]प्रवृत्त्युत्तरकालं हि शिष्यः प्रतिपाद्यः, प्रतिपादकश्चाचार्यः, शास्त्रं व्याख्येयम्, व्याख्याता च स इत्यादि सिध्यति[A]। न च शास्त्राचार्यादीनां[८] स्वरूपप्रतिपादनमप्युपयुज्यते, प्रमाणान्तरसिद्धत्वात्। तस्मात् प्रयोजनमभिधेयं तयोः संबन्धोऽभिधेयस्तद्द्वारा[९] शास्त्रस्य प्रयोजनेन संबन्ध इत्येतदर्थत्वमेव प्रथमसूत्रस्य न्याय्यमित्यर्थः। ननु [१०]यस्य मिथ्याज्ञानं संसारं प्रतनोति तस्यैव तत्त्वज्ञानं निःश्रेयसहेतुः, आत्मा च तथा, तदन्येषां तु[११] शास्त्राभिधेयानामपि न निःश्रेयसहेतुत्वम्[१२]। तथा च न [१३]निःश्रेयससंबन्धः इत्यत आह—**यत्पदार्थेति** ॥

ननु प्रमाणादिपदार्थतत्त्वज्ञानस्य यदि निःश्रेयसहेतुता शास्त्रप्रवृत्तेः पूर्वमेव प्रमाणसिद्धा निष्प्रयोजनं शास्त्रे प्रयोजनाभिधानम्, मानान्तरसिद्धे[१४] उपदेशानपेक्षणात्। अथेत एव तन्निश्चयो दुरुत्तरमितरेतराश्रयत्वम्। प्रवृत्तो हि प्रयोजनं निश्चिनुयात्। निश्चितप्रयोजनश्च प्रवर्तेत। न च प्रवृत्तेः प्रागेव मुनिवचनान्निश्चिनोति, प्रथमसूत्र एव प्रयोजनानिश्चयेन प्रवृत्त्यनुपपत्तेः। तत्रापि च[१५] प्रवृत्त्यर्थं प्रयोजनान्तराभिधानेऽनवस्था। तदनिश्चयेऽप्याद्या[१६] प्रवृत्तिश्चेत्, उत्तरोत्तरप्रवृत्तावपि तथात्वप्रसङ्गः[१७]। तस्मात् प्रयोजनाद्यभिधानमनर्थकमिति केचित्[१८]। तदनुपपन्नम्। त्रिधा[१९] हि पुंसां चित्तवृत्तयः, अनुभव इच्छा प्रयत्नश्चेति। [२०]तत्रानुभवो नेच्छामनुविधत्ते, अनिष्टस्याप्युपलब्धेः। इच्छा तु

---

१. एवमेव BM. २. °मभ्युपेत्य JA. ३. समान om BM. ४. प्र-om J. ५. °तावतैत JA. ६. तत्प्रवृत्त्यङ्गम् B, प्रेक्षावत् om JA. ७. तेषामप्र° M. A-A in A only. ८. आचार्यं om BJ. ९. तत् om JA. १०. यन्मिथ्या° B. ११. तु om BM. १२. °हेतुता JA. १३. फलसं° B. १४. °सिद्धम् M. १५. च om AJM. १६. °प्याद्यप्रवृत्ति° J. १७. °प्रसङ्गात् B. १८. °मनुपपन्नमिति केचित् B; °मनर्थकमिति चेत् JA. १९. त्रिविधा B. २०. तत्रानुभवो……साधनविषय एव om JA.

पुरुषार्थे स्वरसोत्थिता, [1]तत्साधने च तथात्वानुमानोत्थाप्या। प्रयत्नस्तु साधनविषय एव। तत्र साधनगोचराविच्छाप्रयत्नौ। आद्या[2] प्रवृत्तिरित्युच्यते, न त्वनुभवः। फलगोचरा वा इच्छा प्रवृत्तिः, येन[3] तयोरपि प्रयोजननिश्चयापेक्षा स्यात्। न ह्युपेक्षणीयं निष्प्रयोजनमिति नानुभूयते। नापि सुखं प्रयोजनान्तरशून्यमिति नेष्यते। नापि मुमुक्षुणानपेक्षिते[4] स्वर्गे यागादिकं तत्साधनतया नानुभूयते। पुरुषार्थसाधने त्विच्छालक्षणा वा[5] प्रयत्नलक्षणा वा प्रवृत्तिर्न स्वरससिद्धा। न हि कश्चित् क्षुधी दुःखप्रहाणं तृप्तिसौहित्यसुखं[6] वा अननुसंधायान्नमत्तुमिच्छति [7]प्रयतते वा। तस्माद् यत्र यः प्रवर्तयितव्यः स[8] तत्साध्यमर्थं दर्शयित्वा, यतश्च यो निवर्तयितव्यः स तत्साध्यमनर्थं दर्शयित्वेति। उक्तं[9] प्रयोजनादिकम्। तत्तु श्रोता[10] कथं श्रद्धास्यति, अश्रद्दधानो वा कथं प्रवर्त्स्यतीत्यवशिष्यते। तत्राह—**विनिश्चितेति**। यद्यपि मुनेराप्तत्वावधारणे प्रयोजनानभिधानेऽपि प्रयोजनसामान्यनिश्चयो भवत्येव प्रयोजनवदिदं शास्त्रमाप्तोक्तत्वादिति, तथापि नासौ प्रवृत्त्यङ्गम्। न हि प्रयोजनवदित्येव प्रवर्तते[11]। किं तर्हि[12]? अस्मदपेक्षितप्रयोजनवदिदमिति कृत्वा। स च प्रयोजनविशेषो वचनादेवावसीयत इति सार्थकमेतदभिधानम्। तदिदमुक्तम्—**प्रयोजनादि विनिश्चित्य**। विशेषत इति शेषः। [13]विनिश्चयश्च शास्त्रोपायकमेवेदं निःश्रेयसमित्याकारो न त्ववश्यंभाविप्रयोजनाकारः, [14]कृष्यादाववग्रहादिवदत्राप्यन्तरायसंभवात्। तदिदं प्रयोजनस्य प्रवर्तकत्वमुद्देश्यतया, न तु प्रवृत्तिविषयतया। तेन नेष्टाभ्युपायताविधिविरोधः॥

ननु मुनेराप्तत्वानिश्चये किं तद्वचने प्रवृत्तिर्नास्त्येव? तथा सति तस्याप्तत्वनिश्चयोऽपि कथमित्यत आह—**आप्तत्वानिश्चये[15] त्वर्थसंशयात्**। शास्त्रसाध्यतयेति शेषः। ननु [16]संशयानस्य कथं [17]प्रेक्षावतः प्रवृत्तिरित्यत आह—**न खल्विति**। यद्यपि च सस्याधिगमस्य कृष्यादिसाध्यतया संशयो नास्ति, तथापि भविष्यत्तया अस्त्येव। तथापि तमुद्दिश्य प्रेक्षावन्तः प्रवर्तन्ते। यथा च[18] तत्र शतैकांशिकः फलाभावः फलकोटिस्तूत्कटा तथात्रापि[19]। न हीन्द्रियापातजोऽयं संशयः। किं नाम? [20]आप्तत्वाविनिश्चय-

१. तत्साधने तथाऽनुमानोत्थाप्या च B. २. गोचरा इच्छा प्रयत्नो वा आद्या B. ३. येन illegible M. ४. ऽनपेक्षित° B नापेक्षित° J. ५. वा om B, वा प्रयत्नलक्षणा om MA. ६. सौहित्य om M. ७. प्र om BM. ८. स om M. ९. दर्शयित्वा उक्तं च M. १० प्रयोजनं श्रोता B. ११. प्रवर्तन्ते M. १२. नाम JA. १३. निश्चयश्च B. १४. कृष्यामव° JA. १५. °विनिश्चये B. १६. संशयात् कथं BM. १७. प्रेक्षावत्प्र° BM. १८. च om M. १९. तथापि M. २०. आप्तत्वानि° JA.

हेतुकाप्रामाण्यशङ्कया समाकृष्टः[१]। वस्तुतस्तु सूत्रात् प्रयोजनादिनिश्चयाकारमेव विज्ञानमित्यर्थः। ननु संशयः प्रयोजनादिवाक्याभावेऽपि[२] सुलभः, विशेषस्मृतिस्तु अर्थित्वविशेषात् भविष्यतीत्याह—**न चेति**। यद्वचनेन[३] हि यः प्रवर्तते स तद्वचनादेव विशेषस्मृतिमपेक्षते, न स्वातन्त्र्येण। न हि रोगार्तो ममेदं रोगनिवृत्तिसाधनं भवेन्न वेति यत्र तत्रोच्छृङ्खलः स्वयमुत्प्रेक्ष्य[४] प्रवर्तते। किं नाम ? अनवधृतातत्त्वस्यापि वैद्यस्यैव वचनात्। अन्यथा त्वयं[५] प्रयोजनाभिधानमनधिगच्छन् अनर्थमप्याशंकेत, किं निष्प्रयोजनमिदं काकदन्तपरीक्षाग्रन्थवत्[६], उताशक्यसाधनप्रयोजनं[७] मृत्युहरहिममहीधरोत्तरसानुसिद्धसंजीवनीकथनवत्, अथानभिमतप्रयोजनमार्यावर्तनिवासिनं प्रति दाक्षिणात्यस्य मातुलकन्यकापरिणयप्रक्रमोपदेशवत्[८], अथाभिमतस्यापि शक्यस्यापि प्रयोजनस्य लघीयस्युपायान्तरे सत्यपि[९] गुरुरयमुपायः पिपासुं प्रति गीर्वाणतरङ्गिणीतीरसमीपकूपखननोपदेशवत्[१०]। एतासु चानर्थसंभावनासु न प्रवर्तते[११]। न च प्रयोजनाभिधानेऽप्येतासामवकाशः, लोकव्यवहारोच्छेदप्रसङ्गात्। न हि कश्चिद् वैद्यवचनादेवं[१२] माशङ्क्य निवर्तते यथा स्वयमुत्प्रेक्ष्येति भावः। **तदनर्थकं** निष्प्रयोजनमित्यर्थः। [A]अशक्यानुष्ठानत्वमुपायस्यासिद्धमित्यत आह—**तथा हीति**[A]। इह द्विविधः प्रमाणशब्दस्यार्थः—प्रमीयतेऽनेनेति च प्रमाणम्[१३], प्रमितिः प्रमाणमिति। च[१४]। तत्र प्रथममधिकृत्योक्तम्—**प्रमेयादीनां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनमिति** ॥

नन्विन्द्रियादीनामज्ञायमानानामेव स्वविषयपरिच्छेदजनकत्वं पश्यन्नपि कथमेवं ब्रूयादित्यत आह—**न हीति**। प्रमाणत्वेनाज्ञायमानं प्रमाणं स्वविषयं परिच्छिनत्ति, न त्ववधारयति। तच्चेह विवक्षितमित्यर्थः। किमिति नावधारयति ? न हीन्द्रियमज्ञायमानमनिश्चयाकारमेव ज्ञानं जनयतीत्यत आह—**तावन्मात्रस्येति**। यद्यपि निश्चयाकारमेव ज्ञानमाधत्ते तथापि तथाभूतस्यैव भूयो भूयः प्रमेयविरहोपलब्धेर्विशेषानुपलब्धेश्च संदेहस्तदवस्कन्दतीत्यर्थः। तत्किं क्वचिदप्यवधारणं नास्त्येव ? तथा सति तोयमेवेदमित्यादिको लौकिकः प्रत्ययः, तथा पूर्वपक्षिणः क्वचिदपि विनिश्चयो नास्त्येवेत्यादिकश्चाभिमानो विरुद्ध्येतेत्यत आह—**अपि त्विति**। यदि क्वचित् प्रमेयतत्त्वावधारणं[१५] परमार्थः,

---

१. समाहृतः B, समाहृतः M. २. वाक्ये भावेऽपि var B. ३. यद्वचने BJA. ४. °स्यैव B. ५. स्वयं JBA. ६. ग्रन्थपरीक्षावत् M. ७. °प्रयोजनवत् B, °साधनं M. ८. परिणयनोपदेशवत् B. ९. सत्यपि om BM. १०. समीप om BJ. ११. प्रवर्तन्ते J प्रवर्तेत A. १२. वचनादप्येव JA. A-A only in A. १३. om JA. १४. इति च om BM. १५. °नवधारणं M.

तदा प्रमाणतत्त्वावधारणद्वारेणैव[1] । प्रकारान्तरेण तु भवन्न पारमार्थिकमित्यर्थः । बोधकत्वं बोधजनकत्वं बोधजननावच्छिन्ना सत्तेति यावत् । अव्यभिचारित्वमविपरीतानुभवजनकत्वमविपरीतानुभवजननावच्छिन्ना सत्तेति[2] यावत् । एवं चोपाधिद्वयावच्छिन्नायाः[3] सत्ताया उपाधिभेदाद् भिन्नाया इवैकस्मिन्नर्थे समवायः कृतकत्वानित्यत्वयोरिव न विरुद्धः । तेनाव्यभिचारित्वेन ज्ञायमानेनेति शेषः । प्रामाण्यावधारणं तर्हि क्वोपयुज्यत इत्यत आह— **तदेव हीति** ॥

प्रमाणं हि [4]प्रमाकरणम् । न च [5]करणत्वादयः सामान्यविशेषाः सन्ति । [6]सामान्यसंकरप्रसङ्गात् । किं नाम ? साधकतमत्वमेव[7] करणत्वम् । तद्विशेषकस्तु क्रियाविशेष एव । स चात्र प्रमालक्षणः । प्रमा चाविपरीतोपलब्धिः । [8]अतोऽविपरीतानुभवजनकत्वलक्षणमव्यभिचारित्वमेव[9] प्रामाण्यमित्यर्थः । यद्येवं तदवधारणपूर्वकमेव प्रमेयाद्यवधारणमस्त्वित्यत आह—**तच्चेति** । प्रमाकरणत्वं हि नानवधारितायां प्रमायामवधारयितुं शक्यमित्यर्थः । तर्हि प्रमात्वमेवावधार्यताम्, न हि तदप्यौपाधिकं येनोपाध्यनवधारणे [10]नैवावधार्येतेत्यत आह—**तथा हीति** । **विज्ञानस्य** प्रमायाः । **प्रामाण्यं** प्रमात्वम् । **स्वतो** वेत्यस्य स्वात्मना वा स्वग्राहकेण वेत्यर्थः । तत्र प्रथमं दूषयति—**न खल्विति** । धर्मधर्मिणोरभेदपक्षे अनात्मसंवेदनमित्येतदेव[11] दूषणम् । अनात्मसंवेदनता चोपपादयिष्यत इति हृदयम् । भेदपक्षे **प्रागेवेति** । यो हि यद् गृह्णाति स तद्धर्ममपि गृह्णीयादिति संभाव्येतापि । यस्तु धर्मिणमेव नाकलयति, तस्य धर्मग्रहणवार्तापि क्व ? यद्यपि च शब्दगन्धादयो व्योमभूम्याद्यग्रहेऽपि गृह्यन्ते, तथापि न तद्धर्मतयेत्यर्थः । स्वग्राहकेण वेति दूषयति— **नापीति** । तद्धि मानसं वा स्यात्[12] लैङ्गिकं वा ? उभयमपि मनसो ज्ञाततालक्षणात् लिङ्गाद् वा अविशिष्टात् जायमानं कथमिव तदाभासविशिष्टं गृह्णीयात्[13] ? विषयविशेषात् तु तथात्वे अप्रामाण्यस्यापि स्वत एव ग्रहणप्रसङ्गात्, तत्रापि विषयवैशिष्ट्यस्य सत्त्वात् । प्रमायाः प्रायिकतया तद्वासनायाः समुत्कटत्वादप्रमापि प्रमेत्येव गृह्यते । ततो बाधकाधीनमेवाप्रामाण्यमासंजितरजततायामिव शुक्तिकायां[14] शुक्तिकात्वमिति यदि तथाप्यासंज-

---

१. एव om M. २. अविपरीतज्ञान[जनन A]वाच्छिन्ना सत्तेति JA. ३. °द्वयोपलक्षितायाः JA ४. प्रमा. om JA. ५. प्रमाकरण° B. ६. जातिसामान्य° B. ७. साधकतमत्वलक्षणमव्यभिचारित्वमेव B. ८. ततो BA. ९. °लक्षणमव्यभिचारित्व° om J. १०. एव om J. ११. मित्येव BM. १२. स्यात् om BM. १३. स्यात् JA. १४. शुक्तौ JA.

कस्यापि यद्यासंजकत्वमवगतं[1] कथं न[2] स्वतोऽप्रामाण्यग्रहणप्रसङ्गः[3]? तत्रापि प्रामाण्यारोपे तु[4] कथं नानवस्था? न च कृत्रिमं रूपमपरिभूय ग्रहणं ग्रहणमित्युच्यते, संशयेनाभिभूतत्वात् मायालिङ्गिनि झटिति परिव्राजकबुद्धिवत्। तस्मात् ज्ञानं गृह्यत एवेत्येव न[5]। यदि तु[6] दैवाद् गृह्यते, तदा ज्ञानमित्येव; न तु प्रमाणमप्रमाणं वेत्यर्थः॥

ननु यदि स्वीयात् स्वत इति न निर्वहति, वक्ष्यमाणेन च न्यायेन नापि परतः, अस्ति चायं प्रमाणाप्रमाणप्रविभागव्यवहारो[7] निःशङ्कः। ततः स्वसंवेदननय एवास्तु। तेन ह्ययं निर्वहेत्। न हि तत्र किंचिदनवस्थादिकं पश्याम इत्यत आह—**एतेनेति**। स्वसंवेदननयो हि न तावत् प्रमाणसिद्धः। कदाचित् प्रमाणव्यवहारसौष्ठवात् स्वीक्रियेतापि यद्ययं तेन निर्वहेत्, न त्वेतदस्ति। यथा हि प्रमाणं स्वात्मानं[8] गृह्णत् प्रामाण्यमपि[9] गृह्णाति तथा तदाभासमपि तदाभासत्वं[10] गृह्णीयात्। [11]तथा च सर्वमिथ्याज्ञानात् अप्रवृत्तिप्रसङ्गस्तदवस्थः। न च तत्रापि प्रामाण्यारोपात् प्रवृत्तिः, स्वात्मभूतस्याप्रामाण्यस्य स्वसंवेदनतया ग्रहणे समारोपासंभवात्। अग्रहणे वा स्वसंवेदननयानुपपत्तेः। धर्मधर्मिणोर्भेदात् स्वरूपग्रहणेऽपि नाप्रामाण्यरूपधर्मग्रहणमिति यदि, तदा प्रामाण्यस्याप्यग्रहणं स्यात्। तस्मात् स्वसंवेदननयेऽपि स्वरूपवेदनमात्रं[12] स्यात्। न तु प्रामाण्यादिवेदनमित्यर्थः॥

परतो वेति दूषयति—**नापीति**। **तद्गोचरं** तद्गोचरगोचरं मध्यपदलोपात्। प्रात्यक्षिके च वह्निज्ञाने[13] प्रात्यक्षिकमेव वह्निज्ञानान्तरमिति[14] यावत्[15]। तच्च द्विविधम्, समानेन्द्रियजमिन्द्रियान्तरजं च। एवमनुमानेऽपि अनुमानज्ञानान्तरं तल्लिङ्गजं लिङ्गान्तरजं च[16]। एवं शाब्देऽपि[17] शाब्दज्ञानानन्तरं तदाप्तशब्दजमाप्तान्तरशब्दजं चेति[18] समानजातीयसंवादो दर्शितः। **अर्थक्रियेत्यादिना** कार्यलिङ्गकं **तद्गोचरेत्यादिना** चाकार्यकारणलिङ्गकमनुमानत्रयं विजातीयसंवादरूपं दर्शितम्, उपलक्षणं चैतत्। आप्तोपदेशजमपि [19]संवादकं ज्ञानं भवत्येव। सोऽयं प्रामाण्ये निश्चेतव्ये संवादो यद्यपि[20] व्यधिकरणस्तथाप्यर्थतथात्वमव[21]धारयन्नर्थवत्त्वं[22] प्रवर्तकस्याप्यवधारयतीत्येतावता तथैवोपवर्णितः।

---

१. °मधिगतं B. २. न om BJA. ३. °ग्रहप्र° B. ४. तु om M. ५. ज्ञानं न गृह्यत एव J. ६ तु om JA. ७. °प्रविभाग° om BM. ८. प्रमाणमात्मानं JA. ९. अपि om B. १०. °त्वमपि B. ११. तथा सति मिथ्या° JA. १२ °मात्रवेदनं B. १३ विज्ञाने B. १४. वह्निविज्ञानमिति B. १५. °मितीयात् M. १६. वा BM. १७. अपि om BJ. १८. वेति BM. १९. संवादज्ञानं BJ. २०. व्यधिकरणं B. २१. °गमयन् JA. २२. प्रवर्तकस्याव° B.

दूषयति—**तच्च सर्वमिति**। एवं[1] प्रमात्वस्य दुरधिगमत्वमापाद्य तदायत्तावधारणे प्रमाणानां[2] प्रमाणत्वे योजयति—**यदा चेति**। ननु यदि[3] प्रामाण्यावधारणेनैव प्रवृत्तिः, तदा सैव सार्वलौकिकी स्वत इत्यादिविकल्पान् फल्गूकरिष्यति[4]। अथ तदवधारणव्यतिरेकेणापि[5] प्रवृत्तिरप्रत्यूहा तदा मावधारि प्रामाण्यम्, किं नश्छिन्नमित्यत आह—**तदेवमिति**। [6]वैदिकं व्यवहारमधिकृत्य [7]चेदं शास्त्रं प्रवृत्तम्, न लौकिकमित्यभिसन्धिः। [A]प्रकृते योजयति—**तस्मादिति**[A]। ननु नित्ययोगे मतुबिति दुर्घटम्[8], प्रमाणार्थयोरेवानित्यत्वात्, परस्परसमवायाभावाच्चेत्यत आह—**नित्यता चेति**। नन्वव्यभिचारोऽपि व्याप्यव्यापकभावलक्षणः प्रमाणप्रमेययोर्नास्तीत्यत आह—**इयमेव चेति**। सोऽयमविसंवादो विसंवादाभावोऽव्यभिचारलक्षणम्। अव्यभिचारस्वरूपं तु [9]लक्ष्यभूतं [10]भूतार्थपरिच्छेदकत्वम्, लक्ष्यलक्षणयोरभिन्नाश्रयत्वात् सामानाधिकरण्यमिति मन्तव्यम्। यद्यपि देशावस्थाभेदे कालभेदोऽप्यर्थसिद्धस्तथापि [A]यथाकथञ्चित् कालभेदमात्रं विवक्षितमत्रेति ज्ञापनार्थं तद्ग्रहणम्। तथा हि दूरस्थे स्थाणौ पुरुषप्रत्ययस्य कालान्तरेऽपि विसंवादो नास्ति यावत् न प्रतिपत्ता निकटस्थो भवति। प्रत्येतव्य एव वा यावन्न नेदिष्ठः स्यात्। एवं स्वप्नावस्थायाम् अर्थप्रत्ययस्य कालभेदेऽपि तावन्न विसंवादो यावन्न जागरावस्थानुभवः। न च वाच्यमेवं सति किं कालभेदग्रहणेनेति, देशावस्थयोरभेदेऽपि कालक्रमेणापि क्वचिद् विसंवाददर्शनाद् यथा सुनिपुणनिभालनादापातजातस्य कामातुरकामिनीज्ञानस्य[A] [11]भेदेऽपि क्वचित् कालान्तरे विसंवादात् तदुपग्रहः। तदनेनेन्द्रियादीनां कालक्रमभाविनः सहकारिभेदाः स्फुटतरप्रतीतिहेतवः सर्व एव संगृहीताः। यद्यपि च प्रकारविषयावेव [12]विसंवादाविसंवादौ संभवव्यभिचारलक्षणौ[13] तथाप्यविसंवादस्य ध्रुवविषयत्वप्रतिपादनार्थं स्वरूपग्रहणं सर्वस्य ज्ञानस्य[14] धर्मिण्यविसंवादादिति॥

प्रवृत्तिसामर्थ्यादिति व्यधिकरणो हेतुरतस्तदर्थमाह—**समर्थप्रवृत्तिजनकत्वादिति**[15]। यद्यपि समर्थप्रवृत्ति[A]त्वादित्युक्तेऽसमञ्जसं तथापि समर्था प्रवृत्तिर्यस्येति सम्बन्धे षष्ठी। स च प्रमाणप्रवृत्त्योर्जन्यजनकभाव एवेति स एव दर्शितः। ननु न तावत्

१. एवं च B. २. प्रमाणानां om B. ३. यदा B. ४. करोति JA. ५. व्यतिकरेणापि M. ६. वैदिकव्यव° BM. ७. वेदं M. A-A in A alone: ८. दुर्वचम् M. ९. लक्ष्यभूतं om A-A only in A, तथापि तदभेदेऽपि rest. १०. भूतार्थप्रपरि M. ११. तदभेदेऽपि BJM १२. संवादविसं M. १३. °चारिणौ BM, संभवव्यभि° Var B. १४. सर्वज्ञानस्य B. १५. अतः om J. A समर्थेति BM.

प्रामाण्यसमर्थप्रवृत्ति[A]जनकत्वयोरविनाभावः प्रत्यक्षेण[१] शक्यग्रहः, तयोरेवाप्रत्यक्षत्वात्[२]। प्रामाण्यं हि समर्थप्रवृत्तिजनकत्वानुमेयम्। तच्चान्वयव्यतिरेकानुमेयमेवेति[३]। नाप्यनुमानेनान्वयग्रहः। प्रामाण्यस्य क्वचिदप्यसिद्धेः। सिद्धौ वा किमनुमानेन, अनुमानन्तरसिद्धत्वे[४]त्वनवस्थैवेत्यत आह—**यदि पुनरिति** ॥

अत्र[५]चोपेक्षाज्ञानानां पक्षत्वेनानुपादानान्न भागासिद्धिः। व्यतिरेकी च सर्वत्र सपक्षाभावमभ्युपेत्य प्रवर्तत इति नासाधरणानैकान्तिकता। न च वाच्यम्[६]एतस्यैवानुमानस्यार्थवत्त्वानवधारणे कथं प्रमाणानामर्थवत्त्वसिद्धिः? तदवधारणे वा कथं केवलव्यतिरेकित्वमिति[७]? द्विविधं ह्यनुमानस्यार्थवत्त्वम्, अविनाभावलक्षणं प्रमाजननलक्षणं च। तत्र स्वविषयपरिच्छेदे कर्तव्ये अविनाभावावधारणमेवापेक्षते न[८] प्रमाकरणत्वावधारणमित्यनवधृतप्रामाण्येनैवानेन प्रमाणानां प्रमाणफलत्वलक्षणं[९] प्रामाण्यं साध्यत इति सर्वं सुन्दरम् ॥

एतेनैतदपि निरस्तम्, यत् प्रामाण्यानवधारणे अप्रामाण्यानवधारणमपि कथम्? प्रामाण्यनिश्चयेन हि तत् निश्चीयते। तदनवधारणे तु व्यतिरेकनिश्चयोऽपि[१०] कथम्, विपक्षस्य तथात्वानिश्चयादिति? स्वरूपतो धर्मतश्चानवधारितेनैव सता प्रमाणेन स्वविषयनिश्चयसिद्धेः[११]। ननु नास्त्येवासौ वादी यः प्रामाण्यानिश्चयेऽपि विप्रतिपद्येत[१२]। न हि प्रामाण्यं स्वीकृत्य तन्निश्चये विप्रतिपत्तिः, स्वीकारस्य[१३] निश्चयमूलत्वात्। [१४]न चास्वीकृत्य, प्रमाणशून्यविप्रतिपत्तेः सर्वत्र सुलभतया सर्ववादविधिनिषेधव्यवहारविलोपप्रसङ्गात्[१५]। अनिश्चिते च प्रामाण्ये तदतद्रूपसंदेहोऽपि क्वचिद्[१६] दुर्लभः, विशेषस्मृतेरभावात् तत्पूर्वकत्वाच्च सर्वसंशयानाम्। नापि सर्वत्राप्रामाण्यासञ्जनम्, प्रामाण्यग्रहणोपायनिराकरणस्याप्रामाण्येऽपि तुल्यत्वात्। विकल्पनिर्मितमविचारमनोहरं प्रामाण्यादिकमादायापि नास्य दुर्विचारस्य निर्वाहः[१७]। प्रामाण्यानभ्युपगमे विकल्पनिर्माणस्याप्यसिद्धेः। [A]न च विकल्पनिर्मिते न संशयादिव्यवहारः समस्ति। न हि वाजिविषाणं वेति कश्चित् सन्दिग्धे, नापि नरविषाणमिति कस्यचिद् विपर्ययः[A]। तस्मादस्ति प्रामाण्यादिकं[१८] तन्निश्चयश्च। तदुपायस्तु चिन्तामर्हति। एवं चान्वयोऽस्त्येव। तत् कथं केवलव्यतिरेक्यनुमानम्[१९] इत्याशङ्क्य

---

A-A om A. १. प्रामाण्यस्य °त्वाविना° J. २. एवं om M. ३. °मेयमिति BJA. ४. तु om BJ ५ च om M ६ एव om M ७. सिद्धिः BM ८. मेवापेक्ष्य तेन M ९. प्रमाणत्वल° M, प्रमाणतत्त्वल° B १०. व्यतिरेकावधारणम् var. B. ११. सिद्धेरिति BM. १२. °पद्यते BM. १३. °फलत्वात BM. १४. नाप्य° J १५. वादिविधि° B °व्यवहारविलोप° om JA. १६. क्वचित् om M. १७. स्यारम्भः B A-A in A only १८. प्रामाण्यं M १९. °व्यतिरेकी JA.

संप्रतिपत्तिरुत्तरम्—**अन्वयव्यतिरेकी वेति** । केवलव्यतिरेकिवादस्तु[१] अन्वयानभ्युपगमेन कृत इत्यभिसन्धिः । अनुमानस्येत्युपलक्षणम् । स्वत इति च तदितरस्यापि, स्वतः परतश्च प्रामाण्यसिद्धेरिति[२] ॥

ननु समर्थप्रवृत्तिजनकत्वादित्येतावतैव साध्यसिद्धेः प्रमाणतोऽर्थप्रतिपत्तावित्यसमर्थविशेषणं व्यधिकरणं चेत्यत आह—**प्रवृत्तिजनकत्वं त्विति**[३] । प्रामाण्याद्यभिधानद्वारा हि शास्त्रस्य निःश्रेयसेन संगतिः, न तु स्वरूपेण । ततो यथा प्रमाणादितत्त्वज्ञानं साध्यतया[४] प्रयोजनं प्रतिज्ञायते तथा प्रमाणाद्यभिधेयतयापि प्रतिज्ञेयं भवति । [A]यथा अथातो धर्मं[५] व्याख्यास्यामः [ वै. सू. १.१.१ ] इति धर्मस्य व्याख्येयत्वेनैव प्रतिज्ञा समानतन्त्रे[A] न च[६] तदभिधेयताप्रतिज्ञानमत्र । तस्मादभिधेयत्वाप्रतिज्ञानान्न प्रमाणादयः शास्त्रेणाभिधीयन्त इति श्रोतृबुद्ध्यनुरोधेनाशङ्क्य **सूत्रकारहृदयानुरोधेन वार्त्तिकमुत्तरयति—स्यादेतदिति** ॥

शिष्याकांक्षाक्रमेण हि शास्त्रमिदं प्रवृत्तम्, अनपेक्षिताभिधाने अनवधेयत्वप्रसङ्गात् । न च शिष्याकांक्षा किं वक्ष्यति भवानिति । किं तु[७] निःश्रेयसं कुतोऽधिगम्यत इति । तत्रोत्तरम्—प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति । ततः कथमिति ? तत्रापि द्वितीयं सूत्रमिति । ततः के, कति, किंलक्षणाः प्रमाणादयः इति । तत्रोद्देशविभागलक्षणानीति । ततः कथमिति ? तत्र द्वितीयाध्यायादीति । एतच्च सर्वमनुभवसिद्धम् । नात्रापि वचनापेक्षा । उक्तावोद्धारं प्रति तु व्याख्यातारो भवन्ति, [७]यत एवमयमाहेति । तदनुभवसिद्धमपि प्रमाणाद्यभिधायकत्वं यः [८]कुतश्चिद् व्यामोहान्न प्रतिपद्यते तं प्रति व्याख्याता **शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वादित्याहेत्यर्थः** ॥

ननु श्रेयोऽभिधानमात्रेणापि न [१०]प्रमाणाद्यभिधानं सिध्यति । न हि प्रमाणादिपदार्था एव श्रेयः । अथ स्वयमेव विवरीष्यति—**तत्पदार्थाः प्रमाणादय** इति । तथापि [९]तच्छास्त्रं श्रेयोऽभिधत्त इत्यनेन किम् ? अथ श्रेयःशब्दस्य प्रमाणादय एवार्थः[१०], तर्हि श्रेयः पुनः सुखमहितनिवृत्तिरिति किमित्यत[११] आह—**यद्यपीति** । यद्यपि शास्त्रं पुनः पुरुषः पुनः श्रेयः पुनरिति प्रतिपदं गृहीत्वा विवरणं प्रक्षयेणेत्यन्तेन स्फुटावभासम् । न च पुरुषा रागादिमन्त इत्यादावपि विवरणत्वाशङ्का, प्रकृतेनासंबन्धात् । न हि रागादि-

१. °व्यरिरेक° B २. इति om BM ३. ननु······त्विति om J, तु om M A-A in A only. ४. °ज्ञानसाध्यतया M. ५. तत्प्रति° JA. ६. किं नाम J ७. यदेव° M. ८. कश्चिद् J. ९. प्रमाणाभि° M. तथा च शास्त्रं B. १०. एवार्थाः B var. M. ११. किमर्थमि B.

मन्तं प्रति शास्त्रं न ससाधनं श्रेयोऽभिधत्ते । न च तं प्रति न तत् श्रेयो येन वीतरागो विविच्य गृह्यताम् । तथापि, तस्मात् तत् शास्त्रं पुरुषश्रेयोऽभिधत्त इति मध्यपतितोपसंहार एव [१]विवरणविच्छेदभ्रमो मा भूदित्येतदर्थमवच्छिनत्ति—**उपभोगात् प्रक्षयेणेत्यन्तेनेति** ॥

ननु **समूहो व्यूहविशिष्ट** इत्यसंगतम्, पर्यायत्वादित्यत आह—**व्यूह इति**। ते खल्वमी [२]समूहाः प्रणेतृपुरुषेच्छानुरोधिनः स्वार्थानुरोधिनो वेत्यत आह—**एकस्मृतीति** । यद्यप्येकार्थप्रतिपादनावच्छिन्ना [३]वर्णाः पदमित्येतावदेव लक्षणं तथाप्येतदेव [४]लक्षणं क्षणभङ्गुराणां कथमित्येतदुक्तम्—**एकस्मृतिसमारूढा** इति । समूहः पदमिति **वार्त्तिके** शेषः । पदसमूहः **सूत्रमिति वार्त्तिकम्** । तच्चानुपपन्नम् । वाक्यविशेषो हि **सूत्रम्** । न च वाक्यसामान्यमपि पदसमूहमात्रम्, गौरश्वः पुरुषो हस्तीत्यादेरपि वाक्यत्वप्रसङ्गादित्यत आह—**एवं स्वार्थेति समूहो वेदितव्यः** सूत्रत्वेनेति शेषः । **सूत्रसमूहः प्रकरणमिति वार्त्तिकम्** । तत्र चावान्तरसमूहभेदे कारणाभावात्, शास्त्रमेव सूत्रसमूहरूपं प्रकरणमिति प्राप्तमित्यत आह—**एवं क्वचिदिति** । तद्यथा प्रयोजनाभिधेयसंबन्धप्रतिपादनमेकमर्थमधिकृत्य[५] प्रथमद्वितीयसूत्रयोः समूहः प्रकरणम् । एवं प्रमाणप्रकरणम्, प्रमेयप्रकरणम्, न्यायपूर्वाङ्गप्रकरणम्, न्यायाश्रयप्रकरणम्, न्यायस्वरूपप्रकरणम्, न्यायोत्तराङ्गप्रकरणमित्याद्यूह्यम्[६] ॥

**प्रकरणसमूहश्च[७]आह्निकमिति वार्त्तिकम्** । तदिदं प्रकरणानामवान्तरैकवाक्यतायामसत्यां न सिध्यतीत्यत आह—**प्रकरणानामिति** । अस्ति ह्यमीषां प्रकरणानां सपरिकरन्यायलक्षकत्वमेकमिति । तत्समूह आह्निकम् । [८]उत्तरस्मिंश्चाह्निके न्यायन्यायाभासविवेकोपायलक्षणमेकम् । तत्रापि कथाप्रकरणम्, हेत्वाभासप्रकरणम्, छलप्रकरणम्, पुरुषाशक्तिलिङ्गप्रकरणमित्येवं प्रथमे लक्षणमध्यायार्थः । द्वितीये प्रमाणपरीक्षा । तृतीये कारणरूपप्रमेयषट्कपरीक्षा । चतुर्थे कार्यरूपप्रमेयषट्कपरीक्षा[९] । पञ्चमे पुरुषाशक्तिलिङ्गविशेषलक्षणमिति[१०] । एवं [११]द्वितीयाध्यायादावाह्निकप्रकरणसंगतीस्तत्रैव दर्शयिष्यामः । तदिदमुक्तम्—**एवं तत्र तत्र वेदितव्यमिति** । [A]तत्र तत्रेत्याह्निकादावित्यर्थः[A] । ननु च तत्र एकप्रकारोऽपि न दर्शितः, कथं तत्र तत्र वेदितव्यमित्यत आह—**एताश्चेति** ॥

१. विवरणावच्छेद A. विवरणेऽवच्छेद° M. २. सप्रणेतृ° M. ३. वर्णाः पदमिति om J. ४. लक्षणं om J लक्षणं भङ्गुराणां A. ५. °मभिप्रेत्य JA. ६. °द्युक्तमूह्यम् B. ७. च om BJ. ८. उत्तरत्रा° JA. ९. षट्क om J. १०. विशेषप्रकरणमिति B. ११. द्वितीयादा° Jm. A-A in A only.

ननु शास्त्रस्य ससाधनपुरुषश्रेयोऽभिधायकत्वं प्रतिज्ञाय [१]शास्त्रस्वरूपदर्शनं क्वोपयुज्यत इत्यत[२] आह—**तदेवमिति**। [३]शास्त्रस्वरूपाख्यानपूर्वकं तदर्थकथनं सुगमं भवतीत्यभिप्रायः॥

ननु प्रतीतिसिद्धं प्रमाणादीनां षोडशत्वं किमित्यनूद्यत इत्यतस्तन्निराकरणीयाम् आशङ्कामाह—**नन्विति**। **सामान्यविशेषः** साधर्म्यविशेषः। यतोऽस्येति पदसमूहस्य शास्त्रस्य। **पदार्थाः** पदानां समूहिनाम्[४] अर्थाः प्रमाणादयः। तस्मात् शास्त्रं वाक्यरूपं पुरुषश्रेयो[५] वाक्यार्थरूपमभिधत्ते। ससाधनमिति शेषः। कथं निःश्रेयसाय कल्पन्त इत्यापाततः। परमार्थतस्तु तेषां काल्पनिकत्वे निःश्रेयसमपि काल्पनिकम्। ततस्तदर्थं प्रयासो विफलः तस्यायत्नसिद्धत्वादित्याशयः। [६]कल्पनाकोशस्यानन्तप्रसरत्वादनन्तात्मान इत्यापाततः। परमार्थतो निरात्मान इत्याशयः। [A]प्रत्यक्षानुमानेति प्रमाणद्वयोपन्यासः स्वसिद्धान्तविरुद्धो **वार्त्तिककृत** इत्याह—**प्रमाणादय** इति[A]। **नोपमानविषया** इति। यद्यप्युपमानस्य संज्ञासंज्ञिसंबन्धपरिच्छेदफलस्य शब्दे प्रमाणेऽस्त्येवोपयोगः, अगृहीतसमयस्य शब्दस्याप्रमापकत्वात्[७]। समयस्य च प्रायश उपमानेनाकलनात्। तथापि न तेन ते साक्षाद् विषयीक्रियन्ते प्रमाणादय इत्यर्थः। [A]ननु यदि साक्षादुपमानस्य प्रकृतानुपयोगादनभिधानम्[A], तर्हि शब्दोऽभिधीयताम्। स हि साक्षादुपयोगीत्यत आह—**यद्यपीति**। तत्रापीत्यागमविषयपरामर्शः। आगमो हि यत्र प्रवर्तते तद्विषयमेव प्रत्यक्षमनुमानं वा अपेक्षते। ते तु समूले अपि न [८]स्वविषयप्रवृत्तं प्रमाणमपेक्षेते[९]। ततो मूलासंप्लुतविषयत्वात्[१०] ते एव दर्शिते इत्यर्थः। **वैनयिकेति** विशिष्टो नयः शास्त्रं न्यायशास्त्रम्, तज्जन्यबुद्धिविरहिण इत्यर्थः।[११] नैतान् विविञ्चते समारोपिताद् रूपादिति शेषः। **शुश्रूषादि**रित्यादिग्रहणेन श्रवणादौ पाटवम्। संदिग्धस्यापि जिज्ञासा न भवत्येवानभिमतापवर्गस्येत्यत उक्तम्—**शिष्यस्येति**। शिष्यतया मुमुक्षुतादिसंपत्तिमुपलक्षयति। विप्रतिपन्नोऽपि कथामारभमाणोऽप्यमुमुक्षुर्गलितेऽहंकारे न[१२] सापेक्षो[१३]भवतीत्यतो निष्फलो जल्पवितण्डारम्भ इत्यत आह—**शिष्यमाणस्येति**। मोहादपि मोक्षमिच्छत इत्यर्थः। जल्पवितण्डाभ्यां [१४]विगलितेऽहंकारे इति योजना। सापेक्षस्य सतः प्रतिपाद्यतेति[१५] वाक्यशेषोऽग्रे[१६]। **केनचित् प्रकारेणेति**। प्रथमसूत्रपाठप्रकारेणेत्यर्थः॥

---

१. शास्त्रस्य स्व° M. २. °युज्यतेऽत BM. ३. स्वरूपव्याख्यानपूर्वकतदर्थं B. ४. समूहितानाम् B. ५. वाक्यार्थमभि BJ. ६. प्रसर om BJ. ७. °प्रमाणत्वात् J. ८. विशय M. ९. अपेक्ष्येते M. १०. विशयत्वात् M. ११. वैनयिकेति···इत्यर्थः om JA. १२. गलितेऽप्य° J, °कारेण B. १३. भविष्यती° J. १४. गलिते BM. १५. प्रतिपाद्यन्ते M. १६. अग्रेपाठः B, अपपाठः M.

नन्वसंदिग्धस्यापि संदिग्धीकरणे किमस्य प्रयोजनमित्यत आह—**असंदिग्धोऽपीति**। तथा च प्रमातॄणां सापेक्षाणामिति शेषः। तेऽमी दुर्ललिताः शिष्या यदि[१] मोक्षादावपि इन्द्रियाद्यपेक्षन्ते, तदा कथं प्रतिपाद्या इत्यतो वार्त्तिकं पूरयति—**कश्चिदिति**[२]। दृष्टप्रयोजनोपयोगिनं प्रत्यक्षोपलभ्यमानमित्यर्थः। दृष्टप्रयोजनोपयोगिनमेवानुमेयं जिज्ञासव इत्युत्तरत्रापि पूरणीयमित्याह[३]—**एवमुत्तरमपीति**। नन्वेतावतापि सापेक्षा[४] अनेनैव शास्त्रेण प्रतिपाद्याः प्रत्यक्षानुमानाभ्यां चेति परस्परव्याहतमित्यत आह—**अयमभिसन्धिरिति**। परमपुरुषार्थसाधनं तु[५] जिज्ञासव इति शेषे न्यायेनेति शेषः। इह यद्यपि सुखं दृष्टमेव विधायकप्रमाणगोचर एवं[६] अहितनिवृत्तिरदृष्टैव निषेधकप्रमाणगोचर एवेति यथासंख्यमपि संभवति। तथापि **श्रेयः पुनः सुखमहितनिवृत्तिश्चेति** अतो[७] न किञ्चिदधिकमुक्तं भवतीति[८] प्रमाणविशेषसंबन्धकथनमेव परम्। [A]न च तेनेदानीमस्ति प्रयोजनम्[A]। न चाभिमतश्रेयोविशेषनिर्धारणे कर्तव्ये विधिनिषेधगोचरत्वोपवर्णनमुपयुज्यत इत्यभिसंधायान्यथा व्याचष्टे—**तत्रापीति**। तच्छ्रेयः सुखमहितनिवृत्तिश्चेति तच्छब्देन द्वयमपि श्रेयस्त्वेन परामृश्यत इत्यर्थः। [A]यथासंख्यं शङ्कां निवारयति—**न व्यासज्येति**[A]। दृष्टं सुखमित्यत्र [९]दृष्टादृष्टशब्दयोरर्थमुदाहरणमुखेन स्पष्टयति—**स्रक्चन्दनेति**। ऐहिकमित्यर्थः। **स्वर्गादीति**—आमुष्मिकमित्यर्थः[१०]। [A]उक्तमन्यत्रापीति दिशति[A]—**एवमिति**। अहितनिवृत्तिरप्यैहिक्यामुष्मिकी[११] चेत्यर्थः॥

नैवं वार्त्तिके श्रूयत इत्यत आह—**चकारलोपादिति**। चकारयोर्लोपादित्यर्थः। तेन दृष्टं सुखमदृष्टं च। तथा [१२]अहितनिवृत्तिश्चेति वार्त्तिकार्थः। तदयं संक्षेपः दृष्टं[१३] श्रेयः। तच्च सुखमहितनिवृत्तिश्च। सुखमप्यैहिकमामुष्मिकं च। दुःखनिवृत्तिरप्यैहिक्यामुष्मिकी चेति[१४]। तत्र[१५] सुखलक्षणं श्रेयो दृष्टमदृष्टं वा। नैतच्छास्त्रसाध्यम्[१६], तस्य स्रगादियागादिसाध्यत्वात्। आत्यन्तिकस्य च तस्याभावात्। अहितनिवृत्तिरप्यनात्यन्तिकी दृष्टादृष्टभिन्ना नैतच्छास्त्रसाध्या[१७], तस्याः प्रसक्तकण्टकादिहिंसादिपरिहारसाध्य-

---

१. यदा M. २. कश्चिदिति M. ३. इत्यत आह J. ४. सापेक्षावतापि सापेक्षा A. ५. तु om BMA. ६. गोचरमेवेति B. ७. °रित्यतो JA. ८. °मभिहितं स्यात् JA, इति om B. ९. °मित्यदृष्टा° M. °ब्दगोचरत्वमुदाहरणेन स्फुट° A. १०. इति om B. ११. प्यैहिकी चामुष्मिकी J. १२. अहिताग्नि° M. १३. इष्टं M. १४. इति om B. १५. J adds तत्साध्यं after तत्र। १६. श्रेयो ........साध्यम् om J. १७. नैतत्साध्या JA.

त्वात्[1], तदप्रसक्तौ त्वसाध्यत्वात्। अत आत्यन्तिकीमहितनिवृत्तिं निर्धारयितुं पुनर्भिनत्तीत्याह—**अहितनिवृत्तेरिति**। ^**ननु यदि निवृत्तिरिति**^ ननु यदि निवृत्तिः प्रागभावो दुःखस्य, स कथमात्यन्तिकः? उत्तरान्तानवच्छेदो हि आत्यन्तिकत्वम्। प्रागभावस्य च[2] तथात्वे प्रागित्येव न स्यात्। अथ निवृत्तिः प्रध्वंसः, स च [3]सर्व एवात्यन्तिक इति कुतो निवृत्तेरात्यन्तिकत्वव्युत्पादनमित्यत आह—**आत्यन्तिकत्वमिति**। निवृत्तस्य निवृत्तजातीयस्य पुनरनुत्पादः। तत्रैवात्मनीति शेषः॥

नन्वेकविंशतिप्रभेदभिन्नदुःखहानिरेव[4] आत्यन्तिकी दुःखनिवृत्तिः, तत्कथं **हान्येति** **वार्त्तिक**मित्यत आह—**स चेति**। निवृत्त्या निवृत्तिस्वरूपेण लक्ष्यते। अत्र च कार्यशब्देन दुःखमुक्तम्। कारणशब्देन शरीरेन्द्रियविषयबुद्धयः[5]। अनुषङ्गि सुखं[6] दुःखैककारणत्वात्। अथ शरीरादिषु निवृत्तेष्वपि दुखं किं न भवेत्? मा भूद्[7] दुःखम्, सुखं[8] किं न भवेत्? न ह्यन्यस्मिन्नत्यन्तनिवृत्ते अन्यन्न भवति। तथा चानुषङ्गिसुखनिवृत्तिः किमुपवर्ण्यत इत्यत आह—**न हीति**। कारणं विना भवत्कार्यं कार्यतामेव जह्यात्। अतः शरीरादिष्वसत्सु दुःखवत् सुखमपि न भवति, तस्यापि तत्कार्यत्वात्। भवद्वा[9] शरीरादिषु सत्स्वेव भवेत्। तथा च दुःखमपि भवेत् कारणसद्भावादित्यर्थः। अत्रैवार्थे **वार्त्तिकं** योजयति—**तदिदमुक्तमिति**। अनेनैव **कारणमविद्यातृष्णे, कार्यप्रवृत्तिरनुषङ्गिणौ धर्माधर्माविति टीकाव्याख्यानम्** अपहस्तितम्, शरीरादीनां दुःखत्वमनुभवबाधितमित्यत आह—**गौणेति**॥

ननु घ्राणादिसूत्रे (१.१.१२) पञ्चेन्द्रियाणि प्रसिद्धानि। न च प्रदेशान्तरेऽपि षडित्यत आह—**षष्ठमिति**। तन्त्रयुक्त्येति भावः। ननु विषया अप्यनितरेतरसाधनसाध्याः पञ्चैव विभागे परीक्षायां च सिद्धाः, न तु षडित्यत आह—**तस्येति**। यद्यपि बुद्धिसुखदुःखान्यपि मनसो विषयः, तथापि, तस्यैव विषयत्वेन दुःखत्वोपचारो यद्विषयीक्रियमाणं दुःखमुपजनयति। वक्ष्यति हि—**विषया बोध्यत्वादिति**। न च बुद्धिर्बुध्यमाना दुःखहेतुः। वक्ष्यति हि—**बुद्धयस्तु साक्षादिति**। सुखदुःखयोस्तु दुःखहेतुत्वमेव नास्ति, सुखस्य विजातीयारम्भकत्वेऽपि रागमात्रारम्भकत्वात्। दुःखस्य तु विजातीयारम्भकत्वादेव। इच्छाद्वेषप्रयत्नास्तु प्रतीयमाना एव साक्षाद् दुःखं जनयन्ति।

१. °निवृत्तिसाध्य° BM. २. च om BM. ३. सर्वत्रैव JA. ४. °निवृत्तिरेव B. ५. अत्र च कारणकार्यशब्देन शरीरेन्द्रियविषयबुद्धयः। यद्वा कारणं शरीरादयः। कार्यं दुःखम् JA. ६. सुखे M. ७. भवतु B. ८. तु added JA. ९. चु JA.

तथा हि, मुमुक्षुस्तावदिच्छामि द्वेष्मि योगाभ्यासादन्यत्र प्रयत इति प्रतीत्यैव दुःखी भवति, अहितसाधनत्वेनेच्छाद्वेषप्रयत्नानां तेनावधारितत्वात् । अन्योऽपीप्स्यमाणालाभे[१] बुभुक्षितोऽस्मि पिपासितोऽस्मीति प्रतीत्य[२] दुःखी भवति । हितमेवाहितमुपलभ्य द्विषतो निवृत्तभ्रमस्य हितमेव द्वेष्मि, धिङ् मामिति दुःखम् । एवमनिष्ट एवार्थे इष्टबुद्ध्या [३]प्रयतमानस्य निवृत्ते भ्रमे तथा अलसस्य प्रयत्नमुपलभ्यैव दुःखमित्येतावतैते[४] एव मनसो विषयत्वेन निर्दिष्टाः ॥

ननु जराकुष्ठाद्युपहतदेहस्योपलभ्यमानमेव शरीरं दुःखहेतुः[५], [६]तत्रापि विषयत्वेनैव दुःखत्वोपचारः स्यादित्यत आह—**यद्यपीति** । अन्यथास्य दुःखहेतुभावोऽसाधारण इति शेषः । विषयत्वेन पुनरिदं न षड्भ्यो भिद्यते । असाधारणेन्द्रियसंबन्धात्तु भिद्यते[७] । न तु स्वरूपेण[८], विषयाणामनन्तत्वादित्यर्थः । इह यद्यपि **अनुषङ्गोऽविनाभाव** इति वक्ष्यति **वार्त्तिककारः**, तदुपपत्तये च समाननिमित्ततासमानाधारतासमानोपलभ्यताः, तथापि न तावन्मात्रेणाविनाभावो निर्वहति । साधारणनिमित्तायामपि [९]ह्यन्यतरासाधारणनिमित्तनिवृत्तावेकतरनिवृत्तौ[१०] इतरानुवृत्तिसंभवात्[११] । अतएव आधारस्योपलब्धिसाधनस्य च साम्येऽप्येकतरस्य कारणाभावेनाभावेऽप्यन्यतरसद्भावेनाविनाभाव इत्याशङ्क्य सुखस्य दुःखानुषङ्गोपपत्तये दुःखहेत्वनुषङ्गमेवाह—**साधनेति** । अतो न द्वितीयसूत्र**वार्तिकटीकाभ्यां** विरोधः । साधनपारतन्त्र्यं कार्यत्वात् । अकार्यस्य च[१२] सुखस्याभावात् । पारतन्त्र्यं च दुःखहेतुः । यदाह—

सर्वं परवशं दुःखम् ।

इति । क्षयित्वं च सुखस्य समवायिकारणवत्त्वात्[१३] । तदपि दुःखहेतुः, इष्टवियोगो हि दुःखं जनयतीति । क्षयित्वं कामे सतीति तु[१४] व्याख्यानं दुःखहेतव इति बहुवचनविरुद्धम्, **अतः स्वतन्त्रमेवेदं**[१५] हेतुत्रयम् ॥

**काम** इच्छा । सा च सुखतत्साधनयोर्व्यापिका । न हि सुखं तत्साधनं वा अनिच्छतः सुखं नाम सुखसाधनं च । तदपि[१६] सुलभं दुर्लभं च । तत्र दुर्लभेच्छा दुःखैकफलैव । [१७]सुलभेच्छात्वनिषिद्धसाधनगोचरा निषिद्धसाधनगोचरा च । तत्र निषिद्ध-

---

१. °लाभेन B. २. प्रतीत्यैव JA । ३. प्र om B ४. मित्येत B ५. मनसो ......दुःखहेतुः blank in M. ६. ततस्तत्रापि MA ७. तु om BJ, भिद्येत JA ८. तु om JMA, स्वरूपतो J ९. हि om BM. १०. एकतरनिवृत्तौ om J ११. निवृत्ति M. १२. च om JA १३. °कार्यवत्त्वात् J, °यिकारणकार्यत्वात् A १४ तु om J. १५. इदं om BM. १६. तदपि om JA १७. °प्यनि° JA.

साधनगोचरापि स्वरूपतः कार्यतश्चाधर्मजननद्वारेणावश्यं दुःखफलेति[१]। अनिषिद्धसुलभसाधनगोचरापि शरीरपाटवे सत्यसति वा[२]। तत्रासति[३] दुःखहेतुरेव। शरीरादिपाटवेऽपि[४] सविघ्ना निर्विघ्ना च। तत्र सविघ्ना दुःखमेव प्रसूते। निर्विघ्नाप्यनिष्टसंभिन्नविषया तद्विपरीता च। तत्र प्रथमा अवश्यं दुःखहेतुः। द्वितीया तु विफला सफला च। [५]तत्र प्रथमा दुःखहेतुरेव। द्वितीया तु सविलम्बफला अविलम्बफला च। तत्र प्रथमा अवश्यमेव दुःखहेतुः[६]। द्वितीयाप्यनायतिविशुद्धा[७] तद्विपरीता च। तत्र प्रथमा[८] दुःखहेतुरेव[९]। द्वितीया तु विषयस्य परिणतिविरसत्वाद् दुःखमेव प्रसूते[१०], अतिव्यामोहाद् विषयेष्वेव मग्नस्येच्छान्तरमेव वा, उभयथाप्यनर्थमूलमिति[११]। एवं सुखानुषक्तः कामोऽपि दुःखहेतुरिति। इह यद्यपि रागद्वेषमोहप्रवृत्त्योऽपि[१२] दुःखतदनुषङ्गिसाधनभावादिन्द्रियादिवत् दुःखत्वेन परिसंख्यातुमुचितास्तथापि न [१३]शरीरेन्द्रियादिव्यतिरेकेणामूषामात्मलाभो दुःखं प्रति व्यापारो वा, इन्द्रियादीनां पुनर्दोषप्रवृत्त्यभावेऽपि दुःखं[१४] प्रति व्यापारो जीवन्मुक्तस्यास्त्येव। प्रवृत्तिफलं तु[१५] धर्माधर्मौ यद्यपि सुखदुःखहेतू, तथाप्येकविंशतिविध[१६] दुःखमयसंसारनृत्यशाला[१७] मूलस्तम्भत्वादनयोर्नात्र परिसंख्यानम्। न हि भाविनि जन्मान्तरे शरीरेन्द्रियविषयबुद्धिसुखदुःखान्याहत्य व्याप्रियन्ते यथा धर्माधर्मौ॥

एतदेवाभिसंधाय कारणरूपधर्माधर्मोच्छेदक्रमेण कार्यरूपैकविंशतिविधदुःखस्योच्छेदो **वार्त्तिककृता** दर्शित इति तथैव **वार्त्तिक**मवतारयति—**उक्तप्रकारेति**। इह चागामिधर्माधर्मनिवृत्तावुपायस्तत्साधनप्रवृत्तिपरित्यागः, उत्पन्ननिवृत्तौ तूपभोग इति दर्शितम्। तदुभयमप्यनुपपन्नम्, वाग्बुद्धिशरीरारम्भं परित्यज्य जीवितुमशक्यत्वात्। मृतेऽपि[१८] शरीराद्यन्तरवज्रलेपस्य दुरपनेयत्वात्, उपभोगश्चाशक्यः, अनियतविपाकसमयत्वात्, अनन्तत्वादनन्तफलत्वाच्च[१९]। भोगावस्थायामप्यनन्तकर्मान्तरोत्पादनताया[२०] अविरामात्। अथ [२१]कथञ्चिदुपभोगानुत्पादाभ्यामुत्पन्नानुत्पन्नयोः शक्यः प्रक्षयः, तर्हि शास्त्रवैयर्थ्यप्रसङ्गः, तत एव तत्सिद्धेरित्याशङ्क्य **वार्त्तिक**स्योपस्कुरुते—**संशयादीति**। संशयादीत्यादिपदेन[२२] चतुर्दशापि न्यायपरिकरत्वेन संगृहीताः। परमन्यायेत्यनेन मूल-

---

१. दुःखं फलतीति JA. २. च J. ३. तत्र चरमा B, चरमो M. ४. सत्यपि JA; सति B. ५. तत्र……च om JA. ६. दुःखयति JA. ७. आयत्यविशुद्धा JA. ८. अवश्यं दुःख° BM. ९. एव om M. १०. द्वेषं वा करिष्यति JA. ११. °र्थं सूचयति J. १२. अपि om J १३. °इन्द्रिय° om BM. १४. स्वोत्पत्ति° J. १५. तु om J. १६. °विध° om JA. १७. °मूल° om M. १८. अपि om M. १९. °दनन्तफलत्वा° om J. २०. °लताया JA. २१. गादुपादा° A. २२. दित्यनेन J.

मूलीभावव्यवस्थितानि चत्वार्यपि प्रमाणानि। न्यायो मार्ग इव [१]न्यायमार्गः, निःश्रेयसभूमेः प्राप्तिहेतुत्वात्। द्वादशविधेत्यात्मादि[२] प्रमेयम्। तदनेन शास्त्रस्यावसरोपयोगौ दर्शितौ। तत्त्वपरिभावनेत्यनेनाभ्यासस्य[३]। तदेवं पूर्वोक्तेन न्यायेन मोक्षमाणस्य शास्त्रे प्रवृत्तिः। ततः परिकरपरिज्ञानम्। ततो न्यायमार्गपरिशोधनम्[४]। ततस्तेन द्वादशविधप्रमेयासादनम्, ततोऽभ्यासः, ततः प्रसंख्यानम्। ततः समूलदोषानुषङ्गनिर्मोक्षः[५]। ततोऽप्रवृत्तिः। तत आगामिनोर्धर्माधर्मयोरसंचयः। इत्येवमनागतः प्रवाहो निवारितः॥

यद्यपि च यावच्छरीरादिभाविनी प्रवृत्तिस्तथापि दोषानुषङ्गसहकारिविरहान्नासौ प्रवृत्तिः तत्कार्यासमर्थत्वादिति।

उत्पन्नभोगमुपपादयति—**अनादीति**। यद्यपि यथानादौ भवपरम्परायां कर्माणि प्रचीयन्ते तथापचीयन्ते[६]ऽपि। न ह्यारम्भे परं भवस्यानादिता। ननूपभोगे कर्मारम्भो ह्यधिकारिणि[७] शरीरे। तच्च शरीरकोटिमध्यपतितमेकं शरीरं[८] कदाचित् किञ्चित् क्वचिदेव। भोगस्तु नास्त्येव तच्छरीरं यत्र नास्ति, भोगस्य[९] तदायतनत्वात्। तस्मादायव्ययपर्यालोचनया परिमितमेव कर्म। अत एव नियतविपाकसमयमपि। तस्य च क्रमभाविभिरपि कियद्भिः [१०]कैश्चिदेव शरीरैरुपभोगात् प्रक्षयोऽपि न दुरुपपादः। तथाप्यागमप्रामाण्यात् काययौगपद्यस्यापि प्रसंख्यानफलतया सिद्धत्वादनन्तामनियतविपाकसमयतां चाभ्युपगम्यैव परिहृतम्[११]। विभूतिमता अनेककालोपभोग्यमप्येकदा भुज्यत इत्यत्र समुद्रपानमुदाहरणम्। [१२]योगर्धिप्रभावसम्पन्नो विविधफलभोगिनो विचित्रस्वभावानेकदैव बहून् कायान् इच्छामात्रेणैव[१३] निर्मिमीत इत्यत्र दण्डकारण्यसृष्टिरुदाहणमिति॥

इह केचिद् आहुः, दुःखनिवृत्तिः पुरुषार्थ एव स्वरूपतो न[१४] भवति सोपाधित्वात्। सुखं दुःखाभावे सत्येव भवतीति सुखसाधनान्तरवत्[१५] दुःखाभावोऽपि मृग्यते। न तु स एव पुरुषस्य समीहित इति। तदुक्तम्,

वरं वृन्दावनेऽरण्ये क्रोष्टृत्वमभिवाञ्छितुम्।
न तु वैशेषिकीं मुक्तिं गौतमो गन्तुमिच्छति॥[१६]

---

१. न्याय॰ om J. २. आत्मादि om JA. ३. अनेन om JA. ४. ॰र्गसाधनम् A. ५. निर्मर्षः JA. ६. क्षीयन्ते BM. ७. कर्मास्तीत्यधिकारे M, ह्यधिकारि॰ B. ८. शरीरं om J. ९. तस्य JM. १०. कियद्भिश्चिदेव JA. ११. समयभावमभ्युपगम्ये॰ J, ॰गम्यैतत् M. १२. ऋद्धि॰ om JA. १३. एव om JM. १४. न om A. १५. ॰नैतरवत् M. १६. वरं वृन्दावन इत्यादि BMA भाट्टमतमेतत्.

इति । तदनुपपन्नम्, विपर्यासस्यापि संभवात्, भोजनादिसुखे सत्येव हि बुभुक्षादिदुःखं[1] निवर्तत इति दुःखनिवृत्त्यर्थमेव भोजनादिसुखं मृग्यते । न पुनस्तदेव तस्य समीहितमिति किं न[2] कल्प्यते । क्वचिद् दुःखाभावेऽपि[3] सुखस्येष्यमाणत्वादिति चेत्—न, दुःखनिवृत्तेरपि क्वचित् सुखाभावेऽपीष्यमाणत्वादेव । दुःखनिवृत्तौ सत्यां सुखमेव भविष्यतीत्यभिसन्धिस्तावदस्तीति चेत्—न, सुखावस्थायां नियमतो दुःखविरहो[4] भविष्यतीत्यभिसन्धेस्तत्रापि संभवात् । तस्माद् यद्यपि दुःखहानौ सुखम्, सुखे च दुःखहानिर्नियता, तथापि परस्परनिरपेक्षमेव पुरुषार्थत्वमनयोरिच्छयोः[5] अप्यसंकीर्णविषयत्वात् ॥

[6]अन्यस्त्वाह— भवत्येव हि दुःखहानिः पुरुषार्थः,[A] किं त्वनुभूयमानतया । न हि विषादिजन्यमोहावस्थायां दुःखनिवृत्तिरिति तदर्थं प्रेक्षावन्तः प्रवर्तन्ते । तस्मात् मोक्षे दुःखहानेरननुभूयमानत्वान्न[A] पुरुषार्थत्वमिति । तदुक्तम्,

दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥

इति । [7]तदप्यनुपपन्नम्, पुत्रादिवियोगजन्यदुःखहानिमिच्छतां केषाञ्चिद् विषशस्त्रोद्बन्धनादावपि प्रवृत्तिदर्शनात् । प्रेक्षावन्तो नैवं कुर्वन्तीति चेत्—न, पुरुषार्थत्वाविरोधात् । न हि परदारेषु [8]शास्त्रनिषेधाङ्कुशनिवारिताः प्रेक्षावन्तो न प्रवर्तन्त इति । न तत्र कामः पुरुषार्थः, अपि त्वल्पीयः सुखं महाननर्थ इति निवृत्तिः । तथा विषादावपि प्रवृत्तस्य शास्त्रगर्हितत्वादल्पीयाननर्थो निवर्तते । [9]महीयान् प्रवर्तत इति न ते प्रवर्तन्त इति[10] । इयमेव हि प्रेक्षा यत् पुरुषार्थत्वेऽपि[11] लोकशास्त्रविरोधपरामर्शः, न तु[12] अपुरुषार्थत्वादेव स्वरूपेणेष्यमाणतामात्रनिबन्धनत्वात् पुरुषार्थतायाः । अतएव न यत्र लोकशास्त्रविरोधः[13], तत्र व्याध्यादिपरिपीडिताः प्रयागवटप्रपातानशनादिनापि देहं त्यजन्तः प्रेक्षावन्तो दृश्यन्ते । न हि[14] कश्चिद् दुःखनिवृत्तिमनुभविष्यामीति तत्साधने प्रवर्तते, अपि तु दुःखं हास्यामीति । अपि च दुःखनिवृत्तेरनुभूयमानतामात्रं विवक्षितम्, दुःखनिवृत्तिसत्तावधिर्वा ? आद्यश्चेत्, तुष्यतु दुर्जनः चरमे जन्मन्यनुभूयत एव समाधिप्रभावात् । आत्यन्तिकी दुःखनिवृत्तिरनागता वर्तमानाप्यचिरमनुभूयत एव[15] ।

---

१. आदि om BJ. २. किं न om JA. ३. °भावाभावे° B. ४. भवती° JA. ५. °रिच्छयोरपि MB. ६. मण्डनमतम् J. A-A om A. ७. तदेतदप्य° B. ८. °निषेध° om BM. ९. महान् M. १०. इति om BJA. ११. अयः° °प्रेक्षावत्° B var. १२. ननु M. १३. °शास्त्रविरोधः JA. १४. च J. १५. एवं M.

द्वितीये तु [१]प्रसक्तकण्टकादिहेतुकदुःखनिवृत्तेरपुरुषार्थत्वप्रसङ्गः, सर्वदाननुभूयमानत्वात्। तथात्वे वा[२] विषयान्तरसंचाराभावप्रसङ्गात्, निवृत्तेः सर्वदा तादवस्थ्यादिति[३]। [A]तस्मात् सर्वदाननुभूयमानापि यथा कण्टकादिजन्यदुःखनिवृत्तिः पुरुषार्थतया पुरुषं प्रयोजयति, तथा शास्त्रार्थभूतापि[A]। तदिदं दुःखनिवृत्तेरपुरुषार्थत्वमननुभूयमानतयैव [४]चापुरुषार्थत्वमिति [५]पक्षद्वयमतिनिर्बलमित्येतदित्युपेक्ष्य तृतीयं शङ्कते—**स्यादेतदिति**। तदुक्तम्,

असत्यानि दुरन्तानि समव्ययफलानि च।
अशक्यानि च वस्तूनि नारभेत विचक्षणः॥

इति। सिद्धान्तवार्त्तिकमुद्दीपयति—**यद्यपीति**। तदनेन मधुविषसंपृक्तान्नभोजनदृष्टान्तेन समव्ययफलत्वमपवर्गस्य निराकृतम्। यथा[६] ह्यत्रानर्थस्य भूयस्त्वमर्थस्य[७] तु क्षुद्रत्वम्, न तथापवर्गेऽपीति[८]।

एतेनैतदपि निरस्तं यदुक्तम्[९], यथा दुःखशबलं संसारसुखमनादेयम्, तथा सुखशबलतया दुःखमप्युपादेयं किं न स्यात्? दृश्यन्ते हि सुखार्थिनो यागादिदुःखमनुभवन्त इति।

यस्य दुःखमुपादेयं हेयं तस्य किमुच्यताम्।
हेयहीनस्य का मुक्तिः केन वाप्युपदिश्यते॥

इति। यस्तु [१०]घनतरदुःखतिमिरनिरन्तरात् संसारकान्तारात् सुखखद्योतिकासु द्योतमानास्वपि बिभेति तं प्रति अयं निरस्ततमस्कतया[११] सुगमो मार्ग उपदिश्यत इति। तदिदमुक्तम्—**तेन मा भूदेतदित्यादि**[१२]। नन्वेवं सति[१३] नास्य सर्वार्थता। तथा च जगतः शमायेत्यनेन विरोध इत्यत आह—**अविवेकिनामपीति**। यद्यपि कस्यचिदप्रवृत्तावपि न सर्वार्थता अस्य[१४] हीयत इति प्रपञ्चितमधस्तात्, तथापि हेयं हेयत्वेनागृह्णन्तो मन्दाः कारुणिकेण ग्राहयितव्या इत्यर्थः॥

ननु शास्त्रेण तत्त्वज्ञानाद् वैराग्यम्, वैराग्याच्च शास्त्रे[१५] प्रवृत्तिरिति दुरुत्तरमितरेतराश्रयत्वमित्यत आह—**शास्त्रे**[१६] **प्रवृत्तीति**। दुःखादुद्विजतो भोगवैमुख्यमात्रमिह वैराग्यं

---

१. °हेतुक° om BM. २. °त्वेना° M. ३. संचारो न स्यात् M; प्रसङ्गात् B, इति om BM. ४. वा B, च om M. ५. °निर्दलनम् J. ६. °कृते तथा M. ७. भूयस्त्वादर्थस्य J. ८. इति om J. ९. यदुक्तम् om B, यथाहुः M. १०. बलवद्– BM. ११. निस्तमस्क° BM. १२. °दिति J. °दित्यादौ M १३. सति. om M. १४. अस्य om J. १५. च om BM. १६. शास्त्र–J.

विवक्षितम्, न तु रागाभाव एवेत्यर्थः। इष्टानिष्टप्राप्तिपरिहारार्थतया[1] द्वैविध्यशङ्कामपनयति—**ऐकरूप्यं द्वैरूप्यं**[2] **चेति**। ननु पुरुषभेदेऽपि प्रवृत्तेः[3] द्वैविध्यमेव। न हि कश्चित् सुखं प्राप्तुमिव दुःखमप्याप्तुं प्रवर्तते। नापि कश्चित्[4] दुःखहानायेव सुखहानायापीत्यत आह—**पुरुषभेदो रागवैराग्याभ्यामिति**। ननु सुखस्य हेयत्वमेव कुत[5] इत्यत आह—**प्राम्न्यस्येति**। अविवेकिनां तु प्रवृत्तिर्द्विरूपेत्युक्तम्। **वार्त्तिककृता** इति शेषः॥

प्रकृतमुपसंहरन्नेवाप्रकृतोपनिपातशङ्कामप्यपनेतुं [6]वृत्तवर्तिष्यमाणे अनुकीर्तयति—**तदनेनेति**। तदवयवं विवरीतुमुक्ततात्पर्यस्फोरणार्थमिति शेषः। **अलौकिकत्वात्**। लोकस्यास्मदादेर्नित्यपरोक्षत्वात्। **अयुक्तम्** अप्रामाणिकम्। **विप्रतिषिद्धं** मिथो व्यापकविरुद्धम्। **प्रवृत्त्यै** निष्कम्पप्रवृत्त्यै। **किं तर्हि? प्रमाणमिति**। गृहीतमित्यनुवर्तते। रजतज्ञानमिदं शुक्लभास्वररूपवद् द्रव्यं रजतमित्येवं ज्ञानमित्यर्थः। **परिच्छिनत्ति** उक्तमर्थमालम्ब्य [7]परिच्छित्तिरूपं जायत इत्यर्थः। **शुक्तिकाज्ञानमपीति**। इदं शुक्लभास्वररूपं शुक्तिकाद्रव्यं न रजतमिति ज्ञानमित्यर्थः। यद्येवं कथमनयोर्बाध्यबाधकभाव इत्यत आह—**केवलमिति**। **रजतसमारोपापवादाभ्यामिति**। समारोपापवादस्वभावतयेत्यर्थः॥

तदेवं परिच्छेदद्वारेण परिच्छेदकमुन्नीयत इति परिच्छेदस्यैव सामान्यविशेषयोः परिच्छेदत्वापरिच्छेदत्वे दर्शिते। न चैकस्यैव ज्ञानस्य [8]विरुद्धधर्मसंसर्गः। जात्या हि[9] बुद्धिरनुभवः स्मृतिश्च। तत्र स्मृतिरप्रमैव। अनुभवस्तु स्वरूपानुभवोऽस्वरूपानुभवश्च। सोऽयं विषयकृतो विशेषः[10]। नानाविषया चैका बुद्धिर्भवत्येव। ततश्च सैव बुद्धिः स्वरूपावस्थितेनार्थेन निरूप्यमाणा प्रमा। अस्वरूपावस्थितेन निरूप्यमाणा [11]त्वप्रमेति तथाभूतावच्छिन्नानुभवत्वमेव[A] प्रमाणत्वम्। अतथाभूतेन [A]त्ववच्छिन्नमप्रमाणत्वमिति भवति[A] अप्रमाणस्यापि सामान्यपरिच्छेदकत्वमिति। [A]रचिता भूमिः। किमेतावतेत्याह[A]—अस्ति तावदसाधारणं कारणमसमर्थायाः प्रवृत्तेस्तथैवोन्नीयमानम्। तस्य च व्यापारो विपरीतार्थपरिच्छेद एवासाधारणः। तच्चैवंभूतव्यापारोपकरणमप्रमाणमिति व्यवह्रियते। एवं च

---

१. °हाराभ्यां M, °हारफलतया B. २. द्वैरूप्यं om BM. ३. भेदेनापि प्रवृत्तौ BM. ४. कश्चित् om BM. ५ कथम् M. ६. वर्तिष्यमाणम् M, वृत्तवर्तिष्यमाणम् B. ७. °च्छेद° BM. ८. स्यैवं वि° A. ९. संसर्गजा इत्यादि M. १०. भेदः JA. ११. A-A in A only, °त्वप्रमेति. अतो भवत्येवाप्रमाणस्यापि B. अप्रमेति भवत्यप्रमाण° J. A-A. in A only.

प्रवृत्तिसामर्थ्यासामर्थ्यसंदेहेऽपि यदि तज्जनकमप्रमाणमसमर्थैव सा । अथ न तदप्रमाणम्, तज्जन्या प्रवृत्तिरपि नासमर्थेत्यप्रमाणान्नियतः[१] समर्थप्रवृत्तिव्यतिरेकः । प्रमाणं[२] चात्रोभयव्यतिरेकग्राहकं विरुद्धकार्यत्वं लिङ्गम् । प्रकृतकार्यस्य तद्व्यतिरेकग्राहि[३] च प्रत्यक्षमध्यवसेयमिति नाप्रमाणादर्थव्यभिचारिणोऽ[४]र्थव्यभिचारिज्ञानव्यापारादित्यर्थः ॥

सिद्धो व्यतिरेकः, किं चात इत्यत आह—**तथा चेति** । अर्थवत्त्वमर्थाव्यभिचारित्वम्, अर्थाव्यभिचार्यनुभवजनकत्वमित्यर्थः । ननु तस्या इत्यत्र कथमनन्तरत्वेन प्रकृतामसमर्थां विहाय व्यवहितत्वेनाप्रकृतापि समर्थैव प्रवृत्तिः परामृश्यत इत्यत आह—**असमर्था त्विति** । पूर्वप्रक्रान्तं योग्यमेव प्रकृतमुच्यते[५], न त्वनन्तरोक्तमित्यर्थः । नन्वनुदितस्यानुवादः क्वोपयुज्यत इत्यत आह—**संप्रतीति** । पूर्वं व्याख्यातुमिदानीमाक्षेप्तुमित्यर्थः । आक्षेपसमाधानयोः स्फुटावभासित्वेऽपि संग्रहविवरणयोः पौनरुक्त्यं परिहरन्नाह—**आक्षिपतीति** ।

संदेहादपि[६] प्रवृत्तेस्तत्र तत्र[७] दर्शनात् निरुच्छ्वासमाक्षेपमुज्जीवयति—**न तावदिति** । अमुमेवार्थं भाष्येण संवदति—**सेयमिति** । **उक्ता भाष्यकृतेति** शेषः । किमतो यद्येवमित्यत[८] आह—**न चेति** । अर्थविनिश्चय उक्तरूपः श्रेयोहेतुतानुमानसहित[९] इति यावत् । प्रामाण्यावधारणं श्रेयोहेतुतालिङ्गपरामर्शप्रसवोचितमन्तरेणेत्यर्थः । एवंरूपता च प्रामाण्यावधारणस्य व्याप्तिस्मरणसाहित्यमेवेति तस्यापि बीजं समुचिनोति—**श्रेयोहेतुतानुमाननिमित्तव्याप्तिग्रहणं चेति** । **ताभ्यां विनेति** । स्वरूपनिश्चयश्रेयोहेतुतानुमानाभ्यां विनेत्यर्थः । व्याप्तिग्रहणानन्तर्येऽपि[१०] तत्फलस्यैवानुमानस्य योग्यतया प्रक्रान्तत्वात् । इममेव वार्तिकार्थं परिशोधयन् स्फुटयति—**तदिदमुक्तमिति** । निश्चयानुमाने न प्रामाण्यावधारणानुमानबीजभूतव्याप्तिग्रहणाभ्यां विना । ते च न प्रवृत्त्या विना । प्रवृत्तिश्च न निश्चयानुमानाभ्यां विनेत्याक्षेपसंक्षेपः[११] । इह च[१२] द्विधा प्रवृत्तिः, ऐहिकफला आमुष्मिकफला च । तत्रामुष्मिकफला प्रामाण्यावधारणपूर्विकैव । ऐहिकफला तु अपेक्षितोपायताज्ञानमात्राधीना अर्थनिश्चयमपि नापेक्षते, प्रागेव प्रमाणस्वरूपज्ञानम् । कुतस्तरां तद्विनिश्चयम् ? यत्रापि प्रवृत्तेः प्रागेव प्रमाणतत्त्वविनिश्चयः[१३], तत्राप्यसौ स्वहेतुबलादायातो न प्रवृत्तिं प्रति प्रयोजकः, अन्यथैकान्तिकविजयानिश्चये प्रामाण्याक्षेपक एव विजिगीषुः कथायां न प्रवर्तेत ॥

---

१. अप्रमाणनि° M २. प्रमायां M. ३. °व्यभिचार° J. ४. अर्थ° om JA, °दर्थव्यभिचारिज्ञान° B var, M. ५. युज्यते M. ६. प्रवृत्तेः om BM. ७. प्रवृत्ति- BM. ८. इति om M. ९. °अनुगुण° M. १०. °नन्तरेऽपि A. ११. °संग्रहः B. १२. च om J. १३. प्रमाणतथात्वनिश्चयः JA.

[A]न हि जल्पतो वितण्डयतो वा अवश्यमैकान्तिको विजयः[A] । तस्मादर्थानिश्चयेऽपि प्रवृत्तिरित्युभयवादिसिद्धं हृदि निधाय सिद्धान्तमुपक्रमते—**तत्र ब्रूम** इति । **दृष्टार्थेष्विति** अदृष्टार्थागमादिव्युदासः, तत्र प्रवृत्तेः फलाभिसंबंधानिश्चयात् । [1]**अनभ्यासदशापन्नेष्विति**त्यभ्यासदशापन्नपितृवचनादिव्युदासः । ते हि प्रमाणतया प्रवृत्तेः प्रागेव निश्चीयन्ते[2] । अभ्यासश्चाविपरीतो विवक्षितः । तेन स्वात्मन्यभ्यासेऽपि प्रवृत्तिसामर्थ्यादेव तन्निश्चयो विपरीताभ्यासविरहात् । स च विषयगोचरस्तन्नान्तरीयकार्थगोचरो वा तज्जातीयत्वावधारणोपायो यत्र स्वरूपतोऽपि नास्ति तत्र प्रवृत्तिसामर्थ्यादेव तद्गोचरस्य प्रामाण्यावधारणम्, यथा वैद्यवचनादनर्थनिवृत्तिं संभावयतोऽसंस्तुतप्रदेशस्थितेषु[3] मूलेषु । यत्र तु स्वरूपाभ्यासोऽस्त्येव तद्गतं तु श्रेयःसाधनमभ्यस्तम्, तत्र प्रवृत्तिसामर्थ्येन तत्साधनत्वग्राहिणः प्रामाण्यम् । यथा अग्निः पाकादिसमर्थ इति संभावितासत्त्वस्य वचनादुपलभ्य स्वयं पचतः । यत्रापि श्रेयःसाधनत्वेऽभ्यासः[4] स्वरूपे त्वनभ्यासस्तत्रापि स्वरूपगोचरस्यैव प्रामाण्यं [5]प्रवृत्तिसामर्थ्यादवसीयते । यथा अग्निः पाकादिसमर्थ एवेति निश्चितवतोऽपरिशीलितवनवह्नौ[6] । सर्वत्रैवार्थभूयस्त्वम्, विपर्यये त्वनर्थमान्द्यं[7] संभावयतः प्रवृत्तिः । स्वरूपश्रेयःसाधनत्वनिश्चयेऽपि फलसंदेह इवेत्याह—**नो खल्विति** ॥

**तदमी संशयाना अपि प्रवर्तमानाः**[8] फल इव स्वरूपश्रेयःसाधनत्वयोरिति शेषः । **प्रमाणस्य** स्वरूपग्राहिणः श्रेयःसाधनत्वग्राहिणश्चेत्यर्थः । **तत्त्वं** प्रमाणत्वम्, अर्थाव्यभिचारिप्रमासाधनत्वमिति यावत् । विनिश्चित्यार्थाव्यभिचारिप्रमाविनिश्चयद्वारेणेति शेषः । **तज्जातीयस्यान्यस्यैतावतैव समर्थत्वे अभ्यासदशापन्नस्येति** दृष्टार्थप्रमाणसंग्रहार्थम् । प्रवृत्तिसामर्थ्यात् प्रागेव समर्थायाः प्रवृत्तेः पूर्वमेवेति[9] । तेनायमर्थः, यद्यपि दृष्टार्थेषु अभ्यासदशापन्नेष्वपि प्रवृत्तिसामर्थ्यमस्ति, तेनापि च प्रामाण्यमवधारयितुं तत्र शक्यते, तथापि तज्जातीयत्वलक्षणेनैव लिङ्गेन प्रवृत्तेः प्रागेवावधारिते प्रामाण्ये तत्प्रमातुरुत्तरकालं प्रमित्सैव नास्ति । तन्निबन्धनत्वाच्च अनुमानप्रवृत्तेः । यदि पुनः प्रमित्सानपेक्षमेव समर्थप्रवृत्तिजनकत्वं परामृश्यते, तदा का क्षतिः ? तेनाप्यनुमीयतां प्रामाण्यम् । प्रमाणसंप्लवस्यापि[10] व्यवस्थापनादिति[11] ॥

---

१. अनभ्यासदशेति अभ्यास° JA. २. J adds एव, A adds इति। ३. असंस्कृत° B var. ४. °त्वाभ्यासः BM. ५. °स्यैव प्रवृ° BM. ६. अपरिचित° BM. ७. °नर्थसामर्थ्यं A. ८. प्रवर्तमानाः om J. ९. only in A. १०. अपि om JA. ११. °पितत्वात् BM.

ननु किमिदं तज्जातीयत्वम् ? न तावत् प्रमाणजातीयत्वम्, साध्याविशिष्टत्वप्रसङ्गात्। नापि समर्थप्रवृत्तिजनकजातीयत्वम्। तद्धि समर्थप्रवृत्तिसंबन्धो वा स्यात्? तदुपहितो वा [१]नियतप्रागभावः? न तावदाद्यः, प्रवृत्तेः प्रागेवेति वचनात्। नाप्युत्तरः, [२]तस्यातीन्द्रियस्य लिङ्गं विना प्रत्येतुमशक्यत्वात्। लिङ्गं च तस्य [३]प्रामाण्यैकनियतस्य यद्यस्ति तदा प्रामाण्यमेव तेनानुमीयताम्, किं तज्जातीयत्वानुमानेन? [४]प्रामाण्यानियतस्य तु तस्यानुमानेन किम्? नापि प्रत्यक्षसिद्ध एव [५]कश्चिद्धर्मस्तज्जातीयत्वम्। प्रत्यक्षत्वे तु तस्यानभ्यासदशापन्नगोचरेऽपि प्रमाणे प्रतीतिप्रसङ्गात्। तथा च तत्रापि प्रवृत्तेः प्रागेव प्रामाण्यावधारणं स्यात्, व्याप्तेरपि प्रागेव [६]प्रतीतत्वात्। न ह्ययं क्वचिदपि तज्जातीयत्वेन प्रामाण्यं नानुमितवान्। तत्र नास्त्येव तज्जातीयत्वम्, किं[७] प्रत्यक्षेण प्रतीयतामिति[८] चेत्—न, अभ्यासदशापन्नेषु तज्जातीयत्वेन प्रामाण्येऽनुमीयमाने प्रवृत्तिसामर्थ्यानुमितप्रामाण्यस्य साधनविकलतया दृष्टान्ताभासत्वप्रसङ्गात्। तस्मात् तज्जातीयत्वमतिरिक्तं[९] न पश्याम इति ॥

सत्यम्, तथापि ज्ञानस्य विषयनिबन्धनत्वात् तत्तद्विषयोपाधय एव ते ते ज्ञानोपाधयस्तैस्तैरुपाधिभिरुपाधीयमानं[१०] ज्ञानमेव [११]तज्जातीयं तस्य भावस्तत्त्वं भवति। ते चोपाधयः प्रतिभेदं स्वसंज्ञाभिरभिधातुमशक्या इति तज्जातीयत्वमित्यनया वाचोभङ्ग्या दर्शिताः। अतएवात्र वीप्सा द्रष्टव्या तत्तज्जातीयत्वमिति। तथा हि, अनुभवस्तावत् स्वरूपप्रकारावालम्बते। तत्र धर्मिस्वरूपेणोपधीयमानोऽनुभवः प्रमैवेति तेन रूपेणानुभूते तस्मिन् प्रमात्वमेवानुभूतं [१२]भवतीत्यग्रे स्फुटीभविष्यति। प्रकारविषयस्त्वनुभव उभयथा। कश्चित् स्वरूपप्रकारेणोपाधीयते, कश्चिदस्वरूपप्रकारेणापीत्यतः क्वचित् संशयः। तत्र स्वरूपप्रकारेणोपहितमनुभवं विवेक्तुं विशिष्टाः प्रकारोपाधयो भवन्ति। ते च नियमेन विभ्रमविषयविरोधितया निर्धारितस्वभावभेदा गुणादय एव। तदिदं सामान्यतस्तावल्लक्षणसहचरितलक्ष्यविषयज्ञानत्वमेव[१३] ज्ञानगतं तज्जातीयत्वमिति प्रत्यक्षे गतिः। यदा त्वप्रत्यक्षे लक्ष्ये लक्षणेन ज्ञानं जन्यते तदानुमानं तदिति तस्यान्यथैव[१४] गतिर्भविष्यतीति[१५]। तत्र द्रव्ये गन्धवति पृथिवीज्ञानमित्यादि सामान्यतः। करचरणादिमति शरीरज्ञानम् इत्यादि विशेषतः। गुणेषु केतक्यादौ सौरभज्ञानम्, शङ्खादौ श्वेतज्ञानमित्यादि। कर्मणि

---

१. °पहतो A. नियत–om J. २. तस्याप्यती° M. ३. प्रमाणैक° JMA. ४. प्रमाणा BJA. ५. कश्चित्तद्धर्मः JA. ६ गृहीत° J. ७. कुतः B. ८. प्रतीयमानता तस्येति B. ९. त्वमनतिप्रसक्तम् B. १०. उपाधिभिः om BM. ११. एतज्जा° M. १२. भविष्यति M. १३. °विषय° om JA. १४. अन्यैव JA. १५. इति om MA.

तु[१] अवातुलेन[२] तिष्ठता तीव्रवेगासंस्कृतेन चलज्जलादिस्वच्छविलोकनादिविरहिणा यद् द्रव्यं चलतीत्युपलभ्यते तत् तथेति। एवं तेषु तेषु विशेषेषु ते ते विशेषा व्यभिचारविरोधिनो न प्रतिपदमनुक्रमितुं शक्यन्ते। तदेवं तत्तदुपाधिविशिष्टतद्विषयानुभवत्वमेव[३] तज्जातीयत्वमिति मन्तव्यम्। तदेवंभूतस्य ज्ञानस्य विषयनान्तरीयकत्वेनोपाध्यभ्यास एवाभ्यासदशापन्नत्वम्। यत्र तु स एवार्थो भूयो भूयोऽभ्यस्तः, तत्र संवादकत्वमेव[४] तज्जातीयत्वम्। संवादश्च समानासमानजातीयप्रमाणप्रसव इत्यादि प्रागेव दर्शितमिति। एवं तावद् बाह्यप्रत्यक्षं समर्थितम्[५]॥

प्रत्यक्षसमानन्यायतया आगमस्य प्रामाण्यं समर्थयति—**एवं चेति**। अत्रापि तज्जातीयत्वमाप्तप्रणेतृकत्वम्। अभ्यासदशापन्नत्वं पुनरेतस्य भूयोदर्शनेन मन्त्रायुर्वेदे तज्जातीयत्वस्य[६] प्रामाण्याविनाभावसिद्धिः। मन्त्रायुर्वेदस्यानभ्यासदशापन्नत्वं तदसिद्धिः निवेदयिष्यते सूत्रकारेण द्वितीयाध्याये[७]। यथा च प्रामाण्यं प्रवृत्तिसामर्थ्येनावधार्यते अनभ्यासदशापन्नेषु तथाप्रामाण्यमपि प्रवृत्तिविपर्ययेण। यथा[८] च प्रवृत्तेः प्रागेवाभ्यासदशापन्नेषु तज्जातीयतया प्रामाण्यमवधार्यते, तथाप्रामाण्यमपीति मन्तव्यम्। उपाधिविरोधश्च तज्जातीयत्वम्। तदभ्यास एवाभ्यासदशापन्नत्वम्। यथा चन्द्रमसि चन्द्रद्वयज्ञानम्। शङ्खे पीतज्ञानम्। गुडे तिक्तज्ञानमित्यादि। तस्मात् सन्दिग्धे प्रवृत्तिसामर्थ्यमवधारणीयमिति[९]॥

स्यादेतत्। **सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः**। अथ फलज्ञानस्यैव प्रामाण्यं कथमवधारणीयमित्यत्र केषाञ्चिन्मतमाह—**न चेति। न पुनरुदन्योपशममपि परीक्ष्यत** इति उदन्योपशमज्ञानमपीत्यर्थः। तदेतदनुपपन्नम्। फलज्ञानं हि[१०] फलस्य सिद्धावस्थस्य साधनानर्हतया निष्प्रयोजनीभूतत्वाद् वा न परीक्ष्येत, तत्तज्जातीयज्ञानस्य[११] सर्वास्ववस्थासु अर्थाव्यभिचारितया निःशङ्कत्वाद् वेति? न तावदाद्यः, फलस्य सिद्धावस्थत्वे तद्वत्[१२] तत्साधनीभूतस्यापि निष्प्रयोजनीभूतत्वादपरीक्ष्यत्वप्रसङ्गात्[१३]। उत्तरोत्तरफलाभिसंधानेन[१४] तत्साधनं[१५] परीक्ष्यत इति चेत्? फलेऽप्येवमस्तु। सिद्ध एव हि फले परीक्षिते तत्साधनस्य तथात्वसिद्धावुत्तरोत्तरफलाभिसन्धिः स्यात्। नापि द्वितीयः, फलज्ञानस्यापि भूयो भूयः स्वप्नाद्यवस्थासु व्यभिचार दर्शनात्। स्वस्थावस्थस्य

---

१. च B. २. वातु°B, अथातुलेन A. ३. °विषय° om J, तत्तज्जा° B. ४. संवादवत्त्वम् BJ. ५. सुस्थितम् A. ६. तज्जातीयत्वस्य om MA. ७. only in A. ८. तथा J. ९. अवतारणीयम् B. १०. हि om JA. ११. °ज्ञान° om BA. १२. °त्वेन B; तद्वत् om BM. १३. अपरीक्षितत्व° B. १४. °फलमभिसन्धाय B var, फलाभिसंधाने B. १५. साधनम् om. JA.

फलज्ञानं न व्यभिचरतीति चेत्—एवं तर्हि परीक्षितमेव फलज्ञानं स्यात्[१]। तथा हि यत् स्वस्थावस्थस्य फलज्ञानं तदव्यभिचारीति व्याप्तिसिद्धौ यत्रैव तथाभूतज्ञानत्वं पश्यति, तत्रैवाव्यभिचारमवधारयतीत्यनेनाभिप्रायेणाह—**वयं त्विति**। अस्याप्यभ्यासदशापन्नत्वं प्रामाण्याविनाभूतलिङ्गोपलम्भस्तथा[२] तज्जातीयत्वं पुनः स्वस्थावस्थस्य फलज्ञानत्वमेव। [A]एतेनेच्छाद्वेषप्रयत्नज्ञानं व्याख्यातम्[A३]॥

ननु यद्विज्ञानं[४] दृष्टान्तयितव्यं तस्यापि प्रामाण्यं कथं साधनीयम्[५]? एवं तत्तत्साधनस्यापि दृष्टान्तपरम्परायाः कथमित्यत आह—**न चेति**। फलज्ञानस्येत्युपलक्षणम्। तज्जातीयत्वेन लिङ्गेन प्रामाण्ये साधयितव्ये यद्यद् दृष्टान्तीक्रियते तस्य तस्येति मन्तव्यम्॥

यद्येवम्[६], प्रवृत्तिसामर्थ्यमनवकाशमेव, न ह्यस्ति तद्विज्ञानं यत् सर्वथैवापूर्वविषयम्। तथा च प्रमाणतोऽर्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोः कथमनादित्वमाह—**वार्त्तिककार** इत्यत आह—**एतेषु च मध्य इति**[७]। शङ्कितव्यभिचारं तज्जातीयत्वापरामर्शादिति शेषः। यद्यपि फलं न प्रवृत्तिविषयस्तथापि तत्साधनगोचरायाः तत्संतानगोचराया एव वा प्रवृत्तेः तज्जातीयफलान्तरसंबन्धस्तन्नान्तरीयकविजातीयफलसंबन्धो वा स्वस्य नरान्तरस्य वा प्रवृत्तिसामर्थ्यं फलज्ञानस्य[८] द्रष्टव्यम्॥

तदेवं समानन्यायतया रूपादिबाह्यार्थप्रत्यक्षप्रामाण्यसमर्थनानन्तरं शब्दप्रामाण्यं समर्थ्य तदुभयोपपत्तये समानन्यायतयैव आन्तरप्रत्यक्षज्ञानेषु मध्ये फलज्ञानप्रामाण्यं समर्थितम्। समानन्यायतयैवेच्छाद्वेषप्रयत्नगोचरस्यापि ज्ञानस्य[९] प्रामाण्यसमर्थनं सूचितमित्यनुव्यवसायोऽवशिष्यते। तस्य चानुमानसमानन्यायतया अनुमानप्रामाण्यसमर्थनानन्तरमेव समर्थनं करिष्यत इत्यभिप्रायवानाह—**अनुमानस्येति**। द्विधा हि व्यभिचारशङ्का कारणतः स्वरूपतश्च। सा च व्याप्तिपक्षधर्मताग्राहकैरेव प्रमाणैरपनीयत[१०] इति भवति निरस्तसमस्तव्यभिचारशङ्कमनुमितिज्ञानम्। तस्यैवंभूतस्य स्वत एव प्रामाण्यं निश्चीयत इति शेषः॥

ननु प्रमाणत्वाविशेषेऽपि[११] कथमनुमितेरेव स्वतः, न प्रत्यक्षादेरित्यत आह—**अनुमेयेति**। अनुमितिज्ञानं ह्यर्थस्य तथात्वं व्यवच्छिन्ददेवोत्पद्यते वह्निमानेवायमिति।

---

१. स्यात् om M. नापि द्वितीयः °° स्यात् om A. २. तथा om JA. ३. A-A only in A. ४. यत्तद्° JA. ५. कथमवधारणीयम् B. ६. नन्वेवम् BM. ७. इत्यादि B. ८. फलज्ञानस्य om J. ९. ज्ञानानाम् M. १०. °नीतेति M. ११. अपि om JA.

तथा चानुव्यवसायेनानुव्यवसीयमानमिदं स्वस्वार्थावधारणात्मकमेवावसीयते। न चाविपरीतार्थकत्वमनुभवस्यानध्यवस्यता अवधारणात्मकत्वमस्यावसितं भवति। तथा च तद् अवश्यमवसेयम्। तदेव च प्रामाण्यम्। कदाचिदेवंभूतानुव्यवसायेऽपि विपर्ययत्वशङ्का [1]तदवस्कन्दतीत्यवशिष्यते। सा च लिङ्गसमुत्थत्वादेव नास्ति। न हि[2] विशेषदर्शनग्रस्तोत्पत्तौ शङ्कावकाशः। तदेतदाह—**न हीति। लिङ्गाकारं विज्ञानं** निश्चिताव्यभिचारमिति शेषः। प्रत्यक्षशाब्दज्ञाने तु नायोगव्यवच्छेदात्मके, अपि त्वारोपानारोपसाधारणविषयमात्रावभासिनी[3]। तथा चानुव्यवसायेनापि तथैवानुभूयेते। न त्ववधारणात्मकतयेति न तयोः[4] स्वतः प्रामाण्यग्रहः। अथ दैवादयोगव्यवच्छेदात्मके एवोत्पद्येते अनुव्यवसीयेते च, तदा च नियामकमन्तर्भाव्यैव। तदभावे त्वविशेषादवधारणात्मकत्वं परिभूय [5]तदतद्रूपसाधारणमेवावतिष्ठेत इत्याशयवान् नियामकाभावमेवाह—**प्रत्यक्षज्ञानं त्विति**॥

धूमादियुक्तधूमध्वजादिज्ञाने हि यद्यप्यर्थस्याप्यर्थेनाव्यभिचारोऽस्ति, यद्यपि चार्थादपि तथाभूतादेव तज्ज्ञानं जायते, तथाप्यव्यभिचारो वा, तद्ग्रहो वा? प्राक्तनः तत्राकिञ्चित्कर एव, इन्द्रियापातमात्रादेव युगपदुभयोरप्येकज्ञानावभासितया परामर्शकालानपेक्षणात्। अपरामृष्टस्य चानियामकत्वात्। तदिदमुक्तम्—**अपि तु [6]सत्तामात्रेणावस्थितादिति**। अव्यभिचारिणोऽपीति शेषः। एतेन शङ्कामात्रमपनीयते ज्ञानान्तरैरिति यदुक्तं **कैश्चित्** तन्निरस्तम्। शङ्का हि संशय एवाभिधीयते। स च तत्त्वनिर्णयव्यतिरेकेणापनेतुमशक्य एवेति तत्त्वनिर्णयोपायोऽनुसर्तव्यः। तथा च ज्ञानस्वरूपग्राहिणः कौण्ठ्ये प्रत्यक्षाद्यन्तराभावे चानुमानमेवोपाय इति तदाह—**प्रवृत्तिसामर्थ्यमिति**॥

स्यादेतत्, यदि प्रत्यक्षशाब्दज्ञानयोः परतः प्रामाण्यम्, तत् किमिदानीमनुव्यवसायस्यापि परत एव? तथा च[7] लिङ्गं निश्चितमेव निश्चायकमित्यनेन न्यायेन लिङ्गान्तरपरम्पराज्ञानमनवस्थामवतारयतीत्यत आह—**ज्ञानगतेति**। अत्रापि सैव युक्तिः। अतद्रूपव्युदासेनैव स्वविषयमालम्ब्यैवोत्पत्तेस्तथैवानुभवः। उत्पत्तेरेवारभ्य[8] विषयविशेषग्रहणग्रस्तत्वाच्च न शङ्कावकाशः। विशेषश्चानुव्यवसायत्वमेव। न ह्यजानन्नपि[9] कश्चित् जानामीत्यनुव्यवस्यति। न च शुक्तिकाकारे ज्ञाने रजतं जानामीति स्यादिति तदिदमुक्तम्—**तादृशस्येति**। उपलक्षणं चैतत्। सबाह्याभ्यन्तरं [10]धर्मिमात्रगोचरमपि प्रत्यक्षं स्वत

---

१. तदास्कन्दति JA. २. च J. ३. मात्र om BM. ४. नोभयोः BM. ५. तत्तद्रूप॰ M. ६. ॰मात्राव॰ JA. ७. सति JA. ८. विषय om BM. ९. ॰न्नेव JA. १०. मात्र om M.

एव प्रमाणम्, विभ्रमस्यापि निरालम्बनस्य क्वचिदनुपपत्तेरिति । उक्तयुक्तिं हृदि निधायातिदिशति—**एतेनेति** । उपमानमुपमितिरित्यर्थः । **व्याख्यातम्** । स्वतोऽवधार्यप्रामाण्यतयेति शेषः[१] । न ह्यतिदेशवाक्यार्थज्ञानसादृश्यज्ञानयोः प्रामाण्ये निश्चिते उपमितिराभासीभवति । यद्यपि चानुमानोपमानानुव्यवसायधर्मिज्ञानानामपि प्रामाण्यं परतोऽपि शक्यग्रहमेव[२], सन्ति हि तत्रापि[३] यथायोगं [४]लिङ्गसादृश्यज्ञानसमुत्थत्वादीनि तज्जातीयत्वलिङ्गानि तथापि कोष्ठगत्या स्वत एव प्रामाण्यग्रहोऽत्र न स्वयमिति[५] स एव दर्शितः । विप्रतिपन्नं प्रति तु परत एव साधनीयं तदिति परमार्थः । अतः स्वत एवेत्यवधारणं[६] नायोगव्यवच्छेदे नाप्यन्ययोगव्यवच्छेदे । किं तर्हि ? अत्यन्तायोगव्यवच्छेद इति ॥

नन्वेतावतापि विज्ञानकरणानामिन्द्रियादीनां प्रामाण्यस्य कुतः सिद्धिः ? [७]न हि फलयथार्थत्वमेवामीषां प्रामाण्यमित्यत आह—**संवेदनस्य चेति** । नन्विन्द्रियादयो यद्यर्थव्यभिचारिणः [८]कथमर्थधियमव्यभिचारिणीं जनयेयुः, तथात्वे वा[९] रासभोऽपि वह्निधियमव्यभिचारिणीं जनयेत्, अविशेषादित्यत आह—**न चेति** । यथार्द्रेन्धनं दहनव्यभिचार्यपि दहनसंबन्धात् दहनाव्यभिचारिणं धूमं जनयन्न नियोगपर्यनुयोगावर्हति कारणस्वाभाव्यात्, तथेन्द्रियाद्यप्यर्थव्यभिचार्यपि तथाविधसहकार्युपबृंहितं[१०] तेनार्थेन संबन्धात् तदर्थाव्यभिचारि ज्ञानं जनयेदित्यर्थः । तदेतत्प्रामाण्यं नावश्यं सर्वत्रावधार्यते, तदाश्रयस्यैव संवेदनस्य सर्वत्रानवधारणात् । तथा सति चानवस्थायां[११] विषयसंचारो न स्यात् । तस्मात् तीव्रसंवेगितया यत्तु संवेदनमवश्यं संवेदनीयम्[१२], यत्र यत्र चापरो विशेषतः सामान्यतो वा विप्रतिपद्यते जिज्ञासते वा[१३] तत्र तत्र प्रामाण्यमुक्तेनोपायेनावधारणीयमित्यतो नानवस्थेत्याशयवानुपसंहारव्याजेनोक्तमर्थं संकलय्य आह—**तस्मादर्थसंदेहादिति** ॥

नन्वर्थानिश्चयेनापि प्रवर्तमानो न हि तत्साधनतामनुमाय प्रवर्तितुमर्हति अर्थित्वाभावात्, न हि तत्साधनत्वानुमानं[१४] व्याप्तिग्रहणं विना । न च सोऽपि[१५] प्रवृत्तिं विनेति तदवस्थमेवेतरेतराश्रयत्वमित्यत आह—**अर्थस्येति** । यद्यपि प्रामाण्यानिश्चयवदपेक्षितो-

१. अर्थः BJA. २. एव om J. ३. अपि om B. ४. °सादृश्यज्ञान° om J. ५. ग्रहणं सुकरम् M; ग्रहोऽत्र सुकरः B. ६. अयोगव्यवच्छेदे नापि om JA. ७. न हि ·· प्रामाण्यम् only in A. ८. कथम् om J. ९. तथात्वे वा om JA. १०. सहकार्यपेक्षं B. ११. °नवस्थया JA. १२. न संवेदनम् M, तु om B. १३. च BM. १४. नचाहितसाधन° B, न च हितसाधन° JAन च हि तत्साधन° M. १५. न चासावपि M.

पायत्वानिश्चयेनापि तत्र तत्र प्रवर्तते[१] तथाप्यपेक्षितोपायतां पाक्षिकीमप्युररीकृत्य प्रवृत्तिः । [२]न च तत्संशयस्तस्यामप्यनुपलब्धायामन्यत्रापि स्यात् । अतः पुनरप्युपलब्धिरायातेति । अतोऽनादितामादायैव[३] परिहृतम् । **अर्थप्रतिपत्तिरिति वार्त्तिके** यद्यप्यर्थशब्दोऽपेक्षितोपायमेवाह तस्यैव प्रवृत्तिविषयत्वात्, [४]अर्यमानत्वाच, तथापि धर्मिमात्रप्रतिपत्त्यनुमेयप्रतिपत्त्योर्भिन्नकालत्वादपेक्षितत्वाच्च तथैव व्याचष्टे—**अर्थप्रतिपत्तिरिति** ॥

ननु प्रमाणस्य प्रयोजनवत्त्वमाक्षिप्तं वा[५] समाधीयेत जिज्ञासितं वा ज्ञाप्येत ? न तावदाद्यः । न ह्यस्ति पुरुषो यः प्रमाणं निष्प्रयोजनमिति ब्रूयात्, तन्मूलत्वात् सर्वपुरुषार्थसिद्धेः । यस्य तु पुरुषार्थो नास्ति स निरुच्छ्वास एव शीर्येत । नापि द्वितीयः, तस्य संशयादिवत् सूत्रपाठानन्तरमेव ज्ञापयितुमुचितत्वादित्यत आह—**तत्रेदमिति** । नेयं प्रमाणप्रयोजनजिज्ञासा । किं नाम ? शास्त्रार्थीभूतस्य परमन्यायस्य निःश्रेयसं प्रति गुरूपायत्वं मन्यमानेन लघीयसि प्रवृत्त्युपाये विद्यमाने शास्त्रारम्भ एवाक्षिप्यते । स च समाधातुमारब्ध इत्यर्थः । [A]दशानां दुःखसंज्ञाभावनं मुमुक्षुतादार्ढ्यार्थम्[A] । **आत्मनो याथात्म्यं** सकलोपाधिविनिर्मुक्तत्वम् । तस्य भावनं ध्यानम् । आदिग्रहणेन तु तदुपायभूताः प्रवृत्तयो यमनियमासनप्राणायामधारणालक्षणा गृह्यन्ते । आत्मतत्त्वसाक्षात्कार इति समाधिः । वैराग्यं परमो वशीकारः । परिपाकः सवासनक्लेशनिर्मोक्षः[६] । एतेन साङ्गोपाङ्गो योगो दर्शितः । [A]शङ्कामुक्त्वा भाष्यमुत्तरयति—**तत्रेदमुपनिष्ठुत** इति[A] तथापि न्यायस्य गुरूपायत्वं न परिहृतम्, न्यायनिर्णीतार्थस्यापि[७] प्रवृत्त्यपेक्षणात् । प्रवृत्तस्य न्यायानपेक्षणादित्यत आह—**एतदुक्तं भवतीति** । ननु उभयोरपि तुल्यत्वे कुतो विशेषात् प्रमाणमेव व्युत्पाद्यते न प्रवृत्तिरपीत्यत[८] आह—**तथापीति** । श्रवणमनननिदिध्यासनसाक्षात्कारलक्षणाया प्रवृत्तेः स्वरूपतः फलतश्च प्रमाणान्तर्भूतत्वात् तद्व्युत्पादनमेव प्रवृत्तिव्युत्पादनम् । न च[९] प्रवृत्तिव्युत्पादनेन प्रमाणं व्युत्पादितं भवति । न हि प्रवृत्तेः फलं प्रमाणं [१०]तत्स्वरूपं वेत्यर्थः । ननु शास्त्रार्थस्य प्रयोजनव्युत्पादनावसरे प्रमाणमर्थवदिति कुतः ? न हि प्रमाणं शास्त्रार्थः, अपि तु न्याय इत्यत आह—**सामान्याभिधानं चेति** ॥

---

१. ते प्रवर्तन्ते B.　२. स च......तस्यामुप॰ JA.　३. अनादितयैव JA. ४. अर्थ्यमाणकं BM. ५. वा om BM. ६. सकलक्लेशवासनानिर्मोषः B, सकलसवासनक्लेशनिर्मर्षः JA. A A चिह्नितांशाः A पुस्तक एव. ७. अर्थ om B. ८. अपि om BJ. ९. तु JA. १०. तत् om M.

तदनेन प्रबन्धेन निष्प्रयोजनत्वाशक्यप्रयोजनत्वानभिमतप्रयोजनत्वोपायगौरवशङ्काः परिहृताः । तत् किमपरमवशिष्यते यदर्थं लोकवृत्तमनूद्यत इत्यतः प्रथमं[1] तात्पर्यमनुस्मारयन्नेव **वार्त्तिक**मवतारयति—**प्रामाण्येति** । अप्रमाणेनेत्यत्रापि यद्यपि वाङ्मनसविसंवादः निषेधविध्युपाय[2] एव हि प्रमाणम् । तस्मान्निषेधोपायतां जानतोऽप्यप्रमाणेन निषेधामीति वचनं मनोविसंवाद्येव । तथापि व्यामोहादप्युपपत्तेरेवंभूताभिप्रायस्थैर्येऽपि नास्माकं काचित् क्षतिरित्येतावता[3] अनुज्ञैवोत्तरं दत्तम्—**वाङ्मनसयोर्विसंवाद** इति । प्रामाण्याग्रहे प्रमाणेनेत्येवं वक्तुं न शक्यते[4] । ततः प्रमाणेनेत्येवं वदतोऽवश्यं प्रामाण्यं मनसि विपरिवर्तते । तथा चागृहीतप्रामाण्येनेति वचनं मनोविसंवादीत्यर्थः । लोकवृत्तमबाधितो व्यवहार इत्यर्थः ॥

**ननु प्रमाणेन खल्वयं ज्ञातेत्यादि, भाष्यं** लोकवृत्तानुवादोऽस्तु । **प्रमाणत** इत्यादि पुनः कथमित्यत आह—**कारणप्रदर्शनद्वारेणेति** । न हि लोकवृत्तं स्वरूपेणोपयुज्यते । किं तर्हि[5] ? तस्यावश्याभ्युपेयतया तदुपायोऽप्यवश्याभ्युपेय इत्यनेनाभिसन्धिना सोपायमेव तदनूद्यत इत्यर्थः ॥

आगामिभाष्ये हेयादीनां स्फुटत्वात् तस्येदानीमक्षरार्थो व्याक्रियत इति मा शङ्किष्ठा इत्याह—**अस्यैवेति** । **वार्त्तिक**संबद्धो ग्रन्थोऽर्थपदानीत्याकारो **वार्त्तिकग्रन्थ**स्तस्य । [6]तादृश एव **भाष्य**गतो **भाष्य**संबद्धो ग्रन्थस्तस्येत्यर्थः । अभिधेयानां पौर्वापर्यनियमाय गुणप्रधानभावे जिज्ञास्यमाने अभिधानरूपस्य[7] शास्त्रस्य कः प्रस्ताव इत्यत आह—**शास्त्रशब्द** इति । एवं तर्हि हेयादीनां शास्त्रार्थरूपतया न पृथक्कोटित्वम् । तथा चैककोटिकतया किमपेक्ष्य गुणप्रधानभावचिन्तेत्यत आह—**अत्र चेति** । कथं पुनरनेन प्रमाणादिचतुर्वर्गोऽत्र लभ्यते इति **वार्त्तिक**मनुक्तोपालम्भो मा भूदित्यत आह—**तेनेति** । **तन्मूलत्वाद् इतरसिद्धेरिति** । सिद्धिः प्रतीतिर्निष्पत्तिश्च । तत्र हेयोपाययोः प्रतीतिरेव । अधिगन्तव्यस्य तु [8]प्रतीतिर्निष्पत्तिश्च । यद्यपि च[9] हानस्यापि[10] प्रमाणरूपस्य प्रतीतिरस्त्येव, तथापि प्रमाणादेवेति तदितरेत्युक्तम्[11] । निष्पत्तिस्तु हानस्याज्ञानादेव यस्मात् किं तज्ज्ञानेन ? ज्ञानात्[12] तु यस्मात् तस्य प्रमाणायत्तत्वमेवेति भावः । प्रमात्रादिचतुर्वर्गे तु प्रमातृप्रमेययोः सिद्धिः प्रतीतिरेव । प्रमायाश्च निष्पत्तिरपीति । तदिदमुक्तम्—**प्रमायाश्च तत्कार्यत्वा-**

---

१. प्रथमं J. २. निषेधविध्यन्यतरोपाय B var. ३. क्षतिरित्य॰ B. ४. ॰व वक्तुं शक्य॰ A. ५. किं तु BM. ६. तादृश...अभिधानरूपस्य om M. ७. हेयोपाययोः BJM. ८. प्रतीतिश्च नि॰ J. ९, च om BM. १०. अपि om BM. ११. ॰देवेतीतरे॰ BM. १२. ज्ञानात् om M.

दिति । ननु प्रमात्रादीनामपि प्रयोजनवत्त्वादर्थवदित्यनेन किं प्रमाणस्याधिक्यमाहितमित्यत आह—**अतिशायने मतुबिति** ॥

नन्वस्य चतुर्वर्गद्वयस्य निःश्रेयसाधिगमं प्रति विकल्पः, समुच्चयो वा ? उभयमप्यनुपपन्नमभिन्नत्वात् [A]तथा हि य एवार्थः प्रमाता प्रमेयं प्रमितिरिति स एव हेयोऽधिगन्तव्य इति य एवार्थो हानोपायाविति स एव प्रमाणमिति । संशयादीनामपि न्यायपरिकरतया न्यायशरीरत्वात् तस्य च प्रमाणत्वादिति । तस्मात् अभिन्नत्वात् न[A] वचनभङ्गिभेदमात्रेण[1] [A]विकल्पः । नापि समुच्चयः । न हि भवति तरुणा वा वृक्षेण वेदं साधनीयं तरुवृक्षाभ्यां वेत्यत आह—**विवक्षाभेदेनेति**[A] । तदनुपपत्तेरित्यत अनेन निमित्तभेदमभिप्रैति । तेनायमर्थः[2] यद्यप्युभयत्रापि षोडशैव पदार्थाः संगृहीताः, तथापि यथा प्रमाणत्वेन प्रमाणं ज्ञेयं तथा हानत्वेनापि । अन्यथा हानान्तरमनुश्रियेत[3] । निरर्थकं च प्रमाणं स्यात् । प्रमाणत्वे चाज्ञाते हानता न निर्वहेत् । यथा च स्वरूपेण संशयादयो ज्ञेयाः प्रमाणपरिकरतया[4] तथा हानोपायतयापि । अन्यथोपायान्तरमनुश्रियेत[5] । निरर्थकाश्चैते स्युः । परिकरत्वे[6] चाज्ञाते उपायता न निर्वहेत् । यथा च[7] शरीरादयो दश प्रमेयतया ज्ञेयाः तथा हेयतयापि[8], अन्यथा अहेयाः स्युः । हेयान्तरं चानुश्रियेत[9] । प्रमेयत्वे चाज्ञाते हेयता न निर्वहेत् । यथा चापवर्गः प्रमेयतया ज्ञेयः, तथा अधिगन्तव्यतयापि । अन्यथा [10]अधिगम्यान्तरमनुश्रियेत । अनुपादेयश्च स्यात् । प्रमेयतया चाज्ञातेऽधिगन्तव्यता[11] न निर्वहेत । यथा चात्मा प्रमेयतया अधिगन्तव्यः,[12] तथा प्रमातृतयापि । अन्यथा प्रमात्रन्तरमनुश्रियेत, अनवस्था च स्यात् । प्रमेयत्वे चाज्ञाते सोपाधिनिरुपाधिरूपतया हेयोपादेयते न निर्वहेयाताम् । यथा च[13] बुद्धिर्बुद्धित्वेन तथा तद्भेदः प्रमितितयापि । अन्यथा प्रमित्यन्तरमनुश्रियेत, निष्फलं वा प्रमाणं स्यात् । प्रमेयत्वे चाज्ञाते हेयता न निर्वहेदिति । तस्मात् त एव प्रमाणादयः उभयथा ज्ञायन्तामिति [14]विवक्षित्वोभयचतुर्वर्गोपादानं कृतमित्यर्थः ॥

यदप्युक्तं **कैश्चित्**—हेयहानोपायाधिगन्तव्येष्वेव चतुर्षु[15] पुरुषार्थः परिसमाप्यते[16] । यथा लोके हेयः कण्टकः । हानमुपानत् । तदुपायस्तु पादुकाकृदादिः[17] । अधिगन्तव्यो

---

१. अभिन्नत्वाद् वचनभङ्गीभेदमात्रेण तदनुपपत्तेरित्यत आह—अनेन नि BJM. २. अभिप्रायः M. ३. °सृयेत M. ४. °करत्वात् BJ. ५. स्रियेत M. ६. वा° M. ७. च om BM ८. अपि om M. ९. स्रियेत M. १०. °गन्तव्या° BJ. ११. हानता B, हेयता M. १२. अवसेयः M. १३. च om BM. १४. विवक्षतोभय° J. उभयथा B. १५. चतुर्षुं चतुर्षुं J, चतुर्षुं वर्गेषु M. १६. परि om BJA. १७. पादकृ॰ B, उपानत्कृ॰ M.

दुःखाभावः । शास्त्रे च हेयो रोगः । चिकित्सा हानम् । तदुपायो निदानज्ञानम् । अधिगन्तव्यमारोग्यमित्यतश्चतुर्षु वक्तव्येषु षोडशपदार्थवर्णनं क्वोपयुज्यत इति तदपि निरस्तम्', चतुर्वर्गस्यैव विवक्षाभेदात् षोडशधा भेदेनाभिधानात् । विवक्षाभेदस्य चोपपत्तिं प्रतिपदं **भाष्यकार** एव दर्शयिष्यति । एतदवगम्यैव[1] येनाधिकं चोदितं तन्मतमपाकरोति— **एतेनेति** ॥

**व्याख्यायते अवयवश** इति विशेषणे क्रियायास्तात्पर्यम् । न तु विशेष्ये इत्यर्थः । एतदेवोत्तरत्र स्फुटयति—**तत्रास्यावयवेष्विति**[2] । कस्मात् प्रमाणादिति नाभिहितम् ? एवं[3] ह्यसंदिग्धैव पञ्चमी स्यादित्यर्थः । अस्येति[4] प्रकृतपञ्चमीपरामर्शे लिङ्गासंगतिरित्यत आह—**अस्येति** । पञ्चम्याः तसेः प्रयोगं दर्शयित्वा पञ्चमीव्यतिरेकेण तसेः आक्षेपसमाधाने असंगते इत्याक्षेपं व्याख्यायावतारयति—**वचनव्याप्त्यर्थमिति** । ननु प्रमाणाभ्यां प्रमाणैरिति भवतु संप्लवः, प्रमाणेनेति तु कथमित्यत आह—**यत्र द्वयोरिति** । विषयैकतामात्रं संप्लवः, न तु कारणानां समुच्चयः । तथा सति फलभेदो न स्यात् । नापि समुच्चितानां करणत्वम् । तथा सति व्यापारभेदो न स्यादिति ज्ञापनार्थमित्यर्थः । **अत एवेति** । एवकारः साधकतमान्तरं व्यवच्छिन्दन् तस्य व्यापारं फलं च व्यवच्छिनत्ति, न त्वस्य स्वव्यापारफलयोरितरेतरनैरपेक्ष्यं दर्शयति, तस्य संप्लवेऽपि संभवादित्यर्थः ॥

**कस्मात् पुनः करणार्थो गम्यते** ? प्रकृतिप्रत्यययोः कतरस्मादित्यर्थः । अयमाशयः । यदि तृतीयया करणत्वमभिधीयते किं प्रकृतिस्थेन ल्युट्प्रत्ययेन ? अथ तेनैव, किं तृतीययेति ? ज्ञापकस्य कारकत्वशङ्का मा भूदित्यत आह—**अर्थमर्थाधिगतिमिति** । ननु [A]हेतुकरणभावोऽवगम्यतामित्येतदर्थं[5] विभक्तिव्याप्तिरास्थीयते[A] प्रमाणमिति, प्रातिपदिकादेव साक्षात्करणत्वमर्थतो हेतुत्वं गम्यत इति किं विभक्तिव्याप्त्येत्यत आह— **अत्र चेति** । न च वाच्यं करणभावेनापि प्रमाणफलयोस्तादात्म्यं प्रतिषेद्धुं शक्यम्, तत् किं तन्नान्तरीयकहेतुतद्भावाभिधानार्थं[6] पञ्चम्येति, साधकत्वमात्रस्यैव सामर्थ्यें तमवर्थस्यासमर्थत्वात् । तत्र विप्रतिपत्तेश्च । कस्मादिति प्रश्नार्थमभिप्रेत्याह—**प्रमाणप्रातिपदिकेति** । तदेवमनुवादकत्वं समर्थयता ल्युट्तृतीययोः पौनरुक्त्यं समाहितम् । न चानुवादकत्वं शब्दाभ्यासस्य प्रयोजनवत्ताव्यतिरेकेण सिध्यतीत्यतः प्रयोजनं

---

१. अधिग० BJ. २. तत्राप्य० M, तत्रा० B. ३. चासं J. ४. अस्यैवेति B var. ५. इति om BM. ६ हेतुताभि० B, हेतुभावाभि० M.

दर्शयति—**प्रमाकारकान्तरेभ्य** इति। लौकिके तु प्रयोगे संख्याभिधानाद्विभक्तेः सार्थकत्वं द्रष्टव्यमिति[1]। विशिष्टविषयत्वेन संप्लवाक्षेपोऽसंगत एव[2], अग्न्यादिविशिष्टे पर्वतादौ प्रत्यक्षानुमानयोः संप्लवादित्यत आह—**विशिष्टो भिन्न** इति। विषयत्वसामान्याभिप्रायमेकवचनम्। अर्थसामर्थ्यसमुत्थं प्रत्यक्षं [3]यतोऽतोऽर्थगोचरम्। तत् किं हेतुत्वमेव विषयलक्षणम्? नेत्याह—**स एव चार्थ** इति। किमतो यद्येवमित्यत[4] आह—**न च सामान्यमिति**॥

ननु च सांव्यवहारिकं स्वलक्षणमप्येवमेवेत्यत आह—**स्वलक्षणमिति**। देशकालाननुगतं विचारसहमित्यर्थः। ननु यद्यपि प्रत्यक्षं न [5]सामान्यरूपमवगाहते तथापि यद्यनुमानमपि स्वलक्षणमवगाहेत [6]तत एव तावतापि संप्लवः स्यादित्यत आह—**न चेति**। ननु भवत्वनुमानं सामान्यमात्रनियतम्, प्रत्यक्षमपि ह्यत्र[7] प्रवर्त्स्यति। भविष्यति च[8] सामान्यमपि सत्त्वादाकाराधायकमतोऽपि संप्लवसिद्धिरित्यत आह—**न चेति**। **भवितुमर्हति** परमार्थसदिति शेषः। विचारासहत्वादित्यभिप्रायः[9]। तत् किं सामान्यस्यासत्त्वात् स्वलक्षणे च प्रतिबन्धग्रहासंभवादनुमानं निर्विषयमेवेत्यत आह—**तदिदमिति**। तत् किमनुमानमप्रमाणमेव अपरमार्थगोचरत्वात्? यद्येवं कथं तदन्यदुल्लिख्यान्यत्र प्रवर्तयति। कथं च तदविसंवादकम्? कथं च[10] बाधिताकारं प्रमाणतया व्यवह्रियत इत्यत आह—**तस्मादिति**॥

ननु प्रमाणान्तरेण सह संप्लवो भविष्यत्यनयोरित्यत आह—**न चेति**। नन्वस्ति शब्दादिकमित्यत आह—**प्रमाणस्येति**। ननु नान्तर्भवत्येवास्वलक्षणविषयत्वाद् विषयाप्रतिबद्धत्वाच्चेत्यत आह—**अनन्तर्भावे चेति**। ननु स्वलक्षणसामान्यलक्षणयोर्व्यवस्थायामपि प्रत्यक्षानुमानयोर्विषयान्तरे संप्लवो भविष्यत्यनयोः। अस्ति हि विषयान्तरं तद्वदित्याह—**न चेति**। न ह्यसता सामान्येन परमार्थसत्[11] स्वलक्षणं तद्वद् भवितुमर्हति, सदसतोः संबन्धाभावादित्यर्थः। सोऽयं गहनः पन्था इत्याशयवान् आह—**यथा चैतदिति**। विशेष इत्यत्र यदि कर्मकारकं न च ततस्तद्वन्नामापरोऽस्तीत्यत आह—**विशेष** इति संप्लवममृष्यमाण इदमाह **मीमांसक** इति शेषः। **अधिगतं चार्थमित्यादिवार्त्तिकस्याधिगतत्वादिवार्त्तिकादधिकार्थतां** विवक्षन्नाह—**स्यादेतदित्यादि**। अधिगतेऽर्थे

१. सार्थकत्वमिति द्रष्टव्यम् B. २. एव om JA. ३. यतोऽर्थ° J. ४. इति om M. ५. सामान्यस्वरूप° M. ६. तथापि B, एतावतापि M. ७. ह्यत्र om M. तत्र A. ८. च om. M. ९. अर्थः B. १०. चाबाधिता° M. ११. परमार्थः सन् M, परमार्थसन् B var.

प्रमाणान्तरस्य न तावदर्थाधिगमं प्रत्युपयोगः, तस्य प्रागेव [1]प्रमाणान्तरसिद्धत्वात्। नाप्युत्तरोत्तरव्यवहारप्रवाहनिर्वाहं[2] प्रति, तस्यापि तज्जन्यसंस्कारप्रभवस्मृतिसंतति[3]सिद्धत्वात्। न च वाच्यं स्मृतिसंततिरधिगतिसंततिर्वा अस्तु व्यवहारप्रवर्तिनी न कश्चिद्विशेष इति, स्मृतिवदुपदर्शितार्थमात्रविषयतया तासामप्रमात्वेन तत्साधनस्याप्रमाणत्वप्रसंगात्[4]। तासां च तत एव स्मृतित्वप्रसंगात्। स्मृतिसंततेश्चावश्यंभावितया तत एव व्यवहारसिद्धावधिगतिसंततिकल्पनायां कल्पनागौरवप्रसंगादित्याशयवान् पिष्टपेषणमेवोपसंहरति—**अधिगतमिति** ॥

ननु अन्यथेति[5] **वार्त्तिके** यदि कारणगतमन्यप्रकारत्वं विवक्षितं तदा[6] कारणगतप्रकारभेदेऽपि न कश्चिद् विषयगतो[7] विशेषः पिष्टपेषणपरिहारोपयोगी दर्शितः स्यात्। अथ विषयगत एव प्रकारभेदो दर्शितः, तदा अनधिगतार्थगन्तृतया कुतः संप्लवः? न च [8]विषयाभेदेऽपि प्रमाणभेदात् कश्चित् फलप्रकारभेदः प्रकृतोपयोगवानस्तीत्यत आह—**अयमभिसन्धिरिति**। पिष्टपेषणे निष्फलत्वं वा स्यात्, अविशिष्टफलत्वं वा, अनपेक्षितफलत्वं वा, अधिगतेऽप्यर्थे किमित्यधिगतिसाधनमधिगतिं करोतीति प्रश्नमात्रं वा, साधनासंभव एव वेति। तत्र साधनासंभवं दूषयति—**न हीति**। स्वकारणप्रतिबन्धे हि प्रमाणं न स्यात्। न च विषयाधिगमः प्रमाकारणविरोधी, येन तस्मिन् सत्येव प्रमाकारणमकारणं भवेत्। तस्मादालोच्य स्वयमेव निवर्तेरन् यदि चेतयेरन्, न चैतदस्तीत्यर्थः। प्रश्नमात्रं दूषयति—**नापीति**। अनपेक्षितफलत्वमुत्थाप्य निराकरोति[9]—**प्रमातुरिति**। निष्फलत्वं निराकरोति—**तस्मादिति**। **प्रत्युत्पन्नकारणसामग्रीजनितत्वं** तात्कालिकासाधारणकारणविशिष्टसामग्रीजनितत्वम्। एतेनानुभवत्वं दर्शितम्। स्मृतेर्ह्यसाधारणं कारणं संस्कारः, आत्मान्तःकरणादीनां ज्ञानान्तरसाधारण्यात्। स च चिरकालोत्पन्नो न प्रत्युत्पन्नः। यत्तु प्रत्युत्पन्नमुद्बोधापरनाम सहकारि न तदसाधारणम्। अनुभवस्य तु चतुष्टयसन्निकर्षाद्यसाधारणम्। तच्च प्रत्युत्पन्नं प्रत्यग्रमुत्पन्नम्। तथाभूता बुद्धिरबाधितेति शेषः ॥

अविशिष्टफलत्वमभ्युपेत्य पराभिप्रायं निराकरोति—**तज्जनकानीति**। प्रथमप्रमाणफलतोऽप्यविशिष्टफलतया यद्यानर्थक्यम्, द्वितीयवत् प्रथमप्रमाणस्यापि द्वितीयाविशिष्टफलतया आनर्थक्यं स्यात्। अनपेक्षत्वात् सार्थकमिति[10] चेत्? एवं तर्हि द्वितीयस्यापि

---

१. °अन्तर° om B, M. २. °तरव्यवहारं M. ३. °संतति° om M. ४. °प्रमाणत्वात् JA ५. ननु om B, ननु अर्थेति A ६. प्रमाणप्र° JA ७. °कृतो B var, JA ८. विषयभे° M. ९. दूषयति BM. १०. °मेवेति J.

स्वफलेऽनपेक्षत्वमेव । तत्फलं [1]प्रमारूपमेव न भवति । गृहीतमात्रगोचरत्वात् स्मृतिवदित्यपि न युक्तम्, यथार्थानुभवत्वनिषेधे साध्ये कालातीतत्वात् । अनधिकार्थत्वे च[2] सिद्धसाधनात्, साध्यसमत्वाच्च । व्यवहारनिषेधे च[3] तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च । प्रमाव्यवहारनिमित्तं च वक्ष्याम इत्यर्थः । एवं तर्हि **वार्त्तिकार्थः** क इत्यत आह—**स एव चेति** । ननु फलस्यापि साक्षात्कारासाक्षात्काररूपः प्रकारभेदोऽस्त्येव, स एवानेन किं न प्रदर्श्यते[4] इत्यत आह—**यद्यपीति** । आदिग्रहणेन कारणगतोऽपीन्द्रियलिङ्गादिरूपः प्रकारभेदः संगृहीतः । कारणभेदसंप्लवनिरासार्थमेव हि परः प्रत्यवस्थितः । स कथं तेनैव प्रतिबोधनीयः ? तथा साक्षात्कारासाक्षात्कारभेदेनापि धारावाहिषु कथं परः प्रत्याय्यः ? परप्रतिबोधश्च प्रकृतः । तदिदमुक्तम्—**प्रकृतानुपयोगादिति** ॥

एवं सिद्धं प्रमाणं हृदि कृत्वा संप्लवव्यवस्थे विचारिते । संप्रति प्रमाणस्वरूपं निरूप्यत इत्याह—**विभक्त्यर्थमिति** । [A]**अवधारणमिति** । यदि निश्चयोऽभिमतः स्यात् तस्य नावश्यं संशयपूर्वकत्वमिति सन्दिग्धस्य प्रश्न उपपन्नः स्यादत आह[A]—**अवधार्यत** इति । तथा च विचारस्य परीक्षाया अवश्यं संशयपूर्वकत्वादग्रे संदिग्धस्य प्रश्नो युक्त इति भावः । संदेहकारणत्वेन [5]विप्रतिपत्तिमाह—**केचिदिति** । प्रमाणं हि [6]करणविशेषः । करणं च साधकतमम् । न च साध्यसिद्धौ तज्जातीयस्य साधकतमत्वमस्ति, छिन्ने वृक्षे परशोरिव । तस्माद् यथैवाच्छिन्नविषयतया व्याप्रियमाणः परशुः छेदनं तथा[7] प्रमिते विषये व्याप्रियमाणमिन्द्रियादिकं प्रमाणमिति **मीमांसकाः** ॥

मतान्तरमाह—**विषयसारूप्यमिति** । फलं तावत् प्रमाणस्यार्थप्रतीतिरेव प्रमारूपत्वात् । न हि प्रमाणस्यार्थे प्रमातिरिक्तमपि किञ्चित् कर्तव्यमस्ति । प्राप्तिरपि प्रवृत्तिरेव । प्रवृत्तिरपि प्रवृत्तियोग्यार्थोपलम्भनमेव । तस्मात् प्रमाणस्यार्थप्रमीत्यतिरिक्तं न । किञ्चित् फलमिति, यदाह—**तदेव प्रत्यक्षज्ञानं प्रमाणफलमर्थप्रतीतिरूपत्वादिति** । प्रमाणमपि[7] तदेव यदर्थं व्यवस्थापयति । अर्थमपि तदेव व्यवस्थापयति यदर्थप्रतीतिं तदीयतया नियमयति । [8]तथात्वेनानियतायां तु तस्यां न कस्यचित् सा प्रतीतिः । [9]सर्वस्य वेति [10]नार्थेन नियता प्रतीतिः स्यात् । अनियतार्थप्रतीतिजनकं च कथं प्रमाणं नाम ?

---

१. प्रमाभूत° J. २. अधिगतार्थत्वे B, अनधिगतार्थत्वे साध्ये B var. ३. च om JA. ४. प्रदृश्यते M. ५. निमित्तमाह B. ६. कारण° BM. ७. अपि om M. ८. तथार्थेना° J. ९. सर्वस्यैव B. १०. नार्थेनानि° M. नार्थे नि° J.

न चेन्द्रियादिभिर्ज्ञान[1]करणैर्ज्ञानं तदीयतया नियम्यते। न हि चक्षुषा जनितत्वादेव नीलस्य नीलविज्ञानम्, पीतज्ञानस्यापि तथात्वप्रसङ्गात्। अपि तु नीलाकारत्वादेव नीलज्ञानं नीलस्य। तस्मादर्थाकारएवबुद्धिगतो बुद्धिं तदीयतया व्यवस्थापयन्नर्थमपि तथा[2] व्यवस्थापयति। ततश्चार्थव्यवस्थापनहेतुत्वात् स एव प्रमाणं यदाह—**अर्थसारूप्यमस्य प्रमाणम्, तद्वशेनार्थप्रतीतिसिद्धेरिति**। अर्थप्रतीतिसिद्धेः अर्थप्रतीतिव्यवस्थितेः, तथा चार्थव्यवस्थितेरिति यावत्। न चाभिन्नात्मनि करणफलभावो विरुध्यते, तत्र कारणभावस्यैव विरोधात्। स हि व्यापारव्यापारिभावो वा, गम्यगमकभावो वा स्वीक्रियत एव। वृक्षादिभिः संयुज्यमान एव हि परशुः संयोगेन व्यापारेण करणमिति व्यवह्रियते लोके। न च संयोगो नाम विग्रहवानन्यः संयुज्यमानात् परशोरस्ति। गम्यगमकभावोऽपि स्वप्रकाशे विज्ञाने बाह्ये च वृक्षे शिंशपया गम्यमाने दृष्ट एव। न हि शिंशपातः कश्चिदन्यो वृक्षो नाम, वृक्षाद् वा शिंशपा। वैकल्पिके तु व्यवहारे यथात्र व्यावृत्तिभेदस्तथा [3]आकारतद्वतोरपीति न कश्चिद् विशेष इति **सौत्रान्तिकाः**॥

मतान्तरमाह—**विज्ञानस्यैवेति**। अर्थप्रकाशनं हि यस्य व्यापारस्तदेव प्रमाणम्। प्रकाशनं च चैतन्यरूपं तस्यैव यश्चेतयते। न चेन्द्रियादीनि करणान्यपि[4] तथा, जडरूपत्वात्। न हि ज्ञानातिरिक्तः कश्चिच्चेतनो नाम। तस्माद् विज्ञानमेव चेतनतया दर्शनव्यापारम्। तथा[5] च प्रमाणम्। व्यापारव्यापारिणोश्चाभेद एव संयुज्यमानपरशुवदिति निराकारवादिनो **वैभाषिकादयः**॥

मतान्तरमाह—**उपलब्धीति**। **वृद्धाः** प्रमाणवृद्धाः। [A]एतेन पूर्वेषां बालत्वं सूचयति[6]। **भावप्रश्नव्याख्यानेन भवितृप्रश्नो व्याख्यात** इति तु सहेत्यध्याहृत्य **केचिद्** व्याचक्षते। **केचित्** तु भावप्रश्नव्याख्या बोद्धव्या अनेन भवितृप्रश्नो व्याख्यात इति। अन्ये तु भावप्रश्नव्याख्यानेन हेतुना भवितृप्रश्नो व्याख्यातो भावप्रश्नं व्याख्यातुं भवितृप्रश्नो व्याख्यातः, तदन्तरेण तदनुपपत्तेरिति। लिपिप्रमादोऽयमिति **संप्रदायविदः**। **व्यभिचारो** विसंवादः। **अनर्थवत्त्वं** [7]विपरीतार्थत्वम्। अतो न साध्याविशिष्टता। ननु स्थाणुर्वा पुरुषो[8] वेत्यत्रोपदर्शितयोरन्यतरः प्राप्यत एव, तत् कथं विसंवादकत्वम्? कथं चानर्थवत्त्वमित्यत आह—**नो खल्विति**। यतो न प्राप्यते, अत एव नार्थक्रियासूपयुज्यते, अप्राप्तेरनुपयोगाच्च नास्तीत्यर्थः। यद्यप्यनुभवा-

---

१. कारणैः JA. २. तथ om J. ३. कारकतद्व° BM. ४. अपि om BM. ५. दर्शनव्यापारतया B. ६. only in A. ७. °तार्थवत्त्वम् BM. ८. वेत्युप° BM.

भिप्रायेणोपलब्धौ व्याख्यायमानायां स्मृतिहेतौ नास्ति प्रसङ्गः। स्मृतेरननुभवत्वात्, तथापि—

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्[१]।

इति सूत्रयतोपलब्धिशब्दो ज्ञानपर्यायः स्वीकृतः। अस्ति च स्मृतेरपि ज्ञानत्वमित्यनेनाभिप्रायेणोक्तम्—न ह्यसाविति। अतीतार्थे परम्परया तत्कार्यतयापि शब्दलिङ्गादेरर्थसम्बन्धोऽस्ति, अनागते तु सोऽपि नास्तीत्यत आशङ्कितं ज्ञापकतयेति। **संस्कारस्यापीति**। तस्यापि परम्परया अर्थकार्यत्वमर्थज्ञापकत्वं च साक्षात् समानमित्यर्थः। ^Aस्मृतिरूपोपलब्धिहेतोः स्मृतिरूपज्ञानहेतोरित्यर्थः। परिहरति—**नैवमिति**^A ॥[२]

ननु न स्मृतिः प्रमेत्यत्रैव विवाद इत्यत आह—**लोकेति**। अनेन प्रमाशब्दप्रवृत्तिनिमित्तग्राहकं प्रमाणमुपलक्षयति। तथा हि, न तावद् ^Aअस्य स्मृतित्वमेव प्रवृत्तिनिमित्तम्, अनुभवस्याप्रमात्वप्रसङ्गात्। नापि तदेकार्थसमवेतं^A[३] ज्ञानत्वादिकं तन्निमित्तम्, येन स्मृतिरपि प्रमा स्यात्, विपर्ययस्यापि तथात्वप्रसङ्गात्। नापि प्रमात्वं नाम सामान्यविशेषः समस्ति ज्ञानगतस्य [४]सामान्यविशेषस्य मनोमात्रग्राह्यत्वात्। प्रमात्वस्य चानुमेयतया प्रागेव प्रतिपादितत्वात्। किं च यदि प्रमात्वं सामान्यविशेषः स्यात्, तदा तदभाववति तद्विरुद्धसामान्यवति[५] वा विपर्ययज्ञाने न समवेयात्। तथा च विपर्ययज्ञानं धर्मिण्यपि न प्रमाणं स्यात्। एवं च तत् निरालम्बनमापद्येत। सामान्यं च सामान्यान्तरेण सह परापरभावेन एकस्यां व्यक्तौ समाविशेत्। तत्रानुवभत्वं वा परं प्रमात्वं वा ? आद्ये स्मृतिः कथं प्रमा ? द्वितीये त्वनुभवः प्रमात्वं न व्यभिचरेत्। तथा च विपर्ययोऽपि दत्तजलाञ्जलिः स्यात्। साक्षात्कारित्वं च यदि परं तदा असाक्षात्कारवत्योऽनुमितिप्रभृतयो न प्रमाः स्युः। अथापरम्, विपर्ययबुद्धिर्न साक्षात्कारवती स्यात् अप्रमात्वादिति। ^Aतस्मात् न प्रमाणत्वं सामान्यविशेषः^A। यथार्थत्वमायातमिति चेत्—न, स्मरामीत्यत्रापि प्रमिणोमीति बुद्धिव्यपदेशप्रसङ्गात्। इष्ट एवायमिति चेत्—न, ईश्वरेतरेच्छामात्रेण[६] लौकिकप्रयोगाप्रयोगयोर्नियन्तुमशक्यत्वात्। तेनैवायं प्रमाणशब्दो यथार्थज्ञानमात्रे नियतः कृत इति चेत्—न, तस्यापि लौकिकप्रयोगोन्नेयत्वात्। अस्त्येव लोकप्रयोग इति चेत्—न, महर्षिभिस्तदभियुक्तैः स्मृतिफलस्य प्रमाणत्वेनापरिसंख्यानात्। उक्तेष्वन्तर्भावादपरिसंख्यानमिति चेत्—न, प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः। लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्यसाधनत्वादिति[७] ॥

---

१. गौतमसूत्रम् १.१.१५. २. A A only in A. ३. A A only in A. ४. सामान्यस्य JA. ५. °सामान्य° om J, °वद्विपर्यय° M. ६. °इतर° om BJ. ७. °साधक° B.

किं च स्मृतेर्याथार्थ्यमपि कुतः ? न हि यादृशोऽर्थः स्मर्यते यदा तादृश एवासौ तदा, पूर्वावस्थाया वर्तमाने निवृत्तत्वात्। अनिवृत्तौ हि पूर्वतैव न स्यात्। न च निवृत्तपूर्वावस्थतयैव तमर्थं स्मृतिरालम्बते, पूर्वावस्थानिवृत्तेरननुभूतत्वात्। अननुभूते चार्थे स्मृतेरप्रवृत्तेः[1]। [A]प्रवृत्तौ वा स्मृतित्वव्याघातः। असाधारणं कारणान्तरं चानुसंधातव्यम्, अननुभूतं संस्काराभावात्[A]। ननु समानविषयत्वेपि स्मृत्यनुभवयोरनुभवो यथार्थो, न तु स्मृतिरिति कुत एतत् ? अनुभवकाले तस्यार्थस्य तादवस्थ्यात्, स्मृतिकाले त्वतादवस्थ्यात्। ननु पूर्वं तावत्तदवस्थ एवासावासीत्, एतावतैव ज्ञानमस्तु यथार्थम्। न, पाकरक्तेऽपि [2]श्यामताप्रत्ययस्य यथार्थत्वप्रसङ्गात्। नन्वतीतः [3]श्याम इति प्रत्ययः तत्र यथार्थ एव। सत्यम्, तद्विषयस्य तदानीमेव तदवस्थत्वात्। न तु स्मर्यमाणार्थः[4] तदानीं तदवस्थः। तस्मात् स्मृतिरयथार्थैव। यथानुभवं[5] तु भवेत्। तत्रानुभवस्य यथार्थत्वात् तदेकविषया स्मृतिरपि यथार्थेत्युच्यते। अतएवानुभवस्यायथार्थत्वे स्मृतिः अविपरीताप्ययथार्थैव। यथा रज्जुं भुजंगतया अनुभूय विद्रुतस्य तथैव स्मृतिः। तस्मात् स्मृतेर्याथार्थ्यं याचितकमण्डनप्रायम्, नाजानिकम्। इदमेव पारतन्त्र्यपदवाच्यं कैश्चिन्निरुक्ति[6]कुण्ठैरन्यथोपप्लुत इति। तस्मादुभयथापि स्मृतेरन्यस्यानुभवस्यैकनियतं यथार्थत्वमेव प्रमापदस्य प्रवृत्तिनिमित्तं लोकोऽवधारितवान्। कथमन्यथा तत्रैव प्रमाशब्दं प्रयुङ्क्ते नान्यत्रेति यद्यपि, तथापि धर्मिण्यपि स्मृतेः प्रामाण्यं माभूदित्याशयवान् प्रागुक्तयुक्तिकं लोकप्रयोगमेवाश्रितवान्। तदिदमुक्तम्—**लोकश्चेति**। एवं तावद्यथार्थोऽनुभवः प्रमा। तत्साधनं च प्रमाणमिति स्वलक्षणमाशङ्कितातिव्याप्तिनिराकरणेनादुष्टमिति समाहितम्॥

न चैतन्मीमांसकस्याप्यनभिमतम्। न हि [7]तेनाप्यत्राव्याप्त्यतिव्याप्ती प्रसंजयितुं शक्येते। न ह्यस्ति संभवो [A]मीमांसकस्यापि[A] यथार्थानुभवो न च प्रमेति। तल्लक्षणे त्वस्माकं कुतो विप्रतिपत्तिरित्यत आह—**अनधिगतार्थगन्तृत्वं चेति**। उपलक्षणं चैतत्। नित्यपदार्थेषु अनधिगतत्वं नाम नास्त्येव। यदि नेह जन्मनि जन्मान्तरेऽप्यधिगमात्[8]। यदि न प्रत्यक्षेणानुमानोपदेशाभ्यामपि अनित्येष्वपि प्रायशः उपलब्धानामेवोपलम्भाच्च[9]। अन्यथा च प्रत्यभिज्ञानं दत्तजलाञ्जलि स्यात्। ततश्च स्वरूपतोऽप्यनधिगतत्वं व्याकुलयेत्। प्रकारतोऽपि भूयो भूयस्तम्मादिष्वनुभूयमानेषु न कश्चिद्

१. ०लम्बते। पूर्वावस्थानिवृत्तौ अनुभवाप्रवृत्तेः J. २. श्यामप्र० BM. ३. श्यमताप्रत्ययः JA. ४. ०माणवस्थः JA. ५. ०भवात् JA, भवा M. ६. शुन्यैः BM. ७. तेनास्मिन्नतिव्याप्त्यव्याप्ती JA. ८. अधिगमात् om JA. ९. उपलम्भनात् JA.

गुणप्रकारः प्रतिक्षणलब्धजन्मापवर्गः परिभाव्यते। कर्मकृतोऽप्याशुतरविनाशी न प्रतिक्षणमपूर्वः। न च चतुःपञ्चक्षणावस्थायिन्यपि तस्मिन्नेकमेवज्ञानं जनयित्वेन्द्रियादिक-मुदासीनम् [1]अनागतकर्मादिजन्म प्रतीक्षते। ततश्च [2]सर्वजन्मान्तरोपलम्भादन्ये तदुत्तरकाल-प्रत्यया धारया विच्छेदेन वा भवन्तो न प्रमाणं स्युरित्यर्थः॥

शङ्कते—**नचेति**। यद्यपि स्वरूपस्य प्रकारस्य वा तथाविधस्य तादवस्थ्यम्, तथापि प्रत्यक्षज्ञानधारायां वर्तमान एवार्थः परिस्फुरति। न च क्रमभाविनामेक एव वर्तमानः कालो विषयः, नानाप्रमातृवज्ज्ञानयौगपद्यप्रसङ्गात्। प्रत्यभिज्ञानानुपपत्तिश्च, ज्ञानानेकत्वेऽपि एककालावस्थानाकलनात्। तस्मात् [3]पूर्वपूर्वज्ञानैरनाकलित एव वर्त-मानोऽर्थ उत्तरोत्तरैरवसीयत इत्यनधिगतार्थत्वमेव तत्रापीत्यर्थः। परिहरति—**परमेति**। न तावत् प्रतिक्षणवर्तमानत्वं **सौगतवद्**[4] वस्तुनः एव[5] स्वरूपोत्पादः। नापि **सांख्यवद्** वस्तुरूपस्थैर्येऽपि परिणतिभेद एव **मीमांसकैः** स्वीक्रियते। नापि धर्मभेद एव कश्चित् प्रतिक्षणापूर्वो वर्तमानत्वापरनामा[6] समस्ति। न च तैरभ्युपेतः। न च कालः प्रत्यक्षगोचरः, नापि भिन्नस्वभावः। तस्मात् कालकलाभेदका उपाधय एव कालभेदः। तत्प्रत्यक्षमेव[7] कालभेदप्रत्यक्षमिति[8] परमार्थः॥

तत्र न तावत् प्रतीयमानस्तम्भादिसंसृष्टा उपाधयः[9] संभवन्तीत्युक्तम्। ज्ञाततायाश्च निराकरिष्यमाणत्वात्, धारावहनबुद्धिषु तदभासनाच्च। प्रतीयमानेतरसंसृष्टास्तूपाधयः[10] तज्ज्ञानसंसर्गिणो वा स्युरन्यथा वा? न तावत् स्तम्भादिषु ज्ञायमानेषु तदितरसंसर्गिणः क्षणभङ्गुराः केचनावश्यं तज्ज्ञानसंसर्गभाजो भवन्ति। क्वचिद् भवन्त्यपीति चेत्, तत्रैव [11]तद्धियां प्रमाणता स्यात्। यत्र तु तदेकज्ञानसंसर्गिण उपाधयो न सन्ति तत्र धारा-वाहिकबुद्धीनामप्रमाणत्वमेव स्यात्। तथाविधा एव च विचारविषयत्वेनाभिप्रेता ज्ञाना-न्तरगोचरा विषयान्तरसंसर्गिण उपाधयो भविष्यन्तीति[12] चेत्—एवं तर्हि धारावहनबुद्धयो न स्युरेव ^A^इति लाभाय गतो मूलमपि हारितवान्^A^। न खलु प्रमाणान्तरेण इन्द्रियान्तरेण तेनैव वा तद्धर्मिपरित्यागाद्धर्म्यन्तरे[13] अनुभूयमाने विवक्षितैकविषयबुद्धिधारासंभवः। इष्ट एवायमर्थ इति चेत्—न, अपूर्वापूर्वोपाध्युपनिपातनियमे प्रमाणाभावात्। अनुपनिपातिनां च[14] ज्ञानान्तरेणाप्यनाकलनात्। अतएव घटोऽयं घटोऽयमिति बुद्धिसहस्रस्यापि न विषय-

---

१. अन्यकर्म J. २. सर्वत्रजन्मानन्तरोप° AJ. ३. पूर्वज्ञानैः J. ४. °मतवद् BM. ५. एव om BM. ६. वंमानापर° BM. ७. तत्प्रत्यक्षत्वम् JA. ८. °प्रत्यक्षत्व-मिति JA. ९ सन्तीत्यु° BM. १०. उपाधयः om JA. ११. तद्विषया A. १२. भवन्ती° J. १३. धर्मान्तरे B. १४. अनुपनिपतितानां JA.

कृतं विशेषमुपलभामहे। अनुपलभ्यमानस्य तु विषयत्वकल्पनायां सर्वसर्वज्ञतापत्तिरिति ॥

तस्मात् स्तम्भादिरेव प्रागभावनिवृत्तिप्रध्वंसाभावानुत्पत्तिरूपो वर्तमानः। तदवच्छिन्नः कालोऽपि वर्तमानः। स च तथाविधोऽनेकज्ञानसाधारण एव। न चैतावता ज्ञानयौगपद्यापत्तिः, सूक्ष्मकालापेक्षया क्रमसंभवात्। न च सूक्ष्मोपाधीनामप्रतीतिश्चेदतोऽसंभव एव, कार्यक्रमेणैवोन्नीयमानत्वात्। नापि प्रत्यभिज्ञानानुपपत्तिः। पूर्वज्ञानविषयानुसंधानमेव हि प्रत्यभिज्ञानम्। तच्च ज्ञानक्रमादेवोपपन्नम्। तस्मात् कालतदुपाधिप्रत्यक्षत्वेऽपि न सर्वत्र सूक्ष्मोपाधिसंसर्गः, नापि तत्प्रतीतिः। तदिदमुक्तम्—[1]**परमसूक्ष्माणामिति** ॥

एतेनैतन्निरस्तम्—**सिद्धे साधकतमत्वाभावादिति**। न हि साधकतमस्य[2] तथात्वं साधकतमान्तरापेक्षया, किं तु प्रधानक्रियाकारकान्तरापेक्षया। अन्यथा यत्र करणानां समुच्चयस्तत्र परस्परापेक्षया अनतिशयितत्वादकरणत्वापत्तेः करणानां समुच्चयः क्वचिदपि न स्यात्। इतरकारकापेक्षया तु धारावाहिकबुद्धिष्वपि प्रमाणस्यातिशयित्वमस्त्येव। यत्तु छिन्ने कुठारस्याकारणत्वमिति, तच्छिदा लक्षणफलाभावात्। [A]न च छिन्ने छिदान्तराभाववान्[A]। न च ज्ञातेऽपि[3] ज्ञानान्तरासंभवो येनात्राप्यफलत्वादेवाकरणत्वं भवेत्, धारावाहिकज्ञानोत्पत्तेः। तस्माद् योऽनधिगतार्थबोधनं प्रमाणमिच्छति, तस्य धारावाहिकबुद्धयोऽप्रमाः प्रसज्येरन्नित्यर्थः। शङ्कते—**न चेति**। प्रवृत्तिं प्राप्तिं च जनयदेव विज्ञानं प्रमा, तदर्थमेव प्रमाणानुसरणात्। आद्यं च तथा। ततस्तदेव प्रमा। द्वितीयादीनां च न प्रवृत्तिप्राप्तिहेतुत्वम्[4]। अतो नैतानि प्रमारूपाणि। ततस्तज्जनकान्यपि न प्रमाणानीति तदेतदिष्यत एवेत्यर्थः। परिहरति—**नहीति**। न ह्यप्रवर्तयदेव विज्ञानमर्थं प्रापयति। नापि हठादेव प्रवर्तयति। किं त्वर्थोपदर्शकरूपतया। सा च सर्वसमानेत्यर्थः। तदिदमुक्तम्—**प्रदर्शनं चेति**। ननु तथापि प्रथमादेवापेक्षितसिद्धेः पुरुषस्य किं द्वितीयादिनेत्यत आह—**पुरुषेति** ॥

स्यादेतत्[5]। वादिविप्रतिपत्तयो **वार्त्तिककृता** न निराकृता। [A]नापि विशेषविधानस्य शेषप्रतिषेधविषयत्वादिति न्यायो नाविरोधात्। न ह्यनधिगतार्थगन्तरि सारूप्ये वार्थव्यवस्थापयितरि शक्तौ वा आत्मानात्मप्रकाशयित्र्यामुपलब्धिहेतुत्वं विरुध्यते[A] इत्यत आह—**उपलब्धीति**। [6]व्यापकस्याव्यापकविरुद्धत्वादनधिगतार्थगन्तुस्तेन रूपेण

---

१. परम॰ om J. २. साधकतमत्वस्य B var. ३. अपि om BM. ४. ॰जनकत्वम् JA. ५. ननु J. ६. व्याप्यस्या॰ M.

प्रमाणत्वमेवार्थान्निषिद्धमित्यर्थः । सारूप्यशक्ती निराकरोति—**हेत्विति**। तदीयतया ह्यर्थप्रतीतिं व्यवस्थापयन्नाकारः प्रमाणमिति कोऽर्थः ? [१]न तावत् तदीयतया नियतां प्रतीतिं जनयन्, स्वात्मनि [२]क्रियाविरोधात्। नापि ज्ञापयन्, स्वात्मीभूतप्रतीतिं प्रति ज्ञानान्तराजनकत्वात्[३]। नापि निश्चाययन्, आकारतद्व्यतिरेकत्वेन व्यावृत्त्योश्चैकनिश्चयगोचरत्वेन निश्चेयनिश्चायकत्वनियमानुपपत्तेः। नीलमहं जानमीति[४] ह्याकारनिश्चयः। न चातोऽपरः तदीयतानिश्चयो नाम। नीलमिदमित्याकारव्यवसायः प्रथमम्, अथ[५] नीलमहं जानामीत्यर्थकर्मकप्रतीत्यनुव्यवसाय इति चेत्—तत् किं बुद्धावनिश्चितायामेवाकारो निश्चितः ? न चैतत् संभवति, [६]सामान्यानिश्चये विशेषानिश्चयात्। [७]निश्चीयत एव, परं न तदीयतयेति चेत्—अथ केयमर्थाकारादन्या[८] तदीयता नाम[९] ? तदुद्भवत्वमिति चेत्—नन्वेवमनुमितिं भावयन्नाकारः प्रमाणम्। ओमिति चेत्—हन्त, हतं तर्हि पामरप्रत्यक्षमतिरिक्तमर्थमनुमापयता आकारेण व्यवस्थापितत्वात्। अपि च या क्रिया यत्करणफलत्वेन विवक्षिता, जनयदेव तां तत्करणमिति लोकसिद्धम्। न हि छिदामजनयन्तोऽपि चक्षुरा-

---

१. A adds the following— इदं पाठान्तरम्। किं तदीयतया नियतां प्रतीतिं जनयन्, आहो ज्ञापयन् ? न तावदाद्यः, स्वात्मनि क्रियाविरोधात्। नाप्युत्तरः। ज्ञापयतीत्यपि कोऽर्थः ? किं तद्विषयां प्रतीतिं जनयन, उत प्रतीत्यात्मको भवन् ? न तावदाद्यः, न ह्याकारेण स्वात्मभूतप्रतीतिविषया प्रतीतिर्जन्यत इति सौगताः स्वीकुर्वन्ति। स्वीकारेऽपि वा सैव फलं स्यात्। तथा च न प्रमाणफलयोस्तादात्म्यम्। नाप्युत्तरः। एकात्मतया प्रतीतिः, फलमाकारः प्रमाणमिति नियमानुपपत्तेः। अपि चाकारोऽपि तदीयतया नियत एव प्रतीतिं तथात्वेन नियमयति अनियत एव वा ? न तावदाद्य, तस्याप्याकारान्तरेण नियमेऽनवस्थानात् स्वरूपेणैव नियमे प्रकृतिरेव स्वरूपनियतास्तु, किमाकारेण प्रतीत्यैव वाकारो नियम्यतामिति। नापि द्वितीयोऽनियतस्य नियामकत्वेऽतिप्रसङ्गात्। अथैनैव स्वात्मनि यतोऽयमाकारो जनितः ततो न नियमान्तरपक्षे त इति। नन्वनेन न्यायेन तदभिन्ना प्रतीतिरपि स्वात्मनियतैवार्थेन जनिता नियामकान्तरमपेक्षते। अर्थ एव च प्रमाणं स्यात्, तद्वशेनार्थप्रतीतिनियमसिद्धेरिति साधुसमर्थितमाकारः प्रमाणमिति। स्यादेतत्। साकारप्रतीतिरर्थादेव नियतस्वभावा जाता किं त्वाकारतस्तदीयतया व्यवह्रियते। परं तथात्वेनानिश्चितायाः प्रतीतेरसत्कल्पत्वात्। व्यवहारनिश्चयात्मा तद्व्यावृत्त्यालम्बन एव बोद्धव्य इति। तन्न, उभयोर्व्यावृत्त्योरेकनिश्चयगोचरत्वे निश्चेयनिश्चायकत्वानुपपत्तेः, अनिश्चितायाश्चानीलाकारव्यावृत्तेरनिश्चायकत्वात्, स्वरूपेणार्थक्रियाविरहात्। न च प्रथमनीलाकारव्यावृत्तिनिश्चयः समस्तविशेषानिश्चयात्। न हि गोत्वानिश्चये अपि शावलेयत्वादिनिश्चयः। समस्तविशेषनिश्चये तु सामान्यनिश्चयो दृष्टः। स्थाणुत्वाद्यनिश्चये अप्यूर्ध्वाकारवत् पदार्थमात्रनिश्चयवच्च। तद्वरं तदर्थप्रतीतित्वेन निश्चितेन तदाकारत्वमध्यवसीयतां तथा चाकारो व्यवस्थाप्योऽर्थप्रतीतिस्तु व्यवस्थापिकेति विपरीतमापतितम्। २. स्वक्रिया° B. ३. °जन BJMA. ४. हि om BM. ५. अप्य° B. ६. सामान्यनि° B. ७. निश्चीतैव J. ८. अर्थाकारात्तदन्या B, °कारा तदन्या M. ९. यानाम B var.

दयस्तन्निश्चायकतामात्रेण छेदनतया व्यवह्रियन्ते[1]। अपि तु अनिश्चाययन्तोऽपि जनयन्त एव कुठारादयः। तदत्रापि प्रमां जनयदेवानिश्चायकमपि प्रमाणमिति व्यवह्रियताम्। न तु तामजनयन्निश्चायकोऽप्याकारः, ^Aएवं च लोकेऽनुकूलता^A। अन्यथा तु परिभाषां कुर्वता लोकोऽप्रतिपादितः[2] स्यात्। न च जन्यजनकयोस्तादात्म्यगन्धोऽपीति ॥

एतेन शक्तिः प्रमाणमिति प्रत्युक्तम्, शक्तेः शक्यनिष्ठत्वात्। शक्यं च कार्यमुच्यते। प्रकाशनं [3]चात्मभूतत्वात् न तस्याः कार्यमिति। तदिदमुक्तम्—**हेतुहेतुमद्भावस्येति**। ननु यदि प्रमाणं सिद्धम्, किं तत्र प्रमात्रादिना कर्तव्यम्? न हि सिद्धेन सिद्धमेव[4] साध्यते। न चान्यत्र चरितार्थस्यान्यत्र कारकत्वमस्ति। अथासिद्धम्, कथं प्रमाणम्? न ह्यसिद्धं कारकं नाम। नाप्यकारकं करणम्[5]। नाप्यकरणं प्रमाणमित्यत आह—**अयमर्थ** इति। करणीभूतस्य परशोः, संयोगस्य व्यापारीभूतस्येति शेषः। परिणतिविशेषः सहकारिसमवधानम्। करणं व्यापार्योत्पाद्य वा फलार्थं कर्तव्यान्तराभावात्[6] कर्तुश्चरितार्थता। करणस्य [7]तु फलेन विना अपर्यवसानमचरितार्थतेत्यर्थः ॥

अथ प्रमेयस्य कथं प्रमाणे चरितार्थत्वम्? न हि प्रमातृवत् तेनापि प्रमाकरणमुत्पाद्यते व्यापार्यते वेत्यत आह—**प्रमेयस्य त्विति**। अयमाशयः। सर्वत्र हि कर्मकारकं करणफलतद्व्यापारयोर्विषयतया व्यवतिष्ठते। तत्र फलविषयत्वमस्य न कर्मत्वं प्रति प्रयोजकम्, असत्त्वेनाकारकस्यापि[8] फलविषयत्वात्, यदाह—**केवलमित्यादि**। करणव्यापारविषयत्वात् तु[9] कर्मत्वम्, न ह्यस्ति संभवः कर्म च, न च करणव्यापारविषय इति। तत्र करणस्य [10]व्यापारविषयत्वाभावात् व्यापार एव न निर्वहेदिति तन्निर्वाह एवास्य चरितार्थत्वमिति। तदिदमुक्तम्—**तत्रापीन्द्रियसंबन्धमात्र** इति[11]। न च करणमपि कर्तृव्यापारविषयस्तावन्मात्रेणैव चरितार्थमधिकव्यापारवत्त्वात्[12]। नापि कर्मव्यापारविषयः करणम्। नापि फलविषयः, तदुद्देशेन कर्मणः कर्त्रा अव्यापारितत्वात्[13]। फलस्य तन्निरूपणाधीननिरूपणत्वात्, येन कर्मवदस्य चरितार्थत्वं कल्प्येत। तस्मात् कर्तृकर्मणोश्चरितार्थत्वेऽप्यचरितार्थमेव करणमिति। समवायित्वविषयत्वकृतां [14]संनिपत्योपकारकभ्रान्तिं प्रयोगाभ्यां निराकरोति—**तत् सिद्धमेतदिति** ॥

---

१. छेदनतया व्यवहार्यते ''. २. विप्रति° J. ३. स्वात्म° JA. ४. एव om JA. ५. करणं नाम BM. ६. °भावः MA ७. तु om J. ८. °कारण° J. ९. तु om BM. १०. व्यापार° om J. ११. संबन्धेति JA. १२. °व्यापारत्वात् JA. १३. °पारणात् JA. १४ कारकत्वमभ्रा° A.

यद्यप्यनुमेयाद्यतीताद्यहेतुरेव, तथापि सामान्यनिषेधो [१]विशेषप्रकारमप्याश्रयेतेत्येतावतैव दृष्टान्तत्वम् । तस्मात् **तदेव फलहेतुः** । संनिपत्येति शेषः । **कथञ्चिदिति** । अनाहत्य इत्यर्थः । तदनेन कारकान्तरेऽचरितार्थस्य हेतुत्वमेव करणत्वमिति करणलक्षणं दर्शयता कर्तृव्यापारगोचरः करणमित्यपि करणलक्षणं सूचितम् । तथैव **टीकाकृता** व्याख्यातम् । एतच्च **यद्वानिति वार्त्तिके** स्फुटीभविष्यति । अकरणा प्रमाणोत्पत्तिः प्रसज्येत कर्तुः करणे चरितार्थत्वादिति किं केन संगतमित्यत आह—**नाकरण** इति । [२]वस्तुसिद्धप्रधानक्रियासंबन्धनिबन्धनप्रभृतयः कारकशब्दा इत्याशयवतः चोद्यं **यदीत्यादिना** बुद्धिसिद्धप्रधानक्रियासंबन्धनिबन्धनप्रवृत्तयः कारकशब्दा इत्याशयवतः समाधानम्—**न पाचकशब्दादिवदित्यादिना** इति **टीकायां** विक्षिप्तस्य[३] **वार्त्तिकृ**तातात्पर्यस्य संक्षेपः । **तुल्यवदिति** तुलया संमितमिव न न्यूनं नातिरिक्तं वेत्यर्थः[४] । तदनेन प्रपञ्चेन प्रमां प्रति प्रमातृप्रमेययोरकारणत्वमेव दर्शितमिति भ्रमो मा भूदित्युपसंहारव्याजेनाह—**तत्प्रमाणमिति** । सत्यपि चोपलब्धिसाधनत्वे साक्षादिति शेषः । **संप्रत्ययो** झटितिस्फुटप्रत्ययः[५] । [A]अत्र हेतुः—**सातिशयत्वेति**[A] ॥

**साधकतमार्थं पृच्छतीति**—न तावत् साधकानां फलकृतावतिशयानतिशयौ, तस्यैकस्य सर्वान् प्रत्यविशेषात् । नापि व्यापारकृतौ, [६]परस्परव्यापारविलक्षणव्यापारवत्तामात्रस्य सर्वसाधारण्यात् । फलानुगुणत्वं तु व्यापारस्याविशिष्टमेवेत्याशयवानिति हृदयशेषः । यद्यप्ययोगव्यवच्छेद एवातिशयः, तथापि तुल्यत्वे सत्यप्यतिशयानतिशयौ तस्यैव [७]चिन्त्येते । न तु वैधर्म्यमात्रमतिशय इत्यभिसंधायान्ययोगव्यवच्छेदोऽपि दर्शितः [A]अयोगान्ययोगव्यवच्छेदाभ्यामिति[A] । अमुं चार्थमनन्तरमेव विभावयिष्यति । ननु यथा कर्त्रादौ सति फलं नावश्यकम्[८], तथा करणेऽपि सति कदाचिन्न भवेत्[९], कारकत्वाविशेषात् । दृश्यते च । न हि परशौ सति छिदा भवेत्येवेत्यत आह—**प्रमातृप्रमेये हीति** । **उपक्षीणवृत्तिनी** इति व्यापारवतः कारकत्वमभिप्रैति । तेन परशुरपि व्यापारवानेव सन्[१०] करणम्[११] । तथाभूतेन च फलस्यायोगव्यवच्छेद एव, न तु व्यापारवतापि[१२] कर्त्रादिना, तद्व्यापारेण करणव्यापारस्य संपादनविलम्बनात् । व्यापारवतस्तु करणस्य

---

१. विशेष° om J. २. वस्तु om M. ३. निक्षिप्तस्य B, विवक्षितस्य M. ४. नाधिकमित्यर्थः B. ५. °स्फुट° om BM. ६. परस्परविल° BM. ७. शयौ चिन्त्ये° A. ८. नावश्यम् BJA. ९ स्यात् B. १०. सन् om BJA. ११. कारकम् JA. १२. अपि om M.

नान्यत् संपादनीयमस्तीत्यर्थः । तदिदमुक्तम्—**प्रमाणव्यापारे सति तु भवत्येवेति** । तदनेन व्यापारवतः फलाव्यभिचारित्वं साधकतमत्वमिति दर्शितम् ॥

कल्पान्तरम्—**यद्वानिति । परतन्त्रेणेति** । परव्यापार्येणाश्रीयते अपेक्षत इत्यर्थः । एतदेव पूर्वमुक्तमिति स्मारयति—**कर्त्रधीनं चेति** । यद्यपि कर्तृव्यापार्यत्वं करणत्वमिति[1] न व्यभिचरत्येव, तथापि परम्पराव्यापार्येणापि कर्मणा व्यभिचारो मा भूदित्याशङ्क्य प्रकृतेऽवधारणं संभवप्राचुर्यात् कृतम् । आगामिवार्त्तिकस्य कल्पान्तरत्वं निवारयति—**अस्यैवेति । कल्पान्तरमिति** । पूर्वकल्पविवरणेन पौनरुक्त्यभिया कल्पान्तरं गृहीतं[2] कथञ्चित् समर्थयति—**पूर्वेणेति** । कर्मणः स्वातन्त्र्यमसंभवि, ततो[3] विशेषनिषेधोऽनुपपन्न इत्यत आह—**अकर्तृत्वमिति** । कल्पान्तरम्—**संयोगवदिति** । अत्रापि कारकान्तरेभ्यः चरमव्यापारं करणमिति लक्षणम् । कल्पान्तरम्—**प्रतिपत्तेरिति** । अत्राप्यनन्तरं फलं करणमिति लक्षणम्, विकल्पसमुच्चयाभावात्—**चोऽवधारणे** । अस्मिन् पक्षे स एवातिशय इत्यर्थः । कल्पान्तरम्—**असाधारणेति** । सर्वकरणेष्वसाधारणत्वोपपादनानुपयोगात् प्रकृते प्रमाणे घटयति—**चतस्र इति** । अत्रापि प्रमाविवक्षितजातिभेदव्यपदेशकं प्रमाणमिति लक्षणम् । प्रमां प्रति कारणानां[4] साधारणत्वासाधारणत्वे निरूप्यमाणे पुरुषविषयस्य साधारण्यस्य किमायातमित्यत आह—**अशेष इति** । कल्पान्तरम्—**प्रमाकारणेति** । अत्रापि विवक्षितप्रमाजातिभेदौपयिकत्वेन प्रमित्यसमवायिकारणविशेषकं प्रमाणमिति लक्षणम्[5] ॥

स्वरूपात् कार्यतः कर्तुरर्वाक् प्राक् कर्तृकार्ययोः ।
प्रमाजातेः प्रमाहेतुविशेषान्मानलक्षणम् ॥

इति संग्रहश्लोकः ॥

तदेभिर्निमित्तैः करणव्यवहारे व्यवस्थाप्यमाने यदि कर्मादिव्यवहारनिमित्तसमावेशात् तद्व्यवहारोऽपि[6] भवति, भवतु तस्येष्यमाणत्वात् । एभिर्निमित्तैस्तु कर्मादिव्यवहारो नेष्यते । स तु नास्त्येव । तथा हि—सर्वत्र कर्मव्यवहारः करणव्यापारविषयत्वादिभिः, करणव्यवहारश्च कर्तृव्यापारविषयत्वादिभिः । तेषां च[7] निमित्तानां भेद एवेति नातिप्रसंगः ॥

---

१. व्यापार्यत्वमपि J. २. संगृहीतम् B. ३. ॰मसंभावितप्रायमिति B. ४. कारकाणाम् J. ५. BM add इति । ६. अपि om BM. ७. एषां for तेषां च B.

**तात्पर्यतो व्याचष्टे**—वाक्ये[1]ऽस्फुटत्वादित्यर्थः । एवं च[2] सत्यग्रे अर्थ्यत इति व्युत्पत्तिरपि तात्पर्यपरतयैवेति मन्तव्यम् । **कस्मात् पुनरिति** । न हि प्रमाणविषयस्य प्रमाणस्यार्थवत्त्वमव्युत्पादनीयमेवेति शङ्काबीजम् । **तात्पर्यान्तरमिति** । कथञ्चिद् भागासिद्धतापरिहारस्य फलस्यैकत्वात् । तत् किं प्रवृत्तिसामर्थ्याभावादप्रमाणमेव तदित्यत[3] आह—**न चेति** । कथं तर्हि तत्प्रामाण्यमवसेयमित्यत आह—**तस्यापीति** । न तावत् सर्वो विषयः सर्वत्र सर्वस्य [4]सर्वदोपेक्षणीयः, निर्माणवैयर्थ्यप्रसङ्गात् । तथा चानुपेक्षणीयतादशायां प्रवृत्तिसामर्थ्येन तद्विषयस्य ज्ञानस्य प्रामाण्यमवधार्य गृहीतेन तज्जातीयत्वेनोपेक्षणीयतादशायामपि प्रामाण्यं सुग्रहमेव । यत्राप्याहत्य प्रवृत्तिर्न भूता[5] [6]तत्राप्यसंभवद्बाधसंवादित्वं प्रात्यक्षिकमानुमानिकमौपदेशिकं वा तज्जातीयत्वमवसेयमित्यक्षरार्थः ॥

शङ्कानिवर्तने मन्द इत्यत आह—**अयमभिसन्धिरिति** । साक्षात् जनकत्वं गृहीत्वा व्यधिकरणत्वशङ्का मा भूदित्यवश्यं परम्पराजनकत्वं दर्शनीयम् । तच्च प्रमाणस्य प्रतीतिजनकत्वकथनमन्तरेणाशक्यमित्यर्थः । कथमयमर्थो **वार्त्तिकाल्लभ्यते** इत्यत आह—**प्रमाणस्य विशेष** इति । एतावतापि किमुक्तमित्यत आह—**एतदुक्तं भवतीति** । ननु तवायमाशयो न तु **वार्त्तिककृत** इत्यत आह—**तदिदमुक्तमिति** । तदिदमपरम् अनर्थसूत्रम् । न हि प्रतिपत्तिप्रवृत्तिसामर्थ्ययोः प्रतिपाद्यप्रतिपादकभाव इत्यत आह—**अयमर्थ** इति । ननु अर्थग्रहणेन[7] सर्वसंग्रहोऽयुक्त[8] एव[9] किमित्याशङ्क्यते ? तथाविधशङ्कायामनवस्थानादित्यत आह—**एकदेशीति** । **व्याघात** इति । यद्यप्यपवर्गस्य सुखदुःखतद्धेतुभावो नास्ति, अत एव तथात्वेनार्यमाणतयार्थपदेन [10]सर्वसंग्रहोऽप्यशक्यः, तथापि तदभ्युपगमे व्याघात एव स्फुट इति स एवोक्तः । स च शास्त्रावतारेण यदि ह्यपवर्गः सुखदुःखतद्धेतुतया[11] हेयः स्वीकृतः, तर्हि[12] शास्त्रमपि विपरीतप्रयोजनत्वादनारम्भणीयम् । शास्त्रप्रमाणयोस्तु सामान्यतो यद्यपि दुःखहेतुत्वम्, तथापि विवक्षितपरमपुरुषार्थविषययोस्तद्धेतुतया दुःखहेतुतां परिभूयोपादेयत्वमेव । अन्यथा पुनरपि **स एव** व्याघातः । [A]इतरद्धेयं तावत् प्रमाणेन हीयते । प्रमाणं तु प्रमाणान्तरेण हेयं सदनवस्थां सावकाशयति । ततश्च सैव प्रमाणव्यक्तिः तेनैव प्रमाणेन हातव्या । तच्चाशक्यम्[A] ॥

---

१. वाच्ये BA. २. च om JA. ३. भावात्तदप्रमाणमेवेत्यतः B. ४. सर्वदा om M. ५. वृत्ता B var. ६. अपि om M. ७. अर्थपदेन BJ. ८. अनुक्तायुक्तः JA ९. एवम् M. १०. सर्व॰ om J. ११. ॰तुरूपतया B. १२. तर्हि om J.

नन्वशक्यत्वेनाहेयत्वे[1] सुखतद्धेतुत्वेनोपादेयत्वमपि कथमित्यत आह—**न चास्मादिति** । तस्मादुभयथापि स्वात्मनि क्रियाविरोधेन परमपुरुषार्थहेतुत्वेन च प्रमाणं न शक्यहानम्[2] । न चैवं सत्यहानिरेवास्य[3] स्यात्, स्वोच्छेदककारणवशेनोपादेयस्य पुरुषप्रयत्नेनाशक्यहानस्यापि सुखवदुच्छेदादित्यर्थः । अधिकारादनुवृत्ते[4]रित्यनुपपन्नम् , आदिवाक्यत्वादित्यत आह—**प्रवृत्तिसामर्थ्येति** । अधिकारो योग्यता । सा चात्र प्रकृतत्वात् प्रवृत्तिं प्रतीत्यर्थः । [A]इह हि प्रकरणे समर्थप्रवृत्तिजनकत्वं हेतुरभिप्रेतः । स च सुखदुःखतद्धेतुरूपार्थविषयाया एव प्रतिपत्तेरस्ति । ततोऽर्थशब्देन विषयोऽभिधीयमानः तथाविध एव वक्तव्योऽतः प्रकरणविशेषनियम एवाधिकार इत्यर्थः[A] । एकदेश्युपालम्भे पूर्वहेतुभिः सह हेत्वन्तरस्य समुच्चयं दर्शयन्नाह—**न केवलमिति** । **अशक्यत्वादपि** संविदि हेत्वोरसिद्धेरिति[5] शेषः । ननु असंवेद्यमानायाः संविदः प्रमाणसद्भावे कथमसंवेद्यत्वम् , तदभावे वा[6] कथं सत्त्वव्यवहार इत्यत आह—**न तावदिति** ॥

अनवस्थाप्रसङ्गलक्षणं तर्कं दर्शयता तद्विपर्यये मानसमेव प्रत्यक्षं प्रमाणमादर्शितं भवति । अज्ञातोपरतज्ञानव्यवहारे तु कालान्तरे तद्विषयं स्मरणमेव निमित्तम् । एवं च सामान्याकारेण जिज्ञासानुरोधात् तज्ज्ञानमस्त्येव, अज्ञातस्य विधिनिषेधव्यवहाराविषयत्वात्, ततश्च सामान्याकारेण [7]सिद्धमादाय विचारणा[8] । यदि ज्ञानविषयं ज्ञानमवश्यं ज्ञायेत, अवश्यं वा जिज्ञास्येत तदा[9] ज्ञानपरम्परालक्षणा अनवस्था स्यात् । सा चानुपलम्भबाधितेत्यर्थः । तदिदमुक्तम्—**कस्याश्चिदिति** । **भाष्यग्रन्थेनेति** वदता [A]न केवलमर्थविरोधः[A] ग्रन्थविरोधश्चेत्यपि [10]प्रतिपादितं द्रष्टव्यम् ॥

चतुष्टयस्योभयत्वविरोधं परिहरन्नाह—**कार्यकारणाभ्यामिति** । नन्वर्थशब्दस्य प्रयोजनवत्त्वेऽपि विरोधव्यधिकरणत्वे तदवस्थे एवेत्यत आह—**चन्दनादीति** । **परिसंख्यातुं नियन्तुमिति** वदता गणनीयार्थोऽनभ्युपगमेन परिहृतः[11] । अथ किमभिप्रेत्याप्रस्तुतमेव भाष्यकृता इदं प्रस्तूयत इत्यत आह—**एवं किलेति** । **न प्रमाणप्रयोजनं भवितुमर्हन्तीति** प्रमाणस्य भूतार्थत्वादिति भावः । तथा च प्रमाणादीनां [12]शक्यज्ञानत्वेऽपि तद्व्युत्पादकं शास्त्रमनारम्भणीयमेव, पारमार्थिकप्रयोजनविरहादिति[13] निगर्वः । [A]तत्रेदमुपतिष्ठते निराकरणभाष्यमिति शेषः[A] । सर्वसाधारणनीलादिवैधर्म्येण

१. °नाहेतुत्वे M. २. प्रमाणमशक्यहानम् B. ३. अस्य om BJ. ४. अनुच्छित्ति° M. ५. °रसिद्ध° om M. ६. तु B, M. ७. °कारसिद्ध° BA. ८. विचारो BM. ९. ततो M. १०. दर्शितम् BM. ११. निराकृतः BM. १२. सुज्ञान° JA. १३. °जनाभावा° BM.

हि काल्पनिकत्वं कार्यकारणभावस्य व्युत्पादयता नीलादि पारमार्थिकमेव[1] स्वीकर्तव्यम्। तदपारमार्थिकत्वे त्वभिमतसिद्धिरेव न स्यात्[2]। न च कार्यकारणभावस्यापारमार्थिकत्वे नीलादि पारमार्थिकं भवितुमर्हति, नित्यत्वप्रसङ्गात्। तस्माद् यो नीलादि पारमार्थिकमिच्छति, तेन कार्यकारणभावोऽपि पारमार्थिक एव[3] एष्टव्यः। न चोभयमपि। तथा च तत्रापि[4] तुल्यमेतत्। इदं त्ववशिष्यते—कथमेकमनेकं परस्परविरुद्धं कार्यं कुर्यात्? तत्स्वभावत्वादिति यदि तदोत्पत्तेरारभ्य कुर्यादविशेषात् तत्राह[5]—**निवेदयिष्यते हीति**॥

**न ज्ञात्या** जन्मप्रभृतिसहकारिनिरपेक्षतयेत्यर्थः। **जातिदेशेति**। स्वभावनियामिका जातिः। **अव्यवस्थयेति** सहकारिव्यवस्थावैचित्र्येणेत्यर्थः। **प्रमाणार्थः** सुखदुःखलक्षणः। **अनियतः** चन्दनात् सुखमेव कण्टकाद् दुःखमेवेति नियमरहितः, अनियत हेतुकत्वात्। अनियतचन्दनादिसहकारिकारणकत्वादित्यर्थः। **प्राणभृदिति** सहकारिवैचित्र्यसूचनाय। अत एवोदाहरणम्—**अनियतकालमिति**[6]। यथा अनियतकालेत्युपलक्षणम्, देशावस्थासहकारिणामपि अनियमो द्रष्टव्यः। एतदुक्तं भवति, यथा केषुचित् कालदेशावस्थासहकारिषु सत्सु मेघाः सलिलमुद्वमन्ति,[7] केषुचित् तु सत्सु त एव सलिलं पिबन्ति, तथा चन्दनादयोऽपि केषुचित् सत्सु सुखमुपजनयन्ति[8] केषुचिच्च दुःखमिति। **विष्टिः** दण्डाकृष्टः कर्मकरः। नन्वर्थवति च प्रमाणे प्रमात्रादीन्यर्थवन्ति भवन्ति ज्ञायन्त इत्यभिप्रेतम्, न तु जायन्त इति। न चैवमस्ति, प्रमित्यव्यभिचारेणैवेतरेषामव्यभिचारावधारणादित्यत आह—**यद्यपीति**। न च वाच्यम्, वैदिकी प्रतिपत्तिरर्थाव्यभिचारिणी [9]आप्तोपदेशजप्रतिपत्तित्वादिति शक्यत एवेति। न ह्याप्तोपदेशोऽव्यभिचारिणीमेवार्थधियमाधत्त इत्यनवधार्य शक्यमिदम्। न चाव्यभिचारिप्रतिपत्तिजनकत्वादन्यदेव प्रमाणानामर्थवत्त्वमित्युक्तमेवेति। तथापि लोके तावदेवमस्तीति चेत्? अत आह—**अदृष्टार्थेति**॥

यद्यपि **तत्समवायः** प्रमासमवायः प्रमातृत्वमिति प्रकृतोपयोगि स्यादेव, तथापि **वार्त्तिककृता** प्रश्नोपलक्षणाभ्यां स्वातन्त्र्यमुपक्रान्तम्—सामान्यन्यायेन विशेषोऽपि लभ्यत [10]इत्यभिसन्धायातस्तथैव व्याचष्टे—**कारकाभिधानेनेति**। प्राधान्येन धातुप्रत्ययाभिधीयमानव्यापारसंबन्ध एव तत्समवायः। प्राधान्यं च कारकान्तरात्तैरश्चीन्यमात्रमभिप्रेतम्[11]। तेन

---

१. एव om BM. २. त्वनभिमत॰ रेवास्य स्यात् JA. ३. एव om BM. ४. तत्रापि om BM. ५ अत आह J. ६ °मनियतकारणमिति M. ७. °द्गिरन्ति BM. ८. उप° om BM. ९. आद्योप° M. १०. °न्धाय तथैव J. ११. °मात्र° om J.

पचतीत्यादौ सर्वत्रातिरश्चीनपाकादिव्यापारवतो[1] देवदत्तादेरेव कर्तृत्वं सिद्धं भवति । पाचयतीत्यादौ तु प्रयोज्यव्यापारप्रतीतावपि [2]तस्यान्यतिरश्चीनत्वात् न तद्गतः कर्तृत्वम् । किं नाम ? प्रयोजकस्यैव, तद्व्यापारस्यातिरश्चीनत्वात् । एवं तर्हि,

स्वव्यापारे हि[3] कर्तृत्वं सर्वत्रैवास्ति कारके ।

इति न्यायेन करणादिव्यवहारविलोपप्रसङ्ग इत्यत आह—**प्राधान्येनेति** । स्वव्यापारापेक्षया न[4] करणादिव्यवहारः, किं तु प्रधानक्रियापेक्षयेत्यभिप्रायः[5] ॥

ननु च कारकसाध्यत्वाविशेषेऽपि [करणादिव्यवहारः] प्रधानक्रियापेक्षया इत्येतदेव कुत इत्यत आह—**अवान्तरेति** । अस्ति हि काञ्चित् क्रियामुद्दिश्य प्रवर्तमानानां कारकाणामवान्तरव्यापारयोगः, न त्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरित्यर्थः । ननु न सर्वो व्यापारः प्रधानक्रिया वा पुरुषमाश्रयते, तत् कथमाह—**पुरुष** इतीत्यत आह—**पुरुष इति प्रकृतापेक्षम्** । तदेतद् वैयाकरणानां लक्षणम् । तच्चानुपपन्नम्, शब्दप्रयोगमात्रस्याव्यवस्थापकत्वात् । व्यवस्थाहेतोश्च लक्षणत्वात् । अभिधानयोग्यतालक्षणमिति चेत्—न, तस्या एव विचार्यमाणत्वात् । विवक्षामात्रमिति चेत्—न, तस्या अपि निमित्तमन्तरेणाव्यवस्थितेरित्याशयवानाह—**लक्षणान्तरमिति** । पुरुष इति वर्तते । तथा च तत्प्रयोक्तृत्वमित्यत्र तस्य प्रयोक्तेति विग्रहशङ्का मा भूदित्याशयवानाह—**तस्य चेतनस्येति** । एतेन स चासौ प्रयोक्ता चेति वा[6] तस्य चेतनस्य प्रयोक्तृत्वं धर्म इति वा विग्रह[7] इत्यर्थः । अत्र च[8] **सर्वकारणानीति** स्वेतरपरस्परविसदृशानेककारकाभिप्रायम् । तेनादृष्टमनधितिष्ठतोऽपि कुलालस्य कर्तृत्वमक्षतमेवेति ॥

एतावतैव लक्षणे परिसमाप्ते इतराप्रयोज्यत्वमित्यनेन चेतनप्रयुक्तिं प्रति स्वातन्त्र्यमितरेषां व्यवच्छिन्दता परस्परप्रयोजकत्वमपि व्यवच्छिन्नम् । चेतनस्यापि तानि व्यापारयत एव कर्तृत्वमित्युक्तम्[9] । तथा च यथा कार्यं कर्त्रधीनं तथा कारकान्तराधीनमित्युभयव्याघात् कार्यादिकतरापायेऽप्यन्यतरापाय[10] इति दर्शितम् । अतो लक्षणस्य नातिव्यापकत्वम् । अचेतनेषु तु कर्तृव्यवहारः कथमित्यवशिष्यते तत्राह—**अचेतनस्य त्विति** । **स्वाभाविकं मुख्यम्** । **तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्वमिति** वदतः करणव्यापारविषयः कर्मेति कर्मलक्षणं संमतम् । [11]तत्र लक्षणेऽवान्तर-

१. आदि om J. २. तस्य तिर° JA. ३. च J. ४. च J. ५. °त्यभिसन्धिः BM. ६. स चास्यैवं प्रयोक्ता चेति A. वा om J. ७. धर्मो वा B. ८. अत्र च om BJA. ९. इति on JA. १०. अपि om BM ११. अत्र च BM.

व्यापारो ग्राह्यः। प्रकृते च प्रधानव्यापारः प्रमितिलक्षण इति विभागः। **विनियोज्यतेति**। अनेन वार्त्तिकस्थस्य विनियोगस्य विषयनिष्ठत्वं दर्शयता योग्यतापि[१] विषयगतैव द्रष्टव्येत्यपि[२] दर्शितम्। तेन विनियोगाय योग्यता[३] विषयगतैवेत्यर्थः। ज्ञानपरं चैतत्। तेनायमर्थः विनियोगो वार्थगतस्तद्योग्यताज्ञानं वा चतुर्वर्गस्य पर्यवसानमिति ॥

**पञ्चेति**। रूपं संज्ञा संस्कारो वेदना विज्ञानमिति[४]। तत्र रूपरसगन्धस्पर्शशब्दाः रूपस्कन्धः। सविकल्पकं विज्ञानं संज्ञास्कन्धः। समनन्तरप्रत्ययः संस्कारस्कन्धः। सुखदुःखे वेदनास्कन्धः। निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः। **जीवेति**। जीवश्चेतनः। तदितरोऽजीवः। आस्रवन्तीत्यास्रवाः। स्रोतांसीन्द्रियाणि। स्रोतोभिरिव तैरयं जीवो धर्माधर्माभ्यामापूर्यत इत्यर्थः। संवरणं संवरः, जीवाजीवविषयोऽभेदाभिमानः। तेन संवृतो ह्ययं जीवोऽसर्वज्ञ इति। निर्जरणं निर्जरः तपश्चरणम्, निःशेषेण जीर्यते धर्माधर्मलक्षणो बन्धोऽनेनेत्यर्थः। बन्धनं बन्धः धर्माधर्मौ ताभ्यां [५]निगडकटकाभ्यामिवायं बद्धोऽस्वतन्त्रो[६] जीव इत्यर्थः। मोक्षः सकलावरणविगम इत्यर्थः। सर्वत्र नियमोऽप्रामाणिकः[७] ॥

ननु न विधायकप्रमाणनिवृत्तिमार्गेणासत्त्वमित्यत आह—**तदिति**। [८]प्रमाणविषयत्वेन सदसतोरेकत्वमविलक्षणव्यवहारविषयत्वमभिमतमेव, ततो निर्दला शङ्केत्यत आह—**सर्वसामर्थ्येति**। अर्थक्रियासामर्थ्यं हि सल्लक्षणम्। [९]तच्चेद् भवदभिमते अभावेऽप्यस्ति सोऽपि सद्व्यवहारविषयः प्रसक्त इति **टीकार्थः**। न च[१०] **वयमित्यादिना** अभावस्य सामर्थ्यमङ्गीकृतम्[११], न तु सामर्थ्येन सद्व्यवहारः, अननुसंहितसामर्थ्यस्यापि सद्व्यवहारविषयत्वात्। अपि त्वस्तिनास्तिप्रतीतिविषयत्वेन। न ह्यस्ति संभवः सदिति व्यवह्रियते, न चास्तिप्रत्ययविषय इति। असदिति वा[१२] व्यवह्रियते न च नास्तिप्रत्ययविषयः इति प्रकरणार्थः ॥

स्यादेतत्। प्रमेयवैलक्षण्यवत् प्रमाणवैलक्षण्येनापि साक्षात्कारादिवत् प्रतीतिभेदो घटते। ततः सदन्तर एवेयं नास्तीति प्रतीतिः कदाचिद् [१३]भवेदित्याशङ्क्याह—**संप्रतीति**। अबाधिते प्रसिद्धतरे विप्रतिपत्तिर्न काञ्चित् [१४]क्षतिमावहतीत्यर्थः। ननु

---

१-२. अपि om J. ३. विनियोगोपयोग्यता B var. ४. इत्यर्थः JA. ५. कंटका° M. ६. °तन्त्रीभूतो JA. ७. नियमो प्रामाणिकं M. ८. प्रमाया M. ९. °दभिमते भावे B. १०. च om BJ. ११. अस्वी° J. १२. वा om BM. १३. भवतीति सदैवैकं तत्त्वमित्या° J १४. कृति° M

निषिध्यतां भावान्तरम् । तथाप्यभावविधौ किमायातम् ? न हि नीलनिषेधे पीतादिविधिरवश्यमित्यत आह—**नीलपीतौ हीति** । ननु सर्वशङ्कानिराकरणपटीयसि प्रत्यक्षेऽपि[1] प्रवृत्ते कुतस्तर्कस्यावकाशः ? ततः किमत्रोपपत्त्येत्यत आह—**यदि कश्चिदिति** । सन्त्येव हि केचिद् वादिनो ये विपक्षदण्डमपश्यन्तः प्रत्यक्षपरिकलितमपह्नुत्य शङ्कामुत्थापयन्ति, तान् **सांख्यादीन्** प्रति अयं प्रकार इत्यर्थः । पूर्ववद् व्याख्येयम् । तुल्योपलम्भयोग्यतातर्कान्तर्भविनेत्यर्थः । नन्वभावे तत्प्रत्यक्षतायां च बहुविप्रतिपत्तिबीजमस्तीत्याह—**सर्वं चैतदिति** ॥

ननु यद्यसद्भेदाः प्रकृतानुपयोगिनः, तदा अनुपयोगादेव नोच्यन्त इत्युच्यताम् । अथोपयोगिनस्तदा अवश्यं वक्तव्या एव । पारतन्त्र्येण प्रतिभासनात् नोच्यन्त इति क्वोपयुज्यत इत्यत आह—**निषेध्येति** । प्रतिपादनाय हि ते वक्तव्याः । तच्च प्रतियोग्यधिकरणप्रतिपादनादेवार्थतो[2] भूतमिति किं तदर्थप्रयासेनेत्यर्थः । तदिदमुक्तं **गम्यन्त इति नोक्ता इत्यर्थ** इति । ननु यद्युपायप्रतिपादनेनैव प्रतिपादिता इति नोक्ताः, तर्हि प्रमेयादयोऽपि प्रमाणप्रतिपादनेनैव प्रतिपादिता इति किं तत्कथनेनापि ? अथ [3]प्रतीता अपि प्रयोजनविशेषादभ्यर्हिततया प्रतिपाद्यन्ते, हन्तासद्भेदा अपि उपयुक्तास्तथा किं नेत्यत आह—**अथ वेति** ॥

ननु **भावप्रपञ्चवदभावप्रपञ्चोऽप्युद्दिष्टो वेदितव्य**[4] इति प्रतिज्ञातेऽर्थे **चतुर्वर्गानन्तर्भावादिति** हेतुर्भागासिद्धो विरुद्धश्चेत्यत आह—**निःश्रेयसेति** । तेन निःश्रेयसानुपयोग्यभावप्रपञ्चाधिकरणतया चतुर्वर्गानन्तर्भावो हेतुः । तदधिकरणतया तथाभूत एव भावप्रपञ्चो दृष्टान्तो नोच्यत इति साध्यम् । निःश्रेयसोपयोगी तूद्दिष्टो वेदितव्यः, चतुर्वर्गान्तर्भावात् । उपयुक्तभावप्रपञ्चवदिति **वार्त्तिकार्थ** इत्यर्थः । अत**एवोद्दिष्टो वेदितव्य** इति [5]अनुपलब्धिबाधितं मन्यमान उत्तरग्रन्थमवतारयति—**अथेति** । कारणानुपलब्ध्या **सर्वं** एवानुपलब्धिप्रभेदा[6] उपलक्षिताः । **अपवर्ग एव मूर्धाभिषिक्तः** प्रधानतया[7] राजकल्पः । एतदप्युपलक्षणम् । अर्थोऽपि शत्रुपुत्राद्यभावादिः, प्रवृत्तिरप्यहिंसादिः, प्रेत्यभावोऽपि पूर्वशरीरपरित्यागादिः, फलमप्युत्पन्नरोगप्रध्वंसाद्यसद्भेद[8] इति मन्तव्यम् । संशयस्य ज्ञानरूपत्वादसद्रूपता न संभवतीति तमुल्लङ्घ्यातिदिशति—

१. अपि om M २. अर्थात् JA ३. प्रतीतम् ··· प्रतिपाद्यते ··· भेदोऽपि उपयुक्तः JA ४. वेदितव्यः om JA. ५. अनुपलम्भ° J. ६. °लब्धिलक्षणेन प्रमाणेन A. °भेदाः JA. ७. °षिक्ततया J. ८. °सादिभेद J.

**एवं प्रयोजनेति** । तथा हि सन्ध्यावन्दनप्रायश्चित्तादावहितनिवृत्तिरेव प्रयोजनम् । दृष्टान्तोऽपि कश्चिदभावरूपो यथा[1] [2]सुषुप्त्यवस्थानमपवर्गे दृष्टान्तयिष्यति । सिद्धान्तोऽपि नैरात्म्यादिः परेषाम् । अस्माकं च[3] यथा भाऽभावस्तमः [वै० सू० ५.२.१९] इत्येवमादिः । सर्वेषामपवर्गो दुःखाभाव इति । अवयवतर्कनिर्णयवादजल्पवितण्डास्तु सद्भेदा एव । हेत्वाभासा द्विविधाः । यथा, अनित्यः शब्दः सत्तारहितत्वात्, चाक्षुषत्वादित्येवमादिः । छलं जातयश्च सद्भेदा एव । निग्रहस्थानेषु विप्रतिपत्तिविधाः सद्भेदाः । अप्रतिपत्तिविधा असद्भेदाः । तदिदमुक्तम्—**एवं तत्र तत्रोहनीयमिति** । ननु भाष्ये असद्भेदकथनवार्तापि नास्तीत्यत आह—**अत्रेति** । परस्परविरुद्धयोरभिधानानभिधानयोः पारमार्थिकत्वं न संभवति । तत् कतरदत्र पारमार्थिकमित्यत आह—**द्वितीये तु कल्पे पारमार्थिक** इति । **सूत्रस्य सप्रपञ्चं तात्पर्यम्**—प्रमाणत इत्यादिप्रपञ्चः, **सच्च खलु षोडशधा व्यूढमुपदेक्ष्यत** इति तात्पर्यम् । **तस्य तात्पर्यमिति** । **तासां खल्वासामित्यवतारभाष्यस्य**, न तु सूत्रपाठस्य । अवयवार्थं व्याचिख्यासुनेत्यनेनैव तात्पर्यस्य स्फोरितत्वात् ॥

॥अवतारणाभाष्यादिव्याख्यानम्॥

**द्वन्द्वस्वरूपमाह** तत्तात्पर्याभिधानायेति शेषः । द्विग्वव्ययीभावौ प्रयोगमात्रनिराकृतत्वात् नोपन्यस्तौ[4] । [A]संभावितप्रयोगान् बहुव्रीहिकर्मधारयतत्पुरुषान् निराकरोति—**बहुव्रीहीति**[A] **असंभवादर्थासंभवात्** । **षष्ठीसमास** इति संभाविततत्पुरुषोपलक्षणपरम् । **इति हि** इत्यादि हीत्यर्थः । तेनार्थनिर्देशं [5]समुपादाय संशयेऽपि बहुवचनं द्रष्टव्यम् । तत्रापि [A]साधर्म्यवैधर्म्यविप्रतिपत्तिजन्यानां[A] संशयानां परस्परनिरपेक्षाणामेव न्यायप्रवर्तकत्वमिति तात्पर्यम् । दृष्टान्तेऽपि विशेषलक्षणकरणावसरे द्विवचनमेव । तस्यापि परस्परनिरपेक्षोदाहरणसंप्रतिपत्तिः[6] प्रयोजनम् । एवं सिद्धान्तानामपि स्वप्रयोजने परस्परानपेक्षत्वमेव । तच्च बहुवचनसमानार्थेन संख्यावचनेन प्रतिपादितम् । अवयवानां तु यद्यप्येकस्मिन् वाक्यार्थे प्रतिपादयितव्ये मिथः सापेक्षत्वम्, तथापि [7]परस्परासंप्रत्ययितमर्थमभिदधतामेवेति बहुवचनप्रयोजनम् । हेत्वाभासेष्वपि बहुवचनस्य स्वव्यापारे परस्परनिरपेक्षत्वप्रतिपादनमेव तात्पर्यम् । तथा छलजातिनिग्रहस्थानेष्वपि ।

---

१. °पस्तथा JA. २. °प्तावस्थानम् BA. ३. च om. BM. ४ निराकृतावतस्तौ विहाय A ५. उपादाय J ; समादाय A. ६. °दाहरणे संप्र° BM. ७. °सम्प्रतिपत्त्याऽपि तमर्थं B.

यत्र तु निर्देशो नास्ति तत्र लक्षणे यथावचनं विग्रहः, सामान्यमात्रस्यैव प्रयोजकत्वादिति भावः ॥

कारकस्यार्थरूपत्वान्न तस्याभिधेयमस्तीत्यत आह—**कारकार्थः प्रधानक्रियेति**। अर्थशब्दः प्रधानक्रियावचनो न क्वचिद् दृष्ट इत्यत आह—**यदुद्देशेनेति**। कारकाणामविवक्षेत्येतावतैव सुस्थे प्रधानक्रियाया अविवक्षा[१] किमर्थमित्यत आह—**कारकग्रहणेनेति** ॥

ननु कारकाणामविवक्षा शेषलक्षणं तदा स्याद् यदि तत्र कारकत्वं संभवेत्, तदेव तु नास्तीत्यत आह—**यद्यपीति**। अत्र **चोदयति** शैषिक्यां षष्ठ्याम्। **षष्ठी चानर्थिका** निष्प्रयोजना। **अव्यतिरेके तदनुपपत्तेः** षष्ठ्यर्थस्य संबन्धस्यानुपपत्तेः। एकदेशित्वे बीजम्—**अनियमवादीति**। [२]तस्यास्त्वतन्त्रत्वात् प्रमाणादयो गम्यन्त इति किं केन संगतमत आह—**भावस्येति**। न प्रमाणादिमात्रमुच्यते तत्त्वशब्देन अथ च नार्थान्तरं तत्त्वमिति परस्परव्याहतमित्यत[३] एकदेशिनं किञ्चिदुद्दीपयति—**अभेदेऽपीतीति**। अनारोपितरूपेण स्वरूपतः प्रतीयन्तां प्रमाणादय इत्येतदर्थमनतिरिक्तार्थमपि तत्त्वग्रहणं कृतमित्यर्थः। दृष्टान्तमसिद्धं मत्वा सोपपत्ति व्याचष्टे—**द्वित्वैकत्वयोरिति**। व्यवहारगतिवस्तुगत्योः समानयोगक्षेमत्वं मन्यमानो ह्यभावमपह्नोतुं न शक्नोत्येव, अभावव्यवहारगतेः सर्ववादिसिद्धत्वात्। [४]यस्तु वस्तुनिरपेक्षोऽपि व्यवहारोऽस्तीति मन्यते, तन्मतमवशिष्यत इत्याशयवानाह—**क्षणभङ्गभङ्गेति**। [A]निवेदयिष्यते **वार्त्तिककृते**ति शेषः[A] ॥

यथार्थज्ञानोत्पत्तिं प्रति स्वरूपलक्षणा शक्तिरारोपरहितत्त्वमेव[५] सहकारिलक्षणदोषविरहीन्द्रियादिः[६] ॥

ननु दृष्टनिःश्रेयसदूषणे किं तात्पर्यम्? न हि तदस्मान्न सिद्ध्यतीत्यत आह—**एतदुक्तं भवतीति**। **अदृष्टमेव निःश्रेयसमभिप्रेतं** शास्त्रफलत्वेनेति शेषः। अन्यथा आत्मादिप्रमेयविशेषप्रतिपादनं[७] न कुर्यात्, तत्तत्त्वज्ञानमन्तरेणापि [८]दृष्टनिःश्रेयससिद्धेरिति भावः। [९]**अप्रामाणिकं दर्शनाभावादिति** दर्शनफलैकोन्नेयं प्रमाणं

१. प्रधानक्रियाऽविवक्षा B. २. भावस्या M. ३. इति om BM. ४. वस्तुतस्तु BJ. ५. °विरहित्व° J. ६. °लक्षणा दोष° BJA. ७. °षोपादानं J. ८. °न्तरेणादृष्ट° A. ९. प्रामाणिकं M.

कथं तदभावेऽप्यस्तीति भावः[1]। आगमानुमानयोः सहकारिता पक्षाद्युपनायकत्वेन। तत्रात्मलक्षणधर्मि सिद्धावागमः,

अयमात्मा [बृह ४।४।३], अपहतपाप्मा [छान्दोग्य १।२।९], अजरोऽमरः [बृह ४।४।२५], स एष नेति नेत्यादि [बृह ३।९।२६]। अनुमानं चेच्छादि सूत्र-१.१.१०] समुत्थम्। जन्माभावरूपलिङ्गसिद्धौ तु,

अशरीरं वाव सन्तम्

[छान्दोग्य ८।१२।१] इत्याद्यागमः। अनुमानं तु प्रवृत्त्यभावः। प्रवृत्त्यभावेऽपि,

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥

[गीता ३.१७] इत्येवमादि[2]। अनुमानं तु दोषाभावः। दोषाभावेऽपि,

रसोऽप्यस्य परं दृष्ट्वा निवर्तते।

[गीता २.४९] इत्येवमादि[3]। अनुमानं तु मिथ्याज्ञानाभावः। अत्रापि

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।

[मुण्डक २।२।८] इत्यादि। अनुमानं तु तत्त्वज्ञानसद्भावः। आत्मतत्त्वज्ञानेऽपि[4]

आत्मा वा अरे द्रष्टव्यः।

[बृह ४।५।६] इत्येवमादि। अनुमानं तूपायाभ्यासप्रकर्ष[5] इत्येवमादि। उपलक्षणं [6]त्वागमानुमानग्रहणम्। प्रत्यक्षमपि द्रष्टव्यम्, एवं शरीरादिष्वप्यूह्यम्, अनुमानमेवात्रार्थे[7] प्रमाणमिति विप्रतिपन्नं प्रतिपिपादयिषतामिति शेषः उपनिषदामपि

तमेव विदित्वातिमृत्युमेति।

[श्वेता ३।८] इत्यादीनां प्रामाण्यात्। सन्तानानुमानस्य च पृथगुपदेशाच्च प्रमेयस्य प्रमाणादिभ्यः प्रथमसूत्रे एतद्विवरणाद्व्यवच्छेत्तुमुत्तरग्रन्थमेवावतारयति—**यदि चेति**। विहितत्वादाद्येन **सूत्रेणेति**। श्रुत्यर्थाभ्यामिति शेषः। तदियता प्रबन्धेन **वार्त्तिककृता** किं कृतमित्यत आह—**तदनेनेति**॥

उत्तरवार्तिकविषयीभूतभाष्यं तावद् व्याचष्टे—**अथ किमिति**। ननु द्वितीय-सूत्रार्थो नात्रोदितः, तत् कथं[8] तत्रानूद्यत इत्यत आह—**निःश्रेयसेति**। अत्र च[9] हेयत्वाद्यनुवादवार्त्तिकं नास्त्येवेत्यनाशङ्कनीयम्, **टीकाकृता** सिद्धवदुत्थापितत्वात्।

१. अर्थ। JA. २, ३. एवम् om JA. ४. तत्त्वज्ञाने तु BM. ५. एवमादि om JA. ६. चागमा° JA. ७. अर्थे om BM. ८. किं BM. ९. च om M.

क्वचिल्लिप्यभावस्य[1] लेखकदोषेणाप्युपपत्तेः । अन्यथा **भाष्यतात्पर्यार्थानुवादकत्वात्** । **व्याचष्ट** इति तु यद् व्याख्यातम्, तदभिप्रायं तेन **तच्चैतदुत्तरसूत्रेणानूद्यते** इत्यस्यानुवादानन्तरमव्याख्यानेऽपि न दोषः । एवं चार्थं द्वितीयसूत्र इत्यादिना पूर्वमेव व्याख्यातत्वात् तु[2] नेहेदं व्याख्यातमित्यर्थः ॥

ननु द्वेषः किमहेय एव न वा प्रवृत्तिहेतुरित्यत आह—**उपलक्षणमिति** । ननु हानपदमात्यन्तिकपदसमभिव्याहारादपवर्गे वर्तते, तत् कथं तत्त्वज्ञानमित्युच्यत इत्यत आह—**हीयते हीति** । करणव्युत्पत्तिमाश्रित्यानेन तत्त्वज्ञानं विवक्षितम् । भावव्युत्पत्त्या त्वात्यन्तिकपदसमभिव्याहारादपवर्ग इत्यर्थः । तत्त्वज्ञानपदस्य व्युत्पत्तिसंदेहमपनयन्नेवाह—**तस्य प्रमाणस्येति** । एतेनादिवाक्यविरोधः परिहृतः । **अर्थपदानीति** भाष्यगतस्यार्थपदस्य[3] त्वन्यथार्थो भविष्यतीति यदुक्तं तदाह—**पुरुषार्थस्थानानीति** । तात्पर्यमित्यर्थः । **वार्त्तिकस्येति** शेषः[4] ॥

प्रस्थानं प्रकार इत्थम्भावः तथा चेत्थम्भूतत्वादान्वीक्षिक्या[5] इति यद्यप्यभिमतमेव, तथापि निरुपपत्तिक इत्थम्भावः स्यादित्यत आह—**प्रस्थानं व्यापारः** । तदनेन भाष्यगतस्य प्रस्थानपदस्य प्रकृत्यर्थोऽभिहितः, प्रत्ययार्थस्तु **संशयादिभिः पदार्थैः**[6] **पृथक् प्रस्थाप्यते** इति वदता भाष्यकारेणैव दर्शितः । तदेतदुक्तं भवति, न्यायव्युत्पादने व्यापारवत्तया हि इयमान्वीक्षिकी विद्यान्तराद् भिद्यते । स च संशयाद्यङ्गोपाङ्गव्युत्पादनेनैव[7] व्युत्पादितो [8]भवति । ततोऽस्याः संशयादयोऽपि[9] विषयभूताः तानन्तरेण निर्विषयतया विद्यैव न स्यात् । विषयान्तरवत्तया विद्यान्तरमेव वा स्यादिति[10] । अत्रैव शङ्कते—**न च वाच्यमिति** । न ह्यन्या विद्याः स्वं स्वमर्थं [11]प्रतिपादयन्त्योऽपि कथमेतदित्यश्रद्धामलमपनेतुमीशते [12]विनैनामान्वीक्षिकीमित्याशयवान् परिहरति—**एतस्या एवेति** । वार्त्तिकान्तरविषयं भाष्यं दर्शयति–**स चायमित्यादिभाष्यमिति** । निर्दलं देश्यं[14] दीपयति **ज्ञानमिति** । उपलब्धोऽनिर्णीतश्चेति व्याघातोऽनुपपन्न एव उपलब्धेर्निर्णयपर्यायत्वस्यानन्तरमेव[15] निराकृतत्वात् । नापि प्रमाणप्रवृत्तिविषय उपलब्धो भवन्निर्णीत[16] एव भवेदित्यत आक्षेप्तुरभिप्रायान्तरं दर्शयति—**पञ्चरूप** इति ।

---

१. ॰ल्लिख्यमानस्य M २. तु om BM. ३. ॰स्यार्थपद॰ om J. ४. इति शेषः om J. ५. इत्थम्भावात् M. ६. पदार्थैः Om JA ७. न भवति A ८. ॰पाङ्गेनैव BM. ९. अपि om BMA १०. वा स्यात् Om JA ११. व्युत्पा॰ BM. १२. विनैवमा॰ BM १३. चोद्यं J १४. इति J १५. ॰स्थानान्तर॰ M १६. निर्णय BM

यथा प्रत्यक्षमागमो वा[1] अज्ञातेऽप्यवतरति, तथा असन्दिग्धेऽपि। अनुमानं तु यथा नाज्ञाते तथा असंदिग्धेऽपि। तस्मादस्यान्यैव[2] रीतिरित्यर्थः। **समानविषयत्वम्** एकविषयत्वम्। **सामानाधिकरण्यं न समर्थयस** इति, न तादात्म्यमिति भावः। [3]परस्परसमानेनाधिकरणेन संबंधमात्रं सामानाधिकरण्यम्। न तु तादात्म्यमित्यभिप्रेत्य परिहारं विवृणोति—**सामान्यविशेषयोरिति**। संदिग्धे प्रवर्तते इत्यस्य योग्यतापरतां दर्शयति—**असंदिग्ध इति**। संशयानर्हश्च प्रकारद्वयेन, सर्वथा अज्ञातो विशेषतो वा निर्णीतः, तद्विपरीतस्तु संदिग्धः संशयार्हः। तत्र न्यायः प्रवर्तत इति तात्पर्यम्[4]। अतएव [5]व्यतिरेकप्रधानामुपलक्षणतयैकां[6] विधामुदाहरति—**नहीति**॥

ननु किं पुनः प्रयोजनमिति प्रश्ने **येन प्रयुक्तः प्रवर्तत** इत्युत्तरं वैयात्यादित्यत आह—**स्फुटतरमेवैतदिति**[7]। ननु वयं त्विति स्वाभिमतप्रदर्शनमेकदेशिमते अपरितोषं सूचयितुम्, न चापरितोषबीजमुपलभामह इत्यतस्तद्बीजं [A]प्रश्नपूर्वकमेव तावद्[A] दर्शयति—**तत्रेति**। **सर्वेषामेव काम्यत्वात्** धर्मादीनामिति। तथा च धर्मादिविषयस्तत्साधनविषयो वा कामस्तत्रापि प्रवर्तक इत्यर्थः। न च तद्विषयत्वेनापि धर्मादीनामुपादानम्, स्रक्चन्दनादीनामप्युपादानप्रसङ्गादिति[8]। **सरकः** पानम्। ननु तथापि नैतेषां प्रयोजनत्वक्षतिरित्यत आह—**धर्ममोक्षयोरिति**। उपलक्षणं चैतत्। कामार्थयोरपि विरक्तान् प्रत्यप्रयोजकत्वमिति द्रष्टव्यम्। तेनैतदुक्तं भवति, न हि धर्मादिषु धर्मत्वादिकमेव प्रवृत्तिं प्रति प्रयोजकम्। किं नाम? इष्यमाणत्वम्। अन्यथा अविशेषेण सर्वस्य सर्वत्र प्रवृत्तिप्रसङ्गादिति। ननु यथाश्रुते को दोषो येन **विषयेण विषयिणं प्रत्ययमुपलक्षयतीति** व्याख्येत्यत आह—**असत्योरिति**। **सत्योर्वेति** सप्तमी। उत्तरवार्त्तिकं ग्रहीतुमेतत्। यथाश्रुतं दूषयति—**तथापीति**। इह[9] फलज्ञानमन्यत्र प्रवर्तयत् तत्साधन एव प्रवर्तयतीति अतो नातिप्रसङ्ग इत्येवं यद्यपि शंकितुमुचितम्, तथापि तत्साधनत्वेनाज्ञाने[10] प्रवृत्तिरेव नास्ति इत्यतस्तज्ज्ञानमन्तर्भाव्य आशङ्कते—**तत्साधनत्वज्ञानादिति**। **सामानाधिकरण्येन** एकविषयतया, संप्रतिपत्तेरविरोधतः कार्यकारणभावसिद्धेरित्यर्थः। एवं तर्हि **सुखदुःखाप्तिहानिभ्यामिति** वार्त्तिकमसङ्गतमेव किमित्यत आह—**एतदुक्तं भवतीति**। [A]विवक्षितं प्रस्थलीकरोति—

१. वा om JA २. ०स्याप्यन्यैव B ३. परस्य समा० A ४. संशयानर्हः… …तात्पर्यम् om JA ५. व्यतिरेके BM ६. प्रधानानुप० B var, M ७. किं पुनः …एतदिति om J ८. अपि om J ९. इह om J १०. ०त्वे अज्ञाते J.

तेनेति[A] । प्रवृत्तिविषयतयेष्यमाणत्वमुपादेयता[1], स्वरूपेणेष्यमाणत्वमुद्देश्यता, उभयोरपि ज्ञानं प्रयोजयतीति उभयमपि प्रयोजनम् । इयांस्तु विशेषो यदुपादेयज्ञानं[2] साक्षात् प्रवर्तयति । एतदेव च तस्य साक्षात्प्रवर्तकत्वं यत् साक्षात् प्रयत्नजननसमर्थामिच्छां प्रसूते । सैवाद्या प्रवृत्तिरित्युच्यते । उद्देश्यज्ञानं तु तद्विषयामिच्छां जनयत् तथाभूततत्साधनज्ञानजननद्वारेण इत्यर्थः ॥

न्यायपरीक्षाशब्दयोरेकार्थत्वमपश्यत आक्षेप इत्याह—**न्यायेति** । ननु परीक्षाशब्दस्य विचारणार्थत्वे प्रयोजनापेक्षित्वं कदाचिद् युज्यते, स चेत् न्यायार्थस्तस्य च व्युत्पत्तिबलेन प्रमाणमात्रमर्थः, तस्य च न प्रयोजनापेक्षेति सर्वं समाकुलमित्याक्षेपावतारटीकार्थः । नन्वेतावतापि चोद्यं तदवस्थमेवेत्यत समाधानं विभजते—**प्रत्यक्षादीति** । ननु अवयवैरर्थस्य परीक्षणमधिगतिर्यदि न्यायः, तर्हि किं तस्य[3] फलमित्यत आह—**अर्थस्य लिङ्गस्येति** । अथ यदि परीक्षापरनामा न्यायो नानुमेयविषयः, कुतस्तदधिगमो भविष्यतीत्यत आह—**परीक्षितं त्विति** । अथ यथा प्रमाणमूलैरवयवैर्लिङ्गं[4] प्रतिपाद्यते तथानुमेयमेव किं नेत्यत आह—**न त्विति** । ननु संदिग्धत्वाविशेषेऽपि कुत एतदित्यत आह—**तस्येति** । परीक्षानास्पदत्वाल्लिङ्गप्रतिपादनमन्तरेण तदपेक्षिणं[5] प्रत्याहृत्य प्रतिपादयितुमशक्यत्वादित्यर्थः । **न तर्हि प्रमाणैरिति** । तथा चार्थस्य लिङ्गस्य परीक्षाधिगतिर्न प्रमाणफलं स्यात् । अथ प्रमाणैरेव, निष्फलास्तर्हि अवयवा इत्याशयः । **न साक्षादित्यादिना** लिङ्गाधिगताववयवानां स्वातन्त्र्यं निराकुर्वता[6] अधिगतेरप्रमाणफलत्वमपास्तम्, अवान्तरव्यापारत्वं चावेदयता अवयवानामानर्थक्यमपास्तमिति । प्रमाणत्वाविशेषेऽपि तस्यैव विप्रतिपन्नपुरुषप्रतिपादकत्वं नान्यस्येत्यत्रापि हेतुं परः प्रक्ष्यतीत्यतस्तथैवाह—**समस्तेति** । तदयं वार्तिकार्थः सोऽयमित्थंभूतसमस्तप्रमाणोपकरणात्मा यतस्तस्माद् विप्रतिपन्नपुरुषप्रतिपादकः ततश्च **परम** इति व्यवह्रियत इत्यर्थः ।

ननु नाविरुद्धत्वमेवाश्रितत्वमनाश्रितस्यापि अविरुद्धत्वाद् विरुद्धस्याप्याश्रितत्वात्, अतएव नाविनाभावोऽप्यनयोः, तत्कथमाह—**आश्रितत्वमित्यविरोधीति** ? न चैव तत्प्रकृतमित्यत आह—**पञ्चावयवे** इति । न्यायमूलफलयोरेकविषयत्वं वस्तुतः, तच्चाविरोधे सति निर्वहति[7] नान्यथेति । तदेतद्भाष्यकारेणार्थतः कथितं [8]वार्त्तिककारेणाक्षरैरेव विवृतमित्यर्थः । यद्यपि अग्निशब्दस्तेजोविशेषवचनः सूर्यालोकादावग्निव्यवहारादर्शनात्[9],

---

१. उपायता BM  २. उपायता० B  ३. तस्य om J  ४. ०लैङ्ग० M
५. तत्परीक्षणं J  ६. कुर्वतो M  ७. निर्वहेति M  ८. ०कारैरक्षरै० BM
९. ०हाराभावात् BM

तथापि तेजोमात्रेऽपि क्वचित् प्रयुज्यते। तदभिप्रायेण परमाणुना भागासिद्धतापि[1] मा भूदित्याशयवानाह—**अग्निरवयवीति** ॥

ननु विरुद्धार्थपरिच्छेद एव प्रमाणविरोधः, स चात्र प्रत्यक्षेण स्फुटतर एवेति किमर्थं प्रश्नः **कः पुनरि**त्यत आह—**इदमत्रेति**। **तत एव** रूपत्रयासंपत्तेरेव। **तदनुमानमाभासमिति** व्यवहर्तव्यमिति शेषः। न च रूपत्रयसंपन्नमेवेदम्, साध्यसिद्धिप्रसङ्गादिति। अत्र शङ्कते—**अथेति**। ननु यदि रूपत्रयसंपत्तिरेव अविनाभावः तदा कथं बाधया सह संभवः? इहैव संभवादित्यत[2] आह—**बाधायामिति**। पक्षधर्मत्वं स्वीकृत्यानैकान्तिकत्वव्युत्पादनम्। अतो न च सपक्षेत्यादिशङ्का न निरवकाशा भवति[3]। यत्रेदं तत्रेदमित्याकारेण पक्षस्यापि साधनवतः साधर्म्यवत्ताप्रतीतिः सर्वोपसंहारः। अयं च यत्र नेदं साध्यमस्ति तत्राप्येतत्[4] साधनमभिमतमस्तीत्येतावन्मात्रेणैव[5] भज्यते। एष च व्यभिचारप्रकारः पक्षेऽपि न निवारयितुं शक्य इत्यर्थः। न बाधस्य स्वातन्त्र्येण दूषणत्वं व्यभिचारात्[6] पक्षधर्मताविरहिणि तदभावात्। यत्र च बाधसंभवस्तत्र तयोरेवान्यत्रावगतस्वातन्त्र्ययोर्विद्यमानत्वादनुमानमाभासतां गतम्, व्यभिचाराद्युत्थापनेन तु विरोधः चरितार्थ इति पूर्वपक्षार्थः ॥

**अनुमानाविषये प्रयोग** इति यथाश्रुते **वार्त्तिके**[7] पराभिमतमपक्षधर्मत्वमेव स्फुटमपक्षस्यैवानुमानाविषयत्वात्, अतोऽन्यथा व्याचिख्यासुर्भूमिमारचयति—**वक्ष्यते हीति**। अतिप्रसङ्गादतिव्याप्तेरित्यनुमानाधिकारे वक्ष्यते हीति योजना। किमतो यद्येवमित्यत आह—**स चेति**। आर्द्रेन्धनमेकोपाधिरेकव्यभिचारात्, अध्ययनमुभयोपाधिरुभयव्यभिचारात्। **सोऽयमि**त्यादिना **नास्ती**त्यन्तेन प्रत्यक्षस्याकारो दर्शितः। **यद्यभविष्यदिति** तर्कस्य। **नास्त्येवेति** फलभूतस्य निश्चयस्य ॥

ननु कृतकस्य तेजसो बुद्धौ विपरिवर्तमानत्वे यो यः कृतकः स सर्वोऽनुष्ण इति सर्वोपसंहारो न संभवत्येव। अपरिस्फुरति च तस्मिन् न तराम्[8]। न हि यद्यत्र न स्फुरति तदपि[9] तस्य विषय इत्यत आह—**सामान्येन यो यः कृतक** इति। अनेनाकारेण सोऽपि बुद्धौ विपरिवर्तत एव, न तु विशेषाकारेण व्याप्तिग्रहणविषयतामग्निरगादित्यत आह—**न तु निर्विभज्य** विशेषतो ज्ञात्वा **तेजोऽवयविनि** एव संबन्धोऽव-

१. °सिद्धिः M, अपि om J  २. सहासंभवे (?) अत्रैव सहसंभवादित्यत्र J, सहासंभव इहैव सहसंभवस्य दृश्यमानत्वा° A  ३. निरवकाशेति JA  ४. तत्रापीदं BM  ५. एव om JA  ६. व्यभिचारापक्ष° JMA  ७. °भिमतापक्ष° BM  ८. °न्नितराम् BM.  ९. एवादृष्टः J.

धारित इत्यर्थः। अथ सामान्याकारेणापि तेजोऽवयविनः किमित्यवकाशो देयो यावता पृथिव्यादावेव व्याप्तिरवधार्यतामित्यत आह—**न हीति**। न हि सामान्याकारेण व्याप्तौ गृह्यमाणायां प्रत्यक्षबाधात् प्रागेव तेजोऽवयविपरित्यागे काचिदुपपत्तिरस्ति, अन्यत्रादर्शनात्। तथा च न केवलं स एव न दृष्टः, पृथिव्यादयोऽपि केचिन्न दृष्टा एवेति[1] तेऽपि परित्याज्याः। एवं च गृहीत्वा गृहीत्वा[2] व्याप्तिर्ग्रहीतव्या। अदृष्टेषु व्यभिचाराशङ्कया न वेत्युभयथापि सर्वानुमानोच्छेदप्रसङ्ग[3] इत्यर्थः। स्वयमेव परः पक्षं गृह्णात्वित्यभिसन्धिना सुकुमारप्रकारमाह[4]—**न तावदिति**। न हि व्याप्त्यनपवादे व्यभिचारावकाशः समस्तीति हृदयम्। तर्हि तदपवादे सत्येव हेतोरनैकान्तिकत्वमस्त्वित्याशयवानाशङ्कते—**प्रत्यक्षेणेति**। इह व्याप्तेरपवादः पक्षतामपरिभूय, तत्परिभवे वा? तत्राद्यं तावद् दूषयति—**नेति**। प्रवृत्तानुमानाप्रतिरोधे व्याप्तेरपवाद इति कुतः? तत्प्रतिरोधं तु विपरीतप्रत्यक्षं न चेत् करोति, कोऽपरः करिष्यतीत्याशयः। ननु यदि पक्षेऽपि व्यभिचारः संभवति, स नोद्भाव्य इति कस्यायं दण्ड इत्यत आह—**अन्यथेति**। न न पक्षधर्मतामपरिभूय प्रत्यक्षेण व्यभिचारः शक्यग्रहः, न ह्यस्ति संभवः संदिग्धसाध्यधर्मा धर्मी तद्विरहेण निर्णीतश्चेति शून्यहृदयं प्रति तु प्रतिवन्दिरित्यर्थः। प्रत्यक्षेण पक्षधर्मतापरिभवाद् व्यभिचारो भविष्यतीत्याशङ्कते—**प्रत्यक्षेणेति**। निराकरोति—**तर्हीति**। यथा हि साध्यविपरीतप्रवृत्तिरेव साध्यनिवृत्तिः, तथा विपरीतप्रमाणप्रवृत्तिरेव साधननिवृत्तिः। अन्यथा विपरीतप्रमाणप्रवृत्तावपि यदि साधकं न निवर्तते तदा तदायत्तं साध्यमपि न निवर्तेत, तदनिवृत्तौ तु न पक्षत्वक्षतिरिति न व्यभिचारावकाश इत्यर्थः॥

सिद्धमर्थं **वार्त्तिके** समर्पयति—**तदिदमुक्तमिति**। ननु यदि नामानुमाननिवृत्तेः पूर्वमपक्षधर्मत्वं व्यभिचारो वोद्धारयितुं न शक्यस्तथापि तदुत्तरकालं तावच्छक्यत एव, ततस्तावेव स्ताम्, कृतमपहृतविषयत्वेनेत्यत आह—**एवं चेति**। यावद्धि प्रत्यक्षविरोधेनानुमानं न दूष्यते, तावद् व्यभिचाराद्यवकाशो नास्त्येव। ततः सावकाशावेतौ[5] प्रत्यक्षविरोधमुपजीवतः। तेन चेद् दूषितमनुमानम्, किमाभ्याम्? न हि मृतोऽपि मार्यत इति सिद्धान्तसंक्षेपः॥

नन्वश्रावणः शब्द इत्येवं[6] ब्रुवाणः कथं शब्दासत्त्वमभिप्रेयात्, यावतेन्द्रियान्तरग्राह्यमेव किमिति नाभिप्रैति? अथ तत्र विरोधोऽस्ति, तत् किं स्वरूपापलापे स नास्ति?

---

१. एव om BM. २. दृष्ट्वा दृष्ट्वा J ३. प्रसङ्ग om JA. ४. ०प्रकार० om JA ५. ०काशायतौ A. ६. एवं om BM.

तस्मादभिप्रायः परस्य नियन्तुं न शक्यत इत्यत आह—**न हीति**। इन्द्रियान्तरव्यापारव्यभिचारात् [1]तद्ग्राह्यत्वविनिश्चयपक्षे स्वरूपापलाप एवाभिप्रेतः। [2]तत्रैवेदमुदाहरणमित्यर्थः। [3]बलितपूर्वपक्षादलनादलग्नकं[4] वार्त्तिकं निवेशयितुं पीठमारचयति—**सविशेषणे हीति**। विशिष्टविधानमपि इत्युपलक्षणं विशिष्टनिषेधोऽपि द्रष्टव्य इति। **अगतिः** प्रमाणान्तरादलाभः। लौहित्यविशिष्टमुष्णीषं विधीयते। जीर्णतामलवत्ताविशिष्टं वासः प्रतिषिध्यते। नञा समसितश्रावणपदश्रवणं श्रुतिः। विशेषणविशेष्यभावावस्थितपदसमूहो वाक्यम्, तयोः सामर्थ्यात्। एतदुक्तं भवति, समासे नञ्[5] उत्तरपदार्थनिषेधार्थः, तत्रैवास्य सामर्थ्यं वाचकत्वं यतः। असमासपक्षेऽपि समानाधिकरणयोर्विशेषणविशेष्ययोर्मध्ये विशेषणेनैव नञ् संबध्यते, तत्रैवास्य सामर्थ्यमन्वययोग्यता यतः। तदिहोभयथापि सङ्केतबलादन्वययोग्यताबलाद् वा न नञः शब्दपदेन संबन्ध इति॥

स्यादेतत्। श्रूयमाणस्य नञः श्रावणपदेनैवास्तु संबन्धः, शब्दनिषेधस्त्वर्थादापद्यत इत्यत आह—**नापीति**। श्रूयमाणो [6]ह्यर्थो येन विना नोपपद्यते स तेनाक्षिप्यमाणोऽर्थाद् आपद्यत इत्युच्यते। न चोपपादको विरोधी नाम। स ह्यनुपपादक[7] एवेत्यर्थः। विरोधमेव द्योतयति—**श्रावणत्वेति**। ननु कल्पितेनाप्यधिकरणेन निषेधनिरूपणमुपपद्यते, तस्य तुच्छत्वात्। तथा च नासत्त्वाधिकरणत्वयोर्विरोध इत्यत आह—**न चेति**। एवं व्यवस्थिते वार्त्तिकार्थं [8]द्योतयति—**न च श्रावणत्वमिति**। शब्दश्रोत्रयोः संबन्धः शब्दग्रहणोपायभूतः॥

ननु यदि संबन्धः, कथं **वार्त्तिककारो** वृत्तिरित्याहेत्यत आह—**वृत्तिरिति**। ननु न साक्षाद् वेदे नरशिरः कपालशौचं श्रूयते। प्रत्युत,

रुद्रो ह वा महाव्रतं चचार। स एव नरशीर्षमुपसंदधार इति विपरीतैव श्रुतिः। अतः कथमागमविरोध इत्यत आह—**मन्वादिभिरिति**। यद्यप्यस्मिन्नर्थे न साक्षात् श्रुतिः प्रतीयते, तथापि तन्मूला स्मृतिरेव स्फुटतरा प्रमाणम्। रुद्रो हवेत्यादि त्वर्थवादमात्रं नरमेधादौ प्राशस्त्यप्रतिपादनार्थम्, नास्य शुचितायां प्रमाणं भवतीत्यर्थः। ननूपदर्शितमागमं दृष्ट्वापि कुतः पृच्छतीत्यत आह—**नास्माकमिति**। अत्र वस्तुनि शब्देतरप्रमाणगोचरे आगमान्तराणामप्रामाण्यादित्यर्थः। कुतः पुनरस्य निर्घृणस्य कपालशौचाभि-

---

१. तदा···त्व M. २. °त्र चेदं A, एव om BM. ३. दर्शित° BM; बलित° Prakāśa, J ४. पक्षदलनालग्नकं JA ५. नञ °घोर्थ° om JA ६. हि om J ७. ह्युपपादक MC ८. घटयति B

मान इत्यत आह—**अविगीता हीति**। न ह्यागमादेव धर्मादिविनिश्चयोऽपि त्वविगीताद् व्यवहारादपि। स चास्माकमप्यस्ति। न च वाच्यं सार्वत्रिको व्यवहारः प्रमाणम्। यथा कन्यापरिणयनविधौ पुरन्ध्रीणामाचारः। प्रादेशिकस्त्वयमित्याशङ्क्योदाहरणं कृतम्—**दाक्षिणात्यानामिवेति**॥

उपहासे बीजमाह—**श्रुतिस्मृतीति**। [1]आह्नैवुकादिक्रिया आम्नायमूला अविगीतवेदार्थानुष्ठातृव्यवहारत्वादग्निहोत्रादिवदिति प्रयोगः। अथ श्रेयोहेतुतैवास्याः कुतो नावसीयत[2] इत्यत आह—**न खल्विति**। यद्यपि शक्यत एवैतदापाततः, तथापि निर्मूलत्वशङ्काकलङ्कितत्वेनानुष्ठानपर्यन्ततां न यायात्[3]। अतो मूलानुमानमेव साधीय इत्यर्थः। न वेदानुमाने[4] मूलं लिङ्गमित्यर्थः। किमुक्तं भवति शुचीत्यनेन पुनरुक्ततां परिहरन्नाह—**अपि चेति**। **अथ त्रयीविद्वेषादिति**। न च वाच्यम्, यावति विवादस्तावानेवार्थः पक्षः। गोमयादेस्तु शुचित्वमुभयवादिसिद्धमतस्तावदेव दृष्टान्तयिष्यत इति। तस्यापि शुचित्वं नागमप्रामाण्यमनभ्युपगम्य शक्यमभ्युपगन्तुमिति चोदयति—**अथेति**। व्युत्थिताभिसन्धेः प्रश्न इत्यर्थः। अभिसन्धिमाह—**न खल्विति**। नन्वेकस्मिन्ननुमानद्वयसमावेशो विरोधश्चास्त्येव तत् कथमभावादित्यत आह—**अयमभिसन्धिरिति**। न हि पूर्वप्रवृत्तेन यदेव तदेव बाध्यते, अनियमप्रसङ्गात्, अत उक्तम्—**तद्बलभावीति**। [5]स्वसिद्ध्यर्थं स्वाश्रयसिद्ध्यर्थं स्वव्यापकसिद्ध्यर्थं च[6] तदपेक्षमित्यर्थः। [7]स्वव्यापकसाधकेन बाधितमुदाहरति—**यथोक्तमिति**। **ज्ञानाकारालीके** इति द्विवचनम्। धर्मिसाधकेन[8] बाधितमुदाहरति—**एवमिति**। स्वसाधकेन बाधितं तु[9] यथैकसन्ततिपतितानि ज्ञानानि [10]एकप्रतिपत्तृविरहेऽपि प्रतिसन्धानयोग्यानि कार्यकारणभावादित्यपि[11] द्रष्टव्यम्॥

न ह्यत्र कार्यकारणभाव एकप्रतिपत्रभावे[12] सिद्ध्यति। क्व तर्हि असमावेशो यदभिसन्धायाह—**समावेशाभावादित्यत** आह—**तस्मादिति**। समस्तरूपोपपत्तिः सामर्थ्यम्। समावेशपक्षेऽवश्यमन्तत एकतरस्यान्यतररूपहान्या भवितव्यम्। अन्यथा

---

१ गोमयमयीं देवतां दूर्वादिभिरभ्यर्च्य ज्ञातित्वकल्पनमाह्नैवुकमित्येके। मङ्गलवारे दधिमन्थनमित्यन्ये। प्रतिदिनं तण्डुलमुष्टिं मासमेकं भाण्डे निक्षिप्य घृतेन तेनापूपमेकं कृत्वा देवतापूजनमित्यपरे। एकपात्रे बहूनां भोजनमाह्नैवुकमित्युच्यते दाक्षिणात्यैरिति श्रीकण्ठः॥
२. नानुमीयते J ३. पर्यन्ततानपापायात् B ४. °मान° J ५. °स्वप्र° J
६. वा J ७. स्व om J ८. साधक° J ९. तु om J १०. °कर्तृ° BJA
११. अपि om JA १२. प्रतिसन्धात्र° JA

तदेकं वस्तूभयात्मकमनुभयात्मकं वा स्यात्। तस्माद् वस्तुतस्तुल्यबलयोर्विरुद्धयोः समावेशो नास्ति। समाविष्टयोश्च[१] न वास्तवी तुल्यबलतेत्यर्थः॥

तत् किमिदानीं सत्प्रतिपक्षता नास्त्येवेत्यत आह—**न हीति**। एवमेतद् वस्तुतः सत्प्रतिपक्षता नास्त्येव[२], किं त्वगृह्यमाणविशेषावस्थायां प्रमानुत्पादकत्वं[३] परस्परप्रतिक्षेपेण[४]। अतः स एव दोषत्वेनोपनिबद्धो मुनिनेत्यर्थः। एतदेव **वार्त्तिक**मुखेन दर्शयति—**कस्मात् पुनरिति**। अनुमानयोरुक्तरूपयोरन्वयव्यतिरेकसंपन्नयोरपि समावेशदर्शनात् यथाश्रुत**वार्त्तिक**मसंगतमित्यत आह—**इहेति**। अबाधितविषयेण सह प्रत्यक्षादीनामपि समावेशो नास्ति। ततस्तेभ्यो न कश्चिदनुमानस्य विशेष उक्तः स्यात्। अतस्तद्रूपपरिहारेणोपलक्षणम्॥

ननु यथा अगृह्यमाणविशेषावस्थायामनुमानयोः सत्प्रतिपक्षत्वं तथा प्रत्यक्षानुमानयोरप्यस्तु ततः क्व बाध्यबाधकभावः? अथ विशेषेण गृहीते प्रत्यक्षमनुमानस्य बाधकमिष्यते, अनुमानमप्येवमिष्यताम्। तथा च परस्परनिरपेक्षयोरनुमानयोरपि बाध्यबाधकभावोऽस्त्वित्याशयवान् चोद्याभिप्रायमाह—**प्रत्यक्षमपीति**। परिहाराभिप्रायमाह—**तुल्यबलौ हीति**। प्रत्यक्षं हि नानुमानस्यान्यथासिद्ध्यनन्यथासिद्धी प्रतीक्षते। किं तु स्वयमनन्यथासिद्धं सदनुमानमास्कन्दत्येव, यथोष्णत्वग्राहिणानन्यथासिद्धेन प्रत्यक्षेणानुष्णत्वानुमानमनौपाधिकतया [५]बाधकज्ञानात् पूर्वमनन्यथासिद्धमप्यास्कन्दितम्। तदेतदनयोर्हीनाधिकबलत्वम्। अनुमानं तु स्वयमनन्यथासिद्धमपि [६]सत्प्रतिपक्षानुमानस्यान्यथासिद्धिं प्रतीक्षते। न ह्यनन्यथासिद्धं तत्त्वेन बाधितुं शक्यते अविशेषात्। तदेतदनयोस्तुल्यबलत्वम्। न चानन्यथासिद्धेनाप्यन्यथासिद्धं [७]बाध्यतामिति युक्तम्, तस्यान्यथासिद्धत्वेनैव दूषितत्वात्। न च यत्र प्रत्यक्षमन्यथासिद्धं तत्रानुमानेनावश्यमन्यथासिद्धेन भवितव्यम्, उभयोरनन्यासिद्धौ वस्तु दुस्तरं व्यसनमासादयेत्, [८]ततस्तदपि तेनैव परिभूतम्, किं [९]तत्र प्रत्यक्षबाधयेति वाच्यम्। तदन्यथासिद्धेः प्रत्यक्षबाधोत्थाप्यत्वादिति विशेषः[१०]। तस्माद् यावत् प्रत्यक्षस्यानन्यथासिद्धत्वं नावधार्यते, तावत्कालमेव तत्र निर्णयानुदयः सत्प्रतिपक्षरूपतां[११] प्रतिरूपयति। तदुत्तरकालं तु किं वराकमनुमानमित्यर्थः। तदिदमुक्तम्—**प्रत्यक्षमनन्यथासिद्धमिति**। उपदर्शितप्रकारादन्येन प्रकारेण[१२] व्यवस्थापयितुमशक्यम्

---

१. ॰स्तु B २. एव om JA ३. ॰नुत्पादकत्वे B ४. ॰क्षेपात् JA ५. बाधक…पूर्वम् om JA ६. सत्यनु॰ J ७. बाधताम् M ८. तदपि om M ९. तत्र om J १०. ॰पजीव्यत्वादिति विशेषात् JA ११. अनुदयात् तत्प्रतिपक्षतां B १२. प्रकारेण om BM

इत्यर्थः। अन्यप्रकारव्यवस्थापनं च विषयसंकोचमात्रेण न बाधकं विना भ्रान्तत्वेनापि। तथा सत्यतिप्रसंगादिति ॥

अथोपमानेत्यादि चोद्यं संभावयति **गोसदृश इति**। ननु नोपमानविरुद्धमिति विप्रतिपत्तिरेव संप्रतिपत्तिर्नागरिकलोकसंप्रदायेनेत्यत आह—**न भवतीत्यनुषज्यते**। **चोद्यवार्त्तिकस्थमिति** शेषः। अनन्यथासिद्धप्रत्यक्षागमसमुत्थापितमुपमानमनुमानेन यदि बाध्यते सत्प्रतिपक्ष्यते वा, तदा तथाभूतौ प्रत्यक्षागमावेवाबाधितौ सत्प्रतिपक्षितौ वा स्याताम्। तथा च[१] सति सर्वं समाकुलमापद्येत। तस्माद् यथा ताभ्यामनुमानमपनुद्यते तथा तदुत्थापितफलशरीरेणोपमानेनापीति **टीकोपबृंहितस्य वार्त्तिकस्यार्थः** ॥

प्रयोजनस्वरूपेति भ्रान्तस्याक्षेप इति विवरणफलम् **प्रयोजनव्याख्यानाङ्गमिति**। **वादजल्पौ सप्रयोजनावित्यादि[२]भाष्ये** यद्यपि प्रयोजनमङ्गतया श्रूयते तथाप्यङ्गि प्रत्येतव्यम्[३]। तेनायमर्थो **भाष्यस्य**, प्रयोजनं तावद् वादजल्पौ व्याप्नोति, वितण्डां तु व्याप्नोति न वेति चिन्त्यत इति विवरणार्थः ॥

ननु वादजल्पयोः प्रयोजनवत्त्वसिद्धौ वितण्डायास्तच्चिन्त्येतापि, तयोरेव तु प्रयोजनवत्त्वं केन **भाष्येण**[४] प्रतिपादितमित्यत आह—**तत्र शब्दार्थमिति**। वक्ष्यति हि पृथगुपदिष्ट[५] उपलक्षणार्थम्, उपलक्षितेन व्यवहारस्तत्त्वज्ञानार्थं भविष्यतीति। स च व्यवहारो हेत्वाभासेभ्यो हेतोर्विवेचनलक्षणोऽवान्तरप्रयोजनमपि असाधारणतयेह तत्रशब्देन **भाष्यकारस्य** विवक्षितमतस्तदेव **वार्त्तिककृता** व्याख्यातमित्यर्थः। ननु तथापि तत्र न्याये विवेचयितव्ये इति युक्तं वक्तुम्, न हि न्यायाभास एव विवेके[६] प्रधानमित्यत आह—**न्यायाभास इति तु सन्निधानादिति** ॥

तदनेन विचारविषयो विविच्य दर्शितः। परीक्षापूर्वरूपं संशयं दर्शयितुं तत्कारणतया व्याख्यातृविप्रतिपत्तिमाह—**प्रतिपक्षेति**। परीक्षायाः प्रयोजनमाह—**तत्र यदीति**। पूर्वपक्षः—**तत्र केचिदिति**। सिद्धान्तः—**परपक्षसाधनेति**। यद्यपि परपक्षदूषणेनापि प्रयोजनेन वितण्डायाः सप्रयोजनत्वं[७] सिद्ध्यति,

यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्[८]।

इति वचनात्, यदि च[९] परपक्षदूषणमपि नाधिकुर्यात् तदा वैतण्डिक एव न स्यात्।

---

१. च om JA २. आदि om BM ३. ॰व्यङ्गिता प्रत्येतव्या M ४. ॰पाद्यत BM ५. ॰गुद्दिष्टः J ६. विवेक॰ BM ७. प्रयोजनवत्त्वं BM ८. न्या. सू. १.१.२४ ९. तु J

तथाप्येतदेव स्वयं किञ्चिदप्यनभ्युपगच्छतो[1] न स्यादित्यतः[2] पारिशेष्यादपि स्वपक्षसिद्धिम् अभिसंदधानस्यैव प्रवृत्तिर्युक्तेत्याशयः। ननु नास्त्येवासौ वादी[3] यः किञ्चिदपि नाभ्युपगच्छेत्, अन्ततो नञर्थस्यैवाभ्युपगमात्। तदनभ्युपगमे तु किञ्चिदपि नाभ्युपगच्छामीत्येतदपि न ब्रूयात्। तस्मात् किमनेनासदुद्भावनेनेत्यत आह—**नास्तिको हीति**। नास्तिको **माध्यमिकादिः**। अनेन हि परपक्षो नाभ्युपगम्यते न पुनः परपक्षप्रतिषेधो[4]ऽभ्युपगम्यत इत्यर्थः। तदिदमुक्तं परपक्ष[5]प्रतिषेधमात्रप्रयुक्तः प्रवर्तत इति। तथा हि नेदं जगदस्ति, बाध्यमानत्वात्। नापि नास्ति, प्रतीयमानत्वात्। नापि सदसद्रूपम्, विरोधात्। नाप्यनुभयरूपम्,[6] विरोधादेवाप्रतीतेश्चेति। ननु न हि यदेव प्रत्येति, तदेवाभ्युपगच्छति। तथा सति प्रतिवादिवचनार्थः प्रतीतश्चेदभ्युपगतः स्यादिति मतानुज्ञा निग्रहस्थानम्। अप्रतीतश्चेदज्ञानं निग्रहस्थानम् इत्यायातमित्यत आह—**प्रतिपत्तिरभ्युपगमः**। इह विवक्षित इति शेषः। तथाप्यभ्युपगमविषयत्वादेव न पक्षस्तस्य ज्ञाप्यत्वादित्यत आह—**यद्यपीति**। **तन्नान्तरीयकत्वादिति** अभ्युपगमनान्तरीयकत्वात्। ज्ञाप्यतायाः पक्षशब्देन सिद्धान्तोऽत्र विवक्षित इत्यर्थः। असिद्धविरुद्धत्वादिदोषो वाद्युक्तसाधनविषय इति शेषः[7]॥

[8]अदृष्टान्तस्यापि साधनविकलादेः प्रत्यक्षविषयत्वादित्यतिव्याप्तिः। आगमादिविषयस्यापि व्याप्तिग्रहणगोचरस्य दृष्टान्तत्वादित्यव्याप्तिः। ननु तथाप्यतिव्याप्तिरेवेत्यत आह—**अत्र चेति**। संमुग्धं **वार्तिकं** विवेचयति—**यत्तेषु तेष्विति**। अथ लक्षणसूत्रव्याघात एव कस्मान्न भवति, यावता तदपि प्रत्यक्षाप्रत्यक्षसाधारणमित्यत आह—**न तूदाहरणेति**। साधारणं विशेषविषयतयापि शक्यं व्याख्यातुमित्यर्थः॥

तत् किमिदानीं[11] भाष्यमलग्नकमेवेत्यत आह—**तस्मादिति**। नन्वनुमानात् कोऽपरो न्यायो येनानुमानाश्रयतामुक्त्वापि न्यायाश्रयतां दृष्टान्तस्य पृथगाह **भाष्यकारः**, **वार्तिककारोऽपि** तथैवानुमन्यत इत्यत आह—**न्यायस्य पञ्चावयवात्मकस्येति**। तथाप्याश्रयत्वं संयोगसमवायाभ्यां दृष्टान्तस्य न घटते, वाक्यस्याकाशाश्रयत्वादित्यत उक्तं —**मूलमिति**। तथाप्यनुमानाश्रयत्वं दृष्टान्तस्यासंगतं लिङ्गस्य पक्षाश्रयत्वात् तज्ज्ञानस्य चात्माश्रयत्वात्। अत उक्तम्—**अनुमानं निमित्तत्वमाहेति**। पूर्वप्रत्यक्षदृष्टमिति यथाश्रुतं वह्याकुलयतीत्यत आह[12]—**दृष्टान्तेति**। एवं च सत्यनुमाननिमित्तत्वात् पक्षस्यापि

१. ॰प्यनधि॰ J २. इति om JA ३. वादी om JA ४. निषेधो॰ J ५. निषेध॰ BM ६. ॰देव प्रती॰ B ७. विशेषः J ८. अथ दृष्टान्त॰ A ॰विषय॰ om J ९. भाष्यभग्नमेवेदं नेत्यतः JA १०. उक्तम् J ११. ॰विधानं BM १२. एव om JA

पृथगभिधानं[3] स्यादिति न चोद्यम् । सिद्धान्ताभिधानेनैव[4] गतार्थत्वादिति । ननु शब्दे दृष्टान्तापेक्षा नास्त्येव,

अग्निष्टोमेन यजेत स्वर्गकामः

इत्यादौ तमन्तरेणैव वाक्यार्थप्रतीतेरित्यत आह—**संबन्धग्रहणविषय** इति । संबन्धग्रहणविषयतामात्रेण दृष्टान्तत्वं विवक्षित्वेदमुक्तम्, न पुनर्व्याप्तिलक्षणसंबन्धविशेषग्रहणविषयतयेत्यभिप्रायः । यत्तु तत्प्रमाण्ये तद्विषयगोचरानुमानाभिप्रायेण दृष्टान्तापेक्षा आगमस्याप्यस्तीति **कैश्चिद्** व्याख्यातं तत् पूर्वं ज्ञातं चार्थं[1] परस्मा[2] आचष्ट इति वदता **वार्तिककृतैव** अपास्तम् । अतस्तदुपेक्षितवानिति ॥

अत्रार्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षातन्त्रत्वादर्थाभ्युपगमोऽभ्युपगम्यमानो वार्थः सिद्धान्तः । तेन **सूत्रभाष्यवार्त्तिकटीका**सु मिथो न विरोधः । इदमित्थंभूतशब्दयोर्विशेषणविशेष्यभावभ्रमं निवारयति—**इदमितीति** । **न तु पुरुषविशेषे व्यवस्थापयतीति** । व्यवस्थाशब्दो न पुरुषविशेषे अभ्युपगमनियममाह—किं तर्ह्यनभ्युपगमसमुच्चयं निराकुर्वन् स्वरूपनियममित्यर्थः । ननु वादादिप्रवृत्त्यर्थं प्रतितन्त्रसिद्धान्त एवोपयुज्यते, तत् किमपरैरित्यत आह—**तथेति** । ननु यत एव सर्वतन्त्रसिद्धान्तो न विप्रतिपत्तिविषयः, अत एव न वादादिप्रवृत्तिहेतुरित्यत आह—**तथा हीति** । यद्यपि स्वरूपेण सर्वतन्त्रसिद्धान्तो न वादादिप्रवृत्त्यङ्गम्, तथापि प्रतितन्त्रादिसिद्धान्तोत्थापनद्वारा न्यायाश्रयतया चोपयुज्येत इत्यर्थः । एतेनैव प्रतितन्त्रसिद्धान्तप्रयोजनं छलतः प्रकटीकृतम् । **किमाश्रयश्च न्यायः स्यात्** ? असति सर्वतन्त्रसिद्धान्त इति शेषः । अधिकरणसिद्धान्तप्रयोजनमाह—**तथेति** । साध्यसामान्यव्याप्तं साधनसामान्यमिति साधनविशेषात् साध्यविशेषः कथं गम्येतेति योजना । अयमर्थः । अधिकरणसिद्धान्तेन हि फलेन विषयेण वा पक्षधर्मता[3] फलवती विषयवती वा स्यात् । तदभावे तु सा निष्फला निर्विषया वा, तथा च व्याप्तिरपि सामान्यविषया सती केवला सामान्यमात्रमुपनीय पक्षे कथं व्यवस्थापयेत् ? अव्यवस्थाप्य च कथं कृतार्था स्यात् ? तथा चानुमानमात्रम् उच्छिद्येत । एवं च क्व न्यायः ? क्व वा वादादय इति ? तस्मादधिकरणसिद्धान्तोऽपि पक्षधर्मताफलविषयतया अवश्यं व्युत्पादनीयो येन व्याप्तिरपि तत्सहाया सती फलवती स्यादिति ॥

मुख्यमर्थं गृहीत्वा शङ्कते—**नन्विति** । भक्त्या च वृत्त्या परिहरति—

---

१. ज्ञात्वार्थं BM २. आचक्षते N. Vart. P. 47 ३. नापक्ष° B

अवयवा इवेति । भक्तिमाह—**यथा हीति**, क्रियोदाहरणं—**सोमेनेति**, सोमपदस्य कर्मनामधेयत्वात् । धात्वर्थमात्रविवक्षया च[1] कारकपदात्[2] पृथगभिधानम्, वस्तुतस्तु सोमस्यापि कारकत्वमेव । **गोदोहनेनेति** कारकोदाहरणम्, अपः प्रणयनस्य वाक्यान्तर-प्राप्तत्वात् । प्रातिपदिकार्थोदाहरणम्—**यस्येति**, व्रात्यशब्दस्यार्थवतोऽधात्वप्रत्ययरूप-त्वात् । तथापि न समूहो व्युत्पादित इत्यत आह—**तदनेनेति** । ननु विशेषप्रत्यय-हेतवोऽवाक्यभूता अपि सन्तीति अनेनाभिप्रायेण पृच्छति—**क्व इति** । प्रत्ययस्य प्राधान्यं निराकुर्वन्नेव प्रत्ययपदोपादानप्रयोजनमाह—**न च तदिति** । विशेषणासिद्धिं परिहरन्नाह—**प्रतीतिश्चेति** ॥

अथानुभव एव कस्मान्न भवति ? न ह्यन्त्यपदं[3] नानुभूयत एव । तथा सति स्मर्येतापि कथमित्यत आह—**न हीति** । तथाप्येवंभूतस्यापि पदस्य स्मृतिरनुभूति-मन्तरेण न स्यादित्यत आह—**संभवन्ति त्विति** । अस्तु तर्हि तदनुभव[4] एवार्थ-प्रतीत्यङ्गमित्यत आह—**न चैत इति** । तदनेनानुभव[5] एवार्थप्रत्यायनाङ्गमिति निरस्तम् । अनुभवस्मृतिसमुच्चयं निराकरोति—**न च पूर्वेति** । स्मृत्यनुभवयोस्तु स्यात् सहभाव इत्यनुषञ्जनीयम् । एतच्च उपान्त्यान्त्यवर्णानुभवान्तराले[6] स्मृत्यभ्युपगमेन द्रष्टव्यम् । यदि तु वर्णानां निरन्तरोत्पादवतां निरन्तरा एवानुभवास्तदा विनश्यदविनश्यदवस्थयोः उपान्त्यान्त्यानुभवयोरेव सहभावः शङ्कनीयः, निराकरणीयश्चोक्तयुक्त्या । अतो न पृथगाशङ्कितः **टीकाकृता** । कारणसमुच्चयवशाद् विषयासमुच्चयवतः प्रत्ययस्य स्वरूपसमुच्चयं परस्वीकृतं शङ्कते—**न च पूर्वेति** । निराकरोति—**संबन्धेति** ॥

यद्यपि सहकारिलाभादपरः संस्कारस्योद्बोधो नाम नास्ति, तथापि न यः कश्चित् प्रत्ययः तस्य सहकारी, [7]सर्वदा सर्वसंस्कारोद्बोधे सर्वस्मृतिप्रसङ्गात् । नापि सङ्केत-विशेषस्मरणे पदैकदेशवर्णानुभवस्तत्संस्कारस्य सहकारी, तथा सत्यतिप्रसङ्गात् । तस्मात् पदत्वेन प्रतिसन्धानमेव समयस्मृतिहेतुसंस्कारस्य सहकारीत्युपगन्तव्यम् । तथा चैक-प्रघट्टकेनापि विचित्रज्ञानेन विषयीकृता वर्णाः खण्डशः पदभावेन प्रतिसन्धेयाः, अर्थ-संबद्धत्वेन स्मर्तव्या इति कुतोऽनुभवावकाशः इत्यर्थः । प्रक्रिया तु, अन्त्यवर्णानुभवस्यो-त्पादः, तत्संस्कारपदत्वप्रतिसन्धानयोरुत्पद्यमानतेत्येकः कालः । अथ तयोरुत्पादः, स एव पदप्रतिसन्धानोत्पादात्मा[8] समयसंस्कारोद्बोधः संबन्धस्मरणस्योत्पद्यमानता [9]संस्कारो-

---

१. तु BM २. कारकात् JA ३. अन्य° M ४. अर्थ° om BM ५. °प्रतीत्यङ्ग° BM ६. °च वर्णान्तराले BM ७. सर्वदा om BM ८. °संधानात्मा BM ९. संस्काराद् BMA

द्बोधाद् विचित्रप्रत्ययस्य विनश्यत्तेत्येकः कालः। अथ [1]संबन्धस्मरणोत्पादः विचित्रप्रत्ययस्य विनाशः [2]पदत्वानुसंधानस्य विनश्यत्तेत्येकः कालः। न चैतदद्दृष्ट[3] कल्पनमित्याह—**अत एवेति**॥

नन्वेकप्रघट्टकेन विचित्रप्रत्यय एवानुसंधानात्मा भविष्यति, करिष्यति च समयस्मृतिं तथाविधाम्। [4]अथापि पूर्वस्मृतिरशेषपदावगाहिन्येकैव स्वीकर्तव्या इत्यत आह—**एवं चेति**। अनुभूतं हि प्रतिसंधीयते, न तु प्रथमत एव, तथा च पूर्ववर्णाणामनुभूतत्वेन पदत्वानुसंधानसंभवेऽपि अन्त्यवर्णस्याननुभूततया नान्त्यपदप्रतिसंधानसंभवः। न चानुभवानुसंधानयोरेककालता, कार्यकारणभावात्। तस्मात् तदनन्तरमेव पदत्वानुसंधानमिति सुष्ठूक्तं, यदा पदार्थप्रत्यायनेऽनुभवो[5] न कारणमिति तदौपयिकस्मृत्युत्पत्तौ तु कारणमेवेति। अवधारणादीत्यत्रादिशब्देन तेषां स्मरणं विवक्षितम्। प्रकरणादयस्तु योग्यताविशेषत्वात् तत्रैवान्तर्भूता इति तत एव वाक्यार्थप्रतीतेरुपपत्तेः, अनुपपत्तौ त्वसिद्धिर्लक्षणस्य दोष इत्याशयः॥

ननु क्रमानुभूतानामप्येकस्मृतिसमारोहः संभवत्येव, किं तु पदानि क्रमेणापि नानुभूतानीत्यत उक्तम्—**निरन्तरेति**, निरन्तरस्मृतिभिर्विषयीकृतानि तत एकस्मृतिसङ्कलितानित्यर्थः। नैरन्तर्यं च स्मृतीनां सन्निकर्षाद्[6] बोद्धव्यम्। नन्वेतावतापि असिद्धमेव लक्षणम्। न ह्येवंभूतमप्यन्त्यपदं विशेषप्रतिपत्तिहेतुरित्याशयवानाह—**स्यादेतदिति**। ननु प्रत्येकं व्यभिचारे हि[7] परस्परानुग्रहः स्यात्। न च पदकदम्बकप्रतिसंधानवत् तदर्थस्मृतिरपि [8]तथाविधां वाक्यार्थप्रत्ययोत्पत्तिं प्रति व्यभिचरतीत्यत आह—**एतदुक्तं भवतीति**। अयमाशयः, न तावत् पदार्था एव वाक्यार्थे प्रमाणम्, सर्वदा तत्प्रतीतिप्रसङ्गात्। नापि त एव स्मृताः, प्रकारान्तरेणापि स्मृतानां तथाभावप्रसङ्गात्। नापि त एव पदैः स्मारिताः, पदानां पदार्थस्मरणमात्रोपयोगे[9] पूर्ववत् [10]प्रतीतिप्रसङ्गात्। वाक्यार्थप्रतीत्युपयोगे तु तेषां कथं न तद्धेतुत्वम्। तथापि गुणप्रधानभावविनिगमनायां को हेतुरिति चेत्? असाधारणकारणत्वं पदानाम्। तदर्थानां तु अतीतानागतादिरूपतया कारणत्वमेव नास्ति, कुतोऽसाधारणत्वम्? अत एव न [11]स्मृतिस्तेषां व्यापारः, किं तु

---

१. समय° J २. पदानु° JA ३. °दसांदृष्टिक° JA ४. °न्यथा पूर्वस्मृतिः B, अन्यथापि स्मृतिः J, अन्यथा स्मृतिरप्यशेष° A ५. पदार्थप्रत्यायन एव पदानु° B ६. सन्निकर्षे BM ७ हि om JA ८. °विववाक्या° J ९. °स्मरण एवोप° BM १०. प्रतीति° om JA ११. तत्स्मृतिः J

कारणीभूतानां पदानामेव । तथा च व्यापाराव्यभिचारमादाय निर्व्यापारावस्थायां[1] व्यभिचारवतामकारणत्वाभ्युपगमो बहुव्याकुलयतीति ॥

**प्रतिसन्धीयमान** इति वार्त्तिकनिराकरणीयमतिव्यापकत्वं दर्शयति—**यदीति** । निष्पत्तेर्भेदं दर्शयितुं पुनः[2] सिद्धिर्व्याख्यानमनुवदति—**वास्तव** इति । **न हि प्रतिज्ञावचनं निश्चायकं** विशिष्टस्येति [3]शेषः । हेतुवचनादिवैयर्थ्यात् वैयर्थ्यप्रसङ्गात् । साधनस्य न्यायः प्रवृत्तिप्रकारः । स च **नानुपलब्ध** इत्यादिभाष्ये दर्शितः । तस्यातिपातोऽभाव एव । तमेव व्युत्पादयेत् प्रधानतयेति शेषः । तस्य च न्यायविशेषस्य आत्मादिविषयस्येत्यर्थः । अलौकिकोपचारत्वात् प्रयोजनमाह—**आगमोपचारस्येति** । **अर्थसंवादेनेति** करणे तृतीया । आगमविरोधशङ्कानिवृत्तिरनुग्रहः । दृढभूमिश्च संस्कार आगमैकविषयत्वात् । सप्रयोजनश्च भवति निःश्रेयसेन प्रयोजनेन प्रयोजनवांश्च ज्ञातो भवतीत्यर्थः । कुतः ? **आगमार्थज्ञानस्येति** । **निरूढत्वात्** प्रसिद्धत्वादित्यर्थः । तत् खलु[5] हेतुवचनमनुमानप्रतिपादकं परामृश्यमानलिङ्गप्रतिपादकं यदि स्यात्, तदा विषयतयानुमानेन परामृश्यमानेन लिङ्गेनानुग्रहीतव्यम् । न च तस्य परामृश्यमानं लिङ्गं विषय इति भावः ॥

ननु यदेव दृश्यमानं लिङ्गं हेतुवचनस्य विषयः, तदेवानुमितिभावकमित्यत आह—**न च लिङ्गदर्शनमात्रमिति** । दृश्यमानलिङ्गमात्रमिति[6] । **अपि तु संबन्धस्मृतिसहकारीति** परामृश्यमानं लिङ्गमित्यर्थः । तदिदमुक्तम्—**तस्मान्न[7] लिङ्गवचनमनुमानप्रतिपादकमिति** । द्वितीयदर्शनविषयलिङ्गं प्रतिपादकं न परामृश्यमानं लिङ्गं प्रतिपादकमित्यर्थः । व्याख्यानं ग्रन्थानुरोधादस्फुटमित्याशयवानाह—**एतदुक्तं भवतीति** । एवं च तत्प्रतिपादकस्य [8]तद्विषयप्रतिपादकस्येत्यर्थः । लिङ्गपरामर्शस्तावदनुमानम् । तस्य[9] च व्याप्तिस्मृतिसहकारितानुमितौ, द्वितीयलिङ्गदर्शनस्यापि व्याप्तिस्मृतिसहकारिता परामर्शज्ञानजनन एवेत्युभयोरपि संबन्धस्मृतिसहकारितासाम्यादनुमानत्वम् । ततस्तद्विषयलिङ्गस्यापि, ततस्तदनुगृहीतस्य [10]तद्वचनस्यापीत्यर्थः । किमस्योपचारस्य फलमित्यत आह—**एवं चेति** ॥

ननु प्रत्यक्षविषयस्य स्मृतितः[11] पुनरुपदर्शनादिति वक्तव्ये कुतो विपरीतमभिहितमित्यत आह—**यत्रेति** । यद्यपि पूर्वप्रत्यक्षविषयो दृष्टान्तः, तथाप्युदाहरणकाले तया स्मृत्यारूढ एव व्याप्रियत इत्येतावता तथैवोक्तमित्यर्थः । न केवलं प्रत्यक्षेण सहैक-

---

१. °वस्थाव्यभि° J २. पुनः om BM ३. विशेषः M ४. भाष्येण BM ५. वस्तु M ६. इति om BJA ७. लिङ्गप्रतिपादकमनुमानप्रतिपादक° JA ८. तद् om BM ९. च om JA १०. तद् om BM ११. स्मृतिः ततः BM

विषयत्वमुपचारे बीजम्, अपि तु समानव्यापारत्वमपीत्याह—**पुनरुपदर्शनात्** पुनः स्मरणात्। प्रत्यक्षमपि हि विप्रतिपत्तिं परिभूय व्याप्तिविषयतया दृष्टान्तं स्मारयति—**तद्वचनमपीति**। अपरमपि बीजमाह—**मूलभूतेति**॥

ननु यथा शब्दतदर्थयोरुपनये वार्तापि नास्ति, तत् कथमाह—**यथा तथेति**? अत आह—**उपनयो हीति**। यद्यपि निगमनेऽपि प्रमाणविशेषसमावेशोऽस्त्येव, तथापि जात्यभिप्रायेणायं विवक्षितः, न च तत्र चतुष्टयविजातीयं प्रमाणमस्तीत्यतस्तद्व्याख्यानात् पूर्वमेव परमत्वोपपादनाय समस्तप्रमाणविनिवेशनमाह—**सोऽयमिति**॥

[1]मूलसमवायाभावादौपचारिकः समवायो भविष्यतीत्यत उक्तम्—**प्रमाणानां वेति**। अध्यारोपो विनिवेशनं वा भ्रान्तिर्वा न संभवतीत्यत आह—**अध्यारोप** इति। सामर्थ्ये सति सहकारितया अन्यदपेक्षते, न त्वपेक्षैव सामर्थ्यमित्यभिप्रायवान् आह—**सामर्थ्य हीति**। **धर्मः** कारणत्वलक्षणः। तदनेन **किं पुनः सामर्थ्यमिति** पृच्छतोऽभिसन्धिः दर्शितः। उत्तराभिसन्धिमाह—**इह त्विति**। सामर्थ्याकांक्षयोः परस्परव्याप्तेराकांक्षैव सामर्थ्यशब्देनेह[2] विवक्षितेत्यर्थः। तदेवंरूपयोः समवायसामर्थ्ययोः प्रदर्शनेन फलं दर्शयति—**तदत्रेति**। प्रयोजनाभेदेऽप्याकांक्षाविरहितत्वात् वाक्यैकवाक्यत्वं न भवति[3]। यथा—

भगो वां विभजतु, पूषा वां विभजतु, अर्यमा[4] वां विभजतु इत्यादि। अत उक्तं विभज्यमानेति। आकाङ्क्षायामपि प्रयोजनानेकत्वे वाक्यैकवाक्यत्वं न भवति[5]॥ यथा—

स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि इत्यादि[6]। अत उक्तम्—एकं[7] प्रयोजनमिति। तदेनेन,

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्[8]

इति **जैमिनीयं**[9] वाक्यैकवाक्यतालक्षणमभिमतम्[10]। ननु यदि विप्रतिपन्नः वाक्येनैव परः[11] प्रतिबोधयितुं शक्यते, अथ वाक्ये तदर्थे वा विप्रतिपद्यमानः केनोपायेन बोधनीयः? वाक्यान्तरेण चेदनवस्थेत्यत आह—**यद्यपीति**। अनन्यथासिद्धप्रत्यक्षागमागोचराभिप्रायमेतदित्यर्थः। विकल्पः अनुवादविशेषः। तस्य प्रयोजनं विधिः प्रतिषेधो वा? अत्र चाक्षेपावसरे प्रतिषेध एव, विशेषप्रतिपादकत्वमिति वदता तत्त्व-

१. °समवायादौप° B २. इह om BM ३. विरहे वाक्यैकत्वं नास्ति JA ४. पूषा वां विभजतु अर्यमा om J ५. वाक्यैकत्वं नास्ति J ६. आदि om BM ७. एकं om BM ८. पूर्वमीमांसासूत्रे १.२.४६ ९. वाक्यैकत्वलक्षण° B १०. अभिहितम् BM ११. परः om BM, परं बोध° A

व्यवस्थाश्रयत्वं विवृतम्, तत्र तत्त्वं विशेषः। तस्य प्रतिपत्तिर्व्यवस्था। तद्धेतुत्वम् आश्रयत्वम्। तत्र विशेषः क इत्यत उक्तम्—**धर्मविशिष्टो धर्मीति**। वाक्याद्धि साधनधर्मविशिष्टो धर्मी साक्षात् प्रतीयते साध्यरूपधर्मविशिष्टस्तु तद्द्वारेत्युभयमपि विवक्षित्वा संमुग्धमुक्तमिति ॥

ननु प्रमाणान्तरत्वेऽपि तर्कस्य प्रमाणपदेन संग्रह एव सामान्येन विशेषस्य संकलनात्, तत् किमित्याह—**न प्रमाणान्तरमिति**? अत आह—**प्रमाणपदेन हीति**[1] दृष्टो हि सामान्यशब्देनापि कस्यचिदसंग्रहः कुतश्चित् कारणादित्यभिसन्धिः। अत एव प्रमाणान्तरत्वशङ्कायां संगृहीतेभ्यो विशेषेभ्योऽन्यत्वमुक्त्वा प्रमेयं दृष्टान्तत्वेनोपात्तम्। **अनिश्चायकत्वात्**। स्वातन्त्र्येणेति शेषः। **किं तु प्रमाणविषयविभागहेतुतयेति**। यस्य[2] प्रमाणस्येयमितिकर्तव्यता तदीयविषये तदपेक्षत्वादित्यर्थः। एतदुक्तं भवति, तर्को हि प्रमारूपं वा प्रमाणं स्यात् लिङ्गदर्शनवत्, अप्रमारूपं वा इन्द्रियादिवत्। न तावदाद्यः, तस्याहार्यारोपरूपत्वात्। अत एव न तत्करणस्यापि प्रामाण्यमप्रमाफलत्वात्। नापि द्वितीयः, स्वविषयव्याप्यविपर्यये ह्यस्य प्रामाण्यमाशाङ्कितम्। तेन च नास्य नियामकः संबन्धः। असंबद्धस्य गमकत्वेऽतिप्रसङ्गः। तद्विपर्ययस्य तु तेन सह स्वाभाविकः संबन्धोऽस्ति। तेन तत्संवलितस्य प्रवृत्तेस्तदितिकर्तव्यतात्वमेव। न हि विपर्ययापर्यवसितं क्वचिदपि कृतार्थं प्रसङ्गमीक्षामहे ॥

नन्वेवं तर्हि प्रमाणस्यापि केवलस्य न क्वचिदपि कृतार्थत्वम्। तथा च सति प्रसङ्गतद्विपर्ययपिण्ड एव प्रमाण्यं पर्यवस्येत्। एवमेतत्, सेतिकर्तव्यताकस्यैव सर्वत्र करणत्वात्। इतिकर्तव्यतातद्वद्भावकल्पनायां त्वयं विभागः। तदिदं वक्ष्यति—**तस्य प्रसङ्गरूपतया पारतन्त्र्येण स्वयमसाधकत्वादिति**[3]। प्रसंजनीयस्य प्रमाणविरुद्धत्वेनानिष्टत्वमयुक्तत्वम्। साधनीयस्य प्रमाणाविरुद्धत्वेनेष्टत्वं युक्तत्वम्, तेनायमर्थो **वार्त्तिकस्य**, यद्येवं नाभविष्यत् तदैवं [4]युक्तत्वमहास्यत्, इदं [5]चायुक्तत्वमुपादास्यतेत्यत आह—**इतिकारेणेति**। ततः प्रसङ्गरूपव्युत्पादनस्य **वार्त्तिकेन** अविरोधः। **भाष्यं** तु प्रसंगे स्फुटमेव। ननु भवतीति प्रमाणव्यापारात् प्रागेव यदि निश्चितम्, तदा तर्कः प्रमाणमेव स्यादित्यत आह—**संभवतीति**। संभावना चेहाविरोधमात्रम्, न तु संशयः, अयुक्तांशस्यापि संशयास्पद-

१. प्रमेयपदेनेवेति JA २. तस्य B ३. °मसाधनत्त्वात् B ४. युक्तम° J
५. चायुक्तमुपादास्यतेत्याह—JA

त्वात् । अनुज्ञा चेयमेव यत् प्रवर्तमानप्रमाणानुकूलत्वेनावस्थानम् । तदाह—**एतदुक्तं भवतीति** । अनुजानन् [1]तद्विरुद्धधर्मव्युदासरूपेणाविरोधयन्नित्यर्थः । **अनुगृह्णाति** सव्यापारीकरोतीत्यर्थः । तद्विषयप्रमाणानुकूल्येन तर्कस्यापि तद्विषयत्वमिति भ्रान्तिमाशङ्क्य निराकरोति—**न चेति** । पारतन्त्र्येण विपर्ययपरतन्त्रतयेत्यर्थः । आरोपरूपतामुपदर्शयन्नेव स्वविषयद्वाराप्यस्य प्रामाण्यं निराचष्टे—**अस्ति हीति** । **न प्रसङ्गो हेतुर्न** प्रसज्यमानो हे[2]तुर्लिङ्गमसिद्धत्वादित्यर्थः । ननु न हि यदेव विद्यते तदेव दृश्यत इत्यस्ति नियम इत्यत आह—**तेन सहेति** । तस्मात् नास्तीति फलद्वारेण तर्कस्यानुग्राह्यं प्रमाणं दर्शितम् । तेनानुज्ञायमानं प्रमाणं प्रवर्तते फलं साधयति । फलमाह— **केवलमेवेदमिति** । कैवल्यस्वरूपविप्रतिपत्तेस्तद् विवृणोति—**नेहेति** ॥

तदेवमभावविषये प्रत्यक्षेऽपि तर्कं दर्शयता अनुपलब्धिलिङ्गकानुमानस्य साध्योऽभाव इति **सौगत**मतमपास्तम् । अनुपलब्धेरपि निषेधरूपतया अनुमानान्तरसाध्यतायाम् अनवस्थानात्, असिद्धायाश्चागमकत्वात्, प्रत्यक्षतस्तत्सिद्धौ[3] त्वनुमानानवकाशात्, व्यवहारस्यापि विकल्पानुगतव्यापारात्, प्रत्यक्षत एव सिद्धत्वात् । अन्यथा विधिव्यवहारार्थमप्युपलब्धिलिङ्गकमनुमानमास्थेयम् । एवं च पुनरप्यनवस्थैव । न हि लिङ्गमप्यव्यवह्रियमाणमेवानुमितिं भावयेत् । तस्माद् विधिव्यवहारवन्निषेधव्यवहारोऽपि प्रत्यक्षसिद्ध एव । विप्रतिपन्नं प्रति तु परीक्षकैस्तर्कः सहायत्वेनोपनेय इति रमणीयम् । आगमसहायं तर्कमाह—**एवं स्वर्गेति** । यजेतेत्यत्र समानपदोपात्तत्वाद् भाव्यत्वाच्च धात्वर्थः साध्यो भवतु, भवतु वा पुरुषार्थत्वात् स्वर्ग[4] इति संशये तर्कस्यावतारः । यदि साध्यो धात्वर्थः स्यात्, तदोपदेष्टुरासत्त्वं विधेश्चेष्टोपायत्वं वाक्यस्य तदभिधायकत्वं प्रेक्षावतां च प्रवृत्तिर्न स्यात् । अस्ति चैतत् सर्वं प्रमाणतः सिद्धमित्यर्थः । अनुज्ञायमानं प्रमाणमाह—**समानपदेति** । न हि यागभावनायाः स्वर्गफलत्वे धात्वर्थस्यातत्फलत्वे समानपदोपात्तत्वभाव्यत्वयोः[5] कश्चिद् विरोधः । तस्मात् तदविरोधेन स्वर्गफलत्वं युक्तम् । धात्वर्थस्य च[6] साध्यत्वं विरुद्धतया[7] अयुक्तमित्यर्थः ॥

ननु प्रमाणानुग्रहाय युक्तत्वायुक्तत्वे विवेचयति तर्को न तु निश्चिनोति इति कुतो विशेषादित्यत आह—**न चेति** । [8]**क्रियातिपत्तिरिति**, क्रियातिपत्तिः प्रत्ययोपस्थापिते घटसत्त्वधात्वर्थसाध्यत्वे एव[9] क्रियातिपत्तिशब्देन विवक्षिते, न ह्येवंभूतप्रत्ययाविषयो घटो

१. तद् om JA २. हेतु om J. ३. प्रत्यक्षसिद्धे J, °सिद्धौ A ४. सर्गं M
५. धात्वर्थयोः BM ६. तु JA ७. बहुविरु° JA ८. क्रियातिपत्तिरिति om J

वा साध्यतया धात्वर्थो वास्तीत्यर्थः। किमतो यद्येवमित्यत आह—**यदाश्रयेति**। यस्मिन्नाश्रये[1] तुल्योपलम्भयोग्यत्वेन दुःखत्वेन वा अनिष्टप्रसंजकेन हेतुना उपपन्नस्तर्को [2]युक्तायुक्तविषयनिश्चयसाधनं भविष्यति स एव नास्तीत्यर्थः। तदनेन प्रसज्यमानस्याश्रयासिद्धिसाधनासिद्धी दर्शिते, पूर्वं तु स्वरूपासिद्धिर्दर्शिता। तस्मादारोपत्वान्न स्वविषये प्रमाणं स्वविषयव्याप्यविपर्यये नियामकाभावाच्च[3]। नियतसंबद्धस्वविषये विपर्ययापेक्षित्वे तु पारतन्त्र्यात् न प्रमाणमित्यर्थः। तर्हि क्वास्योपयोग इत्यत आह—**निश्चयाय त्विति**॥

ननु तर्कप्रमाणयोरभिमतं भेदं **मीमांसाया**[4] वेदादभेदवादो विरुणद्धीत्यत आह—**प्रमाणेति**। अथ यथाश्रुत एव **वार्त्तिकार्थः** कस्मान्न भवतीत्यत आह—**इतिकर्त्तव्यतात्वं** चेत्यादिना। **निकायविशिष्टाभिः**रित्यस्य व्याख्यानस्य शरीरेन्द्रियाणां शुक्रशोणितादेराहारादिभूतकार्यत्वात्, तत्कार्यत्वाच्च बुद्धिवेदनयोर्निमित्तान्तरे प्रमाणं नास्तीति तात्पर्यम्। विचित्रनिमित्तत्वे साध्ये भेदवत्वादिति हेतुः स्वरूपाभिप्रायेणानैकान्तिकः[5] स्यात् स्वरूपभेदवतामपि घटादीनामविचित्रनिमित्तत्वादतः प्रकाराभिप्रायेण व्याचष्टे—**विचित्रत्वादित्यर्थ** इति। वैचित्र्येणोत्पादादित्यर्थः॥

ननु निमित्तवैचित्र्यमात्रप्रसाधने सिद्धसाधनम्, न हि निमित्तं किञ्चिद् विचित्रम् अस्तीत्येतावतैव धर्माधर्मसिद्धिः, धर्माधर्मलक्षणविचित्रनिमित्तसाधनेन तु नान्वयो[6] न व्यतिरेक इत्यत आह—**प्रमाणमुक्त्वेति**। निमित्तस्य वैचित्र्ये जन्मनो वैचित्र्यप्रसङ्गः[7] निमित्तस्यावैचित्र्ये जन्मनोऽवैचित्र्यप्रसङ्गः। यागादीनामेव निमित्तत्वे निरन्वयप्रध्वस्तात् कार्योत्पत्तिप्रसंगः। निमित्तस्य नित्यत्वे कार्यस्य सदातनत्वप्रसंगः। अनेकद्रव्यत्वेऽभ्युदयसाधारणत्वप्रसंगः। साधारणैकद्रव्यत्वेऽपि स एव दोषः। एभिस्तर्कैः पक्षधर्मतामुपजीव्य प्रवृत्तैरनुगृह्यमाणं सामान्यव्याप्तिबलप्रवृत्तं [8]वैचित्र्यानुमानं विशेषविरोधं परिभूयाभिमतं विशेषं साधयतीत्यर्थः॥

ननु जात्या[9] किं फलनिर्णयो नास्त्येव, येन कालविशेषं पृच्छति कदा पुनरित्यतोऽभिप्रायमाह—**स्यादेतदिति**। ननु निर्णयोपादानप्रयोजने वक्तव्ये निर्णीतप्रयोजनस्य

१. °न्नाश्रितत्त्वेन JA २. °विषय° om J ३. °भावात् J ४. °मतभेदमीमांसया BM ५. °णानेकान्तः J ६. °लक्षणवैचित्र्यप्रसाधनेना° J ७. निमित्तस्य वैचित्र्ये जन्मनो वैचित्र्यप्र° om JA ८. विचित्रानु° M ९. ज्ञात्वा BM

तर्कस्य पुनरावृत्तौ किं [1]तात्पर्यमित्यत आह—**संकलय्येति**। संकलनया उभयोरविनाभावो विवक्षित इत्यर्थः ॥

स्वसिद्धान्तानुरूपं साधनं दूषणं [2]चाहतुरिति स्वसाध्यपरसाध्ययोर्यथासंख्यम्[3]। ननु यद्यपि सर्वत्र जल्पे निर्णयावसानत्वमेव नास्ति क्वचिदनिर्णयेऽपि पुरुषापराधतः कथाविच्छेदात्, तथापि यत्र निर्णयावसानत्वमस्ति, न ततो जल्पादन्यतराधिकरणनिर्णयावसानत्वेन वादो व्यवच्छेत्तुं शक्यते। न च सर्ववादव्याप्तिः, निर्णयस्य वादफलत्वात्। फलस्य चोपायाव्यापकत्वादित्यत आह—**वादे हीति**। निर्णयावसानता हि तद्योग्यता अभिप्रेता। सा च विवदमानयोः तत्त्वबुभुत्सुतया तमुद्दिश्य प्रवृत्तिः। तदिदमुक्तम्, **तत्त्वबुभुत्सोर्वादिनोर्वादेऽधिकारादिति**[4]। तदयमर्थः, तत्त्वनिर्णयमुद्दिश्य तयोः साधनदूषणवचनसंदर्भो[5] वाद इति। एवं च नाव्याप्तिर्न वा[6] अतिप्रसङ्गः ॥

जल्पः पुनः कीदृश इत्यत आह—**जल्पे त्विति**। **पुरुषशक्ती**त्युद्देश्यमाह। तदयमर्थः, भवतु नाम क्वचित जल्पतोऽपि तत्त्वनिर्णयः। तथापि नासावुद्देश्यो न च[7] श्रद्धेयः। स्वशक्तिपराशक्तिख्यापनमात्रमुद्देश्यमिति। **तस्मादन्यतरनिर्णयावसानत्वेनेति**। निर्णयावसानाभिप्रायेणेत्यर्थः ॥

ननु जल्पवितण्डयोर्वादविशेषत्वे कथं सामान्यविशेषयोः परिसंख्यासमभिव्याहारः, कथं च परस्परविरुद्धयोः सामान्यविशेषभावोऽपीत्यत आह—**विशिष्येते इति**। अपरमपि भेदहेतुमाह—**वादात्** जल्पवितण्डयोरिति शेषः। पूर्वं वादव्याख्यानावसरे भेदे हेतुरुद्देश्यविशेषाभिसन्धिरुक्तः[8] तदपेक्षया **अपरमपीति**। यौ तौ वादजल्पयोः प्रयोक्तारौ[9] तावेकत्राविजिगीषया[10] अन्यत्र विजिगीषया[11] विशेषितौ वादजल्पौ परस्परतो व्यवच्छिन्दाते इत्यर्थः ॥

दूषयितुम् **एकदेशिव्याख्यानं** तन्मतेन व्याचष्टे इति योज्यम्। उभयथाप्यनैकान्तिकत्वादिति[12]। यद्यपि व्यभिचारादर्शनेऽपि अविनाभावो न सिध्यति पृथगभिधानस्य पुरुषेच्छाधीनत्वात्, 'वादे चोदनीयत्वस्य चानुद्भावने[13] तत्त्वप्रतिपत्तिव्याघातहेतुत्वप्रयुक्तत्वात्,

---

१. प्रयोजनमि° BJM २. वा हेतुरिति M ३. परसाधन° JA ४. वादिनोरिति टीकापेक्षया ; वादे ह्यनधि° M ५. प्रयोगस° JA ६. वा om J ७. वा B ८. °संबन्ध उ° JA ९. प्रवक्ता° J १०. °गीषुतथा BM ११. °गीषुतया BM १२. उभयथा... दिति om JA, १३. चोद्भावनीयत्वस्या° BM,

तथापि व्यभिचारस्य स्फुटत्वात् स एव दर्शितः। तस्माद् **वादे चोदनीया भविष्यन्तीत्यनेन** पृथगभिधानप्रयोजनमात्रं प्रतिपादितम्। हेतुत्वं पुनरविवक्षितमेव तार्किकंमन्येनैकदेशिना आरोपितमित्यर्थः। नन्वेवंरूपप्रयोजनलाभोऽपि कथम्? न हि पृथगभिधानमात्रमत्रप्रमाणयितुं शक्यमित्यत आह—**सामान्येनेति**। सामान्यतोऽभिहितं विशेषतोऽभिदधता **सूत्रकृता** प्रयोजनविशेषः सूचितः। स एव **भाष्यकृता** दर्शित इत्यर्थः। अथ[1] यद्येतदेव विवक्षितमस्य सूत्रकृतः, तदा किमिति न क्वचित् शास्त्रप्रदेशे स्वयमेव दर्शितवानित्यत आह—**एतावानेवेति**। अथ **भाष्यकारेण** कथमिदमुन्नीतमित्यत आह—**तत्रेति**। **किमेवमपीति**। किमनेन प्रतिपादितेन फलमित्यर्थः। नन्वग्रे वादे चोदनीयत्वमेव प्रतिपादयति, इह तु विद्याप्रस्थानभेदज्ञापनार्थत्वं वर्णयति। तत् कुतो न विरोध इत्यत आह—**वादजल्पवितण्डा** इत्यादि। अत्रैवार्थे सूचकं **वार्त्तिकमाह**—**अत एवेति**। अयमर्थः। यदि विद्याशब्देनास्य वादादयो न विवक्षिताः कथमग्रे वादव्यापारं दर्शयित्वा जल्पवितण्डयोः सर्वाण्येव निग्रहस्थानानि व्यापारत्वेनाह? तद् यदयमेव ब्रूते नूनमयमस्यार्थो विवक्षित इति। तदयं तात्पर्यसंक्षेपः, न तावदज्ञातस्वरूपवदज्ञातव्यापारफलभेदा वादादयश्चेतनेनाधिष्ठातुं शक्यन्ते। न चानधिष्ठितेभ्यः फलसिद्धिः। तस्मात् स्वरूपवद् व्यापारफलभेदा अप्यमीषां प्रतिपादनीया भवन्ति। अत एव चतुर्थे फलमपि दर्शयिष्यति[2] सूत्रकारः॥

**प्रयुज्येरन्**[3] संभाव्येरन्निति। न तु तेषामस्ति संभवति **प्रयोग** इति। ननु लक्षणेन पदार्थस्वरूपं न व्यवस्थाप्यते, अपि तु व्यवस्थितं ज्ञाप्यते, तत् कुतो लक्षणतन्त्रत्वमित्यत आह—**लक्ष्यत इति लक्षणमिति**। ननु यदि पृथगभिधानेनैव वादे चोदनीयत्वं प्रतिपाद्यते, कथं न्यूनाधिकापसिद्धान्तानां पृथगनभिधाने तत्र चोदनीयत्वप्रतिपत्तिः? अथान्यथापि तेषां तद् गम्यत एव तदा हेत्वाभासेष्वपि स एव प्रकारोऽस्तु, कृतं पृथगभिधानेनेत्यत आह—**हेत्वाभासानां चेति**। अयमाशयः। न हि हेत्वाभासाः पृथगभिहिता इत्येव वादे चोदनीयत्वं तेषां गम्यते। अपि तु वादस्य तत्त्वप्रतिपित्सुकथात्वात्, हेत्वाभासानां चानुद्भावने तत्त्वप्रतिपत्तिव्याघातात् तत्त्वबुभुत्सुना अवश्यमुद्भावनीयास्ते। अन्यथा वादो वादत्वं जह्यात्। हेत्वाभासानां चानुद्भावनं तत्त्वप्रतिपत्तिव्याघातकमिति[4]। अयमेव च न्यायो विशेषतः पृथगभिधानेन सूचितः **सूत्रकारेण**। स च

---

१. अथ om M. २. चार्थयिष्यति A. ३. प्रसज्येरन् B. var, M
४. हेत्वाभासानुद्भावनं वा तत्त्वार्थप्रतिपत्तिव्याघातकत्वमिति JA, व्याघातकृत° M.

न्यूनादिषु समान इति। एवं च[1] व्यवस्थिते **वार्तिककृतो**ऽपि प्रश्नो नाप्रास्ताविक इत्याह—**तत्र पृच्छतीति**। ननु यदि जल्पवितण्डयोस्तत्त्वप्रतिपादनार्थमवतारः किम् अप्रतिभाद्युद्भावनेन? अथ न तदर्थत्वं तयोः, किं तदवतारेण? न चान्यार्थत्वे तयोरेतच्छास्त्रव्युत्पाद्यत्वमित्यत आह—**साहंकारो हीति**। अहंकृतस्य तस्य[2] तत्त्वप्रतिपत्तेरयोगादहंकारशातनमेवानयोस्तत्त्वप्रतिपादनार्थत्वम्, तच्चाप्रतिभाद्युद्भावनं विना न स्यादिति तत्त्वं प्रतिपिपादयिषता कर्तव्यमेवेदमित्यर्थः॥

ननु च्छलादीनां परिज्ञानं न साक्षान्निःश्रेयस उपयुज्यते आत्मादिवत्। नापि तद्व्यवस्थानद्वारा प्रमाणवत्। नापि न्यायाङ्गतया संशयादिवत्। न च परिज्ञानमेव फलम्, अपुरुषार्थत्वादित्यत आह—**परिज्ञानस्य च फलमुक्तमिति**। तत्त्वप्रतिपत्त्युपायभूतकथात्रयपरिकरशुद्धिद्वारा तत्परिज्ञानं निःश्रेयसोपयोगीत्यर्थः। **स्वयं च सुकरः प्रयोग** इति ग्रन्थस्य प्रत्यक्षसिद्धत्वात् **किमुक्तं भवतीति** तत्स्वरूपप्रश्नोऽसंगत इत्यतः पूरयति—**अनेन भाष्येणेति**॥

**भाष्ये** प्रयोजनान्तराभिधानं न सूत्रकृदभिहितप्रयोजनविरोधि, किं तु तदनुगुणम् एवेत्याशयवान् सौत्रं प्रयोजनमनुवदति—**सूत्रकारेणेति**। अनुगुणत्वं तु[3] व्याप्तिप्रदर्शनेन। न ह्यस्ति संभवः, पुरुषार्थश्चाप्रमाणहेतुकश्चेति। तेनायमर्थो **भाष्यस्य**, यतः सर्वं प्रेक्षावत्प्रयोजनमान्वीक्षिकीव्युत्पाद्यप्रमाणमूलम्, अतो निःश्रेयसस्य परमपुरुषार्थस्य तन्मूलतायां विपर्ययशङ्कैव नास्ति, अतन्मूलत्वे पुरुषार्थत्वहानिप्रसंगादिति। तदिदमुक्तं **नास्त्येव तदिति**। ननु न तावदितरासु प्रमाणव्यवहारो[4] नास्त्येव, तदितरव्यवहारस्याप्युच्छेदप्रसंगात्, प्रमाणव्यवहार सद्भावे तु किमान्वीक्षिक्या तत्र प्रकाशयितव्यम्? तत्प्रमाणैरेव[5] प्रकाशितत्वादित्यत आह—**यद्यपीति**। व्युत्पादितेन प्रमाणादीना तत्र व्यवहारस्तद्व्युत्पत्तिस्त्वित एव, न तु तत इत्यर्थः॥

ननु प्रणेतृश्रोत्रप्रमाणोपजीवनमान्वीक्षिक्यामपि समानमतो न विद्यान्तराद् विशेष इत्यत आह—**न तु प्रमाणादीति**। प्रमाणोपजीवने समानेऽपि यथैतद्व्युत्पाद्यमुपजीवन्ति ताः, नैवं तद्व्युत्पाद्यमियमपीत्यर्थः। ननु उपजीवकतासाम्येऽपि परस्परोपजीव्योपजीवकभावः[6] क नाम दृष्ट इत्यत आह—**यथेति**। प्रत्यक्षाद्यपि हि स्वप्रामाण्यव्यवस्थितये प्रमाणान्तरमपेक्षते। अनुमानमपि स्वोत्पत्तये। तथापि प्रत्यक्षाद्येवापेक्ष्यानुमानं स्वविषये प्रवर्तते। न तूपजीवका-

---

१. च om J २. °शातनेनानयोः BM. ३. तु om J ४. प्रमाणादिव्यव° JA ५. प्रमाणेनैव JA ६. °जीवकभावाभावः J

नुमानमपेक्ष्य प्रत्यक्षादि, अनुमानान्तरं तु[1] स्वप्रामाण्यव्युत्पादकमपेक्षते । तदपि न तदैव, किं तु प्रागेव इत्यभिप्रायेण व्युत्पाद्य सजातीयापेक्षानिराकरणायोक्तम्—**न प्रत्यक्षादिविषयमपि तदानीमेवेति** । प्रत्यक्षादिरूपो विषयः प्रत्यक्षादिविषय इति । **विद्योपकरणं** प्रमाणादि । तस्य ग्रहणं **प्रमाणादिप्रकाशितमर्थमितरा विद्याः प्रतिपाद्यन्ते** इति **वार्त्तिकेन** । एतदुक्तं भवति, **वार्त्तिके** प्रमाणादिग्रहणं **भाष्योक्त**विद्याप्रकाशकत्वनिर्वाहाय । न तु स्वातन्त्र्येण । अतो न विरोधः । तदेवं स्वरूपेणापेक्षां दर्शयित्वा विषयगता अपेक्षा भाष्यकृता दर्शिता—**उपाय** इति । तद्वार्त्तिकं योजयितुं व्याचष्टे—**संप्रतीति** ॥

ननु विद्यान्तराणां शब्दात्मकतया प्रमाणत्वात्[2] तस्य च स्वप्रतिपाद्येऽनपेक्षत्वात्, किं तत्रान्वीक्षिकी करिष्यतीत्यत आह—**न हीति** । प्रमाणस्य सतः स्वप्रतिपाद्ये प्रमाणान्तरापेक्षा नास्ति, न तु स्वेतिकर्तव्यताभूततर्कापेक्षापि । स चान्वीक्षिकीलभ्य इत्यर्थः ॥

अथ तर्कमनपेक्षमाणस्य[3] किं स्यादित्यत आह—**मा भूदिति** । आदिग्रहणेन

यजमानः प्रस्तरः

इत्यादि ग्राह्यम् । तर्कश्च संशयमन्तरेण नावतरतीत्युपसंहारे सोऽपि दर्शितः । यद्यपि सतर्कप्रमाणप्रवृत्तिरेव परीक्षा, तथापीह गोबलीवर्दन्यायेन प्रमाणस्य स्वपदोपात्तत्वात् प्रयोजनजिज्ञासातर्का एव विवक्षिताः । प्रमाणस्य निवेशः प्रवृत्तिः । [4]तस्य द्वारमविरोधः । **अर्थतत्त्वं** पदार्थतत्त्वं वाक्यार्थतत्त्वं वा, **अवधार्य** प्रमाणान्तरादर्थवादादेव वा । तत्र त्रयी विधिनिषेधरूपा निवेशनीयेत्यर्थः[5] । एवं च दण्डनीत्यां यथा[6] यमो राजा कुबेरो वा राजेत्यादि, वार्त्तायां माघे परिकर्षिता भूमिः सुवर्णमयं फलमाधत्त इत्यादि तर्कानपेक्षया[7] विफलायते । तस्मात् तत्रापि तदपेक्षा अस्तीत्यतिदिशति—**एवमिति** । **विषयमिति शेष** इत्यत्रापि विधेयतया निषेध्यतयेति शेषः ॥

इदानीं व्यापारगतामपेक्षामाह **भाष्यमतेन—अपि चेति** । द्रव्यस्य यथा

दध्ना जुहोति

इत्यादि । गुणस्य यथा

अरुणया सोमं क्रीणाति

इत्यादि । कर्मणो यथा

---

१. अनुमानं तु BM. २. च प्रतिपाद्यानपेक्षितत्त्वात् BM. ३. प्रमाणस्य om BM. ४. तस्याः J ५. अर्थः om JA. ६. यथा om BM. ७. नपेक्षायां B

व्रीहीनवहन्ति

इत्यादि । दण्डनीत्यामपि यथा द्रव्यस्य

स्वाम्यमात्य-

इत्यादि । गुणस्य यथा

साममेद-

इत्यादि । कर्मणो यथा

शस्त्रशिक्षा गजवाजिवाहनम्

इत्यादि । वार्त्तायामपि द्रव्यस्य यथा

यथर्तु बीजं संगृह्णीयात् ।

इत्यादि । गुणस्य यथा

भूमिं [1]प्लावयेच्छोपयेत् ।

इत्यादि । कर्मणो यथा

स्थानान्तरं निनीषन्ननोकहमभिमन्त्रयेत् ।

इत्यादि । विषयं दर्शयित्वा संशयमाह—**तत्र किमिति** । संशयकारणं च विधिपदसमभिव्याहारस्तत्पदस्य । विधिपदसमभिव्याहृतस्वपदो[2] ह्यधिकारी न विधिविषयः । तथाभूतमेव चाग्निहोत्रं तद्विषयः । अतः साध्ये संशयः किं विधिपदसमभिव्याहृतपदत्वादग्निहोत्रादिवद्विधिविषयो[3] भवतु स्वर्गोऽधिकारिवद् वा नेति पूर्वपक्षमादर्शयन्नेव[4] तत्रानिष्टप्रसंगमाह—**तत्र यदीति** । न च श्येनादिसाध्याया हिंसाया विहितत्वेनार्थत्वमेव भवतु का क्षतिरिति वाच्यम् । विधिर्हि प्रवर्तकः स्वज्ञानेन इच्छामन्तरा कृत्वा प्रयत्नोत्पादक इति यावत् । स च प्रयत्नो न साध्यविषयः कर्तुं शक्यते । उपायो हि प्रयत्नविषयो न तु फलम् । तस्मात् प्रयत्नविषयत्वात् साधनेतिकर्तव्यते एव विधीयेते न तु साध्यम्, तदविषयत्वात् । न हि ज्ञापकत्वमात्रं विधित्वम्, अपि त्विच्छाप्रयत्नविषयज्ञापकत्वमिति । तस्मात् श्येनादिसाध्या हिंसा अनर्थभूतैवार्थः स्याद् यदि विधिविषयः स्यादिति साधूक्तम् । सिद्धान्ते प्रमाणमादर्शयन्नेव[5] साध्यपदसमभिव्याहारस्तर्हि क्वोपयुज्यते इत्याशङ्कामपनयति—**अथ साध्यांशमिति** । इष्टाभ्युपायता हि नेष्टमप्रतीत्य प्रत्येतुं शक्या । न चाप्रवृत्तैव सा प्रवर्तयति । अतस्तां विशेष्टुमिष्टस्यानुवादोऽयमित्यर्थः ॥

---

१. °प्लोषयेत् JA; लावयेत् B. २. °व्याहृतपदो JA. ३. °होत्रवद्विषयो BM ४. आदर्शयंस्तद्वानाय BM ५. °मावेशय° JA

तत् किमिदानीमविहितमित्येतावतैवानर्थः[१] ? नेत्याह—**न हिंस्यादिति**। ननु भवत्वेवं तावत् तथाप्यान्वीक्षिक्या किमायातमित्यत आह—**तदिहेति**। विषयान्तरमाह—**एवमिति**। यथा आमिक्षायाः प्रयोजकत्वं क्षीरहोमस्थाने तद्विनिवेशनाद् रसादिसाम्यात्, वाजिनस्याप्रयोजकत्वमवर्जनीयोत्पत्तिकत्वात्। आदिग्रहणेन शेषभागहोमविलोपादयो[२] गृह्यन्ते। **सर्वा विद्या** इति विद्याशब्देन तद्धर्मान् लक्षयतीति न भाष्यव्याख्याविरोधः। **वार्त्तिककारस्तु** धर्माणां विद्यापारतन्त्र्यं विवक्षन्निति शेषः। **सङ्करप्रसङ्ग** इति फलस्य। तथा च विद्यान्तरफलेनैवास्य फलवत्त्वं न पुनरसाधारणं फलमस्या अस्तीत्यर्थः। असाङ्कर्यं दर्शयितुं तासामेव तावदसाधारणं फलमाह—**विद्यान्तराणीति**। एतस्या असाधारणं फलमाह—**इह त्विति**। अन्यत्रास्याः प्रतिपादितोपयोगविरोधो मा भूदिताशयवतोक्तम्—**प्रमाणादि यद्यपि साधारणमिति**। एतेनैतदुक्तं भवति, विद्यान्तरफलान्यपि यदान्वीक्षिक्यामायतन्ते सेयमूष्मसिद्धिरस्याः[३]। यत्तु प्रधानमस्याः फलं तदसंकीर्णमेव विद्यान्तरेष्वसंभवादिति ॥

**वादादीनामिति** अतद्गुणसंविज्ञानो बहुव्रीहिः, वादस्य पराभिभवार्थमप्रवृत्तेः। जल्पादयो हि मदादिहेतवः पराभिभवोपायत्वात् द्रव्यशरीरसंपत्तिवदिति प्रयोगः। तत्रास्य विरुद्धत्वं तावदाह—**तत्र जल्पादीनामिति**। अयमाशयः। न तावत् प्रतिपाद्यस्य जल्पवितण्डयोरधिकारः। किं तु प्रतिपन्नस्य तत्त्वप्रतिपत्तिपालनार्थं दुरवलिप्तप्रतिपादनार्थं च तयोरधिकारः। पराहङ्कारशातनं च मदमानादिविरुद्धमेव, तेषां दोषविशेषत्वात्। अहङ्कारशातनस्य च[४] तन्निरोधरूपत्वात्[५]। न च पराभिभवोपायभूतशब्दवाच्यतामात्रेणानुमानम्, वागादीनामपि विषाणित्वप्रसंगादिति[६] ॥

स्यादेतत्। पराभिभवोपायत्वेन हेतुना मदमानादिहेतुत्वं मा सैत्सीत्, अन्वयव्यतिरेकाभ्यामेव तु[७] सिद्ध्यत्वित्यत आह—**मदमानादिहेतुत्वं च हेतुरसिद्ध** इति। **सति च तत्त्वविदां न संभवन्तीति** वदता यथाश्रुतस्य पराभिभवोपायत्वस्यानैकान्तिकत्वमपि सूचितम्। अतो जल्पादितत्त्वज्ञानवतामपि यदि मानादयो दृश्यन्ते, न ते तद्धेतुकाः, किं तु बलवन्मिथ्याज्ञानहेतुका एवेति सनकाद्युदाहरणफलमिति। एतच्च स्फुटमित्यभिप्रायेणाह—**उपसंहरतीति** ॥१॥

१. एव om BM २. °भाक् होमलोपा° J ३. °मुष्मासि° B. ४. च om BM. ५. °न्निषेध° JA. ६. इति om BM ७. तु om BM.

॥ भाष्यम् ॥

तत्[1] खलु वै निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति[2] ? नेत्युच्यते किं तर्हि ? तत्त्वज्ञानाद्–

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये[3] तदनन्तराभावादपवर्गः ॥ १.१.२ ॥**

तत्रात्माद्यपवर्गपर्यन्ते प्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्तते । आत्मनि तावन्नास्तीति, अनात्मन्यात्मेति, दुःखे सुखमिति, अनित्ये नित्यमिति, अत्राणे त्राणमिति, सभये निर्भयमिति, जुगुप्सितेऽभिमतमिति, हातव्ये अप्रतिहातव्यमिति[4], प्रवृत्तौ नास्ति कर्म, नास्ति कर्मफलमिति, दोषेषु नायं दोषनिमित्तः संसार इति । प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा यः प्रेयात् प्रेत्य च भवेदिति, अनिमित्तं जन्म, अनिमित्तो जन्मोपरम इति, आदिमान् प्रेत्यभावोऽनन्तश्चेति, नैमित्तिकः[5] सन्नकर्मनिमित्तः प्रेत्यभाव इति, देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभाव इति । अपवर्गे भीष्मः खल्वयं [6]सर्वकार्योपरमः, सर्वविप्रयोगेऽपवर्गे बहु[7] भद्रकं लुप्यत इति कथं[8] बुद्धिमान् सर्वसुखोच्छेदमचैतन्यममुमपवर्गं[9] रोचयेदिति ॥

एतस्मान्मिथ्याज्ञानादनुकूलेषु[10] रागः, प्रतिकूलेषु च[11] द्वेषः । [12]रागद्वेषाधिकाराच्चासत्येर्ष्यासूयामानलोभादयो दोषा भवन्ति । दोषैः प्रयुक्तः शरीरेण प्रवर्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति । वाचा अनृतपरुषसूचनासम्बद्धानि । मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति । सेयं पापात्मिका प्रवृत्तिरधर्माय ॥

अथ शुभा, शरीरेण दानं परित्राणं परिचरणं च । वाचा सत्यं हितं प्रियं स्वाध्यायं चेति । मनसा दयामस्पृहां श्रद्धां चेति । सेयं धर्माय[13] । अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ, यथान्नसाधनाः प्राणाः,

१. तच T २. सम्पद्यते इति J ३. °न्तरापायान्निःश्रेयसाधिगम इति बहुत्र ४. प्रतिपत्तव्यमिति J ५. °त्तिकश्च J ६. कार्य° om …'विप्रयोगोऽपवर्गः J ७. बहु च CJ ८. कथ्थ J ९. अमुम् om J १०. कूलेष्वर्थेषु J ११. च om TC १२. °करणाश्च J. असूया° om माया for मान CT १३. °र्माय प्रवृत्तिः J

अन्नं वै प्राणिनः प्राणाः[1] इति। सेयं प्रवृत्तिः[2] कुत्सितस्याभिपूजितस्य च जन्मनः कारणम्। जन्म पुनः शरीरेन्द्रियबुद्धिवेदनानां[3] निकायविशिष्टः प्रादुर्भावः। तस्मिन् सति दुःखम्, तत्पुनः प्रतिकूलवेदनीयं बाधना पीडा ताप इति। त इमे मिथ्याज्ञानादयो दुःखान्ता धर्मा अविच्छेदेन[4] प्रवर्तमानाः संसार इति ॥

यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति। दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये[5] जन्मापैति। जन्मापाये दुःखमपैति। दुःखापाये चात्यन्तिकोऽपवर्गो निःश्रेयसमिति ॥

तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम्। आत्मनि तावत् अस्तीति। अनात्मन्यनात्मेति। एवं दुःखेऽनित्येऽत्राणे[6] सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम्। प्रवृत्तौ, अस्ति कर्मास्ति कर्मफलमिति। दोषेषु, दोषनिमित्तोऽयं संसार इति। प्रेत्यभावे खलु, अस्ति जन्तुर्जीवः[7] सत्त्व आत्मा वा यः प्रेयात् प्रेत्य च भवेदिति। निमित्तवज्जन्म निमित्तवान् जन्मोपरम इति, अनादिः प्रेत्यभावोऽपवर्गान्त इति, नैमित्तिकः सन् प्रेत्यभावः [8]प्रवृत्तिनिमित्त इति। सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां प्रवर्तत इति। अपवर्गे, शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः, बहु च [9]कृच्छ्रं घोरं पापकं लुप्यत इति [10]कथं बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखासंविदमपवर्गं न रोचयेदिति। तद् यथा, मधुविषसंपृक्तमन्नमनादेयमिति[11]। एवं सुखं दुःखानुषक्तमनादेयमिति ॥२॥

॥ वार्त्तिकम् ॥

न तत्त्वपरिज्ञानादपवर्ग उभयथा दोषात्। यदि [12]तावत् तत्त्वज्ञानानन्तरमेवापवर्गः [13]स्यात्, तद्वतामवस्थानं न स्यात्। तद्वतां चावस्थानं दृष्टम्, कुतः? शास्त्रसम्प्रदायाविच्छेदात्। संप्रदायो नाम [14]शिष्याचार्यसंबन्धस्याविच्छेदेन शास्त्रप्राप्तिः। यदि [15]तत्त्व-

---

१. वै प्राणाः J द्र: म. भा. अनु ६३.८;२५. २. प्रत्येकं दशविधा पापा पुण्या वा इत्यधिकम् J ३. °विषयबुद्धीनां J ४. देनैव CT ५. प्रवृत्तेर° J ६. नित्ये त्राणे T. ७. जीवो वा J ८. प्रवृत्तिदोषनि° J ९. बहुत्र J १०. कश्च J ११. इति om J १२. तावत् om C. १३. स्यात् om J १४. शिष्योपाध्याय° C १५. अनन्तरं om C.

ज्ञानादनन्तरमपवर्गः स्यात्, शास्त्रसम्प्रदायो विच्छिद्येत। यस्य यदा तत्त्वज्ञानमुत्पन्नं[१] स तदैवापवृक्त इति। अथोत्पन्नतत्त्वज्ञानोऽवतिष्ठते, न तत्त्वज्ञानं कारणम्, [२]सत्यप्यभावात्, सत्यपि तत्त्वज्ञाने यस्याभावान्नापवृज्यते सोऽन्योऽर्थ इति। कारणं हि नाम तस्य तद्भवति यस्मिन् सति यद्भवति, यस्मिंश्चासति यन्न भवति। अनधिगतार्थपूर्वकत्वं वा शास्त्रस्य[३] स्यात्। अथ तत्त्वज्ञानानन्तरमपवर्गो[४] वातपुत्रीयं शास्त्रं प्राप्नोति,[५] न तत्त्वदृक्पूर्वकमिति—न, निःश्रेयसस्य परापरभेदात्। यत्तावदपरं निश्रेयसं तत् तत्त्वज्ञानानन्तरमेव भवति। तथा चोक्तम्,

जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विप्रमुच्यते[६] इति।

अयं शास्त्रार्थ इति। परं तु[७] निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति। क्रमप्रतिपादनार्थं चेदं सूत्रम्—**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्येवमादि॥**

एतत्संबन्धेनैवा[र्थेना]र्थवत्। पदार्थस्तु वक्तव्यः। तत्रात्माद्यपवर्गपर्यन्तं प्रमेयं ज्ञेयम्। तस्मिन् **मिथ्याज्ञानमनेकप्रकारकं** वर्तते। को वृत्त्यर्थः? विषयार्थः। तत्रायं भेदः। तत्र **आत्मनि तावन्नास्तीति**। आत्मा तावदस्तित्वेन प्रमाणसामर्थ्यात् समधिगतः। [८]अस्तित्वेन समाधिगते नास्तीति विज्ञानं मिथ्याप्रत्ययः। तस्यानुपपत्तिः सदसतोः सारूप्याभावादिति चेत्—न, प्रमाणमम्यतोपपत्तेः। न हि सदसती सरूपे [९]यतोऽसत्साम्यादसद्धर्माध्यारोपेणात्मनि[१०] मिथ्याप्रत्ययः स्यात्। तच्च नैवम्, प्रमाणगम्यतोपपत्तेः। सदसतोः प्रमाणगम्यत्वं [११]सारूप्यम्, क्रियागुणव्यपदेशः। तद्रहितता च विशेषः। सोऽयमसद्धमान् सत्यात्मनि समारोप्य विपर्येति, नास्त्यात्मेति। एवम् **अनात्मनि शरीरे आत्मेति**। किं पुनरनात्मनः शरीरादेरात्मना साधर्म्यं यत एतद् भवति अनात्मन्यात्मेति। अहङ्कारविषयत्वं सामान्यम्[१२]। इच्छाद्याधारतानाधारतेति विशेषः। यथैवात्मा अहङ्कारस्य विषयः, तथा शरीरादयोऽपि। कथं पुनः शरीरे अहङ्कारः? शरीरवाचकशब्दसामानाधिकरण्यात् शरीरेऽहङ्कारो [१३]गौरोऽहमित्येवमादिः। इच्छाद्याधार आत्मा न शरीरादय इति विशेषः। एतच्चोपरिष्टात् प्रतिपादयिष्यामः[१४]। सोऽयमात्मधर्मान् इच्छादीन् शरीरादिष्वध्यारोप्य विपर्येति अहमेत इति। एवं

---

१. वृत्तम् C २. अपि om C ३. °पूर्वं वा शास्त्रं C ४. अपवर्गो J ५. स्यात् C ६. विमुच्यते C ७. च C ८. अस्तित्वेनेति नास्ति J ९. °स्तत्सामान्यात् J १०. °र्मारोपेणा° C ११. सामान्यम् J १२. सारूप्यम् C १३. °हमित्या° C १४. द्र. ३।२।१८, ४।१।२

सामान्यविशेषधर्मपरिज्ञाने[1] सति तद्विपरीतधर्माध्यारोपेण विपर्ययः सर्वत्र भवतीति । कः पुनरयं विपर्ययः ? अतस्मिंस्तदिति प्रत्ययः । शेषं भाष्ये[2] ॥

**त इमे दुःखादयो मिथ्याज्ञानपर्यवसाना अविच्छेदेन प्रवर्तमानाः संसार** इति । कः [3]पुनरयं संसारः ? दुःखादीनां कार्यकारणभावः । स चानादिः, पूर्वापरकालभावस्यानियमात् । न च[4] शक्यं वक्तुं पूर्वं दुःखादयः पश्चान्मिथ्याज्ञानम्[5], पूर्वं वा मिथ्याज्ञानं पश्चाद् दुःखादय इति[6] । **यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैतीति** । कथमपायः ? समाने विषये तयोर्विरोधात् । यस्मान्मिथ्याज्ञानं तत्त्वज्ञानं चैकस्मिन् विषये विरुध्येते, वस्तुनो द्वैरूप्यासंभवात् । न ह्येकं वस्तु द्विरूपं भवति । तस्मान्मिथ्याज्ञानं तत्त्वज्ञानेन निवर्त्यत इति । कथं पुनः पूर्वोत्पन्नं मिथ्याज्ञानं पश्चाद्भाविना[7] तत्त्वज्ञानेन निवर्त्यते ? मिथ्याज्ञानस्यासहायत्वात् । मिथ्याज्ञानमसहायमतो निवर्तत इति । सम्यग्ज्ञानस्य पुनर्विषयः सहायीभवति[8] । कस्मात् ? तथात्वेनावस्थानात् । [9]तथाभूतोऽसौ विषयो यथा तत्र तत्त्वज्ञानमिति । प्रमाणान्तरानुग्रहाच्च । आगमानुमानादि च[10] प्रमाणं तत्त्वज्ञानस्य [11]सहायीभवति । यदा ह्ययमागमानुमानयोः प्रतिसंहितयोर्विषयं भावयति समाहितोऽनन्यमनाश्चिन्तयति, ततोऽस्य विपच्यमाने ध्याने विविक्तायां ध्यानभावनायां तस्मिन्नर्थे तत्त्वप्रतिबोधि ज्ञानं[12] प्रत्यक्षमुत्पद्यत इति । सोऽयमागमानुमानप्रत्यक्षाणां विषयं प्रतिपद्यमानस्तत्त्वमेतदिति प्रतिपद्यते । तत्त्वप्रतिपत्तेरस्य मिथ्याज्ञानं निवर्तत इति । निवृत्ते च मिथ्याज्ञाने न पुनस्तद्विषयं मिथ्याज्ञानमुत्पद्यते [13]विरोधादित्युक्तम् । कः पुनर्विरोधः ? सहासंभवः । मिथ्याज्ञानाभावे रागादयोऽपयन्तीति कार्यकारणभावादेव । कारणं मिथ्याज्ञानम्, कार्या रागादयः । न [14]हि कारणेऽसति कार्यमुत्पत्तुमर्हतीति । ये तावदनुत्पन्ना रागादयस्ते कारणाभावान्मा भूवन् । ये तूत्पन्नास्ते कथम् ? तेषामपि वैराग्यान्निवृत्तिः । किं पुनर्वैराग्यम् ? भोगानभिष्वङ्गलक्षणमित्युक्तम् । असक्तिश्च सक्तिं बाधते । तत्पुनर्वैराग्यं कथं भवति ? तत्त्वज्ञानाद् विषयदोषदर्शनादिति । दोषाभावे प्रवृत्त्यभावः । यदास्य सम्यग्ज्ञानवतो दोषा अपयन्ति, अथ दोषाभावे प्रवृत्तिर्निवर्तते[15] । का पुनरियं प्रवृत्तिः ? धर्माधर्मौ, जन्मसाधनत्वात् । नास्मिन् सूत्रे क्रिया प्रवृत्ति-

---

१. °विशेषपरि° C २. भाष्य इति J. ३. पुनः सं° J. ४. न शक्यम् J ५. °ज्ञानोत्पत्तिरिति C. ६. न शक्यं वक्तुमितीत्यधिकम् C. ७. °दुत्पद्यमानेन C. ८. च विषयः सहायो C. ९. तथासौ J. १०. °दि प्रमाणं C. ११. सहायो भ° C. १२. °र्थे प्रबोधज्ञा° J. १३. इति वि° C. १४. च कारणं विना कार्यं भवितु° C. १५. °र्तत इति । C

शब्देनोच्यते, अपि तु धर्माधर्मौ, तत्साधनभावात्। जन्मसाधनं धर्माधर्मौ न प्रवृत्तिः[1] क्षणिकत्वात्। धर्माधर्मयोस्तु प्रवृत्तिशब्दः प्रवृत्तिसाधनत्वात्[2]। यौ तावदनागतौ धर्माधर्मौ तयोर्दोषाभावादभावो युक्तः। यौ[3] वर्तमानौ तयोर्न युक्तः। किं कारणम्? निर्दोषस्यापि भावात्। निर्दोषोऽप्ययमवतिष्ठते धर्माधर्मयोश्च फलमुपभुङ्क्त इति। न, अनागतयोः साधनाभावेनेष्टत्वात् न ब्रूमो यौ वर्तमानौ धर्माधर्मौ तौ दोषाभावान्न भवत इति, अपि तु यावनागतौ तौ कारणाभावान्नोत्पद्येते इति। वर्तमानयोः पुनः कार्यावसायात्[4] प्रक्षयः। यौ तु[5] वर्तमानौ धर्माधर्मौ तयोर्यदावसानिकं कार्यं तेन व्यावृत्तिः। प्रवृत्त्यभावे[6]जन्माभावः। अत्रापि धर्माधर्मयोः व्यावृत्तयोर्यदन्यच्छरीरं तन्न भवति। न पुनर्वर्तमानं न भवतीति। अथ वर्तमानस्य कथं निवृत्तिः? संस्कारक्षयात्। यावदस्य स्थितिहेतुः संस्कारो धर्माधर्मसमाख्यातोऽवतिष्ठते, [7]तावत् तिष्ठतीति। जन्माभावे दुःखाभाव इति निरायतनस्यानुत्पत्तेः, न हि निरायतनं दुःखमुत्पत्तुमर्हतीति[8]। एतच्च तदाहुः, यावदात्मनि धर्माधर्मौ तावदायुः शरीरमिन्द्रियाणि विषयाश्चेति। सोऽयं मिथ्याज्ञानादिना कलापेन[9] सर्वतो वियुक्तो विमुक्त इत्युच्यते॥

**तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम्।** स्वरूपतस्तु यथाव्यवस्थितपदार्थाधिगतिरित्युक्तम्[10]। कस्मात् पुनरयं हाता सुखदुःखे जहाति, न पुनः सुखमादाय दुःखं जहातीति? विवेकहानस्याशक्यत्वात्। [11]विवेकहानमशक्यं कर्तुम्। अतः सुखमुपभोक्तुकामेन दुःखमपि भोक्तव्यम्। दुःखं वा जिहासता सुखमपि हातव्यम्, सविषान्नवदिति। **सुखं दुःखानुषक्तमनादेयमिति।** अनुषङ्गोऽविनाभावः, यत्रैकं तत्रेतरदिति। समाननिमित्तता वानुषङ्गः, यानि वा सुखसाधनानि तान्येव[12] दुःखसाधनानीति। समानाधारता वानुषङ्गः, यत्र सुखं तत्र दुःखमिति। समानोपलभ्यता वानुषङ्गः, येन सुखमुपलभ्यते तेन दुःखमपीति॥ २॥

## ॥ टीका ॥

तदेवं प्रथमसूत्रेण शास्त्रस्याभिधेयप्रयोजनसंबन्धान् दर्शयता पदार्थाः प्रमाणादय उद्दिष्टाः। तेषां च लक्षणमुक्त्वा तत्परीक्षा [13]वर्तयिष्यते, अपरीक्ष्य तत्त्वज्ञाननिर्णयायोगात्। न चानिर्णीतप्रयोजनसंबन्धानां प्रमाणादीनां लक्षणपरीक्षयोरवसरः[14]। न च

---

१. क्रियायाः क्ष° C २. °त्वादिति C ३. यौ तौ C ४. °वसानात् C ५. तौ C ६. °न्मापायः C ७. °दवतिष्ठत इति C ८. °मर्हति C ९. °नादिकला° C १०. °त्युच्यते C ११. न हि विवेकहानं शक्यं C १२. यान्येव C १३. वर्तिष्यते J. १४. °रवकाशः C.

प्रयोजनसंबन्धनिर्णयः परीक्षां विनेति तत्परीक्षार्थं द्वितीयं सूत्रम् । तत्र प्रयोजनाभिधानस्य द्वैविध्यात् संशयः । द्विविधं हि प्रयोजनाभिधानं ग्रन्थकृतां दृष्टं समीचीनमसमीचीनं च, यथा वार्तिकादिप्रयोजनाभिधानम् आयुर्वेदादिप्रयोजनाभिधानं च । तस्मादभिधानसामान्याद् उभयथादर्शनाच्च[1] संशयः । तत्रोत्सूत्रेण [2]प्रयोजनाभिसंबन्धप्रतिपादनपरं पूर्वपक्षभाष्यम्—तत् खलु वै निःश्रेयसमित्यादि । तद् विभजते—न तत्त्वपरिज्ञानादपवर्गः । कुतः ? उभयथादोषात् । तदत्यन्तविमोक्षलक्षणोऽपवर्गो निःश्रेयसम् । तच्चेत् तत्त्वज्ञानानन्तरम्, सम्प्रदायोच्छेदो वातपुत्रीयता च शास्त्रस्य स्याताम्[3] । तस्मान्न तत्त्वज्ञानानन्तरं निःश्रेयसम् । तथा सति प्रमाणादितत्त्वज्ञानान्निःश्रेयसमिति[4] मिथ्या । न चान्यन्निःश्रेयसम् इत्यभिमानः[5] पूर्वपक्षवादिन इति ॥

अत्रेदं सिद्धान्तसूत्रमुपतिष्ठते—दुःखजन्मेति । तस्य तात्पर्यमभिधायावतारयति—न प्रयोजनानभिसंबन्धः । कुतः ? निःश्रेयसस्य परापरभेदात् । चतस्रो हि प्रतिपत्तयः प्रमेये आत्मादौ । प्रथमा तावदागमात् यामाचक्षते श्रवणमिति । द्वितीया तु श्रुतस्य [6]परीक्ष्य न्यायेन व्यवस्थापनम्, यामाहुर्मननमिति । सा चान्वीक्षिक्यामायतते । आन्वीक्षिकी च संशयादितत्त्वज्ञापनं प्रमाणतत्त्वज्ञापनायोपादत्ते । प्रमाणतत्त्वज्ञापनं च हेयोपादेयभेदव्यवस्थितप्रमेयतत्त्वपरिज्ञापनाय । [7]तत्राप्याद्यन्तवर्जितदशवर्गज्ञापनमाद्यन्तयोः एवात्मापवर्गयोरुपादेययोस्तत्त्वज्ञानस्योपकरोति[8] । न चायमान्वीक्षिकीविद्यावधृतप्रमेयतत्त्वोऽपि परितुष्यति, पूर्ववदेवात्मादिगतविपर्ययवासनानुवृत्तेः । नो खलु दिङ्मूढः सहस्रेणाप्यनुमानैर्विपर्ययसंस्कारमपनयति[9] । तत्त्वसाक्षात्कारस्तु विपर्ययसंस्कारं[10] निवर्तयति । तज्जनिता च वासना [11]विपर्ययवासनामिति लोकसिद्धम् । तस्मादात्मादिसाक्षात्कारवतीं चतुर्थीं [12]प्रतीतिमशेषतद्गोचरवासनाविपर्यासशमनीमर्थयमानेनादरनैरन्तर्याभ्यां [13]ध्यानचिन्तादिशब्दवाच्या [14]तृतीया प्रतीतिः साक्षात्कारफला दीर्घकालमुपासनीया । अथ परिनिष्पन्नध्यानोपायः साक्षात्कारवतीं प्रतिपद्य चतुर्थीं प्रतीतिं निर्मुक्तसकलक्लेशजालः अप्रवर्तमानो धर्माधर्मसाधनेषु निरुद्धानागतधर्माधर्मप्रबन्धोत्पादो भूतेन्द्रियविजयी प्रज्ञाज्योतिर्जीवन्नेव मुक्त इत्युच्यते । न चैवमवस्थो वीतरागोऽपि सहसैव देहादिभिः

---

१. °दयथार्थदर्श° C २. प्रयोजनानभि° J. ३. वातपुत्रीयं वा शास्त्रं स्यात् C. ४. °श्रेयसाधिगम इति C. ५. °भिसन्धिः C ६. परीक्षा न्यायेनैवावस्था°. C ७. °वर्गज्ञापनेना° J. ८. ज्ञापनस्यो° J. ९. विपर्याससं° J १०. साक्षात्कारं C ११. विपर्यासवास° J १२. प्रमाम् C १३. ध्यानार्चितादि° C १४. तज्जाप्रती° C

वियुज्यते, प्रागुपात्तस्य धर्माधर्मप्रचयस्याभुक्तस्य भुज्यमानस्य चाप्रक्षीणत्वात्[1]। न च प्रायश्चित्तेनेवात्मज्ञानेनादत्तफलान्येव कर्माणि क्षीयन्त इति युक्तम्,

नाभुक्तं क्षीयते कर्म।

[ ] इति स्मृतेः। अत्यन्तसुखदुःखसंविज्ञानविरोधस्य कर्मणामवधारणात्। औत्सर्गिकस्य क्वचित् प्रायश्चित्तादौ विशेषवचनेनापवादात्।

क्षीयन्ते चास्य कर्माणि।

[मुण्डक० २।२।८] इति श्रुतेः। योगर्द्धिवशाद् युगपदुत्पादितानेकविधदेहोपभोगेनाप्युपपत्तेः ॥

तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये।

[ छान्दोग्य ६।१४।२ ] इति चा[2]भुक्तोपभुज्यमानफलकर्मप्रक्षयावधित्वदर्शनम्[3]। योगर्द्धिवशाच्चानियतविपाककालान्यपि[4] दीर्घकालफलान्यपि कर्माणि पिण्डीकृत्य भूतेन्द्रियदविजयितया युगपदेव भुङ्क्ते। अचिन्त्यो हि समाधिप्रभाव इत्युक्तम्। न चाचिन्त्यत्वाद्[5] विनैवोपभोगेन कर्माशयान्[6] प्रक्षयिष्यतीति युक्तम्, दृष्टानुसारेण कथंचिदुपपत्तौ अत्यन्तादृष्टकल्पनाया अयोगात्। तस्मादुत्पन्नतत्त्वसाक्षात्कारस्य दोषाभावात् प्रवृत्त्युपरमे योऽनागतापूर्वानुत्पादस्तदपरं निःश्रेयसम्। तच्च तत्त्वसाक्षात्कारानन्तरं भवति। तादृशश्च मुनिस्तत्त्वज्ञानवान् शास्त्रस्य प्रणेतेति न वातपुत्रीयं शास्त्रमिति। परं तु निःश्रेयसं [7]योगर्द्धिप्रभवसम्पदा युगपदुपभोगेनोपात्तकर्माशयस्य क्षयात् सर्वदुःखोपरम इत्युपपन्नं निःश्रेयसद्वैविध्यमिति भावः ॥

तदेतद् दर्शयति—**यत्तावदिति**। तत्त्वसाक्षात्कारः **तत्त्वज्ञानम्**। **संहर्षः** सुखम्। **आयासो** दुःखम्। तत्रानागताभ्यां [8]तावत् प्रवृत्त्यभावादनुत्पादादेवमुच्यते[9]। विद्यमानकारणे अपि सुखदुःखेऽशक्तोऽद्विष्टश्च[10] भुञ्जानो न सुखदुःखतया मनुते[11]। न ह्यस्ति संभवो न तत्र तृप्यति[12] तच्च तस्य सुखम्, न च तद् द्वेष्टि तच्च तस्य दुःखमिति। स्यादेतत् भवत्वेतदपरं निःश्रेयसम्। प्रकृते तु किमायातमित्यत आह—**अयं शास्त्रार्थः**। अर्थशब्दो निमित्ते। अपरं निःश्रेयसं शास्त्रस्य निमित्तम्। अथ

---

१. वाभुक्तस्य वाक्षीयमाणत्वात् C २. वाभुक्त° C ३. °वधित्वप्रदर्शकम् C ४. °च्चानियतनियतफला° C ५. °न्त्यप्रभावत्वात् C ६. क्षेप्यतीतिं J ७. समाधिप्र° C ८. तावदप्र° C ९. मुत्पत्तेः C १०. °द्विशंश्च C ११. सुखं दुःखतया K; अनुमन्यते C १२. तृष्यति J

अपरनिःश्रेयसोत्पादसमय एव परनिःश्रेयसोत्पादोऽपि कस्मान्न भवतीत्याह—**परं तु निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति**। नो खलूत्पन्नतत्त्वसाक्षात्कारः[1] समुच्छिन्नवासनाविपर्यासज्ञानस्तत्कार्यदोषतत्कार्यप्रवृत्तीनां निवृत्त्यै प्रयतते, कारणनिवृत्त्यैवायत्नलभ्यत्वात् कार्यनिवृत्तेः। न हि कफोद्भवज्वरप्रशमनाय कफनिवृत्तौ सत्यां यत्नान्तरमातिष्ठते, तत एव तत्सिद्धेः। परं तु निःश्रेयसं न तावद् भवति, यावदुपभोगादुपात्तकर्माशयप्रचयो न क्षीयते। तस्मात् तत्त्वसाक्षात्काराधानप्रयत्नात्परस्तदुपभोगप्रयत्न[2] आस्थेयः। तथा च न तुल्यकाल उत्पादः परापरयोर्निःश्रेयसयोः। तदिदमुक्तम्—**क्रमेणेति**॥

तदेवमर्थगतिं परिशोध्य सूत्रमवतारयति—**क्रमेति**। यद्यप्यपरस्मिन्नपि निःश्रेयसे मिथ्याज्ञानदोषप्रवृत्तीनामपि समुच्छेदक्रमोऽस्ति, तथापि जन्मदुःखोच्छेदक्रमो नास्ति, पूर्वोपात्तस्य कर्माशयप्रचयस्य तादवस्थ्यात्। तस्मात् जन्मदुःखोच्छेदक्रमसमभिव्याहृतो मिथ्याज्ञानाद्युच्छेदक्रमः परस्यैव निःश्रेयसस्य शास्त्रप्रयोजनस्य। तत्प्रतिपादनमर्थः प्रयोजनं यस्य तत् तथोक्तम्। इदं चावान्तरप्रयोजनम्। प्रधानप्रयोजनमग्रे वक्ष्यति॥

अत्र केचित् योगविभागमिच्छन्ति। कारणोच्छेदात् कार्योच्छेदोऽभिमतः। न चासौ दुःखादीनां मिथ्याज्ञानान्तानामप्रदर्शिते कार्यकारणभावे सिध्यति। तस्माद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्यको योगः। अत्र किल समासादेतेषामितरेतरयोगः अवगम्यते। स च योग्यतया कार्यकारणभावः। कार्येण कारणं युक्तम्, कारणेन च[3] कार्यमिति। अतः सिद्धे कार्यकारणभावे उत्तरोत्तरापाये तदनन्तराभावादपवर्ग[4] इत्यनेन योगेन कारणोच्छेदक्रमेण कार्योच्छेदक्रमप्रतिपादनेनापवर्गः प्रतिपाद्यते। अत्र चोत्तरत्वं पाठापेक्षया कारणस्य। तदनन्तरत्वं च कार्यस्याव्यवहितादिपाठापेक्षया। मिथ्याज्ञाने कारणे तत्कार्याः दोषाः। एवं शेषेष्वपि योज्यम्। तमिमं[5] सूत्रविभागममृष्यमाणो **वार्त्तिककृद्** आह—**इदं सूत्रम्**। एकवचनेन भेदं व्यावर्तयति। न हि समुच्छेदक्रमप्रतिपादनेनापवर्गपरतयैकवाक्यत्वे संभवति वाक्यभेदो न्याय्यः। एकनिवृत्त्या अन्यनिवृत्त्यैव कार्यकारणभाव आक्षिप्त इति नासौ सूत्रे[6] दर्शनीयः। न ह्यर्थाक्षिप्तं **सूत्रकारा** दर्शयन्ति। तदिदं सूत्रग्रहणप्रयोजनम्। तथा हि—

स्वल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥

---

१. खलु इत्यत्र C  २. प्रयत्नश्च C  ३. तु J  ४. °रापायादप° C
५. क्षमेतं C.  ६. सूत्रकारेण C.

[ विष्णुधर्मोत्तरे ३.५.१ ] इति। अस्तोभमनधिकम्, अर्थलभ्यप्रदर्शने त्वधिकं भवेदिति। तत् सूचनात् सूत्रं स्यात्। तथा ह्याहुः,

लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥

[ ] इति। इतरेतरयोगेनापि कार्यकारणभावः सूचनीय[1] एव। स वरमेकनिवृत्त्यान्यनिवृत्त्यैव सूच्यतामेकवाक्यतानुरोधायेति। परमतात्पर्यमस्याह—एतत्संबन्धेनैव। शास्त्रस्य निःश्रेयसाधिगमलक्षणेन प्रयोजनेन यः संबन्धः पूर्वमाक्षिप्तः, तत्समाधानेनार्थेन[2] अर्थवदेतत् सूत्रम्। संबन्धपदेन विषयवाचिना विषयिसमाधानं[3] लक्षयति। तदेवं सूत्रतात्पर्यं व्याख्यायावयवव्याख्यानमवतारयति—पदार्थस्त्विति। यद्यपि सामभेदादौ हलशकटादौ च मिथ्याज्ञानमनेकप्रकारं संभवति, तथापि न तत् संसारहेतुरपि त्वात्मादिद्वादशविधप्रमेयविशेषविषयमिति सूत्रस्थं मिथ्याज्ञानं विशेष्टुमाह—तत्रेति। तदेतेन आत्माद्यपवर्गपर्यन्त इत्यादि भाष्यमवतारितम्। तदेतदाक्षिपति—को[4] वृत्त्यर्थ इति। न खलु यथा कुण्डे बदरं पटे वा शौक्ल्यम्, एवं प्रमेये मिथ्याज्ञानं प्रवर्तते, तस्य ज्ञातृसमवेतत्वादित्यर्थः। उत्तरम्—[5]विषयार्थः। यावदुक्तं भवति प्रमेयविषयं मिथ्याज्ञानमिति, तावदुक्तं भवति प्रमेये वर्तत इति। विषयत्वं चाग्रे निवेदयिष्यते। अनेकप्रकारम् इत्युक्तम्। तदाह—तत्रायं भेदः तत्रात्मनि तावत् प्रधाने प्रमेये नास्तीति। कथं पुनरेतन्मिथ्याज्ञानमित्यत आह—आत्मा तावदिति। अत्र शङ्कते—तस्यानुपपत्तिः। कुतः? सदसतोः सारूप्याभावादिति चेत्? सर्वत्र हि रजतोदकादिविभ्रमेषु शुक्तिरजतयोर्वा मरुमरीचिसलिलयोर्वा सारूप्यमेव निमित्तं प्रतीमः न हि जातु रूपं रसादिषु हस्तिनं वा मशकादिषु आरोपयन्ति। असदृशेऽपि श्वेते पीतभ्रमः, मधुरे च तिक्तभ्रमः; पीतः शङ्खस्तिक्तो गुड इति च दृश्यत इति चेत्—न, तत्रापि सारूप्यसंभवात्। तथा हि बहिर्निर्गच्छदत्यच्छनयनरश्मिसंपृक्तपित्तगतं पीतिमानमाश्रयरहितम्, शङ्खं च दोषाच्छादितसितिमानमनुभवन् पीतगुणस्य च तदसंबन्धमननुभवंस्तदसंबन्धाग्रहेण[6] पीतचीरविल्वादिसामानाधिकरण्येन सारूप्यात् शङ्खः पीत इति विपर्यस्यति। एवं त्वगिन्द्रियोपनीतं गुडद्रव्यमननुभूयमानमाधुर्यमनुभवन् रसनाग्रवर्तिनश्च पित्तस्यास्वभावजाततिक्तस्य तिक्तत्वमनुभवन्[7] तदाश्रयं च[8] पित्तमननुभवन्नसंबन्धाग्रहसारूप्यात् तिक्तनिम्बसामानाधिकरण्येन तिक्तो गुड इति विपर्यस्यति। अतिशीघ्रतया चैष क्रमो न

---

१. °नीय एवं वरं C २. °धानेन C ३. °सम्बन्धिनं C ४. वृत्तिशब्दार्थः C ५. विषयशब्दार्थः C ६. °भवन्नसंबन्धा° C ७. पित्तस्य तिक्तत्वमनु° C ८. तिक्तम°C

लक्ष्यते । न च ब्रूमो यत्र सारूप्यं तत्र भ्रम इति, [1]येनातिप्रसक्तिश्चोद्येत, अपि तु यत्र भ्रमस्तत्रावश्यं कथञ्चित् [2]सारूप्यमिति । एवं द्विचन्द्रदिङ्मोहालातचक्रादिष्वपि किञ्चित् कथञ्चित् सारूप्यमूहनीयम् । न च सदसतोरत्यन्तविलक्षणयोः सारूप्यमस्ति । तत् कथमात्मनि नास्तितारोप इत्याक्षेपः ॥

समाधत्ते—**न, प्रमाणगम्यतोपपत्ते** । आक्षेपं विभजते—**न हि सदसती** इति । समाधानं विभजते—**तच्च नैवमिति** । यदि सदसतोः समानत्वं नास्ति, तर्हि भेदः । तथा च कस्य कुत्रारोप इत्यत आह—**क्रियागुणेति** । **सोऽयमसद्धर्मान् क्रियागुणरहितत्वादीन् सत्यात्मनि समारोप्य** असत्तया विपर्यस्यति—**नास्त्यात्मेति,** नत्वात्मानं सर्वतोऽभ्यर्हिततमं पश्यन् तत्रासौ स्निह्यति, स्नेहाच्च तदुपकाराय घटते । एवं तत्परिपन्थिनं द्वेष्टि । द्वेषाच्च तदपकाराय घटते । ततश्च कर्माशयम् आचिनोति । ततो जन्म । ततश्च दुःखमिति । एवमात्मनस्तादृशस्य मा भूत् तत्त्वज्ञानम् । अस्तु नास्तितासमारोप एव तावद् यतो न प्रवर्तते । यथाहुः,

सुखी भवेयं दुःखी वा मा भूवमिति तृष्यतः ।
यैवाहमितिधीः सैव सहजं सत्त्वदर्शनम् ॥

[ प्र. वा. १.२०२.३ ] अत्रोच्यते । यद्यपि रागादिनिवृत्तिहेतुर्नैरात्म्यदर्शनम्, तथापि नास्ति कर्म, नास्ति कर्मफलमिति दृष्टेः परमं निदानम् । एवं प्रेत्यभावाभावज्ञानस्य च । तथा च दुःखहेतोर्हेयवर्गस्याभावान्न तद्धानायानेन घटितव्यम् । न चावंघटमानो हेयं[3] हातुमर्हति । सोऽयं वृश्चिकभिया पलायमानः आशीविषमुखे निपतितः । सेयमास्तिकत्वायात्मास्तितोपासनीया । [4]अभ्यर्हितता चात्मनोऽत्यन्तदुःखनिवृत्तावुपपद्यते[5] । अयमेव चास्योपकारो यदात्यन्तिकदुःखशमनम्, सुखाधाने त्वस्य तदनुषङ्गिदुःखाधानादपकारप्रसङ्गात् । न हि जातु कश्चिच्चेतनः सुखमाप्स्यामीति मधुविषसम्पृक्तमन्नमुपभुङ्क्ते । तस्मान्नैरात्म्यदृष्टिः प्रयत्नेनोच्छेत्तव्या प्रेक्षावतेति सिद्धम् ॥

अपरमपि संसारहेतुं मिथ्यादर्शनमाह—**एवमनात्मनीति** । पृच्छति—**किं पुनरिति** । उत्तरम्—**अहङ्कारेति** । विशेषमाह—**इच्छादीति** । पुनः पृच्छति—**कथं पुनरिति** । उत्तरम्—**शरीरेति** । उपसंहरति—**एवमिति** । सामान्यधर्मोऽहंकारास्पदत्वम् । विशेषधर्म इच्छाद्याधारता । तां खल्वयं शरीरादिष्वारोप्य [6]एत एवाहमिति शरीरादिष्वात्मभावमारोपयति ॥

---

१. °तिप्रसङ्ग° J　२. सादृश्य° J　३. न चा° ह्ययं C　४. °र्हितत्वादात्मा° Ta. Ti
५. °त्वादात्मनो ··· °वुपयुज्यते । C　६. तत C

एवं सिद्धं कृत्वा विपर्ययं सर्वमुक्तम्। संप्रति सन्दिहानो [1]विपर्ययस्वरूपं पृच्छति—**कः पुनरयं विपर्ययः?** परीक्षकाणां विप्रतिपत्तेः संशयः। [क]केचित् स्वाकारबाह्यत्वविषयं[2] ज्ञानं विपर्यय इत्याचक्षते। [ख]अन्येऽसद्विषयं ज्ञानम्। [ग]अन्ये त्वनिर्वचनीयमेव ज्ञानम्। [घ]अपरे त्वग्रहणमेव। [ङ]अन्यथाख्यातिं तु[3] वृद्धाः। उत्तरम्—

**अतस्मिंस्तदिति प्रत्ययः॥**

इदमत्राकूतम्—न तावत् स्वाकारं रजतादि बाह्यतया आलम्बन्ते विभ्रमाः। तथा हि ज्ञानाकारत्वं रजतादेरनुभवाद् व्यवस्थाप्येत, अनुमानाद् वा? अनुभवोऽपि रजतप्रत्ययो वा स्याद्, बाधकप्रत्ययो वा? न तावद् रजतप्रत्ययः। स हीदमनहंकाराकारास्पदं रजतमादर्शयति, न चान्तरम्। अहमिति हि सदा स्यात्, प्रतिपत्तुः प्रत्ययाद्व्यतिरेकात्। भ्रान्तं हि ज्ञानं स्वाकारमेव बाह्यतया आलम्बते। तथा चानहंकारास्पदमस्य विषयो ज्ञानाकारोऽपि, ज्ञानाकारता पुनरस्य बाधकज्ञानप्रवेदनीयेति चेत्? हन्त चक्षुषी निमील्य [4]वैतालिकपक्षपातं परित्यज्यालोचयत्वायुष्मान्[5] किं पुरोवर्तिद्रव्याकारतामात्रं प्रतिषेधति रजतस्य, आहोस्वित् ज्ञानाकारतामप्यस्यादर्शयति बाधकप्रत्ययः? तत्र ज्ञानाकारतोपदर्शनव्यापारं बाधकप्रत्ययस्य[6] ब्रुवाणः श्लाघनीयप्रज्ञो देवानांप्रियः। पुरोवर्तित्वनिषेधादर्थात् ज्ञानाकारतासिद्धिरिति चेत्? [7]तन्निषेधो वणिग्वीथ्यादावुपलब्धस्य रजतस्य व्यावस्थापने हेतुः। आन्तरत्वं [8]त्वस्यानुपलब्धचरं कुतस्त्यम्? न चानुमानमत्र प्रभवतीति चतुर्थे[9] निवेदयिष्यते॥

सन्तु तर्हि बाधकप्रत्ययानुरोधाद् असत्प्रकाशनशीला एव मिथ्याप्रत्ययाः। तथा हि बाधकं विज्ञानं नेदं रजतमिति रजतज्ञानगोचरस्यासत्त्वं गृह्णाति। न चासतो विषयभावो नोपपद्यते। न हि विषयत्वं नाम कारणत्वं येनासति न स्यात्, किं तु स्वकारणाधीनः सामर्थ्यातिशयः। स तादृशो ज्ञानस्य, येन सन्तमिवासन्तमपि गोचरयति। न च विषयसामर्थ्यमत्रोपयुज्यते, ज्ञानस्य सामर्थ्यादेव तद्भावसिद्धेः। अतएवासत्प्रकाशनसामर्थ्यमेव मिथ्याज्ञानानामविद्यात्वमनिर्वचनीयं[10] केचिदास्थिषत। अत्रेदमालोचनीयम्—किमेतत्

---

१. विपर्यास° J   २. स्वाकारं बाह्य° C   ३. °ख्यातिरिति तु C

क. आत्मख्यातिवादिनो योगाचाराः ख. असत्ख्यातिवादिनो माध्यमिकाः ग. अनिर्वचनीयख्यातिवादिनो वेदान्तिनः घ. अख्यातिवादिनः प्राभाकराः ङ. नैयायिकाः।

४. वैज्ञानिक° C द्रः हेतुबिन्दुः पृः व्योमवती पृः   ५. °चयतु भवान् C.   ६. बाधकस्य J.   ७. न त्वस्या तन्नि° C.   ८. त्वनुलब्ध° C.   ९. ता. टी. ४।२।३५.   १०. °नीयत्वं C.

मिथ्याज्ञानमसत् सदात्मना गृह्णातीत्यसद्विषयमुपेयते[1]? आहोस्वित् सदेव सदन्तरात्मना गृह्णाति, सतश्च[2] सदन्तरात्मत्वेन असत्त्वादसद्विषयमुच्यते ? न तावत् पूर्वः कल्पः[3], रजतात्मना चेत् असदालम्बेत न सतीं शुक्तिकाम्, कथं पुनरसौ रजतार्थी शुक्तौ प्रवर्तते न पुना रजताभावे । कस्माच्चेदमिति पुरोवर्ति द्रव्यमङ्गुल्या निर्दिश्य तस्य रजतत्वं निषेधति नेदं रजतमिति, यदि तत्र न प्रसञ्जितं रजतत्वं पूर्वविज्ञानेन ? अथ शुक्तिरेव रजतात्मना असतीति तदाकारतया तामालम्बमानं मिथ्याज्ञानमसदालम्बनमुच्यते ? तत्रानुज्ञया वर्तामहे । न खल्वन्यथाख्यातिवादिनोऽपि सदन्तरं सदन्तरात्मना सदभ्युपगच्छन्ति । तथा सत्यन्यथेत्येव न स्यात् । यथाहुरन्यथाख्यातिवादिनः,

तस्माद् यदन्यथा सन्तमन्यथा प्रतिपद्यते ।
तन्निरालम्बनं ज्ञानमभावालम्बनं[4] च तत् ॥

[श्लो. वा. निरालम्बनवादे ११७-८] इति । न च रजतात्मना पुरोवर्तिनो द्रव्यस्यानिर्वचनीयता, मिथ्याज्ञानसमये सत्त्वेन बाधकसमये [5]चासत्त्वेन निर्वचनीयत्वात् । न चैवंभूतस्यासतः प्रथा नोपपद्यते, तस्य सदसद्भ्यामुपाख्येयत्वात् । यः पुनः अद्वैतवादिनां प्रपञ्चो वैनाशिकानां वा सामान्यादिर्नो बहिः[6] किं त्वलीकम् । तद्विषयं च ज्ञानं मिथ्याज्ञानमित्यपि न संभवति, तस्य सर्वोपाख्यारहितस्य केनचित् सारूप्याभावात्, तत्कारणत्वाच्च भ्रान्तेः, कारणाभावे कार्याभावस्य सुलभत्वात् । तस्मात् प्रपञ्चश्च सामान्यादि च वस्तुसती नासमीचीनविज्ञानगोचरौ । तद्बाधकं चोपरिष्टादपाकरिष्यते[7] । तस्मान्नानिर्वचनीयख्यातिरपि ॥

स्यादेतत् । अन्यदन्यथा प्रकाशत इति संविद्विरुद्धम् । न तावत् सद्भावमात्रेणालम्बनत्वम् । तन्मात्रस्य सर्वप्रत्ययसाधारण्येन सर्वेऽर्थाः सर्वप्रत्ययविषया इति सर्वसर्वज्ञतापत्तिः । न च कारणत्वेनालम्बनत्वम्, रूपादिविज्ञानानां रूपादिवच्चक्षुराद्यपि कारणमिति चक्षुराद्यालम्बनत्वप्रसङ्गात् । अतीतानागतविषयत्वं च विज्ञानस्य न स्यात्, अतीतानागतयोरसत्त्वेनाकारणत्वात् । तस्मात् प्रतिभासमानमालम्बनम् । तथा च रजतप्रतिभासः शुक्तिकालम्बनमिति दुर्घटम् । अपि च चक्षुरादीनां समीचीनज्ञानोपजननसामर्थ्यमिति कथमेभ्यो मिथ्याज्ञानं भवितुमर्हति ? न हि श्यामाकबीजं परिकर्मसहस्रेणापि कलमाङ्कुराय कल्पते । दोषसहाया लोचनादयो मिथ्याप्रत्ययमादधत इति[8] चेत्—न,

---

१. मुच्यते J २. ॰रात्मना C ३. पक्षः J ४. ॰मसदाल॰ C ५. इतः पत्राणि खण्डितानि J ६. सामान्यादिबुद्धिर्नो न बहिः J ७. तद्बाधश्च॰ ॰ष्यति J द्र: ता॰ टी. ४।२।३३-३५ । ८. ॰धतीति J

दोषा हि कारणानां सामर्थ्यं निघ्नन्ति, न पुनः कार्यान्तरोपजननसामर्थ्यमादधति, न खलु [1]भृष्टं कुटजबीजं न्यग्रोधधानायै कल्पते, किं तु न करोति [2]कुटजधानाम्। अपि च स्वगोचरे व्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः। तस्मात् सर्वमेव विज्ञानं समीचीनमास्थेयम्। तथा हि रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे। तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम्, दोषवशात् तद्गतस्य शुक्तिकात्वसामान्यविशेषस्याग्रहणात्। तावन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति। सा च गृहीतग्रहणस्वभावापि दोषवशात्[3] गृहीततांशप्रमोषेण ग्रहणमात्रमवतिष्ठते। तथा च रजतस्मृतेः पुरोवर्तिमात्रग्रहणस्य च मिथः स्वरूपतश्च विषयतश्च भेदाग्रहणात् सन्निहितरजतविषयविज्ञानसारूप्येणेदं रजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः। क्वचित् पुनर्ग्रहणे एव मिथोऽगृहीतभेदे, यथा पीतः शङ्ख इति। अत्र हि [4]विनिर्यन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य काचस्येवातिस्वच्छस्य पीतत्वं च गृह्यते। पित्तं तु न गृह्यते। शङ्खोऽपि दोषवशात् गुणरहितः स्वरूपमात्रेण गृह्यते। तदनयोर्गुणगुणिनोरसंसर्गाग्रहात् सारूप्यात् पीतचिरबिल्वफलप्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च, भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधानाच्च[5] नेदं रजतमिति विवेकप्रत्ययस्य बाधकत्त्वमप्युपपद्यते। तदुपपत्तौ च भ्रान्तत्वमपि लोकप्रसिद्धं सिद्धं भवति। तस्माद् यथार्थाः सर्वेऽपि भ्रमाः प्रत्ययत्वात् पटप्रत्ययत्वयवदिति प्राप्तम्॥

एवं प्राप्तेऽभिधीयते—अस्ति तावद् रजतार्थिनो रजतमिति ज्ञाने सति पुरोवर्तिद्रव्यप्रवृत्तिः सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम्। तत् किं ग्रहणस्मरणयोस्तद्गोचरयोश्च भेदाग्रहाद् भवतु, आहोस्विदभेदग्रहात्? न तावच्चेतनोऽज्ञानात् प्रवर्तते, अपि तु ज्ञानात्। पुरोवर्तिवस्तुग्रहणरजतज्ञानादगृहीतभेदं स्वरूपतो विषयतो वा रजतार्थिनं पुरोवर्तिद्रव्ये प्रवर्तयतीति चेत्? हन्त भोः किमेतावता पुरोवर्तिवस्तुगोचरं ज्ञानं रजतगोचरं भवति, आहोस्वित् तन्मात्रगोचरमेव? यदि रजतगोचरं पुरोवर्तिरजततया-गृह्णात्[6], कथं नान्यथाख्यातिः? अथ तन्मात्रगोचरम्, को भेदाग्रहस्योपयोगः? न हि वृक्षमात्रदर्शनं निश्चयेन शिंशपार्थिनं प्रवर्तयति, न हि तत्र शिंशपाज्ञानमस्ति। अस्ति त्विह रजतविज्ञानम्, अगृहीतभेदमिदमिति ज्ञानेनेति चेत्? ननु रजतविज्ञानं पुरोवर्तिनि द्रव्ये न वर्तते, पुरोवर्तिज्ञानं च न रजत इति तत्र पुरोवर्तिद्रव्यमात्रार्थी पुरोवर्तिनि[7] प्रवर्तेत न रजतार्थी। एवं रजतार्थी यत्र क्वचन प्रवर्तेत न नियमेन पुरोवर्तिनि द्रव्ये।

---

१. दुष्टं J २. कुटजबीजं कुटज° C ३. दोषात् C ४. बहिर्निर्गच्छन्° C
५. °हारव्यवधानाच C ६. °तया गृह्णन् J ७. तत्र पुरोवर्तिनि C

न हि तत्र तेन रजतत्वमवगतमीति। अथेदं रजतमिति द्वे ज्ञाने, भेदाग्रहादिदं रजतमित्येकज्ञानसदृशे, तेन तदुचितं व्यवहारं प्रवर्तयतः ? यद्येवं तद्रजतम्, इयं शुक्तिरिति भेदावभासिविज्ञानव्यवहारमपि कस्मान्न प्रवर्तयतः ? यथैव हि भेदाग्रहादभिन्नविज्ञानसादृश्यम्[1], एवमभेदाग्रहाद् भिन्नविज्ञानसादृश्यमपि। सोऽयमुभयतो भेदाभेदग्रहसारूप्यात् प्रवृत्तिनिवृत्तिभ्यां युगपदाकृष्यमाणः प्रतिपत्ता कष्टां दशामावेशितः प्रज्ञाशालिभिरतिव्याख्यया ॥

स्यादेतत्। विपर्ययज्ञानोत्पादेऽपि शुक्तिरजतयोर्भेदाग्रहेऽस्य[2] व्यापार आस्थेयः, अन्यथा गृहीतभेदानामपि विपर्ययोत्पादप्रसङ्गात्। तथा च शक्यं तत्रापि वक्तुम्—यथा भेदाग्रहाद् विपर्ययज्ञानोत्पाद एवमभेदाग्रहात् कस्मान्न समीचीनज्ञानोत्पाद इति। तत्र यस्तव परिहारः सोऽस्माकं व्यवहारव्यपदेशयोर्भविष्यतीति। यथाहुरख्यातिवादिनः—येषामपि विपरीतख्यातिस्तेषामप्यज्ञानवासनानिबन्धनो भ्रम इति। मैवम्, ज्ञानहेतूनाम् अज्ञातरूपकार्यसंबन्धानां चक्षुरादीनां दर्शनात्, चेतनव्यवहाराणां स्वबुद्धिपूर्वकाणामप्रतीतेः बुद्धिपूर्वकत्वे तु विवेकाग्रह उपयुज्यते, न व्यवहारव्यपदेशयोरिति युक्तमुत्पश्यामः। यद्यविवेकग्रहोऽपि तत्परिपन्थी विद्यत इति कुतोऽन्यतरनिबन्धनो व्यवहारः ? तस्मात् समारोप एव भेदाग्रह इति। तत् सिद्धम्[3] एतद्विवादाध्यासितं रजतादिविज्ञानं पुरोवर्तिवस्तुविषयम्, रजतार्थिनस्तत्र नियमेन प्रवर्तकत्वात्। यद् यदर्थिनं नियमेन यत्र प्रवर्पयति तद्विज्ञानं तद्विषयम्, यथोभयसिद्धं समीचीनरजतविज्ञानम्। तथा चैतत्[4], तस्मात् यथा, यच्चोक्तम्—अनवभासमाना[5] शुक्तिरनालम्बनमिति, तत्र किं शुक्तिकात्वस्य रजतमिति ज्ञानं प्रत्यनालम्बनत्वं साध्यते, आहोस्विद् द्रव्यमात्रस्य सितभास्वरस्य पुरोवर्तिनः ? तत्र[6] पूर्वस्मिन् कल्पे सिद्धसाधनम्। उत्तरस्मिन्ननवभासनमसिद्धम्[7], इदमिति पुरोवर्तिनो द्रव्यस्याङ्गुल्या निर्देशात्। दृष्टं च दुष्टानामपि कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरोत्पादकत्वम्। तद् यथा, वेत्रबीजानां दावाग्निदग्धानां कदलीप्रकाण्डजनकत्वम्, भस्मकदुष्टस्य चौदर्यस्य तेजसो बहुतरान्नपानपाचकत्वम्। नेदं रजतमिति च प्रत्यक्षबाधकप्रत्ययादपहृतविषयम्, प्रत्ययत्वेन विभ्रमाणां यथार्थत्वानुमानं नोदेतुमर्हति। यथा च प्रमाणाभासव्यभिचारेऽपि प्रमाणे आश्वासः, तथा प्रमाणतोऽर्थ-

१. °दभेदज्ञान° C २. ग्रहस्य J ३. अत्र खण्डितपत्रे J पुस्तके पाठभेदः—विवेकाग्रहवदविवेकाग्रहोऽपि तत्परिपन्थी विद्यत इति कुतोऽन्यतरनि·····ग्रह उपयुज्यते। न व्यवहारव्यपदेशयोरिति युक्तमुत्पश्यामः। तत् सिद्धम्° ४. तथा चैतद् न तथा चैतत् C ५. शुक्तिका नालम्ब° C ६. °स्मिन् सिद्ध° J ७. °भासमानत्वम° C

प्रतिपत्तौ इत्यत्रोपपादितम्[1]। दिङ्मात्रमत्र दर्शितम्। प्रपञ्चस्तु तत्त्वसमीक्षायाम् अस्माभिः कृत इत्युपरम्यते ॥

तदेवमात्मनि मिथ्याज्ञानं व्याख्याय शरीरादिष्वेकादशसु मिथ्याज्ञानं भाष्य एव दर्शितम्। तत्तु स्पष्टत्वात् अस्माभिर्न[2] व्युत्पादितमित्याशयवानाह—शेषमिति। तत्र शरीरादिषु मनःपर्यन्तेषु यथायोगं मिथ्याज्ञानं दुःखे सुखम् इत्यादिना अप्रतिहातव्यम् इत्यन्तेन भाष्येणोक्तम्। प्रवृत्त्यादिषु श्रृङ्गग्राहिकयोक्तं प्रवृत्तौ इत्यादिना रोचयेत् इत्यन्तेन भाष्येण। एवं मिथ्याज्ञानस्य स्वरूपं दर्शयित्वा मिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखानां कार्यकारणभावो दोषादीनां स्वरूपं चोक्तम् एतस्मात् इत्यादिना[3] ताप इत्यन्तेन भाष्येण। संप्रति मिथ्याज्ञानाद्युच्छेदादपवर्ग इति वक्ष्यति। तच्चायुक्तम्, सत्यपि तदुच्छेदे संसारतादवस्थ्यात्। न ह्यन्योच्छेदेऽन्यस्योच्छेदः। तथा च नापवर्ग इति वक्ष्यमाणमर्थमुपपादयितुमुक्तं भाष्यकृता, त इमे मिथ्याज्ञानादय इत्यादि। तद् वार्त्तिककारो व्याचष्टे—त इमे दुःखादय इति भाष्यकारोक्तक्रमाद् विपरीतक्रमाभिधानं वार्त्तिककृतः एवं सूत्रकारोक्तक्रमाद् विपरीतक्रमाभिधानं भाष्यकृतः। तद् दुःखादीनां मिथ्याज्ञानपूर्वकत्वेन मिथ्याज्ञानस्य दुःखादिपूर्वकत्वेनानादित्वं दर्शयितुम्। पृच्छति—कः पुनरिति। यद्येत एव संसारस्तर्हि सूत्रकारः प्रमेयसूत्रे कस्माद् दुःखादिभ्यः पृथक् प्रेत्यभावं संसारापरनामानमुपादत्ते ? तस्मादेभ्योऽन्य एव संसार इति भावः। उत्तरम्—दुःखादीनामिति। नैषां स्वरूपमपि तु कार्यकारणभाव इत्यर्थः। क्रमव्यतिक्रमतात्पर्यमाह—स चानादिरिति। अत्र हेतुमाह—पूर्वापरेति। दुःखजन्मप्रवृत्तिदोषाः विषयत्वेन[4] तावन्मिथ्याज्ञानस्य कारणम्। एवमसति जन्मनि मिथ्याज्ञानस्यानुत्पत्तरविषयोऽपि जन्म मिथ्याज्ञानस्य कारणम्। एवं विना प्रवृत्तिं जन्माभावात् जन्मद्वारेण प्रवृत्तेरपि मिथ्याज्ञानकारणत्वम्। प्रवृत्तिद्वारेण च दोषाणाम्, तथा मिथ्याज्ञानाद् दोषाः, दोषेभ्यः प्रवृत्तिः, प्रवृत्तेर्जन्म, जन्मनो दुःखम्। यद्यपि प्रवृत्तिरेव साक्षाद् दुःखहेतुः, तथाप्यनायतनस्य तस्यानुत्पत्तेरन्तरा जन्म करोति। अथ सैव दुःखमिति ? अनादित्वाच्च नान्योन्याश्रयं चक्रकं वा बीजाङ्कुरसन्तानयोरिवेति। संप्रति बीनापाय इव तज्जन्याङ्कुरप्रवाहनिवृत्तिः मिथ्याज्ञानापाये तज्जन्यदोषप्रवृत्तिजन्मदुःखमिथ्याज्ञानादिप्रवाहनिवृत्तिः, कारणनिवृत्तौ कार्यनिवृत्तेरिति कथनपरं भाष्यम् अनुभाष्याक्षिपति—यदा तु तत्त्वज्ञानादिति। अपायोऽपि तत्त्वज्ञानान्मिथ्याज्ञानस्य स्वरूपतो

---

१. ॰पदर्शितम् C २. उपपादितम् C ३. तापपर्यन्तेन J ४. विषयः। ते न C

वा, विषयतो वा, फलतो वा स्यात्, न तावत् स्वरूपतः, तस्याशुतरविनाशिनः संस्काराद् वा ज्ञानान्तराद् वा अपायस्य तत्त्वज्ञानसाधारण्येन तस्यापि बाध्यत्वप्रसङ्गात्। नापि विषयतः, न हि शुक्तिकाज्ञानं रजतज्ञानस्य रजतविषयतामपहर्तुमुत्सहते जातं[1] हि तद् रजतं विषयीकृत्य। यथाहुः

गृहीत्वार्थं गताश्चौराः कस्तानाच्छेत्तुमर्हति।

इति। नापि फलमपहरति, उपदर्शितो हि तेनार्थः, प्रवर्तितश्च तत्र पुरुषः। तदिदमुक्तम्—**कथमपाय** इति। उत्तरम्—**समानविषय** इति। यस्मिन्नेव हि पुरोवर्तिनि द्रव्ये पूर्वेण रजतत्वमासञ्जितं तत्रैवोत्तरं तद्विरुद्धं शुक्तिकात्वं धर्ममुपनयति। तथा च पूर्वस्य विज्ञानस्य मिथ्यात्वमादर्शयत्तज्जनितां[2] प्रवृत्तिं विघटयत् फलमस्यापहरतीति भावः। न तु समानविषयतामात्रेण विरोधः, मा भूदेकस्मिन्नात्मनि नित्यत्वविभुत्वज्ञानयोर्विरोध इत्यत आह—**यस्मादिति**। तत्वमिथ्यात्वकथनेन मिथो विरुद्धधर्मप्रसञ्जनं सूचयति। नित्यत्वविभुत्वज्ञानयोस्तु समानविषययोरप्यविरुद्धधर्मोपस्थापकतया तत्त्वज्ञानत्वादित्यर्थः। कस्माद् विरोध इत्यत आह—**वस्तुन** इति। परस्पराभावधर्मिणोरेकत्र समवाये नेदं स्वाभाविकं नानात्वं क्वचिदपीत्यद्वैतप्रसङ्ग इति भावः। उपसंहरति—**तस्मादिति**॥

अत्र देशयति[3]—**कथं पुनरिति**। प्रथममुत्पन्नं मिथ्याज्ञानमनुपजातविरोधि, तेनापहृतविषयं पश्चात्तनं तत्त्वज्ञानमुदेतुमेव नोत्सहते, प्रागेव तु मिथ्याज्ञानं बाधितुमिति भावः। उत्तरम्—**मिथ्याज्ञानस्येति**। तत्र हि प्रथममुपजातेनानुपजातविरोधिना ज्ञानेनोत्तरं बाध्यते, यत्र पूर्वापेक्षमुत्तरमुपजायते। तत् खलु पूर्वविरोधे न जायेत[4]। अजातं सत् कथं पूर्वं बाधेत, यथा प्रत्यक्षादिविरुद्धमनुमानम्? इह तु द्वे अपि ज्ञाने दोषोपहतानुपहतेन्द्रियार्थसन्निकर्षजन्मनी परस्परानपेक्षे। तत्र पूर्वमनुपजातविरोधित्वात् किं बाधताम्, अनागतस्याप्राप्तत्वेन बाधितुमशक्यत्वात्, स्वकारणबलादासाद्यमानजन्मनश्चोत्पत्तिविरोधस्य चाशक्यत्वात्? तदेवमुत्पन्नमुत्तरमुपजातविरोधितया पूर्वबाधात्मकं सन्नानुपमृद्य पूर्वमुत्पत्तुमर्हतीति बाधते[5]। तत्तु न पूर्वेण नाप्यन्येन केनचिदिति भवत्यर्थसहायम्। अर्थसहायं च मिथ्याज्ञानम्। तदनेन बाध्यत्वाबाध्यत्वे मिथ्याज्ञानतत्त्वज्ञानयोरुपलक्ष्येते। तदिदमन्यैरप्युक्तम्—

---

१. गतं J २. °मदर्शय° C ३. चोदयति J ४. जायते C ५. पूर्वमुत्पन्नं भवतीति पूर्वं बाधते C

पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्[१] ।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥

इति । तथा चानुपजातविरोधित्वमत्र बाध्यत्वे हेतुः, उपजातविरोधित्वं च बाधकत्व इति ॥

यदुपलक्षणार्थं ससहायत्वाभिधानं तज्जिज्ञासुः पृच्छति—**कस्मात्** ? उत्तरम्—**तथात्वेनेति**। अनेनाबाध्यत्वं तत्त्वज्ञानस्योक्तमिति । न केवलमबाध्यत्वम्, दृढमूलत्वमपि तत्त्वज्ञानस्येत्याह—**प्रमाणान्तरानुग्रहाच्च** । अन्तरशब्दो विशेषवचनः । आत्मादितत्त्वज्ञानं हि फलं प्रमाणविशेषैरागमानुमानप्रत्यक्षैरनुगृह्यते । तस्माद् दृढमूलत्वात् तदपि तत्त्वज्ञानं मिथ्याज्ञानं निवर्तयतीत्यर्थः । एतदेव विभजते—**आगमेति** । एतदेव स्फोरयति—**यदा हीति** । आगममयेन[२] हि ज्ञानेन प्रमेयं गृहीत्वा शास्त्रीयेण च न्यायविज्ञानेनानुमानापरनाम्ना व्यवस्थाप्य भावयतो यदात्ममनःसन्निकर्षाद् योगजधर्मसहायादुत्पद्यते तत्त्वविषयः साक्षात्कारः प्रत्यक्षफलम्, तत्र त्रयाणामपि प्रमाणानां प्रतिसन्धानम् अस्तीति दृढमूलत्वात् तेन मिथ्याज्ञानं बाध्यते ॥

**विषयं भावयतीति** व्याचष्टे—**समाहित** इति । समाहितत्वेन चेतसो[३] धारणां दर्शयति—**अनन्यमना** इति प्रत्याहारम्, **चिन्तयतीति** चेतसः तत्त्वविषयबुद्धिधाराविपच्यमानत्वं ध्यानस्य, तत्त्वज्ञानस्य स्फुटाभत्वारम्भावस्था[४] । ध्यानजनितभावना संस्कारो ध्यानभावना, तस्या विवेको मिथ्याज्ञानवासनायाः । पूर्वं हि मिथ्याज्ञानवासना तत्त्वज्ञानवासनाया बलवत्यासीत्, अथाभ्यासवशात् तुल्यबलाभवत्, अथेयमेव बलीयसी [५]तत्त्वज्ञानवासनासंभिन्ना मिथ्याज्ञानवासनया सहानुवर्तते । संप्रति तु[६] तत्त्वज्ञानवासनया अत्यन्तबलीयस्या समूलकाषं कषितत्वात् मिथ्याज्ञानवासनाया भवति विविक्ता तत्त्वज्ञानवासना[७] तस्यामित्यर्थः ॥

नन्वनेन क्रमेण निवर्ततां मिथ्याज्ञानम्, निवृत्तं तु तत्त्वसाक्षात्कारसमयेऽपि कस्मात् पुनः स्ववासनावशान्न जायते ? न खलु मिथ्याज्ञानवासना अनादिकालप्रवृत्ता आदिमता तत्त्वज्ञानेन [८]तत्संस्कारेण वा शक्या निवर्तयितुमित्यत आह—**निवृत्ते चेति** । तावदेव पुंसां बुद्धयोऽस्थिराः भ्राम्यन्ति [९]स्वोचितं च संस्कारजातमातन्वते, न यावद् भूतमर्थं

१. °तीयते J २. °गमजेन C ३. तत्त्वे चेत° J ४. स्फुटतरार° C ५. तत्त्वज्ञान° C ६. तु तत्त्वज्ञान° C ७. तत्त्वध्यान° C ८. तद्वासनया शक्या C ९. °स्कारजाः, न यावत् तत्त्वविवेचनया यावद्भूतमर्थं C

साक्षात्कुर्वन्ति । अथ साक्षात्कृत्य तत्र स्थिरपदा भवन्ति, क्षिण्वन्ति च सवासनान् मिथ्याप्रत्ययान् । भूतार्थपक्षपातो हि बुद्धेः स्वभावः । यदाहुर्बाह्या अपि—

निरुपप्लवभूतार्थस्वभावस्य[1] विपर्ययैः ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥

[प्र. वा. २१२-३] इति । तस्मात् मिथ्याज्ञानस्य न पुनरुत्पाद इति ॥

उक्तमेवार्थं स्मृतिदार्ढ्याय पृच्छति—**कः पुनरिति** । उक्तं स्मारयितुमुत्तरम्—**सहेति** । भवतु मिथ्याज्ञानस्य निवृत्तिः सवासनस्य, ततोऽपि किमित्यत आह—**मिथ्याज्ञानेति** । अत्र पृच्छति—**ये तावदिति** । उत्तरम्—**तेषामपीति** । वैराग्यस्वरूपं पृच्छति—**किं पुनरिति** । रागाभावो हि वैराग्यम् । न च तस्मादेव रागादीनामभाव इति भावः । उत्तरम्—**भोगानभिष्वङ्गलक्षणमित्युक्तम्** । विषयदोषपरिभावनापरिपाकात् खलु विषयपरित्यागेच्छा भवति । तया विरोधिगुणेन विषयतृष्णा च तत्परिपन्थिनि विद्वेषश्च तदधिकरणाश्चेर्ष्यादयो निवर्तन्ते । असक्तिर्विषयपरित्यागेच्छा, वशितया च स्वयमुपनतेषु विषयेषु माध्यस्थ्यदर्शनम् । दोषाभावे किं भवतीत्यत आह—**दोषाभाव इति** । पृच्छति—**का पुनरियमिति** । यदि हि जन्मनः प्रवृत्तिः कारणं स्यात्, ततो जन्मनिवृत्त्यै तन्निवृत्तिरर्थ्येत । न पुनरसौ क्षणिका सती आमुष्मिकाय जन्मने कल्पते । अतः किमर्थं निवर्त्यत इति भावः । विदिताभिप्राय उत्तरमाह—**धर्माधर्मौ** । कस्मात् पुनरुपचार इत्यत आह—**जन्मसाधनत्वात्** । एतद्विभजते—**नास्मिन्निति** । उपचारे प्रयोजनं दर्शयित्वा निमित्तमाह—**धर्माधर्मयोस्त्विति** । वर्तमानानागतयोरविशेषेण दोषापायात् निवृत्तिरुक्तेति भ्रान्त्या देशयति—**यौ तावदनागताविति** । परिहरति—**न, अनागतयोरिति** । अनागताभिप्रायमेतदित्यर्थः । यद्येवम्, वर्तमानयोः कुतः प्रक्षय इत्यत आह—**वर्तमानयोरिति** । अस्तु प्रवृत्तेरभावः, ततः किमित्यत आह—**प्रवृत्त्यभाव इति** । उक्तं विवेकमिहापि योजयति—**अत्रापीति** । वर्तमाननिवृत्तिहेतुं पृच्छति—**अथेति** । उत्तरम्—**संस्कारेति** । **श्रुतिः**,

तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये ।

[छान्दोग्य° ६.१४.२] इति । किं जन्माभावे सिध्यतीत्यत आह—**जन्माभाव इति** । अत्रैव [2]वृद्धसंमतिमाह—**एतच्च तदाहुरिति** । तदेतच्चेति योजना । प्राणनस्य कालभेदावच्छेद आयुः ॥

---

१. निरुपद्रवभू° C २. °संप्रतिपत्तिम् C

स्यादेतत्, महाप्रलयेऽपि मिथ्याज्ञानादिना दुःखान्तेनास्ति वियोग इति अत्रापि मुक्तिप्रसङ्ग इत्यत आह—**सोऽयं मिथ्याज्ञानादिनेति**। **सर्वत** इति तृतीयार्थे तसिः सर्वेणेति। न च प्रलयावस्थायां सर्वेण वियोगः, कर्माविद्यावासनयोरविनाशात्। मुक्तौ तु तयोरपि विनाशः। कर्मवासना च सर्वकार्याणामुत्पादिका अवस्थापिका च। तन्निवृत्तौ शरीरादिवत् तत्त्वज्ञानसंस्कारस्यापि प्रलय इत्यशेषविशेषगुणविमुक्तो मुक्त इत्युच्यत इति सिद्धम्॥

स्यादेतत्। तत्त्वज्ञानात् मिथ्याज्ञानापाय इत्युक्तम्। किं पुनस्तत्त्वज्ञानमित्यत उक्तं भाष्यकृता—**तत्त्वज्ञानं त्विति**। तदनुभाष्य सर्वेषां ज्ञानानां भाष्योक्तानामनुगतमेकं स्वरूपमाह—**स्वरूपतस्त्विति**। चोदयति—**कस्मादिति**। नो खल्वयं प्रेक्षावतां समाचारो यद् दुःखभिया सुखपरित्याग इति, अपि तु सुखं दुःखाद् [1]विविच्य उपाददते दुःखं च वर्जयन्ति। न हि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्त इति[2]। उत्तरम्—**विवेकहानस्येति**। यद्यपि सुखदुःखे भिन्ने, तथाप्यनित्यत्वकृतकत्ववत् परस्परानुषक्ते इति न खलु सुखस्य केवलस्योपादानं दुःखस्य वा केवलस्य परिवर्जनं शक्यमित्यर्थः। कः पुनरयमनुषङ्गो यतो विवेकहानमशक्यमित्यत आह—**अनुषङ्गोऽविनाभावः**। तत्स्वरूपमाह—**यत्रैकं** सुखं वा दुःखं वा, **तत्रेतरत्** दुःखं वा सुखं वा। तदनेनानित्यत्वकृतकत्वयोरिव [3]सुखदुःखयोरविनाभावो दर्शितः। न चाविनाभावो विना संबन्धादिति तत्सिद्धये संबन्धविकल्पानाह—**समाननिमित्तता वा अनुषङ्गोऽविनाभावः**, वाशब्दश्च वक्ष्यमाणसंबन्धान्तरापेक्षया, [4]न तु पूर्वापेक्षया। अत्र च शरीराद्यपेक्षया समाननिमित्तता, न तु धर्माधर्मापेक्षया तयोरसाधारण्यादिति मन्तव्यम्। तयोरविनाभावसिद्ध्यर्थं संबन्धान्तरम् आह—**समानाधारता वा**। अपरं संबन्धान्तरमाह—**समानाधारता वा**। अपरं संबन्धान्तरमाह—**समानोपलभ्यता वा**। मनोगोचरत्वमुभयोः। ततश्च सिद्धोऽविनाभावापरनामा अनुषङ्ग इति। **यत्रैकं तत्रेतरदिति वा**[5] यत्र यस्मिन्निमित्ते सतीति वा यत्राधार इति वा यत्रोपलब्धिसाधने सतीति व्याख्येयम्। इतिः सूत्रसमाप्तिं सूचयति॥ २॥

---

१. विभिद्योपा° C २. द्रः महाभाष्ये १. १. ३९; ४. १. १; ६. १. १३

३. °यो॰ परस्परस्याविना° J ४. न तु···पेक्षयाति om C ५. दिति च J

॥ परिशुद्धिः ॥

अप्रतीतस्वरूपस्य प्रयोजनाभिसंबन्धस्य परीक्षा न युज्यते, निराश्रयत्वात्। प्रथमसूत्रं तूद्देशपरमेवेत्यत आह—**तदेवमिति**। अभिधेयसंबन्धप्रयोजनपरादेव तस्मादुद्देशोऽप्यवगतः। स चापेक्षितत्वाद् गृहीत इत्यर्थः। एतेन परीक्षाविषयो दर्शितः। उचितं दर्शयन्नेव तदतिक्रमे हेतुमाह—**तेषामिति**। एतेन छलतः संबन्धपरीक्षायाः प्रयोजनमपि दर्शितम्। अभिधानस्य द्वैविध्यम्—उभयकोटिसंस्पर्शः। **समीचीनमित्या**द्यनुरोधेन यथा वार्त्तिकादित्यादावार्थः क्रमो ग्राह्यः। **तस्मादभिधानसामान्यात्** अभिधानसाधर्म्यमात्रात् निर्णायकरहितात् दृश्यमानादिति यावत्। **उभयथा दर्शनाच्चेति**। तत्सहचरितोभयकोटिदर्शनजसंस्कारसुवः स्मरणादिति यावत्। एतच्च **सूत्रकार**स्याप्तत्वावधारणात् प्रागिति मन्तव्यम्। यद्यपि चात्र वचन[1] एव साक्षात् संशयं दर्शयति, तथापि तद्द्वारा अर्थ एव द्रष्टव्य इति। संबन्धिनि च प्रयोजने तत्त्वज्ञानकार्यतया परीक्ष्यमाणे संबन्ध एव कार्यकारणभावलक्षणः परीक्षितो भवतीति तदेव परीक्ष्यतया निर्दिश्यते—**तत् खलु वै निःश्रेयसमिति**। वस्तुतस्तु संबन्धपरीक्षैवेयमित्यतो न प्रतिज्ञासंशयपरीक्षाणां वैयधिकरण्यमिति। **तत्रेति**। सूत्रे व्याख्यातव्ये। **उत्सूत्रेणेति**। पूर्वपक्षं विना सिद्धान्तसूत्रस्यावताराभावात् इत्याशयः॥

ननु जीवन्मुक्तिपक्षे तद्गतामवस्थानं न स्यादिति चोद्यमानमनवकाशमित्यत आह—**तदत्यन्तेति**। ननु मा भूत् तत्त्वज्ञानानन्तरमेव निःश्रेयसम्, का नो हानिः[2]। न ह्येवं प्रतिज्ञातमस्माभिरित्यत आह—**तथा सतीति**। यद्यपि साक्षादेवं न प्रतिज्ञातम्, तथापि तत्त्वज्ञाननिश्रेयसयोः कार्यकारणभावः **सूत्रकृता** दर्शितः, स चानन्तर्यनियम एव स्यात्, नातोऽन्यथेति पूर्वपक्षी मन्यत इत्यर्थः। तदिदमुक्तम्—**मिथ्येति**॥

ननु तथापि, तदत्यन्तविमोक्षोऽपवर्गः। [१. १. २२] इत्येतावदेव[3] निःश्रेयसमिति केन प्रतिज्ञातं यावता जीवन्मुक्तिरपि निःश्रेयसं भवत्येवेत्यत आह—**न चान्यदिति**। अभिसन्धौ बीजं तत्त्वज्ञानस्योत्पन्नस्यापवर्गे कर्तव्येऽपेक्षणीयाभावः। भावे वा तदेवापवर्गसाधनम्, न तत्त्वज्ञानमिति। तदिदमुक्तं **वार्त्तिककृता—सत्यपि तत्त्वज्ञाने यस्याभावान्नापवृज्यते सोऽन्योऽर्थः** इति। स्फुटं **वार्त्तिक**मिति **टीकार्थः**। **सूत्र**समुत्थतां सिद्धान्त**वार्त्तिक**स्य दर्शयितुं सूत्रमवतारयति—**अत्रेदमिति**। यथाश्रुतं **वार्त्तिकं** न पूर्वपक्षाच्छादकं न ह्यपरमपि निःश्रेयसं शास्त्रीयात् तत्त्वज्ञानात् साक्षाद्भवतीति,

१. चाप्तवचन B  २. का···हानिः om J  ३. इति तदेव JA

यस्माच्च साक्षाद्भवति न तच्छास्त्रीयमित्यतो भूमिमारचयति—**चतस्रो हीति**। सा **चान्वीक्षिक्यामायतते** आयत्ता भवति। तत्परिकरोपयोगमाह—**आन्वीक्षिकी चेति** ॥

ननु श्रवणस्य तावदाकांक्षोत्थापनेनोपयोगो, मननस्याप्येवमेवेत्यवधारणेन, तत् किमपरमवशिष्यते यदर्थं प्रतिपत्त्यन्तरोपासनम्? न हि निश्चयातिरिक्तं कस्यचित् प्रमाणस्य फलमित्यत आह—**न चायमिति**। अयमाशयः। न हि निश्चयो निश्चयत्वेन मोक्ष उपयुज्यते, किं तु[1] मिथ्याज्ञाननिवृत्तिद्वारा। न चापरोक्षविषयो मोहः औपदेशिकेनानुमानिकेन वा तत्त्वनिश्चयेन निराकर्तुं पार्यते, तदुपायानुष्ठानेन तु तयोरुपयोगः। तस्माद् ये **वेदान्तिनो** वाक्यार्थज्ञानादेव मुक्तिमिच्छन्ति, ते प्रष्टव्याः, किं भवतां[2] वस्तुसन्तमुपायोपेयभावसंबन्धमभ्युपगम्य[3] प्रवृत्तिः, संवृतिसन्तं वा? आद्येऽद्वैतसिद्धान्तक्षतिः, कार्यकारणभावस्य भेदाधिष्ठानतया तयोः पारमार्थिकत्वे भेदस्यापि पारमार्थिकत्वप्रसंगात्, द्वितीये तु किमविशेषेण प्रवृत्तिः, यथासंवृतिव्यवस्थं वा? आद्ये भोगिनोऽप्यपवृज्येरन्। द्वितीये तु न शाब्दादानुमानिकाद् वा तत्त्वज्ञानादैन्द्रियकव्यामोहविगमः। किं तर्हि, साक्षात्कारादेव दृष्ट इति तथैव तदर्थिनः प्रवृत्तिर्युक्ता। न च वाच्यं वाक्यादेवात्मसाक्षात्कारोदय इति, तस्य केवलस्य सामर्थ्यानुपलम्भात्। यदि तु स्वसंविदितस्वरूपतया किं तत्र ध्यानादिकमपूर्वमाधास्यतीत्युच्यते, तदा श्रुतेरपि वैफल्यमनेनैव[4] न्यायेन। यदपि भौतदशकनदीसंतरणमुदाहृतं[5], तत्रापि न केवलेनैव वाक्येन साक्षात्कारः किं तु चक्षुरादिनैव। [6]इहापि मनसा सहकृतेन भविष्यतीति चेत्—न, अनेकधा श्रुतश्रुतेरपि सत्यपि च पटीयसि मनसि ब्रह्मसाक्षात्काराभावात्। तत् कस्य हेतोः? भौतानामिव स्वशरीरे चाक्षुषस्य दृढतराभ्यासस्य मुमुक्षोर्मानसस्यात्मन्यभावात्। तस्मात् तदर्थमभ्यास एव शरणम्। तदिदमुक्तं **लोकसिद्धमिति**। लोकसिद्धः कार्यकारणभावस्तात्त्विको भवतु मा वा भवतुं[7] सर्वस्य पुरुषार्थप्रवृत्तस्य [8]तावत् स एव शरणम्। तदनादरे तु पुरुषार्थोऽपि नादरणीयस्तुल्ययोगक्षेमत्वादिति ॥

यदि नाम चतस्रः प्रतिपत्तय आत्मादौ प्रमेये, प्रकृते तु किमायातमित्यत आह—**अथेति**। एतदुक्तं भवति—यदि श्रौतमानुमानिकं वा तत्त्वज्ञानमादाय पूर्वपक्षः, तदा

१. प्रवृत्त्य॰ J कि॰ नाम BJA २. भवतां om JA ३. ॰भावमभ्युपेत्य JA ४. एव om BM ५. दर्शन नदी॰ ॰हरणं BM ६. अत्रापि BM ७. भवतु om JA ८. सर्वस्य तावत् A

अनभ्युपगम एवोत्तरम् । न हि तस्य साक्षान्निःश्रेयसहेतुत्वमाचक्ष्महे । किं तर्हि ? परम्परया सैव **चतस्रो** हीत्यादिना दर्शिता । तस्मात् साक्षात्कारमादाय पूर्वपक्षः । तस्य हि साक्षादेव निःश्रेयसहेतुता अभ्युपगम्यते । तत्रोभयनोद्यपरिहारार्थं [1]निःश्रेयसद्वैविध्यप्रतिपादनमुपस्थाप्यत इति भावः । **अथ इत्युच्यत** इत्यन्तेन पूर्वपक्षः[2] । पूर्वः पूर्वो हेतुरुत्तर उत्तरस्तद्वानिति ॥

ननु साक्षात्कारवांश्च देहादिमांश्चेति दुर्घटमिदम्[3] । न हि श्रवणादेरिव परे निःश्रेयसे कर्तव्ये साक्षात्कारस्यापि किञ्चित् कर्तव्यान्तरमस्तीत्यत आह—**न चैवमिति** । चोद्यसंभावनाय दृष्टान्तः—**न च प्रायश्चित्तेनेवेति** । न तावत् प्रायश्चित्तस्याधिकारापत्तिः फलम्, आगममन्तरेणादृष्टकर्मणां फलविशेषकल्पनायां प्रमाणाभावात् श्रूयमाणफलपरित्यागप्रसंगाच्च । बलवति बाधके सति नेदमनिष्टमिति चेत्—न, अनन्यथासिद्धस्यागमस्य बाधकसहस्रेणाप्यपनेतुमशक्यत्वात् । [4]शक्यत्वे वा सुरापेयत्वानुमानमपि दुर्निवारमिति हैतुकानां दत्तः स्वहस्तः स्यात् । अतएव न प्रायश्चित्ताचरणदुःखमेव ब्रह्महत्यादीनां फलम्, तत्फलत्वेनाश्रुतेः, प्रायश्चित्तविधिवैफल्यप्रसंगाच्च अविशेषाधानाच्च । अनिच्छतोऽपि कर्मबलादेव[5] तत्सिद्धेश्च । तस्माददत्तफलान्येव कर्माणि प्रायश्चित्तेन क्षीयन्त इत्येव साधु । तथा च तद्वदेव तत्त्वसाक्षात्कारोऽपि करिष्यतीत्यर्थः ॥

अत्र चागमबलप्रवृत्ता आगमेनैव बोधयितुं युज्यन्त इत्याशयवानाह,

नाभुक्तं क्षीयते

[ ] इति । ननु

ज्ञानाग्निः सर्वकर्माणि...भस्मसात् कुरुते तथा ।

[गीता ४.३७] इत्येवं[6] विपक्षेऽपि स्मृतिरस्ति । तत् कथं निर्णयो भविष्यतीत्यत आह—**अन्त्यसुखेति** । स्यादप्येवं यदि नाभुक्तमित्यादिस्मृतेरनुग्राहको न्यायो न स्यात्, अस्ति च तथा[7] । तथा च प्रयोगः, विवादाध्यासितानि कर्माणि भोगादेव क्षीयन्ते अचीर्णप्रायश्चित्तकर्मत्वादारब्धशरीरकर्मवत् । न चात्रागमविरोधः[8], तस्यागमान्तरविरोधेनानिर्णायकत्वादित्यर्थः । न चोत्सर्गसिद्धायाः स्मृतेरसति बाधकेऽन्यथाभावो युज्यत इत्याशयवानाह—**औत्सर्गिकस्येति** । ननु,

---

१. द्वैविध्यव्युत्पादन° JA २. पूर्वपक्षः om BJ ३. इदम् om JA ४. °त्वेनानुमा° A ५. बलादेव B फलादेव A ६. एवं om BM ७. अस्ति तु JA ८. °बाधः JA

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः[1] ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

[मुण्डक॰ २.२.८] इति श्रुतौ परिपन्थिन्यां कथमुच्यतेऽसति बाधक इति, कथं च तद्विरोधेन स्मृतेर्निर्णायकत्वमनुमानानुग्रहोऽपीत्यत आह—क्षीयन्त इति । न हीयं श्रुतिरदत्तफलानामेव कर्मणां तत्त्वज्ञानात् क्षयमाह, किं तु क्षयमात्रम् । तच्चोपभोगेनापि भवन्नकिञ्चिद् विरुणद्धीति भावः[2] ॥

देहेषूपभोगो **देहोपभोगः** । अपि च विपरीतापि श्रुतिर्विद्यत इत्याह—**तावदेवेति** । अस्य तत्त्वसाक्षात्कारवतः **तावदेव चिरं** विलम्बः । **यावन्न** विमोक्ष उपात्तकर्मराशेः सकाशात् फलोपयोगेन । अथ तस्मिन् सति **संपत्स्यते** कैवल्येनेत्यर्थः ।

भोगेन त्वितरे क्षपयित्वा

[ ] इति वाक्यशेषात् ॥

ननु भोगेन प्रक्षयोऽनुपपन्न एव, कर्मराशेरनन्ततया अनियतविपाककालतया[3] चेत्यत आह—**योगर्द्धीति** । **उक्तम्** आदिवाक्ये । शङ्कते—**न चेति** । अयमाशयः—यदि तावत् कर्मणामेवायं महिमा, यदेकदैव [4]नानाविधदेहाद्यवान्तरव्यापारैस्तैस्तैरुपभोगः साध्यः, किं योगप्रभावपरिकल्पनया ? अथ नैष महिमा तेषाम्, तथापि क्व योगप्रभावस्योपयोगः ? न हीश्वरोऽपि कर्मणां स्वभावं विपर्यासयितुमर्हति । तस्मात् स्वप्रतिभया कल्पनीयमेतत् । एवं चेद् वरमदत्तफलान्येव योगप्रभावात् क्षीयन्त इति कल्प्यतां लाघवायेति । परिहरति—**दृष्टानुसारेणेति** । प्रमाणानुसारेण ॥

यथा ह्युपभोगादेव कर्मणां क्षयः, देहादिषु सत्स्वेव चोपभोगः, लब्धवृत्तिभिरेव [5]कर्मभिर्देहादिसम्भवः, सहकारिलाभ एव तेषां वृत्तिलाभः, ते च सहकारिणः क्वचित्फलोन्नेयाः यथा युगपदनेकेन्द्रियोपग्रहे, क्वचिदागमगम्या यथा **वासुदेवसौभरि**प्रभृतीनां काययौगपद्य इति सर्वत्र प्रमाणमस्ति, नैवमनुपभुक्तकर्मक्षये । यथा च महाप्रलये सर्वकर्मणामेकदैव वृत्तिनिरोध आगमप्रामाण्यादास्थीयते, तथा योगर्द्धिकालेऽपि सर्वेषां वृत्तिलाभ आस्थेय आगमप्रामाण्यादेवेति न किञ्चित् स्वप्रतिभामात्रेण कल्पितमित्यर्थः तादृशश्च मुनिरपरनिःश्रेयसवानित्यर्थः । किमतो यद्येवमित्यत आह—**इति न वातपुत्रीयमिति** ।

---

१. कर्मबन्धनम् J २. अर्थः JA ३. ॰विपाकसमयतया BM ४. ॰देहाद्यनेकव्यापारैः BM ५. कर्मभिरेव J

अथ परं निःश्रेयसं कीदृशमित्यत आह—**परं त्विति**। इत्युपपन्नं निःश्रेयसद्वैविध्यमिति[1]। पूर्वपक्षनिराकरणायेति शेषः। न सुखदुःखतया मनुते रागद्वेषप्रसवहेतुत्वाभावादित्यर्थः। न ह्यस्ति सम्भवो न तत्र तृष्यति[2] तच्च तस्य सुखं यादृशमज्ञानिनः तृष्णाजनकम्, न [3]तद् द्वेष्टि तच्च तस्य दुःखमिति यादृशमज्ञानिनो द्वेषजनकमित्यर्थः। उक्तं तात्पर्यमक्षरार्थीकर्तुं समर्थितमेव शङ्कते—**स्यादेतदिति**। **उपभोगप्रयत्न आस्थेयो** मोक्षाय त्वरमाणेनापि कायव्यूहादाविति शेषः। यस्तु न त्वरते यदा भविता कर्मक्षयस्तदा भविता मोक्षोऽपि किं त्वरया? प्राप्ता तावन्निरपाया भूमिरिति समर्थितहृदयः, तस्य तु निःश्रेयसद्वययौगपद्यशङ्कापि नास्तीति भावः॥

नन्वेतावतैव सर्वं सुस्थं किमुत्तरप्रबन्धेनेत्यत आह—**तदेवमर्थगतिमिति**। **मिथ्याज्ञानदोषप्रवृत्तीनां** प्रवाहरूपाणामिति बोद्धव्यम्। प्रवृत्तिश्चात्र कारणरूपा ग्राह्या, कार्यरूपाया अनुच्छेदात्। जन्मदुःखयोः प्रवाहरूपयोरुच्छेदक्रमो नास्ति। कुतः? **पूर्वोपात्तस्येति**। मूलानुच्छेदादित्यर्थः। आगामिवार्त्तिकविरोधं परिहरन्नाह— **इदं चेति**॥

यद्यपि दुःखादीनामेकार्थसमवायलक्षणोऽपि योगः संभवति तथापि शरीरादेर्जन्मनः स नास्ति। कार्यकारणभावस्तु तस्यापि स एव ग्राह्य इत्याह—**योग्यतयेति**। कारणस्य हि[4] पूर्ववर्तित्वं युज्यत इत्यत आह—**अत्र चेति**। उत्तरस्यानन्तरं च पूर्वमेव स्यात्, न च पूर्वं कार्यमित्यत आह—**तदनन्तरत्वं चेति**। अव्यवहितमव्यवधानं तेनादौ पाठोऽव्यवहितादिपाठः। **मिथ्याज्ञाने कारणे तत्कार्या दोषाः** अव्यवधानेनैवादौ पठिता इति शेषः। यथैतत् तथान्यत्रापीत्यत आह—**एवमिति**। तेनायमर्थः। दुःखादीनां कार्यकारणभावः। तेषामेवोत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति। दूषयति—**न हीति**। अपवर्ग एकोऽर्थः। उत्तरोत्तरापाये तदनन्तराभावादिति च पदद्वयम्। केषामिति दुःखादीनामिति च पदं किं भवतीति साकाङ्क्षम्। तस्मादेकवाक्यत्वलक्षणयोगादेकमेवेदं वाक्यमित्यर्थः। यदपि वाक्यभेदेन प्रयोजनाधिक्यमभिहितम्, तदपि नास्तीत्याह—**एकनिवृत्त्येति**॥

विश्वतोमुखत्वेऽप्यसंदिग्धत्वं प्रकरणानुवृत्त्यादिभिरित्यविरोधः। **सारवत्** प्रयोजनवत्। **अनवद्यं** शिष्टानामदुःखप्रतीतिकरम्[5]। प्रकृतत्वेनास्तोभमिति व्याचष्टे—**अस्तोभमिति**।

---

१. निःश्रेयसद्वैतम् JA  २. तृप्यति B  ३. यद् BM  ४. हि om BM
५. °मदुष्प्र° B

यथाव्याख्याते[1] विप्रतिपद्यमानं लक्षणान्तरेण बोधयति—**तथा ह्याहुरिति**। लाघवं वाक्येषु पदकृतम्, पदेषु स्वल्पत्वमक्षरकृतमित्यपौनरुक्त्यम्। एतच्च कार्यकारणभावस्य योगविभागेनाभिधीयमानत्वमभ्युपगम्योक्तम्। वस्तुतस्तु तेनाप्यसौ सूचनीय एव। न हि योगविभागस्य एतत्सामर्थ्यम्। अपि त्वर्थाधिक्यसूचनमात्रम्। एतच्चाविभागेऽपि लभ्यत इत्याह—**इतरेतरेत्यादि**। ननु सूत्रे मिथ्याज्ञानमात्रमेव श्रूयते, तत् कथमाह तत्रात्मादावित्यत आह—**यद्यपि सामेति**। भाष्यविषयतां वार्त्तिकस्य दर्शयति—**तदेतेनेति**[2]। न खलु यथा कुण्डे बदरं संयोगेन पटे वा शौक्ल्यं समवायेनेत्यर्थः। ननु न तावत् सत्तामात्रेण सारूप्यं भ्रान्तावुपयुज्यते जपाकुसुमादिसन्निधानपरिभूतसितिम्नि स्फटिकादावनुपलभ्यमानविशेषस्मरणेऽपि रजतादिविपर्यासाभावात्। तस्मादुपलभ्यमानमेव सारूप्यं तद्धेतुरित्यास्थेयम्। तदप्यसंगतम्, सारूप्यस्य भेदाधिष्ठानतया तत्प्रतिभासने भेदस्यापि प्रतिभानादभेदारोपानवकाशात्। तस्मात् सदसतोः सारूप्याभावादित्याशङ्कैवेयमनुपपन्नेत्यत आह—**सर्वत्र हीति**। न हीदमनेन सदृशमिति कृत्वा सारूप्यग्रहणमिति ब्रूमः। किं तर्हि ? रजतादौ यो धर्मश्चाकचिक्यादिः उपलब्धपूर्वः[2] स एव तज्जातीयो वा पुरोवर्तिन्युपलभ्यते यदि तदा भ्रान्तिः, नातोऽन्यथेत्यर्थः॥

अन्वयं दर्शयित्वा व्यतिरेकमाह—**न हीति**। यद्यपि हस्तिमशकादावपि यथाकथञ्चित् सारूप्यमस्त्येव, तथापि व्यवच्छेदकधर्मेणानभिभूतं[3] सारूप्यमिहाभिप्रेतम्। व्यवच्छेदकानभिभूतत्वं च तत्र नास्तीत्यतः सर्वात्मना वा सारूप्यमेकदेशेन वेत्येवमादि परास्तं वेदितव्यम्। शङ्कते—**असदृशेऽपीति**। इदमत्र विवक्षितम्, सारूप्यं[4] ह्यारोप्यस्यारोपविषयेण चिन्त्यते, अन्यथा वा ? अनन्तरेऽतिप्रसंगः। प्रथमे तु न तावत् पीतगुणी शुक्लगुणिनि शङ्खे आरोप्यते, पीतं चिरविल्वमिदमिति प्रत्ययानुदयात्। नापि शुक्लगुणे पीतगुणः, शुक्लगुणस्याप्रतिभासनात्। नापि शुक्लत्वसामान्याधारे[5] रूपस्वलक्षणे पीतगुणः, चाक्षुषप्रतीतौ शुक्लत्वसामान्यानवभासे तदाधारस्य रूपस्वलक्षणस्य भासनायोगात्। भासनेऽपि वा द्रव्यत्वसामानाधिकरण्यं न स्यात्। नापि पीतत्वं सामान्यं शुक्लत्वसामान्याधारे। तद्धि[6] तदात्मतया वा आरोप्येत, तत्संसर्गितया वा ? आद्ये शुक्लत्वसामान्याधारा[7] व्यक्तिः पीतत्वसामान्यात्मना प्रथमाना न

---

१. °व्याख्याने M २. उपलब्धः पूर्वम् BM. ३. तथापि व्यवच्छेदको धर्मे व्यवच्छेदकानभिभूतः JA, तथाप्यवच्छेदकधर्मेणानभिभूतं M. ४. °सादृश्यम् JA ५. °न्याधिकरणे BM. ६. °धिकरणे, तदेतद्धि B var, M ७. °धारो BM

देशकालनियता स्यात्। व्यक्तिर्हि देशकालनियता न सामान्यम्। सा चाप्रथितैव। न च पीतत्वसामान्यमेव शुक्लगुणव्यक्तिरूपेणरोप्यत इति साम्प्रतम्। तथा सति पीतत्वं न प्रतीयेत[१]। ^A^नापि शुक्लत्वसामान्यमेव पीतत्वसामान्यतदात्मतया आरोप्येत, तथा सति शुक्लत्वेन शुक्लत्वं प्रतीयेत^A^। न हि तस्यान्यत् किञ्चिद् रूपमस्ति, येन प्रतीतिपथमवतरेत्। सर्वथा अप्रतीतं च नारोपविषय इत्यसंगतिरेवास्य कल्पस्य, संसर्गितया तु सामान्ये आरोप्यमाणे शुक्लगुणस्य शुक्लत्वेनैव प्रतीतिः स्यात्। न च पीतिमप्रतीतेर्विनियतारतम्यं स्यात्, सामान्यस्यैकरूपत्वात्। तस्मात् पीतगुण शंखे समारोप्यत इति वाच्यम्। तथा च गुणगुणिनोः क्व सादृश्यवार्तापीत्यर्थः॥

समाधत्ते[२]—**न तत्रापीति,** न ह्यत्र पीतगुण आरोप्योऽपि तु पीतगुणश्च शङ्खश्च आरोपविषयौ, संसृष्टस्वभावत्वं त्वारोप्यम्। तथा च संसृष्टस्वभावाभ्यां गुणगुणिभ्यामनयोः असंसृष्टस्वभावयोः सारूप्यमिह प्रयोजकम्। उपदर्शितं च तदिति किमप्रयोजकेन [३]गुणिसारूप्येण गुणसारूप्येण वा, सता असता वेत्यर्थः। असंबन्धाग्रहो वैयधिकरण्याग्रहो विषयिणा विषयमुपलक्षयति। तेन व्याधिकरणग्रहणाविषयीकृतत्वं[४] सारूप्यं तयोः[५], यथा पीतिमचिरबिल्वयोः तथैव पीतिमशङ्खयोरित्युक्तं भवति। एकेन्द्रियोपनतसंबन्धिद्वयविषयं सारूप्यमुपपाद्येन्द्रियद्वयोपनीतसंबन्धिद्वयविषयं [५]सारूप्यमुपपादयति—**एवं त्वगिन्द्रियेति**। न चैवं सति तादात्म्यभ्रमेऽपि भेदाग्रह एव सारूप्यमस्तु, कृतं चाकचिक्यादिनेति वाच्यम्, तदन्तरेण संस्कारानुद्बोधात्, तेन च विना रजतारोपनियमानुपपत्तेः। इह तु संसृष्टत्वानुभवजनितसंस्कारोद्बोधो यावन्मात्रेण तावदेवोपयुक्तम्, संसर्गस्य च संसृज्यमानावेव विषयः[६]। तौ चानुभूयमानावेवेति, किं तदुपनायकसादृश्यान्तरापेक्षयेति सर्वमवदातम्। नन्वयमनुभवक्रमोऽनुभवबाधित एवेत्यत आह—**अतिशीघ्रतयेति**॥

ननु सादृश्यं चेद् भ्रान्तिबीजमुपपादितम्, तर्हि सर्वं सर्वत्रारोप्येत, अस्ति हि केनचित् कस्यचित् कथञ्चित् सारूप्यमित्यत आह—**नेति। एवं द्विचन्द्रेति।** तथाविधापेक्षाबुद्धिविषयत्वं द्विचन्द्रभ्रमे, भेदमात्रारोपे तु नानादिग्देशावयवसंबन्धः।

---

१. A adds नापि शुक्लत्वसामान्यमेव पीतत्वसामान्यमेव शुक्लगुणव्यक्तिरूपेणारोप्यते इति साम्प्रतम्। तथा सति पीतत्वं न प्रतीयते। This seems to be a repetition. २. समाधत्ते om JA, दूषयति–न तत्रा° A ३. गुणगुणिसारूप्येण for गुणि...वा JA ४. °विषयीभूतं द्वयोः स्वरूपं JA ५. ययोः स्वरूपम् A ६. विशेषाः J

प्राच्यां प्रतीचीभ्रमे दक्षिणोत्तरान्यत्वे सति दिक्त्वमेव। एवमन्यत्रापि अलातचक्रभ्रमे मध्यासंबन्धे सति[1] सर्वदिक्संबन्धः। आदिग्रहणादगच्छति गतिविभ्रमे विभागवैपरीत्यम्[2]। अस्थूलेषु केशेषु स्थूलविभ्रमे तावद्देशाच्छादकत्वम्। अप्सु दण्डस्य वक्रताभ्रमे तरङ्गवक्रिमदण्डयोरसंसर्गग्रह इत्येवं नेयम्। सर्वत्र च तत्त्वाग्रहः संप्लवत इति॥

इहात्मनो दुःखहेतुत्वेन शरीरेन्द्रियादिवद् हेयत्वमेव बौद्धैरापादितम्। यथा हि, इन्द्रियादिना विना नात्मा दुःखं जनयितुमलम्, [3]एवं नेन्द्रियादिकमपि तमन्तरेण[4]। न हि निराश्रयं दुःखं नाम। अत आत्मापि हेयः। तदुक्तम्[5] धर्मकीर्तिना—

न तैर्विना दुःखहेतुरात्मा चेत् तेऽपि तादृशाः।
निर्दोषं द्वयमप्येवं वैराग्यं च द्वयोस्ततः॥

[ प्र. वा. १. २२७ ] इति तच्चैतदसाधीयः तथा हि, न तावदात्मनो हानं रोगादिवद्विनाशलक्षणम्, नित्यत्वात्। नापि दन्दशूकदष्टाङ्गुलीवद् विप्रयोगादिलक्षणम्, नापि सुतमरणादिवत् प्रतिपत्तिनिरोधलक्षणम्, स्वसंवेदनत्वादिति[6] **वेदान्तिनः**॥

वयं तु ब्रूमः—तद्धि तदा स्यात्, यदि ज्ञातस्य सतो दुःखं प्रत्यात्मनो हेतुत्वं सुतमरणादेरिव। न त्वेतदस्ति। किं नाम? सत्तामात्रेण। तस्मादात्मनो हेयत्वव्युत्पादनं वैयात्यमात्रविजृम्भितमेतत्। आत्मदृष्टेस्तु हेयत्वव्युत्पादनं मनाक् सदलमित्याशङ्क्य निराकरोति—**न त्विति**। **अभ्यर्हिततमम्** उपकार्यतमम्। **सत्त्वम्** आत्मा। **यद्यपि** रागादिनिवृत्तिहेतुर्नैरात्मदर्शनमिति गुडजिह्विका, वस्तुतस्तु न तावन्नित्यात्माभावदर्शनमात्रं रागादिनिवृत्तिहेतुः, चार्वाकादीनामेव वीतरागत्वप्रसंगात्। अहंकारनिवृत्तिहेतुर्नैरात्म्यदर्शनम्, तत एव रागादिनिवृत्तिरिति चेत्? सापि किं शरीरादौ, चेतने वा? आद्ये सिद्धसाधनम्, शरीरादावहंकारस्य मिथ्यात्वात्। तन्मूलत्वाच्च रागद्वेषयोः, तन्निवृत्तौ तयोरपि निवृत्तिरिति को नाम नाभ्युपैति। न च शरीरादावहंकारनिवृत्तेर्नित्यात्मदर्शनं विरोधि, किं त्वनुकूलमेव, न हि शुक्तिकातो रजतं भेदेनाव्यवस्थापयतस्तस्य[7] रजतबुद्धिः निवर्तते। अथ चेतनविषयैवाहंकारनिवृत्ती रागादीनपनयतीति विवक्षितम्? हन्तैवं स्वाकारेऽपीदन्ताव्यवहारिणां पृथग्जनानां वीतरागत्वप्रसंगः। न हि ते शरीरादिविविक्तम् अहमिति[8] प्रतियन्ति॥

---

१. सति om JA २. अगच्छति गतिभ्रमे वैपरीत्ये च विभागवैपरीत्ये BM, Prakāśa. ३. तथेन्द्रि° BM ४. °न्तरेण इति BM ५. तदुक्तम् A ६. °देवेति JA ७. °पयता वस्यां A ८. °व्यतिरिक्त° JA

अथ [1]बाह्याभ्यन्तरविषयतयाहंकारनिवृत्तिरभिप्रेता ? सापि किं सर्वथा ज्ञानाभावादेव, चेतनस्यापीदन्तास्पदत्वादेव वा, तस्मिन्नेव नास्तित्वाध्यारोपाद् वा ? न तावदाद्यः, अदृष्टित्वप्रसङ्गात् । न चैतत् प्रयत्नशतेनापि सिध्यति । यथा यथा दृष्टिनिरोधाय प्रयत्नः, तथा तथा दृष्टेः प्रत्यापत्तेः । न चादृष्टेरेव रागादयो विनिवर्तन्ते, युगसहस्रमपि सुप्तस्य पुनर्जागरावस्थायां रागादिदर्शनात्, नापि द्वितीयः, अहमभावे सतीदमोऽप्यभावात्, आत्मनि सति परसंज्ञेति त्वयैवोक्तं यतः । नापि तृतीयः, ग्रहणाग्रहणयोरुभयोरपि असंभवात् । यदि ह्यहमास्पदं चेतनो गृहीतः, कथं नास्तिताध्यारोपः ? न गृहीतश्चेत् कुत्र नास्तिताध्यारोपः ? न च प्रथमं ग्रहः पश्चादारोप इति त्वया वक्तुं शक्यते । न चापरिस्फुरति निषेध्ये निषेधसंभवः । स्वप्रतिष्ठज्ञानमात्रेणेति चेत्—न, ज्ञानस्य स्वप्रतिष्ठताभ्रौव्येऽपि रागादिदर्शनात् । तत्तद्बहिरुपप्लवविरहे सतीति चेत् ? तर्हि बहिरुपप्लवविरहे स्वात्मप्रतिष्ठं ज्ञानं रागादिनिवृत्तिहेतुरित्येवंभूतयात्मदृष्ट्या किमपराद्धम्, येन तां निरस्य नैरात्म्यदृष्टिरुपादीयते ? औदासीन्यदृष्टिरेव नैरात्म्यदृष्टिरिति चेत् ? किमिदमौदासीन्यम् ? शून्यत्वमिति चेत् ? एवं तर्हि स्वात्मदृष्टिरपि दृष्टिर्न स्यादित्यदृष्टित्वप्रसंगः । अनालम्बनतया निःसंबन्धित्वमौदासीन्यमिति चेत् ? तर्हि निरात्मीयतादृष्टिं वदन् कुतो[2] नैरात्म्यदृष्टिं सुप्त इव प्रलपसीति । **एवं प्रेत्यभावाभावज्ञानस्येति परमं निदानमिति** अनुषज्यते । **तथा च** इत्यपि गुडजिह्विका । वस्तुतस्तु नास्ति कर्म, नास्ति कर्मफलम्, नास्ति प्रेत्यभाव इति ।

यावज्जीवेत् सुखं जीवेन्नास्ति मृत्योरगोचरः

इति न्यायमालम्बमानेन प्राणिवधादत्तादानादावेव घटितव्यम् । साधीयश्चैवमस्य कैवल्यमिति । न च सन्तानमादाय प्रेत्यभावादिदृष्टिरुपपत्स्यत इति वाच्यम्, तदा हि तमादाय सोपपद्येत, यदि तद्दृष्टिरनर्थान्निवर्तयेत् अर्थाच्च[3] प्रवर्तयेत् प्रवृत्तिनिवृत्ती च सैव दृष्टिः करोति या रागद्वेषौ प्रसूते, तन्मूलत्वात् तयोः । तथा च तादृशी संतानदृष्टिरपि हेयैव । न तादृशी चेन्नास्तिकत्वमेव निर्वाहयेत् । तदिदमुक्तम्—**सोऽयं वृश्चिकभियेति** । तस्माद् यः परलोकार्थी तस्य परलोकिनमात्मानमङ्गीकृत्यैव स्वर्गेऽपवर्गे वा प्रयत्नः, यस्तु नित्यमात्मानं नाभ्युपैति तस्य **चार्वाकस्य** इव स्वर्गापवर्गावेव न स्तः, कुतस्तदर्था प्रवृत्तिरित्याशयवानाह—**सेयमिति** ॥

---

१. विषयतया om JA, विषयाहंकार° M २. वद कुतो BJA. ३. अर्थे BM

यत्तूक्तम्—**आत्मानमभ्यर्हितं पश्यन्निति** सोऽयं कस्य प्रसङ्गः ? किं सर्वदुःखोपशममुपकारमपश्यतः, पश्यतो वा ? आद्यश्चेदेवमेतत् । न ह्येवंभूतस्य नैरात्म्यदृष्टिरभ्युपपद्यते । न ह्यात्मोच्छेदमेव कश्चिदुपकारत्वेन मनुते, अपि तु दुःखं जिहासमान आत्मानं जहाति, आत्मानमनपहाय दुःखस्य हातुमशक्यत्वादिति मन्यमानस्तस्माद् दुःखमजिहासतः[1] सुखं चोपादातुमिच्छतो नैरात्म्यदृष्टेरसंभव एव । तथा च तथाभूतस्य नैरात्म्यदर्शिनो नित्यात्मदर्शिनो वा तुल्यः संसारः । द्वितीयस्तु कल्पोऽसंगत एव । न हि सर्वदुःखोच्छेदम् एवोपकारं पश्यति सुखाय[2] तदुपकाराय च घटत इति । सर्वदुःखोच्छेदश्च सुखं चेति विप्रतिषिद्धमेतत् । एवं सर्वदुःखोच्छेदमिच्छति परं चापकरोतीत्येतदप्यसंगतम् , न हि परापकारः सर्वदुःखोच्छेदनिदानमिति हृदि निधायाह—**अभ्यर्हितता चेति** ॥

**सामान्यधर्मोऽहंकारास्पदत्वम्** । अहमिति कर्तृपदविषयत्वम्, अनेन तत्प्रवृत्तिनिमित्तस्य कर्तृत्वस्यैकदेशमुपलक्षयति । तेनायमर्थः, इतरकारकप्रयोक्तृत्वम् बाह्यकारकप्रयोज्यतां च दृष्ट्वा भेदाग्रहे सति शरीरादौ कर्तृत्वमारोप्यात्मत्वेन विपर्यस्यतीति तदिदमुक्तम्—**तां खल्विति** । **एवं सिद्धं कृत्वा विपर्ययम्** अन्यथाख्यातिरूपमिति शेषः । **संप्रति सन्दिहानो** विशेषत इति शेषः । ननु स्थाणावेवायं मम चोरप्रत्ययो वृत्त इत्यागोपालाङ्गनं प्रसिद्धमिति तदत्र संशय एव नास्तीत्यत आह—**परीक्षकाणामिति** । **प्रतिपत्तुः प्रत्ययात्** प्रत्येतव्यात् । **अव्यतिरेकात्** अभेदादित्यर्थः । नन्विदं रजतमित्यत्र द्वयं प्रतिभाति, ज्ञानस्यात्मा, पुरोवर्ति द्रव्यं च । तत्र पुरोवर्तिनो रजतत्वे प्रतिषिद्धे, अर्थादापद्यते ज्ञानस्येति, तदन्येषां तु प्रतिपत्त्यनारोहादेव नावकाशः । तत्[3] कथमुच्यते **वणिग्वीथ्यादाविति**, अत आह—**आन्तरत्वं त्वस्यानुपलब्धचरं कुतस्त्यम्** ? यद्धि यस्य कदाचिदवगतम्, तदन्यत्र प्रतिषेधे पारिशेष्यात् तत्र गम्यते, न तु [4]प्रतीतिपथमवतीर्णयोरन्यतरत्र प्रतिषेधे पारिशेष्यादितरत्रासंभावितमपि, तथा सति नेदं रजतमिति शुक्तिकायां रजतत्वप्रतिषेधे तदेकज्ञानसंसर्गिणो भूतलादेरपि रजतत्वं विदध्यात् । न चैवम् । तत् कस्य हेतोः ? तस्य रजतत्वं कदाचिदपि नोपलब्धचरं । यतः, तथा स्वात्मनोऽपि रजतात्मत्वं न कस्यचिदुपलब्धिगोचरः कदाचित् स्वप्नेऽपि । अथ दृष्टमेव सत्यरजतज्ञाने रजताकारत्वमात्मन इत्याशयः ? सोऽयं स्वप्नायते, तत्रापि हि पुरोवर्तिनि रजते अनुभूयमाने स्वात्मनो रजताकारत्वं कस्य प्रमाणस्य गोचर इति ।

---

१. दुःखं जिहासोः BM २. पश्यति च तदु° J, पश्यति तदु° A ३. किम् BM. ४. °पथमनवतीर्णयो° JA.

तदनेन स्वाकारस्य बाह्यत्वे साधकप्रमाणाभावो दर्शितः। बाधकमपि सूचितम्। यथा हि[1] नेदं रजतमिति बाधकबलेन पुरोवर्तिनो रजतत्वप्रतिषेधः, तथा नाहं रजतमित्यपि बाधकं स्फुटमेव। अयमेव भ्रम इति चेत्? एवं तर्हि न रजतत्वमारोप्यते बाह्ये[2], किं तु[3] तस्मिन्नेवाहमास्पदे बाह्यत्वमारोप्यते इत्याशयः। तथा सति बाधकप्रत्ययेन तदेवापनेयम्, तस्मिंश्चापनीतेऽहं रजतमिति स्यात्। एवं च सतीदं रजतमिति कोऽर्थः? नाहं रजतमिति[4]। नेदं रजतमिति कोऽर्थः? अहं रजतमिति। ततश्च यथेदं नेदमहं नाहमित्यनयोर्विरोधात्[5] समुच्चयाभिमानोऽपि नास्ति, तथा नेदं रजतं नाहं रजतमित्यनयोरपि विरोधात् समुच्चयाभिमानोऽपि न स्यात्। अस्ति च, तस्मादुभयोरपि रजतत्वप्रतिषेधोऽन्यस्य रजतत्वं व्यवस्थापयतीति पाषाणरेखेयं न दुरुत्तरपांसुपूरणमात्रेणापनेतुं शक्यते॥

**सामर्थ्यातिशयः** स्वभावातिशयः। अतिशयस्तु विषयजन्यज्ञानापेक्षया। **सन्तमिवेति** सत्यज्ञानाभिप्रायं स्वरूपाभिप्रायं वा। **विषयसामर्थ्यमिति** सामर्थ्यं कारणत्वम्, **तद्भावसिद्धेः** विषयभावसिद्धेः। **अत एवेति** कृत्वा **वेदान्त्येकदेशिनः** अपि निराकारबौद्धमतानुमतिर्दर्शिता। **सदसत्त्वेन**[6] **गृह्णातीति** न विकल्पितमतिनिर्दलत्वात्। प्रवृत्त्यौपयिको ह्यर्थः प्रकृते[7] प्रकाशते, न तु सदसत्त्वेन गृहीत्वा प्रवृत्तिरुपपद्यते। असदेव रजतं प्रकाशते। पुरोवर्तिभेदाग्रहाच्च शुक्तौ प्रवृत्तिर्नान्यत्रेत्यादि नाशङ्कितम्, प्राभाकरपक्षेण तुल्ययोगक्षेमत्वादपोहे निराकरिष्यमाणत्वाच्च॥

अनिर्वचनीयख्यातिमनुभवविरोधेन निराकरोति—**न चेति**। त थाहि किमिदम् अनिर्वचनीयत्वम्, किं निरुक्तिविरह एव, आहोस्विन्निरुक्तिनिमित्तविरह एव? न तावदाद्यः, इदं रजतं नेदं रजतमिति निरुक्तेरनुभूयमानत्वात्[8]। नापि द्वितीयः, निरुक्तिनिमित्तं ज्ञानं वा स्यात् विषयो वा? न तावदाद्यस्य विरहः, ख्यातेः स्वयमेवाभ्युपगमात्। नापि द्वितीयः, विषयोऽपि किं भावरूपोऽभावरूपो वा? आद्ये असत्ख्यात्यभ्युपगमप्रसङ्गः। द्वितीये तु सत्ख्यातिरेव। उभौ न स्त इति चेत्? अथ भावाभावशब्देन लोकप्रतीतिसिद्धावेवोभावभिप्रेतौ[9], विपरीतौ वा? आद्ये तावद् यथोभयोर्विधिर्नास्ति, तथा प्रतिषेधोऽपि, परस्परविधिनिषेधयोर्विधिनिषेधनान्तरीयकत्वात्। द्वितीये तु न काचित् क्षतिः। न ह्यलौकिकविषयसहस्रनिवृत्तावपि सत्यज्ञानविषय-

१. हि om JA २. बाह्ये om JA ३. कि तर्हि JA ४. इदं…रजतमिति om JA ५. विरोधात् om JA ६. असत् सदात्मना C ७. प्रकाशिते A ८. °विद्यमा° BM. ९. °वेवतावभि° JA.

निवृत्तिस्तन्निरुक्तिनिवृत्तिर्वेति । अथापि निःस्वभावत्वमनिर्वचनीयत्वम् ? अत्रापि निसः प्रतिषेधार्थत्वेन स्वभावशब्दस्यापि भावाभावयोरन्यतरार्थत्वे पूर्ववत् प्रसंगः । प्रतीत्यगोचरत्वं निःस्वभावत्वमिति[1] चेत् ? अत्र तु स्ववचनविरोधः, प्रतीत्यगोचरश्च प्रतीयते चेति । यद् यथा प्रतीयते तत् तथा नेति चेत् ? अत्र न विप्रतिपद्यामहे । तस्मात् आकारासदनिर्वचनीयख्यातिवादिभिरप्यन्यथाख्यातिरवश्याभ्युपगन्तव्येति ॥

ननु यद्यथासत्प्रकाशते प्रपञ्चोऽपि तर्हि[2] तथैवास्तु जात्यादिकं चेत्यत आह—**यः पुनरिति** । असच्चेत् ? असत्तयैव प्रकाशेत, न प्रवृत्तिगोचरः स्यात् । सत्तया चेत् ? नूनं सादृश्यमप्यपेक्ष्यम्[3] । न च तदस्ति । असदृशस्यापि [4]सत्तया प्रकाशने चातिप्रसङ्ग इत्यर्थः ॥

**संविद्विरुद्धम्** विचार्यसंविद्विरुद्धम् । सर्वसर्वज्ञतापत्तिरतीतानागताभिज्ञतापत्तिश्चेत्यपि द्रष्टव्यम् । **प्रतिभासमानं** यदुल्लिखद्विज्ञानं जायत इत्यर्थः । औत्सर्गिककार्यानुकूलसहकार्यभिप्रायेण **श्यामाकबीजम्** उदाहृतम् । तत्प्रतिरोधिकारणान्तरसाहित्याभिप्रायेण **कुटजबीजमिति** । विवादाध्यासिते विभ्रमे प्रवृत्तिकारणमग्रहो वा स्यात्[5], इदमिति ज्ञानं वा, रजतमिति ज्ञानसहितं वा, भेदाग्रहसहितं वा उभयमिति[6] ? तत्राद्ये **न तावदित्यादि** दूषणम् । द्वितीये तु **हन्त भोः** इत्यादि । तृतीये तु **ननु रजतविज्ञानम्** इत्यादि । चतुर्थे तु साम्यापादने सति ज्ञानधर्मो वा अग्रहो विशेषणम्, वस्तुधर्मो वा ? आद्ये साम्यं नास्ति, उभयज्ञानस्यागृहीतभेदस्य भ्रान्तिहेतुत्वेनानभ्युपगमात् । द्वितीये तु विषयधर्माणामज्ञातानां प्रवृत्तावकिञ्चित्करत्वम् । ज्ञप्तौ पुनरस्त्येव । तत्र दृष्टान्तमाह—**मैवं ज्ञानहेतूनामित्यादि**[7] ॥

अथवा दृश्यकारणसाम्येऽप्यदृश्यहेतुविशेषवशाद् भ्रान्तिसंभवः, कार्योन्नेयत्वात् सामग्र्याः । तदिदमुक्तम्—**मैवमित्यादि** । ममाप्येवमिति चेत्—न, तस्य कारणविशेषस्य स्वातन्त्र्येणाप्रवर्तकत्वात् । तदिदमुक्तम्—**चेतनेति** । ज्ञानद्वारेणेति चेत्—न, तस्य[8] प्रवृत्तिनिवृत्तिसाधारण्यात् । तदिदमुक्तम्—**बुद्धिपूर्वकत्वे त्विति** । अतो न साम्यम् । **तत्सिद्धमित्यादि**प्रयोगो विप्रतिपन्नं प्रति । **नियमेन** निश्चयेनेति सामान्यज्ञानस्य विशेषप्रवर्तकत्वव्युदासावद्योतनार्थम् । न च फलज्ञानेनानैकान्तिकत्वं तस्याप्रवर्तकत्वादेव । तत्साधनज्ञानं तु[9] प्रवर्तकम् । तच्च तद्विषयमेवेति । कार्यत्वबोधस्तु

---

१. °त्वं निःस्वभाव° om J २. तर्हि om J. ३. °पेक्ष्य BM ४. तत्तया A ५. स्यात् om BM ६. उभयमपि BM ७. इत्येवमादि BM ८. निवृत्ति° om BM ९. च BM

प्रवर्तक इति निराकरिष्यते । [१]**अनवभासमानत्वादिति** हेतुपक्षेऽसिद्धत्वं सिद्धसाधनं वा दूषणम् । प्रत्यक्षोपवर्णने तु शुक्तिकात्वेनानालम्बनत्वमस्माकमप्यनुमतम् । सितभास्वरतया त्वनवभासमानत्वमनुभवविरुद्धमिति परमार्थः । दोषवत्त्वादिति हेतुपक्षेऽनैकान्तिकोद्भावनम् दृष्टान्तमात्रोद्भावने[२] तु वेत्रबीजादिः प्रतिदृष्टान्तः । **नेदं रजतमिति** उपलक्षणम् । शुक्तिरियमित्याद्यपि[३] द्रष्टव्यम् ॥

अनाश्वासस्तु यथार्थत्वाज्ञानं वा स्यात्, यथार्थत्वायथार्थत्वसन्देहो वा ? आद्यः प्रामाण्योपायकथनेनैव निरस्तः । द्वितीयस्तु विशेषोपलब्धेः प्रागिष्यत एवेत्याह—**यथा चेति** ॥

ननु क्रमव्यतिक्रमोऽनादितां प्रतिपादयितुमुक्तः[४] । अनादिताप्रतिपादनं पुनः किमर्थमित्यत आह—**अनादित्वाच्चेति** । **तस्यापि बाध्यत्वप्रसङ्गादिति** । तथा च सत्यमिथ्याज्ञानयोरविशेषप्रसंग इति भावः । **पूर्वज्ञानस्य मिथ्यात्वमादर्शयत्** इति । तदुपदर्शितप्रकारासहनतया जायमानमित्यर्थः । **तज्जनितां प्रवृत्तिं विघटयदिति** तदुचितव्यपदेशाभिप्रायम्, विपरीतमभिप्रायं कुर्वदित्यर्थः । **फलमस्यापहरतीति** विषयदारभ्य फलपर्यन्तमित्यर्थः । अयमेव विषयापहारो यत्तद्विषयाधिक्षेपस्य स्वभावस्य समुत्पादः । स च तत्फलप्रवाहप्रतिक्षेपपर्यन्त इति समुदायार्थः । **परस्पराभावधर्मिणोरिति** । ययोर्धर्मिणोर्यौ धर्मौ परस्पराभाववन्तावुपलब्धौ[५] तयोरित्यर्थः । **बाध्यत्वे हेतुरिति** । हेतुर्व्यतिरेकलिङ्गलक्षणमिति यावत् । **तत्त्वविषयबुद्धिधारामिति** ध्यानम् इत्यर्थः । **अनुगतमेकं स्वरूपं** समानासमानजातीयव्यच्छेदको धर्मो लक्षणमिति यावत् ॥२॥

॥ भाष्यम् ॥

**त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति । तत्र नामधेयेन [६]पदार्थमात्रस्याभिधानमुद्देशः । [७]तत्रोद्दिष्टस्यातत्त्वव्यवच्छेदको[८] धर्मो लक्षणम् । लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा । तत्रोद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते, यथा प्रमाणानां प्रमेयस्य च । उद्दिष्टस्य लक्षितस्य च विभागवचनम्, यथा छलस्य––**

---

१. °मात् C. २. °मात्राभिधाने JA ३. °आदि° om JA ४. °क्रमौ… दयितुम् J ५. धर्मिणौ परस्पराभावधर्माणावु° BM ६. पदार्थमात्राभिधानम् J ७ तत्रेति नास्ति J ८. °ष्टस्य तत्त्वव्यवस्थापको J, तत्त्वव्यव° C

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् [१.२.१०]।

तत् त्रिविधम् [१.२.११]

इति ॥ अथोद्दिष्टस्य विभागवचनम्—

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥१.१.३॥

अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षो ज्ञानं वा। यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः, यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम्। [1]मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानम्। उपमानं सामीप्यमानम्[2], यथा गौरेवं गवय इति। सामीप्यं[3] तु सामान्ययोगः। शब्दः शब्द्यतेऽनेनार्थ इत्यभिधीयते विज्ञाप्यत इति ॥

उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामार्थ्याद् बोद्धव्यम्। प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः। तद्विशेषसमाख्याया अपि तथैव व्याख्यानम्[4] ॥

किं पुनरेतानि[5] प्रमाणानि प्रमेयमभिसंप्लवन्ते, अथ प्रतिप्रमेयं व्यवतिष्ठन्त इति? उभयथा दर्शनम्। अस्त्यात्मेत्याप्तोपदेशात् प्रतीयते। [6]अत्रानुमानम्,

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्।

[१.१.१०] इति। प्रत्यक्षं युञ्जानस्य योगसमाधिजम्,

[7]आत्मन्यात्ममनसोः संयोगविशेषादात्मा प्रत्यक्षः।

[वै. सू. ९.१.११] इति। अग्निराप्तोपदेशात् प्रतीयते [8]अमुत्राग्निरिति। प्रत्यासीदता धूमदर्शनेनानुमीयते। प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते। व्यवस्था पुनः,

अग्निहोत्रं जुहुयात् स्वर्गकामः

इति। लौकिकस्य स्वर्गे न लिङ्गदर्शनम्, न प्रत्यक्षम्। स्तनयित्नुशब्दे श्रूयमाणे [9]शब्दहेतोरनुमानम्। तत्र न प्रत्यक्षं नागमः। पाणौ च[10] प्रत्यक्षत उपलभ्यमाने नानुमानं नागम इति ॥

---

१. अनुमानं मि° CJ २. सामीप्यज्ञानम् C, सारूप्य° A ३. सारूप्यं A ४. °शब्द इति विशेषसमाख्यास्वपि तथैव व्याख्यातः J ५. एतानीति नास्ति TC ६. तत्रा° CT ७. आत्मनि om TC आत्मप्रत्यक्षमिति शङ्करचन्द्रानन्दौ। ८. अत्रेति CT ९. शब्दहेतावनु° J १०. च om TC

सा चेयं प्रमितिः प्रत्यक्षपरा । जिज्ञासितमर्थमाप्तोपदेशात् प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते । लिङ्गदर्शनेनानुमितं च प्रत्यक्षतो दिदृक्षते । [१]प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्तते । पूर्वोक्तमुदाहरणमग्निरिति । प्रमातुः प्रमातव्येऽर्थे प्रमाणानां [२]संकरोऽभिसंप्लवः, [३]असंकरो व्यवस्थेति ॥३॥

॥ इति त्रिसूत्रीभाष्यम् ॥

॥ वार्त्तिकम् ॥

**त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति** भाष्यम् । प्रवृत्तेस्त्रैविध्यं कुतः ? अर्थस्य तथाभावात् । नामी पदार्था वक्त्रा त्रेधा व्यवस्थाप्यन्ते एवं भवतेति । किं त्वर्थ एवायं तथाभूतो येन त्रेधा भवतीति । **नामधेयेन [४]पदार्थमात्रस्याभिधानमुद्देश** इत्ययुक्तम् , घ्राणादिसूत्रव्याघातात् ।

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि

[१.१.१२] इति लक्षणमुक्तम् । न चेदं नामधेयेनोद्देशमात्राद् भिद्यते । मात्रग्रहणसामर्थ्यादप्रसङ्गः । [५]पदार्थाभिधानमात्रमित्युक्तम् । न च घ्राणादीनां पदार्थभिधानमात्रत्वम्[६], कारकशब्दत्वात् । कारकशब्दा एते घ्राणादीनीति[७], तस्मान्नोद्देशत्वप्रसङ्गः । उद्दिष्टस्य विभागो द्वेधा भवति, लक्षितस्यालक्षितस्य च[८] । लक्षितस्य छलादेः । अलक्षितस्य प्रमाणादेरिति । अथोद्दिष्टविभागद्वारेण सूत्रम्—**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति** ॥

सूत्रार्थो निगदेनैव व्याख्यातः । उद्दिष्टस्य विभागानर्थक्यम्, व्याघातात् । **त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः** इत्युक्तम् । उद्दिष्टविभागश्च न त्रिविधायां शास्त्रप्रवृत्तावन्तर्भवति । तस्मादुद्दिष्टविभागो न युक्तः । न, उद्दिष्टविभागस्य उद्देश एवान्तर्भावात् । उद्दिष्टविभाग उद्देश एवान्तर्भवति । कस्मात् ? लक्षणसामान्यात् । समानं लक्षणं नामधेयेन पदार्थाभिधानमात्रमुद्देश इति । किं पुनर्विभागेन प्रयोजनम् ? नियमः । यदि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि [१.१.३] इति विभागो न क्रियेत नियमो न गम्येत, चत्वार्येव प्रमाणानीति । लक्षणतश्चतुष्ट्वाधिगतिरिति चेत्—न[९], लक्षणस्य

१. प्रत्यक्षतः om C २. सम्भवः CJ ३. असम्भवः CJ ४. पदार्थमात्राभिधानम् C ५. पदार्थमात्राभि° C ६. °दीनी···मात्रम् J ७. °दीति C ८. °क्षितस्य C ९. स्येतरव्यव° C

इतरेतरव्यवच्छेदहेतुत्वात् । स्यादेषा बुद्धिर्लक्षणतः प्रमाणचतुष्टं गम्यत इति, यस्मात् चतुर्णां लक्षणमुक्तमिति । न, [1]लक्षणस्येतरेतरव्यवच्छेदहेतुत्वात् । लक्षणं खलु लक्ष्यं पदार्थं समानासमानजातीयेभ्यो व्यवच्छिनत्ति, नियमं तु न शक्नोति कर्तुमन्यार्थत्वात्[2] । अन्यासंभवस्य ततोऽनधिगतेः । न हि लक्षणतोऽन्यासंभवोऽधिगम्यते । ततश्चतुर्णामनभिधाने चतुर्णां लक्षणोपदेशे[3] स्यात् संशयः—किं विद्यमानानि न लक्षितानि, उताहो[4] अविद्यमानानीति । तस्मात् संशयनिवृत्त्यर्थं युक्तो विभागोद्देश इति ॥

**अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति** । अयं च सूत्रविवक्षायाम्[5] अव्ययीभावः समासः । अन्यथा तु वस्तुनिर्देशो न समासः । समासे हि[6] अक्षस्येति षष्ठी न श्रूयेत । कः पुनरत्र समासः ? प्रादिसमासोऽयं द्रष्टव्यः प्रतिगतमक्षं प्रत्यक्षमिति, यथोपगतो गोभिरुपगुरिति । एवमनुमानादिष्वपि द्रष्टव्यम् । **मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति** न युक्तम् , फलाभावात् । एतस्मिन् व्याख्यानेऽफलम् अनुमानं प्राप्नोति[7] । किं कारणम् ? अर्थस्य मितत्वात् । नैष दोषः । मितेन लिङ्गेन अर्थस्य पश्चान्मानं यतो भवतीति ब्रूमः[8] । भवतु वायमर्थो लैङ्गिकी प्रतिपत्तिरनुमानमिति । ननु च फलाभावो दोष उक्तः ? न दोषः, हानोपादानोपेक्षाबुद्धीनां फलत्वात् । सर्वं च प्रमाणं स्वविषयं प्रति भावसाधनम् , प्रमितिः[9] प्रमाणमिति । विषयान्तरं प्रति करणसाधनम् , प्रमीयतेऽनेनेति प्रमाणम्[10] । यदि भावसाधनः प्रमाणशब्दः, किं फलम् , विषयस्याधिगतत्वात् ? उक्तं फलं हानादिबुद्धय इति । **ज्ञाते तद्भावात्** । ज्ञाते खल्वर्थे त्रिविधा बुद्धिर्भवति हेयो वोपादेयो वोपेक्षणीयो वेति । **केचित्** तु सन्निकर्षमेव प्रत्यक्षं वर्णयन्ति । न तन्न्याय्यम् , प्रमाणाभावात् । सन्निकर्ष एव प्रमाणमिति न प्रमाणमस्ति । उभयं तु युक्तम् , परिच्छेदकत्वात् । उभयं परिच्छेदकं सन्निकर्षो ज्ञानं च । **एकान्तवादिनस्तु** दोष इति ॥

**सामीप्यमानमुपमानमिति** न युक्तम्, उपमानस्यान्यथाव्याख्यानात् । **समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः** [भा १.१.६] इत्युक्तम्, इदानीं तूच्यते सामीप्यमानमुपमानमिति । ननु व्याघातः[11] ? नास्ति व्याघातः, सामीप्यमानेन समाख्यासंबन्धप्रतिपत्तेरिष्टत्वात् । यस्मादयमुपयुक्तोपमानो गोदर्शी आगमप्रत्ययाहितस्मृतिपूर्वकं

---

१. °स्येतरव्यव° C २. °त्वादिति C ३. °देशात् C ४. आहोस्वित् C
५. °विवक्षया J ६. प्रत्यक्षस्येति J ७. मानमिति C ८. भवति यत इत्यर्थः C
९. प्रमा J १०. प्रमाणम् om J ११. °मिति व्याघातः ? C

[1]गवा सादृश्यं प्रत्यक्षेण प्रतिपद्य अस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यते। तस्मादव्याघात इति ॥

शब्दविषया प्रतिपत्तिः शाब्दं प्रमाणम्। फलं तदेव ॥

केचित् तु क्रमे प्रयोजनं वर्णयन्ति, आदौ—प्रत्यक्षग्रहणं प्राधान्यात्। तदनन्तरमनुमानं तत्पूर्वकत्वात्। तदनन्तरमुपमानं तत्साधर्म्यात्। [2]तदनन्तरं शब्दो महाविषयत्वादिति। तच्चायुक्तमिति अपरे मन्यन्ते, क्रमाभिधानस्य न्यायप्राप्तत्वात्। न्यायप्राप्तं क्रमाभिधानं [3]क्रमवर्णवृत्तित्वाद् वाच इति। महाविषयतायां च शब्दस्यादावभिधानप्रसङ्ग इति। एतच्चायुक्तम्, क्रमवर्णवृत्तित्वाद् वाचोऽयुगपदभिधानं युक्तम्[4]। पूर्वापराभिधाने तु न साधनमेतत्। तस्मादन्यो न्यायो वक्तव्यः। स चायं न्यायः, प्रत्यक्षं पूर्वं प्राधान्यात्। महाविषयत्वादादौ शब्दोपदेश इति। न, उभयं[5] महाविषयं शब्दः प्रत्यक्षं च। कथमिति? प्रत्यक्षेणापि सामान्यविशेषतद्वतां ग्रहणम्, शब्देनापीति। तत्र किं शब्दस्यादावुपदेशो भवतु, [6]आहोस्वित् प्रत्यक्षस्येति? प्रत्यक्षस्येति युक्तम्। किं कारणम्? सर्वप्रमाणानां प्रत्यक्षपूर्वकत्वादिति ॥

किं पुनरेतानि प्रमाणानि संप्लवन्ते, [7]अथ प्रतिप्रमेयं व्यवतिष्ठन्त इति? उभयथा दर्शनम्। तच्च प्रमाणत [8]इत्यत्रैव दर्शितम् ॥

सेयं प्रमितिः प्रत्यक्षपरेति। प्रत्यक्षेणाधिगतेऽर्थे आकाङ्क्षाभावात् तत्परा। यथायं लौकिकोऽमुत्राग्निरित्याप्तोपदेशादग्निं प्रत्याहितप्रत्ययस्तं देशं गच्छति। प्रत्यासीदन् पुनर्धूमविशेषणं धूमाङ्गत्वेन व्यवस्थितं हुतभुजं प्रतिपद्यते। आसन्नतरस्त्विदानीमिन्द्रियार्थसन्निकर्षवशादग्नावग्निप्रत्ययं करोति। तदा निराकाङ्क्षो भवति। तस्मात् प्रधानं प्रत्यक्षमिति। यत्र संप्लवस्तत्रैवम्। यत्र पुनर्व्यवस्था तत्र [9]प्रधानगुणभावो न चिन्त्यत इति ॥ ३ ॥

॥ इति त्रिसूत्रीवार्त्तिकम् ॥

॥ टीका ॥

तदेवं प्रमाणादिपदार्थतत्त्वज्ञानस्य[10] निःश्रेयससंबन्ध उक्तः परीक्षितश्च। तत्रैतत् स्यात्। स्वपदेभ्यः प्रमाणादयः पदार्थास्तत्त्वतो ज्ञाता यथायथं [11]मिथ्याज्ञानादिनिवृत्तिक्रमेण

---

१. प्रत्यक्ष गवा सादृश्यं प्रति J २. अन्ते C ३. क्रमवृ° C ४. क्रमवृत्ति··· युगपदभिधानमयुक्तम् J ५. इत्युभयं J ६. आहो प्र० J ७. अथ व्यव° J ८. इत्येतस्मिन् पदे वर्णितम् J ९. गुणप्रधानता C १०. प्रमाणादयस्तत्त्वतो J ११. °ज्ञाननिवृत्ति° C

अपवर्गे उपयोक्ष्यन्ते, कृतमुपरितनेन प्रबन्धेन इति । अत उक्तं **भाष्यकृता—त्रिविधा चास्येति** । न नामधेयमात्रात् प्रमाणादीनां तत्त्वज्ञानं भवति, अपि तु लक्षणपरीक्षणाभ्याम् इत्यस्ति प्रबन्धस्योत्तरस्योपयोग इति भाष्यार्थः । तदेतद्भाष्यमनुभाष्य पृच्छति—**प्रवृत्तेरिति** । यदि पुरुषकल्पना मात्रात् त्रैविध्यम्, अथानन्त्यमेव कस्मान्न भवति ? सर्वत्र तस्य सुलभत्वादिति भावः । उत्तरम्—**अर्थस्य तथाभावात्** । अर्थस्य प्रयोजनस्य साक्षात् शास्त्रकार्यस्य तत्त्वज्ञानलक्षणस्य तथैव त्रिविधयैव[1] शास्त्रप्रवृत्त्या भावात् । तथा हि, लक्षणं नाम व्यतिरेकिहेतुवचनम् । तद्धि समानासमानजातीयेभ्यो व्यवच्छिद्य लक्ष्यं[2] व्यवस्थापयति । न चास्य धर्मिदर्शनमन्तरेण पक्षधर्मता सिध्यतीति तदुपदर्शनाय नामधेयमात्रेण धर्मिणामुद्देशः । यद्यपि च प्रतिलक्षणमुद्दिष्टा एव धर्मिणः, तथापि शास्त्राभिसंबन्धपरादपि वाक्यात् समधिगम्यन्त इत्युद्देशोऽप्युक्तः । न चापरीक्षितो हेतुर्व्यतिरेकी चतूरूपो भवतीति परीक्षाप्यवश्यं कर्तव्या । तस्मात् तत्त्वज्ञानस्यार्थस्य तथाभावात् त्रैविध्यमिति । तदेतद्[3] विभजते—**नाम्नी पदार्था इति** । **किं त्विति** । अर्थः तत्त्वज्ञानं तथाभूतम्, येनार्थेन हेतुना शास्त्रस्य प्रवृत्तिस्त्रेधा भवति ॥

उद्देशस्वरूपप्रतिपादनपरं भाष्यमनुभाष्याक्षिपति—**नामधेयेनेति** । परिहरति—**मात्रग्रहणसामर्थ्यादिति** । यद्यपि प्रमाणादिशब्दा अपि कारकशब्दा एव, तथाप्युद्देशसमये तदर्थानां सदपि कारकत्वमविवक्षितम्, अपि तु प्रातिपदिकार्थमात्रम् । **घ्राणादिसूत्रे** [१.१.१२] तु लक्षणपरे कारकत्वं विवक्षितम्, अन्यथा लक्षणत्वायोगादिति अदोषः । अत्र च यद्यपि **सूत्रकारेण** संशयप्रमाणप्रमेयेषु परीक्षा साक्षात् कृता न प्रयोजनादिषु, तथापि तत्करणादेव प्रयोजनादिपरीक्षापि सूचिता **सूत्रकारेण** इति त्रिविधेत्युक्तम् । अत एव **भाष्यकारः** सर्वत्र परीक्षामन्ववर्तयदिति ॥

स्यादेतत् । विभागपरमेतत् सूत्रमिति वक्ष्यति । न च विभागो न्यूनाधिकसंख्यान्यवच्छेदार्थमेकं किञ्चिदुपसंग्राहकमन्तरेण । न च [4]प्रमाणत्वादन्यदत्रोपसंग्राहकम् । न चेदमलक्षितमुपसंगृह्णाति । न चैतत् सूत्रमस्य लक्षणम्, विभागपरत्वादिति शङ्कानिराकरणपरं **भाष्यम्—तत्रोद्दिष्टस्येति** । तस्यार्थः—यद्यपि विभागपरमेतत् **सूत्रम्**, तथापि प्रमाणपदसमभिव्याहृतं सत् सामर्थ्यात् प्रमाणत्वमपि लक्षयतीति । तथा हि, प्रमीयतेऽनेनेत्यस्य वाक्यस्यार्थे प्रमाणपदप्रयोगः । प्रमा च स्मृतेरन्यः

---

१. °विधतयैव C २. विभिद्य लक्षणं C ३. तदेव C ४. °न्यत्तदुप° C.

अर्थाव्यभिचारी स्वतन्त्रः परिच्छेदः तस्माद् विभागपरादपि **सूत्रात्** प्रतीयमानं[1] प्रमाणसामान्यलक्षणमपेक्षितं संगृहीतमिति प्रमाणत्वोपगृहीतानां प्रत्यक्षादीनां प्रमाणानां युक्तो विभागः। तथा च विभागपरत्वेन साक्षात् सामान्यलक्षणानभिधानाद् विभक्तस्य लक्षणमुच्यत इत्युक्तम् तच्चेह। विशेषलक्षणम् **इन्द्रियार्थसन्निकर्षेत्यादि** [१.१.४]। तदेतद् भाष्यं व्याचष्टे—**उद्दिष्टस्येति**। लक्षणालक्षणमात्रविवक्षया **लक्षितस्यालक्षितस्य** इत्युक्तम्। तच्च छले[2] सामान्यतः, प्रमाणेषु प्रमेयेषु च विशेषत इति गमयितव्यम्॥

अत्र भाष्यम्—**अथोद्दिष्टस्य विभागवचनमिति**। तस्यार्थ उच्यतेऽनेनेति वचनं सूत्रं विभागस्य। अथेति त्रिविधप्रवृत्तिव्युत्पादनानन्तरं विविक्तानां[3] प्रतिपादनं विभागवचनम्। न च विवेकः स्वरूप उपयुज्यत इत्यत आह—**अथोद्दिष्टविभागद्वारेणेति**। नात्र विभागमात्रं विवक्षितम्, अपि तु तद्द्वारेण न्यूनाधिकसंख्याव्यवच्छेदस्तत्त्वज्ञानाङ्गमित्यर्थः॥

अव्याख्याने हेतुमाह—**सूत्रेति**। चोदयति—[4]**उद्दिष्टस्य विभागानर्थक्यम् व्याघातात्**। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्यस्यानर्थक्यम्। अनर्थमर्थविपर्ययं कायति कीर्तयतीत्यनर्थकः। तस्य भावस्तत्त्वम्। कस्मात्? **व्याघातात्**। व्याघातम् एव स्फोरयति—**त्रिविधा चास्य शास्त्रस्येति**। परिहरति—**नोद्दिष्टेति**। परस्परं विभक्ता नामधेयमात्रेणोद्दिश्यन्त इत्युद्देशेऽन्तर्भावः[5]। तेनायमर्थो भवति, सामान्येनोद्दिष्टस्य विभागवचनं विशेषेणोद्देश इति। विभागप्रयोजनं पृच्छति—**किं पुनरिति**। उत्तरम्—**नियमः**। तद्विभजते—**यदीति**। पुनश्चोदयति—**लक्षणत** इति। प्रमाणलक्षणकरणप्रवृत्तो यत् चत्वार्येव लक्षयति तदवगम्यते न न्यूनान्यधिकानि वा प्रमाणानीत्यर्थः। परिहरति—**लक्षणस्येति**। आक्षेपं विभजते—**स्यादेषेति**। परिहारं विभजते—**न, लक्षणस्येति**। अन्यपरमपि वाक्यं तदेवार्थलभ्यं स्वीकरोति। यत् तेनापेक्षितम्, [6]तदेव च तेनापेक्षितम्, येन विना तदर्थो नोपपद्यते। न च प्रत्यक्षादीनां समानासमानजातीयस्य व्यवच्छेदे पञ्चम्याद्यभाव उपयुज्यते। लक्षणकरणप्रवृत्तस्य क्वचिदकरणं न तदभावे प्रमाणम्, सतोऽप्यनुपयोगेनाकरणापत्तेः। तदेतदाह—**अन्यासंभवस्येति**। विभागोद्देशस्य पुनरनन्यपरत्वादन्याभावनिश्चयो भवतीति। उपसंहरति—**तस्मादिति**॥

**अक्षस्याक्षस्येति** भाष्यमनुभाष्य तात्पर्यमाह—**अयं च सूत्रविवक्षायामिति**[7]।

---

१. प्रमाणलक्षण° J. २. तत् स्थले C. ३. विभक्तानां प्रतिपादनम्। न च C. ४. उद्दिष्टविभा° C ५. °र्भावात् C ६. तदेवचापे° C ७. अयं च सूत्रविवक्षयेति J

अक्षमक्षं प्रति वर्तत इति विगृह्याव्ययीभावे कृते सर्वेन्द्रियावरोधो भवति। ननु यदि ईदृशो विग्रहः, कस्मात् पुनर्भाष्यकारेण अक्षस्याक्षस्येति विगृह्यत इत्यत आह—**अन्यथा तु वस्तुनिर्देश** इति। अर्थमात्रमनेन प्रतिपाद्यते, न पुनः समास इत्यर्थः। अथ कस्मात् समास एव तेन विग्रहेण न प्रतिपाद्यत इत्यत आह—**समासे हि अक्षस्येति षष्ठी न श्रूयेतेति**। यदि सूत्रगतस्य प्रत्यक्षपदस्याव्ययीभावः समासः, अन्यत्र पुनरस्य कः समास इति पृच्छति—**कः पुनरिति**। उत्तरम्—**प्रादिसमास** इति। तथा हि, [1]प्राद्यापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधादभिधेयलिङ्गोपादानात् प्रत्यक्षोऽर्थः प्रत्यक्षा बुद्धिः प्रत्यक्षं ज्ञानमित्यभिधेयलिङ्गता सिद्धा भवति। क्वचित् पाठः **समासे हि प्रत्यक्षस्येति षष्ठी न श्रूयेतेति**। सूत्रविवक्षयाव्ययीभाव इत्युक्तम्। तत्र शङ्कते, कस्मात् पुनः सूत्रविवक्षयेत्युच्यते, यावता सर्वत्रैव कस्मादव्ययीभावो न भवतीति? तत्रेदमुपतिष्ठते—**समासे हि** अव्ययीभावसमासे हि, सर्वत्र प्रत्यक्षस्येति षष्ठी न श्रूयेतेति। व्युत्पत्तिनिमित्तमात्रं चेदं प्रत्यक्षशब्दस्य, न तु प्रवृत्तिनिमित्तम्। तस्मात् नेन्द्रियगतैर्गुणसामान्यादिभिर्व्यभिचारः, प्रवृत्तिहेतुस्त्वर्थसाक्षात्कारिज्ञानजनकत्वम्। तन्निमित्तः खल्वयं प्रत्यक्षशब्दस्तत्र तत्र लौकिकपरीक्षकैः प्रयुज्यते। यथा मयूरशब्दो मयूरत्वसामान्यनिबन्धनः कासुचिदेव पतत्रिव्यक्तिषु वर्तमानः, मह्यां रौतीत्यन्वाख्यायते। तदिदं प्रत्यक्षमुद्दिष्टमपि सत् प्रमाणतदाभाससंकीर्णमिति तद्विवेकाय लक्षणमुपयुज्यते। यदि तूद्देशपदं तद्विवेचयेत्, कृतं तर्हि लक्षणप्रणयनेन[2]॥

विग्रहवाक्यगता च वृत्तिर्भाष्यकृता व्याख्याता। **वृत्तिस्तु सन्निकर्षो ज्ञानं वा**। वृत्तिरिति हि व्यापारः। स तु व्यापार उच्यते, यः कारकैः फले जनयितव्ये चरमभावी धर्मभेदः फलोत्पादानुकूलोऽपेक्ष्यते। यथा पटे जनयितव्ये तन्तुभिश्चरमभाविनः संयोगभेदाः, स्वर्गे वा जनयितव्ये यागेनापूर्वमात्मधर्मः, तथेहापि इन्द्रियादिना प्रमाणेन प्रमायां फले प्रवृत्तेन तदुत्पादनानुकूलः सन्निकर्षो ज्ञानं वा चरमभावी धर्मभेदोऽपेक्ष्यत इति भवति व्यापारः। स एव वृत्तिरित्याख्यायते। व्यवस्थां दर्शयति—**यदा सन्निकर्षो** व्यापार इन्द्रियादेः प्रमाणस्य **तदा ज्ञानम्** आलोचनं वा सविकल्पकं वा साक्षात्कारवद्विज्ञानं[3] **प्रमितिः फलम्**, उभयस्यापीन्द्रियव्यापारात् सन्निकर्षापराभिधानादुत्पत्तेः। न चान्तरालिकेन निर्विकल्पकेनेन्द्रियव्यापारविच्छेद इति प्रत्यक्षव्याख्यानावसरे निवेदयिष्यते। **यदा ज्ञानम्** आलोचनं वा विकल्पो वा व्यापार इन्द्रियादीनां **तदा हानोपा-**

१. पन्नालं गति° J   २. °प्रयत्नेन C   ३. °कारिज्ञानं C

दानोपेक्षाबुद्धयः फलम्। तत्रोपादेयमिदं सलिलमिति बुद्धिरनागतोपादानविशिष्टं सलिलमालम्बमाना न साक्षात्कारवती, सलिलमात्रसाक्षात्कारस्तु स्यात्। न च तन्मात्रमस्य फलम्, अपि तूपादेयता। सा च परोक्षा, अनागतत्वात्। तस्मादुपादीयते अनेनेत्युपादानम्। उपादानं चासौ बुद्धिश्चेत्युपादानबुद्धिः। [1]तत्र तोयालोचनमथ तोयविकल्पः, [2]अथ तज्जातीयस्य दृष्टचरपिपासोपशमनहेतुभावस्य स्मृतिबीजसंस्कारोद्बोधः, अथ तस्य स्मरणम्, अथ लिङ्गपरामर्शः तज्जातीयं चेदमिति। तदिदं लिङ्गपरामर्शविज्ञानं साक्षात्कारवत्। लिङ्गे विनश्यदवस्थव्याप्तिस्मरणसहकारिदृश्यमानस्य सलिलस्य पिपासोपशमनहेतुतया अनुमानमुखेनोपादानबुद्धिरुच्यते। [3]अनुमाय खल्वयं तथाभावं [4]तदुपादित्सन् ईहमानस्तदुपादत्ते। न च व्याप्तिस्मृतिविच्छिन्नमालोचनं वा विकल्पो वा न लिङ्गपरामर्शज्ञानहेतुरिति वाच्यम्, तदुद्बोधितसंस्कारद्वारेण व्याप्तिस्मरणे च परामर्शे च तस्य तदानीमसतोऽपि कारणत्वात्। न खलु कृषिकर्म शस्याधिगतिसमये समस्ति, न च यागादिकं स्वर्गाद्युत्पादसमये, न च त्रिवृत्कषायपानं विरेकसमये। आन्तरालिककार्यपरम्परया तु [5]तत्साधनत्वं सर्वत्र समानम्॥

स्यादेतत्। का पुनरियं पिपासोपशमनशक्तिस्तोयस्य, या अनुमानगोचरः? न तावत् मीमांसकवदतीन्द्रिया [6]शक्तिर्युस्माभिरभ्युपेयते, किं तु कारणानां स्वरूपं वा सहकारिसाकल्यं वा। तत्र स्वरूपं हेतूनां प्रत्यक्षमेव। सहकारिणां प्रत्यक्षाप्रत्यक्षाणां साकल्यं [7]कार्यसमुत्पादैकव्यञ्जनीयम्, न तु तत् तोयरूपदर्शनमात्रात्[7] शक्यानुमानम्। तत् किमपरमवशिष्यते यदनुमानस्य गोचर इति? अत्रोच्यते। न वयमतीन्द्रियं सामर्थ्यम् आतिष्ठामहे, नापि सहकारिसाकल्यानुमानमाचक्ष्महे,[8] किं तु स्वरूपस्य कार्यसंबधिताम्। न चेयं स्वरूपमेव, इहस्थस्येव नारिकेलद्वीपादागतस्यापि वह्निदर्शनमात्राद् ग्राहकत्वावगमप्रसङ्गात्। तस्मात् कार्योपहितं स्वरूपमनुमेयम्। इदमेव चास्य कार्योपधानं यत् कार्योत्पादात् पूर्वमवश्यंभाव आनन्तर्यनियमः। न च तज्जातीयस्य दृष्टचरस्य तथाभावदर्शनेऽपि दृश्यमानस्य तोयस्य तद् दृष्टं भवति येन तत्र स्मर्येत। न खलूज्जयिन्यामुपलब्धस्य सौधस्य पाटलिपुत्रे स्मरन्त्यभ्रान्ताः। उपादानेन हानं व्याख्यातम्। न चोपेक्षानुपादानतया हानपक्षे निक्षिप्ता, अहानतयोपादानपक्षनिःक्षेपप्रसङ्गात्। उपादानप्रयत्ना-

---

१. तत्तोया° C. २. अथ च C. ३. अनुमिमानः स्वरूपं तथा° C.
४. °पादित्सुः समीहमानः C. ५. तत्कार्यसा° C. ६. °स्माभिरभ्यु° C °समुत्पादव्यङ्ग° C
७. °रूपमात्रदर्शनात् C. ८. °नुमानम् C.

प्रसवहेतुतया नोपादानमिति चेत् ? किमियं हानप्रयत्नमपि प्रसूते यतो हानं स्यात् ? तस्माद् या नोभयप्रयत्नप्रसवहेतुः सोपेक्षाबुद्धिस्तृतीया लोकप्रसिद्धेति सिद्धम् ॥

प्रत्यक्षपदव्युत्पत्तिं दर्शयित्वा अनुमानादिपदेष्वपि[1] व्युत्पत्तिगतिं दिशति—**एवमनुमानादिष्वपीति**। तत्रेदमनुमानपदव्युत्पत्तिभाष्यम्[2]—**मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति**। मितिर्मानम्। तथा च लिङ्गदर्शनोद्बोधितसंस्कारजा स्मृतिर्व्यवच्छिन्ना[3], तस्या मितेरन्यत्वेन[4] लोकसिद्धत्वात्। मितेनेत्यज्ञानसन्देहविपर्यासा लिङ्गविषया व्युदस्ता[5] भवन्ति। तथापि मितेनार्थस्य ज्ञानं [6]शाब्देऽप्यस्तीत्यत उक्तम्—**लिङ्गेनेति**। अपक्षधर्मतां निवर्तयति—**लिङ्गिन इति**। तथापि धर्मिणः[7] प्रत्यक्षगोचरत्वात् कृतमनुमानेनेत्यत उक्तम्—**अर्थस्येति**। अर्थ्यते[8] साध्यत इत्यर्थः। न च धर्मी स्वरूपेणार्थ्यते[9], किं तु जिज्ञासितधर्मविशिष्ट इत्यर्थः। पश्चादिति अनुशब्दस्य व्याख्या। तदेतद्भाष्यमनुभाष्याक्षिपति—**मितेनेति**। कस्मादयुक्तमित्यत आह—**फलाभावादिति**। एतद् विभजते—**एतस्मिन्निति**। अनुमानज्ञानस्य फलावस्थायामेवार्थो मित इति मेयं नावशिष्यते, यत्रैतत् सिद्धं सत् प्रमाणं भवेदित्यर्थः। तत्र फलविशेषणपक्षमास्थाय[10] यत इत्यध्याहृत्य समाधत्ते—**नैष दोष इति**। अनध्याहारेणाप्यदोष इति समाधानान्तरमाह—**भवतु वेति**। पूर्वोक्तं दोषं स्मारयति—**ननु चेति**। परिहरति—**न दोष इति**। अथ कस्मात् हानादिविषयं प्रमाणमुच्यते, न स्वगोचरं प्रतीत्यत आह—**सर्वं च प्रमाणमिति**। यद्यपि वह्निज्ञानस्यानुमानस्य सतो हेयत्वादिकं विषयः, [11]तत्रैव व्यापारात्। अन्यथा प्रमाणफलयोर्विभिन्नविषयत्वेन विप्रतिपत्त्या प्रमाणफलभावायोगात्। न हि पनसविषयेण परशुना खदिरे द्वैधीभावो भवति। तथापि फलान्तरानपेक्षमुत्पत्तावेव विज्ञाने यत् प्रकाशते स तस्य विषयः। तत्र तु न तत् प्रमाणम्, फलान्तराजनकत्वादपि तु फलमेवेत्यर्थः। विषयान्तरं प्रति तु[12] प्रमाणमित्याह—**विषयान्तरमिति**। चोदयति—**यदीति**। भावसाधनश्चेत् प्रमाणशब्दः फलमस्यार्थो न तु फलं स्वविषये करणम्, तद्व्यापारस्य तज्जनकेनैव कृतत्वात्। न च स्वविषयादन्यद् विषयान्तरमस्य संभवति, अतिप्रसङ्गादिति भावः। परिहरति—**उक्तं फलमिति**। यद्यपि यत्र फलं सोऽस्यौत्पत्तिको विषयः, तथापि यत्रानेन प्रमाणेन सता

---

१. व्युत्पत्तिं दर्शयति C २. °त्पत्तिपरं भाष्यं C ३. °र्विभिन्ना C ४. °तेरितरत्वेन J ५. निरस्ता C. ६. शब्दे° C. ७. इति। धर्मिणः C. ८. अर्यंत J. ९. °णार्यंते J १०. °क्षमास्थी C ११. तत्रैव तस्य प्रामाण्यात् अथ प्र° C १२. तत् C १३. तज्ज्ञानस्य C.

हानादिबुद्धयो जनयितव्याः, सोऽपि व्यापारेण विषय इति भावः। फलत्व एव हेतुमाह—ज्ञात इति। परोक्षार्थावगाहितया हेयादिबुद्धयः प्रत्यक्षफलं न भवन्ति, भवन्ति त्वनुमानस्येति। नियमवादिनां मतमुपन्यस्य दूषयति—**केचित् त्विति**। अनियमं रोच्यमान आह—उभयं त्विति॥

अनुमानशब्दवत्[1] फलेन निर्वचनीयत्वमुपमानशब्दस्येति मन्वान आक्षिपति—सामीप्येति। समाधत्ते—नास्ति व्याघात इति। नेयमुपमानशब्दस्य फलेन[2] निरुक्तिः, अपि तु प्रमाणेन निरुक्तिरिति न व्याघात इत्यर्थः॥

**शब्दविषया प्रतिपत्तिः शाब्दं प्रमाणम्**। यत् खलु चैत्र, गां बधानेति वाक्यमिदमित्यनुसन्धानात्मकं स्मार्तं विज्ञानमुपजायते, तत् पदार्थस्मरणसहकारि विशिष्टार्थविषयं विज्ञानं प्रसूते, तच्छाब्दं प्रमाणम्। प्रमाणमुक्त्वा फलमस्याह—**फलं तदेव**। यदा ह्येतत् प्रमाणं तदा वाक्यार्थविज्ञानं फलम्। [3]यदानुमानवद् वाक्यार्थविज्ञानं प्रमाणं तदा हानोपादानादिबुद्धयः फलमित्यर्थः॥

अत्र प्रत्यक्षादीनां क्रमोद्देशप्रयोजनं प्रति एकदेशिमतमुपन्यस्यति—**केचित् त्विति**। प्रत्यक्षपरा हि प्रमाणान्तरजन्याः प्रमितय इति प्रत्यक्षस्य प्राधान्यम्। यद्यपि [4]किञ्चिदनुमानमनुमानादिपूर्वकमपि, तथापि प्रायेण प्रत्यक्षपूर्वकम्, उपमानं तु प्रत्यक्षपूर्वकमपि शब्दपूर्वकमेवेत्यस्यानुमानादपकर्षः। स्मरणसहकारिता चानुमानसादृश्यमुपमानस्यास्तीत्यनुमानानन्तरमुद्देशः। अल्पज्ञानाधीनं च बहुज्ञानमित्यल्पविषयप्रत्यक्षाद्युद्देशेभ्यः परो बहुविषयशब्दोद्देश इति। [5]तदेतत् एकदेशिमतम् **एकदेश्यन्तरमतेन** दूषयति—**तच्चायुक्तमित्यपर** इति। अक्लिष्टो हि प्रथमं महाविषयमेव दुरवधारणत्वान्निरूपयति, अल्पविषयं तु क्लिष्टोऽपि शक्नोति[6] निरूपयितुम्। अतो महाविषयत्वं प्राथम्य एव हेतुर्न चरमत्व इत्यर्थः। अनन्तरमतं दूषयति—**एतच्चेति**। एतावता क्रममात्रं भवेत्, न तु तद्विशेषनियम इत्यर्थः॥

संप्रति विमर्शपूर्वकं स्वाभिमतक्रमनियमहेतुमवधारयन्नेव पूर्वैकदेशिमतमपाकरोति—**तस्मादन्य** इति। विमर्शनिमित्तं[7] विप्रतिपत्तिमाह—**प्रत्यक्षं पूर्वं प्राधान्यात्** इत्येकः। **महाविषयत्वाच्चादौ शब्दोपदेश** इत्यपरः। तत्र महाविषयत्वमनैकान्तिकं सन्नागमस्यैव पूर्वोपदेशं गमयतीत्याह—**उभयमिति**। पृच्छति—**कथमिति**।

---

१, २. फले J ३. यदा वाक्यार्थ J ४. °नुमानपूर्व° C ५. तदेक° J
६. क्लिष्टोऽपि शक्तो C ७. °मित्तां C

उत्तरम्—**प्रत्यक्षेणापीति** । महाविषयत्वलक्षणसाधारणधर्मदर्शननिमित्तं [1]संदेहमाह—**तत्रेति** । स्वाभिमतेन[2] हेतुना क्रमविशेषनियममवधारयति[3]—**प्रत्यक्षस्येतीति** । यद्यपि प्रमितेः प्रत्यक्षपरत्वेन प्रत्यक्षस्य प्राधान्यम्, तथापि शास्त्रे व्युत्पाद्यत्वेनानुमानस्यापि तदस्तीति साधारणतया न हेतुरिति भावः ॥

**स्यादेतत्** । व्यवस्थितविषयं प्रत्यक्षं नानुमानविषये प्रवर्तते । न चानुमानम् अगृहीतसंबन्धमुदेति । न च संबन्धग्रहः संबन्धिग्रहमन्तरेण । न चानुमानविषये सामान्यरूपे संबन्धिनि प्रत्यक्षं प्रवर्तते । अनुमानान्तरेण तु ग्रहणेऽनवस्था । तस्मात् कारणभावान्नानुमानमस्ति । एतेन शब्दोपमाने अपि परास्ते, तयोरपि संबन्धसंवेदनाधीनजन्मत्वात् । तस्मात् नाप्रत्यक्षं प्रमाणमिति विभागवचनमनुपपन्नमिति शङ्कामपनेतुं विमर्शपूर्वकं विचारयति स्म भाष्यकारः—**किं पुनः प्रमाणानीति** । तदेतद्भाष्यम् अनुभाष्याव्याख्याने [4]कारणमाह—**किं पुनरेतानीति** ॥

**सा चेयं प्रमितिः प्रत्यक्षपरेति भाष्यम्** । तदनुभाष्य हेतुमाह—**सेयमिति** । आकांक्षाभावप्रतिपादनाय प्रतीतिस्वरूपं[5] क्रमं चाह—**यथायमिति**। **आहित** उत्पादितः **प्रत्ययो** निश्चयो यस्य, संसर्गोपधानं वह्निं प्रति स तथा[6] । सन्दिग्धेन हि निश्चयाय प्रवर्तितव्यमेव । निश्चितस्तु विनिश्चयाय प्रमाणान्तरे प्रवर्तमानस्तदभ्यर्हिततरं मन्यते । **धूमाङ्गत्वेनेति** । अङ्गत्वं व्यापकत्वम् । व्याप्यं पुनर्व्याप्तिक्रियायां कर्मत्वेन प्रधानम् । तदनेन धूमव्यापकत्वोपधानेन धूमाद् गम्यमानो वह्निः परोक्ष इति दर्शितम् । अनुपहितप्रकाशस्तु प्रत्यक्षेणाव्यवहितवह्निस्वरूपप्रकाशः । स हि साक्षात्कार इति । तावदयं प्रमाता साकांक्षो यावदुपधानाव्यवहितं स्वरूपमुपलभते[7] । उपधानानपेक्षस्तु प्रत्यक्षेणाव्यवहितं साक्षाद् वह्निं विषयीकृत्य निराकांक्षो भवति[8] । **धूमाङ्गत्वेन** धूमविशेषणत्वेनेति **केचित्** । तत्तु प्रकृतानुपयोगितया अयुक्तमिति । उपसंहरति—**अतः प्रधानमिति** । सोऽयं गुणप्रधानभावो भेदाश्रयो व्यवस्थायां नास्ति, व्यवस्थितानां प्रत्येकमेकत्वात् । तस्माद् व्यवस्थायां[9] गुणप्रधानभावो न चिन्त्य[10] इति । **इतिः सूत्रसमाप्तौ** ॥ ३ ॥

॥ इति न्यायत्रिसूत्रीतात्पर्यटीका ॥

---

१. सहेतुमाह C २. अभिम॰ C ३. ॰वतारयति C ४. हेतुमा॰ C ५. ॰तीतिरूपं C ६. सत्तया C ७. रूपमुपलभ्यते C ८. भवतीति धूमा॰ C ९. ॰स्थाया C १०. चिन्त्यत C

## ॥ परिशुद्धिः ॥

**सर्वत्र तस्य सुलभत्वादिति** । स्वाभाविकं तु शास्त्रस्य त्रैविध्यं नास्त्येव तस्य पुरुषायत्तत्वादित्यपि द्रष्टव्यम् । **प्रयोजनस्येति** । अवान्तरस्येत्यर्थः । **चतूरूपो भवतीति** प्रतीतिविषय इति शेषः । अर्थविपर्ययकीर्तनेन **व्याघातादिति** । प्रत्यक्षप्रमाणानुवादः । अतो न साध्याविशिष्टत्वं व्यधिकरणत्वं[1] वा ? अविद्यमाने शशविषाणादावलक्षणम्, विद्यमाने [2]त्वनुपयोगिनि गङ्गावालुकादावलक्षणम् । अतः समानधर्मदर्शनात् असति विभागे संशयः, तन्निवृत्त्यर्थो विभागारम्भः ॥

ननु सदनुपयोगिसंशयानुच्छेदे[3] किं स्यात् ? कथमनुपयुक्तं तदिति जिज्ञासाया अनिवृत्तिः ? अपि चार्थापत्त्यादीनामुपयोगवतामपि [4]परैरुद्घुष्यमाणानामपि[5] लक्षणाकरणात् स्यात् सन्देहः—किं लक्षणाकरणादसन्ति, अनुपयोगीनि वेति[6] ? तत्रैवान्तर्भूतानि वा ? अथ परमताप्रतिषेधादुपात्तानीति ? अतस्तदपनुत्तये विभागः ॥

तथा **बौद्धापेक्षया मीमांसकानामधिकप्रमाणलक्षणाभिधानं विनैव प्रमाणानाम् आधिक्यात्** । **सांख्यस्य तु तदपेक्षयैव अधिकप्रमाणलक्षणाभिधानं सत्याधिक्ये** । तद् इहापि[8] सांख्यापेक्षया अधिकाभिधाने भवति सन्देहः[9], किं सत्याधिक्ये अथासतीति ? तदपनोदनाय विभागवचनम् । अतएवाधिक्यमाशङ्क्य विभागपरीक्षामवर्तयत् सूत्रकारः[10] । पूर्वापरग्रन्थसंगतिश्चात्र स्फुटेत्येतदपि मन्तव्यम् ॥

**शक्तेरनभ्युपगमे प्रमाणाभावो मूलम्**; असत्प्रतिपक्षेभ्यो दृष्टकारणेभ्य एव कार्योत्पत्तावर्थापत्तेः क्षीणत्वात् । प्रतिपक्षता च मन्त्रादीनां[11] सहकारिविरहरूपत्वात् । तद्विरहस्य च व्यतिरेकमुखेन सहकारित्वावधारणात् । त्रयो हि भावा भवन्ति कार्यानुकूलाः, तत्प्रतिकूलास्तदुदासीनाश्च[12] । तत्रानुकूला दहनादेः पवनादयः । तत्प्रतिकूला अपि द्विविधाः स्वरूपतः सहकारितश्च । स्वरूपतो जलावसेकादयः । सहकारितो मन्त्रादिप्रयोक्तारः । ते हि मन्त्रादीन् प्रयुञ्जानास्तद्विरहलक्षणं सहकारिणं विरुन्धन्ति । उदासीनास्तु तत्रैव रासभादयः । तत्रानुकूलत्वमन्वयव्यतिरेकगम्यम् । प्रतिकूलत्वं च तदन्वये कार्यव्यतिरेकगम्यम् । तच्च तद्विपर्ययान्वये[13] पर्यवस्यति ।

---

१. वैयधिकरण्यं BM २. अप्यनु॰ BM ३. संशयोच्छे॰ B ४. उद्घाराद् दुष्य BM ५. अपि om JA ६. चेति M ७. ॰मताप्रतिक्षेपाद्‌॰ BM ८. अपि om M ९. संशयः BM १०. अतएव....सूत्रकारः om JA ११. मण्यादीनां B १२. तद् om J १३. तच्च विपर्ययानुकूलत्वे JA

उदासीनत्वं च व्यभिचारगम्यम्। एवं च सति यत्र यदा यस्य यथानुकूलत्वे प्रतिकूलत्वे वा प्रमाणमस्ति, तत्र तदा तस्य तथैव स्वीकर्तव्यम्। किमधिकसामर्थ्यकल्पनया ? सर्वश्च परेषां विमर्शसंभवोऽतीन्द्रियसामर्थ्येऽपि समान इत्यर्थापत्तिम् उपेक्ष्यान्यदेवातीन्द्रियशक्तिस्वीकारबीजमाशङ्क्य विमृशति—**स्यादेतदिति** ॥

स्वरूपस्य प्रत्यक्षत्वे साकल्यस्य च कार्यैकव्यङ्ग्यत्वेऽनुमेयमतीन्द्रियं सामर्थ्यम् अवशिष्यत इति पूर्वपक्षार्थः। **कार्यसंबन्धितां** कार्योपलक्षिततामित्यर्थः[1]। यदाह—**कार्योपहितं रूपमिति**। नन्वन्यकार्येणोपधानं तत्कार्येणैव वा ? आद्ये अहेतुरेव हेतुः स्यात्। द्वितीये त्वितरेतराश्रयत्वम्, तस्य तत्कारणत्वे सिद्धे सति[2] तत्कार्यत्वं सिद्धं स्यात्। तत्कार्यत्वे सति च[3] तदुपलक्षितं कारणत्वं भवेदित्यत आह—**इदमेव चास्य** [4]**तदुपधानं यत् तत्कार्योत्पादात् पूर्वमवश्यंभावः**। यदुत्पादात् पूर्वं यस्यावश्यंभावः तत् कारणमितरत् कार्यमित्यर्थः ॥

नन्वेवंरूपं कारणत्वं तज्जातीयस्य [5]सामान्यतोऽनुमीयेत प्रतिव्यक्ति वा ? न तावत् प्रतिव्यक्ति, तदुत्तरकार्याभावेऽपि कासाञ्चिद् विनाशदर्शनात्। तज्जातीयस्य तु प्रागेव सामान्यतोऽवधारितम्। तदिह स्मर्यत इत्याशङ्क्याह—**न च तज्जातीयस्येति**। यथा यो यो धूमः सोऽग्निमानिति सामान्यतोऽवधारणेऽपि एष धूमोऽग्निमानिति नावधारितम्। तथेदमुदकं पिपासोपशमननिमित्तमित्यनवधृतमेवावधार्यत इत्यर्थः। न च क्वचित्[6] कार्यमकृत्वैव विनष्टे व्यभिचारः, सति[7] सहकारिसाकल्ये[8] कुर्यादिति साध्यत्वात्, तस्य च सहकार्यसाकल्यप्रयुक्तकार्याभाववत्त्वरूपस्य तत्रापि भावादिति। तस्माद् या नोभयप्रयत्नप्रसवहेतुः, सोपेक्षाबुद्धिः तृतीयेति विषयभेदाद् बुद्धिभेदः। स च सुखहेतुर्दुःखहेतुरतद्धेतुश्चेति त्रिविध इति सुव्यक्तमित्यर्थः ॥

अनुमानपदं व्युत्पादयता **भाष्यकृता** प्रसंगात् लक्षणमप्यभिहितमिति **टीकाकृद्** अपि स्मृत्यादिव्यवच्छेद्यं[9] दर्शयति—**तथा चेत्यादिना**। यतो भाष्ये लक्षणमप्युक्तम्, अतो **वार्त्तिके** तदाक्षेपो नानुक्तोपालम्भ इत्याह—**तदेतद् भाष्यमनुभाष्येति**। फलवतः प्रमाणत्वात्, तद्विशेषत्वाच्चानुमानस्य नाफलत्वं युज्यते। कथञ्चित् फलान्तरसंभवेऽप्येतस्य प्रत्यक्षफलं लिङ्गपरामर्शः[10], सुप्रसिद्धमनुमानमनेन व्याप्यत[11] इत्यपि

---

१. लक्ष्यता° J २. सति om JA ३. च om BM ४. कार्योप° यत् का° C ५. °स्य वा अनु JA ६. क्वचित् om J ७. सति om J ८. साहित्ये BM ९. स्मृत्यादि° A, व्यवच्छेदं M, व्यवच्छेत्तु B १०. °मर्शस्तु प्रसि° B ११. °नेन क्षणेन °नव्यासम् A

पूर्वपक्षे द्रष्टव्यम् । एवं च सति तत्रेत्यादिनोभयसमाधानसंगतिः । **समाधानान्तरमाहेति** । कस्मिन्नाक्षेप इत्यत आह—**पूर्वोक्तमिति** ॥

ननु हानादिविषयं प्रामाण्यमुच्यमानमनुमानस्य स्वगोचरं प्रत्येवोक्तं भवति, हानादावेव तस्य व्यापारानुबन्धात् । अत आशङ्कैवेयमनुपपन्ना किमत्र [1]समाधानेनेत्याशङ्क्य व्यापारानुबन्धितया हानादिरस्य गोचरः, प्रतीपत्त्यनुबन्धितया तु वह्निज्ञानस्य वह्निरेव विषयः, तदभिप्रायेण च[2] शङ्कासमाधाने इत्यभिप्रायवानाह—**यद्यपीति** । **विज्ञाने यत् प्रकाशते** येन विज्ञानं निरूप्यत इत्यर्थः ॥

**न च स्वविषयादन्यद् विषयान्तरमस्य संभवति, अतिप्रसंगादिति भावः** । पूर्वपक्षिण इति शेषः । **औत्पत्तिक इति** स्वभावप्रतिबद्धः । ननु हेयादिबुद्धयः केन विशेषेण द्वितीयानुमानस्य फलम्, न तु द्वितीयस्य प्रत्यक्षस्येत्याह—**परोक्षार्थावगाहितयेति** ॥

ननु सामीप्यस्य सादृश्यस्य मानं मितिः[3] संज्ञासंज्ञिपरिच्छेदे प्रमाणमित्युक्ते कुतो व्याघातावकाश इत्यत आह—**अनुमानशब्दवदित्यादि** ॥

ननु शब्दप्रतिपत्तिर्न तावत् स्वरूपतः प्रमाणम्, व्यापारवतः कारणविशेषस्य[4] प्रमाणत्वात् । नापि वाक्यार्थप्रतिपत्तिरस्याः फलम्, तदानीं तस्या विनष्टत्वात् । न च स्मृतिरूपाया अपि [5]शब्दप्रवृत्तेस्तत्फलत्वम्, [6]अनुपयुक्तसमयानामस्मर्यमाणपदार्थानां शब्दस्मरणेऽपि तदभावादित्यत[7] आह—**यत् खलु चैत्रेति** ॥

ननु स्वविषयपरिच्छित्तौ प्राधान्यमनुमानादेरपि, तत् कुतः प्रत्यक्षस्य प्रधानत्वाद् इति एकदेशी वक्तीत्यत आह—**प्रत्यक्षपरा हीति** । **प्रायेण प्रत्यक्षमात्रपूर्वकमिति**[8] साक्षात्, परंपरया तु सर्वमेवानुमानं तथेत्यर्थः[9] । **उपमानं तु प्रत्यक्षपूर्वकमपि शब्दपूर्वकमेवेति** । शब्दपूर्वकत्वे सत्येव प्रत्यक्षपूर्वकत्वं तस्य, केवला तु प्रत्यक्षपूर्वकता अनुमानमात्र एवेत्यर्थः[10] ॥

नन्वेवं सति शब्दानन्तरमुपमानमभिधीयतामित्यत आह—**स्मरणसहकारितेति** । यद्यपि शब्दस्यापि प्रमाणस्य वाक्यरूपस्य स्मृतिस्थस्य पदार्थस्मृतिसहकृतस्यैव वाक्यार्थ-

---

१. समाधिनेत्या° JA २. वा J ३. मानमिति M ४. कारणविशेषवतः M ५. शब्दप्रतिपत्तेः JA ६. अनुत्पन्नसम° B ७. °दित्याशङ्क्य JA ८. प्रत्यक्षपूर्वकमिति JA ९. °नुमानतयेत्यर्थः B १०. °नुमान एवे° A, °नुमानस्यैवे° BM.

बोधकत्वम्, तथापि न क्वचिदप्यनुभूयमानस्य लिङ्गं त्वनुभूयमानमपि[1] शब्दस्य विशेषाभिधाने न्यायसिद्धेऽप्येकदेश्यभिमतप्रयोजनाभिधानं तदकौशलख्यापनाय[2] यद्यपि प्रथममेकदेशिमतं[3] दुष्यत्वेनाभिमतमेव, तथापि दूषणाभासेन न तद्[4] दुषयितुं शक्यमिति शिक्षयितुं[5] वार्त्तिककृत्तमनुरञ्जयन्नेवोत्तरग्रन्थमवतारयति—तदेतदेकदेशिमतमिति। प्रत्यक्षं पूर्वं प्राधान्यादित्येके। उक्तमुपपादयितुं[6] महाविषयत्वाच्चादौ शब्दोपदेश इत्यपरश्चोचचक्षुः[7]। तत्र महाविषयत्वमनैकान्तिकमिति शब्दस्य महाविषयत्वात् आद्यत्वमापादयता प्रत्यक्षस्यानाद्यत्वमिच्छता अन्य एव दृष्टान्त उदाहरणीयः। तथा[8] च चित्रादौ विपक्षभूते प्रत्यक्षेऽपि गतत्वेन[9] महाविषयत्वमनैकान्तिकत्वमित्यर्थः॥

तदेतत् प्रसङ्गावस्थायाम्, स्वतन्त्रसाधनपक्षे तु कालात्ययापदिष्टत्वम्। शब्दचरमतायाः प्रत्यक्षप्राथम्यस्य च प्रत्यक्षसिद्धत्वादेव। व्यतिरेकिपक्षे च विरुद्धत्वमित्यपि[10] द्रष्टव्यम्।

महाविषयत्वेति। पूर्वमुपदिश्यमानं प्रमाणं धर्मि, महाविषयत्वादिति साधारणो धर्मः। प्रत्यक्षं वा शब्दो वेति संदेहः। साधरणतया न हेतुरिति भाव इति। प्राधान्यख्यापनं प्रयोजनं यदि प्राथम्यं विना न सिद्ध्येत् तदानुमानस्यापि प्राधान्यात् प्राथम्यं स्यादित्यर्थः॥

नन्वसति च संप्लवे का नो हानिः? सति वा[11] किं भवेद् येन भाष्यकारो विचारयति स्मेत्यत आह—स्यादेतदिति। व्यवस्थितविषयत्वात्[12] प्रत्यक्षस्यानुमानविषये प्रवृत्तिस्तदा न स्यात्, यद्यनुमानमपि व्यवस्थितविषयं भवेदित्यत आह—न चानुमानविषये[13] सामान्यरूप इति। अतो न पुनरुक्तम्[14]। अव्याख्याने कारणमिति किमिति न व्याख्यातमिति शङ्कानिवृत्तिकारणमित्यर्थः। सन्दिग्धेन हीति उपदेशप्रामाण्ये तद्द्वारा वह्नावप्युत्तरकालमिति मन्तव्यम्, अतो वह्निं प्रत्याहित उत्पादितः प्रत्ययो निश्चयो यस्येत्यनेन न विरोधः। अभ्यर्हिततमं[15] मन्यत इत्येकदेशोत्कीर्तनेन [16]पूर्वोक्तसंप्लवोपपादनं स्मारयति॥

---

१. यद्यपि······भूयमानमपि om JA   २. °स्यापनयनाय BM   ३. दुष्टत्वेन J   ४. दूषणाभासेन न तद् om M.   ५. शिक्षयितुं om JA   ६. °पादयिषुः BA   ७. °बन्धुः M, देश्यचक्षुः Prakāśa   ८. च विपक्षभूते JA. वि om BM.   ९. °विषयत्वे नैका° M   १०. °मिनि द्र° A   ११. च BM   १२. °विषयत्वात्प्र°······न स्यात् A   १३. भाष्यकारः······न चानु om M.   १४. न युक्तम् B.   १५. °तरं J, BA   १६. पूर्वमुक्तं J

ननु च निश्चयफलत्वाविशेषेऽपि प्रत्यक्षत एव आकांक्षानिवृत्तिरिति कुत एतदित्यत आह—**तावदर्थमिति** । प्रत्यक्षफलसाक्षात्कारस्यैवंस्वभावत्वादित्यर्थः ॥

नन्वङ्गं विशेषणमित्येकोऽर्थः, तत् कुतो[2] व्यापकत्वेनेति व्याख्यायते ? कुतश्च पूर्वाचार्यप्रदर्शितः पन्थाः परिह्रीयत इत्यत आह—**तत्तु प्रकृतानुपयोगितयेति** । निरुपधानलक्षणं [3]साक्षात्करणमाकांक्षानिवर्तनयोग्यं प्रत्यक्षधर्मोऽनुमानादिषु नास्ति, [4]तेन नानुमानादिपरिच्छिन्नेऽर्थे आकांक्षानिवृत्तिरिति हि प्रकृतम्, न च [5]विशिष्टार्थग्राहकत्वोपदर्शनेनानुमानादिषु तदभावो दर्शितो भवति । विशिष्टार्थग्राहकत्वेऽपि प्रत्यक्षस्य तद्भावादित्यर्थः । व्यवस्थितानां प्रत्येकमेकत्वादिति द्वितीयासंसृष्टविषयत्वादित्यर्थः ॥

॥ तात्पर्यपरिशुद्धौ प्रथमाध्याये
त्रिसूत्री समाप्ता ॥

## ॥ प्रमाणप्रकरणम् ॥

### ॥ भाष्यम् ॥

**अथ विभक्तानां लक्षणवचनमिति—**

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥**

इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं तत् प्रत्यक्षम् । न तर्हिइदानीमिदं भवति आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति ? नेदं कारणावधारणम्—एतावत्प्रत्यक्षे[6] कारणमिति, किं तु[7] विशिष्टकारणवचनमिति । यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते, यत्तु समानम् अनुमानादिज्ञानस्य, न तन्निवर्त्यंत इति[8] ॥

मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः ? भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त इति ॥

यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः, अर्थसंप्रत्ययाच्च व्यवहारः । तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं[9] रूपम् इति वा, रस इत्येवं वा भवति, रूपरसशब्दाश्च विषयनामधेयम् । तेन व्यपदिश्यते ज्ञानम्—रूपमिति

---

१. नाकांक्षा BM २. कथं BM ३. साक्षात्करणमा° J. ४. तेनानु° BM ५. विशिष्टानु° J. ६. °क्षस्य J ७. तर्हि J ८. निवर्तते CJ ९. °नं विषयज्ञा° J

जानीते, रस इति जानीते। नामधेयशब्देन व्यपदिश्यमानं सत्[1] शाब्दं प्रसज्यते। अत आह—अव्यपदेश्यमिति[2]। यदिदमनुपयुक्ते शब्दार्थसम्बन्धे अर्थज्ञानम्, न तत् नामधेयशब्देन व्यपदिश्यते, गृहीतेऽपि च शब्दार्थसम्बन्धे अस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते, तदा तत्पूर्वस्मादर्थ-ज्ञानात् न विशिष्यते, तत् अर्थविज्ञानं तादृगेव भवति। तस्य त्वर्थज्ञान-स्यान्यः समाख्याशब्दो नास्ति, येन प्रतीयमानं व्यवहाराय कल्पेत[3]। न चाप्रतीयमानेन व्यवहारः[4]। तस्माज्ज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते—रूपमिति ज्ञानम्, रस इति वा ज्ञानमिति। तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते, व्यवहारकाले तु व्याप्रियते। तस्मादशाब्दम् अर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति ॥

ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते। तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते। तच्च प्रत्यक्षं प्रसज्यते इत्यत आह अव्यभिचारीति यदतस्मिंस्तदिति तद्व्यभिचारि, यत्तु तस्मिंस्तदिति तदव्यभिचारि प्रत्यक्षमिति ॥

दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा रेणुरिति वा। तदेतदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह—व्यवसायात्मकमिति। न चैतन्मन्तव्यम्—आत्ममनःसन्निकर्षजमेवानवधारण-ज्ञानमिति। किं तर्हि ? चक्षुषा ह्ययमर्थं पश्यन्नावधारयति, यथा चेन्द्रियेण उपलब्धमर्थं मनसोपलभते, एवमिन्द्रियेणानवधारयन्मनसा[5] नावधारयति। [7]यच्च तदिन्द्रियानवधारणपूर्वकं मनसानवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयः, न पूर्वमिति। सर्वत्र च प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः[8], पश्चान्मनसानुव्यवसायः, उपहतेन्द्रियाणामनुव्यवसायाभावादिति ॥

आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं[9] वक्तव्यम्, अनिन्द्रियार्थ-सन्निकर्षजं हि तदिति। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात्। भौतिकानीन्द्रियाणि नियतविषयाणि, सगुणानां चैषामिन्द्रियभाव

---

१. सदिति नास्ति J २. तदिति नास्ति J ३. कल्पते J V ४. ॰रः उपपद्यते J ५. किं तत् प्रत्यक्षमि॰ J ६. ॰सापि J ७. यच्चैत॰ V ८. ॰यः पूर्वम् J, पश्चा॰॰॰सायः V ९. ॰क्षज्ञानस्य ल॰ J

इति । मनस्त्वभौतिकं सर्वविषयं च, [1]नास्य सगुणस्येन्द्रियभाव इति । सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिं चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्यामः (१।१।१६) इति । मनसश्चेन्द्रियभावान्न वाच्यं लक्षणान्तरमिति । तन्त्रान्तरसमाचाराच्चैतत्प्रत्येतव्यमिति[2] । परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । व्याख्यातं प्रत्यक्षम्[3] ॥४॥

॥ वार्त्तिकम् ॥

अथेदानीं[4] विभक्तानां लक्षणवचनमिति [5]लक्षणमुच्यते । तत्र इन्द्रियार्थसन्निकर्षोत्पन्नमित्येवमादि सूत्रम् । सूत्रार्थस्तु समानासमानजातीयविशेषकत्वम् । अथ पदानामर्थः । [6]कथमिन्द्रियार्थसन्निकर्षोत्पन्नमिति ? इन्द्रियेणार्थस्य सन्निकर्षाद् यदुत्पद्यते ज्ञानं तत् प्रत्यक्षमिति । इन्द्रियाणि पुनर्वक्ष्यमाणकाणि[7] । अर्थाश्च[8] । सन्निकर्षः पुनः षोढा भिद्यते । संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति । तत्र चक्षुरिन्द्रियम् , रूपवान् घटादिरर्थः । तेन सन्निकर्षः संयोगः, तयोर्द्रव्यस्वभावत्वात् । अद्रव्येण तु तद्गतरूपादिना संयुक्तसमवायः, यस्मात् चक्षुषा संयुक्ते द्रव्ये रूपादि वर्तत इति । वृत्तिश्च समवायः । एवं रूपादिवृत्तिना सामान्येन संयुक्तसमवेतसमवायः सन्निकर्षः । एवं घ्राणादिषु गन्धवदादिद्रव्येण संयोगः । तत्समवेतेषु गन्धादिषु संयुक्तसमवायः । तद्वृत्तिषु च [9]सामान्येषु संयुक्तसमवेतसमवायः। शब्दे च समवायः ॥

अयं खलु शब्दः संयोगविभागयोनिराद्यः । तत्र कतमः शब्दः संयोगयोनिः कतमश्च विभागयोनिरिति ? आकाशगुणत्वात् शब्दस्याकाशवृत्तिः संयोगः कारणम् । गुणकर्मस्वारब्धव्येषु सापेक्ष इति सापेक्षो न निरपेक्ष इति । किमपेक्षते ? भेर्याकाशसंयोगस्तावत् शब्दस्यासमवायि कारणम् , तस्यानुग्रहे भेरीदण्डसंयोगो दण्डगतवेगापेक्ष इति । यदि पुनर्भेरीदण्डसंयोग एव शब्दस्य कारणं स्यात् , व्यधिकरणः संयोगः शब्दकारणमिति सर्वत्र शब्दस्योत्पत्तिप्रसङ्गः । विभागजविभागाच्च शब्दः । वंशदलविभागानुगृहीताद् वंशदलाकाशविभागाच्छब्द इति । स उत्पन्नः शब्दः सर्वदिक्कानि शब्दान्तराणि करोति । तान्यपि प्रत्येकं शब्दान्तराणि तावत् यावत् [10]कर्णशष्कुलीमानाकाशदेश

१. न चास्य J   २. प्रतिपत्तव्यम् J   ३. व्याख्या···क्षम् om   ४. इदानीं om C   ५. तत्र प्रत्यक्ष° added C   ६. कः C   ७. द्र : १।१।१२   ८. द्र: १।१।१४   ९. तद्वर्तिषु च सामान्यादिषु C   १०. °मत्याकाश° C

इति । यः कर्णशष्कुलीमत्याकाशदेशो समवैति, स समवायादुपलभ्यते । तद्गतेषु च सामान्येषु समवेतसमवायादिति । समवाये चाभावे च विशेषणविशेष्यभावादिति । सोऽयं सन्निकर्षशब्दः संयोगसमवायविशेषणविशेष्यभावव्यापकत्वादुपात्त इति । सोऽयं सन्निकर्षः प्रत्यक्षस्य कारणं भवतीति लक्षणत्वेनोच्यते ॥

यदीन्द्रियार्थसन्निकर्षः प्रत्यक्षस्य कारणत्वादुपदिश्यते, अत्यल्पमिदमुच्यते । अन्यान्यपि प्रत्यक्षस्य कारणानि बहूनि सन्ति । तान्यपि वक्तव्यानि । तद्यथा— आत्ममनःसंयोगः इन्द्रियमनःसंयोगः विषयप्रकाशसंयोगः विषयस्थं रूपम् विषयसंयोगिस्थं च महत्त्वम् अनेकद्रव्यवत्त्वम् उपलब्धिफलः संस्कार इति । कस्मात् ? तद्भावे भावात् तदभावे चाभावादिति । तद् यदि कारणभावादिन्द्रियार्थसन्निकर्षग्रहणम् , एतान्यपि कारणान्तराणि वक्तव्यानि ॥

न वक्तव्यानि । नेदं कारणावधारणार्थं सूत्रम् , अपि तु समानासमानजातीयविशेषणार्थम् । यत् प्रत्यक्षस्यासाधारणं कारणं[1] तदभिधीयते, न पुनः साधारणं कारणं[1] निवर्त्यत इति । इन्द्रियमनःसंयोगस्तर्हि असाधारणत्वादुपसंख्येयः, न ह्ययमनुमानादिज्ञानानां कारणत्वेन संभवति[2] । न, अनेनैव तस्योक्तत्वात् । इन्द्रियार्थसन्निकर्षग्रहणेन इन्द्रियमनःसंयोग उक्तो वेदितव्यः । किं कारणम् ? उभयोरसाधारणत्वात् । न च यावदसाधारणं कारणं [3]सर्वं तद् वक्तव्यमिति सूत्रार्थः । अपि तु अन्यतरेणापि भिद्यत इत्यन्यतरोपादानम् । इन्द्रियार्थसन्निकर्षग्रहणं वा विशेषकत्वात् । [4]यदिन्द्रियार्थसन्निकर्षादुपजायते विज्ञानं तस्यान्यतरद् विशेषकं भवति । इन्द्रियमर्थो वा तद्विशेषकम्[5], तेन व्यपदेशात् । यस्मादिदं विज्ञानमिन्द्रियेण वा व्यपदिश्यते अर्थेन वा, रूपविज्ञानमिति वा चक्षुर्विज्ञानमिति वा । न पुनरिन्द्रियमनःसंयोगेन व्यपदिश्यते । न हि भवति रूपालम्बने विज्ञाने मनोविज्ञानमिति । यदा त्वात्ममनःसंयोगान्मानस्यो बुद्धयः संप्रवर्तन्ते तदात्मना व्यपदिश्यन्ते मनसा वा[6] । यच्चासाधारणं कारणं[7] तद् व्यपदेशभाग् भवति । तद्यथा, ऋत्वादिकारणसन्निधानात् प्रादुर्भवन्नङ्कुरो न र्त्वादिभिर्व्यपदिश्यते, अपि त्वसाधारणेन बीजेन व्यपदिश्यते यवाङ्कुर इति, तथेहापीत्यदोषः ॥

इन्द्रियमनसोः संयोगस्य वा अग्रहणम्, भेदेऽभेदात् । यस्मात् प्रत्यक्षज्ञानभेदे इन्द्रियमनःसंयोगो न भिद्यत इति । यद्यभेदादग्रहणं इन्द्रियार्थसन्निकर्षस्यापि तर्ह्यग्रहणम्

---

१. कारणं om J २. कारणं सं° C ३. तावत् सर्वमभिधातव्यमित्यर्थः C
४. यद् वा यदि° J ५. °षकत्वम् J ६. च C. ७. कारणं om J

एकेन्द्रियग्राह्येषु अभेदादिति प्राप्तं यथा शुक्लो गौर्गच्छतीति ? न, उक्तोत्तरत्वात् । उक्तोत्तरमेतत्—नेदं कारणावधारणार्थं सूत्रमिति । अनभ्युपगमाच्च । इन्द्रियमनःसंयोगस्य चाग्रहणं समानत्वात् । केन समानत्वादिति वाच्यम् । आत्ममनःसंयोगेन समानत्वात् । किं पुनस्तत् ? व्यपदेशाभाव इत्युक्तम् । अतीन्द्रियाधारता वा सामान्यम् । यथा वात्ममनःसंयोगोऽतीन्द्रियाधारः, एवमिन्द्रियमनःसंयोगोऽपीति । विषयावृत्तित्वं वा । यथा वात्ममनःसंयोगो [1]विषयावृत्तिः तथेन्द्रियमनःसंयोगोऽपीति । मनोवृत्तित्वं वा । यथा वात्ममनःसंयोगो मनोवृत्तिरेवमिन्द्रियमनःसंयोगोऽपीति । तस्मादिन्द्रियमनः-[2]संयोगस्यात्ममनःसंयोगसामान्यादन्यतराभिधानेन वा चरितार्थत्वादनभिधानमिति ॥

इन्द्रियार्थसन्निकर्षोत्पन्नमित्ययुक्तम्, इन्द्रियस्याप्राप्यकारित्वात् । अप्राप्यकारिणी चक्षुः श्रोत्रे इति एके । तत्र च न्यायं ब्रुवते, अप्राप्यकारि चक्षुः सान्तरग्रहणात् पृथुतरग्रहणाच्चेति । सान्तरस्यार्थस्य विप्रकृष्टदेशावस्थितस्य ग्रहणं दृष्टम्, न तु चक्षुषस्तेनार्थेन प्राप्तिरस्ति, भूतविशेषस्येन्द्रियभावात् । य एवायं कृष्णसारलक्षणो भूतविशेषः स बाह्यभूतविशेषप्रसादानुगृहीतस्तत्तृष्णापूर्वककर्मापेक्षः चक्षुरित्युच्यते । तथा चोक्तम्—रूपोपलब्धिसंवर्तकेन कर्मणा तत्तृष्णापूर्वकेण चक्षुरभिनिर्वृत्तमतो रूपोपलब्धेः कारणं भवतीति । एवं शेषेषु । न च भूतविशेषानुगृहीतस्य गोलकस्य प्राप्तिर्विषयेण अस्ति । तस्मात् सान्तरग्रहणादप्राप्यकारीति । अपरे तु सान्तर इति ग्रहणं हेतुं वर्णयन्ति । न हि प्राप्यकारिषु घ्राणादिषु सान्तर इति ग्रहणं दृष्टम्, दृष्टं तु चक्षुषि ॥

पृथुतरग्रहणाच्च । राष्ट्रवनादिरूपं च महदुपलभ्यते, न चाक्ष्णोस्तथा पृथ्ववभास इति ।

दिग्देशव्यपदेशाच्च । यदि प्राप्यकारि चक्षुर्भवेत्, दिग्देशव्यपदेशो न स्यात् । न हि प्राप्यकारिषु घ्राणादिषु एतदस्तीति ।

सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणाच्च । यत् खलु गतिमद्भवति तत् तां गतिमभिन्दत् सन्निकृष्टमाशु प्राप्नोति, विप्रकृष्टं चिरेण । शाखाचन्द्रमसोस्तुल्यकालग्रहणं दृष्टम्, तस्मादप्राप्यकारीति ॥

यत् तावत् सान्तरग्रहणादिति, तदयुक्तम्, विकल्पानुपपत्तेः । सान्तरग्रहणमिति कोऽर्थः ? किं तावत् सान्तरस्य [3]ग्रहणमप्राप्तस्य ग्रहणमित्ययमर्थः, आहोस्वित् [4]सहा-

---

१. न विषयवृ° J २. °योगेन सा° C ३. ग्रहणम् om C ४. सहान्तरेण ग्रहणम् om J

न्तरेण ग्रहणं सान्तरग्रहणमिति ? अस्तु तावत् पूर्वः पक्षः अप्राप्तस्य ग्रहणं सान्तरग्रहणमिति । नन्वयं प्रतिज्ञार्थ एव, ततश्च हेत्वभावः । किं कारणम् ? हेत्वर्थस्य प्रतिज्ञार्थेन आक्षिप्तत्वात् । एतदुक्तं भवति, अप्राप्यकारि चक्षुः, अप्राप्यग्रहणादिति न प्रतिज्ञार्थाद् भिद्यते । अथ ब्रूषे सहान्तरेण ग्रहणमिति । किं तदन्तरं नाम, यच्चक्षुषा विषयेण सहोपलभ्यते इति ? किमाकाशमभावो द्रव्यान्तरं वा ? यद्याकाशम् , तन्न चक्षुषो विषयः । न ह्याकाशं चक्षुर्ग्राह्यम्, अरूपत्वादिति[1] । अथ [2]रूपवद्द्रव्यान्तरमन्तरशब्दवाच्यम्, तस्य व्यवधायकत्वात् तेन सह ग्रहणं न युक्तम्[3] । अथाभावोऽन्तरशब्दवाच्यः ? स स्वतन्त्रश्चक्षुर्विषयो न भवतीति तेन सहोपलब्धावनैकान्तिकम् । न चान्या गतिरस्ति । तस्मात् शून्यमभिधानं सान्तरग्रहणादिति । यैरपि विद्वस्यमानैः सान्तरग्रहणादित्यस्य सान्तर इति ग्रहणमित्येतद्व्याख्यानं क्रियते, तदप्ययुक्तम् , सान्तर इति ग्रहणस्यान्यनिमित्तत्वात् । अन्यथैव[4] सान्तर इति ग्रहणं भवति, शरीरावधिनिमित्तत्वात् । शरीरमवधिं कृत्वा सान्तरनिरन्तरे भवतः, न पुनरिन्द्रियप्राप्त्यप्राप्त्यपेक्षे[5] । यत्र शरीरमिन्द्रियं चोभयमर्थेन संबध्यते तत्र निरन्तरमिति ग्रहणं भवति । यत्र पुनः इन्द्रियमात्रे संबन्धः[6] तत्र सान्तर इति । तस्मात् सान्तर इति ग्रहणस्यान्यनिमित्तत्वात् न सान्तरग्रहणादप्राप्यकारित्वं सिध्यतीति ॥

यदपि पृथुतरग्रहणादिति तदप्ययुक्तम्, संबन्धमात्रेण महदण्वोर्ग्रहणात् । संबन्धमात्रेणैव महति वाणौ वा विषयभेदानुविधायी प्रत्यय उपजायते । तस्मादचोद्यमेतदपीति[7] ॥

यत् पुनरेतदुक्तं दिग्देशव्यपदेशादिति[8], तदपि शरीरावधिनिमित्तत्वेन प्रत्युक्तम् । यत्रेन्द्रियं शरीरं चार्थेन संबध्यते तत्र दिग्देशव्यपदेशो न[9] भवति, दूरान्तिकानुविधानं वा । यत्र पुनरिन्द्रियमेव केवलं संबध्यते तत्र शरीरमवधिं कृत्वा संयुक्तसंयोगाल्पीयस्त्वं तद्भूयस्त्वं वापेक्षमाणस्य दिग्देशप्रत्ययाः सन्निकृष्टविविप्रकृष्टप्रत्ययाश्च भवन्तीति ॥

यत् पुनरेतत् शाखाचन्द्रमसोस्तुल्यकालग्रहणादिति[10], तदपि न, अनभ्युपगमात् । को हि स्वस्थात्मा शाखाचन्द्रमसोस्तुल्यकालग्रहणं प्रतिपद्यते ? कालभेदस्याग्रहणान्मिथ्याप्रत्यय एष उत्पलदलशतव्यतिभेदवदिति । कथं पुनरवगम्यते कालभेदाग्रहणनिमित्त

---

१. °पित्वाद् वाय्वादिवदिति C २. °द्रव्यमन्तर° C ३. ग्रहणमनुपपन्नम् C
४. °थैतत् C ५. °प्राप्तिनिमित्ते भवतः C ६. °मात्रं संबध्यते C ७. °ददेश्यम् C
८. २०१।२० ९. न om J १०. २०१।२३

एष युगपत्प्रत्ययो न पुनरेकालग्रहणनिमित्त [१]एवेति ? इदमनुमानम् आवरणानुपपत्तेरिति । यद्यप्राप्यकारि चक्षुर्भवति, न कुड्यकटादेरावरणस्य सामर्थ्यमस्तीत्यावरणानुपपत्तिः स्यात् । न च व्यवहितार्थोपलिब्धिरस्ति । तस्मात् नाप्राप्यकारि । दूरान्तिकानुविधानं चानुपलब्ध्युपलब्ध्योर्न स्यात् । अप्राप्य चक्षुरर्थं गृह्णातीति यदिदमर्थस्य दूरे अग्रहणम् अन्तिके च ग्रहणमुभयमेतत् न स्यात् । [२]दृष्टं तु । तस्मात् नाप्राप्यकारि । विषयीभावादिति [३]चेत्—तच्च नैवम्, संबन्धव्यतिरेकेण[४] तु विषयीभावानभ्युपगमात् । अथापीदं स्यात् यः चक्षुषोर्विषयीभवत्यर्थः स उपलभ्यते । यस्तु न भवति नासावुपलभ्यते इति । न च व्यवहितानां दूरावस्थितानां वार्थानां चक्षुषो विषयीभावोऽस्ति, तस्मात् न ते गृह्यन्ते इति । तच्च नैवम्, संबन्धव्यतिरेकेण[४] विषयीभावानभ्युपगमात् । कः पुनः संबन्धव्यतिरेकेण विषयीभावः ? केवलं भवतां [५]संज्ञामात्रं भिद्यते नार्थ इति । मयोच्यते संबन्ध इति । भवताभिधीयते विषयीभाव इति । न कश्चिद् विशेष इति ॥

अथ प्राप्यकारित्वे चक्षुषः किं प्रमाणम् ? इन्द्रियत्वमेव । प्राप्यकारि चक्षुः इन्द्रियत्वात् घ्राणादिवत् । घ्राणादीन्द्रियं प्राप्यकारि दृष्टम् । तथा च चक्षुः । तस्मात् प्राप्यकारीति । अथ पुनर्न किञ्चिदपीन्द्रियं प्राप्यकारि प्रतिपद्यते, तदा सर्वाणि पक्षीकृत्य करणत्वादिति वाच्यम् । करणं [६]वास्यादि प्राप्यकारि दृष्टम् । तथा चेन्द्रियाणि । तस्मात् प्राप्यकारीणीति ॥

अथ पुनर्वैयात्यात् सर्वानेवार्थानप्राप्यकारिणः प्रतिपद्यते, तदा कथम् ? सोऽपि दृष्टसामर्थ्यानां कारणानां सर्वत्र कार्यानुत्पत्त्या प्रत्यवस्थेयः । यदि खल्वेतानि कारणानि परस्परप्राप्त्यनपेक्षाणि स्वयमनुपजातशक्तिकानि कार्यमारभन्ते इति कस्मात् कार्यं सर्वत्र न भवतीति वक्तव्यम् । अतो न [७]करणमप्राप्यकारि अस्तीति । अनेकदण्डचक्राद्युदाहरणं लोके इति । तस्माद् [८]व्यवस्थितमिन्द्रियार्थसन्निकर्षोत्पन्नमिति[९] ॥

अथ ज्ञानग्रहणं किमर्थम् ? सुखादिव्युदासार्थम्[१०] । इन्द्रियार्थसन्निकर्षात् सुखदुःखे अपि भवतः । तद्व्युदासार्थमाह—**ज्ञानमिति** । तच्चेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं विषयनामधेयेनाभिधीयते इति **भाष्यम्** । तत्प्रतिषेधार्थमाह—**अव्यपदेश्यमिति** ।

---

१. एककाल एव C  २. इष्टं J  ३. चेत्-न, C  ४. °न्धमन्तरेण C  ५. °मात्रं om J  ६. वा स्यादिति C  ७. कारण° C  ८. °स्थितमेतदिन्द्रि° C  ९. °पन्नं ज्ञानमिति C  १०. °दिव्यवच्छेदार्थम् C

यदिदमनुपयुक्तशब्दार्थसंबन्धस्य विषयभेदानुविधायि ज्ञानं तत् प्रत्यक्षम् । कृतशब्दार्थसंबन्धस्यापि तदुत्पत्तिकाले तादृगेव ॥

अपरे तु अव्यपदेश्यमित्यनेनानुमानं निराकुर्वन्ति । तच्च नैवम् । कस्मात् ? इन्द्रियार्थसन्निकर्षोत्पन्नमिति वचनात् । न ह्यनुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति । अतो न प्रसङ्गानुमान इति ॥

**ग्रीष्मे मरीचय** इति भाष्यम् । तत्प्रतिषेधार्थमिदमुच्यते—**अव्यभिचारीति** । किमिदं व्यभिचारि ? यदतस्मिंस्तदिति भवति । किं पुनरत्र व्यभिचारि, किमर्थः, आहो ज्ञानमिति ? एके तावद् वर्णयन्ति—अर्थस्य व्यभिचारः, अर्थस्तु तथा न भवतीति तद्व्यभिचारात् तद्विषयं [1]ज्ञानमपि व्यभिचारीत्युच्यते इति । तच्च नैवम् । कस्मात् ? अर्थस्य तथाभावात् । यत् तदुदकादिज्ञानमुपजायते मरीचिषु स्पन्दमानेषु न तत्रार्थो व्यभिचरतीति । न हि ते न मरीचयो न वा[2] स्पन्दन्ते, किं तु ज्ञानं व्यभिचरति, अतस्मिंस्तदिति भावादिति । न हि तत्रोदकमस्ति । तांस्तु मरीचीन् इन्द्रियोपघातदोषादिन्द्रियेणालोच्य विपर्येति इति ज्ञानस्य व्यभिचारो नार्थस्येति ॥

**दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयतीति** भाष्यम् । तद्व्युदासार्थमाह—**व्यवसायात्मकमिति** । न, संशयस्यानिन्द्रियार्थसन्निकर्षजत्वात् । न हीन्द्रियार्थसन्निकर्षात् संशयज्ञानं भवति, अपि तु मानसः प्रत्ययः । संशीतिः संशय इति । तच्च नैवम् । संशयस्योभयनिमित्तत्वात् । उभयं तु संशयनिमित्तम् आत्मान्तःकरणसंयोग इन्द्रियार्थसन्निकर्षश्चेति । तत्र यदिन्द्रियार्थसन्निकर्षानवधारणपूर्वकं मनसानवधारणं तदिह संबध्यते । तस्य हीन्द्रियार्थसन्निकर्षः कारणमिति । पूर्वं तु न संबध्यते, यदात्मान्तःकरणसंयोगाद् भवतीति । तस्मादस्ति विषयो विशेषणस्येति [3]युक्तमुक्तं व्यवसायात्मकमिति ॥

इन्द्रियार्थसन्निकर्षोत्पन्नमित्येवमादिलक्षणम् आत्मादिषु सुखादिषु च नास्ति, मनसोऽनिन्द्रियत्वादतोऽव्यापकमेतत् प्रत्यक्षलक्षणमिति । कथं पुनरिन्द्रियं मनो न भवति ? इन्द्रियसूत्रेऽपठितत्वात् । परिपठितानि घ्राणादीनीन्द्रियाणि, न च तेषु मनः परिपठितम् । तस्मान्मनो नेन्द्रियम् । पृथक् [4]च विधानात् नास्ति मनस इन्द्रियत्वे प्रमाणम् । ततश्च नेन्द्रियं मन इति । न चैवं प्रत्यक्षाः सुखादयो भविष्यन्तीति ।

---

१. अपि om J २. वा om J ३. युक्तम् C ४. चानभिधानात् C

प्रत्यक्षाश्चैते, नानुमानिकाः लिङ्गाभावात् । न हि लिङ्गमन्तरेणानुमेयोऽर्थो[1] गम्यते । नाप्यन्यत् प्रमाणं प्रतिपादकं[2] सुखादीनाम् । न च तेषामप्रमेयत्वम्[3] । न चान्या गतिरस्ति । तस्मात् कर्तव्यं सुखादीनां प्रत्यक्षेण ग्रहणोपसंख्यानमिति ॥

कश्चैवमाह—न प्रत्यक्षा सुखादय इति ? इन्द्रियार्थसन्निकर्षजन्यप्रत्यक्षवाद्याह—नैष दोषः, मनस इन्द्रियत्वादिन्द्रियार्थसन्निकर्षोत्पन्नं सुखादिज्ञानमिति । यत् तु सूत्रेऽनभिधानं तद् वैधर्म्यात् । [4]वैधर्म्यं सर्वविषयत्वासर्वविषयत्वे[5] । सर्वविषयं मनः । असर्वविषयाणीन्द्रियाणि[6] । सर्वविषयत्वं तु मनसः, स्मृतिकारणसंयोगाधारकत्वादात्मवत् । सुखग्राहकसंयोगाधारत्वात्[7] समस्तेन्द्रियाधिष्ठातृत्वाच्च आत्मवत् । भौतिकाभौतिकत्वं तु न, विरोधात् । न हि भौतिकं मनो नाप्यभौतिकमिति । कार्यधर्मावितौ भौतिकत्वम् अभौतिकत्वं च । न च कार्यं मनः । तस्मान्न भौतिकं नाप्यभौतिकमिति । श्रोत्रे चासंभवः । यदि भौतिकाभौतिकत्वलक्षणाद् वैधर्म्याद्परिपाठः सूत्रे मनसः, श्रोत्रमपि तर्हि न पठितव्यम्, न हि श्रोत्रं भौतिकं न चाप्यभौतिकमिति । स्वार्थे प्रत्ययाधानमिति चेत्—[8]न, प्रत्ययवैयर्थ्यात् । स्यादेषा बुद्धिः स्वार्थिक एष प्रत्ययो भूतमेव भौतिकमिति । तच्च न, प्रत्ययवैयर्थ्यात् । न हि भौतिकमित्यनेन आकाशे कश्चित् तद्धितार्थो जन्यते । तस्माद् व्याहतमेतत् स्वार्थे प्रत्ययविधानमिति ॥

यत् पुनरेतत् पृथगभिधानं नास्तीति । न नास्ति, अयुगपज्ज्ञानोपपत्तेरिति । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् [१.१.१६] इत्युक्तम् । तेन च प्रतिपादितमेतन्मनसः करणत्वमिति ॥

सगुणानामिन्द्रियभावो वैधर्म्यमित्येतदपि न युक्तम्, श्रोत्रानभिधानप्रसङ्गादेव । तस्मात् सर्वासर्वविषयत्वं वैधर्म्यमित्येतदेव च ज्यायः ॥

तन्त्रान्तरसमाचाराच्च मन इन्द्रियमिति[9] । तन्त्रान्तरेषु मन इन्द्रियमिति पठ्यते । तच्चेह न प्रतिषिद्धम् । अप्रतिषेधादुपात्तं तदिति न, शेषाभिधानवैयर्थ्यदोषात्[10] । शेषाण्यपि इन्द्रियाणि तैः परिपठितानि । तस्मात् तान्यपि न वक्तव्यानि, यद्यप्रतिषेधादुपादानं भवतीति । न, तन्त्रयुक्त्यनवबोधात् । न भवता तन्त्रयुक्तिः परिज्ञायते । परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । न च यस्य स्वपक्षपरिग्रहो[11] नास्ति, तस्य स्वमतं

---

१. °नुमेयार्थो C २. °कमस्ति C ३. °मनुमेय° C ४. किं तद् वै° C
५. °विषयत्वम् J ६. °पीतराणि C ७. धिकरणत्वात् C ८. न···वैयर्थ्यात् om J
९. मन...मिति om C १०. वैयर्थ्यात् C ११. स्वमत° C

परमतं वा विद्यते[1] । भवता च परमतानुरोधेन[2] सर्वं स्वमतं निवार्यते इति । तन्निवारणात् स्वमतं परमतमित्येतदेव न स्यात् । तस्मादस्ति मन इन्द्रियं चेति । तदुपपन्नम् इन्द्रियार्थसन्निकर्षोत्पन्नं सुखादिषु ज्ञानमिति व्यापकं लक्षणम् ॥

समस्तमसमस्तं चेदि सन्देहः । [3]किमिदं प्रत्यक्षलक्षणं समस्तमाहो असमस्तमिति सन्देहः । कुतः ? उभयथा दर्शनात् , समस्तं च लक्षणं भवति व्यस्तं च । [4]इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् [१.१.१०] इति व्यस्तलक्षणम् । एकशः प्रतिपादकत्वात् । तथा समानानेकधर्मोपपत्तेः [१.१.२३] इत्येवमादि च व्यस्तम् । समस्तं पुनः वचनविघातोऽर्थविकल्पोपपत्त्या छलम् [१.२.१०] । समस्तेनानेन छलं लक्ष्यते । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् [१.१.६] इति च । लक्षणं चेदम् । अतः **सन्देहः**, किं समस्तम् , उतासमस्तमिति ?

समस्तमित्याह । यस्मादेकशोऽनुमानसुखशाब्दविपर्ययसंशयज्ञानानि निवर्तन्ते इति । यदीन्द्रियार्थसन्निकर्षोत्पन्नमित्येवं[5]माद्येकशः पदमभिधीयते, [6]यो य एकैकेन पदेनार्थः संगृहीतः स स प्रत्यक्षः स्यादिति । तेन पूर्वोक्तानामनुमानादीनां [7]प्रत्यक्षत्वप्रसङ्गः स्यादिति । एवं द्वयोः पदयोरुपादाने [8]पदद्वयेनोपात्तस्य प्रत्यक्षत्वप्रसङ्गः । एवं त्रयाणां पदानामुपादाने तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः । एवं चतुर्णां पदानामुपादाने तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः । तस्मादेकद्वित्रिचतुष्पदपर्युदासात् पञ्चपदपरिग्रहेण त्रिंशत्कोटीर्व्युदस्य समस्तं लक्षणमित्युच्यते । तत्रैकपदपरिग्रहेण तावत् पञ्च कोटयः । द्विपदपरिग्रहेण दश । त्रिपदपरिग्रहेणापि दशैव । चतुष्पदपरिग्रहेण पञ्च । एकत्रिंशत्तमी पुनः समस्तपरिग्रहेणोपात्तेति । कस्मात् ? विशेषविधिप्रतिषेधयोः शेषप्रतिषेधविध्यभ्यनुज्ञाविषयत्वात् । अयं खलु विशेषविधिः प्रवर्तमानः शेषं प्रतिषेधयति, यथा दक्षिणेनाक्ष्णा पश्यतीति । विशेषप्रतिषेधश्च शेषाभ्यनुज्ञाविषयो भवति, यथा वामेनाक्ष्णा न [9]पश्यामीति, तथेहाप्येकदेशाभ्युपगमे शेषप्रतिषेधः, शेषविधानं वा गम्यत इति व्यवस्थितं प्रत्यक्षमिति ॥

अपरे पुनर्वर्णयन्ति—ततोऽर्थाद् विज्ञानं प्रत्यक्षमिति । तत्र, ततोऽर्थादिति, यस्यार्थस्य यद्विज्ञानं व्यपदिश्यते यदि तत एव तद्भवति नार्थान्तरात्[10], तत् प्रत्यक्षम् । एतेनानुमानादिज्ञानमपक्षिप्तं भवति । न हि तत एव तद्भवति । किं तर्हि ? ततश्चान्य-

---

१. भिद्यते C २. ॰तानिषेधेन J ३. किमिदं....सन्देहः om J ४. इच्छाप्रयत्नद्वेष॰ C ५. एवम् om C ६. योऽयम् C ७. प्रत्यक्षत्व॰ om J ८. पदद्वयोपा॰ C ९. पश्यतीति C १०. ॰राद्भवति C

तश्च तद्भवति । अत्र तावदर्थग्रहणं न कर्तव्यम् । ततो विज्ञानमित्युच्यमाने गम्यत एव तदर्थादिति । अवधारणार्थोऽर्थशब्द इति चेत् , स्यान्मतिरेषा अवधारणार्थोऽर्थशब्दो भविष्यतीति, यदुक्तं भवति तत एवेति, तदुक्तं भवति ततोऽर्थादिति । तन्न युक्तम् , [1]एकपदस्याप्यवधारणार्थस्य[2] दृष्टत्वात् , अब्भक्ष इति यथा । एतेनैवानुमानादिव्युदासोऽपि प्रत्युक्तः । यत् पुनरेतत् [3]संवृतिज्ञानमनेनापक्षिप्तमिति, तदेतन्न बुध्यामहे कथं तत् अपक्षिप्तमिति । यदि ब्रूषे रूपादिभ्य उत्पन्नं ज्ञानं घटस्य व्यपदिश्यत इति, अतो[4] न ततो भविष्यतीत्यपक्षिप्तमिति, तन्न युक्तम् । न हि रूपादिभ्य उत्पन्नं विज्ञानं घटस्य व्यपदिश्यते । रूपादिभ्य उत्पन्नं रूपादीनां घटाद्[5] विज्ञानं घटस्येत्यतो न प्रसङ्ग । अथाप्ययं मनोरथो न रूपादिव्यतिरिक्ता घटादय इति, [6]मनोमोदकोपयोगमात्रमेतत् । यथा तु तद्व्यतिरिक्ता घटादयः, तथा [7]वक्ष्यामः । सर्वं च स्वविषयाद् विज्ञानं भवतीति ततोग्रहणमनर्थकमिति । ननु च मिथ्याज्ञानमतस्मादपि भवति, न ह्यतस्मात् तद् भवतीति । किं तर्हि ? अतस्मिंस्तद्भवतीति[8] । न भवता मिथ्याज्ञानमपि व्यज्ञायि । ततोग्रहणम् अर्थग्रहणं चान्तरेण विज्ञानमात्रमवशिष्यते । तथा च न लक्षणमुक्तं स्यात् । सर्वं च ज्ञानं प्रत्यक्षं स्यात् । यद्यप्येतत्सूत्रं यथाश्रुति भवति, तथापि ग्राह्यग्राहकविज्ञानयोरयुगपद्भावाज्ज्ञानमप्रत्यक्षं स्यात् । नाशोत्पादौ सममिति चेत् ? तच्च न, उदाहरणाभावात् । न हि समं नाशोत्पादे किञ्चिदुदाहरणमस्ति । विनष्टश्चार्थः प्रत्यक्ष इति स्यात् । तुल्यमिति चेत्—स्यान्मतिर्भवतां युगपदवस्थाने किमुदाहरणमिति ? तच्च नैवम् , उक्तोत्तरत्वात् । उक्तोत्तरमेतत् स्फाटिकादिसूत्रे[9] इति ॥

अपरे तु मन्यन्ते प्रत्यक्षं कल्पनापोढमिति । अथ केयं कल्पना ? नामजात्यादियोजना[10] । यत् किल न नाम्नाभिधीयते, न च जात्यादिभिर्व्यपदिश्यते विषयस्वरूपभेदानुविधायि[11] परिच्छेदकमात्मसंवेद्यं तत् प्रत्यक्षमिति । ते इदं प्रष्टव्याः, अथ प्रत्यक्षशब्देन कोऽर्थोऽभिधीयते इति ? यदि प्रत्यक्षम्, कथमवाच्यम् ? अथ न प्रत्यक्षमवाचकस्तर्हि प्रत्यक्षशब्दः । अथ प्रत्यक्षशब्देन सामान्यमुच्यते इति, एतदपि सामान्यं किं प्रत्यक्षव्यतिरेकि, आहोस्विदव्यतिरेकीति ? यदि प्रत्यक्षव्यतिरेकि ? न प्रत्यक्षमुक्तम् । अथाव्यतिरेकि ? कथं नोक्तम् ? कल्पनापोढशब्देनापि यदि प्रत्यक्षमुच्यते, तदा व्याघातः । अथ नोच्यते, तथापि कल्पनापोढशब्दोच्चारणं[12] व्यर्थम् । प्रत्यक्षं कल्पनापोढमिति

---

१. अपि om C   २. °अर्थ° om J   ३. संवृत्ति° C   ४. इत्यतो om C
५. घटादिभ्य उत्पन्नं ज्ञानं C   ६. °भोग° C   ७. उपरिष्टाद् व° C द्र॰ १।१।१४   ८. °स्मिंस्तु तदिति तद्° C   ९. द्र॰ ३।२।६   १०, जात्यादि° J   ११. °भेद° om C   १२. °पोढवचनं C

च वाक्यम् । अथास्य वाक्यस्य कोऽर्थः ? यदि प्रत्यक्षम्, व्याघातः । [1]कथम् ? प्रत्यक्षं कल्पनापोढमिति चानेन वाक्येनाभिधीयते, न चाभिधेयमिति कोऽन्यो भदन्ताद् वक्तुमर्हति ? अथ न प्रत्यक्षमस्यार्थः, वर्णोच्चारणमात्रं तर्ह्येतद्वाक्यं प्रत्यक्षं कल्पनापोढमिति । अनित्यादिशब्दविषयत्वाच्च न सर्वथा अवाच्यम् । अनित्यं प्रत्यक्षं दुःखं शून्यम् अनात्मकं च [2]प्रत्यक्षम् । एषां चेत् शब्दानां विषयतामुपयाति, कथमवाच्यम् ? अथ नोपैति ? न सर्वं संस्कृतमनित्यमित्येतत् तथागतेन आख्यातव्यम् । अथ स्वरूपतो न व्यपदेश्यमित्ययं कल्पनापोढशब्दार्थः ? सर्वेऽर्थास्तर्हि प्रत्यक्षाः प्राप्नुवन्ति । किं कारणम् ? न हि कश्चित् सुशिक्षितोऽपि पदार्थानां स्वरूपं निर्देष्टुं शक्नोति, असामयिकत्वात् । सर्वस्य च वस्तुनो द्वावाकारौ सामान्याकारो विशेषाकारश्च । तत्र वस्तु सामान्येनैव-आकारेणाभिधीयते, न विशेषाकारेण । न च [3]तथानभिधानात् नोक्तं भवति । न हि मनुष्यशब्दस्य ब्राह्मणो न वाच्यः । ये तु तस्यासाधारणधर्माः पुरुषान्तरव्यावृत्तप्रत्ययहेतवो[4] [5]न तैः सहाभिधीयते । न च तैः सहानभिधानान्नोक्तो भवतीति । एवं [6]प्रत्यक्षम् अपि सामान्यविशेषाकारवत्, तस्य विशेषाकारेण नाभिधानम्, सामान्याकारेण त्वभिधानमेव । यदि च विशेषाकारेणानभिधानम्, यत् तल्लक्षणं प्रत्यक्षस्य, न केवलं प्रत्यक्षस्य, त्रैलोक्यस्यैतल्लक्षणम् । एवं च प्रत्यक्षस्य लक्षणं नोक्तं स्यात् । अथ कल्पनापोढशब्देन प्रत्यक्षस्य स्वरूपमभिधीयते, एवमपि अनिवृत्तो व्याघातः, स्वरूपं चानभिधेयम्, अनेन च शब्देनोच्यत इति । अथानेन शब्देन नैव किञ्चिदभिधीयते, किमस्य शब्दस्योच्चारणसामर्थ्यं प्रत्यक्षं कल्पनापोढमिति ? अप्रतिपादकत्वान्मूकस्वप्नसदृशमेतत् । एवं यथा यथेदं लक्षणं विचार्यते, तथा तथा न्यायं न सहते इति ॥

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति[7] । एतदपि संशयाद्युत्पत्ति[8]निमित्तत्वादलक्षणमिति । तथा चोक्तं प्रत्यक्षसूत्रं वर्णयद्भिरिति ॥

एतेन प्रत्यक्षमिन्द्रियार्थसन्निकर्षमनःप्रकाशविशेषेषु सत्स्विति प्रत्युक्तम् । तथा श्रोत्रादिवृत्तिरिति । किं कारणम् ? पञ्चपदपरिग्रहेण प्रत्यक्षलक्षणमुक्तम्, यत्रान्यतमपदपरिग्रहो नास्ति, तत् प्रत्यक्षाभासमिति । एवमनेन न्यायेन यान्यप्यनुक्तानि लक्षणानि तान्येतस्मात् लक्षणात् न भिद्यमानानि न लक्षणानीति । व्याख्यातं प्रत्यक्षलक्षणमिति ॥४॥

---

१. कथम् om J २. ॰क्षमिति C ३. विशेषानभिधानात् C ४. ॰न्तरावृत्तयो धर्माभेदप्रत्यय॰ J ५. न धीयते om C ६. ज्ञानमपि C ७. जै. सू. १.१.४ ८. ॰द्युपलब्धि॰ J

## ॥ टीका ॥

प्रत्यक्षादिप्रमाणविशेषलक्षणानाम् अर्थाक्षिप्तसामान्यलक्षणविभागोद्देशहेतुत्वेन तदनन्तराभिधानमित्याह—अथ विभक्तानामिति । तत्र तेषु मध्ये प्राथम्यात् प्रत्यक्षलक्षणम् इन्द्रियार्थसन्निकर्षोत्पन्नम् इत्यादि सूत्रम् । अस्य तात्पर्यमाह—सूत्रार्थः सूत्रप्रयोजनम् । समानासमानजातीयविशेषकत्वम् । समानजातीयमनुमानादि, असमानजातीयं प्रत्यक्षाभासप्रमेयादि । तेभ्यो विशेषकत्वं विशेषः । तदस्य सूत्रस्य प्रयोजनम् । यः खलु कुतश्चिद् व्यामोहात् समानासमानजातीयव्यावृत्तं तद्रूपं न शक्नोति ग्रहीतुम्, सोऽनेन लक्षणेन बोध्यते । एवंलक्षणकं प्रत्यक्षमिति । तस्मात् सामान्यतः सिद्धविविक्तप्रत्यक्षमात्रानुवादेन लक्षणविधानपरमिदं सूत्रम् । इतस्त्ववगतलक्षणः तेनैव विविच्य प्रत्यक्षतत्त्वं गृह्णातीति समानासमानजातीयव्यवच्छेदः सूत्रार्थ उक्त इति । अत्र च यत इत्यध्याहृत्य यत्तदोर्नित्याभिसंबन्धात् तत् प्रत्यक्षमिति प्रमाणवाचि प्रत्यक्षपदं योजनीयम् । एवं च [1]ज्ञानप्रामाण्यपक्षेऽपि यत् तद्विशेष्यज्ञानं प्रत्यक्षफलं लिङ्गपरामर्शो वा तदपीन्द्रियार्थसन्निकर्षोत्पन्नत्वाद्युपेतत्वेन भवति प्रमाणविशेषणमिति नाव्यापकत्वं लक्षणस्येति ॥

सूत्रपदार्थं पृच्छति—अथेति । उत्तरम्—इन्द्रियेति । सन्निकर्षग्रहणलभ्यं प्रकारभेदं परिसंचष्टे—सन्निकर्षः पुनरिति । पुनःशब्देन संयोगसमवायपदोपादानात् व्यवच्छिनत्ति । संयोगपदोपादाने हि न समवायो लभ्यते, समवायपदोपादाने वा न संयोगः । सन्निकर्षपदोपादाने त्वभिमतलाभः । अर्थग्रहणेनार्थ्यमाणतया[2] ज्ञेयस्वरूपयोग्यता दर्शिता । न चासावण्वाकाशादीनामस्तीति सत्यपि संयोगादौ नासावर्थसन्निकर्ष इति तद्व्युदासः । उत्पन्नग्रहणेन च सन्निकर्षस्योत्पादकत्वं सूचितम् । ततः सत्यप्यर्थस्वरूपयोग्यत्वे संयुक्तसंयोगादेरनुत्पादकस्य सन्निकर्षस्य व्युदासः । अन्यथा कुड्यादिसंयुक्तेनेन्द्रियेण कुड्यादिव्यवहितस्य तत्संयुक्तस्य घटादेः तत्समवेतस्य च रूपादेरपि ग्रहणप्रसङ्गः । न चैतावता त्रिविध एव सन्निकर्षः संयोगः संयुक्तसमवायः समवायश्चेति सांप्रतम् । स्वतन्त्रव्याघातादनुभवव्याघाताच्च । ये हि [3]द्रव्यगुणकर्माश्रयं सामान्यातिरिक्तं सादृश्यमर्थान्तरं रोचयन्ते, तेषां कथं रूपादिभेदानामन्योन्यस्य सादृश्यं प्रत्यक्षं भवेत् ? न हि तदिन्द्रियेण संयुक्तम् । नापीन्द्रियसंयुक्तसमवेतम् । तस्मात् चतुर्थः संयुक्तसमवेतसमवायोऽभ्युपगन्तव्यः । इतरथा स्वतन्त्रव्याघातः, अनुभवव्याघातश्च ।

---

१. ॰ण्यमते॰ C २. अर्थमाणतया J ३. द्रव्य॰ om C

अनुभूयन्ते हि रूपगन्धत्वादयः सामान्यविशेषा अनुगताः, तासु तासु व्यक्तिषु परस्परव्यावृत्तिमतीषु एते नानुभूयेरन् असति सन्निकर्षान्तरे। यदि तु वैयात्यादाहुः[1] नानुभूयन्त एवेति, तदा प्रतिवक्तव्यं कुतस्त्योऽयमनन्तासु रूपगन्धादिव्यक्तिषु रूपमिति वा गन्ध इति वा व्यपदेशभेदः? चाक्षुषत्वाद्युपाधिनिबन्धन इति चेत्—न, अननुसंहितोपाधेरुपहितप्रत्ययायोगात्। न खल्वननुसंहितदण्डश्चैत्रं दण्डीति व्यपदिशति। न चेन्द्रियाण्यतीन्द्रियाणीन्द्रियदर्शनविषयभावमनुभवन्ति। तस्मादस्तीन्द्रियेण रूपत्वादिसामान्यानुभवो यन्निबन्धनाः कासुचिदेव केचिदेव व्यक्तिषु व्यपदेशभेदा इति सिद्धं सन्निकर्षान्तरम्। विशेषणभावेन च संयुक्तविशेषणं समवेतविशेषणं च संगृहीतम्॥

यस्येन्द्रियेण यादृशः सन्निकर्षः तादृशं तत्र दर्शयति—तत्र चक्षुरिति। शब्दस्य आकाशगुणत्वम्। कर्णशष्कुल्यवच्छिन्नस्य नभोभागस्य श्रोत्रत्वम्। आद्यस्यैव शब्दस्य संयोगविभागयोनिजत्वम्। सन्तानेन श्रोत्रे समुत्पादः समवाय इत्यादि द्वितीये[2] निपुणतरमुपपादयिष्यते। अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिजातिमन्तौ च मिथः संबद्धावनुभूयेते। नान्यथा तन्तुषु पट इति च, शुक्लः पट इति च, पटः स्पन्दते इति च, पटो द्रव्यमिति च बुद्धिव्यपदेशौ स्याताम्। शुक्लः पट इत्यादि सामानाधिकरण्यज्ञानं न तु संबन्धिज्ञानमिति चेत्? किं पुनरिदं सामानाधिकरण्यम्? तादात्म्यमिति चेत्—न, द्वितीयबुद्धिव्यपदेशयोः पौनरुक्त्यात्। अपौनरुक्त्यं चाभिमन्यन्ते प्रतिपत्तारः, [3]यदन्यतरदुपलभ्यान्यद् बुभुत्सन्ते। न चैकं वस्तु द्व्यात्मकमिति युक्तम्। भेदाधिष्ठानस्य तन्नान्तरीयकस्य द्वित्वस्यैकात्मनि विरोधेनासंभवात्। तस्माद् भिन्ने एव वस्तुनी संबद्धे सामानाधिकरण्येन [4]भासेते, असंबन्धे गौरश्व इतिवत् तदनुपपत्तेः। संबन्धेऽपि कुण्डे दधीतिवद्वैयधिकरण्यप्रसङ्ग इति चेत्—न, शब्दवृत्तिभेदेन संबन्धाभेदेऽपि सामानाधिकरण्यवैयधिकरण्यव्यवस्थापनात्। न हि जातु दधिशब्दः कुण्डे वर्तते कुण्डशब्दो वा दध्नि। वर्तन्ते तु सुरभिमधुरशुक्लादिशब्दाः स्वाभिधेयं निमित्तीकृत्य पटादिषु, एवं पटादिशब्दा अपि जात्यादि निमित्तीकृत्य द्रव्ये प्रवर्तन्ते इति सामानाधिकरण्यम्। तेन सामानाधिकरण्येऽपि प्रवृत्तिनिमित्तानां नैकात्म्यं परस्परम्। नापि द्रव्येण, किं तु तैस्तैरन्वितमेकं द्रव्यं प्रतीयते। शब्दानां तु तत्रैकस्मिन् द्रव्ये प्रवृत्तेः तद्वाच्यानामैकात्म्यभ्रमः। अयुतसिद्ध्या तु कुण्डे दधीतिवत् न स्फुटतरो विवेकप्रकाशः। तदेवमस्ति संबद्धानुभवः, न चासौ संबद्धानुभवं विनेति संबन्धोऽनुभूयते, स चायुतसिद्ध्यादि-

१. ब्रूयात् C २. द्र॰ २.२.३५ ३. येनान्य॰ C ४. प्रतीयेते C

संपत्त्या समवायः, न चास्यान्यः समवायः, अवस्थानात् । न चेन्द्रियेणास्य संयोगः अद्रव्यत्वात् । न चासंबद्धस्य ग्रहणम्, इन्द्रियाणां प्राप्यकारित्वसमर्थनात् । तस्मात् विशेषणविशेष्यभावः परिशिष्यते । नन्वयं विशेषणविशेष्यभावोऽन्यत्र संबन्धान्तरपूर्वको दृष्टः । तत् किमत्र संबन्धान्तरं कल्प्यताम् ? तथा चानवस्था इत्युक्तम् । न चेन्द्रियासंबद्धस्य ग्रहणम् । तस्माद् विना संबन्धान्तरं विशेषणविशेष्यभाव एषितव्य इति सिद्धम् ॥

एवमभावेऽपि यदिन्द्रियसंयुक्तं वा यद्वेन्द्रियसमवेतं[1] यथा भूतले घटो नास्तीति वा नास्त्यकारेऽनुदात्तस्वर इति वा तस्य संयुक्तस्य वा विशेषणभावेन, समवेतस्य विशेषणभावेन चेन्द्रियप्रत्यासत्त्या ग्रहणम् । न च भूतलादिरूपमेव घटाभावो नार्थान्तरमिति सांप्रतम्, सत्यपि घटादौ भूतलस्य भावात् । न च कैवल्यं तस्य धर्मो घटभावविरोधी घटाभावादन्यः । न च दृश्ये घटादौ भूतलोपलम्भः कैवल्यमभावव्यवहारहेतुरिति युक्तम् । एवं हि घटसंसृष्टभूतलग्रहोऽपि कैवल्यमिति घटाभावव्यवहारं प्रवर्तयेत् । न ह्यदृश्यो घटस्तदानीं दृश्यमानः । दृश्येऽनुपलभ्यमान इति तु विशेषणे किमपराद्धमुपलभ्याभावेन येन तदपाकरणायोपलम्भाभावोऽभ्युपेयते ? तस्मात् सदिवासदपि तत्त्वमभ्युपेयम् । तच्च प्रत्यक्षमक्षव्यापारे सति तत्प्रत्ययात् । न च प्रतियोगिस्मरणव्यवहित इन्द्रियार्थसन्निकर्षो नालमभावधियमुपजनयितुमिति सांप्रतमित्यग्रे दर्शयिष्यामः । सविकल्पकस्य प्रत्यक्षत्वसिद्धौ यथा शब्दस्मरणपूर्वगृहीतपिण्डानुसन्धानादयो नेन्द्रियव्यापारं व्यवदधतीति, न च शब्दस्मरणादीनामनुयोगिता, भूतलविकल्पं प्रत्यङ्गत्वात्, स्वाङ्गमव्यवधायकमिति न्यायात्, घटस्य तु प्रतियोगितेति सांप्रतम् । कस्य पुनः प्रतियोगी घटः ? तदभावस्येति चेद् भवतु । घटाभावानुभवस्य तु घटस्मरणं हेतुरिति न प्रतियोगि, किं त्वनुयोग्येव । ननु स्वरूपमात्रं दृष्टं वेश्माद्यर्थं स्मरन्नेव बहिर्निर्गतश्चैत्रो यदा पृच्छ्यते केनचित्— वयस्य, तव गृहे तदा किमासीत् मैत्र इति ? स चैत्रः प्रतियोगिस्मरणविरहात् पूर्वमप्रतिपन्नमैत्राभावोऽपि तत्प्रश्नजनितमैत्रस्मृतिः क्षणं ध्यात्वा तदभावमवगम्याह, मित्र, तत्र नासीत् मैत्र इति । तदीयमसतीन्द्रियार्थसन्निकर्षेऽभावबुद्धिर्भवन्ती प्रत्यक्षाद्यतिरिक्तमभावाख्यं प्रमाणं व्यवस्थापयतीति । नैतत्, संयुक्तविशेषणलक्षणेन मनःसन्निकर्षेण स्मर्तव्यस्य स्मरणाभावं मैत्रस्य गृहीत्वा तेन लिङ्गेन तदभावस्य तदानीमनुमानात् । तथा हि तद्गेहं तदा मैत्राभाववत् ज्ञानार्हस्य मैत्रस्याज्ञाने गेहस्य ज्ञायमानत्वात् । यद् यस्य ज्ञानार्हस्याज्ञाने ज्ञायते तत् तदभाववत् । यथा घटाभाववद् भूतलम् । तथा च गेहम् । तस्मात् तथा ।

---

१. यदिन्द्रियसंबद्धं C

न च यत् कदाचिदानुमानिकं तेनेन्द्रियगम्येन न भवितव्यम्, प्रमाणसंप्लवव्यवस्थापनात्। तत् सिद्धं विशेषणभावादभावस्येन्द्रियप्रमेयतेति। संयोगसमवायपदपरिहारेण[1] सन्निकर्षपदोपादानस्य प्रयोजनमाह—**सोऽयं सन्निकर्षशब्द** इति ॥

तदनेन प्रबन्धेन **इन्द्रियस्यार्थेन सन्निकर्षाद् यदुत्पद्यते ज्ञानं तत् प्रत्यक्षमिति** भाष्यं व्याख्यातम्। संप्रति **न तर्हीति** चोद्यभाष्यं व्याचष्टे—**यदीन्द्रियार्थेति**। [2]प्रत्यक्षज्ञानकारणाभिधानप्रवृत्तेस्तदेकदेशं वदन्नकुशलः **सूत्रकारः** स्यादित्यर्थः। कारणान्तराणि दर्शयति—**तद्यथेति**। **विषयसंयोगि** चक्षुरालोकश्च। तत्स्थं रूपम्। आत्मीयेन हि रूपेणालोकचक्षुषी द्रव्यं दर्शयत इति स्थितिः। महत्त्वं वा अनेकद्रव्यवत्त्वं वा, अनेकद्रव्या अवयवाः, तद्वत्त्वमवयविनो महत एव न द्व्यणुकस्य, तस्मादन्योन्यनिरपेक्षत्वं महत्त्वानेकद्रव्यवत्त्वयोरिति विकल्प एव न्याय्य इति। सत्यप्येवंलक्षणकत्वे चक्षुरवयविनस्तैजसस्य न चाक्षुषत्वमित्यत उक्तम्—**उपलब्धिफलः संस्कार** इति। धर्माधर्मनिमित्त उद्भवसमाख्यातः संस्कारः उपलब्धिफलः। न चासौ चक्षुषि, तस्यादृष्टवशेनानुद्भूतरूपस्पर्शत्वादित्यर्थः। परिहरति—**न वक्तव्यानि** इति। प्रत्यक्षलक्षण[3]करणप्रवृत्तो हि **सूत्रकारः** तदेव ब्रूयात् यदस्यासाधारणं कारणम्[4]। न तु सदपि साधारणमस्य कारणम्। न हि तत् तस्य लक्षणमतिव्याप्तेरित्यर्थः। तदनेन **नेदम्** इत्यादि भाष्यं व्याख्यातम्। असाधारणं कारणं चेत् प्रत्यक्षलक्षणायोपादेयं हन्त, अन्यदप्यस्यासाधारणमस्ति कारणमिति तदप्युपादेयमिति चोदयति—**इन्द्रियमनःसंयोगस्तर्हीति**। तदनेन **मनसस्तर्हीत्यस्य** भाष्यस्यार्थ उक्तो वेदितव्यः। परिहरति—**न, अनेनैव** इन्द्रियार्थसन्निकर्षेणैव। **तस्य**—इन्द्रियमनःसन्निकर्षस्य उक्तत्वात्। तदुक्तिसाध्यं यत् तत् तेनैव कृतम्। तत्साध्यं त्विन्द्रियमनःसन्निकर्षो न शक्नोति साधयितुम्। न च सुखादिज्ञाने मानसे अस्तीन्द्रियमनःसन्निकर्षः। इन्द्रियार्थसन्निकर्षस्तु सर्वव्यापकः। वक्ष्यति हि मनस इन्द्रियत्वम्[5]। सुखादेश्चार्थत्वं सिद्धमेवेति। संप्रति व्यापकत्वमभ्युपेत्य परीहारान्तरमाह—**इन्द्रियार्थेति**। यद्यपीन्द्रियमनःसन्निकर्षेऽपीन्द्रियम् अस्ति प्रत्यक्षज्ञानस्य विशेषकम् इन्द्रियेण व्यपदेशादिन्द्रियज्ञानमिति, तथापि मनसा व्यपदेशाभावात् मनसस्तत्राविशेषकत्वम् इन्द्रियार्थसन्निकर्षे तूभयमपि विशेषकम्, उभाभ्यां प्रत्यक्षज्ञानस्य व्यपदेशादित्ययमस्येन्द्रियमनःसन्निकर्षाद्विशेष इति ॥

---

१. परित्यागेन J २. °ज्ञान° om J ३. °करण° om C ४. कारणं om C
५. द्रः मनसश्चेन्द्रियभावात्–भाष्ये १.१.४.

चोदयति—**यदा त्विति** । तुशब्दः पूर्वपक्षं व्यावर्तयति । **युञ्जानस्य** हि योगिनो यदात्ममनःसंयोगादात्मनि बुद्धयो भवन्ति ताः खल्वात्मना व्यपदिश्यन्ते आत्मबुद्धय इति । मनसा च व्यपदिश्यन्ते मनोबुद्धय इति । तस्मादुभाभ्यां व्यपदेशाद् उभयोर्विशेषकत्वमितीन्द्रियार्थसन्निकर्षवदात्ममनःसन्निकर्षो वक्तव्य इत्यर्थः । परिहरति—**यच्चेति** । चोऽवधारणे । यदेवासाधारणं तद् व्यपदेशभाग्भवति, कारणत्वेन तेन व्यपदिश्यते इत्यर्थः । एतदुक्तं भवति—यथा चक्षुषा इन्द्रियत्वेन ज्ञानं व्यपदिश्यते चाक्षुषमिति, तथा मनसापीन्द्रियत्वेन[1] व्यपदिश्यते ज्ञानं मानसमिति । एवं यथा रूपेणार्थेन व्यपदिश्यते ज्ञानं रूपज्ञानमिति, तथा आत्मनाप्यर्थेन व्यपदिश्यते आत्मज्ञानमिति, तत्र चासाधारणत्वमेव तयोः । यत्र त्विन्द्रियान्तरमेवासाधारणम्, लिङ्गादि वा [2]तत्र चात्मा नार्थोऽपि तु प्रमातैव । [3]यथा रूपादिज्ञानेऽनुमानादिज्ञाने वा न तत्र ज्ञानं मानसमिति वा आत्मज्ञानमिति वा व्यपदेशः स कस्य हेतोः, तयोः साधारण्यात् ? आत्ममनःसन्निकर्षस्त्विन्द्रियार्थसन्निकर्षेण संगृहीतो न त्विन्द्रियार्थसन्निकर्षस्यैष संग्राहकोऽव्यापकत्वादिति ॥

**एकदेशिनः** परीहारमुपन्यस्यति—**इन्द्रियमनःसंयोगस्य वा अग्रहणं भेदेऽभेदात्** । यदा हि नगरयोषितः कुतूहलात् प्रणिहितमनसो विकसितनिःस्पन्दनयनोत्पलाः सौधमालागवाक्षकैरवनिपतिं सबलवाहनमतिचिरपरावृत्तं गोपुरेण निविशमानमालोकयन्ति, तदा खल्वासामेकेनैवेन्द्रियमनःसंयोगेन क्रमवदनेकेन्द्रियार्थसन्निकर्षसहकारिणा भिन्नानि क्रमवन्ति हास्तिकाश्वीयादिप्रत्यक्षज्ञानानि जायन्ते । तदिदमाह—**यस्माद्** इति । चोदयति—**यदीति** । यदा हि मन्दं गच्छति गवि दूरतः संयुक्तसमवायेनेन्द्रियार्थसन्निकर्षेण शुक्लो गौरित्यज्ञासीत्, अथ प्रत्यासीदन् गच्छतीत्यपि विजानाति तेनैव संयुक्तसमवायेन सन्निकर्षेण, तेन प्रत्यक्षज्ञानस्य शुक्ल इति च गच्छतीति च भेदेऽपि इन्द्रियार्थसन्निकर्षो न भिद्यते । तस्मादिन्द्रियार्थसन्निकर्षे तुल्यत्वादिन्द्रियमनःसंयोगोऽपि तत्र वक्तव्य इत्यर्थः । परिहरति—**न वक्तव्यः** । कुतः—**उक्तोत्तरत्वादिति** । तद्विभजते—**उक्तेति** । ननु भवतूक्तमुत्तरं भेदेऽभेदादित्यस्याक्षेपः समाधातव्यः इत्यत आह—**अनभ्युपगमाच्च** । एकदेशिमतमेतदस्माभिर्नाभ्युपेयते । तस्मान्न समाधेयम् इत्यर्थः । तत् किमिदानीं **भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त** इति भाष्यम् अनुपपन्नमेव ? नेत्याह—**इन्द्रियमनःसंयोगस्य चाग्रहणं समानत्वात्** । पृच्छति—**केनेति** । उत्तरम्—**आत्ममन** इति । पुनः

१. °पीन्द्रियेण C  २. यत्र चा° J  ३. तथा C

पृच्छति—**किं पुनः** समानत्वम् , उत्तरम्—**व्यपदेशाभाव** इत्युक्तम् । तेन भाष्यस्यायमर्थः । प्रत्यक्षज्ञानस्य रूपज्ञानस्य रूपज्ञानमिति वा चक्षुर्विज्ञानमिति वा व्यपदेशेन भिद्यमानस्य आत्ममनःसंयोग इव अयम् इन्द्रियमनःसंयोगो न भिद्यते । एवं हि स भिद्यते, यदि स्वसंबन्धिवाचकेन व्यपदेशेन स्वमन्यतो व्यावर्त्यते, न विशेषणेन विशिष्टं[1]विशेष्यं ज्ञानमप्यन्यतो व्यावर्तयेत् । न त्वस्ति इन्द्रियमनःसन्निकर्षाधाराभ्यामिन्द्रियमनोभ्यां प्रत्येकमस्य व्यपदेशो यथेन्द्रियार्थसन्निकर्षाधाराभ्यां इन्द्रियार्थाभ्यां व्यपदेशो रूपज्ञानमिति चक्षुर्ज्ञानमिति वा । तस्माद् व्यपदेशाभाव आत्ममनःसन्निकर्षेण साम्यम् इन्द्रियमनःसन्निकर्षस्य । तस्मात् समानत्वात् नोक्त इति ॥

प्रकारान्तरं समानत्वे दर्शयति—**अतीन्द्रियाधारता वेति** । लक्षणं हि प्रसिद्धं भवति यथा धूमो वह्नेः । न चातीन्द्रियद्वयाधारसन्निकर्षस्तथा प्रसिद्धो यथेन्द्रियार्थसन्निकर्षोऽर्थस्य संबन्धिन एकस्य प्रसिद्धत्वात् , इन्द्रियमनसोस्तु द्वयोरतीन्द्रियत्वात् । आत्मा तु यद्यपि युञ्जानस्य शरीराद्यतिरिक्तः प्रत्यक्षः, तथाप्यस्मदादीनां न तथेत्यतीन्द्रिय उक्तः । तदनेनातीन्द्रियाधारत्वं स्वरूपेणोक्त्वा[2] तदेवं विषयावृत्तित्वमनोवृत्तित्वाभ्याम् अतीन्द्रियाधारत्वं सामान्यमाह—**विषयावृत्तित्वं वेति** । उपसंहरति—**तस्मादिति समानत्वादिति** भाष्योक्तो हेतुः, **चरितार्थत्वादिति** स्वोक्तः ॥

आक्षिपति—**इन्द्रियार्थसन्निकर्षोत्पन्नमित्ययुक्तमिति** । सान्तरग्रहणादिति हेतुं विभजते—**विप्रकृष्टेति** । ननु नार्थो विप्रकृष्टः, चक्षुषस्तत्र प्राप्तेरित्यत आह—**न तु[3] चक्षुष** इति । कस्मादित्यत आह—**भूतविशेषस्येति** । बाह्यो भूतविशेष आलोकः । तस्य प्रसाद इन्द्रियाव्यवधायकत्वम् कुड्यादिभ्यो विशेषः[4]यः खलु काचाभ्रपटलादिषु स्वच्छेषु समस्ति । स्यादेतत् । अस्ति कृष्णसारलक्षणो भूतविशेषः प्रसन्नान्धस्यापि, अतस्तस्यापि रूपोपलब्धिः स्यादित्यत आह—**तत्तृष्णापूर्वकेति** । रूपोपभोगतृष्णा हि तत्साधनं कृष्णसारमपि विषयीकरोति । एतदुक्तं भवति—भूतविशेषः कर्मापेक्षो[5]रूपं चष्ट इति चक्षुरित्युच्यते । कर्मक्षयात् तु प्रसन्नान्धस्य न रूपं चष्ट इति न चक्षुः । अस्तु गोलकमेव चक्षुः किमेतावतापीत्याह—**न चेति** । विच्छिन्नं हि गोलकमर्थादनुभूयत इत्यर्थः । तदेवं वस्तुनः सान्तरस्य ग्रहणमप्राप्यकारित्वे हेतुरुक्तम् ॥

**केचित्** तु सान्तरमिति ग्रहणविशेषणं हेतुं[6]ब्रुवते, तन्मतमुपन्यस्यति—**अपरे त्विति** । साध्यविपर्ययादस्य व्यतिरेकं दर्शयति—**न हि प्राप्यकारिष्विति**

१. विशिष्टं J २. ण्णोक्तम् C ३. च C ४. यत J ५. रूपं चक्षाणः चक्षु° C
६. कुर्वन्ति C

पक्षधर्मतामाह—दृष्टं त्विति । यच्चोक्तमप्राप्यकारित्वे साधनं पृथुतरग्रहणादिति, तद्विभजते—पृथुतरेति । द्व्याश्रयो हि संयोगोऽल्पमेव संयोगिनमनुरुध्यते, न महान्तम् । न जातु रथादिसंयोगा नभो व्यश्नुवते, मा भूत् सर्वत्र रथादीनां तत्संयोगादीनां चोपलब्धिः । तेन यावन्मात्रं राष्ट्रवनादेर्गोलकेन व्याप्तं तावन्मात्रस्य ग्रहणप्रसङ्गः । हेत्वन्तरमाह—दिगिति । अस्यापि व्यतिरेकमुखेन गमकत्वं दर्शयति—यदि प्राप्यकारीति । अपरमपि हेतुमाह—सन्निकृष्टेति । यद्यपि गतिक्षणानां प्रत्येकं स्वाश्रयस्य देशान्तरविभागसंयोगोपजननं प्रति क्षिप्रतया न विशेषः[1] । स्वाश्रयप्रत्यासत्तौ चाविशेषः तथाप्या चापादानविभागात् आ च प्रापनीयदेशप्राप्तेरन्तरालवर्ती यावान् गतिक्षणप्रचयः पूर्वापरीभूतो गतिरिह विवक्षितः । तस्य सान्तरत्वं मन्दत्वं विलम्बः । नैरन्तर्यं तु[2] पाटवं क्षिप्रता । तामिमां गतिमभिन्दद् नैरन्तर्येण कुर्वदपि सन्निकृष्टमाशु प्राप्नोति । न विप्रकृष्टेन तुल्यकालम् , किं तु विप्रकृष्टं चिरेणेति । यथोक्तं दिग्नागेन—

सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च ।
बहिर्वर्तित्वादिन्द्रियस्योपपन्नं सान्तरग्रहणमिति चेत् ?

अत उक्तम्—

अधिष्ठानाद् बहिर्नाक्षं

किं त्वधिष्ठानदेश एवेन्द्रियम् । कुतः ?

[3]तच्चिकित्सादियोगतः ॥
सत्यपि च बहिर्भावे न शक्तिर्विषयेक्षणे ।
यदि च स्यात् तदा पश्येदप्युन्मील्य निमीलनात् ॥

यदि च स्यात् उन्मील्य निमीलितनयनोऽपि रूपं पश्येत् , उन्मीलनादस्ति बहिरिन्द्रियमिति ॥

तत्र वार्त्तिककारः सान्तरग्रहणादिति हेतुं विकल्प्य दूषयति—यत् तावदिति । सान्तरता खल्वप्राप्तिसाहचर्यात् । अप्राप्तिं लक्षयति—हेत्वर्थस्य प्रतिज्ञार्थेनाक्षिप्तत्वात् अभेदेन । तदुक्तम्—न प्रतिज्ञार्थाद् भिद्यत इति । हेतुप्रतिज्ञापदवाच्यत्वेन भेदमुपचर्याक्षिप्याक्षेपकभावो द्रष्टव्यः । तस्य व्यवधायकत्वादिति रूपवतोऽप्रसादस्वभावस्य कुड्यादेरित्यर्थः । यत् तु प्रसादस्वभावं तेजः तन्न गृह्यते, किं तु तस्य रूपमात्रं विस्फारिताक्षेण दृश्यते । तदाश्रयं च द्रव्यं साधयिष्यते । न च गुणो द्रव्यस्यान्तरम् । मा भूद् गन्धादिभिरन्तरं द्रव्यस्य, मा न भूतां च निरन्तरे द्रव्ये, स्वगुणाभ्यामन्तरितत्वात् ।

---

१. क्षिप्रतायामविशेषः C २. तु om C ३. तत्र चिकित्सादिप्रयोगात् C

न चापातजन्मालोचनं वा विकल्पो वा द्रव्यानुमानं प्रतीक्षते येन रूपज्ञानानुमितं द्रव्यम् इन्द्रियार्थयोर्द्रव्ययोरन्तरं स्यात् । अपि च रूपमात्रमगृह्यमाणे द्रव्ये स्वतन्त्रं गन्धादिवद् गृह्यमाणं कथमन्तरा स्वाश्रयमनुमापयेत् , आकाशादीनामाश्रयाणामग्रहणात् ? तस्माद् [1]विषक्तावयवतेजोद्रव्याप्रत्यक्षत्वसमारोपमात्रेण दूषणं वक्ष्यमाणं त्वन्यथासिद्धत्वदूषणं पारमार्थिकं द्रष्टव्यम् । **अथाभावोऽन्तरशब्दवाच्य** इति, नास्माकं मूर्तद्रव्याभावादन्यत् आकाशमस्तीति भावः । दूषयति—**स स्वतन्त्रश्चक्षुर्विषयो न भवति** इन्द्रियं चार्थं चान्तरा अभावो ग्राह्यः, तेन सहार्थस्य ग्रहणं सान्तरग्रहणम् । न चेन्द्रियार्थयोर्मध्ये कस्यचित् संयुक्तस्य वा समवेतस्य वा ग्रहणमस्ति, यत्तन्त्रोऽयमभावो गृह्येत इति भावः ॥

स्यादेतत् । मा भूदान्तरालिकं संयुक्तं वा समवेतं वा विशेष्यं गृह्यमाणमेव तु रूपादिविशेष्यमिति । तत्तन्त्रोऽयमभावः तद्विशेषणत्वेन निरूपयिष्यते । ततश्च सान्तरग्रहणमुपपत्स्यत इत्यत आह—**तेन सहोपलब्धाविति** । प्रतीयते हि त्वगादिभिः अपीन्द्रियैः प्राप्यकारिभिरौष्ण्याभावविशेषणं शिशिरतरं पाथः । न चेन्द्रियाणामत्राप्राप्यकारिता, तस्मादनैकान्तिकम् । अन्वयाभ्युपगमेनैतदुक्तम् । अन्वयाभावे तु विरुद्धमिति भावः । न च तैजसं रूपमन्तरम्, येन सान्तरग्रहणं स्यादित्याह—**न चान्या गतिरिति** । यथा चैतत् तथोपपादितमधस्तात् । ये तु सान्तर इति ग्रहणमिति हेतुमाहुः, तान् प्रति दूषणमाह—**यैरपीति** । अन्यथासिद्धत्वे हेतुमाह—**शरीरेति** । शरीरावच्छिन्नाः खल्वात्मानः शरीरायतनाः शरीरमेवात्मानमभिमन्यमाना अर्थाननुभवन्ति । तत्र य एव शरीरासंबद्ध इत्यनुभूयते तमेव सान्तर इति मन्यते । इन्द्रियसंबन्धो भवतु, मा वा भूत्, शरीरसंबन्धेन तस्य स्पर्शादौ न सान्तरत्वाभिमान इत्यर्थः । हेत्वन्तरं दूषयति—**यदपीति** । **संबन्धमात्रेणेति** । मात्रग्रहणं संबन्धचतुष्टयव्याप्त्यर्थम् । तद् यथा इन्द्रियेणार्थस्य संबन्धः, इन्द्रियावयवैरर्थस्य, अर्थावयवैरिन्द्रियस्य, इन्द्रियावयवैरर्थावयवानाम् । न चैतत् निर्यता विना पृथ्वग्रतां भवतीति पृथ्वग्रता सूचिता । यथा वर्तिदेशे पिण्डितमपि तेजः प्रसर्पत् प्रासादोदरं व्याप्नोति । तत् कस्य हेतोः ? पृथ्वग्रत्वादिति । स्वभावतः प्रसरदपि न स्वपरिमाणानुविधायिनं प्रत्ययमाधत्ते, किं तु विषयभेदानुविधायिनम् । विषयनिरूपणाधीननिरूपणा हि प्रत्यया नेन्द्रियनिरूपणाधीननिरूपणाः । तदिदमुक्तम्—**विषयभेदानुविधायी प्रत्यय** इति ॥

---

१. विविक्ता॰ तेजोऽवयविद्रव्या॰ C

अपरमपि हेतुं दूषयति—**यत् पुनरिति**। देहमर्थं चान्तरावस्थितस्य पृथिव्यादेः संयुक्तसंयोगाल्पीयस्त्वं भूयस्त्वं चापेक्षमाणस्येति। खगानां चोपर्युपरि संचरतां दूरान्तिकभावो बहुलतमालोकावयवभागानां संयुक्तसंयोगाल्पत्वभूयस्त्वाभ्यामवगन्तव्यः। स च तादृगालोकावयवी प्रत्यक्षोऽन्यथा न रूपमात्रेण तदनुमानं शक्यमित्युक्तम्। न च खगानामुपर्युपरि संचरतां दूरान्तिकप्रत्ययः स्यात्। न च पतति पतत्रिणीह प्राप्तो नेहेति भवेत्। तस्मादन्यथासिद्धिरेव सहान्तरेण ग्रहणादितिवदत्रापि दूषणमिति द्रष्टव्यम्॥

अपरमपि हेतुं दूषयति—**यत् पुनरिति**। युगपद्ग्रहणमसिद्धम्, तदभिमानस्तु अन्यथासिद्धः। अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यदुदयगिरिशिखरम् आरोहत्येव मार्तण्डमण्डले भवनोदरेष्वालोक इत्यभिमानो लौकिकानाम्। तादृशं चाक्षुषमपि तेज इति क्रमेणापि गच्छद् युगपत्तत्र तत्र प्राप्तमिति लक्ष्यते। न चैकस्मादेव कर्मणो युगपद् दूरान्तिकसंयोगा भवन्तीति युक्तम्। तद्धि स्वकार्ये जनयितव्ये स्वाश्रयप्रत्यासत्तिम् अपेक्षते। अन्यथा मधुरास्थस्य देवदत्तस्य कर्म पाटलिपुत्रेण देवदत्तं योजयेत्। वेगाख्यसंस्कारजमपि कर्म न सहसा शरमन्तरालदेशेन च लक्ष्येण च योजयति। तस्मात् मिथ्यैव यौगपद्याभिमान इति। चोदयति—**कथं पुनरिति**। अस्ति हि शाखाचन्द्रमसोः ग्रहणे यौगपद्याभिमानः। न [1]चायमसति बाधके मिथ्येति वक्तुं [2]शक्यः। सोऽयमबाधितो [3]बोधोऽवबोधयत्यप्राप्यकारितां चक्षुष इत्यर्थः। परिहरति—**इदमिति**। इन्द्रियं यद्यगत्वानागतमर्थं गृह्णीयात्, किमस्य कुड्यकटाद्यावरणमपकुर्यात् येन तदावृतं न गृह्णीयात्। गतौ तु स्पर्शवता प्रसादरहितेन सैवास्य प्रतिबद्धेति न प्राप्नोति विषयम्, अप्राप्तं च न गृह्णाति। प्रयोगस्तु, चक्षुःश्रोत्रे प्राप्य स्वविषये कार्यं कुरुतः, जनकत्वे सति तदप्राप्तावजनकत्वात्। यज्जनकं सद् यदप्राप्तौ यन्न जनयति तत् तत्प्राप्तावेव तज्जनयति, यथा कुम्भजनकः कुम्भकारो मृदोऽप्राप्तावकुर्वन् कुम्भं तत्प्राप्तावेव करोति। तथा चैतत्। तस्मात् तथेति॥

युक्त्यन्तरमाह—**दूरान्तिकानुविधानमिति**। दूरे नोपलभ्यते, अन्तिके च उपलभ्यते। अप्राप्तेरविशेषेण दूरेऽप्युपलम्भः स्यात्। अनुपलम्भे वा अन्तिकेऽपि [4]न स्यात्। प्राप्तौ तु दूरं गच्छत् प्रक्षीणं सत् प्राप्तमर्थं न गृह्णाति अतैजसम्, तैजसम् अप्यभिभूतं न गृह्णाति, यथोल्काप्रकाशं मध्यन्दिने। अनभिभूतं तु मार्तण्डमण्डलं गृह्णात्येवेति। चोदयति—**विषयीभावादिति**। योग्यो हि तादृश इन्द्रियक्षणः

---

१. अयम् om J　२. शक्यम् J　३. बोधोऽव॰ om C　४. स स्यात् C

स्वकारणादुपजातः परिणतो वार्थक्षणश्च, ययोरप्राप्तयोरेव ग्रहणग्राह्यभावः। व्यवहितविप्रकृष्टौ च न तौ तादृशौ। तत् किमप्रतीयमानप्राप्तिकल्पनयेत्यर्थः। परिहरति—**तच्च नैवमिति**। निषेत्स्येते हि क्षणभङ्गपरिणामौ भावानाम्। तेन स्थेमभाजां भावानां स्वरूपयोग्यता वा महत्त्वादिर्विषयीभावः सहकारिसाकल्यं वा ज्ञानोपजननं प्रति परिशिष्यते। तत्र स्वरूपयोग्यतामात्रं चेदास्थीयेत, तदा यदेवाव्यवहितं सन्निहितं [1]सद् अजनयद् विज्ञानं विप्रकृष्टमपि व्यवहितमपि तदेवेति तथैव तेन ज्ञानं जनयितव्यम्। अस्ति हि तस्य तदापि स्वरूपयोग्यतेति, सहकारिसाकल्यं तु प्राप्तिरेव। तस्मात् न संबन्धमन्तरेण विषयीभाव इति सूक्तम्। सन्दिग्धः पृच्छति—**अथ प्राप्यकारित्व इति**। अयमभिसन्धिः। कुलालादौ प्राप्यकारिणि दृष्टं यथा विप्रकृष्टो व्यवहितश्च न करोतीति, अप्राप्यकारिणि चायस्कान्तादौ दृष्टं यथा विप्रकृष्टो व्यवहितश्च लौहं [2]मणिराकर्षति, तस्मात् तत्र प्रमाणं वक्तव्यमिति उत्तरम्—**इन्द्रियत्वमेव** प्रमाणम्। तदेव पञ्चावयवोपपन्नमाह—**प्राप्यकारीति**। यदि तु कश्चित् दृष्टान्तस्य साध्यविकलत्वम् उद्भावयेत् त्वगादीनामप्राप्यकारित्वादिति, तं प्रत्याह—**अथ [3]पुनर्न किञ्चिदिति**। पृच्छति—**अथेति**। योग्यतयैव हि कारणानि स्वकार्यं कुर्वन्ति, प्राप्तिस्तु स्वरूपयोग्यताप्रयुक्तां व्याप्तिमुपजीवति, न त्वस्याः स्वाभाविकं व्यापकत्वमिति भावः। उत्तरम्—**सोऽपीति**। सहकारिसाकल्यं तावत् न प्राप्तेरतिरिच्यत इत्युक्तम्। केवलं स्वरूपयोग्यता वक्तव्या। सा च व्यस्तानामप्यस्तीति यत्र तत्र व्यवस्थितेभ्योऽपि कार्योत्पादप्रसङ्गः। अयस्कान्तमणेरपि चक्षुष इव वृत्तिभेद एषितव्यः, अन्यथा व्यवधानविप्रकर्षयोरपि लौहाकर्षणप्रसङ्गात्। न च व्यवधानविप्रकर्षाभावसहितो लौहमाकर्षति, व्यवधानविप्रकर्षयोस्तु तदभावाभावे [4]नाकर्षति सांप्रतम्। प्राप्तेरेव तत्र तत्र कार्योत्पादं प्रति उपयोगस्य विदितत्वात्[5]। योग्यतामात्रस्य चोपाधेरपाकृतत्वात्। यथा च द्रव्यातिरिक्तस्तद्धर्मः प्राप्तिस्तथाग्रे निवेदयिष्यते। तस्मात् सर्वमवदातम्। उपसंहरति—**तस्मादिति**। यदपि कृष्णसारानुग्रहोपघाताभ्यां दर्शनादर्शनादिति तत्रोच्यते, [6]तदधिष्ठानमिन्द्रियमित्यधिष्ठानानुग्रहोपघाताभ्यां तस्यानुग्रहोपघातौ, यथा कूष्माण्डलतासेचनच्छेदनाभ्यां तत्फलस्य अनुग्रहोपघातौ। अतएव [7]बहिर्निसृताप्यच्छिन्नमूला दृष्टिः[8] कार्याय समर्था न छिन्नमूलेति सिद्धम्॥

पृच्छति—**अथ ज्ञानेति**, प्रत्यक्षसमाख्यातलक्षणानुवादेन लक्षणे विधीयमाने ज्ञायत एवैतज्ज्ञानमेवेति लोके साक्षात्कारिज्ञानहेतोः प्रत्यक्षत्वादिति भावः। उत्तरम्—

---

१. सत् om J २. मणिम् C ३. पुनः om C ४. °भावेन न भवतीति C
५. आवेदित° J ६. तदधिष्ठानानु° C ७. हि निर्गताप्य° C ८. चक्षुःसन्ततिः C

सुखादिव्युदासार्थम् । तदेव हि लक्षणवाक्यमुच्यते, यस्य लक्ष्यानपेक्षोऽतिव्याप्त्यव्याप्तिव्युदासो लक्षणपदेभ्य एव प्रतीयते । लक्ष्यानुरोधेन तु लक्षणव्यवस्थापने अन्योन्याश्रयत्वमगतिर्वेति भावः । सुखादीनां विज्ञानाभिन्नहेतुजत्वेन विज्ञानत्वादशक्यं व्यावर्तनमिति चेत्—न, अभिन्नहेतुजत्वासिद्धेः । न खलु यैव चन्दनस्पर्शज्ञानस्योत्पत्तौ सामग्री सैव सुखस्यापीति । अस्ति हि शीतार्तस्यापि चन्दनेन्द्रियसंयोगात् शीतस्पर्शज्ञानम् इति तद्वदेवास्य सुखमपि भवेत् । अवान्तरसामग्रीभेदेऽपीन्द्रियार्थमनस्कारजत्वात् ज्ञानजातीयत्वमिति चेत्—न, किञ्चित्कारणाभेदेऽपि कार्यभेदस्यानाकस्मिकत्वोपपत्तेः । तदर्थत्वाच्च कारणभेदानुसरणप्रयासस्य । न चोपादानाभेदादभेद इति युक्तम् । भिन्नानामपि ज्ञानानामेकसमनन्तरप्रत्ययोपादानत्वस्य भवद्भिरभ्युपगतत्वात् । अपि चोपादानाभेदश्च कुतश्चित् कारणभेदात् कार्यभेदश्चेति को विरोधः ? अतएवास्माकमभेदे अप्युपादानस्य पिठरस्यौष्ण्यापराख्यस्य च वह्निसंयोगस्य पूर्वरूपादिप्रध्वंसानां कारणानां भेदाद् भिन्नजातीया जायन्ते गन्धरूपरसस्पर्शा इति सिद्धान्तः । तस्मादर्थप्रवणेभ्यो ज्ञानेभ्यस्तदप्रवणतया भिन्नजातीयाः सुखादयो यथास्वमनुकूलवेदनीयत्वादिभिर्लक्षणैरन्योन्यमपि भेदवन्तस्तीव्रसंवेगतया प्रमितसानपेक्षमानसप्रत्यक्षप्रवेदनीया इति रमणीयम् ॥

स्यादेतत् । असत्यपीन्द्रियार्थसन्निकर्षे ज्ञानमात्रादेव सुखदुःखयोः स्वप्नान्तिके दर्शनात् यत्रापीन्द्रियार्थसन्निकर्षस्तत्रापि ज्ञानमस्तीति तदेव सुखदुःखयोः कारणं क्लृप्तसामर्थ्यात् । इन्द्रियार्थसन्निकर्षस्य तु ज्ञानमात्रोपयोगादन्यथासिद्धौ भावाभावाविति । तदयुक्तम्, स्वप्नान्तिके सुखदुःखोत्पादस्यासिद्धेस्तज्ज्ञानस्यार्थज्ञानस्येव मिथ्यात्वात् । यथा हि तत्र कामिनीस्मृतिविपर्यास एवमुपलब्धचरतज्जन्मसुखस्मरणविपर्यासः । सुखदुःखबुद्ध्युत्पाद एव [1]चात्र धर्माधर्मोपयोगो न तु सुसदुःखोत्पादे । न चासतीन्द्रियार्थसन्निकर्षे ज्ञानमन्यन्मनोरथादि वा तादृशं सुखभेदं विधत्ते यादृशो विषयोपभोगजन्मा । सतीन्द्रियार्थसन्निकर्षे ज्ञानमात्रमेव तस्य हेतुः । ज्ञानहेतुस्तु सन्निकर्ष इत्युक्तमिति चेत्—न, विषयासन्निधाने विषयस्मृतिमतः तादृशस्य सुखभेदस्यानुत्पादादित्यप्युक्तमेव[2] । विषयसाक्षात्कारस्तदुत्पादहेतुर्न विषयज्ञानमात्रमिति चेत् ? हन्त, ईश्वरस्याप्यस्ति तत्रभवतो योगर्द्धिसंपन्नानां च महाधियां समस्तवस्तुसाक्षात्कार इति तेषामपि सुखदुःखोत्पादप्रचयः प्रसज्येत, असत्यां प्रतिपक्षधारणायाम् । तस्मादिन्द्रियार्थसन्निकर्षोऽपि सुखदुःखोत्पादहेतुरेषितव्यः । स च सत्यप्यर्थसाक्षात्कारे नास्ति सिद्धानामिति न तेषां

---

१. वात्र C २. ॰दित्युक्त॰ C

सुखदुःखोत्पादः । अपि च चरमभावि कारणं गृहीत्वा पूर्वभाविनामकारणत्वापादने तन्त्वादीनामपि पटादीन् प्रत्यकारणत्वप्रसङ्गः । संयोगभेदादेव तादृशपटोत्पत्तेः तन्त्वादीनां च संयोगभेद एवोपयोगात् । तत्सहितस्य तु तत्कारणत्वं[1] सन्निकर्षस्याप्यालोचनसहितस्येति समानम् । यथाहुः **पदार्थविदः** स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षधर्माद्यपेक्षादात्ममनसोः संयोगात् यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुखम्[2] इति । तस्मात् सुष्ठूक्तं सुखादिनिवृत्त्यर्थं ज्ञानग्रहणमिति ॥

इह द्वयी प्रत्यक्षजातिरविकल्पिका सविकल्पिका चेति । तत्रोभय्यपि **इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति** लक्षणेन संगृहीतापि स्वशब्देनोपात्ता, तत्र विप्रतिपत्तेः । तत्राविकल्पिकायाः पदम् **अव्यपदेश्यमिति**, सविकल्पिकायाश्च **व्यवसायात्मकमिति** । तत्र व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि, तत् कर्म व्यपदेश्यं विशेष्यमिति यावत् । तद्यथा डित्थोऽयं गौरयं शुक्लोऽयं कमण्डलुमानयं गच्छत्ययमिति सर्वं हि सविकल्पकं विशेषणविशेष्यभावेन वस्तुषु प्रवर्तते । अविद्यमानं व्यपदेश्यं यस्मिंस्तदव्यपदेश्यं जात्यादिस्वरूपावगाहि, न तु जात्यादीनां मिथो विशेषणविशेष्यभावावगाहीति यावत् ॥

तत्र नामरहितमविकल्पकं नास्तीति ये विप्रतिपद्यन्ते तन्मतमपाचिकीर्षुरुपन्यस्यति भाष्यकारः **यावदर्थं वै नामधेयशब्दाः** । सर्वेऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयान्विताः । नास्ति सोऽर्थो यः कदाचित् क्वचित् कथञ्चित् नामधेयेन वियुज्यते । तदनेन नामधेयतादात्म्यमर्थानां प्रतिजानीते । अत्र हेतुमाह—**तैरर्थसंप्रत्यय** इति । अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येनावगम्यन्ते गौरित्यर्थोऽश्व इत्यर्थ इति । न चोपायतया सामानाधिकरण्यं घटते । न हि चक्षुरादिसामानाधिकरण्यं रूपाद्यनुभवति । नापि ज्ञायमान उपाय उपेयसामानाधिकरण्यमनुभवति । न हि भवति धूमोऽयं वह्निरिति किं तु धूमोऽयं धूमत्वात् वह्निमानिति । अपि चाशब्दोपायेऽनुमेयादौ न शब्दसंभेदेनाधिगमो भवेत्, अस्ति तु । तस्मात् तैर्नामधेयैः सह समानाधिकरणस्यार्थस्य प्रत्ययो यत इति । तस्मात् नामधेयात्मानः अर्थाः । किं च गवादिषु[3] षड्जादिषु च शब्दापकर्षेऽर्थप्रत्ययापकर्षात् तदुत्कर्षे त्वर्थप्रत्ययोत्कर्षात् प्रत्ययस्य च प्रत्येतव्योत्कर्षाधीनोत्कर्षत्वात् नामधेयोत्कर्षेणार्थस्योत्कर्षः अर्थस्य तादात्म्यं [4]गमयति । तदिदं समः

१. °कारणत्वे C २. पदार्थधर्मसंग्रहे प्रशस्तपादीये सुखलक्षणम् । ३. वृक्षादि° C
४. कथयति C

प्रयोजनं संप्रत्यय इति समधिकः प्रत्यय इत्यर्थः । अस्त्यर्थसंप्रत्ययो नामधेयसामानाधिकरण्येन, न त्वेतावता नामधेयात्मता सिध्यति । अस्ति हि पुरोवर्तिद्रव्यसामानाधिकरण्येन[१] रजतप्रत्ययो न चैतावता शुक्ती रजतात्मिका भवतीत्यत आह—**अर्थसंप्रत्ययाच्च व्यवहारः** । ततश्चाविसंवादात् प्रमाणं सन्नामधेय तादात्म्यं साधयत्यर्थानामित्यर्थः ॥

तदेवं सामान्यतोऽर्थानां नामधेयतादात्म्यं व्युत्पाद्य प्रकृते योजयति—**तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नं विषयज्ञानं रूपमिति वा रस इति वा** एवं रूपाद्यर्थसामानाधिकरण्येन भवति । भवतु, किमेतावतापीत्यत आह—**रूपरसशब्दाश्च विषयनामधेयम्** । किमेतावतापीत्यत आह—**तेन व्यपदिश्यते ज्ञानम्** । उक्तमपि व्यपदेशं सव्याख्यानमाह—**रूपमिति जानीते रस इति जानीते** इति । तथा चार्थानां नामधेयात्मकत्वात् तद्गोचरमालोचनमपि नामधेयगोचरमित्यर्थवत् **नामधेयेन व्यपदिश्यमानं शाब्दं प्रसज्यत** इति । न शब्दप्रमाणकतया शाब्दम्, अपि तु शब्दे जातं शाब्दम् । शब्दश्चात्र विषयत्वेन जनकोऽर्थतादात्म्यात् । तथा च नाविकल्पकं शब्दरहितमस्तीति तात्पर्यार्थः । तथा चाहुः,

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥

बालकमूकादीनामपि ज्ञानं शब्दानुव्याधवदेवानादिशब्दभावनावशात् । यदवोचत्,

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥

इति । तदस्य निराकरणं लक्षणगतेनालोचनज्ञानावरोधार्थेनाव्यपदेश्यपदेन सूचितम् इति परीक्षापर्वणि वचनार्हमपि सुभाषितरुचितया तद्विलम्बमसहमानो **भाष्यकारो** लक्षणावसर एवाह । अत एवाह—**अव्यपदेश्यमितीति** । तेन सूचितेऽप्यर्थे अव्यपदेश्यपदं योजयति—**यदिदमनुपयुक्ते शब्दार्थसंबन्धेऽर्थज्ञानम्, न तत् नामधेयशब्देन व्यपदिश्यते ॥**

अयमभिसन्धिः । सामानाधिकरण्येन शब्दात्मकत्वं रूपादीनामभिधीयमानं शब्दब्रह्मात्मकत्वं वोच्येत श्रूयमाणगौरित्यादिपदभेदात्मकत्वं वा ? न तावदाद्यः कल्पः । न खल्वस्मदादिसमस्तदर्शनपथातिवृत्तेन शब्दब्रह्मणा रूपादीनामस्ति सामानाधिकरण्यप्रतीतिः लौकिकानाम् । श्रूयमाणशब्दसामानाधिकरण्येन तु तादात्म्यप्रसाधने अनुपयुक्तशब्द-

१. °वर्तिसामानाधि° C

संबन्धस्य बालमूकादेः रूपादिज्ञानेषु नास्ति श्रूयमाणशब्दगन्धोऽपि, प्रागेव तु तत्सामानाधिकरण्यम्। न च तेषामपि प्राग्भवीयशब्दभावनानुगमेन तत्सामानाधिकरण्यमिति सांप्रतम्। न खलु रूपाद्यात्मनः शब्दस्य रूपादिवैशद्येनावैशद्यं संभवति। युगपद् वैशद्यावैशद्यरूपविरुद्धधर्मयोगेन भेदप्रसङ्गात्। वैशद्ये तु व्युत्पन्नवदव्युत्पन्नोऽपि शब्दैः व्यवहरेत्, न तु संबन्धग्रहणमपेक्षेत। न च तादात्म्यादन्यद् वाचकत्वं शब्दानां यत्र संबन्धग्रहापेक्षा भवेत्। न च तादात्म्येऽपि कल्पितभेदानां वाच्यवाचकभावः। तथा सति न सामानाधिकरण्यं स्यात्। न ह्यस्ति संभवो भेदकल्पना च सामानाधिकरण्यप्रथा चेति। तस्मादव्युत्पन्नानामस्ति शब्दरहितं रूपादिषु निर्विकल्पकं प्रत्यक्षमिति। न केवलमव्युत्पन्नानाम्, व्युत्पन्नानामप्यस्तीत्याह—**गृहीतेऽपि च शब्दार्थसंबन्धे** इति। अर्द्धोक्त एव सामानाधिकरण्यनिरासाय संबन्धग्रहणस्वरूपमाह—**अस्यार्थस्य** सास्नादिमद्रूपस्य **अयं** गकाराद्योकारो **नामधेयमिति**। इतिकरणो ज्ञानपरामर्शप्रधानः। तथा च यो डित्थो नानादेशकालावस्थासंसृष्टः पिण्डभेदः सोऽयमिति सन्निहितदेशकाल इत्यर्थः। न त्वयं पिण्डो डित्थशब्द इति प्रत्ययः। औत्सर्गिकं हि शब्दानामर्थपरत्वं क्वचित् पुनरित्यादिभिः शब्दैस्तदपोद्यते। यत्रापि संबन्धप्रतिपादनमभेदेन [1]अयं डित्थ इति, तत्रापि शब्दो वाच्यत्वपरो[2] न स्वरूपपरः, यथा गौर्वाहीक इति लक्ष्यमाणगुणयोगपरः। न च तन्मात्रेण वाहीकस्य गोत्वं भवति। तस्माद् भिन्नयोरेव शब्दार्थयोः संबन्धग्रहात् तन्मूलत्वाच्च शब्दव्यवहारस्य न शब्दपुरःसरमपि ज्ञानं[3] शब्दसामानाधिकरण्यमात्मनोऽर्थस्यावगमयति। यत्तु शब्दानुपायेऽपि ज्ञाने शब्दः पूर्वं भवति तद्गृहीतसङ्केतस्य प्रथममिन्द्रियार्थसन्निकर्षादालोचनेन शब्दसंसर्गरहितेनालोचितेऽर्थमात्रे तस्यार्थभेदस्य[4] शब्दभेदेन संबन्धात् शब्दविषयः संस्कारः प्रबोध्यते। प्रबुद्धः शब्दस्मृतिं जनयति। तेन व्युत्पन्नस्य निर्विकल्पकात् पराञ्चः प्रत्ययाः शब्दानुपाया अपि शब्दपुरःसरा जायन्ते। यथाहुः,

यत् संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्।
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः॥

तस्माद् व्युत्पन्नस्यापि नामधेयस्मरणाय पूर्वमेषितव्यो विनैव नामधेयमर्थप्रत्ययः। तदिदम् उक्तम्—**गृहीतेऽपि च शब्दार्थसंबन्धे अस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते** नामधेयरहितो नामधेयस्मरणात् पूर्वमविकल्पेन **तदा पूर्वस्माद्**

---

१. अयं om C २. वाच्यपरो न स्वपरः C ३. शब्द° om C ४. °र्थस्य C

अव्युत्पन्नावस्थायाम् **अर्थज्ञानात् न विशिष्यते** इति । यतो न विशिष्यते तस्मात्[1] **तदर्थज्ञानं तादृगेव भवति** । ननु परप्रतिपादनादिलक्षणव्यवहाराय स्वरूपेण ज्ञाने व्यपदेष्टव्ये यदर्थव्यपदेशेन व्यपदिश्यते तदवगच्छामोऽर्थव्यपदेशाकारमिति । कथं चार्थाकारं भवति ? यद्यर्थव्यपदेशयोर्नाभेदः, तस्मात् पुनरपि तादात्म्यं प्रसक्तमित्यत आह—**तस्य त्विति** । अर्थाकारमेव तु ज्ञानमर्थव्यपदेशेन व्यपदिश्यते अन्यथा अशक्यत्वादित्यर्थः । **प्रतीयमानं परेण** । उपसंहरति—**तस्मादिति** ॥

**तदेवमर्थज्ञानकाले [स] न समाख्याशब्दो व्याप्रियते** प्रतीयमानतया, **व्यवहारकाले तु** परप्रत्यायनकाले तु **व्याप्रियते** कारणतया । तदनेन गोपाल-विपालादीनां संज्ञानिवेशनं तासु तासु व्यक्तिषु व्यवहारोत्कर्षहेतुः नार्थोत्कर्षहेतुरित्यपि सूचितं भवति । तस्माद् अविकल्पकप्रत्यक्षावरोधार्थेनाव्यपदेश्यपदेनास्यैवाविकल्पकस्य शब्दानुव्याधरहितता सूचिता इत्याशयवान् उपसंहरति—**तस्मादिति** ॥

तदेतद् भाष्यं **वार्त्तिककारः** तात्पर्यतो व्याचष्टे—**तच्चेन्द्रियार्थेति** । **विषय-भेदानुविधायि ज्ञानमिति** शब्दात्मतामपाकरोति । चाक्षुषं हि रूपज्ञानं रूप एव नियतं न शब्दे प्रवर्तते । एवं श्रौत्रमपि शब्द एव नियतं न रूपादौ प्रवर्तते । यदि पुनरिदं शब्दात्मकं रूपादि भवेत्, श्रोत्रजं ज्ञानं शब्दग्राहीति रूपादावपि प्रवर्तेत । अप्रवर्तमानं वा विधुरयति रूपादीनां शब्दात्मताम् । अपि च श्रूयमाणशब्दात्मत्वे रूपादीनाम्, तेषामपि श्रवणग्राह्यत्वमित्यन्धोऽपि रूपं गृह्णीयात् । अस्ति हि तस्य श्रोत्रं च शब्दज्ञानं च । एवं बधिरोऽपि शब्दं गृह्णीयात् । अस्ति हि तस्य लोचनं च रूपज्ञानं च । अशब्दोऽभाव इति च विवक्षितविपरीतापत्तिः शब्दाभावस्यार्थस्य शब्दत्वात्, अश-ब्दत्वे वा स एवास्यार्थः शब्दाद् भिन्नः प्रसज्यते । एवमभावोऽप्यर्थ इति शब्दः स्यात् । तथा च नाभावः, शब्दस्य सत्त्वात् । तथा चार्थानुविधायि विज्ञानं न भवेत् । अस्ति च । तस्मात् न शब्दात्मानोऽर्था इति । **तदुत्पत्तिकाल** इति प्राथम्येन शब्दानुव्याधं व्यावर्तयति ॥

एकदेशिव्याख्यानमाह—**अपरे त्विति** । इन्द्रियार्थसन्निकर्षेण हि लिङ्गेन यदिन्द्रियगतिज्ञानं तदपि प्रत्यक्षलक्षणोपेतमिति प्रत्यक्षं प्रसज्यत इति [2]तन्निवारणाय अव्यपदेश्यपदम् । अपदेशो हेतुवचनम् । तदेव तदाभासेभ्यो विशिष्टं व्यपदेशः । तस्य कार्यं हेतुप्रत्यायनद्वारा अनुमेयज्ञानं व्यपदेश्यम् । न व्यपदेश्यमव्यपदेश्यमलिङ्गोद्भवम्

---

१. तस्मान C २. तन्निराकरणा° C

इत्यनुमानं व्यावर्तितमित्यर्थः । **तदेकदेशिमतं** दूषयति—**तच्च नैवमिति** । नन्विन्द्रियगतिज्ञानमपि इन्द्रियार्थसन्निकर्षाल्लिङ्गादुत्पन्नमित्यत आह—**न ह्यनुमेयस्येति** नैतदिन्द्रियार्थसन्निकर्षादुपजायते, किं तु तज्ज्ञानात् । अत एवातीतेऽपि धूमादौ लिङ्गे तत्स्मरणमात्रादेवानुमेयज्ञानं भवति । न च सन्निकर्षपदस्य मुख्यत्वे संभवति ज्ञानलक्षणा युक्तेति भावः । उपसंहरति—**अत** इति । इमं च **वार्त्तिकग्रन्थमबुध्यमाना** इन्द्रियगतिज्ञाननिवृत्त्यर्थमिन्द्रियविषयेष्विति पदं सूत्रेऽध्याहरन्तीति ॥

क्रमप्राप्तस्याव्यभिचारिपदस्य तात्पर्यं ब्रूवाणो भाष्यस्यापि तात्पर्यमाह—**ग्रीष्मे मरीचय इतीति** । यद्यपि सामान्यलक्षणेनैव व्यभिचारिणो निरस्ताः प्रत्ययाः तदपेक्षं च विशेषलक्षणम् , अन्यथा अनुमानादिपदेष्वप्यव्यभिचारिपदमुपादेयं स्यात् , तथापि सिद्धे सत्यारम्भो नियमार्थः । द्वयी हि प्रमाणानां गतिः । किञ्चित् सत्तामात्रेण प्रमासाधनं यथा प्रत्यक्षम् । न हि चक्षुरादीनां ग्रहणमुपयुज्यते, अपि तु सत्तैव । अनुमानादीनि तु स्वज्ञानेन प्रमासाधनानि । न खल्वगृहीतं लिङ्गं वा शब्दो वा आगमसहितं सादृश्यं वा यथाविषयम् आदधाति प्रमाम् । तत्रानुमानस्य प्रमोपजननात् प्रागेव अर्थाव्यभिचारग्रहणमपेक्षते नान्यथा । ततः प्रमा सिध्यतीति । शब्दादौ तु यद्यपि प्रमोपजननं प्रति नार्थाव्यभिचारग्रहापेक्षा, तथापि शक्यमतिरोहितार्थमन्त्रमध्यपतितस्य द्रागित्येव प्रतीयमानार्थस्यापि,

सृण्येव जर्भरी तुर्फरीतू ॥

इत्येवमादेर्मन्त्रस्याप्तप्रणेतृकतया सामान्यतोऽर्थाव्यभिचारित्वं ग्रहीतुम् । औत्सर्गिकं हि शब्दानामर्थपरत्वम् । अतएव **निगमनिरुक्तव्याकरणसहायास्ततोऽर्थमव**धारयन्ति । एवं यथा [1]मुद्गस्तम्बस्तथा मुद्गपर्णीति आप्तवाक्यश्रवणादेव [1]मुद्गस्तम्बसादृश्यज्ञानस्यानुपजनितफलस्यापि शक्यं तदर्थाव्यभिचारित्वं निश्चेतुम् । प्रत्यक्षस्य तु प्रमाणस्यात्यन्तपरोक्षस्वरूपोपलम्भ[2] एव तावत्[3] प्रमोपजननात् प्राग् दुर्लभः, प्रागेत तु तस्यार्थाव्यभिचारित्वम् । यद्यपि च संवेदनप्रामाण्यपक्षेऽपि तत्संवेदनं मनसा सुलभम्, तथापि न तन्मात्रं प्रमाणम् । अपि तु असाधारणेन्द्रियार्थसन्निकर्षसहायमिति तत्सहायस्य तस्य परोक्षत्वमेव । तेन प्रत्यक्षस्य प्रमाणस्य फलाव्यभिचारेणैवाव्यभिचारज्ञानम्, न स्वरूपतः इत्येतत्[4] प्रमाणान्तरेभ्यो व्यावृत्तमसाधारणं प्रत्यक्षस्य [5]रूपमादर्शयितुमव्यभि-

---

१. मुद्गस्तथा C २. परोक्षस्योप॰ C ३. तावत् om C ४. इत्यतः C
५. ॰मापयितुम् C

चारिपदोपादानम् । अथ वा प्रत्यक्षाव्यभिचार एवानुमानाद्यव्यभिचारे कारणम् । न ह्यस्ति संभवोऽव्यभिचरितप्रत्यक्षगृहीतपक्षधर्मताकं[1] तर्कसहायप्रत्यक्षगृहीताविनाभावं [2]चानुमानं व्यभिचरतीति । यत्तु बाधितविषयं [3]सत्प्रतिपक्षितं चानुमानम्, तदपि यद्यपि प्रथमं व्याप्तिग्रहणदोषेण न खण्डितम्, तथापि खण्डनोत्तरकालं सोऽपि प्रतीयते । तथा च व्याप्तिग्राहि प्रत्यक्षं तत्रापि [4]व्यभिचारीति । एवमागमोऽपि साक्षात् क्वचित् पारम्पर्येण प्रत्यक्षपूर्वकस्तद्व्यभिचारेणैव व्यभिचरति । [5]आगमव्यभिचारेणैवोपमानव्यभिचारो व्याख्यातः । तदेवं प्रत्यक्षाव्यभिचारे[6] प्रमाणानामव्यभिचारोऽस्तीति प्रत्यक्षस्यैव विशेषणमव्यभिचारिपदं चकार, नेतरेषां प्रमाणानाम् । न ह्यस्ति संभवस्तन्मूलं प्रत्यक्षम् अव्यभिचारि, तानि च व्यभिचारीणीति । सोऽयं विशेषः प्रमाणान्तरेभ्यः प्रत्यक्षस्य । यथाह **मीमांसावार्त्तिककारः**,

प्रत्यक्षाव्यभिचारेण स्वलक्षणबलेन च ।
प्रसिद्धाव्यभिचारित्वान्नानुमानं परीक्ष्यते ॥

इति । तस्मात् सुष्ठूक्तं **ग्रीष्मे मरीचय इति भाष्यम्, तत्प्रतिषेधार्थमिदमुच्यते—अव्यभिचारीति** ॥

पृच्छति—**किमिदमिति** । उत्तरम्—**यदतस्मिन्निति** । एतच्चोपपादितं द्वितीयसूत्रे । पुनः पृच्छति—**किं पुनरत्रेति** । **एकदेशिमतेनोत्तरम्—एके तावत्** इति । तदेतद् दूषयति—**तच्च नैवमिति** । पृच्छति—**कस्मात्** ? उत्तरम्—**अर्थस्येति** । तदेव स्फोरयति—**यत्तदिति** । अत्र च न निर्विकल्पकं भ्रान्तम्, किं तु सविकल्पकमित्याह—**तांस्तु मरीचीनिति** । इन्द्रियेणालोच्य मरीचीन् उच्चावचमुच्चलतो निर्विकल्पकेन गृहीत्वा पश्चात् तत्रोपघातदोषाद् विपर्येति, सविकल्पकोऽस्य प्रत्ययो भ्रान्तो जायते इति । तस्माद् विज्ञानस्य व्यभिचारो नार्थस्येति । यथाहुः **निरुक्तकाराः**, नैष स्थाणोरपराधो यदेनमन्धो न पश्यति । पुरुषापराधः स भवतीति[7] ॥

अव्यभिचारिपदेनैव संशयज्ञानमपि [8]व्युदस्तम् । नो खलु संशयज्ञानं विकल्प्यमानवस्तुगोचरं तद्रूपं वस्तु प्रापयति । अप्रापयच्चोपदर्शितं कथं संवादकम्, असंवादकं च कथमव्यभिचारि ? तस्मादव्यभिचारिपदेनैव संशयज्ञाने निरस्ते सविकल्पकप्रत्यक्षावरोधार्थमुपादीयमानं व्यवसायात्मकपदं [9]संशयज्ञानप्रत्यक्षतापाकरणमन्वाचिनोति । तद्यथा

---

१. °धर्मतं J २. वानु° C ३. °पक्षं J ४. चरतीति C ५. च for एव C ६. °चारेण C ७. निरुक्तम् १.१६ ८. परास्तम् C ९. °प्रत्यक्षतया करणम् C

एधानाहर्तुमरण्यं गच्छ, शाकमप्यानेष्यसीति शाकानयनमन्वाचीयते। न च तदेवास्य प्रेषितुर्विधित्सितम्, तथेहापि। व्यवसायात्मकपदं साक्षात्सविकल्पकस्य वाचकम्। तथा हि व्यवसायो विनिश्चयो विकल्प इत्यनर्थान्तरम्। स एवात्मा रूपं यस्य तत् सविकल्पकं प्रत्यक्षम्। तदेतदतिस्फुटत्वात्[1] शिष्यैर्गम्यत एवेति भाष्यवार्त्तिककाराभ्याम् अव्याख्यातमपि अस्माभिः,

त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः।
यथान्यायं[2] यथावस्तु व्याख्यातमिदमीदृशम्॥

स्यादेतत्। न व्यवसायात्मकं प्रत्यक्षं भवितुमर्हति। अभिलापसंसर्गयोग्यप्रतिभासं हि तत्। न चेन्द्रियार्थाभ्यां लब्धजन्म विज्ञानमर्थावभासं शक्यमभिलापेन योजयितुम्। न ह्यर्थे शब्दाः सन्ति, अर्थात्मानो वा, तथा सत्यव्युत्पन्नस्यापि व्युत्पन्नवद् व्यवहारः स्यादित्युक्तम्। न चाभिलापोऽर्थासंस्पर्शो संवेदनधर्मः, अर्थेषु तन्नियोजनात्। तस्मादर्थादुपजायमानं ज्ञानमर्थमेवादर्शयेत् नाभिलापम्। न हि रूपात् जायमानं प्रत्यक्षं रससहितमेतदादर्शयति। तस्मादभिलापसंसर्गानपेक्षमभिलापसंसर्गिणमादर्शयद् विकल्पविज्ञानं विकल्पवासनोत्थापितमनियतार्थग्राहि मानसमात्मीयमुत्प्रेक्षालक्षणं व्यापारं तिरस्कृत्यानुभवप्रभवतया अनुभवव्यापारं दर्शनं पुरस्कृत्य प्रवर्तमानमनुभवतया अभिमन्यन्ते प्रतिपत्तारः। तत् सिद्धमेतत्, यदर्थसामर्थ्यलब्धजन्म, न तत् शब्दकल्पनानुगतम्, यथा निर्विकल्पकम्। [3]अर्थसामर्थ्यलब्धजन्मानश्च विवादाध्यासिता विकल्पा इति [4]प्रसङ्गसाधनविरुद्धव्याप्तोपलब्धिः। शब्दकल्पनानुगतत्वस्य हि प्रतिषेध्यस्य विरुद्धं तदननुगतत्वम्, तेनार्थसामर्थ्यजत्वं व्याप्तम्। तस्योपलब्धिस्तदननुगतत्वमुत्थापयन्ती तदनुगतत्वं विरुणद्धीति। अथैषां प्रत्ययानां प्रत्यक्षमभिलापानुगतत्वमशक्यापह्नवम्, हन्त भोः, नार्थसामर्थ्यजत्वमिति प्रसङ्गविपर्ययः। तथा हि यदभिलापकल्पनानुगतं न तदर्थसामर्थ्यजं यथेश्वरप्रधानादिविकल्पविज्ञानम्। तथा चैते विवादाध्यासिता विकल्पा इति व्यापकविरुद्धोपलब्धिः। निषेध्यमर्थसामर्थ्यजत्वं तदभिलापकल्पनाननुगतत्वेन व्याप्तं तद्विरुद्धं च तदनुगतत्वमिति। न च सन्दिग्धव्यतिरेकिता, अर्थसामर्थ्येन हि तदुत्पद्यमानमर्थरूपम् अनुकुर्याद् न शब्दरूपम्। न ह्यर्थे शब्दाः सन्ति तदात्मानो वेत्युक्तम्। असंबद्धरूपानुकारे तु विज्ञानस्य सर्वरूपानुकारेण सर्वसर्वज्ञतापत्तिरिति। सङ्केतवशात् शब्दानामर्थ-

---

१. °तिस्फुटतरत्वात् J २. यथामानं C ३. अर्थजन्मा° C ४. प्रसङ्गसाधनं विरु° J

संबन्धेनार्थोपलब्धौ तत्स्मरणात् तत्संसृष्टवेदनमिति चेत् ? यत्र तर्हि ते कृतसङ्केताः[1] तदेव स्मारयेदेतान् । तत्रैव च ते कृतसङ्केता यदनुगतं सामान्यम् । न च तद्दृष्टम् , किं तु स्वलक्षणं दर्शनगोचरः । तदेव हि परमार्थसद्विज्ञानस्य[2] कारणम् , न तु सामान्यम् । सर्वसामर्थ्यरहितं हि तत् अलीकत्वात्[3] । तस्माद् यद् दृष्टं न तेन शब्दानां संबन्धः, येन च संबन्धो न तद्दृष्टम् । अपि च दृष्टस्य शब्दवाच्यत्वे दर्शनादिव वह्निरुष्ण इति वाक्यादपि प्रतीयेत । तथा च शब्दादपि तस्मिन् प्रतीते शीतापनोदनप्रसङ्गः । सामान्यविषयौ लिङ्गशब्दौ वस्तुभूतसामान्यवच्च स्वलक्षणम् । तादृशं च तद्दर्शनस्य कारणमिति निर्विकल्पकेन प्रथमाक्षसन्निपातजन्मना जातिमद्वस्तुवेदनात् तत्रोपलब्धचरसंबन्धस्य[4] शब्दस्य स्मरणम् । तथा च तच्छब्दाभिधेयजातिविशिष्टद्रव्यावगाहीन्द्रियार्थसन्निकर्षजन्मा विकल्पप्रत्ययो गौरयमित्येवमाकारो जायत इति चेत् ? यथाहुः[5],

निर्विकल्पकबोधेन द्व्यात्मकस्यापि वस्तुनः ।
ग्रहणम्[6] [श्लो०वा०प्रत्यक्ष० ११८]

तथा

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥

[श्लो०वा०प्रत्यक्ष०१२०] इति । तन्न, पिण्डविवेकेन जात्यादेरविकल्पकेनाग्रहणात् । न हि जातिजातिमन्तौ वा क्रियाक्रियावन्तौ वा गुणगुणिनौ वा तत्समवायो वा विवेकेन चकासति । न च विवेकेनाप्रतिभासमानाः शक्या मिथो योजयितुं क्षीरोदकवदतद्भेदिना । तस्मादेकमविभागं स्वलक्षणमनादिविकल्पवासनासमारोपितजात्यादिभेदं तथा[6] विकल्प्यत इति युक्तमुत्पश्यामः । अपि च परमार्थसद्वस्तुद्वयवेदनेऽपि कुतो विशेषणविशेष्यभावः ? न ह्यङ्गुल्यावेकविज्ञानविषयौ मिथो विशेषणविशेष्यभावमापद्येते । विशेषणं खलूपकारकम् , उपकार्यं च विशेष्यम् । नान्यथा तयोस्तद्भावः । न चैकविज्ञानसमारूढयोर्ज्ञाप्यज्ञापकभावो वा कार्यकारणभावो वा संभवी, समानकालयोः तयोरुभयोरपि पौर्वापर्यनियमात् । अपि च वस्तुनिवेशे जात्यादीनामुपाधीनामेकस्य वस्तुनः सत्त्वं च द्रव्यत्वं च पार्थिवत्वं च वृक्षत्वं च शिंशपात्वं चोपाधय इति दूरादेकोपाधि-

---

१. य एव तर्हि कृत॰ C २. ॰सतो विज्ञानस्य C ३. अलीकत्वात् om J
४. ॰पलब्धे च न सं॰ C ५. ॰हुर्निरुक्तकाराः C, This attribution is wrong.
६. तथा तथा C

विशिष्टस्य ग्रहे सर्वोपाधिविशिष्टग्रहप्रसङ्गः। तथा ह्याधाराधेयभाव उपकारगर्भो भवति। पतनधर्मणो हि बदरस्योत्तरस्य[1] कुण्डमधरं प्रत्यासन्नमपतनधर्मकं बदरं विदधदाधारः। तद्वदिहापि द्रव्येण [2]जात्यादीनामुपाधीनामुपकर्तव्यम्। न च शक्त्यन्तरैरुपकरोति। शक्त्यन्तरपकारेऽपि शक्त्यन्तरौकल्पनायाम् अनवस्थापातात्। तस्मात् स्वभाव एव स्वकारणाधीनजन्मा द्रव्यस्य स तादृशो येन बहूनामुपाधीनामुपकरोतीति वाच्यम्। तथा च सत्त्वोपकारसमर्थे तस्मिन् द्रव्ये गृह्यमाणे [3]द्रव्यत्वाद्युपकारसमर्थोऽपि स एवास्य स्वभाव इति तत्स्वभावावच्छिन्नाः सत्त्वविकल्पकेन परमार्थसद्द्रव्यावगाहिना सर्व एव द्रव्यत्वपार्थिवत्ववृक्षत्वशिंशपात्वादयो विषयीकृता इति विकल्पान्तराणामानर्थक्यम्। यदाह,

यस्यापि नानोपाधेर्धीग्राहिकार्थस्य भेदिनः।
नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे।
सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः[4]॥
एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे[5]।
दृष्टे तस्मिन्नदृष्टा ये[6] तद्ग्रहे सकलग्रहः॥

इति।

अस्माकं तु अनादिविकल्पवासनोपादाना विकल्पा यच्च गृह्णन्ति, यच्च अध्यवस्यन्ति तयोरुभयोरप्यन्यनिवृत्तिरूपतया अवस्तुत्वात् मनागपि न परमार्थसद् वस्तु [7]गाहन्ते, पारम्पर्येण तु वस्तुप्रतिबन्धात् तत्र प्रवर्तयन्तः प्रापयन्तश्च न विसंवादयन्ति लोकम्। अतो वस्तुसद्भावविनिवेशाद् विकल्पानां न पौनरुक्त्यमस्ति। अपि चालोचिते वस्तुनीन्द्रियेण तदनन्तरोत्पन्नं शब्दस्मरणव्यवहितव्यापारमिन्द्रियमर्थश्च न सविकल्पिकामपि धियमुपजनयितुमर्हतः। यथाह,

अर्थोपयोगेऽपि पुनः स्मार्तं शब्दानुयोजनम्।
अक्षधीर्यद्यपेक्षेत सोऽर्थो व्यवहितो भवेत्॥

न च यदेवालोचनमजीजनदिन्द्रियं तदेव स्मरणसहकारि विकल्पप्रत्ययमाधत्ते। न च स्मृतिर्व्यवधायिका, स्वाङ्गमव्यवधायकमिति न्यायात्। यतो

यः प्रागजनको बुद्धेरुपयोगाविशेषतः।
स पश्चादपि। इति

---

१. उत्तरस्य om C  २. जात्यादीनामुप° C  ३. द्रव्यत्वादावपि C  ४. प्र० वा० ३.५२  ५ द्रः प्र० वा० ३.५४  ६. °न्नदृष्टेऽपि C  ७. गाहते C

नो खल्वतीतं भवति गोचरोऽक्षस्य । न चागोचरे सहस्रेणाप्युपायैरेतत् [1]प्रवर्तितुमर्हति । न च स्मृतिरतीतविषयाननुभूतपूर्वं वर्तमानं गोचरयितुमर्हति । तद्गोचरत्वे चान्धानामपि रूपसाक्षात्कारप्रसङ्गः यथाह,

तेन स्यादक्षापायेऽपि नेत्रधीः [2] ॥

इति । तदेवं नामजातिगुणकर्मकल्पनाः प्रत्यक्षत्वेन परास्ताः । द्रव्यकल्पनापि दण्डीति,

विशेषणं विशेष्यं च संबन्धं लौकिकीं स्थितिम् ।
गृहीत्वा सङ्कलय्यैतत् तथा प्रत्येति नान्यथा [2] ॥

न चैतावन्तं व्यापारकलापं विचारकनिवर्तनीयमिन्द्रियज्ञानं सहते, तस्य सन्निहितविषयबलेनोत्पत्तेरविचारकत्वात् । [3]जातिगुणक्रियावतां चैतन्न संभवत्येव रूपविवेकसंबन्धयोरप्रतिभासनेन[4] घटनायोगात् क्षीरोदकवदतद्वेदिनेत्युक्तम्[5] । तस्मात् न[6] तद्विकल्पं प्रत्यक्षमिति ॥

अत्रोच्यते । यत् तावदुक्तम्—अर्थसामर्थ्यजत्वाभिलापसंसर्गयोग्यप्रतिभासत्त्वयोः विरोध इति, तत्र ब्रूमः । स्याद् विरोधो यदि स्वलक्षणमेवार्थः, न त्वेतदस्ति । उपपादयिष्यति हि[7] परमार्थसन्तं जात्यादिमन्तमर्थं स्थेमभाजमभिलापसंसर्गयोग्यम् । तेन तज्जनितं ज्ञानमर्थसामर्थ्यजं चाभिलापसंसर्गयोग्यप्रतिभासं चेति न विरोधः । तथा च प्रसङ्गसाधनस्य सन्दिग्धव्यतिरेकिता । न च द्रव्याद्यभिन्नं जात्यादि भिन्नं कल्पयन्तो विकल्पा नार्थसामर्थ्यजन्मान इति सांप्रतत् । द्रव्यादपि हि भेदः साधयिष्यते तेषाम्[8] । यथा च भेदेऽपि तेषां तद्वाचकानां सामानाधिकरण्यं तथोपपादितमधस्तात्[9] । न च भिन्नेन शब्देन डित्थोऽयमित्यभेदकल्पनादर्थस्य विकल्पानामनर्थजत्वमिति युक्तम् । उक्तमेतद् अव्यपदेश्यपदव्याख्यानावसरे यथा न शब्दाभेदेनार्थयोरेकेन्द्रियज्ञानसंसर्गिता[10] किं तु प्रथममालोचितोऽर्थः सामान्यविशेषवान् [11]सङ्केतग्रहणसमयवर्तिनोमात्मनोऽवस्थां स्मारयन् तत्कालभाविनं शब्दमपि स्मारयत्यवर्जनीयतया । न त्विन्द्रियजविकल्पोत्पादं प्रत्यस्त्युपयोगः कश्चित् शब्दस्मरणस्य । अन्यथा बालमूकादीनां नेन्द्रियजः स्याद्विकल्पः शब्दस्मरणाभावात् । सङ्केतसमयवर्त्यवस्थास्मरणं तूपयुज्यते, वस्तुनस्तदानीन्तनेदानीन्तनावस्थाभेद-

१. प्रवर्तयितुम् C  २. प्र० वा० २.१४५  ३. गुणक्रिया° C  ४. °भासने C
५. °दवत् तद्वेदने° C  ६. विकल्पकं J  ७. °ष्यते च C  ८. २.२.१० वा
९. पृः २१०.२३  १०. °ज्ञानग्राह्यता C  ११. सङ्केतसमय° C

वत एकस्येन्द्रियजेन विकल्पेनाकलनात् । शब्दस्तु संपातायातो न निवेशयत्यात्मानम् इन्द्रियजे विकल्पे । यथाह,

देवदत्तादिशब्देन हृदयस्थेन यः स्मृतः ।
चक्षुषापि स एवायं पिण्डः संप्रति दृश्यते ॥

अनेन हि पिण्डस्य पूर्वापरावस्थावर्तिनीमेकतामिन्द्रियजविकल्पगोचरत्वेन दर्शयति, न तु शब्दनिवेशनमपि । तथा,

संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः ।

कुतः ?

सा तटावस्था[1] न रूपाच्छादनक्षमा ॥

नार्थेन्द्रियव्यापारं व्यवधत्ते इत्यर्थः । न च प्रागवस्थास्मरणसापेक्षतया नेन्द्रियार्थसन्निकर्षः कारणं विकल्पस्येति सांप्रतम् । यतो,

न किञ्चिदेकमेकस्मात् सामग्र्याः सर्वसंभवः ।

[प्र०वा०३.५३] इति भवन्तोऽप्याहुः । अन्यथालोकमनस्कारसापेक्षमर्थेन्द्रियं निर्विकल्पकमपि न जनयेत् । यत्तु प्रथमं नाजीजनत् तत् स्मरणसहकारिविरहात् । न हि नाजीजनत् कुशूलस्थं बीजमङ्कुरमिति न समवहितक्षित्यादिसहकारिग्राममप्यस्याजनकं भवति । न च जनकत्वाजनकत्वलक्षणो विरुद्धधर्मसंसर्गो भेदहेतुरित्युपपादयिष्यते क्षणभङ्गभङ्गे[3] ॥

स्यादेतत् । अतीतावस्था नेन्द्रियगोचरस्तस्य वर्तमानार्थे नियमात् । न च वर्तमानोऽर्थः स्मरणगोचरः स्मरणस्यानुभवजनितसंस्कारोद्बोधजन्मनः पूर्वानुभवगोचरं प्रति नियमात् । तस्मात् भिन्नविषयतया नेन्द्रियसहकारिता स्मरणस्य । न हि रूपविषयाः सहस्रमपि नयनप्रदीपादयः शब्दविषयस्य श्रवसः सहकारितामापद्यन्त इति । तत् किं भवतां यत्र गन्धज्ञानानन्तरं[4] चाक्षुषं रूपज्ञानं जायते तत्र[5] गन्धज्ञानम् न समनन्तरप्रत्ययः ? तत्रापि हि चक्षूरूपविषयं न गन्धविषयस्य ज्ञानस्य सहकारि भवितुमर्हति, भिन्नविषयत्वादेव । अथान्वयव्यतिरेकनिबन्धनः कार्यकारणभावो न समानविषयत्वमनुविधीयते इत्युच्येत, तदस्माकमपि समानम् । नन्वतीतावस्थाविशिष्टत्वम्

---

१. संज्ञिनः सा तटस्था हि C २. एकस्याः C ३. द्र: ३.२.१०–१७
४. गन्धबुद्ध्यन॰ C ५. रूपविज्ञानं तत्र C

अस्य नेन्द्रियसन्निकृष्टमिति कथं प्रत्यक्षम् ? तत् किं यदिन्द्रियसंबद्धं तत् प्रत्यक्षम् ? तथा सत्याकाशपरमाण्वादयोऽपि तत्संयुक्ता इति तेऽपि प्रत्यक्षाः प्रसज्येरन् । तस्माद् यदेवेन्द्रियजस्य ज्ञानस्य गोचरस्तत् प्रत्यक्षम् । [1]न त्विन्द्रियसंबद्धम् । नन्वसंबद्धमिन्द्रियं[2] कथं तत्र ज्ञानं जनयति ? तच्च ज्ञानं कथं प्रत्यक्षम् ? प्रत्यक्षं चेत्, कथमिन्द्रियार्थसन्निकर्षोत्पन्नमिति लक्षणं प्रत्यक्षं व्याप्नोति, अस्यैव प्रत्यक्षस्य लक्षणेनाव्यापनात् ? मा भूदर्थस्य पूर्वकालवर्तिता इन्द्रियगोचरः, तथापि स्मरणसहकारिणा संस्कारसहकारिणा वेन्द्रियेण यज्जनितं ज्ञानं तेन तद्[3] विषयीक्रियत एव । न च यत् स्मरणसहकारिणेन्द्रियार्थसन्निकर्षेणोपजनितं तदिन्द्रियार्थसन्निकर्षोत्पन्नं न भवति । तथा च नाव्यापकमस्य लक्षणम् ॥

ननु पूर्वापरावस्थापरामर्शिज्ञानं कथमेकम्, विषयभेदात् पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्मसंसर्गाच्च ? तथा हि तदिति [4]पारोक्ष्यम्, इदमिति च साक्षात्कारः । न च विरुद्धधर्मसंसर्गेऽप्येकत्वम्, त्रैलोक्यस्यैकत्वप्रसङ्गात् । विषयभेदश्च पूर्वदेशकालापरदेशकालसंबन्धयोरेकस्य विरोधात् । यथा ह्येकस्मिन् पद्मरागमणौ गृह्यमाणे तदभावो व्यवच्छिद्यते, यदि [5]पुनर्न व्यवच्छिद्येत तदा भावो न परिच्छिद्येत, तस्य स्वाभावव्यवच्छेदरूपत्वात् । तदभावाविनाभाविनश्च पुष्परागादय इति तेऽपि सर्वे व्यवच्छिन्ना भवन्ति । यदि पुनर्न व्यवच्छिद्येरन्, स एव पुष्परागाद्यात्मेति तदविनाभावी पद्मरागाभावः पद्मरागश्च स्यादिति दुर्घटमापद्येत । एवं तस्यैव पूर्वदेशकालसंबन्धे गृह्यमाणे तदभावव्यवच्छेदक्रमेणापरदेशकालसंबन्धो व्यवच्छिन्नः पूर्वदेशकालसंबन्धाभावाव्यभिचारी । तथा च न परदेशकालसंबन्धस्वभावः । तथापि यद्यसौ तद्देशकालसंबन्धादन्यस्वभावो भवेत्, तथा सति स एव भवेत्, न भवेच्चेति दुर्घटमापद्येत । तस्मात् पूर्वदेशकालसंबन्धादन्योऽपरदेशकालसंबन्ध इति सिद्धो विषयभेद इति ॥

अत्रोच्यते । यदि पारोक्ष्यापारोक्ष्यधर्मभेदात् पूर्वापरावस्थापरामर्शिज्ञानं भिद्येत, हन्त भोः, तदित्यपि विकल्पो भिद्येत । सोऽपि हि परोक्षश्चापरोक्षश्च विकल्पश्चाविकल्पश्च । अर्थे परोक्षो विकल्पश्च स्वात्मनि त्वविकल्पोऽपरोक्षश्च । तस्माद् विषयभेदाद् विरोध इति [6]चेत्—न त्विहापि तदेकं ज्ञानं तस्यैवैकस्य वस्तुनः पूर्वदेशकालसंबन्धे परोक्षमपरोक्षं वा परदेशकालसंबन्ध इति[7] को विरोधः ? योऽपि कालदेशसंबन्धभेदेन

---

१. न न त्वि° C २. नन्वसंबन्धे C ३. तेन तावद् J ४. परोक्षम् C
५. पुनः om J ६-७. om C

विषयभेद उक्तः, सोऽपि अयुक्तः। यतो युक्तं यत् पद्मरागस्वरूपग्रहे तदभावो व्यवच्छिद्यत इति, स्वाभावव्यवच्छेदात्मकत्वेन भावानां तदव्यवच्छेदे स्वरूपाग्रहणप्रसङ्गात्। कस्मात् पुनः पुष्परागादयो व्यवच्छिद्यन्ते, पद्मरागाभावाविनाभावादिति चेत्? अथैतदभावाविनाभावज्ञानं कुतस्त्यम्? तयोः कदाचिदपि तादा[1]त्म्येनानुपलम्भादिति चेत्—यत्र तर्हि तादात्म्यमुपलभ्यते न[2] तत्र तदभावाविनाभावः, तथा च पूर्वापरदेशकालसंबद्धस्तादात्म्येनानुभूयमान इन्द्रियजेन विकल्पेन पद्मरागो न भिन्नो भवितुमर्हति। तस्मात् पूर्वापरदेशकालौ तत्संबन्धौ [3]वा कामं भिद्येयातां परस्पराभावाविनाभावात्, तयोरेकदापि तादात्म्येनाप्रतिभासनात्। न तु तदालिङ्गितस्वभावः पद्मरागमणिः, तस्य ताभ्यामन्यत्वात्। न चान्यस्य भेदोऽन्यस्य भेदमापादयति, अतिप्रसङ्गात्। न चेन्द्रियार्थसन्निकर्षाभावेऽपि [4]पूर्वापरावस्थापरामर्शात्मनो विकल्पस्य भावादनिन्द्रियजत्वमिति सांप्रतम्, तथा सत्यविकल्पकमपि कामातुरस्य कामिनीं भावयतः तद्विषयमिन्द्रियार्थसन्निकर्षं विनापि दृष्टमिति नीलाद्यनुभवात्मानोऽपि अविकल्पका अनिन्द्रियजाः प्रसज्येरन्। यदि तु नीलाद्यनुभवानां कामिन्यनुभवात् कथञ्चिद् विशेषं ब्रूयात, तदा अस्माकमपि अनिन्द्रियजेभ्यो विकल्पेभ्य उत्प्रेक्षाव्यापारेभ्योऽस्तीन्द्रियजानां दर्शनव्यापाराणां भेदः। न च विकल्पगतो दर्शनव्यापारोऽनुभूयमानः सति संभवे निर्विकल्पकोपाधिरिति युक्तम्। सर्वा एव हीन्द्रियजा [5]बुद्धयो विकल्पिका अविकल्पिका वा धारावाहिन्योऽहमहमिकया परस्परानपेक्षा एकमर्थमवगाहमाना उदयन्ते व्ययन्ते च। न त्वमूषामन्योन्यमनुगम्यानुगन्तृतामीक्षामहे। तस्मात् इन्द्रियार्थसन्निकर्षलब्धजन्मानो विकल्पा दर्शनव्यापारा [6]नान्य इति युक्तमुत्पश्यामः। न च शब्दप्रत्यक्षयोर्वस्तुगोचरत्वे सत्यपि प्रत्ययाभेदः कारणभेदेन पारोक्ष्यापारोक्ष्यभेदोपपत्तेः। न च वह्निसंयोगजन्मा शीतापनोदो वह्निज्ञानाद् भवितुमर्हति। न चैकोपाधिना सत्त्वेन विशिष्टे तस्मिन् गृहीते उपाध्यन्तरविशिष्टतद्ग्रहप्रसङ्गः। स्वभावो हि द्रव्यस्योपाधिभिर्विशिष्यते, न तूपाधयो वा तैर्विशिष्टत्वं वा तस्य स्वभावः। न च यत् स्वभावसंबन्धि स स्वभावः। तथा सत्यसंबन्धित्वमेव। न हि तदेव तेन संबध्यते। अपि च रूपज्ञानं विषयग्रहणधर्मं नानापरमाणुविषयं न परमाणुस्वभावः। तत्स्वभावत्वे वा तेषां सर्वान् प्रत्यविशेषात् सर्वैरेव ते परमाणवो विदिताः स्युः। न चासंबद्धा एव स्वज्ञानेन रूपपरमाणवो विषयास्तस्येति वाच्यम्, असंबद्धस्य

---

१-२. एष J पुस्तकपाठः, C पुस्तके तु ॰त्म्यं नानुपलम्भ्यं तेन इति। अस्याधारभूते खपुस्तके J पुस्तकसंवादः। ३. च J ४. पूर्वापरावमर्शा॰ J ५. वृत्तयः C ६. नाना C

विषयत्वेऽतिप्रसङ्गात् । स्वभाव [1]एवार्थज्ञानभेदयोः संबन्धो यदर्थो विषयो ज्ञानं च विषयीति चेत् ? हन्तोपाध्युपाधिमतोरपि स्वभाव एव संबन्धोऽस्तु तथापि विज्ञानार्थवन्न स्वरूपाभेदः । क्षणभङ्गपरिणामनिराकरणे[2] तु स्वभावातिरिक्तं संबन्धमुपपादयिष्यामः । तस्मात् नैकोपाध्यन्वितग्रहणे सकलोपाध्यन्वितप्रत्ययप्रसङ्गः ॥

यच्चैकविज्ञानगोचरयोर्न विशेष्यविशेषणभाव इति, तत्र ब्रूमः । भिन्नज्ञानगोचरत्वेऽपि नासौ संभवीति । न हि विशेषणज्ञानं विशेष्याविषयं विशेष्यमवच्छेत्तुमर्हति । एवं विशेष्यज्ञानमपि विशेषणाविषयं केन[3] स्वविषयमवच्छिन्द्यात्, तयोः परस्परवार्तानभिज्ञत्वात् ? ताभ्यां वासना, ततो मानसप्रत्ययो विशेषणविशेष्यभावाकार[4] उत्पद्यते । न त्वस्ति विशेषणविशेष्यभावो वास्तव इति चेत् ? अस्तु तावद् वास्तवावास्तवचिन्ता । करिष्यते हीयमुपरिष्टात् । यस्तु भवतामस्य मानसत्वे प्रयासः, स वरमिन्द्रियजत्व एव भवतु, तथा सति दर्शनव्यापारत्वमस्य साक्षात् समर्थितं भवति । इतरथा हि निर्विकल्पकोपधानं कल्प्येत ॥

नन्वविचारकमिन्द्रियज्ञानं कथं विशेषणविशेष्यादि सकलं संकलयेत् ? हन्त भोः किं मानसमपि ज्ञानं संकलयितुमर्हति ? संकलयति मनसस्तत्कारणस्य सर्वविषयत्वात् इति चेत् ? यदि पूर्वकं विज्ञानं मनः, कथं तस्य सर्वविषयता ? अस्माकं तु मनः सर्वविषयमपि अचेतनतया न विचारकम् । तस्मादात्मैव सकलज्ञानतज्जनितवासनाधारः स्मर्ता च प्रतिसन्धाता च । यथाह,

आत्मन्येव स्थितं ज्ञानं स हि बोद्धात्र गम्यते[5] ।
स्मरणे चास्य सामर्थ्यं सन्धानादौ च विद्यते ॥

[श्लो.वा. प्रत्यक्ष, १२२] स खल्विन्द्रियार्थसन्निकर्षादालोच्य जातिमन्तं संमुग्धमर्थम् उद्बुद्धसंस्कारसमुपजातपूर्वपिण्डानुस्मृतिसहायः प्रागेव चक्षुषा विकल्पयति, गौरयमिति । यथाह,

करणं चेन्द्रियं बुद्धेः कर्ता चात्मा सचेतनः ।
स च स्मृतिसमर्थत्वात् सर्वार्थान् कल्पयिष्यति ॥

तेनैकविज्ञानवेद्यत्वे यद्यपि ज्ञाप्यज्ञापकभावरूप उपकार्योपकारकभावो नास्ति, तथापि तदर्थालोचनानुगतस्मरणयोर्विशेषणविशेष्यभावावगाहि विज्ञानं प्रत्युत्पादकत्वमेवोपकार-

---

१. ॰ज्ञानयोः C २. द्रः ३.२.१० प्रभृतिटीका ३. विषयकं न C ४. ॰व्याकारः C
५. बोद्धावगम्यते C

कत्वमस्ति। अर्थौ हि रूपरूपिभावेन स्थितावपि नापातजन्मना ज्ञानेन तथा गृहीतौ, अपि तु स्वरूपमात्रेण। न हि यावदस्ति तावद् ग्रहीतव्यम्, तेन तदेकदेशग्रहेऽपि नाप्रमाणता। सविकल्पकं तूक्तसामग्रीजन्म जात्यादिरूपतया द्रव्यं च रूपितया कल्पयत्[1] पश्चाज्जायमानमपीन्द्रियार्थसन्निकर्षप्रभवतया प्रत्यक्षं भवत्येव। अक्रमस्यापि च क्रमवत्सहकारिभेदसमवधानवशात् क्रमेण कार्यकरणमुपपादयिष्यते[2]। तत् सिद्धमेतद् विवादाध्यासिता विकल्पाः स्वगोचरे प्रत्यक्षा अव्यभिचारित्वे सति इन्द्रियार्थसन्निकर्षजत्वात्। यो य एवंभूतः स सर्वः प्रत्यक्षो यथालोचनम्, तथा चैतत्। तस्मात् तथेति॥

तस्मात् सविकल्पकप्रत्यक्षावरोधार्थं व्यवसायात्मकपदमिति सिद्धम्। तदस्य सविकल्पकप्रत्यक्षावरोधार्थस्यान्वाचीयमानो व्यवच्छेदः। तद्व्यवच्छेद्यप्रतिपादनार्थं भाष्यमनुभाष्यान्वाचीयमानमेव व्यवसायात्मकपदस्यार्थमाह—**दूराच्चक्षुषेति**। **न चैतन्मन्तव्यमिति** भाष्यं व्याचिख्यासुश्चोदयति—**न संशयस्येति**। ननु सतीन्द्रियार्थसन्निकर्षे पुरोवर्तिनि द्रव्ये **धूम इति वा रेणुरिति वा** ज्ञानमुत्पद्यमानं कथमनिन्द्रियजमित्यत आह—**न हीति**। कस्मान्मानस इत्यत आह—**संशीतिरिति**। संपूर्वो हि शीङ् भावप्रत्ययान्तो विशेषापेक्षे विमर्शे वर्तते स चैकाधिकरणौ[3] स्मर्यमाणौ मिथो विरुद्धौ धर्मावारोपयन् [4]अन्यतरन्नावधारयति। तथा चाधिकरणमात्रसमर्पणमिन्द्रियजव्यापारः। मनसा तु स्मरणसहकारिणैव पुरुषः संशेते। अत एव विस्फारिताक्षः सौदामिनीसंपातात् सकृदालोच्य कश्चित् [5]समानधर्मवन्तं धर्मिणं समन्धकारे सन्दिग्धे, तस्मान्मानस एवैष संशयो न त्विन्द्रियज इत्यर्थः। तदेतत् परिहरन् **न चैतदित्यादि** भाष्यं व्याचष्टे—**तच्च नैवम्**। कस्मात् संशयस्येति—**उभयं त्विति**। तु शब्दो मनोमात्रनिमित्तत्वं व्यवच्छिनत्ति। तदनेन **चक्षुषा हीत्यादि** भाष्यं व्याख्यातम्। पश्यन् समानधर्माणं धर्मिणं नावधारयति। विशेषतः सन्दिग्धे तस्मिन्नित्यर्थः। इन्द्रियेणोपलब्धं सन्निकृष्टं सन्निकर्षपूर्वकत्वादुपलब्धेः मनसोपलभते जानीते चक्षुःसहायेनेत्यर्थः। अत्र भाष्यं **यच्च तदिन्द्रियानवधारणपूर्वकं मनसानवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयः, न पूर्वमिति**। अनवधारणशब्दोऽयं [6]संशयज्ञानवाचकः स्वकारणेन्द्रियार्थसन्निकर्षे प्रयुक्त उपचारेण। उपरतेन्द्रियव्यापारस्य हि संशयज्ञानदर्शनात्। [7]सत्यपीन्द्रियव्यापारे संशयो नेन्द्रियज इति चोदकोऽभिमन्यते। तदनयोः

---

१. कल्पयेत् C २. द्रः ३. २. १७ टी ३. °करणे C ४. यत्तत्राव° C
५. सामान्य° C ६. °वाचकः···संशयज्ञान° om C ७. °न्द्रियार्थव्या° C

संशयज्ञानयोर्मध्ये यत् तदिन्द्रियानवधारणपूर्वकमिन्द्रियार्थसन्निकर्षपूर्वकं मनसानवधारणं संशयज्ञानमित्यर्थः । **न पूर्वम्** । यदुपरतेन्द्रियव्यापारस्य संशयज्ञानं दृष्टान्ततया हृदि स्थितं शङ्कितुरित्यर्थः । तदेतद् भाष्यं व्याचष्टे—**तत्र यदिन्द्रियार्थेति** । इन्द्रियार्थसन्निकर्षश्चासावनवधारणं चेति कर्मधारयः । तत्पूर्वकं मनसानवधारणं संशयज्ञानमित्यर्थः ॥

ननु स्मरणव्यवहितव्यापारमस्य कारणं नेन्द्रियमित्यत आह—**तस्य हीति** । उपपादितमेतदधस्तात् यथा स्मरणं नेन्द्रियव्यापारं व्यवधत्त इति[1] । **पूर्वं त्विति** । दृष्टान्ततया पूर्वत्वम् । स्यादेतत्, मन एवेन्द्रियानपेक्षं बाह्ये प्रवर्तते इत्यभ्युपेयम्, अन्यथा घटमहं जानामीति ज्ञानं निर्निमित्तं स्यात् । न तावदिन्द्रियजम्, आन्तरे ज्ञाने चक्षुरादीनामप्रवृत्तेः । नाप्यनुमानादिष्वन्तर्भवति, लिङ्गाद्यभावात् । तस्मान्मानसमेवेदम् । यदि च घटादौ बाह्ये न मनः प्रवर्तेत, कथं घटमिति भवेत् ? जानामीत्येव स्यात् । न चार्थनिरूपणमन्तरेण ज्ञानरूपनिरूपणम्, तस्माद् बाह्याभ्यन्तरविषयं मनः, तथा च सर्व एव संशयो मानस इत्याशङ्क्याह भाष्यकारः, **सर्वत्र च प्रत्यक्षविषये** इति । यद्यप्ययमीदृशोऽनुव्यवसायो मानसस्तथाप्यन्धबधिरादीनामभावात्[2] तत्पूर्वं व्यवसायोत्पत्तौ चक्षुराद्यपेक्षणीयम्, अन्यथा अन्धबधिराद्यभावप्रसङ्गः । तथा च संशयज्ञानोत्पादे अपीन्द्रियार्थसन्निकर्षोऽपेक्षणीय इति भावः । तदिदं तस्य हीत्यादिना **वार्त्तिकेन** व्याख्यातम् ॥

अव्यापकत्वेन लक्षणाक्षेपपरं भाष्यम् **आत्मादिषु** इत्यादि । तद् व्याचष्टे—**इन्द्रियार्थेति** । चोदयति—**कथं पुनरिति** । परिहरति—**इन्द्रियेति** । मा भूदिन्द्रियसूत्रे पाठः । तद्धि बाह्येन्द्रियलक्षणम्, आन्तरं च मन इत्यत आह—**पृथक् चेति** । न च सुखादौ प्रमाणान्तरमस्ति । तस्मात् पारिशेष्यात् सिद्धं प्रत्यक्षत्वमित्याह—**प्रत्यक्षाश्चेति** । ननु नैते प्रमेयाः स्वसंवेदनसिद्धत्वात्, तत् किमत्र प्रमेयार्थेन प्रमाणेन इत्यत आह—**न च तेषामिति** ननूक्तं स्वसंवेदनतया न प्रमाकर्मभाव एषामित्यत आह—**न चान्या गतिरिति**। संवेदनत्वेन हि तेषां स्वसंवेदनता, न चैते संवेदनमिति उक्तमधस्तादिति[3] भावः । आक्षेपमुपसंहरति—**तस्मादिति** । भाष्ये चात्मादिषु सुखादिष्विति नित्यानित्याभिप्रायं वर्गद्वयम् । आत्मसुखदुःखत्वादयो नित्याः अनित्याश्च सुखदुःखादय इति । तदिदमुक्तं **दिग्नागेन**,

न सुखादि प्रमेयं वा मनो वास्त्विन्द्रियान्तरम् ।

---

१. पृ : २३१.७ २. तत्पूर्वंव्यव° J ३. पृ । २१९.३

न च तत् संभवति, घ्राणादिसूत्रेण विभागपरेण निषेधादिति भावः । समाधिभाष्यम् **इन्द्रियस्य वै सतः** इति । तद्व्याचिख्यासुर्गूढाभिप्रायः पृच्छति—**कश्चैवम्** इति । आक्षेप्तुरुत्तरम्—**इन्द्रियार्थेति** । समाधाता आह—**नैष दोष** इति । आक्षेप्तुः अनुशयबीजमुद्घाट्य दूषयति—**यत्तु सूत्रे** इति । नेदं विभागपरं घ्राणादिसूत्रम्, अपि तु लक्षणपरम् । तत्र चेन्द्रियमपि मनो न लक्षितम्, वैधर्म्यादित्यर्थः । वैधर्म्यमाह—**वैधर्म्यमिति** । तत्र प्रमाणयति—**सर्वविषयं त्विति** । वैधर्म्यान्तरं दूषयति—**भौतिकेति** । कार्यस्य हि विशेषौ भौतिकत्वाभौतिकत्वे, भूतकार्यं भौतिकम् । यद् भूतकार्यं न भवति तदभौतिकम् । भूतकार्यत्वप्रतिषेधश्च तदन्यकार्यत्वं गमयति, विशेषनिषेधस्य [1]विशेषान्तराभ्यनुज्ञानहेतुत्वात् । इतरथा तु अकार्यमेवोच्येत, न त्वभौतिकमिति । तस्मादकार्यस्य मनसोऽभौतिकत्वं कार्यधर्मो विरुद्धमित्यर्थः । अपि च वैधर्म्यात् मनोवत् श्रोत्रमपि न वक्तव्यमित्याह—**श्रोत्रे चेति** । शङ्कते—**स्वार्थ** इति । भूतानि हि घ्राणादीनि श्रोत्रान्तानि, मनस्तु न भूतमिति वैधर्म्यमित्यर्थः । निराकरोति—**तच्च नेति** । दर्शयिष्यति हि **वार्त्तिककारो** यथा स्वार्थिको न कश्चिदपि प्रत्यय इत्यर्थः । आक्षेपहेतुमनुभाषते—**यत् पुनरिति** । दूषयति—**न नास्तीति**[2] । तददेन **सति चेन्द्रियार्थसन्निकर्षे** इत्यादि भाष्यं व्याख्यातम् । यच्चापरं वैधर्म्यं घ्राणादिभ्यो मनस उक्तं **भाष्यकारेण** तदपि सिंहावलोकनेन[3] दूषयति—**सगुणानामिति** । घ्राणादीनि यथा स्वस्वगुणेन गन्धादिना बाह्यं गन्धादि बोधयन्ति, नैवं स्वगुणेन शब्देन श्रोत्रं बाह्यं शब्दं बोधयति, तन्मनोवत् श्रोत्रमपि घ्राणादिसूत्रे न पठितव्यमित्यर्थः । भाष्योक्तेषु मध्ये अभिमतं वैधर्म्यमुपसंहरति—**तस्मादिति** । भूतत्वाभूतत्वलक्षणं वैधर्म्यं न भौतिकत्वाभौतिकत्वग्रहणेन शक्यं [4]वक्तुमित्यवधारणाभिप्रायः । ननु युगपज्ज्ञानानुत्पत्तेर्ज्ञानकारणं[5] मनोः अस्तीत्यवगम्यते, न पुनरस्येन्द्रियत्वमपि, तद्भावानवगमे च नेन्द्रियार्थसन्निकर्षजं सुखादिज्ञानं शक्यं वक्तुमित्यत आह—**तन्त्रान्तरेति** । तन्त्र्यते व्युत्पाद्यते अनेन तत्त्वमिति तन्त्रं शास्त्रम् । तदनेन **मनसश्चेत्यादि** भाष्यं व्याख्यातम् । एतद् दूषितं **दिग्नागेन**

अनिषेधादुपात्तं चेदन्येन्द्रियरुतं वृथा ।

इति । तद्दूषयितुमुपन्यस्यति—**न शेषेति** । तद्दूषयति—**न तन्त्रयुक्तीति** । सर्वस्य तन्त्रान्तरे लोके च सिद्धत्वादवक्तव्यतायां [6]स्वमतमिति नास्ति । वचनलिङ्गं हि

---

१. विशेषाभ्यनु॰ C २. तन्नास्तीति C ३. तत् सिंहावलोकितेन C ४. वक्तुं om ५. ॰करणं J ६. ॰मपि J

मतज्ञानं न चाननुमते निषेधमात्रं शक्यं वक्तुम् , अभावस्य भावनिरूपणाधीननिरूपणत्वादिति भावः । सिद्धमर्थमुपसंहरति—**तस्मादिति** । प्रकृतमुसंहरति—**तदिति** ॥

तदेवं लक्षणपदानि व्याख्याय विमृशति—**समस्तमिति** । अभिमतमाह—**समस्तमित्याह भाष्यकारः** । हेतुमाह—**यस्मादिति** । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति हि प्रत्यक्षलक्षणमनवयवेन समानासमानजातीयेभ्यो व्यावृत्तं शक्यमेव लक्षयितुम् । न खल्वयमसावश्व इति ज्ञानमिन्द्रियजं शब्दजं संभवति । तद्धि द्रव्यगोचरं वा उच्येत, वाच्यत्वगोचरं वा, वाच्यत्वविशिष्टद्रव्यगोचरं वा । तत्र द्रव्यमैन्द्रियकमेव न शाब्दमित्यशक्यं हि ज्ञानं[1] व्यवच्छेत्तुम् , अनभिमतं च । वाच्यत्वगोचरं तु ज्ञानं शाब्दम् एव, अन्यथा ह्यश्रुतशब्दोऽप्यारण्यकोऽश्वमेवेन्द्रियसन्निकर्षादश्वशब्दवाच्य इति गृह्णीयात् । वाच्यत्वविशिष्टद्रव्यज्ञानमपि शाब्दमेव, वह्निविशिष्टधूमज्ञानमिवानुमानिकम् , अन्यथा तदप्यैन्द्रियकमिति न तन्निराकरणाय [2]यत्नान्तरमास्थेयम् । अथ न वाच्यत्वं नाम मीमांसकानामिव किञ्चिदतीन्द्रियम् , अपि तु सङ्केतमात्रमेतदस्मादिदं[3] प्रत्येतव्यमिति । तथापि तव्यार्थः शब्द एव । अथायमप्यैन्द्रियक एव, तत्र गुरूपदिष्टा गाथा पठितव्या,

शब्दजत्वेन शाब्दं चेत् प्रत्यक्षं चाक्षजन्मतः ।
स्पष्टग्रहणरूपत्वाद् युक्तमैन्द्रियकं हि तत ॥

इति । तस्मात् नोभयजज्ञाननिवारणायाव्यपदेश्यपदम्[4] । [5]व्यवसायात्मकपदेन तु सविकल्पके ज्ञानेऽवरुद्धे निर्विकल्पकस्याप्रत्यक्षता मा प्रसांक्षीदिति तदवरोधार्थेनाव्यपदेश्यपदेन निर्विकल्पकेऽपि शब्दसंभेदनिराकरणमन्वाचितमिति शाब्देत्युक्तम् । एवम् अव्यपदेश्यपदेन निर्विकल्पकेऽवरुद्धे सविकल्पकस्येन्द्रियजस्याप्रत्यक्षत्वं मा प्रसांक्षीदिति तदवरोधार्थेन व्यवसायात्मकपदेन संशयज्ञानप्रत्यक्षत्वनिराकरणमन्वाचितमिति संशयेत्युक्तम् ॥

अन्वयं दर्शयित्वा व्यतिरेकमाह—**यदीति** । उपसंहरति—**तस्मादिति** । हेयास्त्रिंशत्कोटीर्गणयति—**तत्रेति** । **द्विपदपरिग्रहेण दश**—इन्द्रियार्थसन्निकर्षोत्पन्नपदं ध्रुवं कृत्वा ज्ञानाद्येकैकपदसंबन्धेन चतस्रः कोटयः, ज्ञानं च ध्रुवं कृत्वा अव्यपदेश्यादि एकैकपदसंबन्धेन तिस्रः, एवमव्यपदेश्यपदं ध्रुवं कृत्वा अव्यभिचार्याद्येकैकपदसंबन्धेन

१. °शक्यं तज्ज्ञानं C २. मानान्तर° C ३. °मेव स्याद् C ४. °जं ज्ञानं यन्निवा° °पदम् । कैश्चिदुक्तम् C ५. व्यवसायात्मकपदेन' '`इन्द्रियजस्या° तदवरोधार्थेन om C

द्वे कोटी, अव्यभिचारिव्यवसायात्मकसंबन्धे दशमीति । **त्रिपदपरिग्रहेणापि दशैव** । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति ध्रुवं कृत्वा अव्यपदेश्याद्येकैकपदसंबन्धे तिस्रः कोटयः, ज्ञानमव्यपदेश्यमिति ध्रुवं कृत्वा अव्यभिचार्यादिपदसंबन्धेन द्वे कोटी, अव्यभिचार्यव्यपदेश्यपदयोस्तु व्यवसायात्मकपदसंबन्धे कोटिरेका इन्द्रियार्थसन्निकर्षाव्यपदेश्यपदध्रौव्ये अव्यभिचार्याद्येकैकपदसंबन्धे कोटिद्वयम् , अव्यभिचारिव्यवसायात्मकपदयोस्तु ध्रुवयोरिन्द्रियार्थसन्निकर्षोत्पन्नपदेन ज्ञानपदेन च प्रत्येकं संबन्धे कोटिद्वयम् , इति त्रिपदपरिग्रहेण दश कोटयः । **चतुष्पदपरिग्रहेण पञ्च** । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमिति ध्रुवं कृत्वा अव्यभिचार्याद्येकैकसंबन्धे द्वे कोटी, अव्यपदेश्यपदं त्यक्त्वा परकोटिः, ज्ञानपदं त्यक्त्वा चापरा, इन्द्रियार्थसन्निकर्षोत्पन्नपदं त्यक्त्वा तु पञ्चमी । पृच्छति—**कस्मात्** पञ्चपदपरिग्रहेणैकत्रिंशत्तमकोटिपरिग्रहेणेतराः कोटयो व्यवच्छिद्यन्ते ? न ह्यत्र तद्व्यवच्छेदवाचकः कश्चिदस्ति शब्द इत्यर्थः । उत्तरम्—**विशेषेति** । विशेषप्रतिविधानप्रस्तावे शेषनिषेधोपन्यासो दृष्टान्तलाभाय । **एकदेशाभ्युपगम** एकत्रिंशत्कोटिषु एकत्रिंशत्तमी कोटिरेकदेश इत्यर्थः । **शेषविधानं वेति** । वाशब्द इवार्थः ॥

तदेवं प्रत्यक्षलक्षणं समर्थ्य वासुबन्धवं तावत् प्रत्यक्षलक्षणं दूषयितुम् उपन्यस्यति—**अपरे पुनरिति** । लक्षणं व्याचष्टे **ततोऽर्थादिति** । यत्तदोर्नित्यसंबन्धाद् यस्यार्थस्य यद्विज्ञानं व्यपदिश्यते, यदि तत एव तद्भवति नार्थान्तराद् [1]व्यपदेशासंबन्धिनः तत् प्रत्यक्षम् । अतएव व्यपदेशासंबन्धिनोऽर्थान्तरात् [2]शुक्तिरूपात् रजतेन व्यपदिश्यमानं शुक्तिज्ञानं न प्रत्यक्षम् , [3]व्यपदेशकानुत्पत्तेः, व्यपदेशकस्य रजतस्य तत्रासंभवात् । एतस्य प्रत्यक्षाभासस्य व्यावृत्तिः सुप्रसिद्धेति तामुपेक्ष्यानुमानव्यावृत्तिम् आह—**एतेनेति** । कुतः ? न हि **तत एव** व्यपदेशकादेव वह्नेः **तद्** विज्ञानमनुमानं भवति, किं तु यत्र वह्निरस्ति तत्र । ततश्च यत्र तु दृष्टमात्र एव वह्निरुपरमादुपरतो धूमः तत्रान्यतश्च तद्भवति स्मर्यमाणाद् धूमादसति व्यपदेशके वह्नौ । ततोऽर्थात् इत्यत्र हि अर्थविशेषणं तत इति । तत्संगतश्च एवकारोऽयोगव्यवच्छेदे वर्तते, यथा चैत्र धनुर्धर एवेति । तेन यत्रैव तदयोगः तदप्रत्यक्षमित्यर्थः । तदेतल्लक्षणं दूषयति—**अत्रार्थग्रहणमनर्थकम्** । न हि ज्ञानव्यपदेश आत्मना वा इन्द्रियेण वा संभवति । शङ्कते—**अवधारणार्थ** इति । अयोगव्यवच्छेदेनैतदवधारणम् , विशेषणं च तत

---

१. व्यपदेश्यमानं शुक्तिज्ञानं न प्रत्यक्षं व्यपदेशा° C २. शुक्तिरूपाज्जायमानं रजतेन C ३. °देशकादनुत्पत्तेः J

इति[1] । विशेषणसंगतश्चैवकारोऽयोगं व्यवच्छिनत्ति । असति चार्थपदे कस्येदं विशेषणम् इति विशेषणसंगतो नैवकारोऽयोगं व्यवच्छिन्दादिति भावः । निराकरोति—**तन्नेति** । तत इति सर्वनाम्नः सन्निहितविशेष्यापेक्षत्वात् । अन्यथा अभिधानापर्यवसानाद् यस्य तद् व्यपदिश्यत इति व्यपदेशसंबन्धी विशेष्यः प्राप्यत एवेति सिध्यत्येव विशेषणत्वम् । अभ्युपेत्य त्वदवधारणमात्रेऽप्यदोष[2] इति मन्यमानेनाभक्ष इत्युदाहृतम् । अन्यव्यवच्छेदे अपिहि[3] तदेवान्यद्व्यवच्छिद्येत यद्विरोधि, न पुनरन्यमात्रम् । यथाहुः,

नियमस्तद्विरोधाच्च[4] कल्पते नाविरोधिनः ।

इति ॥

स्यादेतत् । तत इत्युच्यमाने यतस्ततः स्यात्, तथा चानुमानाद्यपि लिङ्गज्ञानादेस्तत उपजायते इति प्रत्यक्षं प्रसज्येतेति तन्निवृत्त्यर्थमर्थादिति वक्तव्यम् । न हि तद् अर्थात् जायते । अपि तु प्रत्यक्षमेव, इत्यत आह—**एतनेनि** । यस्य तद् व्यपदिश्यते इत्यपेक्ष्य ततःशब्दसामर्थ्येनानुमानादिव्युदासोऽपि प्रत्युक्तः । यच्च ततःशब्दस्य व्यावर्त्यान्तरमुक्तम्, तदपि दूषयति—**यत्पुनरेतदिति** । यदि यस्य व्यापदिश्यते ज्ञानं, तत् प्रत्यक्षं ततो घट इत्यपि ज्ञानं प्रत्यक्षं प्रसज्येत, तदपि हि घटस्य व्यपदिश्यते, न तु ततो घटाद् भवति । तस्य विचारासहतया परमार्थसत्त्वाभावेन संवृतिसतो[5] विज्ञानं प्रति कारणभावाभावात्[6] । तेन [7]तन्निराकरणाय तत इत्युक्तम् । तदेतत् न बुध्यामहे कथमपक्षिप्तमिति । शङ्कते—**यदीति** । रूपादिपरमाणव एव निरन्तरोत्पादाः परमार्थसन्तो भिन्नाः स्वविज्ञानस्याविकल्पकस्य जनकाः । तेषां तु नानात्वं स्वेन रूपेण संवृण्वती निर्विकल्पकपृष्ठभाविनी घट इति विकल्पिका बुद्धिः तानेव रूपादीन् एकोदकाहरणादिक्रियाकारिणो भेदिन इव दर्शयन्ती [8]संवृतिरित्युच्यते । निराकरोति—**न हि रूपादिभ्य इति** । अनुशयबीजमुद्घाटयति—**अथापीति** । निराकरोति—**मनोमोदकेति** भवन्तु व्यतिरिक्ताः किमेतावतापीत्यत आह—**सर्वं चेति** । यत्संवृतित्वेन भवतामभिमतं यच्चाविकल्पकं तत्सर्वं स्वविषयाद् भवति । तस्मात् **ततोग्रहणम्** संवृतिनिवृत्त्यर्थम् अनर्थकम् । मा भूत् संवृतिनिवृत्त्यर्थम्, मिथ्याज्ञाननिवृत्त्यर्थं भविष्यतीति चोदयति—ननु च मिथ्याज्ञानमतस्मादपि भवति । यथा पुरोवर्ति द्रव्यमिदमिति व्यपदिश्यते रजतमिति च, न तु शुक्तिरिति, तेन यद्यपि सामान्यरूपेण तस्य व्यपदिश्यते ज्ञानम्,

१. विशेषणं च तत इति om C २. ॰प्यस्ति दोषः C ३. ॰च्छेदे तदर्थे हि C
४. ॰द्विपक्षाच J ५. संप्रति सतो C ६. कारणत्वाभावात् C ७. तन्निवारणाय C
८. संवृत्ति॰ C

ततश्च तद्भवति, तथापि येन विशेषणरूपेण तस्य व्यपदिश्यते न ततस्तद्भवति इति अतस्मादपीत्युक्तम् । तस्मात् तत एव यद्भवति तत् प्रत्यक्षम्[१], न चैवं मिथ्याज्ञानम् । तद्धि ततश्चाततश्च भवतीत्यर्थः । परिहरति—**न ह्यतस्मात्** आरोपितादूरूपात् तत्रासतः **तत्** मिथ्याज्ञानं भवति, किं तु ततो भवति । यस्य सामान्यरूपस्य व्यपदिश्यत इदमिति तत एव । समारोपितं तु रजतमस्य विषयो दृश्यमानाकारतया । तदिदम् उक्तम्—अतस्मिंस्तद् भवतीति । एवं च लक्ष्यपदमात्रावशेषात् लक्षणाभाव इत्याह—**ततोग्रहणमिति** । तथा चातिव्याप्तिरित्याह—**तथा चेति** । अभ्युपेत्य दूषणान्तरमाह—**यद्यप्येतदिति** । यतो भवति ज्ञानं स ग्राह्योऽर्थः कारणम्, ग्राहकं च विज्ञानं कार्यम् । तयोरयुगपद्भावात् वर्तमानाभं ज्ञानमतीते मिथ्येति न प्रत्यक्षं स्यात् । तत्समानकालयोस्तु कार्यकारणभावाभावात् । ततोऽर्थादिति नास्तीति भावः । शङ्कते—**नाशोत्पादाविति** । क्षणिकत्वाद् भावानां कारणस्य नाशः कार्यस्योत्पाद इत्येकः कालः, तथापि कारणस्य ग्राह्यता भिन्नकालस्यापि, स्वसदृशज्ञानजनकमेव तस्य तज्ज्ञानं प्रति ग्राह्यत्वम्, नान्यत् , यथाह,

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव [२]युक्तिज्ञाः ज्ञानाकारार्पणक्षमम् ॥

[प्र.वा.२.२४७] इति । न चैतावता मिथ्यात्वम्, अर्थाहितस्य नीलाकारस्य वर्तमानत्वादिति भावः । निराकरोति—**तच्च नेति** । पूर्वापरकालकलाविकललक्षणा[३] क्षणिकता न क्वचिदपि । विद्युज्जालादेरप्याशुविनाशिनो द्वित्रादिक्षणावस्थानादित्यर्थः । पूर्वोक्तश्चानुयोगस्तदवस्थ एवेत्याह—**विनष्टश्चेति** । अनहङ्कारास्पदमसातादिरूपं विज्ञानाद् भिन्नं नीलाद्यनुभूयते, न तु विज्ञानात्मकम् । तथा च यदि विच्छेदग्रहो मिथ्या, तथा सति ज्ञानमेतस्मिन् मिथ्येति कथं प्रत्यक्षम्, सम्यग्ज्ञानभेदस्य तथाभावात् ? न चार्थाहिताकारवेदनमर्थवेदनम्, भाक्तत्वप्रसङ्गात् । न च गौणमुख्यलक्षणा गिरां गतयो ज्ञानेषु शक्या नियोजयितुम् भिन्नप्रस्थानत्वात् । तस्मात् निराकारं ज्ञानमात्मनो भिन्नं गोचरयतीति वाच्यम् । स चेत् कारणं विनष्टस्य प्रत्यक्षतेति तथा च वर्तमानाभमवर्तमानं गोचरयति मिथ्यात्वमप्रत्यक्षत्वं च स्यादिति भावः । यौगपद्येऽपि नास्त्युदाहरणम् , सर्वस्य क्षणिकत्वपक्षनिक्षेपादिति चोदयति—**तुल्यमिति चेत्** । निराकरोति—**तच्चेति** ॥

संप्रति दिग्नागस्य लक्षणमुपन्यस्यति—**अपर इति** । दूषयितुं कल्पनास्वरूपं पृच्छति—**अथ केयमिति** । लक्षणवादिन उत्तरम्—**नामेति** । यदृच्छाशब्देषु हि

---

१. प्रमितिः C २. तद्युक्तम् C ३. ०विरहलक्षणा J

नाम्ना विशिष्टोऽर्थ उच्यते डित्थ इति । जातिशब्देषु जात्या गौरयमिति । गुणशब्देषु गुणेन शुक्ल इति । क्रियाशब्देषु क्रियया पाचक इति । द्रव्यशब्देषु द्रव्येण दण्डी विषाणीति[1] । सेयं कल्पना यत्र ज्ञाने नास्त्यर्थतः स्वरूपतो वा तत्कल्पनया अपोढं प्रत्यक्षम् । तदिदमाह—**यत् किल न नाम्ना अभिधीयते** अर्थतः स्वरूपतश्च **न जात्यादिभिर्व्यपदिश्यते** । अव्यभिचाराय विषयकारणत्वमाह—**विषयस्वरूपानुविधायीति** । प्रमाणत्वमाह—**परिच्छेदकं** व्यवस्थापकम् । ज्ञानतामस्य दर्शयति—**आत्मसंवेद्यं** स्वसंवेदनादेव तस्य [2]कल्पनारहितत्वमपि । यथाह,

प्रत्यक्षं कल्पनापोढं प्रत्यक्षैनैव सिध्यति ।

इति । **तत् प्रत्यक्षमिति** । तदेल्लक्ष्यलक्षणपदतत्समुदायव्यापारनिरूपणेन दूषयति—**य इदमिति** । [3]**अथ नेति** । विकल्पयोनयो हि शब्दास्तद्गोचरमभिनिविशन्ते । [4]यद् विकल्पा गृह्णन्ति, यच्चाध्यवस्यति तदुभयमप्यन्यव्यावृत्तिरूपमवस्तु, तस्मान्न अविकल्पकं ज्ञानं तद्गोचरं वा परमार्थसद् गोचरयन्ति विकल्पाः शब्दाश्चेत्ययमभिसन्धिः । अपि चास्यावाच्यत्वे भवदभ्युपगतप्रामाण्यागमविरोध इत्याह—**अनित्यादीति** । शङ्कते—**अथेति** । स्वमसाधारणं रूपं व्यावृत्तमिति यावत् । [5]ततो निराकरोति—**सर्वेऽर्था इति** । न हि यथा सम्यग्ज्ञानम् अधिकृत्य प्रत्यक्षादिलक्षणं कृतं **कीर्तिना** तथा **दिग्नागेन** येनाधिकारात् ज्ञाने व्यवतिष्ठेत कल्पनापोढमिति भावः । ननु यदि स्वरूपतो नाभिधीयेतानभिधेयं तर्हि वस्तु प्रसज्येत । तथा चावास्तवः स्यात् शब्दो व्यवहार इत्यत आह—**सर्वस्य चेति** । सामान्यविशेषतद्वद्भेदाद् वस्तुत्रयम् । तत्र तद्वद्वस्त्वधिकृत्योक्तम्—**द्वावाकाराविति** । **सामान्येनैवाकारेणाभिधीयते** सामान्यान्वितमित्यर्थः । **ब्राह्मण इति** । मनुष्यत्वजातिमानित्यर्थः । विशेषमाकारमभिप्रेत्य स्वरूपतो न व्यपदेश्यमित्युक्तम्, न तु सर्वथेति भावः । प्रकृते योजयति—**एवमिति** । आशङ्क्य पूर्वोक्तमतिप्रसङ्गं स्मारयति—[6]**यदि चेति** । अथाश्वकर्णादिवदव्युत्पन्नः कल्पनापोढशब्दः प्रत्यक्षस्वरूपस्य वाचक इति शङ्कते—**अथेति** । निराकरोति—**एवमपीति** । भवतु कल्पनापोढशब्दः अव्युत्पन्नो मा वा भूत्, अवाच्यं तु प्रत्यक्षमेषितव्यम्, अन्यथा विकल्पस्य प्रत्यक्षत्वप्रसङ्गात् । तथा च व्याघात इत्यर्थः ॥

---

१. द्रव्येण (ज्ञानत्वं) दण्डीति C २. कल्पनाहितत्वं C ३. अथ नेति om J ४. यत्त्वविक J ५. ततो om C ६. यदिदं चेति C

**जैमिनिप्रत्यक्षलक्षणं** दूषयति—**सत्संप्रयोग** इति। यथाश्रुतस्यातिव्याप्तिः संशब्देनापि प्रयोगस्य समीचीनता प्रतिपाद्यते। सा च मिथ्याप्रत्ययेऽपि तुल्या, व्यत्ययेऽपि बुद्ध्या बोद्धस्योपस्थापनात्। **तद्** इति बोध्यं परामृशति। अस्ति च मिथ्याज्ञानेऽपि बोध्येन संबन्ध इन्द्रियाणाम्, बोध्यं हि पुरोवर्ति द्रव्यम्। अथ यथा बोध्यं तादृशो नास्ति संबन्ध इन्द्रियाणाम्, रजतत्वस्य प्रकारस्यासन्निधानात्। हन्ताव्यापकत्वं लक्षणदोषः। प्रत्यभिज्ञायां तत्ताप्रकारस्य इन्द्रियेणासंबन्धात्। अपि च प्राभाकरे दर्शने अनुमानादिज्ञानमात्मनि प्रत्यक्षं न भवेत्, न हि तत् सत्संप्रयोगजम्। तस्मादेतदपि परिभावनीयं सूरिभिरिति ॥

**वार्षगण्यस्यापि** लक्षणमयुक्तमित्याह—**श्रोत्रादिवृत्तिरिति**। पञ्चानां खल्विन्द्रियाणामर्थाकारेण परिणतानामालोचनमात्रं वृत्तिरिष्यते, सा च संशयादिव्यापकत्वादलक्षणमिति। तत् सिद्धमिन्द्रियार्थसन्निकर्षोत्पन्नमित्येतदेव लक्षणमिति प्रत्यक्षलक्षणं समाप्तम् ॥४॥

॥ परिशुद्धिः ॥

**प्रत्यक्षादिप्रमाणविशेषलक्षणानामिति** स्वरूपकथनार्थम्। लक्षणं हीत्यादि[1], अर्थाक्षिप्तेति च [2]प्रकृतस्वरूपसंगतिकथनार्थम्। लक्षणं हि जिज्ञासुप्रतिपादनाय, सा चानिर्ज्ञातसामान्यस्य विशेषे नास्ति। सामान्यज्ञानं च तल्लक्षणाधीनमतस्तल्लक्षणम्। विशेषविभागं च कृत्वा शिष्यस्य[3] जिज्ञासामुत्थाप्य विशेषलक्षणावतारः। तथा च सामान्यलक्षणविभागोद्देशज्ञानस्य जिज्ञासादिजननद्वारा विशेषलक्षणज्ञानं प्रति हेतुत्वात् तद्गोचरयोरपि हेतुहेतुमद्भावं विवक्षित्वोक्तम्—**हेतुत्वेनेति** ॥

व्यवच्छेदो नास्याभिधेय इत्यत आह—**प्रयोजनमिति**[4] समानजातीयमनुमानादि प्रमाणत्वेन, अप्रत्यक्षेण तु तदपि विजातीयमेव। अतो नासाधारण्यं लक्षणस्य। विशेषकत्वं लक्षणधर्मः। तत्प्रयोजनमित्यसंगतम्। अतः कारकात् फलभूतां क्रियां निष्कृष्य दर्शयति—**विशेषकत्वं विशेष** इति। [5]विपक्षव्यावृत्तप्रत्यक्षप्रतिपादनम् इत्यर्थः। कः पुनरनेन लक्षणेन प्रतिपादयिष्यते[6] इत्यत आह—**यः खल्विति**। न च सर्वे व्यामूढाः, येन प्रतिपाद्यप्रतिपादकव्यवस्था न स्यात्। न च सर्वत्र व्यामोहो

---

१. प्रत्यक्षादिप्रमाणेति JA; लक्ष° त्यादि om Tat. ṭī MSS २. प्रकृतसङ्गतिस्वरूप° JA ३. विभागं·····शिष्यस्य om BM ४. M पुस्तके इतः पूर्वमितस्ततः पाठो भ्रष्टः। ५. °व्यावृत्ते M. ६. प्रतिपादयितव्य B var JA

येनानवस्था स्यात्, न च सर्वे व्यामोहहेतवो येनाप्रतिपत्तिः स्यात् । न च [१]सर्वाप्रतिपत्तिः, येनाश्रयासिद्धिः स्यादिति भावः[२] ॥

ननु लक्ष्यमप्रसिद्धत्वात् कथं धर्मि ? प्रसिद्धत्वे वा किं लक्षणेन ? किं चास्याभिधेयम्, यदभिदधत् तत्परं [३]स्यादित्यत आह—**तस्मादिति** । ननु लक्षणं यदि प्रसिद्धं [४]किं विधेयम्, तस्याप्रसिद्धत्वात् । विधेयं चेत् कथं लक्षणम्, तस्याप्रसिद्धत्वादित्यत आह—**इतस्त्ववगतलक्षण** इति । प्रतिपाद्याप्रसिद्धत्वाद् विधेयत्वमग्निहोत्रादिवत्, न तु प्रतिपादकाप्रसिद्धत्वात् । [५]प्रतिपाद्यश्च विधेः प्रतीत्यैव लक्षणं यागमिव पश्चात् साध्यं साधयतीत्यर्थः । विशेष्यज्ञानं सविकल्पकमित्यर्थः ॥

नन्विन्द्रियार्थसन्निकर्षः प्रत्यक्षकारणमेव न भवति, सत्यपि तस्मिन् परमाण्वादिषु इन्द्रियसंयुक्तव्यवधायकसंयुक्तेषु[६] च घटादिषु तदनुपपत्तेः । अतोऽसिद्धमिदं लक्षणमित्यत आह—**अर्थग्रहणेनेति** ॥

ननु रूपत्वादिसामान्यं नास्त्येव, तत् किमर्थं संयुक्तसमवेतसमवायाभ्युपगम इत्यत आह—**न चेति** ॥

ननु[७] सादृश्यमर्थान्तरं रोचयमानानामपि कुतो व्याघातः, न हि तद्विपरीतमिह किञ्चिदभ्युपेतमित्यत आह—**तेषामिति** ॥

नन्वसन्निकृष्टस्यैव सन्निकृष्टाश्रयस्य वा ग्रहणमग्रहणमेव[८] वा भविष्यति, तत् कुतो व्याघात इत्यत आह—**इतरथेति** । असन्निकृष्टस्य हि ग्रहणे इन्द्रियप्राप्यकारिताभ्युपगमव्याघातः । सन्निकृष्टाश्रयस्य तु ग्रहणे संयुक्तसमवायाभ्युपगमव्याघातः । अग्रहणे च तदभ्युपगमव्याघातः, प्रमाणाभावादित्यर्थः । चतुर्थसन्निकर्षाननुभवात् कुतस्तद्व्याघात इत्यत आह—**अनुभूयन्ते हीति** । [९]रूपत्वाद्यनुभवस्य चतुर्थसन्निकर्षकार्यतया [१०]तमभ्युपगमयंस्तदनभ्युपगमं व्याहन्तीत्यर्थः । **उपहितप्रत्ययायोगात्** । तन्मूलस्य चोपहितव्यपदेशस्य तदभावेऽनुपपत्तेरित्यर्थः ॥

न च रूपत्वादिसामान्यविशेषविशिष्टरूपाद्युपलब्धिमन्तरेण प्रमाणमस्ति [११]परस्परव्यावृत्तेषु चक्षुरादिषु विशिष्टोपलब्धेरेव प्रमाणत्वे परस्पराश्रयत्वम् । न चाविशिष्टोपलब्धिमात्रोपनीतमविशिष्टमिन्द्रियमात्रमुपाधिर्विशिष्टव्यपदेशो रसादिष्वपि रूपादिव्यपदेश-

---

१. सर्वप्रति॰ M.　२. ॰दित्यर्थः JA　३. भविष्यती॰ B var JA　४. कथं JA　५. प्रतिपाद्यत्व॰ M　६. संप्रयुक्तेषु B var.　७. न च M　८. संभवि॰ M　९. ॰भवचतुर्थं॰ J　१०. तदभ्युपगमस्तदनभ्युपगमे B, M अस्पष्टः । ११. पाठोभ्रष्टः B M

प्रसङ्गाद् इत्याशयवानाह—**न चेन्द्रियाणीति** सोऽयं चाक्षुषत्वाद्युपाधिनिबन्धनत्वाभिमानः परस्य रूपादिव्यपदेशाभेद इति स एवोदाहृत्य निराकृतः। परमार्थतस्तु नीलमधुरादिव्यपदेशाभेदे सोऽपि नास्ति। तावताप्यस्माकमभिमतलाभ इति। शब्दत्वासिद्धौ तु[1] तात्पर्यं, ततः साधारणवचसोपसंहरति—**तस्मादिति** ॥

ननु नेन्द्रियविशेषणतया कस्यचिद् ग्रहणमस्ति, अन्यविशेषणतया [2]तद्ग्रहणे किमायातमिन्द्रियसन्निकर्षस्येत्यत आह—**विशेषणभावेन चेति**। न च विशेषणभावपदेनोभयसंग्रहे समवायपदेनापि चतुष्टयसंग्रहोऽस्त्विति वाच्यम्, विशेषणभावस्य शुद्धस्य प्रत्यक्षानङ्गत्वेन तदङ्गप्रस्ताव विशिष्टस्य सुलभत्वात्, समवायस्य शुद्धस्यापि प्रत्यक्षाङ्गत्वेन प्रस्तुततया तत्पदस्य तावन्मात्राभिधानेनैव पर्यवसितत्वादिति ॥

समवाये चाभावे च विशेषणविशेष्यभावादिति **वार्त्तिकम्**। तच्चानुपपन्नम्, समवायस्य तत्प्रत्यक्षतायाश्चासिद्धत्वादित्यत[3] आह—**अवयवेत्यादि** ॥

नन्ववयवश्चावयवी चेत्याद्येवोपलभ्यते, न तु तयोः सम्बन्धोऽपीत्यत आह—**नान्यथेति**। एवंभूता हि प्रतिपत्तिः परस्परासम्बद्धेभ्यो व्यावर्तमाना परस्परसम्बद्धेषु विश्राम्यतीति भावः ॥

ननु सामानाधिकरण्यं समानेनाधिकरणेन सम्बन्ध इति पर्यायौ, तत् किमनेनोक्तम् इत्याशयवान् पृच्छति—**किं पुनरिति**। न ह्यत्र कुण्डमिव द्रव्यमधिकरणत्वेन परिस्फुरति। नापि बदराणीव शुक्लत्वपटत्वे[4] आधेयत्वेन, अपि तु य एव शुक्लः स एव पट इत्यभेदेनैव प्रतीतिरित्याशयवानाशङ्कते—**तादात्म्यमिति चेदिति**। बुद्धेः पौनरुक्त्यं पूर्वापेक्षया अन्यूनानतिरिक्तार्थत्वम्। यदि हि गुणगुणिनोरभेद एव स्यात्[5] तदा तद्वाचकयोरेकार्थत्वात् तरुवृक्षशब्दवत् सहप्रयोगो न स्यात्। पटमानयेत्युक्ते यत्किञ्चित्[6] शुक्लमानयेत्, तस्यैव पटत्वात्। अपटः पट इतिवदशुक्लः पट इत्यपि विरुध्येत[7]। अन्धस्यापि पटोऽयमितिवत् शुक्लोऽयमित्यपि प्रतिपत्तिः[8] स्यात्। शुक्लाप्रतिपत्तिवद्[9] वा पटप्रतिपत्तिरपि न स्यात्। महारजनादिसंयुक्ते[10] शुक्लत्ववत् पटोऽपि तिरोहित इति[11] न प्रतीयेतेत्येवमादितर्कसहायं प्रत्यक्षमेव [12]पटशुक्लत्वयोर्भेदमाकलयतीति परिहारार्थः ॥

---

१. तु om J; च for तु A   २. तु ग्रहणे JA   ३. °सिद्धेरित्यत BM
४. शुक्लत्वपटत्वे BM   ५. स्यात् om JA   ६. यत् कश्चित्, B यं कञ्चित् M
७. विरुध्यात् B   ८. प्रतीतिः BM   ९. °प्रतीतिवद् B   १०. संपर्के JA   ११. तिरोहित इति om BM   १२. पटशुक्लत्वयोः om B

स्यादेतत् । एकान्ताभेदे हि सर्वमेतद् दूषणम् । वयं त्वनेकान्तवादिनः । तथा हि भेदमादायापौनरुक्त्यम्, अभेदमादाय च सामानाधिकरण्यमित्यत आह[1]—**न चैकं वस्त्विति**[2] । भेदाभेदयोः परस्परविरोधादित्यर्थः । भेदो हि लौकिकपरीक्षकप्रसिद्धः । अभेदे तु सामानाधिकरण्यप्रतिपत्तिः प्रमाणमित्याह **परः** । सा चाभेदं नोल्लिखतीति चिन्तितमधस्तादित्यतो लोकप्रसिद्धयोर्भेदाभेदयोरसंकीर्णतया विरोध एव, लौकिकभेदाभेदातिरिक्तस्तु भेदाभेदनामा समवायो वा स्यात् , वाङ्मात्रं वा, उभयथापि न नो दर्शनहानिरित्याशयवानुपसंहरति—**तस्मादिति** ॥

ननु यद्यपि सामानाधिकरण्यप्रतिपत्तिर्न[3] तादात्म्यमुल्लिखति, तथापि भेदसम्बन्धाभ्यां व्यावर्तमाना अभेदं वा अभेदसम्बन्धं वा साधयेत्[4] । तथा हि[5] प्रयोगः, पटशुक्लत्वे न भिन्ने सम्बद्धे[6], सामानाधिकरण्यात् । ये पुनर्भिन्ने सम्बद्धे[7] न ते समानाधिकरणे यथा दधिकुण्डे । न च तथेमे । तस्मान्न तथेत्याशयवानाशङ्कते—**सम्बन्धेऽपीति** ॥

भवेदेवम् , यदि भेदसम्बन्धाभ्यामस्य व्यतिरेकः स्वाभाविकः स्यात् । किं तु रक्तः पटः, अग्निर्माणवक[8] इतिवत् शब्दवृत्तिभेदोपाधिकः । शब्दवृत्तिभेदस्तु सङ्केतोपाधिक इत्याह—**न शब्देति** । सामानाधिकरण्यादिति च हेतुर्यथा भेदसम्बन्धाभ्यां व्यावर्तते तथा अभेदसम्बन्धाभ्यामपीत्यसाधारणः । अभिन्नं च तत्सम्बन्धि चेति साध्यम्, न चैवंभूतमुभयवादिसंप्रतिपन्नं[9] किञ्चिदस्ति यतो व्यावृत्तेरसाधारणो हेतुः स्यादिति चेत् न, उभयव्यवच्छेदपर्यवसानस्य मनोरथेनाप्यसिद्धेः ॥

यो ह्यभिन्नः स कथं सम्बद्धः, सम्बन्धस्य भेदाधिष्ठानत्वात् । यः सम्बद्धः स कथमभिन्नः, तेनैव तस्यासम्बन्धात् । भिन्नोऽपीति चेत् ? तथापि भेदमादायैव सम्बन्धो न पुनरभेदमादाय । तथा च सम्बन्धो भेदेनैव व्याप्तः । अभेदस्त्वसम्बन्धेनैवेति कथम् अभिन्ने सम्बन्धे इति प्रतिज्ञा न व्याहता ? प्रकारभेदमादायेति चेत्—न, तस्याभावात् , न हि द्रव्यस्य गुणत्वमप्यस्ति, गुणस्य वा[10] द्रव्यत्वमपि, येनाभेदः स्यात् ॥

[11]उक्तप्रकारेण च भेद एव । सत्त्वेनाभेद इति चेत् ? किमिदं सत्त्वं सत्ता वा, स्वरूपं वा ? स्वरूपं तावद् गुणो गुण एव, द्रव्यं द्रव्यमेव । सत्ता तु ताभ्यामसाधारणाभ्यां साधारणी

---

१. °मित्याह J, °मित्यर्थः, B २. न च om B ३. प्रतीतिर्न BM ४. सम्बन्धौ साधयतु J, °न्धौ वा सा° A ५. च J ६. सम्बन्धे BM ७. सम्बन्धे M ८. इत्यादिव° JA ९. °सिद्धं J १०. वा om BM ११. शुक्ल° M

भिन्ना कथमिव तयोः स्वभावः ? केनचिदाकारेण तथेति चेत् ? न वै द्रव्यगुणकर्मसाधारणादाकारादसाधारणमाकारं सत्तायाः पश्यामो येन सा तथा स्यात् । एवं तेषामपि द्रव्यगुणकर्मणां परस्परासङ्कीर्णात् रूपान्न स्वभावान्तरं पश्यामः । प्रतीयमानरूपमेवाभिन्नमित्युच्यमाने सत्ता वा न स्यात्, तानि वा न स्युरित्युक्तप्रायम् । तस्मात्[1] द्रव्यगुणयोः सत्तैव साधारणं स्वरूपं स्वभावो[2] धर्मो विशेषणमित्यर्थः । द्रव्यत्वगुणयोर्द्रव्यमेव स्वभावो धर्मो विशेष्यमित्यर्थः विशेष्यस्यैकस्यैव विशेषणद्वयद्वारोभयशब्दबुद्धिविषयत्वाद् गुणगुण्यादीनामेवाभेदं[3] भेदाभेदौ वा परे मेनिरे इति यद्युपनिबन्धेनाह—**शब्दानां त्विति** ॥

नन्वेकान्तभिन्नानां कालतो देशतो वा विवेकख्यातिरुपलब्धा । सा गुणगुणिभ्यां व्यावर्तमाना[4] स्वव्याप्यमैकान्तिकं भेदमपि व्यावर्तयतीति अत आह—**अयुतसिद्धयेति** । अस्त्येवासौ, न तु स्फुटतरो निर्लुठितगर्भतया । न च तन्निवृत्तिमात्रेण भेदनिवृत्तिः, लोहदहनयोरभेदप्रसङ्गादित्यर्थः ॥

स्यादेतत् । भिन्नसम्बन्ध्यनुभवेऽपि कुतः सम्बन्धानुभव इत्यत आह—**न चासाविति** । न ह्यगृह्यमाणे[5] विशेषणे विशिष्टप्रतिपत्तिः । न च बुद्ध्या बोध्यमनुमीयते प्रत्यक्षोच्छेदप्रसङ्गादित्यर्थः । यो विशेषणविशेष्यभावः स सर्वः[6] संबन्धान्तरपूर्वक इति व्याप्तिरिहैव भज्यत इति परेणापि स्वीकरणीयमेव । न ह्यसौ समवायमभावं वा अभ्युपगच्छन् विशेषणतामस्य न स्वीकरोति । अन्यथा समवायाभावविशिष्टप्रतीतिमेव न स्वीकुर्यात् । किं तु सम्बन्धान्तररहितो[7] विशेषणविशेष्यभावः प्रत्यक्षाङ्गं न भवतीति कदाचिद् ब्रूयात् । अतस्तं समानन्यायेन निवारयति—**तत् किमत्रेति** । यथा विनैव सम्बन्धान्तरेण तद्विशिष्टप्रतिपत्तिः, तथा तस्या एवेन्द्रियकत्वनान्तरीयकः साक्षात्कारः प्रतीयते, विपक्षे त्वनवस्थाप्रसङ्गलक्षणस्तर्कः समान इत्यर्थः ॥

न च गुणकर्मसामान्येष्वपि विशेषणत्वमात्रेणैव ग्रहणमस्तु, [8]कृतं समवायादिनेति वाच्यम् । शब्दस्य स्वाश्रयाविशेषणस्यापि समवायेन ग्रहणात् । सोऽपि तृतीयोऽस्त्विति चेत्—न, गन्धरसयोरतथाभूतयोरपि संयुक्तसमवायेन ग्रहणात् । सोऽपि चतुर्थोऽस्त्विति चेत्—न, [9]शब्दत्वपत्वयोरपि प्रतीयमानत्वात् । विशेषणभावेनैवेति चेत्—न, द्रव्यगुणकर्मसामान्यानां सम्बन्धाभावे विशेषणभावस्यैवानुपपत्तेः । सम्बन्धश्च प्रसाधितः । अतो न

१. तस्मात् om BM २. °रणं रूपम् स्वभा° om BM ३. °ण्यादीनामेवाभेदं om BM ४. स्वव्याप्यमैकान्तिकं om BM ५. °दृश्यमाने BM ६. सर्वं om JA ७. °विहितो M ८. कृतं तु BM ९. °त्वादेरपि JA

समवायाभाववत् प्रत्यक्षबाधः, नाप्यनवस्था, सम्बन्धान्तरनिरपेक्षसम्बन्ध एव विश्रान्तेः इति ॥

स्यादेतत् । भूतलमेव घटाभावस्तच्च संयोगादेव[1] प्रतीयते । अतः किं तदर्थेन विशेषणभावेनेत्यत आह—**न चेति** । सत्यपि घटादौ भूतलस्य भावात् । भूतलव्यवहारवत् घटाभावव्यवहारप्रसङ्गादिति शेषः ॥

**न च कैवल्यमिति** । कैवल्यं हि[2] भूतलधर्मो घटाद्यविरोधी यद्युच्येत न घटादिना सह संभवेत्[3], तथा च स दोषस्तदवस्थ एव, विरोधी चेत् ? स तावन्नोभयवादिसिद्धद्रव्यादिष्वन्यतमः, तेषां घटेन सह संभवात्, अभावव्यवहारकालेऽपि च केषाञ्चिदसंभवात्, भूतलधर्माणां च तेषां घटेनाविनाशादनावृतेश्च । तदतिरिक्तं तु दशमं द्रव्यम्, पञ्चविंशतितमो वा गुणः, षष्ठं वा कर्म, सामान्यविशेषसमवाया न संभवन्त्येव, तस्य द्रव्याद्यन्यतमत्वेन[4] तदविनाभाविधर्मापत्तेः । अनापत्तौ वा तत्त्वानुपपत्तेः ॥

स खल्वयं सप्तमः पदार्थो भवेत् ? तत्राप्यसौ भावनिषेधाकारो वा स्यात्, अन्यथा वा ? न तावदन्यथा । तथा सति अविरोधित्वप्रसंगात् । निषेधाकारोऽपि[5] यद्यनुत्पन्नोऽपि[6] न निवर्तते, तदा[7] घटादिव्यवहारः कदाचिदपि न स्यात । उत्पन्नो वा यदि निवर्तेत, तदा विनष्टोऽपि घटः कदाचिदुपलभ्येत । अतः पदार्थानां सप्तमो निषेधरूपोऽनुत्पन्नप्रध्वंसी च[8] उत्पन्नविनाशी च[9] भूतलादिधर्मः कैवल्यमभाव इति[10] एकोऽर्थ इति । तदिदमुक्तम्—**न घटाभावादन्यो** घटाभाव एवेत्यर्थः ॥

स्यादेतत् यद्यपि ज्ञेयरूपं तत्त्वान्तरं नास्ति, तथापि ज्ञानरूपं भविष्यति । विषयश्च[11] तस्य दृश्ये प्रतियोगिनि भूतलमेवेत्यत आह—**न चेति**, यथा भूतलपक्षे घटवत्यपि प्रसङ्गो भवति, तथा भूतलज्ञानपक्षे[12] घटवद्भूतलज्ञानेऽपि प्रसङ्ग इत्यर्थः ॥

ननु दृश्ये प्रतियोगिनीत्युक्तं घटवद्भूतलज्ञाने तु घटो न दृश्यः किं तु दृश्यमान इत्यत आह—**नहीति** । न हि दर्शनानर्हो दृश्यत इत्यर्थः । दर्शनार्हो हि घटः तत्र यदि न नास्ति[13] तदा भूतलवदकामेनाप्युपलभ्येतैव, भूतलमपि वा नोपलभ्येत, तुल्ययोग-

---

१. संयोगादिनैव B, संयोगेनैव M. २. हि om BM. ३. संभवेत् om M. ४. °तरत्वेन M. ५. ६. अपि om J; ७. तदा om J ८. ९. च om J १०. इति om J ११. विषयस्य J १२. यथा···तथा भूतलज्ञानपक्षे घटवद्भूतलपक्षे B; यथा भूतलपक्षे M १३. न नास्ति om J; यद्यस्ति A

क्षेमत्वात् । तस्माद् भूतलोपलब्धावपि तदनुपलम्भस्तदभावमादायैवोपपद्यत इति । यद्यप्युपलभ्याभावमङ्गीकारयितुं शक्यते तर्कगत्या परः, तथापि स्ववचनविरोधमप्यपश्यन्तं प्रति किं तेनापीत्याशयवानाह—**दृश्येऽनुपलभ्यमान** इति ॥

अनुपलम्भो ह्युपलम्भाभावो वा स्यात्, दृश्ये स्मर्यमाणे भूतलोपलम्भ एव वा, घटोपलम्भे वा स्मर्यमाणे केवलात्मोपलम्भः ? न तावद् द्वितीयतृतीयौ, स्मर्यमाणे दृश्यमाने घटे भूतलोपलम्भे सति घटवत्यपि प्रसङ्गस्य दुर्निवारत्वात् । तस्मादुपलम्भाभाव एवानुपलम्भः ॥

नन्वनेनैव सर्वव्यवहारोपपत्तौ किमुपलभ्याभावेनेत्यत आह—**किमपराद्धमुपलभ्याभावेनेति** । तथा हि यथोपलम्भनिषेधकात् प्रमाणादुपलम्भाभावसिद्धिस्तथोपलभ्यनिषेधकात् [१]प्रमाणबलादेवोपलभ्याभावसिद्धिरपि भवति । भवति हि[१] घटं नोपलभ इतिवत् घटो नास्तीति प्रतीतिः[२] । न चैकविषयत्वमनयोः, निमीलितलोचनस्य ह्युपलम्भाभावनिश्चय उपलभ्याभावे च सन्देहो जिज्ञासा च[३] कथञ्चिद् भूतलनिश्चयेऽपि । न चैतदेकत्रैकदा संभवतीत्याशयवानुपसंहरति—**तस्मादिति** । **असदिति** सन्निषेध इत्यर्थः ॥

स च दृश्यानुपलब्धेरेवावगम्यते, अक्षव्यापारस्याधिकरणग्रहणोपक्षीणत्वादिति केचित् । तदनुपपन्नम्, अन्धस्यापि त्वगिन्द्रियोपनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात् । अस्ति हि तस्याधिकरणस्य ग्रहणम्, अस्ति च प्रतियोगिस्मरणम्, अस्ति च नीले शुक्लत्वस्य योग्यस्याभावोऽनुपलब्धिश्च ॥

अधिकरणग्राहकेणेन्द्रियेण[४] ग्राह्याभाववादिनोऽपि समानमेतदिति चेत्—न, प्रतियोगिग्राहकेणेन्द्रियेण तदभावो गृह्यते भावायत्तत्वात् तस्येति सिद्धान्तमर्मत्वात् । ममापि यदभावोऽनुपलब्ध्या बोध्यः[५] तद्ग्राहकेणेन्द्रियेणाधिकरणग्रहणे स गृह्यत इति सिद्धान्तसारमिति चेत्—न, वायौ त्वगिन्द्रियोपनीते रूपाभावप्रतीत्यनुदयप्रसङ्गात् । न हि रूपग्राहकेण तत्राधिकरणमुपनीतम् । तत्रापि तावच्चक्षुरिन्द्रियं संबद्धमिति चेत् ? एवं तर्हि तस्य नाधिकरणग्रहणे व्यापारः, नापि प्रतियोगिस्मरणे रूपाभावप्रतीत्या च नियमेन अपेक्षत[६] इत्यायातम् , अनन्यथासिद्धमैन्द्रियकत्वमभावस्येत्यन्यथासिद्धत्वप्रलापं[७] गजनिमीलनेनावधीर्य सिद्धवदाह—**इन्द्रियव्यापारे सति तत्प्रत्ययादिति** । आन्तरालिकमेव व्यापारं व्यवधायकमिति भ्रान्तं प्रतिबोधयन्नाह—**न च प्रतियोगीति** ॥

---

१. भवति हि om J २. प्रतीतेः JA ३. बिज्ञासावत् BM. ४. ॰न्द्रिय॰ JA
५. यदभावोऽनुपलब्ध्या बोध्यः dam. BM ६. ॰नापेक्षितम् JA ७. ॰सिद्धि॰ BM

प्रतियोगिस्मरणमित्यत्र वाक्छलवादिनमुत्थाप्य बोधयति—**न च शब्दस्मरणादीनामिति**। अभावज्ञानोत्पत्ताविन्द्रियार्थसन्निकर्षो न कारणं व्यभिचारादिति वादिनम् उत्थापयति—**ननु स्वरूपेति** | **तदियमिति**। प्रमाणान्तरं तु तेन[१] संभवतीत्यभिमानः परस्येत्यर्थः। सेयमनुपलब्धिः सत्तामात्रेणाभावं गमयेत, स्वज्ञानेन वा? न तावदाद्यः, तदानीं गेहस्य विप्रकृष्टस्य व्यवहितत्वेन योग्यानुपलब्धेरसत्त्वात्। न द्वितीयः[२], अनवस्थाप्रसङ्गात्, अनुपलब्धेरप्यभावरूपतया [३]अनुपलब्ध्यन्तरसाधनीयत्वात्॥

योग्यस्य स्मरणाभावस्तावदस्तीति चेत्—न, अभावे विपर्ययसंशयाभावप्रसंगात्। भवति हि कदाचित् प्रतियोग्यधिकरणयोः स्मरणेऽप्यसतोऽपि सद्भावप्रतीतिः, सतोऽभावप्रत्ययः[४], कथमन्यथा नास्तीत्युक्त्वा झटिति संजातबाधः प्राह, न हि न हि भ्रान्तोऽस्मि, दृष्ट एवासौ तत्र मयेति, [५]अस्तीति वा प्रथममुक्त्वा पश्चान्नास्तीति। किमासीन्नवेति नावधारयामीति वेति। न हि प्रतियोगिनमधिकरणं वानुपलब्धमेवान्यथाकारं स्मरति। न च स्वरससिद्धस्य [६]स्मरणस्यानुपलभ्यमानस्यैव विपर्ययः[७] संभवति। इयती च सामग्री यदुत प्रतियोग्यधिकरणस्मरणं [८]तत्तास्मरणं चेति। न वा साधारणं प्रमाकरणमदूषयन्त एव दोषा विपर्ययहेतवः, सर्वत्रानाश्वासप्रसङ्गात्। त्वयाप्येतत् समर्थनीयमिति चेत्—न, योग्यास्मरणस्य मया लिङ्गत्वेनेष्टत्वात्। लिङ्गविपर्ययसंशयाभ्यां च तल्लैङ्गिकसंशयविपर्यययोः[९] सुलभत्वात्। यदा तु सुनिपुणैकज्ञानग्रहणयोग्यस्य चैत्रस्य गेहस्मरणेऽप्यस्मरणलक्षणं लिङ्गमवधार्यते, तदा लिङ्गिप्रतीतिरविपरीता भवत्येव। अत एव क्षणं ध्यात्वेत्याह। अन्यथा ध्यानमप्यनुपपन्नम्। अस्मरणमात्रस्य हि व्यभिचारम् उपलभ्य तदनादृत्य विशिष्टास्मरणं ज्ञातुकामस्य प्रणिधानमुपपद्यते। तस्मात् [१०]लिङ्गत्वेनैव अस्मरणमुपयुज्यते। किं तु तदपि कथं ज्ञातव्यमित्यवशिष्यते? तत्राह—**नैतदिति**। व्यधिकरणतां परिहर्तुं प्रयोगं दर्शयति—**तथा हीति**॥

न चावच्छेद्यावच्छेदकयोर्वैयधिकरण्यं दोषः, विशेषण एव तन्नियमात्, अत्र तूपलक्षणत्वात्, वैयधिकरण्येऽप्युपलक्षणत्वाविरोधात्, न [?] तावन्मात्रेणैवोपयोगात्। उपलक्षितं तु साध्यसमानाधिकरणमेव। अत एवानुत्पन्नपादविहारस्य अचलचक्षुष[११] इत्यादि व्यधिकरणमेव दर्शयति स्म **वार्त्तिककारः**। **टीकाकारोऽपि** तथा अनुमेने,

१. प्रमाणान्तरतो न A, २. तृतीयः M. ३. °त्वेना° BM. °त्वेनापि तृतीयः B var. ४. प्रतीतिः BM. ५. चेति BM ६. अस्मरण° JA ७. विपर्यासः JA ८. तत्रा° Srikaṇṭha ९. विपर्याससंशययोः JAB var. १०. °पद्यते तस्मा° om BM. ११. °धिकरणमेव। अतएवानुत्प° om B; धिकरण·····विहारस्य अ° om M

यतो नान्यथाकृतवान् । परैरपि यद्यदा यज्जननसमर्थमिति वदद्भिः स्वीकृतमेवैतत्[१] । तत् कस्य हेतोः[२] ? तथैव प्रतिबन्धसिद्धेः ॥

नन्विन्द्रियार्थसन्निकर्षव्यभिचारस्तदवस्थ इत्यत आह—**न च यदिति** । साक्षात्कारिणी हि प्रतीतिरस्मदादीनामिन्द्रियार्थसन्निकर्षं न व्यभिचरति, इयं त्वानुमानिकी पारोक्ष्यवती[३] तस्मान्न क्वचिद् व्यभिचारशङ्का । यद्यनुमानगम्योऽभावः, कथं प्रत्यक्षस्य तत्र प्रवृत्ति ? अनयोरसङ्कीर्णविषयत्वादिति तु कदाचिद् ब्रूयात् । तच्च संप्लवव्यवस्थापनयैव समाहितमित्यर्थः[४] ॥

न तर्हि इत्यादिभाष्येण कः सूत्रावयवो व्याख्यात इति शङ्कामपनयन्नेव वार्त्तिकमवतारयति—**संप्रतीति** । ननु लक्षणं तथाप्यदुष्टमित्यत आह—**प्रत्यक्षकारणेति** । [५]कारणावधारणाभिमानिनश्चोद्यमित्यर्थः । विषयसंयोगिचक्षुरालोकश्चेति वदता विषयसंयोगेनैवालोकव्यापारो न [६]त्वगिन्द्रियाधिष्ठानसंयोगेनेत्युक्तम् ॥

[७]एतच्चान्धकारमध्यवर्तिनाप्यालोकमध्यवर्तिविषयोपलब्धेरालोकमध्यवर्तिनापि चान्धकारमध्यस्थानुपलब्धेरुन्नेयम् । ननु महत्त्वानेकद्रव्यवत्त्वयोः परस्पराविनाभूतयोरगृह्यमाणविशेषत्वेनोभयोरपि चाक्षुषत्वं प्रति कारणत्वात् समुच्चय एव । विशेषे वा एकस्यैव कारणत्वम्, कुतो विकल्पः ? परस्परव्यभिचारिणो ह्यर्थक्रियायां विकल्पसम्भवो न त्विमे[८] तथा । तस्माच्चाक्षुषद्रव्यलक्षणे कर्तव्येऽनयोर्विकल्पोपन्यासः कर्तव्यः । उभयोपादाने चासमर्थविशेषणं लक्षणं भवेदित्यर्थः । अत एवाग्रे सत्यप्येवं लक्षणकत्व इत्याह उक्तसामग्रीसम्भवेऽपि[९] चक्षुरवयविनो न प्रत्यक्षता, अत उक्तं **वार्त्तिककृता उपलब्धिफलः संस्कार इति** । स च दुर्निरूपः । तथाहि गुणिधर्मो वासौ स्यात्, गुणधर्मो वा स्यात् ? तत्र गुणिधर्मत्वे तद्बलेन रूपस्पर्शयोरविशेषेण ग्रहणम्, न तु क्वचिद् ग्रहणम् अग्रहणं च क्वचिदिति । तदेकार्थसमवेतयोर्ग्रहणमेवेति चेत्—न, निशि निदाघसमये तेजःस्पर्शग्रहेऽपि रूपाग्रहात्, चन्द्रातपरूपग्रहेऽपि स्पर्शाग्रहात्, गुणधर्मस्त्वनित्यो न भवत्येव, नित्यस्तु सामान्यरूपो न संस्कारशब्दवाच्यो नाप्युपलब्धिफलः, तस्य स्वोपलब्धेरन्यत्रानिमित्तत्वादित्यत आह—**धर्माधर्मनिमित्त उद्भवसमाख्यात इति** । रूपादीनां स्वकारणवशादेव स स्वभावभेदो जायते केषाञ्चित्, यत्रोद्भवत्वं नाम[९] सामान्यविशेषः

१. °ज्जनन' ' 'स्वी° om B. २. °जनन' ' 'हेतोः om M. ३. परोक्षा B; परोक्षवती M. ४. °स्थापनेनैव परास्त° B M. ५. °णाभिधानाभि° J ६. त्विन्द्रिय° JA ७. °मध्यस्थस्यालोक° BM ८. त्विमौ M ९. °सत्त्वेऽपि BM यत्रोद्भवत्वं नाम om BM

समवैति। स च धर्माधर्मजन्यतया संस्कार इत्युच्यते, उपलब्धिफलश्च भवतीत्यर्थः। प्रत्यक्षलक्षणतया तत्कारणमुक्तम्, न तु कारणतयैव। न च कारणं लक्षणमित्येकम्। उत्पत्तिव्यवस्थापकं हि लक्षणमलक्षणं वा, कारणस्वरूपव्यवस्थापकं तु कारकमकारकं[1] वा[2] लक्षणम्। न चैवमालोकादयः, तेषामतिव्यापकतया अव्यापकतया च प्रत्यक्षस्वरूपाव्यवस्थापकत्वात्। उत्पत्तिव्यवस्थापकाः पुनरेते भवन्ति। तेषामन्यतमापायेऽपि प्रत्यक्षानुपपत्तेरित्याशयवान् परिहारं व्याचष्टे—प्रत्यक्षलक्षणेति॥

ननु यद्यपि स्वरूपतः सन्तानतो वा इन्द्रियाभेदादिन्द्रियमनःसन्निकर्षभेदो यथायथं संभवति, तथापि विज्ञानाभेदो व्यक्तिकृतो जातिकृतो वा स्यात्। पूर्वस्मिन्निन्द्रियार्थसन्निकर्षभेदेऽपि धारावाहिकविज्ञानानि भिद्यन्ते। उत्तरत्र तु इन्द्रियार्थसन्निकर्षभेदेप्यभेद एव, सर्वेषां साक्षात्कारिजातीयत्वादिति। तत् एकदेशिपरिहारो गर्भस्रावेणैव गत उपन्यासयोग्योऽपि न भवतीत्याशयवानाह—यदा हीति॥

अस्ति हि स्वरूपजातिकृतभेदातिरिक्तो विषयकृतो विशेषो बुद्धीनाम्। स चेन्द्रियार्थसन्निकर्षभेदादेव दृष्टः, नेन्द्रियमनःसन्निकर्षभेदात्। यत्र तु धारावाहिज्ञाने नेन्द्रियार्थसन्निकर्षो भिद्यते, तत्र ज्ञानस्यापि न विषयकृतो भेद इत्यर्थः। तदिदमुक्तम्—क्रमवन्ति हास्तिकाश्वीयादिविज्ञानानीति। निराकरणेऽप्येतदनुरूपमुदाहरति—यदा हीति[3]। तस्यैव गोश्चक्षुषा संयोगेन तत्रैव गवि समवायेन प्रथमं शुक्लगुणज्ञानं पश्चाद् गमनकर्मज्ञानमिति भेदेऽभेदादिति समानमित्यर्थः॥

यद्यप्यप्रसिद्धत्वमव्यपदेशकत्वव्यापकत्वात् तदभिधानेनैव लब्धम्, तथाप्यालोकविषयसन्निकर्षोऽव्यपदेशकत्वेऽपि प्रसिद्धः, इन्द्रियमनःसन्निकर्षस्त्वव्यपदेशकोऽप्रसिद्धश्च इत्येतावता प्रकारान्तरत्वम्॥

नन्वन्यतरातीन्द्रियाधारत्वमिन्द्रियार्थसन्निकर्षस्याप्यस्ति, उभयातीन्द्रियाधारता तु आत्ममनःसन्निकर्षस्यापि नास्तीत्यत आह—आत्मा तु यद्यपीति॥

ननु विशिष्टकर्माभिनिर्वर्तितत्वेन प्रसन्नान्धानन्धकृष्णसाराणां[4] न कश्चिद्विशेषः, न हि रूपोपभोगानर्थिनः कृष्णसारे तृष्णा तत्कर्मसंभवः। असंभवे च कथमस्योत्पत्तिरिति? अतः कार्येऽपि कर्मणः सहकारितामाह—एतदुक्तं भवतीति। कर्मक्षयात् इत्युपलक्षणम्, प्रतिबन्धात्, सहकारिविरहाच्चेत्यपि द्रष्टव्यम्। यदि हि रथादिसंयोगानां

---

१. कारणमकारणं वा JA २. च BM ३. यदा हीति om J ४. प्रसन्नान्धानां द्वयोः कृष्णसाराणां B, °न्धानन्धयोः M.

नभोऽव्यापकत्वं भवेत् तदा तत्कार्यस्यापि शब्दस्य सर्वत्रोत्पादप्रसङ्गः। असमवायिकारण-प्रादेशिकत्वानुरोधेन हि व्यापकगुणाः प्रदेशावच्छेदेन जायन्ते। इह तु तदभावादनवच्छिन्नदेशतैव स्यात्। ततश्च तद्द्वारेणोपलभ्यमाना रथादयस्तत्संयोगाश्च न नियतदेशतया प्रतीयेरन्नित्याशयवानाह—मा भूत्सर्वत्रेति ॥

नन्वाकाशप्रत्यक्षतापक्षः किमिति नाशङ्कित इति परिहरन्नाह—नास्माकमिति। त्वगादिभिरिति तत्र त्वगुदाहणमुक्तम्। रसनोदाहरणं तु तिक्तत्वाभावविशिष्टो[1] मधुरतरो[2] गुडः। तथा घ्राणोदाहरणं पूतिगन्धाभावविशिष्टा सुरभितरा कस्तूरिकेत्यतो बहुवचनाविरोधः। बौद्धसिद्धान्ते च गुणगुणिनोरभेदाद् गुणिमूर्तत्वमेव गुणमूर्तत्वम्[3]। गुणग्राहकमेवेन्द्रियं गुणिग्राहकम्। गुणाभाव एव च गुण्यभावः। अतो मूर्ताभावविशिष्टग्रहे उदाहरणीये अल्पाभावविशिष्टग्रहमाहेति ॥

ननु मा भूत् सहान्तरेण ग्रहणं सान्तर इति वा ग्रहणं हेत्वर्थः, शरीरेन्द्रियाधिष्ठानासम्बन्धस्य ग्रहणमर्थो भविष्यति। न ह्ययमन्यथासिद्धः, एतस्यैवोत्तरोपाधित्वेन[4] प्रयोजकत्वादित्यत आह—इन्द्रियसम्बन्धो भवतु मा वेति। यच्छरीरसम्बद्धं तदवश्यमिन्द्रियसम्बद्धमिति। यदिन्द्रियसम्बद्धं तदवश्यं शरीरसम्बद्धमिति वा न प्रमाणमस्ति, तयोर्विभिन्नत्वात्, विभिन्नाश्रयत्वाच्च। न ह्यस्ति नियमो यत् प्रदीपेन सम्बध्यते तदवश्यं मल्लिकयापि यद् वा मल्लिकया तदवश्यं प्रदीपेनापि। तस्मात् तत्र साधकबाधकप्रमाणाभावात् सन्देह एवेत्यर्थः। तस्मात् [5]तदन्यथासिद्धिरेवेत्यसिद्धिव्यवच्छेदार्थं[6] सजलसतेजःपटादिग्राहिणा प्राप्यकारिणा त्वगिन्द्रियेण विरुद्धमपि सहान्तरेण ग्रहणं द्रष्टव्यम् ॥

आवरणानुपपत्तिरूपस्य तर्कस्योपस्कुर्वाणः प्रयोगेण प्रमाणमाह—प्रयोगस्त्विति ॥

इह द्विविधः सम्बन्धः प्राप्तिलक्षणो यथा, आलोकादीनां घटादिभिः। तद्विपरीतश्च यथा, अभिधानज्ञानादीनामभिधेयज्ञेयादिभिः। तत्र स्वविषयं प्राप्येति सिद्धसाधनव्युदासार्थम्। जनकत्वादित्युक्ते शब्दादिभिरप्राप्तस्वविषयप्रतिपत्त्यादिजनकैरनैकान्तिकमतस्तदप्राप्तावजनकत्वादिति। एतावन्मात्रेण तु सर्वथा अजनकैरनैकान्तिकमतो जनकत्वे सतीति। युक्त्यन्तरम् तर्कान्तरम्, दूरान्तिकाननुविधानप्रसङ्गः। अस्यापि विपर्ययेण प्रयोगो द्रष्टव्यः ॥

---

१. तिक्तत्वाभावे विशिष्टः om BM. २. मधुरो B. ३. एव गुणमूर्तत्वम् om BM ४. °त्वेतरो° JA ५. तत् om JA ६. °सतेजोघटादि° BM

ननु प्राप्तत्वाविशेषे सूर्यमण्डलवन्मेरुपृष्ठमध्यन्दिनोल्काप्रकाशावपि गृह्णीयात् । अथानुद्भूताभिभूततया न सुरसदनादीनां ग्रहणम्, उद्भूतानभिभूतत्वात् सूर्यमण्डलं गृह्यत इति, एवं तर्हि विषय एव स कश्चित् तादृशो यो गृह्यते नेतर इत्यभ्युपेयताम्, किं व्यभिचारिप्राप्तिपरिग्रहेणेत्यत आह—प्राप्तौ त्विति । विषयमाहात्म्यं हि प्राप्तिसहकारि, न तु स्वतन्त्रम् । न हि स्पर्शरसादयो ग्रहणयोग्या इत्यप्राप्तैरेव त्वगादिभिर्गृह्यन्ते, प्राप्यकारित्वाद् वा तैरनुद्भूताभिभूता अपि ते प्राप्तत्वमात्रेण गृह्यन्त इत्यर्थः ॥

यद्यपि क्षणभङ्गपरिणामनयेऽपि प्राप्तानामेव परस्परं कर्तृकरणकर्मणां कार्यजननम्, न त्वप्राप्तानामपि, न हि परस्परमप्रत्यासीदन्तः[1] सहकारिप्रत्यया भावानतिशाययन्तो दृश्यन्ते । प्रत्यासत्तिस्तु निरन्तरोत्पाद एव तेषाम् । सैव च स्वरूपयोग्यता । तथा च स्वरूपयोग्यतामिन्द्रियार्थयोर्ब्रुवता निरन्तरोत्पाद एव वक्तव्यः, न पुनर्व्यवहितविप्रकृष्टोत्पन्नानां क्वचिदपि स्वरूपयोग्यता नाम । तस्मात् प्राप्तौ स्वरूपातिरिक्तायां विप्रतिपद्येत[2], न तु [3]निरन्तरोत्पादेऽपि तत्राधिकाप्राप्तिः साधनमर्हतीत्याशयवानाह—निषेत्स्यते हीति ॥ एवं निवारिताभिमानः परदर्शनेऽपि प्रमाणमपश्यन् सन्दिग्ध इति ॥

ननु जनकत्वे सतीति निर्णयहेतुं पश्यन् कथं नाम सन्दिग्ध इत्यत आह—अयमभिसन्धिरिति । अदृश्यमानप्राप्तावयस्कान्तेऽपि दृष्टत्वादनैकान्तिकस्याभिमन्यते पर इत्यर्थः । त्वगादीनां दण्डादीनां च प्राप्तानामेव कार्यजनकत्वं पश्यन् कथमिव सर्वत्र विप्रतिपद्यत इत्यतो विप्रतिपत्तिबीजमाह—योग्यतयैवेति । नन्वयस्कान्तस्याप्राप्यकारित्वे हेत्वन्तरेऽपि कः प्रतीकार इत्यत आह—अयस्कान्तमणेरिति । ननु तस्य वृत्तिभेदः अनुपलम्भबाधित इत्यत उक्तम्—चक्षुष इवेति । तुल्ययोगक्षेमत्वादित्यर्थः ॥

व्यवधानविप्रकर्षौ हि अनिरन्तरोत्पादो वा स्यादप्राप्तिर्वा, स्वरूपयोग्यता वा ? तत्रानिरन्तरोत्पादाभावो निरन्तरोत्पादः स्यात् । न च कृष्णासारस्यार्थेन मणेर्वा लोहेन निरन्तरोत्पादः संभवति[4] । अप्राप्त्यभावस्तु प्राप्तिरेव, तथा च[5] कः प्रतिकूलोऽनुकूलमाचरति ? अयोग्यताभावस्तु योग्यतैव । सा च बौद्धनये कारणजातीयस्य निरन्तरोत्पादान्न भिद्यत इत्युक्तम् । तस्मात् स्थिरनये कार्यं जनयन्ति कारणानि परस्परप्राप्तिं वा व्यभिचरन्ति, प्राप्तिर्वा स्वरूपयोग्यताप्रयुक्तां व्याप्तिमुपजीवतीत्यवशिष्यते । तत्राह—प्राप्तेरेवेति[6] ॥

---

१. °सीदतः BM  २. °पद्ये (?) B  ३. निरन्° om B  ४. °दोऽस्ति A
५. सति J  ६. व्याप्ते° M

ननु लक्षणान्तरेण व्यवस्थिते लक्ष्ये कथमन्योन्याश्रयत्वमित्यत आह—**अगतिर्वेति**। तद्धि लक्ष्यसापेक्षमनपेक्षं वा ? आद्ये अन्योन्याश्रयत्वदोषादेवागतिः। उत्तरत्र तु अवगते लक्ष्ये तत्सापेक्षेण लक्षणेन किं गमयितव्यमित्यगतिरेवेत्यर्थः। **अस्ति हीति**। यदि विज्ञानाभिन्नहेतुजत्वात् सुखं विज्ञानजातीयं स्यात् सुखाभिन्नहेतुजत्वात् [1]तदपि सुखजातीयं भवेत्। विज्ञानं न सुखेनाभिन्नहेतुजमिति चेत् ? एवं तर्हि कथं सुखमपि विज्ञानेनाभिन्नहेतुजमित्यर्थः। ननु ज्ञानहेत्वनुगमः सुखेऽप्यस्ति, न तु सुखहेत्वनुगमो ज्ञाने, अतो यत्कारणानुगमो यत्र तज्जातीयत्वं तत्रास्तु। यथाङ्कुरमात्रकारणानुगमे यवाङ्कुरस्याप्यङ्कुरजातीयत्वम्[2]। न तु सर्वस्य यवाङ्कुरत्वम् तत्कारणानुगमाभावादित्याशयवान् आशङ्कते—**अवान्तरेति**। न ह्यस्ति नियमो[3] यज्जातीयकार्यहेतुचक्रानुगमो यत्र तत्र तज्जातीयत्वमिति। बीजजातीयकार्यहेतुचक्रानुगमेऽप्यङ्कुरस्य [4]बीजाजातीयत्वादिति सामान्योपसंहारेऽनैकान्तिकत्वम्, विशेषोपसंहारे तु [5]सन्दिग्धानैकान्तिकत्वमाह—**न किञ्चिदिति**॥

आकस्मिकत्वप्रसङ्गभयाद्धि [6]कार्यभेदोपपत्तये सकलकारणभेदमनुसरन् प्रयस्यति भवान्, स च कार्यभेदः किञ्चित्कारणभेदेनैव बीजाङ्कुरादिवत् ज्ञानसुखादावप्यनाकस्मिक इत्यर्थः। [7]तदिदमुक्तं **तदर्थत्वाच्चेति**। ननु [8]रूपरसगन्धस्पर्शानां हि [9]उपादानभेदाभेदमात्रानुविद्धं तज्जातीयातज्जातीयत्वम्। न ह्यस्ति संभवो रूपाद्युपादानं चारूपादिकं[10] चेति। अतो ज्ञानोपादानत्वे [11]सुखं ज्ञानजातीयमेव स्यात्। अज्ञानत्वे वा न ज्ञानोपादानत्वमिति यदि प्रत्यवतिष्ठते तत्राह—**न चेति**। यदि ह्येकजातीयोपादानतयैकजातीयत्वं भवेत्, अवान्तरैकजातीयमपि किं न स्यात् ? तथा चैकस्मात् समनन्तरप्रत्ययादनेकावान्तरजातीयानुत्पादप्रसङ्गः। दृश्यते च रूपज्ञानाद् रूपज्ञानं रसज्ञानादिजातीयं च। साक्षात्कारिणः साक्षात्कारश्चासाक्षात्कारश्चेत्यादि॥

अथ विलक्षणानेकसहकारिप्रवेशादनेकावान्तरजातीयकार्यकरणस्वभावस्य कस्यचिदेवोत्पादनियम उपपाद्यः। एवमवान्तरजातिभेदोपपादनवद्विवक्षितैकजातीयोपादानत्वेऽपि विलक्षणानेकसहकारिप्रवेशाद् विवक्षितानेकजातीयकार्यकरणस्वभावस्य कस्यचिदेवोत्पादनियम उपपत्स्यत इत्यर्थः॥

---

१. विज्ञानमपि J २. °जातीय° om J ३. सम्भवो BM ४. अबीज° JA ५. सन्दिह्यमा(ना) B, indistinct M ६. °पपत्तये सकलकारण° indist. BM ७. तदिद...चेति om BM ८. रूप° om BM ९. उपादानभेदमेदानुबद्धं BM १०. दानकं वा BM ११. तज्जातीयमेव BM

सोऽयमेकोपादानकत्वेऽप्यवान्तरजातिभेदाभ्युपगमः परेषां दृष्टान्तार्थमुद्भावितः अपि चेत्याद्युद्भावितं सन्दिग्धव्यावृत्तिकत्वं[1] स्फुटयितुमतो नासङ्गतमिति । तदेतत् [2]सकलं बौद्धसिद्धान्ताभ्युपगमेनोक्तम्[3] । परमार्थतस्तु यदुपादानवत् तत्सजातीयं यद्व्यापकोपादानवत् तद्गुणजातीयमिति नियमः । अतः[4] परमनियमः । तद्यदि सत्तया गुणत्वेन वा सुखज्ञानयोरेकजातीयत्वं साध्यते, तदा सिद्धसाधनम् । अन्यत्रानियमेऽसङ्कीर्णमुदाहरणम् आह—अत एवेति । एकोपादानत्वेऽपि रूपादीनां न व्यक्तिकृतो भेदः[5], नाप्यवान्तरजातिकृतः[6], नापि गुणतया पिठरोपादानत्वेऽपि कर्मणोऽगुणत्वात् । अत्रोपादानमात्रबलेन यथा द्रव्यगुणकर्मणामसतामेव सत्त्वं बहिः, तथा आन्तरमपि[7] ज्ञानसुखादीनाम् । यथा च तेषामवान्तरकारणभेदाद् द्रव्यत्वं पृथिव्यादीनाम्, गुणत्वं रूपादीनाम्, कर्मत्वमुत्क्षेपणादीनाम्, तथावान्तरकारणभेदाद् [8]दर्शनस्पर्शनस्मरणादीनां ज्ञानत्वं [9]निरुपाध्यनुकूलानुकूलतरादीनां सुखत्वमित्यादि । एवमवान्तरासाधारणनिमित्तादिभेदाद् यथा पृथिव्या घटादिभेदो, रूपस्य शुक्लादिभेदः[10], उत्क्षेपणस्य च पाटवादिभेदस्तथा ज्ञानस्यापि दर्शनादिभेदः सुखस्यापि तारतम्यादिभेदो भविष्यतीत्यर्थः ॥

स्यादेतत्, अज्ञानरूपतायां पुनः किं प्रमाणमित्यत उपसंहारव्याजेनाह—तस्मादिति । यद्यपि विज्ञानसुखादीनां भिन्नजातीयत्वमनुभवसिद्धम् । [11]न हि चन्दनमहं जानामीत्यत्र सुखं परिस्फुरति तदाहं सुखीति स्यात् । नापि [12]सुख्यहमित्यत्र ज्ञानं परिस्फुरति तदा जानामीति स्यात्, न चैतदस्ति । ज्ञानविशेषः [13]सुखं तथाविधे च सुखबुद्धिर्भवत्येवेति चेत्—हन्त भोस्तस्य ज्ञानविशेषस्य विषयविशेषोऽप्यस्ति[14] न वा ? नास्ति चेत् ? निर्विषयज्ञानं सुखमिति प्राप्तम् । न चैतद् दृष्टमिष्टं शक्यं वा साधयितुम् । अस्ति चेत् ? बाह्य आभ्यन्तरो वा ? न तावद् बाह्यः कश्चिद् विषयभेदोऽस्ति । यदेव हि रागवता गीतमनुभूयते तदेव वीतरागेणापि । तदेव गीतम्, परं रागवता अनुकूलतया, वीतरागेण तु तद्विपरीततयेति चेत् ? किमनुकूलत्वमस्य निरुपाधिकम्, सोपाधिकं वा ? निरुपाधिकं चेत् ? कथं कञ्चित् प्रति, सोपाधिकत्वे स एवोच्यताम्।

---

१. °व्यतिरेकित्वं BM २. सर्वं B ३. बौद्धनयेनोक्तम् BM ३. नियमोऽतः BM ५. व्यक्तितो भेदो° J B var ६. °जातितः J B var ७. आन्तरज्ञान° B ८. दर्शनस्पर्शन° J ९. नुकूलतरा° BM १०. रूपभेदः शुक्लत्वादिभेदः J ११. न हि....जानामीत्य° om BM १२. °ख्यहमित्य° om B, °ख्यहमि...स्फुर° om M १३. सुखं om BJ १४. न वा नास्ति चेत् om BM

इच्छैवोपाधिरिति चेत्—न, इतरेतराश्रयत्वप्रसङ्गात्। इष्यमाणत्वादनुकूलत्वम्, तेन चेष्यमाणत्वमिति ॥

तस्मात् तस्य ज्ञानविशेषस्य सुखत्वेनाभिमतस्याभ्यन्तर एव विषयविशेषो निसर्गानुकूलस्वभाव एष्टव्यः, यद्धेतुतया बाह्यो विषयोऽनुकूलतयाभिमतत्वेनेष्यमाणो भवति स एवोक्तरूपो विषयः सुखमित्युच्यते। तथापि मूढधियां व्यवहारार्थं [1]समानासमानजातीयव्यवच्छेदका धर्मा ज्ञानादीनामुक्ताः। तत्रार्थप्रवणत्वं ज्ञानस्यार्थनिरूपणाधीननिरूपणत्वमित्यर्थः। तदप्रवणत्वमज्ञानलक्षणम्। तत्राप्यनुकूलवेदनीयत्वं सुखलक्षणम्, प्रतिकूलवेदनीयत्वं दुःखस्येत्येवमादि समानतन्त्रानुसारेण बोद्धव्यमित्यर्थः[2] ॥

नन्वज्ञानात्मकत्वे घटादिवदवश्यसंवेद्याः सुखादयो न भवेयुः। अवश्यसंवेद्याश्च ते। न ह्यसंविदिते सुखे प्रमाणमन्यदस्ति। तदेतद् ज्ञानात्मत्वे परमुपपद्यते स्वसंवेदनत्वादित्यत आह—**तीव्रसंवेगितयेति**। सन्ति हि पदार्थाः स्वकर्मोपार्जितत्वाविशेषेऽपि केचिदध्यक्षा एव, यथा स्वशरीरादयः। केचित् तु परोक्षा एव, यथा तदन्तर्गतनाडीसंस्थानादयः। एवमज्ञानत्वाविशेषेऽपि कारणलब्धस्वभावभेदाः केचित् अवश्यसंवेद्याः सुखादयः केचिदन्यथेत्यर्थः ॥

सगोत्रमुत्थापयति—**स्यादेतदिति**। तथापि जागरावस्थायां तावदनुभवजननद्वारा सुखोत्पत्ताविन्द्रियार्थसन्निकर्ष उपयुज्यते। अन्यथा सुखवदनुभवोऽपि तेन विनैव स्यात्। न च साक्षात्कारणमेव कारणम्, तथा सति व्यापारिण उदासीनाः प्रसज्येरन्। व्यापाराव्यवधायकत्ववादस्त्वत्रापि तुल्य इत्यत आह—**इन्द्रियार्थसन्निकर्षस्य त्विति**। ज्ञानमात्रमव्यापारीभूतं तत्र उपयोगादित्यर्थः ॥

अयमाशयः। भवेदेवं यदीन्द्रियार्थसन्निकर्षस्य ज्ञानं व्यापारः स्यात्। स हि कार्यावसानो व्यापार्यव्यभिचारी भवति। ज्ञानं पुनः कार्यावसानमपि इन्द्रियार्थसन्निकर्षम् अतिपतत्येव स्वप्नान्तिके। अन्यथा तु व्यापारकल्पनायामनियमप्रसङ्ग इति[3]। परिहरति—**तदयुक्तमिति** असिद्धेरप्रतीतेः।[4] प्रमाणाभावादिति शेषः। ननु [5]मानसः अत्रानुभवः प्रमाणमित्यत आह—**तदज्ञानस्येति**। कुतो मिथ्यात्वावगतिरित्यत[6] आह—**यथा हीति**। आलम्बनं त्वस्य विपर्यासस्य यथा पूर्वानुभूता स्मरणार्हा कामिनीत्येवं

१. समाना° om B २. इत्यर्थः om BM ३. व्यापार‥नियम° damaged BM ४. असिद्धेरप्रतीतेः om BM ५. °सोऽत्रानुभवः प्रमाण° om BM ६. आह‥त्वस्य वि° om BM

तज्जन्मपूर्वानुभूतं स्मरणार्हं[१] सुखमेव। विपर्यासत्वं[१] पुनरेतावतैवास्य यत्[२] विप्रकृष्टदेशकालयोः [३]कामिनीतज्जन्यसुखयोः सन्निकृष्टदेशकालतयावभासः। न पुनरकामिन्यसुखयोः कामिनी-सुखत्वेन प्रतिभानम्। तथा सति कामिनीत्वसुखत्वनिषेधेनान्यस्य कस्यचित् प्रतिभासनं[४] बाधकं भवेत्। न च वाच्यम् यदि न स्वप्नान्तिके सुखमुत्पद्यते न तस्मै विरही स्पृहयेदिति, मोहादसाधनेऽपि प्रवृत्तिदर्शनात्। शीतापनुत्तये गुञ्जापुञ्ज इव मर्कटानाम्। तदिदमुक्तम्—**स्मरणविपर्यास** इति। स्मरणे प्राप्ते विपर्यासः स्मरणविपर्यासः अनुभवलक्षणस्तद्विषय एवेत्यर्थः ॥

ननु सुखदुःखोत्पादप्रयोजनौ धर्माधर्मौ [५]यदसुखदुःखारूपान् देहादीन् उत्पादयतः तत्तदर्थतयैव, एवं तयोः सर्वोत्पत्तिमतां निमित्तत्वं निर्वहति। इदं तु स्वप्नज्ञानं न सुखरूपम्, सुखसाधनमपि यदि न स्यात्, न तर्हि धर्मनिमित्तकम्। नाप्यधर्मनिमित्त-कमदुःखत्वादतद्धेतुकत्वाच्च। ततश्चादृष्टनिरपेक्षोत्पत्तिरस्य च बह्वाकुलयेदित्यत आह—**सुखेति**। सुखाद्युपभोगो ह्यदृष्टस्य प्रधानं प्रयोजनम्। न च सुखादि स्वरूपतः उपभोगः, किं तु तदनुभवः। [६]स च प्रत्युत्पन्नसुखाद्यनालम्बनत्वेऽपि पूर्वोत्पन्नम् आलम्ब्य जायमानः सर्वं समञ्जसयति। न च सर्वत्रैवमस्तु सामग्रीवैचित्र्यात्, सत्य-मिथ्याप्रत्ययविभागव्यवस्थापनात् ॥

न ह्येकदोपलब्धरजतविषयसंस्कारवशादरजतेऽपि[७] रजतप्रत्ययः इति सर्वदैवमेवा-स्त्विति वक्तुमुचितम्। यस्तु मन्यते स्वप्ने तावत्सुखादिकमनुभूयत इत्यविवादम्। तत्र तु बाधकं भवद् द्विरूपं भवेत्—असुखमेतदिति वा, नासीत् सुखमिति वा। न चैतदस्ति। जागरावस्थायां तु नासीत् कामिनीति युज्यते बाधकं स्थिरत्वात्। सहसा-पसरणस्याप्यसंभवात्[८]। तत्कार्याणां च दशननखक्षतादीनामननुवृत्तेः। चरमधातु-विसर्गादीनां चानुवृत्तावप्यतत्कार्यत्वात्। तत्कार्यत्वेन तदनुवृत्तावन्येषामपि तत्कार्याणाम् अनुवृत्तिप्रसङ्गात्। नास्तीदानीं सुखमिति त्विदानीन्तनसुखस्य बाधो न प्राक्तनस्य, क्षणिकत्वात् तस्य। तत्कार्याणां च हर्षाश्रुपुलकादीनामनुवर्तमानानामुपलम्भादन्यथा आशुतरविनाशिनां क्षणान्तरेऽदर्शनात् तदनुभवानामप्रामाणिकत्वमेव स्यात्। तस्मात्-अबाधितानुभवसिद्धत्वादस्ति स्वप्नान्तिके सुखमिति तं प्रत्याह—**न चासतीति**।

---

१. °तं स्मरणार्हं सुखमेव। वि° om BM २. या BM. C. ३. °मिनी त° om BM ४. प्रतिभान° BM ५. यदसुखं दु° B ६. स प्रमुत्पन्न B ७. संस्कार इव शाब्दरजते BM ८. °पसरणासंभ° B; °पसारणा° M

[1]यद्यपि स्वप्नान्तिकसुखस्य जागरावस्थायामाहत्य बाधकं नास्ति, तथापि स्वप्नान्तिक [2]एव तत्कारणत्वेन प्रतीतानां चन्दनवनितादीनामस्ति बाधकम् । कारणे च बाधिते कार्यं बाधितमेव [3]यथा स्वप्नान्तिकदृष्टपयोदपटलबाधे तदाश्रयो [4]विद्युदुद्योतः । हर्षाश्रुप्रभृतयस्तु न सुखकार्याः किं तु सुखज्ञानकार्या इति न तावन्मात्रेण तत्संभवोपपत्तिः । तस्मात् स्वप्नान्तिकोदाहरणबलेन ज्ञानमात्रकार्यता सुखस्य सिध्यतीति मनोरथाद्युदाहृत्य परिहृतम् ॥

चतुर्धा खलु संसारिणां सुखमुत्पद्यते । किञ्चिदभ्यासाद् यथा मृगयादिषु; किञ्चिदभिमानाद् यथा [5]चन्दनादिषु; किञ्चिद् विषयसंभोगाद् यथा सुरभिमधुरगौरगान्धारादिषु ; किञ्चिन्मनोरथादिसंप्रत्ययमात्राद् यथा भविष्यत्पुत्रादिजन्मदिनमहोत्सवानुचिन्तनादिषु । ते चामी स्वरूपभेदवन्तोऽनुभूयन्ते । न हि यथा मनोरथेषु सुखं तथा विषयसंभोगे । तथा सति तत्परित्यागेनान्योपादानवैयर्थ्यात् । तावदेव हि बुभुक्षितो मोदकान् मनोरथयति यावदमी नास्य परमार्थतः सन्निधीयन्ते । अथ मनोरथव्यसनमपहाय तत्रैव [6]नियमतः प्रवर्तते, तदेकजातीयत्वे सर्वमसमञ्जसं स्यात् । जातिभेदे तु कारणभेदोऽवश्याभ्युपेतव्य[7] इत्यर्थः ॥

तदत्रेन्द्रियार्थसन्निकर्षस्य सत्त्वमनुविधत्वे सुखोत्पत्तिरिति सिद्धान्तिनो विवक्षितम् । तच्चान्यथासिद्धमिति मन्वानः पुनः पूर्वोक्तं स्मारयति—**ज्ञानमात्रमेवेति** । नात्र तत्सत्त्वानुविधानमात्रं विवक्षितम् । किं नाम ? जातिभेदः कारणभेदमाक्षिपति । स च कारणभेदोऽनुविहितभावाभाव एव सिध्यतीत्यत्र विवक्षितमिति प्रतिपिपादयिषुरुक्तम् एवानुभाषते । न, विषयासन्निधान इति । तदिदमुक्तम्—**तादृशस्य सुखभेदस्य अनुत्पादादिति** । यादृश इन्द्रियार्थसन्निकर्षादुत्पद्यत इति शेषः ॥

शङ्कते—**विषयेति** । ज्ञानाभेदे [8]हि भिन्नजातीयं सुखं कारणान्तरं भिन्नमाक्षिपेत् । इह तु ज्ञानमेव भिन्नजातीयमित्यर्थः । परिहरति—**हन्तेश्वरस्यापीति** । ननु विषयसाक्षात्कारोऽपीष्टोपलब्धिलक्षणः सुखहेतुः । स च तादृशो नास्तीश्वरे तस्य बुभुक्षाविरहात् , कथं तस्य सुखोत्पादप्रसङ्ग इत्यत आह—**योगर्द्धिसम्पन्नानामिति** । ननु तेऽप्यलंप्रत्ययवन्तः कथमिव सुखभाजो भवेयुरित्यत आह—**असत्यामिति** ॥

---

१. यद्यपि... जागरा° dam BM २. एव... चन्दनव° dam BM ३. यथा स्वप्नान्ति° dam BM ४. वद्युद्योतः B ५. चुम्बना° J ६. वर्तते नियमेन BM ७. °पेयत BM ८. अपि B

न हि ते सर्वदैव प्रतिपक्षधारणावन्तो मा भूदमीषां सर्वदा भोगविरहाद् धर्माधर्मप्रचयतादवस्थ्यम्। तस्माद् यदा प्रतिपक्षधारणा नास्ति तदा विषयसाक्षात्कारमात्रादेव[1] तेषां सुखं प्रसज्येतेत्यर्थः ॥

न च वाच्यम्, यदि भवेदेवं कीदृशो दोष इति। कायव्यूहे शरीरेन्द्रियनिर्माणवैयर्थ्यप्रसङ्गात्। इष्टानिष्टसाक्षात्कारस्य एकस्मिन्नेव शरीरे मनसैव सिद्धत्वात्। न चेन्द्रियाणामर्थानां च परस्परमसन्निकृष्टानामेव सत्तामात्रेण क्वचिदात्मधर्मसमुत्पादे सामर्थ्यमधिगतम्, तस्माद् योगर्द्धिमतां सत्यपि विषयसाक्षात्कारे इन्द्रियार्थसन्निकर्षाभावात् सुखं नास्तीत्यभिप्रेत्योपसंहरति—तस्मादिति ॥

तदयं[2] प्रमाणार्थः, [3]योगर्द्धीनीन्द्रियाणि सुखदुःखसमुत्पादप्रयोजनानि, सुखदुःखतद्बोधान्यत्वे सत्यन्यत्राचरितार्थत्वात्, इष्टानिष्टोपलब्धिवत्। न चायमसिद्धः। अन्यत्र हि चरितार्थत्वं साक्षात्कारे संभाव्येत, स तु योगजधर्मसहकृतेन मनसैव जनितः। ते च सुखदुःखे सन्निकृष्टैरेवेन्द्रियैर्जन्येते, बाह्येन्द्रियजन्यत्वे सत्यात्मधर्मत्वात्, अस्मदादिविषयसाक्षात्कारवदिति। सोऽयं सन्निकर्षो यदा नास्ति तदा तेषामपि न सुखादिकमिति। तदिदमुक्तम्—स चेति ॥

नन्विन्द्रियार्थसन्निकर्षजन्मा विषयसाक्षात्कारः सुखादिहेतुः, न च तथा सिद्धानामस्ति, अतो न तेषां सुखोत्पादप्रसङ्ग इत्यत आह—अपि चेति। न तावदिन्द्रियजन्याजन्ययोः साक्षात्कारयोः कश्चिदाजानतो[4] विशेषः, किं तु इन्द्रियार्थसन्निकर्षरूपकारणसम्बन्ध एव विशेषः[5]। स च यदि कार्ये विवक्षितः, कथं न तस्य कारणता सुखादिकं प्रति? अविवक्षितश्चेत्, सिद्धानामपि तदुत्पादप्रसङ्गो दुर्वारः, तुल्ययोगक्षेमत्वात्। तस्मात् चरमभाविन्येव साक्षात्कारे सति किमिन्द्रियेणेत्यहृदयस्याभिप्रायः अवशिष्यते। तत्र चातिप्रसङ्ग इत्यर्थः। अत्रैवार्थे वृद्धसंमतिमाह—स्रगादीति। अत्र स्रगादीति कारणचक्रकथनम्। यदुत्पद्यत इत्यनुकूलप्रवेदनीयं स्वरूपम्। अनुग्रहादीति कार्यम्। अनुग्रहो भोगापरनामा सुखप्रत्ययः। अभिष्वङ्गः पुनः पुनः सुखप्रवाहस्याविच्छेदेच्छा। प्रसादः [6]सुखविषयग्रहणपाटवमिति ॥

नन्वव्यपदेश्यव्यवसायात्मकपदयोः संग्राह्यं व्यवच्छेद्यं वा न पश्यामः, प्रत्युत परस्परविरुद्धयोरनयोरेकस्मिन् [7]प्रत्यक्षेऽसमावेश एवेत्यत आह—इह द्वयीति।

१. °वशादेव BM २. प्रयोगार्थः MB var ३. योगर्द्धि° M ४.° दाजानतो AJM, दाबनितो B, स्वभावतो B var ५. विशेषः om M ६. स्वविषय° J B var ७. पक्षे BM

संगृहीतापि स्वशब्देनोपात्ता किमिति चेदिति शङ्काशेषः । उत्तरम्—तत्र विप्रतिपत्तेः । यतस्तत्र विप्रतिपत्तिस्ततस्तां निषेद्धुमित्यर्थः । व्यपदिश्यते व्यवच्छिद्यतेऽनेनेति व्यपदेशः, सा च व्यवच्छित्तिर्व्यावृत्तिप्रतीतिरुभाभ्यां क्रियत इति तदुभयमाह—विशेषणमिति ॥

तत्र समानाधिकरणं व्यवच्छेदकं[1] विशेषणम् । व्यधिकरणं तूपलक्षणम् । यथा दण्डी देवदत्तो जटाभिस्तातस इति । न तु सदेव विशेषणम्, अतिव्यापकतया अलक्षणत्वात् । लक्षणविशेषणमेतदिति चेत् ? अथ लक्षणं किम् ? स्वोपरक्तप्रतीतिजनकत्वमिति चेत् ? एतदेव किमुक्तं स्यात् अवच्छेदकत्वमन्यद्वा ? न तावदाद्यः, उपलक्षणस्याप्यवच्छेदकत्वात् । अत एव सदिति विशेषणमिति चेत्—न, सतोऽपि कस्यचिदुपलक्षणत्वेनेष्टत्वात् । अन्यत्तु[2] समानाधिकरणव्यवच्छेदकत्वाद्यान्यत् । तस्मात् सद् वा असद् वा समानाधिकरणं व्यवच्छेदकं विशेषणं विपरीतमुपलक्षणमिति । अत एव विशेषणमात्रमुदाहरन्नोपलक्षणम्, तत् कस्य हेतोः ? तदेव व्याधिकरणतयोपलक्षणं यतः । व्यपदेश्यं विशेष्यमिति यावदिति । व्यवच्छेद्यमिति यावदित्यर्थः । एवमुत्तरत्रापि । नामधेयान्विताः नामधेयात्मान इत्यर्थः । एतदेव व्यतिरेकतो दर्शयति—नास्तीति । नामधेयेन सह वियुज्यते विभिद्यत इत्यर्थः । तैरित्यत्र [3]कारणताभ्रमो मा भूदित्येतदर्थमुपेतदेनापूर्य व्याचष्टे—अर्था हीति । तदयं समुदायार्थः । नामधेयात्मानोऽर्थास्तत्सामानाधिकरण्येन प्रतीयमानत्वात् । यत् पुनर्यदात्मकं न भवति न तत् तत्सामानाधिकरण्येन प्रतीयते । यथा गौरश्वसामानाधिकरण्येन । प्रतीयन्ते चार्थाः शब्दसामानाधिकरण्येन तस्मात् तदात्मान इति ॥

ननु गवाश्वादीनां सामानाधिकरण्यव्यावृत्तिः किमभेदव्यावृत्तेरुत तत्प्रतीत्योरुपायोपेयभावव्यावृत्तेरिति संदिह्यत इत्यत आह—न चेति । अपि च यदि शब्दार्थयोः सामानाधिकरण्ये उपायोपेयभाव उपाधिः स्यात्, उपायत्वनिवृत्तावेव तदपि निवर्तेत, न च निवर्तत इत्यत आह—अपि चेति ॥

हेत्वन्तरमाह—किं चेति । उत्कर्षः प्राशस्त्यम् । अपकर्षोऽप्राशस्त्यम् । न चेदं व्यवहारमात्रम् । शब्दनिबन्धनो ह्युत्कर्षापकर्षव्यवहारः[4] तथाभूतवस्तुप्रत्ययादेव भविष्यति । यथा षड्जाद्युत्कर्षापकर्षव्यवहारनिबन्धनो मयूराद्युत्कर्षापकर्षव्यवहार इति दृष्टान्तार्थं षड्जादिष्वित्युक्तम् । अन्यथा नामधेयतादात्म्यप्रसाधनप्रस्तावे किमनेन । अत

१. °णोव्यच्छेदको JA २. अन्यत्र BM ३. करणता° J ४. °बन्धनाद्युत्कर्ष° B

एव सिद्धान्ते संज्ञानिवेशनमित्याह । प्रयोगस्तु नामधेयात्मानोऽर्था [१]तदुत्कर्षापकर्षानुविधायित्वात् । यत् पुनर्यदात्मकं न भवति न तत् तदुत्कर्षाद्यनुविधायि, यथा गौरश्वस्येति ॥

ननु यद्यर्थप्रत्ययो नामधेयोत्कर्षाद्यनुविधत्ते [२]तत् तस्यैव तादात्म्यमस्तु, किमायातमर्थस्येत्यत आह—प्रत्ययस्येति । साक्षादनभिधानेऽपि गुणगुण्यादेरपि योग्यतया [३]सपक्षत्वेन तद्गतसामानाधिकरण्येन विरोध उद्भावयितुं न शक्यत इति तदुपेक्ष्यान्यथा शङ्कते—अस्तीति । अस्ति हि शुक्लभास्वरत्वादिभिः शुक्तिकागतै रजतत्वस्य सामानाधिकरण्यप्रत्ययो न तु तादात्म्यं परस्परं [४]धर्मिणोरित्यर्थः । पुनरुक्तभ्रमो मा भूदित्येतदर्थम् आह—उक्तमपि [५]व्यपदेशमिति । व्याख्यानस्य चैतत् प्रयोजनम् , यद्धेत्वन्तरसूचनम् , तथा च प्रयोगः, रूपाद्यर्थविषयं ज्ञानं रूपादिशब्दविषयम् , नियमतस्तेन व्यपदिश्यमानत्वात् , यत् तु यद्विषयं न भवति, न तन्नियमतस्तेन व्यपदिश्यते [६]यथा रूपविज्ञानं रसेनेति । अनुविद्धता संश्लेषलक्षणार्थेनैव विज्ञानस्य नास्ति, कुतस्तरां तदात्मनापि शब्देन भविष्यतीत्यत उक्तमिवेति । यथा ह्यर्थो ज्ञानान्तर्निविष्ट[७] इव विषयतया परिस्फुरति[८], तथा शब्दोऽपीत्यर्थः । शब्दानुव्याधवदेव शब्दसंभिन्नविषयमेवेत्यर्थः । न चेदमप्रामाणिकं, यदवोचत् प्रमाणमित्यादिशेषौ । शब्दस्यानुभवः, संस्कारः, स्मरणं, समुच्चारणेच्छा, [९]प्रयत्नः, स्थानाभिघातः, शब्दाभिव्यक्तिरिति स्वात्मन्येव क्रमावगमः । तदतो बालेऽपि प्रथमतः शब्दमुच्चारयति एष एव क्रम उन्नीयत इत्यर्थः ॥

प्रथमे पक्षेऽसिद्धो हेतुः अप्रसिद्धविशेषणश्च पक्षः[१०] शब्दब्रह्मण एव वाजिविषाणायमानत्वात् । दृश्यत्वादृश्यत्वलक्षणविरुद्धधर्माध्यासस्य भेदापादकत्वात् विपरीतप्रमाणोपपत्तिश्चेत्यपि द्रष्टव्यम् । द्वितीये तु भागासिद्धो हेतुरित्यर्थः । न हि अविशदेऽपि बालमूकादिशब्दे प्रमाणमस्ति । न हि भावना वा तज्जनिता स्मृतिर्वा [११]पूर्वानुभूतस्य सत्तायाम् इदानीमनुभूयमानसंभेदे वा प्रमाणमस्ति । तथा सति विनष्टो घटः स्मर्यमाणत्वात् सन्नेव स्यात् । अनुभूयमानं च भूतलं घटसंभिन्नं भवेदेवं चोच्छिन्नमघटं भूतलमिति । तस्मादभ्युपेत्य विरुद्धधर्माध्यासवादो मन्तव्यः ॥

---

१. तत् om BM   २. तत् om BMA   ३. पक्षत्वेन A   ४. धर्मिणावित्यर्थः JA   ५. व्यपदेश्य° M   ६. यथा रसज्ञानम् JA, f 55 broken A   ७. °ज्ञानं तन्निर्विष्ट° B   ८. damaged BM   ९. °यत्नः स्था° damaged BM   १०. °षणः पक्षः J   ११. पूर्व° om BM

ननु बालेनानुभूयमानं रूपं तावद् विशदमेव। ततश्च तदात्मा रूपशब्दोऽपि कथमविशदः स्यात्, कथं चाप्रामाणिको रूपस्य प्रामाणिकत्वात्, केवलमव्युत्पन्नोऽपि शब्देन व्यवहरेदिति [1]प्रसज्येत, तदसंबद्धम्। न हि शब्दात्मताप्रत्ययं व्यवहाराङ्गम् आचक्ष्महे, किं तु सम्बन्धग्रहणमित्यत आह—**न चेति**॥

अयमप्यभ्युपगमवाद एव। शब्दो हि वक्तृवक्त्रावरुद्धनभोभागावच्छिन्नतया श्रोत्रेण प्रतीयतेऽप्रतीयमानेऽप्यर्थे। अर्थोऽपि पुरोवर्तितया चक्षुषा प्रतीयतेऽनवगतेऽपि शब्दे। तदयं बालो यद् रूपं पश्यति स एव रूपशब्द इति लोष्टलड्डुकदृष्टान्तमनुहरतीति। सोऽयं भेदप्रत्ययो भ्रान्त इति यदि शङ्कते तत्राह—**न चेति**। अयमप्यभ्युपगमवाद एव, न ह्यस्ति भ्रान्तत्वेऽस्य प्रमाणम्॥

स्यादेतत्, बालमूकादिविज्ञानानां शब्दसंभेदस्तावत् सान्देहिक एवास्तु, व्युत्पन्नानां पुनः सविकल्पा धियः शब्दसामानाधिकरण्येन [2]जायमानाः शब्दात्मकत्वमर्थस्य व्यवस्थापयन्तु[3]। तथा सति बालमूकादिविज्ञानानां तद्विषयत्वात् शब्दसंभिन्नविषयत्वमर्थतः सिद्धं भवतीत्यत आह—**सामानाधिकरण्यनिरासायेति**[4]। सास्नादिमद्रूपस्येति। न तु गकारादिरूपस्येति तात्पर्यम्। अयं शब्दो गकाराद्याकारो न तु सास्नाद्याकार इति तात्पर्यम्। ननु यो डित्थ इति डित्थशब्दमेवोच्चारयसि, न त्वयं डित्थशब्द इति तमेव निषेधसि चेति किमिदमित्यत आह—**औत्सर्गिकं हीति**। अर्थपरता ह्यस्य स्वपरतानिषेधेनैवाविरोधतः सिद्ध्यतीत्यर्थः। तत् किं सर्वत्रैवमेव? नेत्यत आह—**क्वचित् पुनरिति**॥

यत्र तर्हि [5]असंभेदेन संकेतग्रहे नित्यादिपदानि सन्ति, तत्रासंकेतितत्वान्न [6]तावदर्थपरः, स्वपरोऽपि यदि न स्याद् व्यर्थः प्रयोगः स्यादित्यत आह—**यत्रापीति**। यथा हि गौर्वाहीक इत्यत्र गोत्वं गोगुणयोगलक्षकत्वेन वाहिकोपाधिर्न तत्समवायात्, तादात्म्याद् वा, तथा हि डित्थोऽयमित्यत्रापि डित्थशब्दो वाच्यत्वोपलक्षकतया पिण्डोपाधिर्न [7]तु तत्समवायात् तादात्म्याद् वेति। यथा चात्र वाहीके गौरिति प्रत्ययाभावः प्रमाणम्, तथात्रापि वृक्षविशेषे डित्थोऽयमिति प्रत्ययाभावः प्रमाणमिति समुदायार्थः॥

ननु शब्दपुरःसरत्वनियमाद् विकल्पस्य तदुपायता वा तद्विषयत्वं वा स्यात्, तत्पुरःसरत्वनियमस्यातदुपायादतद्विषयत्वान्नियमतो व्यावृत्तेः तत्र यद्यर्थविकल्पस्तच्छब्दविषयस्तदा सिद्धं नः समीहितम्। अथोपायस्तदा ज्ञातोऽज्ञातो वा? अज्ञातत्वे

---

१. प्रसज्यते J २. °मानः BM ३. °पयन्तु BM ४. निषेधा° BM ५. अभेदेन J, अर्थभेदेन B var ६. तदर्थपरः J ७. तत्त्व् B

निर्विकल्पकत्वानुपपत्तिरेव, तस्मात् शब्द उपायो भवन् ज्ञात एव वक्तव्यः । न [1]चासन्निहिते ज्ञानमस्ति । तस्मादर्थतादात्म्यात् शब्दस्यार्थसन्निधानमेव तत्सन्निधिः इत्यर्थालोचनमेव तदालोचनमित्यनिच्छतापि स्वीकर्तव्यमित्यत आह—**यत्त्विति** ॥

न तावत् शब्दः पूर्वं नियमतो भवति विकल्पस्य । किं नाम ? व्युत्पन्नस्य शब्दस्मरणपुरःसरत्वं [2]नियमवद् दृष्टम् । न चैतावतैव घटज्ञानस्य घटशब्दविषयत्वम् । तथा सति घटाभावज्ञानस्यापि घटविषयता स्यात्, तत्स्मरणपुरःसरत्वात् । तस्माद् घटे विकल्पयितव्ये अनुपायो विषयश्च घटशब्दः किमिति [3]नियमतः स्मर्यत इत्यवशिष्यते । तत्रेयं स्मरणपरिपाटी कथितेति । शब्दपुरःसरा शब्दस्मरणपुरःसरा इत्यर्थः ॥

अत्रैव वृद्धसम्मतिमाह—**यदाहुरिति** । प्रतिसम्बन्धिपिण्डदर्शनसहकृतस्तत्संस्कारः [4]स्मृतिं जनयति, धूमानुभवसहकृत इव महानसस्थदहनानुभवप्रभवः संस्कारः तत्स्मृतिम् । न चैतावता नियमेन शब्दस्मरणपिण्डविकल्पयोरुपायोपेयभावः, शब्दस्य वा विकल्पविषयत्वं सिध्यति, येन तयोस्तादात्म्यमाशङ्क्येत[5] । तथा सति वह्निस्मरणधूमविकल्पयोरपि तथाभावः स्यात्, वह्नेरपि वा धूमविकल्पविषयता भवेदिति [6]**वार्त्तिकार्थः** ॥

स्यादेतत् । सर्व एव व्यवहारः स्वार्थः परार्थो वा विकल्पसाध्यो न त्वालोचनेनापि कश्चिदर्थः साधयितव्योऽस्ति । अतो निष्प्रयोजनमिदं कथमुत्पद्यत इत्यत आह—**तस्मादिति** । न तावत् सर्वस्यैवोत्पत्तिमतः प्रयोजनं पिशितचक्षुषः साक्षात्कुर्मः । न च प्रयोजनाप्रतिपत्तिमात्रेण पटुतरप्रत्यक्षपरिकलितमपि कार्यं नानुमन्यामहे । तदेतत् प्रयोजनाप्रतिपत्तिलक्षणमलीकमुत्तरम् । तथापि स्फुटं सविकल्पकोत्पत्तिरेवास्य[7] प्रयोजनम् इति सा दर्शितेति ॥

**नामधेयस्मरणायेति** । नामावच्छिन्ने विकल्पे कर्तव्ये[8] यतो न विशिष्यते विशेषेण न[9] गृह्यते, अतो वैधर्म्यस्य योग्यप्रमाणबाधितत्वात् **तदर्थज्ञानं तादृगेव भवति** तत्समानजातीयमेव भवतीत्यर्थः । अतो भाष्यपौनरुक्त्यं परिहरतो न साध्याविशिष्टो हेतुरिति ॥

व्यपदेशव्याख्यया भाष्यकारेण सूचितं हेतुं स्फुटयति—**नन्विति** । **अर्थव्यपदेशाकारम्** अर्थव्यपदेशविषयम् । [10]विषयिरूपज्ञानस्य तावद्रूपविषयतोभयवादिसिद्धा । तस्य च तद्व्यपदेशविषयता तदा स्यात् यदि रूपतद्व्यपदेशयोरभेदः स्यादित्यर्थः ॥

---

१. च सन्नि° M २. नियमदृष्टम् B ३. नियोगतः JAB var ४. शब्दस्मृतिं A ५. शङ्क्यते BM ६. वार्त्तिकश्लोकार्थः BM ७. °त्पत्तेरेवा° J ८. कर्तव्ये om A, ९. न om J १०. विषयी om JA

अन्येनान्यस्य व्यपदेशो अतिप्रसङ्गो व्यवहारविलोपश्च[1] विप्रलम्भादित्यत्र तन्नामधेयत्वादेव नियम इति स्फुटं भाष्य एव। स्वरूपेणैव विषयेणैव वा किमिति ज्ञानं न व्यपदिश्यत इत्येतद् विवृण्वन् परिहरति—**अर्थाकारमेवेति** ॥

आत्मानं प्रति तावत् स्वरूपेणैव ज्ञानमज्ञानाद् व्यवच्छिद्यते, ज्ञानान्तरात् तु विषयेणापीत्येतत् को नाम नाभ्युपैति[2] ? परस्य तु नित्यपरोक्षं परज्ञानम्। अत एव तद्विषयोऽपि तत् कथं [3]स्वरूपविषयाभ्यां परो बोध्यताम् ? कथं वा अबोधितो व्यवहरताम् ? तस्मात् [4]तज्ज्ञानवाचकेन ज्ञानमर्थवाचकेन चार्यमसौ प्रतिपाद्यः। न चाज्ञातेन वाचकेन वाच्यमधिगन्तुमर्हतीत्यवर्जनीयतया प्रतिपादको वाचकमुच्चारयति। नचैतावता अर्थशब्दयोरभेदसिद्धिः[5]। न हि प्रमाणव्यतिरेकेण प्रमेयमधिगन्तुं न शक्यते इत्येतावतैव[6] तयोरभेदः स्यादिति[7] तदिदमुक्तम्—**अन्यथा अशक्यत्वादिति** ॥

ननु कदाचिदर्थज्ञानकालेऽपि शब्दो व्याप्रियत एव, यदा प्रयोजकवृद्धात् प्रयोज्यवृद्धोऽर्थमधिगच्छतीत्य आह—**प्रतीयमानतया** विषयतयेत्यर्थः ॥

स्यादेतत्। उत्कर्षापकर्षाद्यनुविधायित्वं हेतुः कीदृगित्यत आह—**तदनेनेति**। न तावत् [8]तारतमत्वादेरुत्कर्षान्मयूरादेरिव गवादेरप्युत्कर्षः प्रतीयते। न हि गोशब्दे [9]कर्णंजपितेऽपभ्रष्टे वा अणीयान् गौः कृश उपहताकृतिर्विकृतो वा प्रतीयते, विपरीते वा विपरीतः। नापि साधुत्वादिभेदवतो गोशब्दस्य प्राशस्त्यमप्राशस्त्यं च किञ्चिदस्ति। नन्दाभद्रेत्यादिमङ्गलसंज्ञानिवेशस्य त्वर्थमङ्गल्यादिव्यभिचारः स्फुटतर एव, अभद्रादावपि भद्रादिव्यपदेशात्। तस्माद् व्यवहारोत्कर्षापकर्षमात्रेण नाभेदसिद्धिरतिप्रसङ्गादित्यर्थः ॥

**अस्यैव** साक्षाद्व्यपदेश्यपदात् प्रतीयमानस्यैव। **शब्दानुव्याधरहितता** शब्दार्थानुव्याधरहिततोपपत्तिरित्यतोऽस्य निराकरणं सूचितमिति पूर्वोक्तेन न विरोधः ॥

ननु वार्त्तिकतात्पर्यव्याख्यानमुपक्रम्य भाष्यव्याख्या [10]अकाण्डकूष्माण्डपतनवृत्तान्तमनुहरतीत्यत आह—**तदेतद्भाष्यमिति**। तदेतद् वार्त्तिकं व्याख्यातुमयमस्माकं भाष्यव्याख्यापरिश्रम इत्यर्थः। शब्दो हि यत्कार्यो यत्कारणं यद्ग्राह्यो यत्प्रमाणं

---

१. व्यपदेशो....विलोपः। BM २. नाभ्युपगच्छति JA ३. ०पि कथं तत् BM ४. तत् om BM A ५. तादात्म्यसिद्धिः BM ६. एतावतैव om BM ७. इति om BM ८. तारत्वादे० M ९. ०जते JA १०. अकाण्डे om A, ०पतनन्यायम० BM

यद्विरोधि यद्धर्मा यद्रूपो यद्विषयः,[१] तदकार्यस्तदकारणं तदग्राह्यस्तदप्रमाणं तदविरोध्यतद्धर्मातद्रूपोऽतद्विषयोऽर्थः[२] प्रत्यक्षत एवावसीयते। तदेतदस्यार्थज्ञानस्य विषयभेदानुविधायित्वं शब्दाद्भेदग्राहकत्वम्। यदि पुनरेषा प्रतीतिर्भेदमुल्लिखन्त्यप्यवधीर्यते, तदोक्तधर्माणामविरोधे धर्मिपरिवर्तेनाप्युपलम्भाः स्युः ॥

तत्रोदाहरणार्थं कांश्चिदाह—**चाक्षुषं हीति**। चाक्षुषं हि चक्षुषैव जन्यते, रूप एव नियतम् रूपेणैव निरूप्यते ; न शब्दे प्रवर्तते, न शब्देनैव निरूप्यत इत्यर्थः। एवमुत्तरत्रापि। विषयिविषयानियमप्रसङ्गमुक्त्वा कर्मकरणानियमप्रसङ्गमाह—**अपि चेति**। ननु श्रोत्रमेवास्य कदाचिन्नास्तीत्यत आह—**अस्ति हीति**। किमत्र प्रमाणमत आह—**शब्दज्ञानं चेति**। ननु लोचनाभावेऽप्यग्रहणमुपपद्यत इत्यत आह—**अस्ति हीति**। किमत्र प्रमाणमत आह—**रूपज्ञानं चेति**। उपलक्षणं चैतत्। अर्थसामान्यस्य सर्वेन्द्रियग्राह्यत्वात् शब्दसामान्यमपि सर्वेन्द्रियैर्गृह्येत, शब्दसामान्यस्य वा श्रोत्रेन्द्रियैकवेद्यत्वात् अर्थसामान्यमपि श्रोत्रेन्द्रियैकवेद्यं भवेत्। तथा चेन्द्रियान्तराणां वैयर्थ्यमित्यपि द्रष्टव्यमिति ॥

इतरेतराभाववत्तान्यवहाराभावप्रसङ्गमाह—**अशब्द** इति। उपलक्षणं चैतत्। अनुत्पन्नो विनष्टोऽत्यन्तासन्नित्यत्राप्यभावत्रये[३] विवक्षितविपरीतमापद्यत इति मन्तव्यम्। इतरेतराभावव्यपदेशे विरोधप्रसङ्गमाह—**अभाव** इति। अत्राप्यनुत्पादो विनाशोऽत्यन्ताभाव इति विरुद्धं स्यादिति मन्तव्यम्। इह ह्यर्थशब्देनेन्द्रियग्राह्य एवाभिप्रेतोऽर्यमाणतयेति व्याख्यानात्। इन्द्रियस्य च ग्राह्यः स एव यस्तज्जन्यज्ञानविषयः। तदमी चक्षुरादिसन्निकृष्टा अप्यन्यविषयज्ञानापेक्षया अतदर्था एव। एवं चेन्द्रियगतिज्ञाने कः प्रत्यक्षतायाः प्रसङ्गः? न हि तदपेक्षया घटादयस्तदर्थाः। तस्मादप्रसक्तेऽप्यर्थशब्दस्य [४]पदार्थमात्रपरत्वमभ्युपगम्य परिहारे गत्यन्तरं **वार्त्तिककृता** दर्शितम्। तच्च दुःखबोधमिति व्याचष्टे—**नैतदिति**। नैतदिन्द्रियार्थसन्निकर्षादुपजायते सत्तामात्रव्यवस्थितात्। इन्द्रियार्थसन्निकर्षो ह्यज्ञायमान एव सत्तामात्रव्यवस्थितः प्रत्यक्षे विवक्षितः। अनुमाने तु लिङ्गस्य ज्ञायमानत्वमेव विवक्षितम्, न तु सत्तेत्यर्थः ॥

नन्वनुमानेऽपि लिङ्गसत्तैव किं न विवक्षितेत्यत आह—**अत एवेति**। **तत्स्मरणमात्रादेवेति**। मात्रग्रहणं सत्तामभिप्रेत्य नत्वनुमेयज्ञानं प्रति कारणतामभिप्रेत्य[५],

---

१. यद्विषय° om JA  २. अतद्विषयः om JA  ३. °अभावत्रयेऽपि BM
४. °मात्रत्वम् J  ५. न त्वनुमेयज्ञानं...अभिप्रेत्य om JA

धूमस्यैव ज्ञायमानस्य तत्कारणत्वात् । अन्यथा तत्कालाननुविधानप्रसङ्गात् । यत्र हि विषयानपेक्षं ज्ञानमेव कारणं तत्र न विषयकालानुविधानम् । यथा अभावज्ञाने प्रतियोगिज्ञानजन्ये प्रतियोगिनः । अपि च लिङ्गानपेक्षस्य लिङ्गज्ञानस्य[१] लिङ्गिज्ञानजनकत्वे प्रमाणादीनां गतिद्वयवादोऽपि तत्र तत्र न स्यात् ॥

तदयमर्थः । इन्द्रियार्थसन्निकर्षात् सत्तामात्रव्यवस्थितादुत्पद्यते ज्ञानं तत्साधकतमं प्रत्यक्षम् । लिङ्गात् तु पञ्चरूपसम्पन्नादपि ज्ञायमानादेवासतोऽपि यदुत्पद्यते ज्ञानं तदनुमानमिति ॥

नन्विन्द्रियविषयेष्वित्यध्याहारस्तर्हि सूत्रे पूर्वेषां किं मूलम्[२] इत्यत आह— इमं चेति । न ह्यनुमेयस्येन्द्रियेण सन्निकर्षादिति वदता ह्येवमुक्तं यस्येन्द्रियेण सन्निकर्षात् तज्ज्ञानमुत्पद्यते[३] नासौ तस्य विषयः, यस्तु विषयो न तस्येन्द्रियेण [४]सन्निकर्षात् इदं जायते । तस्मादिन्द्रियार्थसन्निकर्षादुपजातं विज्ञानं यदि तदर्थविषयमेव भवति, तदा तत्प्रत्यक्षम् । न चैतत् सूत्रात् लभ्यते । तस्माद् वार्त्तिककृता एव कृतोऽयमध्याहार इति कैश्चिद् बुद्धम् । स चायमसङ्गतो बोधः, अध्याहारस्योभयथाप्यनुपपत्तेः, तद्व्यावर्त्यस्यान्यथैव व्यावर्तितत्वादप्रसक्तेश्चेत्यर्थः ॥

इन्द्रियार्थसन्निकर्षादुत्पन्नस्य हि ज्ञानस्य [५]व्यभिचारसंभवादव्यभिचारीति विशेषणं यद्यपि नानुपपन्नम्, तथाप्येतद्व्यावर्त्त्यस्य सामान्यलक्षणेनैव व्यावृत्तत्वात् निष्प्रयोजनमिदम् । अवश्यं च तदनुवर्तनोयम् । न हि यत इत्यध्याहृतपदेन करणमात्रं परामृश्यते तस्याप्रकृतत्वात्, किं तु प्रमाकरणम् । तथा चायमर्थः, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं यतः प्रमाणाद् भवति तत्प्रत्यक्षम् । एवं च व्यभिचारिणि कः प्रसङ्ग इत्यत[६] आह—यद्यपीति ॥

[७]नन्वव्यभिचारिपदकरणं प्रमाणपदानुवर्तनं वेति न कश्चिद् विशेष इत्यत आह—अन्यथेति । अव्यभिचारिपदं प्रमाणपदमित्यर्थः, प्रमाणस्यैवाव्यभिचारित्वात् । यद्यपि तत्र तत्पूर्वकमिति लक्षणपदपर्यालोचनयैव व्यभिचारिनिरासः, न ह्युक्तरूपे द्वे प्रत्यक्षे पूर्वं यस्य ज्ञानस्य तद्व्यभिचारिणीमपि प्रमां[८] जनयेत् । अत एव तदर्थं तत्र सामान्यलक्षणानुवर्तनमसारमेव । तथाप्येवंभूतप्रत्यक्षद्वयजनिते संस्कारे निर्णये च

१. लिङ्गतज्ज्ञानमात्रस्य J B var, तज्ज्ञानमात्रस्य A २. BMJ damaged ३. °मुत्पन्नं BM ४. सन्निकर्षात् dam. BM ५. व्यभिचाराव्यभिचार° JA ६. अत om J ७. न व्यभि° °नुवर्तिनं चेति A ८. धियं BM

अनुमानत्वप्रसङ्गस्तदवस्थ एव । तस्मात् तन्निवृत्त्यर्थं प्रमाणपदं न क्रृतं चेदवश्यमनुवर्तनीयमित्यर्थः । यद्येवं किमव्यभिचारिपदप्रयोजनमित्यत आह—**तथापीति नोपयुज्यते** न च शक्यते[1] परस्पराश्रयप्रसङ्गादित्यपि द्रष्टव्यम् । तथापि नियमो न स्फुटीभूत[2] इत्यत आह—**तत्रेति** ॥

नन्वनुमानवदव्यभिचारसिद्ध्या [3]फलसिद्धिर्न प्रत्यक्षे यथा, तथा शब्देऽपि । ततस्तदवबोधनार्थं तत्राप्यव्यभिचारिपदावतारप्रसङ्ग इत्यत आह—**शब्दादौ त्विति** । प्रत्यक्षे फलाव्यभिचारनिर्णयेनैवाव्यभिचारनिश्चय इति नियमो नान्यत्रेत्यर्थः । **अव्यभिचारिपदोपादानं** फलविशेषणतयेति शेषः । अयं च नियमः स्वरूपतोऽपि फलद्वारैव प्रत्यक्षमुन्नीयते, न त्वन्यथेति । अनुमानादिकं तु प्रतीतं सत्फलाय कल्पते, न त्वन्यथेति नियमे सति स्यादिति । अयमप्यर्थाक्षिप्ततया प्रागेव दर्शितो **द्वयीति** । अपरमप्युत्पत्तिज्ञप्तिभ्यां नियमद्वयं श्लिष्टमाह—**अथवेति** ॥

कारणमुत्पादकं प्रत्यायकं च उभयं साधयति—**न हीति** । उपाधिशङ्कानिवृत्त्यर्थं तर्कसहायत्वोपवर्णनम् ॥

आगमस्यापि च वक्तृश्रोतृगतत्वेन प्रत्यक्षापेक्षा उत्पत्तौ ज्ञप्तौ च यतोऽतः संमुग्धमाह—**एवमिति** । तथाप्ययमर्थः कथमव्यभिचारिपदोपादानमात्रात् लभ्यत इत्यत आह—**न हीति** । तदयं संक्षेपः । सोऽयं **सूत्रकारस्येह** विशेषतः प्रयत्नो ज्ञापयति [4]यदेतस्मिन्नव्यभिचारिण्यन्यत्र व्यभिचारशङ्कैव नास्ति, अत इहैव तद्ग्रहाय विशेषतो यतितव्यमिति । यद्यपि ज्ञप्तिपक्षे लौकिकवचसां प्रवृत्तिसामर्थ्यादिना [5]व्यभिचाराभावग्रहः, तथापि पारलौकिकागमाव्यभिचारनिश्चय आप्तोक्तत्वेनैव । तच्च मूलभूतप्रत्यक्षशुद्धेरेवेति[6] ॥

ननु **भाष्यवार्त्तिकयोः** का गतिः ? न ह्ययमर्थस्ततः प्रतीयते । किं नाम ? व्यभिचारिव्यावृत्तिमात्रमित्यत आह—**तस्मात् सुष्ठूक्तमिति** । स एवार्थः, किं तु नियम्यतया, न तु विधेयतयेत्याशयः । **उच्चावचमुच्चलत** इति जलसादृश्य संकीर्तनं भ्रान्तिबीजतया । उपघातदोषान्नयनस्यातपादिना । एतदुक्तं भवति । उपदर्शितार्थप्रापकत्वं व्यभिचारः । न चार्थेन कश्चिदर्थ उपदर्शितो यमप्रापयन्नर्थो व्यभिचरेत् । अन्यथार्थोपदर्शनस्वभावस्य चोत्पत्तिः, न चार्थोपदर्शनस्वभावो न चान्यथोत्पन्नः । तस्मादेवंभूतो

---

१. न च शक्यते om BM २. °क्रृतः BM ३. फलासिद्धिः B ४. तस्मिन् B
५. °चाराग्रहः J, अव्यभिचारिग्रहः A ६. °सिद्धेरिति BM

व्यभिचारो ज्ञानस्यैव न चार्थस्य[1] । तदिदमुक्तम्—**प्रत्ययो भ्रान्तो जायत** इति । वृद्धसंमतिमाह—**यथाहुरिति** । अन्ध इति सम्यग्दर्शनोपायरहितत्वमात्रपरम् । न पश्यतीत्यपि[2] सम्यग्ज्ञानाभावमात्रोपलक्षणपरम्[3] । तेन पुरुषापराधः स भवतीति । अत्रादर्शनं विपरीतदर्शनं वेत्यपराध इत्यर्थः । यथा हि स्थाणुरदृश्यमानस्तथैव पुरुषत्वेनापि दृश्यमान इति तात्पर्यम् ॥

यद्यपि संशयोऽपि सामान्यलक्षणानुवृत्त्यैव निरस्तस्तस्याप्रमाणफलत्वात् , तथाप्यव्यभिचारिपदं नियमज्ञापनार्थमवश्यं कर्तव्यम् । तेन च व्यभिचारिव्युदासमुखेनैव नियमः प्रदर्शयितव्यः । संशयोऽपि व्यभिचारिजातीयः, अतस्तेनैवास्य व्युदासो युक्त इत्याशयवान् आह—**अव्यभिचारिपदेनैवेति** ॥

ननु व्यभिचारित्वमेवास्य कथम् ? विपर्ययज्ञानं हि निश्चयाकारम् , अयं तु न तथेत्यत आह—**नो खल्विति** । न हि निश्चयत्वं प्रयोजकमत्र, किं तु विसंवादः[4] । स च प्राप्त्ययोगः । न च प्राप्तियोगो द्विरूपस्य वस्तुनः, क्वचित् कदाचित् केनचिद् अप्राप्तेरित्यर्थः ॥

न च वाच्यं भ्रान्तेरभ्रान्तिप्रतियोगित्वादनियतस्य चार्थस्य क्वचिदपि प्रमाणागोचरत्वादसत्ख्यातेरनभ्युपगमाच्च सर्वमिदमसमञ्जसमिति । नो खलु दोलायमानः स्थाणुपुरुषव्यतिरिक्तः कश्चिदनियतो नामार्थः परिस्फुरति यत्रासमञ्जसं स्यात् ॥

ननु स्थाणुपुरुषावुभावपि[5] यद्यारोपितौ तदोभयोपमर्दात्मना बाधकेन भवितव्यम् । अथान्यतरस्यारोपस्तदा अपरस्य पारमार्थिकत्वात्तत्प्रतिपत्तेरबाध्यत्वमेव स्यात् । यथा शुक्तौ रजतांशस्य मिथ्यात्वे शुक्लभास्वरत्वादिनिश्चयस्य सत्यत्वम् , तथा च स्थाण्वंशे निश्चयः पुरुषांशे त्वेककोटिसन्निवेशवानेव विभ्रम इति संशयो दत्तजलाञ्जलिः प्रसक्तः[6] । तस्माद् उभयस्मरणमात्रात्मकोऽयमिति स्यात् । न स्यात् , यत्र तावदुभयोरनुभयात्मके पाषाणस्तम्भादौ समारोपस्तत्रोभयोपमर्दात्मक[7] एव बाधक इति किमत्र वक्तव्यम् ? यत्राप्येकतरारोपस्तत्रापि नापरांशे निश्चयः, [8]परस्परप्रतिक्षेपोपस्थितिव्याहत्या अनिश्चयात्मकस्यैव ज्ञानस्योत्पादात् । यत्र हि रजतत्वारोपेऽपि[9] शुक्लत्वादौ निश्चयस्तत्रारोपितानारोपितयोर्मिथो विरोधाभावः । [10]तस्मादारोपितानारोपितत्वाविशेषेऽपि यत्रारोपितानारोपितौ परस्परविरुद्धौ

---

१. न चार्थस्य om JA २. अपि om BM ३. °उपलक्षण om M
४. निश्चयत्वमात्रं प्रयोजकं किं तर्हि वि° BM ५. °वुभावेव BM ६. स्यात् MB var
७. °मर्दकः BM ८. प्रतिपक्षोप° J ९. अपि om BM १०. °दारोपाविशे° JA .

स विपर्ययः । यत्र तु परस्परविरुद्धौ स संशय इति सर्वमवदातम् । यद्येवं संशयोऽपि विपर्ययान्तर्भूतस्तदपाकरणेनैवापाकृतश्च । किमर्थं तर्हि व्यवसायात्मकपदं सूत्रकारश्चकार ? सन् वा स उदारार्थो[1] व्याख्यातृभिः किमित्युपेक्षितः ? तथाभूतोऽर्वाचीनैः कथमुन्नीयत इत्यत आह—तस्मादिति ॥

स्यादेतदिति । स्यात्[2] तदवबोधार्थं,[3] यदि तत्प्रत्यक्षं स्यात्, न त्वेतदस्तीत्यर्थः । हेतुमाह—अभिलापेति । अभिधानाकारसंसर्गयोग्याभिधेयाकारं हि तदित्यर्थः । विपक्षाद् [4]व्यतिरेकमाह—न चेति । अभिधानाभिधेयसंसर्गे हि तदाकारयोः संसर्गनियमः । स च संयोगसमवायकार्यकारणभावरूपस्तावन्न संभवतीत्याह—न ह्यर्थे शब्दाः सन्तीति । संयोगेन समवायेन कार्यतया वेति शेषः । [5]तदात्मानो वेति । न हीत्यनुषज्यते । उपपत्तिमाह—तथा सतीति । न चेति ॥

स हि संवेदनधर्मो ग्राह्याकाररूपो वा स्यात् ? तन्निरपेक्षग्राहकाकाररूपो वा ? न तावदाद्यः, अर्थासंस्पर्शी यतः, अर्थासंस्पर्शश्चास्यातद्वृत्तित्वादतदुत्पत्तेश्चेति पूर्वैव युक्तिरित्याशयः । नापि द्वितीयः, अर्थेषु तन्नियोजनात् । अर्यमानेषु बाह्येष्वर्थेष्वेव तस्यामिलापस्य नियोजनात् । नियोगतो बाह्यसामानाधिकरण्येन प्रतीतेरित्यर्थः ॥

एतदुक्तं भवति संवेदनाकारो हि ज्ञातृत्वादिस्तत्सामानाधिकरण्येन प्रतीयते । अभिलापस्तु बाह्यसन्नियुक्तस्तत्सामानाधिरण्येनेत्यतो न संवेदनधर्मः । तस्माद् विषयतः स्वरूपतश्च यतोऽस्य प्रत्यक्षस्य नाभिलापसंसर्गयोग्यतासम्भवस्तस्मादिदमर्थात् सरूपकादुपजायमानं ज्ञानं विकल्परूपमर्थमेवादर्शयेदिति प्रसङ्गः । नामिलापमर्थसंसर्गितयेति शेषः ॥

स्यादेतत् । स्वकारणदुपजातस्य कारणमकारणं वा कश्चिदेव विषयः । एवं चार्थादुपजातस्याप्यनेकोऽभिलापोऽप्यस्य विषयो यदि स्यात् को दोष इत्यत आह— न हीति । रूपाचक्षुषो विषयादुपजायमानं चाक्षुषं विज्ञानं नयनाविषयरससहितमेतद् रूपमिति ॥

एतदुक्तं भवति । साकारवादसिद्धौ तावदनुपप्लुतमाकारमादधदेवार्थो विषयः । न च शब्दसंसर्गयोग्यता अर्थस्यास्ति येन तदाकारं ज्ञानं भवेत् । न चेन्द्रियविज्ञाने शब्दः स्वतन्त्र एवाकाराधायको, विकल्पकाले तदभावात् । भावेऽपि वा स्वतन्त्रः

१. स न्यासोऽपरोऽर्थो BM, सन् वा सोदरोर्थो A B var; सोऽपरः Prakāśa.
२. स्यादेतत् BM ३. तदविरोधार्थं A ४. व्यावृत्ति॰ BJ ५. अर्था॰ BM

प्रतिभासेत नार्थसंसर्गितयेत्युक्तम् । निराकारपक्षेऽप्यात्मानात्मप्रकाशनशक्तेर्विज्ञानस्य स एव विषयो यत्रेन्द्रियं नियतसामर्थ्यम्, अन्यथातिप्रसङ्गात् । न च चक्षुरिन्द्रियान्तरविषये समर्थम् । न च चक्षुर्विषयस्यैव शब्दसंसर्गोऽस्तीति चिन्तितमिति ॥

प्रसङ्गमुक्त्वा विपर्ययार्थमाह—**तस्मादिति** । अभिलापसंसर्गानपेक्षमर्थं तत्संसर्गिणमादर्शयदध्यवस्यद् विकल्पवासनोत्थापितं नार्थसामर्थ्यसमुत्थमिति भावः ॥

विपर्यये किं बाधकमित्यत आह—**अनियतार्थग्राहि यतः**, विकल्पगतमर्थाकारं प्रत्यनियामकत्वात् तस्येत्यर्थः ॥

एतदुक्तं भवति, यदि हि प्रतिभासमानोऽर्थोऽपि[1] विकल्पस्य जनको भवेत्, तदा तदाकारं नियमयेत्, न तु नियमयति, तदसन्निधावपि विकल्पवासनावशात् तस्य तथाविधाकारोपस्थितेः । नन्विन्द्रियमस्य जनकमस्तु, न हि तस्याकारनियामकतया [2]कारकत्वमित्यत आह—**मानसमिति** । मनोमात्रप्रभवमित्यर्थः ॥

इन्द्रियमपि हि ज्ञानजनकं भवदाकारनियामकार्थसन्निकर्षेणैव, न तु तन्निरपेक्षम् । न चास्य तथाविधार्थसन्निकर्षोऽस्तीत्युक्तमिति भावः ॥

ननु विवादाध्यासिते विकल्पे दृश्यतयैवार्थाकारः परिस्फुरति । न चैवमुभयवादिसिद्धार्थसन्निधिनिरपेक्षविकल्पेष्वपरोक्षतयार्थः प्रकाशते, तद्विशेषो विकल्पोऽर्थसन्निधिसापेक्षः । तथा चार्थस्य तदाकारनियामकत्वात् तज्जनकत्वमनिच्छताप्यभ्युपेयम् । अन्यथोत्प्रेक्षाव्यापारत्वाद् विकल्पस्य प्रवर्तकत्वमपि न निर्वहेदित्यत आह—**आत्मीयमिति** ॥

उत्प्रेक्षा असदारोपणं यतो [3]भवत्यवश्यमतोऽप्येवमुत्प्रेक्षामह इति व्याहारः । तिरस्कारोऽनध्यवसायः[4] । दर्शनं साक्षात्करणम् । पुरस्कारो भेदाग्रहो वा, तद्धेतुक आरोपो वा । **तत्सिद्धमिति** । प्रसङ्गाद्युपनिबन्धेन । यदि विवादाध्यासिता विकल्पा अर्थसामर्थ्यलब्धजन्मानः, तदा न शब्दकल्पनानुगता इत्यर्थः । **तदनुगतत्वमिति** । शब्दकल्पनानुगतत्वम् । तस्योपलब्धिरभिलापानुगतत्वं निराकुर्वती अर्थसामर्थ्यजत्वं विरुणद्धीति शेषः ॥

असिद्धविरुद्धयोरसम्भवादिह[5] सम्भाविततया पूर्वोक्तस्मारणपुरःसरं सन्दिग्धानैकान्तिकत्वाशङ्कामेवापनयति—**न चेति** । अर्थरूपमनुकुर्यादर्थरूपसदृशाकारं भवेदित्यर्थः । तादात्म्यतदुत्पत्तिभ्यामसंबद्धरूपानुकारे नियामकाभावात् सर्वरूपानुकारेण सर्वेषां सर्वज्ञता-

---

१. अपि om JA २. जनकत्व° BM ३. °भवत्यपश्यन्तो J, भवत्यपश्यतो B var ४. °नुव्यवसायः BM ५. °रसम्भावितत्वादिह BM

पत्तिः । [1]सद्रूपानुकारमात्रत्वात् तद्विषयताया इति भावः । न हि तादात्म्यतदुत्पत्तिलक्षणः सम्बन्धः स्वरूपेणोपपुज्यते । किं नाम ? नियामकतया, तदत्र सङ्केत एव नियामको यदि स्यात् को दोष इत्याशयवानाशङ्कते—सङ्केतेति । तदेव दृष्टं सत् स्मारयेदेतान्नियमेनेति शेषः । किमेतावपीत्यत आह—तत्रैव चेति । अनुगतमनुगमगोचरः[2] । अत एव सामान्यं देशकालानुगतम्, तत्रैव सङ्केतस्य सुकरत्वादिति भावः ॥

किमेतावतापीत्यत आह—न च तत्तत् दृष्टं साक्षात्कृतं किं तु स्वलक्षणं दर्शनगोचरः । सरूपकत्वादिति शेषः । सरूपकत्वमेवास्य कुत इत्यत आह—तदेव हीति । परमार्थोऽकृत्रिममनारोपितं रूपं तेनास्तीति परमार्थसत् । एतदेव कुत इत्यत आह—विज्ञानस्य कारणम् । विज्ञानस्येति प्रकृतोपयोगात् कारणमर्थक्रियासमर्थं यत इत्यर्थः ॥

ननु सामान्यमपि किं न दर्शनगोचर इत्यत आह—न तु सामान्यमिति । कुतः ? सर्वसामर्थ्यरहितं हि तत् । सर्वः पुरुषार्थो हेयोपादेयरूपस्तस्य सामर्थ्यं शक्तिः, तद्रहितं यस्मात् तत् । न हि किञ्चित् पुरुषप्रयोजनं सामान्यसाध्यमस्ति । अतोऽर्थक्रियायामशक्तत्वात् न तत् परमार्थसत् असत्त्वान्नतद्विज्ञानजनकम् । अजनकत्वान्न सरूपकम् । असरूपकत्वान्न दर्शनगोचर इत्यर्थः ॥

ननु सामान्यस्य तावदर्थक्रियाविरहाद् दर्शनगोचरत्वं मा भूत्, दर्शनगोचरस्यैव तु वाच्यतास्तु । सङ्केतोऽपि तत्र केनाप्युपायेन भविष्यति । [3]तन्निर्विचिकित्समेव तर्ह्यर्थक्रियासमर्थवस्तुप्रतिपादनाभिप्रायवन्तः प्रयोजकवृद्धाः प्रयोज्यवृद्धाश्च तथाविधार्थप्रतिपत्तिमन्तः शाब्दे व्यवहारे उपलभ्यन्त इत्यत आह—अपि चेति । न ह्यौष्ण्यात् अतिरिक्तो वह्निर्नामास्ति बौद्धराद्धान्ते । न चोभयवादिसंप्रतिपत्तिविषयः प्रतीतमौष्ण्यं शीतापनोदनं करोतीत्यपि कदाचित् । अकुर्वद्धि सर्वथा अप्रतीतं न कुर्यादारोपितं वा । न च वह्निशब्दात् सर्वथा वह्नेरप्रतीतिः । तस्मात् शब्दकल्पनोल्लिखितमवस्त्वेव वस्त्वाभासमित्यभिप्रायः ॥

जात्यादीन् पारमार्थिकानभ्युपेत्याह—तन्नेति । विवेकेन देशभेदेनेत्यर्थः । अवच्छेद्यावच्छेदकभावेन हि मिथो योजना विशेषणविशेष्यभावः । स च विविक्तदेशताप्रतीत्या व्याप्तः । सा चातो निवर्त्तमाना स्वव्याप्यं विशेषणविशेष्यभावमादायैव निवर्तते ।

---

१. तद्रूपानु° J   २. अनुगतिगो° BM   ३. निर्विचिकित्सामेव A

ततश्च जात्यादीनां परस्परमसम्बन्धान्न स्वतन्त्रेषु तेषु[1] शब्दोऽपि सुकरसङ्केतः। [2]तथा च न संसृष्टवेदनमित्यर्थः ॥

एतेन शब्दस्य विवेकग्रहसंभवेऽपि तद्योजना निरस्ता बोद्धव्या। एकमसमुदितम्। अविभागमनंशम्। स्वलक्षणं त्रैलोक्यविलक्षणम्। तथातथेति। गुणकर्मादिसमुदितत्वेन[3] साधारणत्वेन विकल्प्यते। न तु दृश्यत इत्यर्थः ॥

**अपि च परमार्थसद्वस्तुद्वयवेदनेऽपि**[4] विवेकेनेति शेषः ॥

ननु न ह्येकज्ञानविषयौ समानकालेऽङ्गुल्यौ न कार्यकारणभूते इति [5]नियतपूर्वापरत्वेऽपि ते सर्वज्ञैकविज्ञानगोचरौ न तथेति [6]युक्तं वक्तुम्। यद्युच्येत को दोषः? न ह्युपलब्धिभेदाभेदप्रयुक्ते कारणाकारणत्वे[7]। किं तर्हि? यदनपेक्षं[8] तत् कारणम् सापेक्षं च कार्यमिति, तदत्रापि समानम्। एकज्ञानगोचरत्वेऽपि यदवच्छेदकं तद्विशेषणम्, अवच्छेद्यं च विशेष्यमिति। यत्तु नैवं न तत् तथेत्यत आह—**विशेषणं खल्विति**। **नान्यथेति**। अतिप्रसङ्गादिति शेषः। तर्हि उपकारोऽपि कश्चिदस्त्वित्यत आह—**न चैकेति**। किमिति न स्यादित्यत आह—**तयोरिति**। प्रसङ्गादिति शेषः[9]। स्वरूपतः पौर्वापर्यनियमः कार्यकारणभावः। ज्ञप्तितस्तु ज्ञाप्यज्ञापकभावः। स चायमेकज्ञानगोचरयोरेककालयोश्च द्विरूपोऽपि नियमो नास्ति यस्मादित्यर्थः ॥

स्यादेतत्। यद्यप्युक्तस्वरूपमुपकारद्वयं न संभवति तथाप्याधाराधेयभावो भवेत्, स हि समानकालयोरेव कुण्डबदरयोर्दृष्टः। क्षणभङ्गस्तु त्वयाप्युपपादनीयो मयापि भञ्जनीय इत्यत आह—**अपि चेति**। यद्यपि तीर्थिकैः कुण्डाधारवशान्न बदरस्यैव अपतनधर्मकस्योत्पादः स्वीक्रियते स्थेमश्रद्धाजडत्वात्, तथापि गतिनिवृत्तिलक्षणां गुरुत्वप्रतिबन्धकसंयोगलक्षणां[10] वा स्थितिं तद्धर्मभूतां विदधदेव बदरस्य कुण्डमाधारतया अभ्युपेतं तैः। किं चातोऽत आह—**तद्वदिहापीति**। एतावतापि किमित्यत आह—**न च शक्त्यन्तरैरिति** ॥

यद्यपि बदरवज्जात्यादीनां धर्मस्य कस्यचिदुपजननापायरूपमुपकारं नाभ्युपगच्छत्येव परः, तथाप्यभ्युपगमवादोऽयं **सौगत**स्येति मन्तव्यम् ॥

---

१. तेषु om B २. °स्तथा च न om BM ३. °गतत्वेन B, °तत्त्वेन B var ४. द्वयवेदनेऽपीति B, वेदनेति B var ५. नियता om BM ६. वक्तुमुचितम् BM ७. न ह्युपलब्धे भेदाभेदप्रयोजके कारणत्वा° BM ८. यदपेक्षणीयं JAB var ९. प्रसङ्गा…शेष° om JA १०. °प्रतिबन्धलक्षणं BM

**तथा चेति।** सन्नित्यनेन हि विकल्पेन सत्त्वोपकारसमर्थो[1] विषयीकृतः न च ततोऽन्यः कश्चिद् द्रव्यत्वाद्युपकारसमर्थोऽसत्त्वोपकारसमर्थोऽस्ति, यत्र द्रव्यादिविकल्पाः सार्थकाः स्युः। तस्मादेते द्रव्यत्वाद्युपकारसमर्थेऽर्थे सत्त्वोपकारसमर्थाभेदिनि प्रवर्तमानास्तदधिकरणमर्थमस्पृशन्तोऽनर्थकाः[2] प्रसक्ता इति समुदायार्थः॥

बौद्धस्यातिपरामर्शाकुशलतां[3] चोद्यस्य चातितुच्छतामालक्ष्यास्माकमेव मतिलाघवं[4] संभावयिष्यतीत्याशङ्क्य तद्ग्रन्थं लिखति—**यदाहेति**॥

अयं [5]वार्त्तिकार्थः। यस्य दर्शने नानोपाधेरप्यर्थस्य धीः विकल्पधीर्ग्राहिका भेदिनो विशिष्टस्य। नानोपाध्युपकाराङ्गं या शक्तिस्तदेकात्मनस्तस्य। सर्वात्मना सर्वैः उपाधिभिरेकस्वभावस्यैवोपकार्यस्य विशेष्यस्य ग्रहे सति को भेदो भिद्यत इति भेदो विशिष्यत इति यावत्। अनिश्चितः स्यात्? अपि तु सर्वोपाधिभिर्विशिष्टो निश्चित एव स्यादित्यर्थः। एकस्योपाधेः उपकारकस्वभावे ग्राह्ये गृह्यमाणे सति नोपकारा उपकारकाः स्वभावा उपाध्यन्तराणां ततोऽपरे भिन्ना विद्यन्ते ये [6]तस्मिन्नेकोपकारकस्वभावे दृष्टेऽपि न दृष्टाः स्युः। किं नाम? स एवैकस्वभावः सर्वेषामुपकारकः ततस्तद्ग्रहे तदेकोपाधिविशिष्टग्रहे। सकलग्रहः सकलोपाधिविशिष्टग्रहः प्रसक्त इत्यर्थः॥

ननु वरं वस्तुस्वभाववादमास्थायानुपकार्यानुपकारकयोरपि विशेषणविशेष्यभावं स्पष्टदृष्टमुपपादयितुं शक्ताः परे। उपाधुपाधिमद्भेदाच्चापौनरुक्त्यम्[7]। न पुनः **सौगताः** सत्त्वादीनामुपाधीनां वस्तुत्वानभ्युपगमात्। एवं च स्वच्छरास्त्वय्येव निपतिता इत्यत आह—**अस्माकं त्विति**। यच्च गृह्णन्ति सामान्यमात्रम्, यच्चाध्यवस्यन्ति सन्तानम्। न मनागपि सामान्येनापि रूपेण। गाहन्ते गोचरन्ति। तस्यालीकतया वस्तुधर्मत्वाभावादित्यर्थः। तर्हि कथमविसंवादकाः प्रवर्तका वेत्यत आह—**पारम्पर्येणेति**। ततः किमित्यत आह—**अत इति**। यत्र विषयाधीना धीः तत्र तदायत्तौ[8] विशेषाविशेषौ, अत्र तु विपर्ययो विषयस्यैव प्रतिभाससत्तया बुद्ध्यधीनत्वात्। तदिह विकल्पस्य विषयो विशेष्यः। तत्तद्बुद्धिशेषणविशिष्टतयापि[9] किं भिन्नोऽभिन्नो वेत्यत्र[10] विकल्प एव साक्षी, न विचार इत्यर्थः॥

---

१. °ऽसत्त्वोपकारसमर्थो° om JA  २. °दधिकरणसमर्थ° BM  ३. देश्याति° BM  ४. °मालम्ब्यास्माकमेव लाघवम् BM  ५. अत्र प्रमाणवार्तिकव्याख्येति मन्तव्यम्। ६. तस्मिन्नेवोप° B  ७. °दभेदाच्च J  ८. तदापत्तौ B  ९. °तया तु BM  १०. अत्रा om BM

ननु परमार्थसन्नर्थो मा भूद्विकल्पस्य विषयः, जनकस्तु भविष्यतीत्यत आह— **अपि चेति**। **न विकल्पिकामपीति**। अपिर्भिन्नक्रमः[1]। अर्थो विकल्पस्य न गोचरो जनकोऽपि नेत्यर्थः ॥

अर्थोपयोगः सन्निकर्षः। **न च यद्वेत्यादि**। **न्यायादिति**। वाच्यमिति शेषः। **नो खल्विति**। स्मरणेन्द्रिययोरेकविषयसामर्थ्याभावात् न परस्परापेक्षत्वम्। ततश्च **स** एवार्थोपयोगोऽविशिष्ट इत्यर्थः। एकगोचरत्वमेवानयोः कुतो नेत्यत आह— **तद्गोचरत्वे चेति**। अननुभूतपूर्वाणामप्यर्थानां चक्षुषोर्व्यापारमात्रेण पूर्वावस्थास्मरणप्रसङ्ग इत्यपि द्रष्टव्यम्। **तेन स्यात्**। तथा सति प्रसज्येतेत्यर्थः। **अक्षापायेऽपि नेत्रधी**रित्युपलक्षणम्। वासनाभावे स्मृतिधीरित्यपि द्रष्टव्यम्। **सहते** प्रतीक्षत इत्यर्थः ॥

सिद्धान्तमुपक्रमते—**अत्रेति**। गौरयमित्यादेर्विकल्पस्य तावदभिलापसंसर्गयोग्यप्रतिभासवदर्थसाक्षात्कारोऽप्यनुभवसिद्धः[2]। अस्ति चास्येन्द्रियार्थान्वयव्यतिरेकानुविधानम्, तदन्यथासिद्धम्, तयोरालोचनमात्र एव चरितार्थत्वादिति चेत्? तत् किमिदानीमालोचनस्यायं महिमा विकल्पोपजननं प्रति? तथा सति तस्मान्न कदाचित् अप्यालोचनं जायेत। वासनापरिपाकविरहान्न तथेति चेत्? स खलु वासनापरिपाको यदि नियमादिन्द्रियार्थमध्यमधिशेते कथं न [3]तदपेक्षा कार्यस्य? काकतालीयश्चेत्? सन्निधिसन्निहितेष्वपीन्द्रियार्थेषु[4] कदाचिद् विशिष्टाद् वासनापरिपाकात्[5] साक्षात्कारवान् विकल्प उत्पद्येत। न वै साक्षात्कावान् विकल्पः कश्चित्, किं तु निर्विकल्पकभेदाग्रहात् तद्वानिवावभासत इति चेत्—न, प्रमाणाभावात्। न हि विवादाध्यासितविकल्पगतो दर्शनव्यापारोऽयमौपाधिक इत्यस्ति प्रत्यक्षम्। नाप्यनुमानम्। दर्शनव्यापारता कल्पनापोढत्वेन व्याप्ता, तच्चातो निवर्तमानं तामपि निवर्तयतीति चेत्—न, विपर्ययस्यापि वक्तुं सुकरत्वात्। तथाहि दर्शनव्यापारत्वं कल्पनानुगतत्वेन व्याप्तम्। तच्च तदनुगतत्वमालोचनान्निवर्तमानं स्वव्याप्यं[6] दर्शनव्यापारत्वमपि निवर्तयति। तथा च विकल्पसान्निध्यादौपाधिको दर्शनव्यापारोऽयमालोचनमिति किं न स्यात्? अनुभवस्तूपाधिशङ्कया त्वयैवासाक्षीकृतः। अनागते विकल्पे कथमिव तद्धर्मो निर्विकल्पके प्रतिभासेतेति चेत्—न, कालभेदस्योभयत्रापि तुल्यत्वात्। उपादानोपादेयभावश्च नियमहेतुः समानः ॥

---

१. अपिरभिन्नक्रमः B २. ॰योग्यत्ववदर्थ BM, ॰भासत्ववता अर्थ A ३. तदनपेक्षा BM ४. ॰ष्वप्यतीन्द्रियेषु BM ५. विशिष्टवासनावशात् BM ६. स्वव्याप्तं BM

ननूपादानधर्मा उपादेयमनुगच्छन्ति[1]। न तूपादेयधर्मा उपादानमिति चेत्—[2]न, वस्तुतोऽवस्तुधर्माणामप्रतिसंक्रमात्। आभिमानिके तु प्रतिसंक्रमेऽनियमः। उपादानप्रत्ययबलादुपादेयप्रत्ययस्तथोत्पद्यत इति चेत्? हन्त यदि साक्षात्कारः साक्षात्कारवानुत्पद्यते कथमस्य तथात्वमौपाधिकम्। तावन्मात्रादेवेन्द्रियादिनिरपेक्षादुपजातमित्येतावतैव तदौपाधिकमित्युच्यत इति[3] चेत्—न, समनन्तरप्रत्ययसाक्षात्कारमहिम्ना साक्षात्कारोत्पत्तावसाक्षात्कारानुत्पादप्रसङ्गात्। न चासाक्षात्कारिणः साक्षात्कारः कदाचिदुपपद्येत[4]। सहकारिविशेषादेवमपि स्यादिति चेत्? तर्हि यादृशि कार्ये[5] यादृगन्वयव्यतिरेकानुविधानं दृष्टम्, तादृशस्य [6]तत्र सहकारित्वमास्थेयम्। दृष्टं चोभयवादिसंप्रतिपन्ननिर्विकल्पके साक्षात्कारं [7]प्रतीन्द्रियार्थयोः सामर्थ्यम्, न[8] विकल्पस्य इत्युक्तप्रायम्॥

एवं तावदर्थसाक्षात्करणं स्वाभाविकम्। तन्नान्तरीयकतया इन्द्रियार्थसामर्थ्यसमुत्थत्वमस्य स्थितम्। अविसंवादित्वमप्यस्यानौपाधिकम्। तथाहि, यद्यस्य पारमार्थिको विसंवादः स्यात्, तदा प्रतीयमानोऽप्यौपाधिकोऽयमविसंवाद इति संभाव्येत, स च देशकालाकारकृतस्तावन्न भवति[9]। अननुगतमेवानुगततया दर्शयतीति चेत्—न, असाधारणस्य स्वलक्षणस्य विकल्पेनासंस्पर्शात्। संस्पर्शे वा तज्जन्यत्वप्रसङ्गः[10]। अजनकस्यैव तु वस्तुसतो विषयत्वे प्रत्यक्षत्वमर्थसामर्थ्यसमुत्थत्वेन व्याप्तमिति सुप्तप्रलापः। विकल्पस्तावत् साधारणं स्वरूपमुल्लिखन्नेव प्रवर्तयति। तच्च सर्वसामर्थ्यरहितम्। न चार्थक्रियार्थी तदसमर्थं दृष्ट्वा प्रवर्तते, ततोऽसमर्थमेव समारोपितसामर्थ्यं विकल्प्यते॥

तथा[11] च कथमस्य विपरीतारोपरूपस्य संवादो नामेति चेत्—न, यदि हि सामर्थ्यमेवारोपयेत्, असाधारणमेवोल्लिखेत्। न ह्यन्यदसाधारणाद्रूपात् समर्थं नाम तव[12] दर्शने। तस्मात् समर्थमिव तद्दर्शयति विकल्पः। इवार्थश्च [13]न तत्रारोप्यः, विकल्पार्थस्य समर्थेनासदृशत्वात्॥

नन्वसामर्थ्यव्यावृत्तिमात्रमेव सामर्थ्यं न तु तत्त्वान्तरम्, तस्य च न साधारणरूपविरोधः। तथा चैकात्म्यप्रथनं न विरुद्धमिति चेत्—न, अविरोधे सति समारोपा-

---

१. °मधिगच्छन्ति B २. नावस्तुतो वस्तु° M ३. °मित्येतावता तदौपाधिकमिति B ४. °दप्युत्पद्येत A ५. यादृशस्यान्वय° BM ६. तत्र om BM ७. °र्थसन्निकर्षयोः BM ८. त्वविकल्पस्येति JA ९. अस्ति BM १०. प्रसङ्गात् BM ११. तदा BM १२. सामर्थ्यम् BM १३. न om A

नुपपत्तेः। न हि यद् यत्राविरुद्धं सत् प्रथते तत् तत्रारोपितं [१]नाम। तस्माद् भेदाग्रहात् प्रवृत्तिः। न च स एव विसंवादः। तथा च सत्यालोचनमपि विसंवादि स्यात्, [२]कल्पनालोचनयोर्भेदानुल्लेखात्। एतेन स्वप्रतिभासेऽनर्थे अर्थाध्यवसायेन प्रवृत्तेरिति परास्तम्[३]॥

अनर्थत्वं हि विकल्पाद्भेदो विकल्प्यस्य स्यात्, आलोचनीयाद् भेदो वा? न तावत् कल्पनागोचरस्यालीकस्य कल्पनया अभेदः संभवति, येन भेदोल्लिखनमारोपः स्यात्। आलोचनीयाद् भेदेऽपि नाभेदप्रथेति[४] नारोपः। स्वप्रतिभासेऽनर्थ इति वचनात् नैष दोषः। स खल्वाकारो विकल्पादभिन्नोऽपि भिन्न आरोप्यत इति चेत्? यदि तावत् विज्ञाननयमालम्ब्यैतदुच्यते, तदालोचनस्याप्येषैव गतिरिति तस्याप्यारोपरूपत्वात्। ग्राह्याकारेऽप्रामाण्यं विकल्पस्यापि स्वात्मनि च[५] संवेदनत्वादुभयोरपि प्रामाण्यमेवेति न कश्चिद् विशेषः॥

अथ बाह्यमर्थमधिकृत्य प्रस्तुतेयं कथा? तथापि यादृशाकारो विकल्पस्तादृशाकार एव बाह्यतया प्रतिभासेत? न चासौ साधारणाकारः समस्ति[६]। ततो यदेतत् साधारणं रूपमाभाति तन्न [७]विकल्पाकारमभिनिविशते इति बहिरेवावतिष्ठते। बाह्यत्ववत् साधारणत्वमप्यस्यारोप्यत इति चेत्—न, असाधारण्यस्य[८] पारमार्थिकस्य क्वचिदप्यनुपलब्धेरारोपयितुमशक्यत्वात्। असदुल्लेखे त्वलीकालम्बनत्वमेव विकल्पस्याभ्युपगतं स्यात्। तत्र चारोपसंभावनैव नास्तीत्युक्तम्[९]॥

पूर्वापरयोर्विकल्पाकारयोरभेदानुसन्धानमेव साधारण्यमिति चेत्—न, आकारिणां भेदप्रतीतावाकाराणामेकत्वेन प्रतिसन्धातुमशक्यत्वात्, [१०]तयोस्तादात्म्याभ्युपगमात्। विकल्पस्यात्माप्याकारो भिन्नो बाह्यतयारोपितः। ततो विकल्पात्मनां भेदावसायेऽपि नाकाराणां भेदावसायः। ततस्तदेकतयानुसन्धानमिति[११] चेत्? हन्त, यद्ययमाकारो विकल्पात्मा तथेति प्रतीयेत, कथं बाह्यत्वेनारोप्येत? तादात्म्याप्रतीतिस्तूभयथापि स्यात्, अस्वसंवेद्यत्वाद् विकल्पस्य, स्वसंवेदनत्वेन वा, ततो भिन्नत्वात् तादात्म्यस्य। आद्यः तावत् सौगतैरनभ्युपगमादेव दुःस्थः[१२]। द्वितीयस्तु सर्वै रेवावगतः[१३]। अवगतं न तु[१४]

---

१. B JM damaged, A reads °रोपितं नाम। २. कल्पनीयालोचनीययोः BM ३. परास्तमिति BM ४. प्राप्येति B ५. आत्मनि M, स्वसंवे° A ६. संभवति BM ७. °ल्पात्मान° JA ८. साधारण्यस्य JA; असाधारणस्य B ९. °नैवास्तीत्युक्तम् BJ १०. तयोः om JA ११. °रोप्यते M १२. निरस्तः BM १३. अवगतः om JA १४. ननु M

निश्चितमिति चेत्—न, निश्चयानिश्चयलक्षणविरुद्धधर्मसंसर्गेण भेदापत्तेः। व्यावृत्त्योर्भेद एव न तु वस्तुनीति चेत्? अथ केयं व्यावृत्तिर्नाम? न किञ्चिदिति चेत्? एवमस्तु। तथा च नारोपवार्तापि। ततो नास्योपदर्शितार्थविसंवादगन्धोऽपि। असदर्थप्रकाशनमेव विसंवादनमिति चेत्? आस्तां तावदेतत्, यथाविषयमात्रमत्र विवक्षितम्[1], प्रकृतोपयोगात्। एवं चाविपरीतार्थत्वात् प्रामाण्यम्। प्रमाणस्य सतः साक्षात्कारित्वात् प्रत्यक्षत्वम्। अस्मदादिप्रत्यक्षत्वाच्च इन्द्रियार्थसामर्थ्यसमुत्थत्वम्। एवं सति सर्व एव **सौगतेन** प्रयुज्यमानाः कालात्ययापदिष्टतया प्रतिपक्षहेतवः [2]पदमप्यारोपयितुमसमर्थाः प्रागेव विकल्पस्याप्रत्यक्षतां साधयितुम्। तथापीदमवशिष्यते, यदेतावतापि न परमार्थसद्विषयस्य प्रामाण्यं साधितम्। तत्र चावयोर्विवाद इति तत्राह—**स्याद्विरोध** इति॥

ननु परमार्थसतोऽभिलापसंसर्गयोग्यता अशक्यव्युत्पादनैव क्षणिकत्वात् जगत इत्यत उक्तम्—**स्थेमभाजमिति**। ननु स्थैर्यसिद्धावपि जात्यादीनां दुरुपपादत्वात् कथं परमार्थसतोऽभिलापसंसर्गयोग्यतेत्यत उक्तम्—**जात्यादिमन्तम्**। **तथा चेति**॥

यद्यप्युक्तरूपार्थव्यवस्थापने सति कालात्ययापदिष्टोऽयं प्रसङ्गहेतुः, तद्दर्शने चापक्षधर्मः, न ह्यस्ति संभवो विकल्पस्यार्थसामर्थ्यसमुत्थत्वं[3] निश्चितमनिश्चितं च तदर्थस्य परमार्थसत्त्वम्, तथापि परोऽपि तन्निराकरणसिद्धयैव प्रत्यवस्थितो न राजाज्ञया निराकरणीयः। तस्मादापाततस्तत्सन्देहे सन्दिग्धविपक्षवृत्तित्वमेवास्त्वित्यर्थः। एतेन विपर्ययोऽपि निराकृतो बोद्धव्यः॥

ननु सन्तु जात्यादयः परमार्थभूतास्तथापि यदि तेऽपि पिण्डात्मभूताः कथं भेदेन प्रतिभासरेन्? तथा अप्रतिभासमानाश्च कथं विशेष्यतया विशेष्यमवच्छिन्द्युः, अनात्मभूताश्चेत् कथं सामानाधिकरण्यमश्नुवीरन्नित्यत आह—**न चेति**। तथापि शब्दो भिन्नात्मा अतद्वृत्तिः कथमवच्छेदकः स्यात्, यदि तद्गतस्तदात्मा वा न प्रतीयेत। एवमेव त्ववच्छेदेऽतिप्रसङ्गः। अवच्छेदप्रतीतौ तु भ्रान्तिरित्याशङ्कते—**न चेति**॥

अभेदकल्पनमवच्छेदकल्पनम्। तच्च तदात्मतया तत्संसर्गितया वा? उक्तमेतत् इति। न हि तद्वृत्तितयैव तत्संसर्ग इति नियमः[4], अपि तु तटस्थेनापि ज्ञानेनेव ज्ञेयस्य वाचकेन वाच्यस्य न विरुद्ध इत्यर्थः॥

---

१. तावद्यथाविषयत्वमात्रं विव° M, °विषयत्वमात्रमत्र विव° M २. पदमात्रमारो° A ३. °सामर्थ्य° om BJ; सामर्थ्यासमुत्थत्वं निश्चितं च A ४. तत्संसर्गिनियमः BM

ननु तटस्थोऽप्ययमवच्छेदको न सत्तामात्रेण, अपि तु ज्ञातः। न तु शब्दज्ञाने तदानीं श्रवणस्य व्यापारः, विषयस्य विप्रयोगात्। सव्यापारे चक्षुषि मनसस्तत्र [1]व्यासङ्गाच्च। तस्माद्यथा [2]स्वप्नावस्थायामिन्द्रियोपरमेऽपि पूर्वसंस्कारपाटवान्मनसैवैकेन अविद्यमाना अप्यर्था विषयीक्रियन्ते, तथा अशब्दव्यावृत्तिविकल्पजनितवासनापटुना चक्षुषैव मनसा वा शब्दोऽपि[3] विषयीक्रियत इत्यविद्यमानशब्दालम्बनत्वाद् भ्रान्तिरेवेत्यत आह—**न च शब्दार्थयोरिति**। एकेन्द्रियग्राह्यतेत्यत्र प्रसङ्ग इति शेषः॥

अयमर्थः, यदि मनोऽभिप्रायेणैकेन्द्रियग्राह्यता प्रसज्यते न किञ्चिदनिष्टम्, तस्य सर्वविषयत्वात्। अथ बाह्येन्द्रियमभिप्रेत्य, तत्रापि किं नाम योजनात्मके विकल्पे, किं वा जात्यादियोजनात्मके? [4]नामसंयोजनात्मकेऽपि किं नाम्नो विशेषणत्वं विवक्षित्वा, किं वोपलक्षणत्वमिति? तत्र नाम्नो विशेषणत्वपक्षस्तावदनभ्युपगमेनैव परिहृतः। उपलक्षणत्वं तु तटस्थस्यैवेति प्रतिपादितमेव। तच्चेन्द्रियान्तरोपनीतस्यापि निर्वहतीति नैन्द्रियके विकल्पे [5]नामस्फुरणमुपयुज्यते। जात्यादियोजनायां तु शब्दस्मरणस्यापि नास्त्युपयोगः, प्रागेव तद्ग्रहणस्य, तस्यानवच्छेदकत्वात्। केवलं किमिति नियमतः स्मर्यते शब्द इत्यवशिष्यते। तत्रेदमुक्तम्—**किं त्विति**॥

तत्किमिदानीं शब्दस्मरणस्य न कश्चिदस्त्युपयोग इत्यत आह—**इन्द्रियजविकल्पोत्पादं प्रति**। व्यवहारं प्रति [6]त्वस्येवोपयोग इत्यर्थः। **सङ्केतसमयेति**। पूर्वावस्थास्मरणग्रहणयोरन्यतरोपलक्षणपरम्। शब्दस्तु न निवेशयत्यात्मानं गृहीतः स्मृतोऽपीति शेषः। चक्षुषापि[7] स एवायं [8]दृश्यते, न तु पूर्वहृदयस्थः शब्दोऽपीत्यर्थः। एतदेव व्याख्याय श्लोकान्तरेण द्रढयति—**अनेन हीत्यादि**। **न तु शब्दनिवेशनमपीति**। शब्दरूपमपि [9]विषयमित्यर्थः॥

यद्यपि संज्ञा हीत्यादि श्लोके सा तटस्थेत्येतावदेव प्रकृतोपयोगि, तथाप्यनागतं प्रतिविधित्सुरवयवान्तरं व्याचष्टे—**नार्थेन्द्रियेति**। अर्थसहितमिन्द्रियमर्थेन्द्रियम्। यद्यपि क्षणभङ्गपक्षेऽपि,

प्रत्येकमसमर्थेषु येषु संभाव्यते गुणः।
संहतौ हेतुता तेषाम्

---

१. प्रसङ्गा॰ BM २. सुप्ता॰ BM ३. अपि om J ४. नामसंयोजनात्मके om BM ५. शब्दस्फुरण॰ BM ६. त्वस्यैवोप॰ BM ७. अपि om J ८. गृह्यते MB var ९. विषयः BM

इति न्यायेनातिशयपरम्परोत्पादेन पूर्वावस्थास्मरणादिसहकारिमध्यमध्यासीनं यदेवेन्द्रियं तदेव विकल्पजनकं नेतरदिति नास्ति कश्चिद् विरोधः। तथापि विकल्पस्य स्थिरविषयत्वात् क्षणिकत्वस्वीकारे निर्विषयत्वमापाद्येतेति निस्फलः प्रयासः स्यादिति मन्यमानः स्थैर्यमालम्ब्यैव[1] परिहरति—**न च जनकत्वेति**। **स्यादेतदिति**। स्यादेतत्सहकारित्वं संस्कारस्येन्द्रियं प्रति, यद्यनयोर्विषयभेदो न स्यादित्यर्थः। **तत्किमिति**। इन्द्रियसंस्कारयोः परस्पराधिपत्यं विषयभेदात्[2] कीदृशान्न भवति किं प्रतिपत्त्यनुबन्धिनो, व्यापारानुबन्धिनो वा? न तावदाद्यः, तथाविधविषयभेदेऽपि गन्धज्ञानचक्षुषोः परस्पराधिपत्येन रूपज्ञानोत्पत्तिदर्शनात्। द्वितीयस्त्वसिद्धः, तस्य कार्येणानुविधीयमानतामात्रोन्नेयत्वात्। एतच्चोभयमप्युभयवादिसिद्धमित्यर्थः॥

ननु व्यापारानुबन्धितया संस्कारस्य यदि पुरोवर्ती विषयः, तदा अतीतावस्थास्फुरणं न स्यादेव। न ह्यन्यविषयो व्यापारः, अन्यत्र क्रियेत्यभ्युपगमः। तस्मादतीतविषयत्वात् क्रियायाः व्यापारानुबन्धितयापि संस्कारस्य स एव विषयः, न तु पुरोवर्ती। एवमिन्द्रियस्यापि यद्यतीतावस्थस्यैव[3] व्यापारवतो विषयः, तदा पुरोवर्तिविषयस्फुरणं न स्यात्। तस्मात् तस्यापि व्यापारवतः[4] पुरोवर्त्येव विषय इति व्यापारतोऽपि कथमेकविषयतेति? समनन्तरप्रत्ययस्तु प्रतिपत्तितो गन्धविषयोऽपि व्यापारतो रूपविषयः। रूपविषयव्यापारमेव चक्षुरपेक्षते। न हि चक्षुष्यपि सहकारिणि गन्धज्ञानाद् गन्धज्ञानम्, अपि तु रूपज्ञानमेवेति॥

नैतत्साधीयः, सहकारीभेदादेव व्यापारभेदस्यापि नियमात्। न हि चक्षुरादिसहकारिविरहेऽपि गन्धज्ञानस्य रूपविषयव्यापारनियमः। तथा सति गन्धज्ञानाद् रसनादिसहकारिणोऽपि रूपज्ञानमेव स्यात्, न रसादिज्ञानम्। तस्मात् केवलस्य चक्षुषो यद्यपि रूपमेव व्यापारविषयः, तथापि पूर्वावस्थासंस्कारसहकारिमतस्तद्वानेव पुरोवर्ती व्यापारविषय इति न कश्चिद् विरोधः। पूर्वावस्था चक्षुषा असन्निकृष्टा कथं तद्व्यापारविषय इति। अवशिष्टं तु शङ्कते—**नन्वतीतेति**। अत्र तत्संबन्धमेव तद्व्यापारविषयत्वं स्यात्, संबन्धस्य तद्व्यापकत्वं वा? आद्यं निराकरोति—**तत्किमिति**। द्वितीयं शङ्कते—**नन्वसंबद्धमिति**[5]॥

प्रधानव्यापारविषयता ह्यवान्तरव्यापारविषयतया व्याप्ता, सा चातीतावस्थातो निवर्तमाना तामपि निवर्तयति। अथ सविकल्पके जनयितव्ये पूर्वावस्थास्मरणमेवावान्तर-

---

१. एव om BM　२. कीदृशात् om M　३. अतीतावस्थैव JA Bvar
४. ०वतोऽपि JA　५. बंधमिति BM

व्यापारो न तु विषयसम्बन्धः, तदा लक्षणविरोधो दूषणमित्यर्थः। **मा भूदिति**। **इन्द्रियगोचरः** इन्द्रियसन्निकर्षगोचर इत्यर्थः। **न चेति**। अयमाशयः, न तावत् सर्वथैवातीतावस्था नेन्द्रियसन्निकृष्टा, संयुक्तविशेषणतायाः संभवात्[1]। अस्यापि [2]संयुक्तसमवायवत् प्रत्यक्षज्ञानोत्पादकतया सन्निकर्षपदेन संग्रहात्। यद्यपि समवायेतरभावरूपधर्मेषु संबन्धान्तरगर्भ एव विशेषणविशेष्यभावः, तथापि विद्यमानधर्मविषयैव सा व्यवस्थितिरिति न कश्चित् सूत्रविरोध इति यद्यपि रहस्यम्, तथापि अतीतावस्थायाः संबन्धानभ्युपगमेऽपि न काचिल्लक्षणक्षतिः[3]। न हि यावत्प्रत्येतव्यगोचर[4] इन्द्रियसन्निकर्ष इति सूत्रम्। किं तर्हि? इन्द्रियार्थसन्निकर्षजनितं विज्ञानं[5] प्रत्यक्षफलम्। तथाविधफलविषयोऽर्थः प्रत्यक्षः। तथाविधफलसाधनं प्रत्यक्षं प्रमाणमिति॥

स्यादेतत्। कार्यमेकमधिकृत्येन्द्रियसन्निकर्षसंस्कारयोः परस्परसहकारिता, तदेव त्वेकमनयोः कुत इत्याशयवान् चोदयति[6]—**ननु पूर्वापरेति**। सूचीकटाहन्यायेन पश्चादुक्तमपि प्रथमं विवृणोति—**तथा हीति**। यद्यपि तदित्युल्लेखो न सर्वविकल्पव्यापी, तथापि प्रतिसन्धानज्ञाने तावदस्ति। तस्य च प्रामाण्यं स्थिरवादिभिरवश्याभ्युपेतव्यम्। अन्यथा सर्वमाकूलनविशीर्णमापद्येत। परेणापि तदेव विशेषतो निराकर्तव्यम्। तन्निराकरणेनैव हि जात्याद्यभावे अप्रतिसन्धानात्मकस्यापि विकल्पस्य प्रत्याख्यानमयत्नसिद्धमित्यभिसन्धिः॥

ननु विरुद्धधर्मसंसर्गोऽपि स्यात्, न च भेद इत्यत आह—**त्रैलोक्यस्यैकत्वप्रसङ्गात्**। तथा च भेदव्यवहारस्याकस्मिकत्वप्रसङ्ग इत्यर्थः। **विषयभेदश्चेति**। यद्यपि विषयभेदवतोऽपि सर्वज्ञविज्ञानस्यैकत्वमक्षतमेव, तथापि [7] क्षणिकानेककालीन(?)-नीलालम्बनत्वमेव यदि प्रतिसन्धानस्य परोऽभ्युपगच्छेत्, न तस्य काचिदिष्टसिद्धिः। नाप्यस्माकमिदमनिष्टं किं तु तदपरिस्फुरणमेव[8] विकल्पे। तस्मादारोपितैकत्वविषयत्वमस्य पारमार्थिकैकत्वविषयत्वं वा? तत्र प्रथमं यदि परोऽभ्युपगच्छेदनुकूलयेदेवास्मान्। तस्मात् नानावस्थाविशिष्टपारमार्थिकैकविषयतयास्त्येकत्वं पराभिप्रायगोचरः। तच्च विषयभेदापादनेनैव निरस्यत इत्यभिसन्धिः॥

**अत्रोच्यत** इति। यद्यपि तदिदमितिज्ञानं पूर्वावस्थायामप्यपरोक्षमेव। न हि तदित्युल्लेखादेव[9] परोक्षत्वम्। तथा सति शाब्दलैङ्गिकविकल्पानां तदित्युल्लेखविरहिणाम्

---

१. सत्त्वात् BM २. संयोगादिवत् J ३. ॰स्थितिः J ४. ॰गोचरः om BM
५. सन्निकर्षजं ज्ञानं M ६. देश्यश्चेति Bvar ७. लक्षणकानेककालानेकनीला॰ A
८. ॰मिदमनिष्टं किं तु तदप॰ om BM ९. उल्लेख्यदेव B

अपरोक्षत्वप्रसङ्गात् । नापीदमास्पदत्वादेव साक्षात्कार इति बौद्धस्याभ्युपगमोऽपसिद्धान्तप्रसङ्गात् । किं तु सन्निहितविषयमसन्निहितविषयं वा यदेव लिङ्गादिनिरपेक्षेण इन्द्रियेण विज्ञानं जन्यते, तदेवापरोक्षरूपं समुत्पद्यते[1] । अनिन्द्रियजं तु परोक्षमिति विभागः । [2]तत्र परोक्षमपरोक्षं वानुभूतावस्थाविशिष्टविषयतया तदित्युल्लिख्यते । सन्निहितविषयतयेदमिति । सोऽयं विषयकृतो विशेषः । तथाप्यभ्युपगमवादेऽपि न कश्चिद् विरोध इति प्रतिबन्दिग्रह इति मन्तव्यम् । तस्माद् विषयभेदादविरोध इति त्वया समाधातव्यमिति चेत् ? नन्विहापीति ॥

तत् किमिदानीं विकल्पविकल्पनीययोर्यथा भेदस्तथैव तदिदन्तास्पदयोरपीति[3] ? नन्वेवं सति दत्तः स्वहस्तो बौद्धानामित्यत आह—सम्बन्धेति । विशेषणे उत्तरत्राप्येवम्, विशेष्यं त्वेकमेव । तत्र चापरोक्षत्वमेवास्येत्याशयः[4] । योऽपीति । अत्रापि नानादिग्देशसम्बन्धः प्रतिबन्दीकर्तव्यः ॥

ननु प्रत्यभिज्ञानान्नानाकालसंबद्धैकत्वसिद्धौ परस्पराविनाभावभङ्गप्रसङ्गः[5], तच्च लूनपुनर्जातकदलीकाण्डादौ व्यभिचारदर्शनादप्रमाणमेव । न च कदलीकाण्डप्रत्यभिज्ञानतः पद्मरागप्रत्यभिज्ञानस्य कश्चिद् विशेषमुपलभामहे[6] । ननु नानादिग्देशसंबद्धस्यापि [7]तच कदाचिदेकत्वमुपलभ्यते, तत् कथं तस्याप्येकत्वनिश्चयः ? अथ नानादिग्देशसंसर्गः स्वाश्रयं भेदयित्वा न निवर्तत इति निःस्वभावतां वापादयेत्, अनैकान्तिको वा स्यात् । अतो नायं विरुद्धः । सिद्धास्तर्हि संयोगावयव्यादयः । तुल्यं चैतत् कालभेदेऽपि । तथा हि यदि पूर्वापरकालसंबन्धो[8] वस्तुनि विरुध्येत, विज्ञानेऽपि विरुध्येत । तथा च विज्ञानमप्येकमतीतवर्तमानविषयं न [9]स्यात् ॥

एवं च बुद्धीनां नियतार्थतया प्रतिसन्धानगन्धोऽपि न स्यात् । तथा च मूलाभावान्निरीहं जगज्जायेत । सर्वज्ञश्च दत्तजलाञ्जलिः प्रसक्तः । [10]अतीतवर्तमानविषयत्वेऽपि नैकं ज्ञानमतीतं वर्तमानं च स्वीक्रियत इति चेत् ? अथ[11] किमिदं च[12] वर्तमानत्वम् सत्त्वं[13] सदन्तरसंबन्धो वा ? एवं चातीतत्वमपि नष्टत्वं नष्टान्तरसंबन्धो वा । तत्र सदन्तरनष्टान्तरसंबन्धः प्रतिसन्धाने सर्वज्ञविज्ञाने चास्त्येव नष्टानष्टविषयत्वात् ।

---

१. °परोक्षमुत्पद्यते BM २. तच्च BM ३. इति om JB var ४. °क्षत्वमस्त्येवेत्याशयः B var ५. °संबन्धैकत्व° BM ; °स्पराभावाविनाभावभङ्गः BM ६. कश्चिद् विशेष उपलभ्यते BM ७. °संबन्ध° BM ८. °संसर्गो BM ९. °विषयि J १०. °तानागतवि° JA ११. तत् BM १२. च om BM १३. °नत्वं सत्त्वम् om BM

तदविषयत्वे प्रतिसन्धानत्वसर्वज्ञत्वानुपपत्तेः । सत्त्वनष्टत्वे परस्परं विरुध्येते, ते चैकत्र प्रतिसन्धाने न स्त इति चेत् ? एवं तर्हि पद्मरागमणिरप्युत्पत्तेरारभ्य स्वावयवविभागपर्यन्तं सत्स्वरूपः । [१]नास्य नष्टत्वसंसर्गः । स एव तु सता केनचित् संसृष्टः केनचिदसता प्रतिसन्धानमिव [२]सदसद्भ्यां विषयाभ्यामिति । तन्नास्ति विरुद्धधर्मसंसर्गः । ततः [३]परिमाणभेदादयो विरुद्धधर्मसंसर्गा वक्तव्याः । ते यत्र पद्मरागादौ न सन्ति तत्रौत्सर्गिकमेकत्वमेवेति समः समाधिरित्यभिप्रायेण देशमन्तर्भाव्योपसंहरति—**तस्मादिति** । न चान्यस्य संबन्धिनः कालस्य भेदो विरुद्धधर्मसंसर्गः अन्यस्य पद्मरागमणेर्भेदं नानात्वम् । **न चेन्द्रियेति** । यदि विकल्पजातीयं प्रतीन्द्रियार्थसन्निकर्षो न कारणं व्यभिचारादिति परस्याभिप्रायस्तदानुज्ञैवोत्तरम् । न हि वयमपि विकल्पमात्रं प्रति तस्य कारणत्वं ब्रूमः, किं तु साक्षात्कारिविज्ञानं प्रति । न चासौ इन्द्रियार्थसन्निकर्षमन्तरेणापि भवतीति सारम् । निर्विकल्पकप्रतिबन्दिग्रहस्त्विममर्थं सुखेन ग्राहयितुम् ॥

स्यादेतत् । विकल्पस्योभयथासंभवे हि सामान्यव्यभिचाराद्विशेषमादाय कार्यकारणतावधारणं स्यात् । न तु साक्षात्कारादिरस्य विशेषोऽस्ति, औपाधिकत्वात् तस्येति आशङ्क्य निराकरोति—**न च विकल्पगत** इति । विकल्पगतः साक्षात्कारलक्षणो धर्मस्तावदनुभूयत इत्यविवादम् , तस्यौपाधिकत्वं न तावदानुभविकमित्याह—**सर्वा एव हीत्यादि** । तस्माद् दर्शनव्यापारा विकल्पा इन्द्रियार्थसन्निकर्षजन्मान इति योजना । नाप्यौपपत्तिकम् , उपपत्तेः प्रागेव [४]निराकृतत्वादित्याशयः । नन्विन्द्रियविषय एव यदि शब्दोऽपि प्रवर्तेत, सोऽपि साक्षात्कारिणमेव [५]विकल्पमादध्यात् , इन्द्रियमपि चोत्प्रेक्षाव्यापारिणम् , विषयविशेषमन्तरेण ज्ञाने विशेषाभावात् । तस्मात् शब्दैकविषयतया प्रवर्तमानो विकल्पो नेन्द्रियविषयं स्पृशति, तदस्पर्शे च न स्वाभाविकमस्य साक्षात्कारित्वमित्याशयवानाशङ्क्य निराकरोति—**न च शब्देति** । एकत्रार्थे इन्द्रियं कारणम् अन्यत्र तन्निरपेक्षः शब्दादिरित्यर्थः । तुच्छतयोपेक्षणीयमपि शिष्यहिततया दूषयति—**न च वह्नीति** । वह्निज्ञानादुष्णज्ञानादित्यर्थः । शीतद्रव्यापगमः, तदपगमे वा तदनुपलम्भः, तद्धेतुकदुःखाभावो वा शीतापनोद इत्युच्यते, स चोष्णद्रव्योपगमसाध्यो न तु तदुपलम्भसाध्यः । अन्यथा सन्निपातमूढस्य स्वेदनेऽपि दोषापगमो न स्यात् , उष्णद्रव्यानुपलम्भात् । तुहिनाचलगुहामध्यवर्तिनि च सर्वज्ञे वडवानलसाक्षात्कारवति तुहिनाचलविलयः स्यादित्यर्थः ॥

---

१. नास्पष्टत्व° BM २. सद्भ्यां BM ३. परिमाणादयो BM ४. परास्तत्वा° BM ५. प्रत्ययमा° JAB var

यस्यापीत्यादिवार्त्तिकार्थं दूषयति—**न चैकेनेति**। उपाधयः सत्त्वादयस्तैः विशिष्टत्वं[1] तैर्विशेषणैः सम्बन्धः। अयमर्थः। एकेनैव स्वभावेन तावदुपकरोति सर्वोपाधीनामिति परमार्थः॥

तत्रोपकारकस्यैकस्वभावतया उपकाराणामवच्छेदानामुपकार्याणां चोपाधीनां तदेकत्वं स्यात्, यद्युपकारस्वभावान्तर्भूतत्वं तेषामभ्युपेयेत, न चैवमातिष्ठामहे। त्वयाप्येवमेव समर्थनीयं किं त्वलीकविषयतयेति विशेषः। स एष[2] न्यायो यदि परमार्थसत्यपि स्यात्, [3]कीदृशो दोषः? न केवलं काल्पनिके व्यवहारे तवेदं समर्थनमपि तु पारमार्थिकेऽपीत्याह—**अपि चेति**। परमाणुस्वभाव इति षष्ठीतत्पुरुषः। परमाणवो ज्ञानस्य स्वभाव[4] इत्यपि द्रष्टव्यम्। परमाणुस्वभावत्वे ज्ञानस्यापि नानात्वप्रसङ्गात्। तथा चैकेकपरमाणुनियमे स्थूलप्रतिभासो भ्रान्तोऽपि न स्यात्। ज्ञानस्वभावत्वेऽपि च [5]परमाणूनामप्येकत्वप्रसङ्गादमूर्तत्वादिप्रसङ्गाच्चेति स एव दोष [6]इत्याद्युक्तानं दूषणमुत्सृज्य अन्यमाह—**तेषां सर्वान् प्रतीति**। परमाणूनामेकज्ञानस्वभावत्वे वा न ते द्वितीयेन विदिता स्युरित्यपि द्रष्टव्यम्। यद्यपि तादात्म्याभावेऽपि ज्ञानज्ञेययोः कार्यकारणभावः संबन्धो विषयविषयिनियमार्थं **बौद्धेन** स्वीकृतस्तथापि कार्यकारणभावेऽपि को नियन्तेति[7] तुल्योऽनुयोगः। अतः स्वभावेनैवोत्तरयति—**स्वभाव एवेति**॥

भावाभावयोः समवायतद्वतोर्विषयविषयिणोश्च वयमपि स्वभावेनैव परस्परोपहितं सम्बन्धमातिष्ठामहे। द्रव्यगुणकर्मजातितद्वतां यद्यपि स्वभावेनैवोपाध्युपाधिमद्भावः, तथापि सम्बन्धोऽप्यनुभूयमानो विना बाधकं नोपेक्षितुं युज्यते। यथा[8] स्वाभाविके विषयविषयीभावे कार्यकारणभावस्त्वया नोपेक्षितः, तस्मादतिरिक्तसम्बन्धे क्षणभङ्गसाधनं बाधकमवशिष्यत इत्यर्थः॥

न तावद्विशिष्टव्यवहार एव नास्ति, तस्य स्पष्टतया [9]निह्नोतुमशक्यत्वात् तदभावे सर्वव्यवहाराभावप्रसङ्गाच्च। तस्मादस्मदुक्तप्रकारेर्ष्यया प्रकारान्तरेणायमुपपादनीयः। तत्राह—**भिन्नज्ञानगोचरत्वेऽपीति**। अपिशब्दः [10]चोद्याभासतुल्यतामात्रेण। नन्वस्ति व्यवहारो न तु वास्तवः, स च यथाकथञ्चिद्वासनाद्वारेणापि निर्वहेत्, येषां त्वयं वास्तवः, तैरर्थद्वारैवास्य निर्वाहश्चिन्तनीय इत्याशङ्कते—**ताभ्यामिति**॥

---

१. °विशेष्यत्व JAB var. २. एव BM ३. को BM ४. स्वभावाः BM ५. एकस्वभावत्वप्र° B var ६. °द्युत्तानदोषमु° BM ७. न कोऽपि नियन्तेति B var ८. न वा (?) J ९. अपह्नोतुम् BJ १०. देश्याभास° BM

त्वदुक्तमेव वासनाद्वारमुपादाय यदि वास्तव एवायं व्यवहारः स्यात् , तदा कीदृशो दोष इत्याशयवानाह—**अस्तु तावदिति**। तथापि वास्तव एवायमित्यत्र किं प्रमाणमित्यत आह—**तथा सतीति**। अस्येन्द्रियार्थसन्निकर्षजत्वे स्वाभाविकं साक्षात्कारित्वमेव प्रमाणमित्यर्थः। **निर्विकल्पकोपधानं कल्पेत** विनाप्रमाणमिति शेषः। यदि हि स्वकारणबलेन नोत्पत्तेरविचारकत्वं मानसस्याप्यविचारकत्वप्रसङ्ग इत्याशयवानाह—**हन्तेति**। मनसः सर्वविषयत्वं न तावद् व्यापारानुबन्धितया परस्य विवक्षितम् , इन्द्रियार्थसन्निकर्षस्यापि[1] संस्कारसहितस्य तथाभावव्यवस्थापनात्। तस्मात् प्रतिपत्त्यनुबन्धितया वा स्यात् , सर्ववासनाधारतया वा ? आद्यं दूषयति—**यदि पूर्वकमिति**। अस्माकं तु मनः सर्वविषयकमपि न प्रतिपत्त्यनुबन्धितया[2] असर्वविषयमप्रतिपत्तिरूपत्वात् इति भावः। न च सकलसंस्काराधारतयेत्याह—**अचेतनतया न [3]विचारकम्** इति। विचारौपयिकसकलवासनानाधारत्वादित्यर्थः। त्वदभिप्रेतस्य च मनसः सकलवासनाधारकत्वं निषेत्स्यत इत्यनेनाभिप्रायेणाह—**तस्मादात्मैवेति**। स्थितं ज्ञानं ज्ञानवासनेत्यर्थः। अत्र हेतुः—**स हि बौद्धेति**। अत्र प्रमाणम्—**गम्यत** इति। अतः स्मरणेऽस्य[4] सामर्थ्यम्। चो हेतौ॥

ननु यद्येवंभूतचेतनाधिष्ठितमिन्द्रियम् , तर्हि निर्विकल्पकोत्पत्तिकाल[5] एव लब्धसंस्कारसचिवतया विकल्पमेव जनयेदित्यत आह—**स खल्विति**। प्रागालोच्य उद्बुद्धसंस्कारसमुपजातस्मृतिसहायः पश्चाद् विकल्पयतीति योजना। एवं तर्हीन्द्रियार्थसन्निकर्षादालोचनम् , संस्कारोद्बोधः, ततः स्मृतिः, तत्सहायश्च विकल्पयतीति न[6] चक्षुषः कश्चिदुपयोग इत्यत आह—**चक्षुषेति**॥

नन्वेवंभूता सामग्री मिलितापि यदि चक्षुर्व्यापारविरहे न विकल्पिकां धियम् उपजनयेत्, ततस्तस्यापि कारणत्वं कल्प्येत, न त्वेतदस्तीत्यत आह—**गौरयमिति**। एतेन साक्षात्कारं प्रति तस्यान्वयव्यतिरेकौ स्त इति दर्शितम्। एतदेवाभिप्रेत्योत्तरश्लोकमाह—**यथाहेति**। सह चेतनया वर्तत इति सचेतनः॥

तथापि क उपकारः समर्थित इत्यत आह—**तेनेति**। ज्ञाप्यज्ञापकभाव इत्युपलक्षणम् , कार्यकारणभावोऽपि न सर्वत्रास्तीति द्रष्टव्यम्। क्वचित्तु द्रव्यगुणकर्मणाम्

१. इन्द्रियार्थस्यापि JA २. न प्रतिपत्त्यनुबन्धितया om J, °मपि व्यापारानुबन्धितया सर्व° A ३. विचारकमिति BM ४. स्मरणस्य B ५. °कोत्पत्ति° A ६. विकल्पयति। न तु JA

अस्तीति नोदाहृतः । तदर्थालोचनानुगतं स्मरणं ययोस्ते विशेषणविशेष्ये तथोक्ते तयोः । अतदधिकरणव्यवच्छेदप्रतीतिजननमेव विशेषणेन विशेष्यस्योपकार इत्यर्थः । यद्यपि स्वाभाविको विशेषणविशेष्यभावो नोपकारमपेक्षत इति तत्र तत्र वक्ष्यति । न चोपकार्योपकारकभावोऽप्युपकारान्तरप्राप्तः[1], तथा सत्यनवस्थापातात् । तथापीह संभवप्राचुर्येणाभिधीयत इति मन्तव्यम् ॥

ननु यदि स्वाभाविकमनयोर्विशेषणविशेष्यत्वम्, प्रथमतः स्वभावे गृह्यमाणे किं न गृहीतम्, न च स्वभावस्तदानीं न गृहीत इत्यत आह—**अर्थौ हीति** । न खलु रूपपरमाणुषु स्पर्शादिपरमाणवोऽपि स्वभावतः स्थिता इत्येतावतैव प्रतीतिपथमवतरन्ति । सामग्र्यभावान्न तथेति चेत् ? स[2] इहापि समान[3] इत्यर्थः । अत एव प्रमाणं कृत्स्नवृत्तीति मत्वा यदापादितम्, तदपि नास्तीत्यत आह—**तेनेति** ॥

स्वरूपाभिप्रायेण कृत्स्नवृत्तित्वं प्रमाणस्यानुमन्यामहे एव, स्वाभाविकसमस्तसम्बन्धाभिप्रायेण तु सर्वज्ञेतरधियामप्रामाण्यमापादयतीति उपसंहारं स्थाने संकलय्याह—**सविकल्पकं त्विति** । पश्चादपि जायमानमिति योजना [4]आलोचनादिति शेषः । तस्मात् सर्वं तुल्यम् । क्षणभङ्गे परं विवादोऽवशिष्यत इत्याशयवानाह—**अक्रमस्यापीति** । **विवादाध्यासिता** इति । साक्षात्कारिण इत्यर्थः । तेन तदितरव्युदासः । सिद्धसाध्यताव्युदासार्थं **स्वगोचर** इति । पीतः शङ्ख इत्यादिना व्यभिचारनिवृत्त्यर्थम् **अव्यभिचारित्वे सतीति** । अत्र च कृतः प्रयत्नः ॥

न चैतन्मन्तव्यमिति भाष्यमिति इन्द्रियार्थसन्निकर्षमन्तरेणापि संशयोत्पत्तिदर्शनात्[5] अतत्कारणतया प्रसङ्ग एवास्य नास्ति । कुतोऽन्वाचीयमानेऽपि व्युदास इति पूर्वः पक्षः । यद्यपि न सर्वः संशयः इन्द्रियार्थसन्निकर्षजस्तथापि साक्षात्कारवानवश्यं तज्जन्यः । तस्माद् व्युदासोऽन्वाचीयत इति प्रकारणार्थः ॥

**स्यादेतदित्यादि** । मन एव केवलमिन्द्रियनिरपेक्षं बहिर्व्याप्रियमाणं साक्षात्कारिसंशयादि जनयति, दृष्टो ह्यस्यानुव्यवसीयमानज्ञानविशेषणे घटादौ व्यापारः, इन्द्रियव्यापारविगमेऽपि सौदामिनीसंपातादौ [6]सकृदुपजातस्यार्थनिश्चयस्य समन्धकारेऽप्यनुव्यवसीयमानत्वात्, तस्य चानुव्यवसायस्य साक्षात्कारिजातीयत्वात्[7] । तस्मात्

---

१. ॰व्याप्तः MB var  २. स om JA  ३. समानम् JA  ४. आलोचना॰ om A  ५. दर्शंने B var  ६. ॰दुपजायमानस्या॰ BM  ७. साक्षात्कारित्वात् BJ

अप्रसङ्ग एव पुनरापतित[1] इति। मनसा ह्यनुव्यवसीयमानज्ञानलक्षणविशेष्यसन्निकृष्टेन असन्निकृष्टो घटादिरवच्छेदकतया [2]व्यवसीयते। चक्षुषेव घटसन्निकृष्टेन प्रागुपलब्धा तदवस्था। संशयज्ञानं तु नोर्ध्वार्थोपलब्धिविषयम्, नापि स्थाणुपुरुषस्मृतिविषयम्, किं त्वनिर्धारितस्थाणुपुरुषत्वोर्ध्वपदार्थविषयम्[3]। न च[4] तत्सन्निकृष्टं मनः। बाह्येन[5] विशेष्येणाप्यसन्निकृष्टं मनः कथमिव [6]ज्ञानमुत्पादयेत्? उत्पादने वान्धबधिरादेरप्युत्पादयेत् इति सिद्धान्तः॥

**तत्पूर्वं व्यवसायोत्पत्तौ**। स्वविषयप्राप्तिसम्पत्तय इति शेषः। **तथा च संशयज्ञानोत्पादेऽपीति** सहकारितयेति शेषः। **अव्यापकत्वेनेत्यादि** चोदयति पार्श्वस्थः। परिहरति पूर्वपक्षी। पुनः पार्श्वस्थस्य शङ्का मा भूदिति। अत आहेति। पूर्वपक्षी। **न च सुखादौ प्रमाणान्तरमस्ति**। प्रत्यक्षं विहायेति शेषः। संवेदनत्वे हि तेषां स्वसंवेदनता शङ्कास्पदमपि स्यादिति शेषः। नन्विन्द्रियस्य वै सत इति वदतो **भाष्यकृतो** मनस इन्द्रियत्वमिष्टमेवेत्यत आह—**न च तदिति**। मनस इन्द्रियत्वाभ्युपगमो **वात्स्यायनीये गौतमीयसूत्र**विरुद्ध इत्यर्थः। मा भूद् विभागपरमिदं **सूत्रम्**, तथापि **सूत्रकारस्य** मन इन्द्रियं यद्यभिमतमिन्द्रियप्रकरण एव लक्षयेदित्यत आह—**तत्र चेति**। इन्द्रियत्वेन [7]तत्प्रकरण एवाभिधाने प्राप्ते यदन्यत्र करोति तेनाधिकमस्य[8] किञ्चिद् रूपं विज्ञेयमिति सूचयति, न त्विन्द्रियत्वमेव न सहत इत्यर्थः। दर्शयिष्यति हि **वार्तिककार** [9]इत्यागामिका फक्किका भ्रमनिरासार्थं [10]भूताभूतेति। शब्दोऽत्र दुष्टो, न त्वभिप्राय इति। उपलक्षणं चैतत्। सगुणानां चक्षुरादीनामिन्द्रियभावो, मनस्तु न सगुणमिन्द्रियमित्यत्रापि यो विशेषगुणो येनेन्द्रियेण गृह्यते तज्जातीयेन गुणेन[11] सह वृत्तिः सगुणत्वम्। ग्राह्यविशेषगुणजातीयविरहश्च मनस इति यद्यभिप्रेतं **भाष्यकृता** तदैतदपि वैधर्म्यमेव, किं त्वेभिरक्षरैरेतदप्यभिधातुं न शक्यते[12]। विभक्तिविपरिणामेन **तु भाष्यं** सुगमम्। तथा हि, इन्द्रियभूतानामेषां सगुणत्वं ग्राह्यैर्गुणैः सह संबन्धश्चक्षुरादीनाम्[13]। मनसस्त्विन्द्रियमूतस्यैव न सगुणत्वम्, न ग्राह्येन गुणेन सह संबन्ध इति। तस्मादत्रापि शब्ददोषः, न त्वभिप्रायदोष इति मन्तव्यम्॥

---

१. °ायातः MB var २. प्रतीयते BM ३. विषयी M ४. च om B ५. बाह्येन च BM ६. मनः & इव om BM ७. इन्द्रियप्र° BM ८. °मप्यस्य BM ९. इत्यागमिका JA १०. °तेति शब्दोत्र° om BM ११. विशेषगुणेन M १२. अभिधातुमशक्यम् MB var १३. सम्बन्धश्च होरा° B

नन्वनभिमतनिषेधेन मतमुन्नेष्यत इति शङ्कते—**न चेति**। निराचष्टे—**अभावस्येति**। यावदनभिमतनिषेधेनाभिमतलाभे गरीयो गौरवमापद्येत, तत्तन्निषेध्यम् अनुपनीय निषेधस्य प्रतिपादयितुमशक्यत्वात्। विशेषविधौ तु शेषनिषेधो लघीयानिति भावः॥

**सूत्रकार**वचनस्य विवादास्पदत्वात् कथं तेनैव निर्णय इत्यत आहेति पूरयति **भाष्यकार** इति। शाब्देत्यनेन शब्देन्द्रियसमाहारजमयमसावश्व इति ज्ञानं व्यवच्छेद्यमभिमतं **वार्त्तिककृत** इति केषाञ्चिन्मतमपनयति—**न खल्विति**॥

वाच्यत्वेन हि विशेषणतया गृहीतेन विशेष्यनिष्ठेन भवितव्यमतः केवलवाच्यत्वप्रस्तावेऽपि तथैवोदाहृतम्। इन्द्रियव्यतिरेकव्यभिचाराच्च तद्व्यतिरेको न शङ्कितः। गृहीते ह्यश्वत्वे तदसन्निकर्षेऽपि योऽयं पिण्डस्त्वया दृष्टोऽयमसावश्व इत्युपदेशात् केवलादेव वाच्यत्वप्रतीतिदर्शनात्। तस्मादिन्द्रियस्य संबन्धिसमर्पण एव व्यापारः। एवमुत्तरत्रापि तव्यार्थः सङ्केतयितुरभिप्रायविशेषः। यद्यपि पराभिप्रायस्तदुपहितो वार्थो नेन्द्रियगोचरः, तथाप्यभ्युपगम्याशङ्कते—**अथायमपीति**। इदमैन्द्रियकमिदम् अतीन्द्रियमिति हि साक्षात्कारासाक्षात्कारोत्त्रेयोऽयमर्थः॥

तत्र स्पष्टग्रहणरूपत्वात् साक्षात्कारापरव्यपदेशादैन्द्रियकमेतदिति युक्तं स्यात्, न त्वसाक्षात्कारादपि। तयोश्च कोऽत्र मनसा वेद्यत इति भवानेव परिभावयतु। तत्र साक्षात्कारित्वपक्षे प्रत्यक्षमेवेदमतो न व्यवच्छेदनीयम्, असाक्षात्कारित्वपक्षे च नेदम् ऐन्द्रियकमिति प्रथमपदेनैव व्युदस्तम्। नाव्यपदेश्यपदस्यावकाश इति गाथापाठस्यार्थः॥

किमर्थं तर्ह्यव्यवदेश्यपदम्, कश्चास्य **वार्त्तिकस्यार्थ** इत्यत आह—**व्यवसायात्मकपदेन त्विति**। एकपदपरिग्रहं स्फुटं मन्वानोऽपि द्विपदपरिग्रहं व्याचष्टे—**द्विपदेति**॥

उत्तरप्रबन्धोपयोगं दर्शयन्नाह—**तदेवमिति**। लक्षणमिदमनुमानम्। तच्च तदाभासाद् विवेकेन सुगमं भवति। स च तदाभासेषु आविष्कृतेषु भवतीत्याशयवतः अयमारम्भ इत्यर्थः[१]। ततोऽर्थादित्यत्र हि पञ्चम्या हेतुत्वमर्थस्य विज्ञाने[२] प्रतिदर्शितम्। तत्परश्च एवकारः एवं संबध्यते—स व्यपदेशकोऽर्थो हेतुरेव यस्य न पुनरहेतुरपि तद्विज्ञानं प्रत्यक्षमिति। एवं चायोगव्यवच्छेद एव। तथाप्यन्ययोगव्यवच्छेदोऽपि

१. अयमर्थः B. २. परिद॰ A

**वार्त्तिककृता** निराकर्तव्य इति व्याख्यायामुभयं दर्शितवान् । यदि तत एव तद्भवति, नार्थान्तरादित्यव्यपदेशकादित्यतो न विरोधः ॥

नन्वनुमानविशेषस्तावत् कश्चिदव्यपदेशकादेवोत्पद्यते । ततो न तस्य व्युदासः कृत इत्यत आह—**ततोऽर्थादित्यत्र हीति** । प्रत्यक्षजातेरिदं लक्षणम् । तस्याश्च प्रतियोगिन्यनुमानादिजातिरेव, तथा च तस्या एव जातेर्व्यवच्छेदो विवक्षितः । स चैतावतैव सिद्ध इत्यर्थः ॥

यत्रैव यज्जातीय एव । तदयोगस्तस्य व्यपदेशकस्य हेतुत्वेनायोगस्तदप्रत्यक्षमिति । तेन व्यपदेशो हि तदुपाधिकं निरूपणमिह विवक्षितम् । न च ज्ञानं कर्त्रा करणेन वा निरूप्यते, अपि तु कर्मणैवेत्यर्थः । **अभिधानापर्यवसानात्** शब्दव्यापारापर्यवसानात् । तच्छब्दस्य पूर्वप्रक्रान्त एवार्थे सङ्केतितत्वात्, तदनभिधानेऽवाचकत्वप्रसङ्गादिति भावः । पूर्वप्रक्रान्तश्च व्यपदेशक एव । स चार्थ एवेति विशेष्यः प्राप्यते, नान्तरीयकत्वादित्यर्थः । नैवं **वार्त्तिक**मित्यत आह—**अभ्युपेत्य त्विति** । अनुमानादिव्युदासार्थं[1] ह्ययोगव्यवच्छेदः । स चान्ययोगव्यवच्छेदेऽपि सिध्यतीत्यर्थः ॥

नन्वन्योगव्यवच्छेदोऽशक्य एव, इन्द्रियादेरव्यपदेशकस्यापि तत्कारणत्वादत आह—**अन्यव्यवच्छेदेऽपीति** । इन्द्रियादयो ह्यव्यपदेशका अपि व्यपदेशकाधिपत्येनैव ज्ञानजनका इत्यविरोधितया न ते व्यवच्छेद्याः । लिङ्गादयस्तु व्यपदेशकाधिपत्यनिरपेक्षतया तद्विरोधिन इति त एवान्ये[2] व्यवच्छेत्तव्या इत्यर्थः ॥

ननु सर्वं च स्वविषयादिति **वार्त्तिक**मसङ्गतमेव, [3]स्मृत्यनुमितिभ्रान्तीनां स्वविषयादनुत्पत्तेरत आह—**यत्संवृतित्वेनेति**[4] । ननु भ्रान्तिज्ञानमपि न [5]व्यपदेशकम् अन्तरेण भवति, तत् [6]कुतश्चोद्यमतस्मादपीत्यत आह—**पुरोवर्तीति** । अतस्मादपीत्यत्र यद्यपि नञ् श्रूयते, तथापि व्यपदेशकादपि न भवतीति बोद्धव्यमित्यर्थः । तदिदमुक्तम्—**येन विशेषरूपेण तस्य व्यपदिश्यते न ततस्तद्भवतीति** । तस्माद् यत्तत एव भवति ततो भवत्येवेत्यर्थः । अततश्च न ततश्चेत्यर्थः ॥

ननु व्यपदेशकादनुत्पत्तेरित्यव्यपदेशकादुत्पत्तेरिति वा चोद्यमुपक्राम्याशुक्ते रजतात् नोत्पद्यत इति वाक्छलमात्रमित्यत आह—**न ह्यतस्मादारोपिताद् रूपादिति** ।

---

१. °दिव्यवच्छेदार्थं MB var २. तत्र चान्ये M ३. श्रुत्यनुमिति° AB
४. यत्स्मृतित्वेनेति MB var ५. °कमर्थान्तरेण A ६. कुतो देश्य° B var

अयमर्थः। मिथ्याज्ञाननिरासो ह्यन्ययोगव्यवच्छेदेन वा, अयोगव्यवच्छेदेन वा? न तावदाद्यः, अन्ययोगव्यवच्छेदस्य तत्रापि भावात्। तदा हि स न स्यात्। यद्यव्यपदेशकस्यैव, वणिग्वीथ्यां व्यवस्थितस्य[१] स्वतन्त्रस्य रजतस्य हेतुत्वं स्यात्। न चैतदस्ति। तदिदमुक्तम्—न ह्यतस्मादारोपितात् तत्रासतस्तन्मिथ्याज्ञानं भवति। नापि द्वितीयः, व्यपदेशकस्य हेतुत्वादेव। रजतं व्यपदेशकं न हेतुरिति चेत्? कथं पुना रजतं व्यपदेशकं स्वातन्त्र्येण पुरोवर्त्यात्मना वा? न तावदाद्यः, सामानाधिकरण्यानुपपत्तेः, [२]स्वमिथ्यात्वप्रसङ्गाच्च। पुरोवर्त्यात्मना च प्रत्यन्तरे तद् भवति व्यपदेशकम्। स च पुरोवर्त्यात्मा हेतुरेवेत्ययोगव्यवच्छेद एव। तदिदमुक्तम्—आरोपितं तु रजतमस्य विषयो दृश्यमानाकारतयेति। अयं त्वभिप्रायः स्यात्, यादृशाकारेण व्यपदेशकोऽर्थः तादृशादुत्पन्नं ज्ञानं प्रत्यक्षमिति। न त्वयं लक्षणपदानामर्थः। न चाभिप्रायविशुद्धिमात्रेण परः प्रतिपादयितुं शक्यते, प्रत्यभिज्ञास्वसंवेदनाव्यापकत्वाच्च। एतच्च जैमिनीये स्फुटीभविष्यति॥

तदेतल्लक्षणमाभिप्रायिकमप्यस्मन्नये कदाचित् संभाव्येत, त्वन्नये तु विरुद्धमसिद्धं चेदमुक्तं **वार्त्तिककृता**। तदेतद् व्युत्पादयति—**यद्यप्येतदिति**। व्यपदेशको ह्यर्थो वर्तमानतया सर्वत्र प्रत्यक्षस्य विषयः[३]। स चेद्धेतुरेवैवमतीतः स्यात्। तथा च प्रत्यक्षत्वे साध्येऽप्रत्यक्षत्वमेव सिध्यतीति भवति विरुद्धत्वमित्यर्थः। अथ वर्तमान एव व्यपदेशकस्तदा समानकालतया ततोऽर्थादित्यसिद्धमाह—**तत्समानेति**॥

यत्तु केनचित् प्रलपितम्[४]—अपरोक्षज्ञानावभासितैव वर्तमानतेति, तत् तुच्छमित्युपेक्षितवान्। तथा ह्यपरोक्षैकसर्वज्ञविज्ञानावभासितया सर्वेषामर्थानामेककालत्वात् सव्येतरगोविषाणवत् कार्यकारणभाववार्तैवोच्छिद्येत[५]। पूर्वोक्तश्चानुयोगस्तदवस्थ एवेति॥

भिन्नकालं कथं ग्राह्यम्

इत्यादिना कार्यकारणभावविशेष एव ग्राह्यग्राहकभावः। स च भिन्नकालयोरेव भवतीति स्वभाषया समर्थितं **परेण**। न च वयं भिन्नकालयोः [६]कार्यकारणभावविशेषम् अवजानीमहे; किं त्वतीतस्य वर्तमानतयावभासनं तस्य वा सत्यत्वम्। न च तदनेन समर्थितमित्यर्थः॥

---

१. °वीथ्याद्यव्यवस्थितस्य J २. अमिथ्यात्व° J ३. विषयः om JA
४. प्रसञ्जितम् M ५. व्यवस्थैव MB var ६. °भावमवजानी° B, भावमपजानी° M

ननु ज्ञानाकारार्पणक्षममिति वदतैव समर्थितमेतत्। अनेन हि न प्रतिभासमानतयार्थो ग्राह्य इति व्यवह्रियते। किं नाम? आकारार्पकतयेति दर्शितम्। आकार एव त्ववभासममानतया ग्राह्यः, स च ज्ञानात्मभूततया वर्तमान एवेति न कश्चिद् विरोध इत्यत आह—**अनहङ्कारेति**। विज्ञानाद् भिन्नस्य नीलादेरनुभवो यदि सत्यो, न ज्ञानगताकारवेदनम्। असत्यश्चेन्न प्रत्यक्षं प्रमाणमिति सेयमुभयतः पाशा रज्जुरित्यर्थः॥

अपि च भवत्वाकारवेदनम्, [1]भवतु वार्थस्याकारार्पकत्वं वा, तथापि

ततोऽर्थाद्विज्ञानं प्रत्यक्षम्

इत्यसिद्धं लक्षणम्। तथा हि प्रतिभासमानस्यैव ज्ञानं व्यपदिश्यते, न त्वप्रतिभासमानस्य। आकारश्च प्रतिभासते न तु जनकोऽप्यर्थः। तस्माद् व्यपदेशको न जनकः, जनकश्च न व्यपदेशक इति॥

अत्र शङ्कते—**न चेति**। प्रतिभासमानाकारद्वारार्थो व्यपदेशको जनकश्चेत्यपि न चेत्यर्थः। कुतः? भाक्तत्वप्रसङ्गात्। किमतो यद्येवमित्यत आह—**न च गौणमुख्येति**। यथा ह्यविनाभावमन्तर्भाव्यैव गङ्गाशब्दस्तीरे, लक्ष्यमाणगुणयोगमन्तर्भाव्य सिंहशब्दो माणवके वर्तते, न तथा धूमप्रत्यक्षमग्नौ सिंहप्रत्यक्षं माणवके, प्रमाणान्तरोच्छेदप्रसङ्गादित्यर्थः। तदिदमुक्तम्—**भिन्नप्रस्थानत्वादिति**॥

एतेनैतदपि निरस्तम्, यदाहुः—प्रत्यक्षसिद्धेनाकारेण अर्थोऽनुमीयत इति फलतः प्रत्यक्षोऽर्थ इति। अनुमीयत इति[2] कोऽर्थः? अनुमितौ परिस्फुरतीति[3], तच्च **बौद्धनये** स्वप्नेऽपि दुर्लभम्, अनुमितेरपि स्वाकारालीकयोरेवान्यतरस्मिन् पर्यवसितत्वात्। यश्च सर्वथैव ज्ञानागोचरः स व्यवह्रियत इति कुतः? तस्मादाकारवादपक्षे बाह्योऽर्थो हेयः, तदभ्युपगमे वा आकारवाद इत्यनेनाभिप्रायेणाह—**तस्मान्निराकारमिति**॥

**शङ्कत** इति। न हि किञ्चिद् वस्तुभूतं वाच्यं नाम **सौगतानां** समस्ति, लक्षणवाक्येन तु[4] व्यवहारमात्रं प्रसाध्यते, स चातद्व्यावृत्तिनिष्ठ इत्यर्थः। ज्ञानस्य कल्पनापोढस्य प्रत्यक्षतया व्युत्पाद्यमानस्य कथं सर्वेऽर्था प्रत्यक्षतया प्रसज्येरन्नित्यत आह—**न हीति**। **दिग्नाग**स्यातिव्यापकतया अलक्षणम्, **कीर्ते**स्त्वव्यापकतया विकल्पप्रत्यक्षानवरोधात्, तस्य च[5] प्रत्यक्षतया व्युत्पादनात्, अनिष्टमात्रस्यातिप्रसञ्जकत्वादिति

---

१. भवत्वर्थस्य M २, ३. इति om BM ४. तु om BM ५. च om BM

सिद्धान्तः । स्वदर्शनसमाधित्सया वार्त्तिकमिति दर्शयितुं चोदयति—**ननु यदीति** । सामान्यान्वितम् , अभिधीयत इति वार्त्तिकशेषः[1] । **मनुष्यत्वजातिमानित्यर्थ** इति । मनुष्यशब्दस्य ब्राह्मणो ब्राह्मणत्वादिजातिमत्तया अवाच्योऽपि मनुष्यत्वजातिमत्तया वाच्य एवेत्यर्थः ।। पौनरुक्त्यं परिहरन्नाह—**अथाश्वकर्णेति** ।।

ननु व्यत्ययेऽपि [2]सत्संप्रयोग इति स्यात् , न तु तत्तच्छब्दस्य प्रकृततया विषयः कश्चिदस्तीत्याह—**बुद्धचेति** । यद्यपि प्रत्यक्षज्ञानमप्यनेन लक्षणेन स्वात्मनि प्रत्यक्षं न स्यादेव, तथापीन्द्रियार्थसन्निकर्षजन्यत्वमात्रं तावत् तत्राप्यस्तीति कदाचित् परो ब्रूयादित्यत आह—**अनुमानादीति** । एतेन ततोऽर्थादित्यस्याभिप्रायशेषो दूषितः, प्रत्यभिज्ञानस्वसंवेदनयोरव्यापकत्वादिति ।।४।।

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ।।१।१।५।।**

।। भाष्यम् ।।

तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं । लिङ्गदर्शनं चाभिसंबध्यते । लिङ्गलिङ्गिनोः संबद्धयोर्दर्शनेन [3]लिङ्गस्मृतिरभिसंबध्यते । स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते ।।

पूर्ववदिति—यत्र कारणेन कार्यमनुमीयते, यथा मेघोन्नत्या भविष्यति वृष्टिरिति । शेषवत्तत्—यत्र कार्येण कारणमनुमीयते, पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति । सामान्यतोदृष्टं—व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति, तथा चादित्यस्य[4], तस्मात् अस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति ।।

अथ वा पूर्ववदिति—यत्र यथापूर्वं [5]प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानम्, यथा धूमेनाग्निरिति । शेषवन्नाम परिशेषः, स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः, यथा सदनित्यमेवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य[6] शब्दस्य, तस्मिन् द्रव्यगुणकर्मसंशये[7], न द्रव्यम्, एकद्रव्यत्वात्, न कर्म, शब्दान्तरहेतुत्वात् , यस्तु शिष्यते सोऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः ।

---

१. अभिधेय इति वार्त्तिके शेषः M २. तत्सं A ३. लिङ्गं om J ४. °स्यान्यत्र दृष्टस्यान्यत्र दर्शनम् J ५. °भूतयोरर्थयोरन्य° J ६. विभक्तस्य CV ७. द्रव्यं कर्म गुण इति च सं° J

सामान्यतोदृष्टं नाम—यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते, यथेच्छादिभिरात्मा, इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मेति ॥

विभागवचनादेव त्रिविधमिति सिद्धे त्रिविधवचनं महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात्[1] परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः। तथा चायमस्येत्थम्भूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्र इति ॥

सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्। कस्मात्? त्रैकाल्यग्रहणात्—त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते। भविष्यतीत्यनुमीयते भवतीति चाभूदिति च। असच्च खल्वतीतमनागतं चेति ॥ ५ ॥

॥ वार्त्तिकम् ॥

अथ **तत्पूर्वकं त्रिविधमनुमानमिति**। अथेत्यानन्तर्ये। अनुमानविशेषणार्थं सूत्रम्। तत्पूर्वकमनुमानमित्यनेन समानासमानजातीयेभ्योऽनुमानं व्यवच्छिद्यते इति। तानि ते तत् पूर्वं यस्य तदिदं तत्पूर्वकम्। यदा तानीति विग्रहः, तदा समस्तप्रमाणाभिसंबन्धात् सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं भवति। पारम्पर्येण पुनस्तत् प्रत्यक्ष एव व्यवतिष्ठते इति [2]प्रत्यक्षपूर्वकत्वमुक्तं भवति। यदापि [3]विग्रहः ते द्वे पूर्वे यस्येति, ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षमिति। [4]कतरे द्वे प्रत्यक्षे? लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षम्, लिङ्गदर्शनं च द्वितीयम्। बुभुत्सावतो द्वितीयात् लिङ्गदर्शनात् [5]संस्काराभिव्यक्त्यनन्तरकालं स्मृतिः, स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनमयं धूम इति। तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या [6]चानुगृह्यमाणं लिङ्गपरामर्शरूपमनुमानं भवति ॥

कः पुनरनुमानार्थः? अनुमीयतेऽनेनेति करणार्थः। किं पुनरस्य फलम्? अग्निविषया प्रतिपत्तिरिति। कथं पुनरन्यविषयं करणमन्यविषयां क्रियां करोति? [7]न हि शाल्यादिविषयस्य मुसलादेः करणस्य श्यामाकेष्वभिहतिर्भवति। न, अनियमात्

---

१. देशे J ह्यर्थाः J  २. तत्पूर्वक° C  ३. विवेकात् C  ४. ते च द्वे C
५. °व्यक्त्युत्तरकालं C  ६. °माणो लिङ्गपरामर्शोऽनुमानं J  ७. न हि om C

इत्येके[1]। यद्विषयं करणं तद्विषया [2]क्रियेति न नियमोऽस्ति। दृष्टा हि वृक्षादिविषयस्य छेदनस्यावयवेषु क्रिया। वृक्षश्छिद्यते अवयवेषु च्छिदा भवति। क्वचित् पुनर्यद्विषयं करणं तद्विषयैव क्रिया। यथा तण्डुलाः पच्यन्ते, पाकस्तेष्वेव। क्वचित् पुनरात्मैव भवति कर्ता करणं च। क्रिया च तस्यैव। तद्यथा वृक्षस्तिष्ठतीति। [3]किमुक्तं भवति? वृक्षः स्वात्मना तिष्ठतीति। किमुक्तं भवत्यात्मनेति? यस्मादयं स्वस्थितौ [4]कारकान्तरं न प्रयुङ्क्ते इति। एवमन्यविषयस्य [5]करणस्यान्यविषया क्रियेति। क्वचित् पुनर्यद्विषयं प्रमाणं तद्विषयैव क्रिया, यदा स एवार्थः प्रमीयत इति। किं पुनस्तस्य प्रमीयते, प्रमितत्वात्? प्रमीयते हेयत्वेनोपादेयत्वेनोपेक्षणीयत्वेन वावगम्यते इति॥

तन्न, प्रमाणफलयोर्विषयभेदानभ्युपगमात्। यदा पुनस्तत्पूर्वं यस्य तदिदं तत्पूर्वकमिति, तदा भेदस्याविवक्षितत्वात् लिङ्गलिङ्गिसंबन्धदर्शनानन्तरं लिङ्गदर्शनसंबन्धस्मृतिभिर्लिङ्गपरामर्शो विशिष्यते, तस्य तत्पूर्वकत्वात्। किं पुनस्तैरनुमीयते? शेषोऽर्थ इति। अनुमानमित्यत्र किं कारकम्? भावः करणं वा। यदा भावः, तदा हानादिबुद्धयः फलम्। यदा करणम्, तदा शेषवस्तुपरिच्छेदः फलमिति॥

लिङ्गलिङ्गिसंबन्धस्मृतिर्लिङ्गदर्शनं वेति सन्देहः। एके तावद् वर्णयन्ति लिङ्गलिङ्गिसंबन्धस्मृतिरनुमानमितरैर्लिङ्गलिङ्गिसंबन्धदर्शनादिभिरनुगृह्यमाणा। अपरे [6]पुनर्मन्यन्ते लिङ्गपरामर्शोऽनुमानमितरैरनुगृह्यमाण[7] इति। वयं तु पश्यामः, सर्वमनुमानम्, अनुमितेस्तन्नान्तरीयकत्वात्। प्रधानोपसर्जनभावविवक्षायां तु लिङ्गपरामर्श इति न्याय्यम्। कः पुनरत्र न्यायः? आनन्तर्यप्रतिपत्तिः। यस्मात् लिङ्गपरामर्शात् अनन्तरं शेषार्थप्रतिपत्तिरिति, तस्मात् लिङ्गपरामर्शो न्याय्य इति। स्मृतिर्न प्रधानम्। किं कारणम्? स्मृत्यनन्तरमप्रतिपत्तेः। न हि भवति यत्र धूममद्राक्षं तत्राग्निमद्राक्षम् इति। एतस्याश्च स्मृतेरनन्तरं तस्मादग्निरिति शेषार्थग्रह इति युक्तं वक्तुम्। तस्मात् स्मृत्यानुगृह्यमाणो[8] लिङ्गपरामर्शोऽभीष्टार्थप्रतिपादको भवतीति। एवं चोपनयस्यार्थवत्ता। यदि चायं स्मृत्यानुगृहीतो लिङ्गपरामर्शोऽनुमानं भवति, एवं सति उपनयोऽर्थवानिति। एवं च सति वाक्याङ्गत्वमुपनयस्योक्तं भवति। तस्माद् व्यवस्थितम् एतत् तत्पूर्वकमनुमानमिति॥

१. एके J २. क्रियेति C ३. कि···वति J ४. करणा॰ C ५. प्रमाणस्य J
६. तु मन्यन्ते C ७. इतरैरनुगृह्यमाणः om C ८. ॰गृहीतो C

यदि प्रत्यक्षपूर्वकमनुमानं संस्कारे निर्णये च प्रसङ्ग इति । प्रत्यक्षपूर्वको भावनाख्यः स्मृतिहेतुः संस्कारो निर्णयश्च [१]प्रत्यक्षफलत्वादनुमानं प्रसज्यते इति । नैष दोषः, विज्ञानस्याधिकृतत्वात् । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति ज्ञानाधिकारो वर्तते इति तेन न संस्कारेऽतिप्रसङ्गः । निर्णयस्तूभयथा, कदाचित् प्रमाणं कदाचित् फलम् । स्वविषयपरिच्छेदकत्वात् फलम् । शेषपरिच्छेदकत्वात् प्रमाणमिति ॥

**त्रिविधमिति** । अन्वयव्यतिरेकी, अन्वयी, व्यतिरेकी चेति । तत्रान्वयव्यतिरेकी विवक्षिततज्जातीयोपपत्तौ विपक्षावृत्तिः, यथा अनित्यः शब्दः सामान्यविशेषवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद् घटादिवदिति । अन्वयी विवक्षिततज्जातीयवृत्तित्वे सति विपक्षहीनः, यथा सर्वानित्यत्ववादिनामनित्यः शब्दः कृतकत्वादिति । अस्य हि विपक्षो नास्ति । व्यतिरेकी विवक्षितव्यापित्वे सति सपक्षाभावे सति विपक्षावृत्तिः, यथा नेदं जीवच्छरीरं निरात्मकम् , अप्राणादिमत्त्वप्रसङ्गादिति ॥

अथ वा त्रिविधमिति, पूर्ववत् शेषवत् सामान्यतोदृष्टं चेति । पूर्वं साध्यम् , तद् व्याप्त्या यस्यास्तीति तत् पूर्ववत् । साध्यसजातीयः शेषः, स थस्यास्ति तत् शेषवत् । पूर्ववन्नाम साध्यव्यापकम् । शेषवदिति तत्समानेऽस्ति । सामान्यतश्चादृष्टम् । चशब्दात् प्रत्यक्षागगाविरुद्धं चेति । एवं चतुर्लक्षणं पञ्चलक्षणमनुमानमिति ॥

अथ वा त्रिविधमिति । पूर्ववत् शेषवत् सामान्यतोदृष्टं चेति । तत्र पूर्ववन्नाम यत्र कारणेन कार्यमनुमीयते इति **भाष्यम्** । किं पुनरिदमुक्तं भवति कारणेन कार्यमनुमीयते इति ? यदि तावदयमर्थः, कारणदर्शनात् कार्यास्तित्वं प्रतिपद्यते इति ? तन्नास्ति, न हि कारणं गृहीत्वा [२]कश्चित् स्वस्थात्मा कार्यं प्रतिपद्यते इति । [३]तथा च व्याहतं भवतीति । अथ पुनरेवमनुमीयते यत्र कारणं तत्र कार्यमिति ? एतदपि नास्ति, कार्यकारणयोर्भिन्नदेशत्वात् । तन्तवः स्वावयवेषु अंशुषु, पटस्तन्तुष्विति । कारणदर्शनाच्च कार्यमनुमीयते इति ब्रुवाणोऽनुमानमुद्रां भिनत्ति । का पुनरियमनुमानमुद्रा ? नानुपलब्धे न निर्णीते न्यायः प्रवर्तते इति । यति कारणदर्शनात् कार्यमनुमीयते, अनुपलब्धेऽर्थे न्यायः प्रवर्तते इति स्यात् । तथा च व्याहतं स्यात् , नानभ्युपगमात् । क एवमाह कारणदर्शनात् कार्यास्तित्वं प्रतिपद्यते इति ? को वा ब्रवीति यत्र कारणं तत्र कार्यमिति । कार्यं तु कारणविशेषत्वेनोपयुक्तं गुणभूतमनुमीयते इति सूत्रार्थः । तथा च न मुद्राभेद

---

१. प्रत्यक्षपूर्वकत्वात् C २. कश्चित् om C ३. तथा च...भवतीति om J

इति। एवं शेषवदादिष्वपि [1]व्याख्येयम्। तत्रापि कारणं कार्यस्याङ्गभूतमनुमीयते इति। कथं पुनः शेषशब्देन कार्यमुच्यते ? द्वयोरनुमानभावेनोपक्षिप्तयोः कारणस्योपयोगाद् अनुपयुक्तं कार्यमिति कार्यं शेषशब्दवाच्यम्। उदाहरणम्—मेघोन्नत्या भविष्यति वृष्टिरिति कारणेन कार्यानुमानम्। कथं पुनरस्य प्रयोगः ? वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति, बहुलबलाकावत्त्वे सति अचिरप्रभावत्त्वे च सति [2]उन्नतत्वात्, तदन्यवृष्टिमन्मेघवदिति॥

नद्याः पूर्णत्वं शेषवदुदाहरणम्। कथं पुनर्नदीपूरो नद्यां वर्तमान उपरि वृष्टिमन्तं देशमनुमापयति, व्यधिकरणत्वात् ? नोपरिवृष्टिमद्देशानुमानं नदीपूरः। किं तर्हि ? नद्या एवोपरिवृष्टिमद्देशसंबन्धित्वमनुमीयते नदीधर्मेणैव। उपरिवृष्टिमद्देशसंबन्धिनी नदी शीघ्रतरस्रोतस्त्वे सति फलकाष्ठादिवहनवत्त्वे च सति पूर्णत्वात् [3]तदन्यवृष्टिमत्पूर्णनदीवत् इति। भविष्यति, भूता वेति कालस्याविवक्षितत्वात् यः कश्चित् काल उपादेयः इति॥

सामान्यतोदृष्टं नाम अकार्यकारणभूतेन यत्राविनाभाविना विशेषणेन विशेष्यमाणो धर्मी गम्यते, तत् सामान्यतोदृष्टम्। यथा बलाकया सलिलानुमानम्। कथं पुनर्बलाकया सलिलानुमानम् ? यावानस्य देशो बलाकयाजहद्वृत्तित्वेन प्रसिद्धो भवति, तावन्तमन्तर्भाव्य वृक्षादिकमर्थं पक्षीकृत्य बलाकावत्त्वेन साधयति॥

अपरे पुनर्मन्यन्ते—सामान्यतोदृष्टम् आदित्यस्य गत्यनुमानमिति। तत्तु न बुद्ध्यामहे कथमनुमीयते इति। यदि तावद् गतिमानादित्य इति [4]अनुमीयते, तत् केन प्रतिपद्यते ? न ह्यादित्यगतेः किञ्चित् संबद्धं लिङ्गमस्ति। न चासंबद्धोऽर्थोऽनुमातुं शक्यते। तथा च सर्वं सर्वेणानुमीयेत। अथापि देशान्तरप्राप्तिर्लिङ्गमिति ? तन्न, अदृष्टत्वात्। न हि सवितुः कश्चिद् देशान्तरप्राप्तिं पश्यति। देशान्तरं खलु आकाशदेशो वा दिग्देशो वा भवेत्। उभयं चाप्रत्यक्षम्। न चान्या गतिरस्ति। तस्माद् देशान्तरप्राप्तिदर्शनमयुक्तम्। सर्वत्र खल्वयमादित्यस्य मण्डलमेव केवलमुपलभते। न च वस्तुमात्रदर्शनादनुमानं युक्तम्। अपि च केनचित् प्रकारेणादित्यस्य गतिः शक्या द्रष्टुम्, उपलब्धिलक्षणप्राप्तत्वात्। न पुनर्देशान्तरप्राप्तिर्नित्यमतीन्द्रियत्वात्। न हि कदाचिदपि प्रत्यक्षाप्रत्यक्षवृत्तिः संयोगो भवति प्रत्यक्षः। अथ देवदत्तस्य देशान्तरप्राप्तिदर्शनेनादित्यस्य गत्यनुमानं सामान्यतोदृष्टमिति मन्यसे, न केवलमादित्यस्य सर्वा-

---

१. द्रष्टव्यम् C २. उन्नमितत्वात् वृष्टि° C ३. तदन्य° J ४. अस्य गतिरनु° C

र्थानां गत्यनुमानमेतत् । तर्हि भवानपि गच्छतीत्येवं कस्मात् [1]नानुमिमीषे ? नैवेदम् आदित्यगत्यनुमानं साक्षात् । किं तर्हि ? देशान्तरप्राप्तिमनुमाय तया गत्यनुमानमित्यदोषः । देशान्तरप्राप्तिमानादित्यो द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसंबन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात् , [2]मण्यादिवत् । मण्यादावेतत्सर्वमस्ति । स च देशान्तरप्राप्तिमान् । एवं चादित्यः । तस्माद् देशान्तरप्राप्तिमानिति । अनया तु देशान्तरप्राप्त्या अनुमितया गतिरनुमीयते इति । देशान्तरप्राप्तिमत्त्वे वा [3]साधनम्—देशान्तरप्राप्तिमानादित्यः, अचलचक्षुषो व्यवधानानुपपत्तौ दृष्टस्य पुनर्दर्शनाविषयत्वात् देवदत्तवदिति । एके तु दिक्प्रत्यक्षत्वेऽनुमानं ब्रुवते—प्रत्यक्षा दिक् , अङ्गुल्यादिव्यपदेशात् चन्द्रवदिति । तच्च न, अरूपत्वात् । अरूपा दिक् कथं बाह्यकरणप्रत्यक्षा भविष्यति ? कथं तर्हि अङ्गुल्या दिग्व्यपदेशः ? दिग्देशसंबन्धिषु वृक्षादिषु दिग्व्यपदेशात् । ये दिग्देशसंबन्धिनो वृक्षादयस्तान् दिगित्युपचरन्ति, आदित्येन सहोपलब्धेः । प्राचीत्ययं शब्द आद्यादित्यदर्शनविशिष्टदिग्देशे वर्तते । तेन आद्येनादित्यदर्शनेन सह यान् वृक्षादीनुपलभन्ते, तान् प्राचीत्युपचरन्ति । उपचर्य चाङ्गुल्या व्यपदिशन्तीति ॥

अथ वा त्रिविधमिति लिङ्गस्य प्रसिद्धसदसन्दिग्धतामाह । प्रसिद्धमिति पक्षे व्यापकम् । सदिति [4]सजातीयेऽस्ति । असन्दिग्धमिति सजातीयाविनाभावि ॥

अथ वा त्रिविधमिति नियमार्थम् । अनेकधा भिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रह इति नियमं दर्शयति । कथमनेकधा भिन्नमिति ? अन्वयव्यतिरेकि द्वेधा सजातीयेऽपि द्वेधा सदेव, सदसच्च । अन्वय्यपि द्वेधैव । एवं व्यतिरेक्येकरूपम् , सपक्षाभावात् । तदिदं पञ्चधाभिन्नमनुमानं कालभेदेन पञ्चदशधा भवति । तदपि पुनः पुरुषभेदानुविधानात् षष्टिभेदं भवति । तस्य त्वान्तर्गणिकोऽनन्तभेद इति । सोऽयम् मनुमानभेदः एवंभिन्नः त्रिविधमित्यनेन संगृहीत इत्यतो नियमार्थं त्रिविधग्रहणमिति ॥

पूर्ववदित्युक्तम् । किं पुनरत्र पूर्ववत् , किं कार्यमुत कारणमिति ? यदि पूर्वमस्यास्तीति पूर्ववत् , कार्यं पूर्ववत् प्राप्नोति । ततश्च कारणेन कार्यानुमानमिति व्याघातः । पूर्वमस्यास्तीति पूर्ववदिति ब्रूमः, न पुनः कार्यम् । किं तर्हि ? ज्ञानम् । ज्ञानस्य पूर्वं विषयः । तदिदं [5]ज्ञानं पूर्ववदिति । तेन च कार्यानुमानमिति । एवं शेषवदादिष्वपि तद्विषयाणि ज्ञानानीत्युक्तं भवतीति ॥

---

१. ०मीयते C  २. मण्यादिवत् J  ३. वानुमानम् C  ४. सजातीये सदेव C
५. ज्ञानं om C

अथ वा पूर्ववदिति वतिप्रयोग एषः । यथा पूर्वं प्रत्यक्षेण दृष्टोऽर्थः तथानुमानेन अपि तमेवार्थं प्रतिपद्यत इति पूर्ववद् दृष्टो भवति ॥

अन्ये पुनरन्यथा वर्णयन्ति । यथा तेनैव धूमेन [1]तमेवाग्निं प्रतिपद्यते इति । किं पुनरयं धूमेन प्रतिपद्यते ? किमग्निम् , उत देशम् , उत सत्ताम् , उताग्निमन्तं देशम् ? तत्र न तावदग्निं प्रतिपद्यते, धर्मधर्मिभावानुपपत्तेः । नाग्निर्धूमस्य धर्मः, न वाग्निधर्मो धूमः । प्रतीतत्वाच्चाग्नेर्नानुमेयत्वमस्ति । एतेन सत्ता देशश्च व्याख्यातः, अग्निसत्तायाः प्रतीतत्वाद् देशस्य चेति । अग्निमान् देश इति चेत्—न, धूमस्यातद्धर्मत्वात् । अथापीदं स्यात् अग्निमान् देशो धूमेनानुमीयते ? तच्च नैवम् । कस्मात् ? अतद्धर्मत्वात् । न हि धूमोऽग्निमतो देशस्य धर्मः । न चाग्नेर्देशमात्रसंबन्धो न प्रतीतः । अयमग्निमानिति चेत्—न, तस्यादृष्टत्वात् । देशविशेषोऽग्निमत्तयानुमीयते, न देशमात्रम् । न, तस्यादृष्टत्वात् । न ह्ययं देशविशेषं पश्यति । केवलं शून्यमभिधानमुच्चारयति अयं देशोऽग्निमान् इति । न च धुममात्रमग्निप्रतिपादकम् , धूममात्रं चायं पश्यति । अतो न देशविशेषः अप्यनुमेयः । अविनाभावेन प्रतिपादयतीति चेत् , अथापीदं स्यात् अविनाभावोऽग्निधूमयोः, अतो धूमदर्शनादग्निं प्रतिपद्यते इति ? न, विकल्पानुपपत्तेः । अग्निधूमयोरविनाभाव इति कोऽर्थः ? किं कार्यकारणभावः, उतैकार्थसमवायः, उत तत्संबन्धमात्रमिति ? अस्तु तावत् पूर्वः कार्यकारणभाव इति । तन्न, अतद्वृत्तित्वात् । न हि धूमोऽग्नौ वर्तते नाप्यग्निर्धूमे , स्वकारणवृत्तित्वात् । अतो न कार्यकारणभावः । नैकार्थसमवायोऽपि, ताभ्यामन्यस्यानारम्भात् । न हि भिन्नजातीयाभ्यां द्रव्यमारभ्यते इति । न च तावप्यन्यत्र वर्तेते स्वकारणवृत्तित्वादित्युक्तम् । संबन्धमात्रं तत्र वर्तत इति चेत् ? तदप्यनुमातुं न शक्यते । कथम् ? यदि तावदेवं कुरुते अस्ति संबन्धोऽग्निधूमयोरिति—तन्न, अप्रतीतत्वात् । अनग्निकस्यापि धूमस्य दर्शनात् न संबन्धानुमानम् । रूपस्पर्शवत् साहचर्यं भविष्यतीति चेत्—न, उभयोर्व्यभिचारो दृष्टः[2] । अनग्निर्धूमो दृष्टः, अधूमश्चाग्निरिति उभयं व्यभिचारि । तस्मात् न साहचर्यमपि । यत्र धूमस्तत्र वह्निरित्यनेनैव प्रत्युक्तम् । न चान्या गतिरस्ति । तस्मात् न धूमेन वह्निरनुमीयत इति । लोकविरोध इति चेत् , यदि धूमेनाग्निर्नानुमीयते[3] ननु लोको विरुध्यते इति चेत् ? नास्ति विरोधः, धूमविशेषेण अग्निविशेषणस्य धूमस्य प्रतिपाद्यत्वात् । कथं पुनरयमग्निर्धूमविशेषणं भवति ? यदा [4]गुणभूतोऽनुमेयो भवति, अग्निमानयं धूम इति । धूमविशेषेणासाधारणेन प्रतिपद्यते[5] ।

---

१. तमेव om C २. °भिचारित्वात् C ३. अग्नेरनुमानं न भवेत् C ४. [गुणभूतो भवति अनुमेयोऽग्नि° C ५. °नानुमीयत इति C

उभयं च तदा प्रत्यक्षं धूमश्च तद्गताश्च सातत्यसंहत्यूर्ध्वगतिस्वाभाव्यादयो[१] धर्मा इति । ते चैते धूमधर्मा धूमवृत्तयोऽप्रसिद्धं धूमधर्ममनुमापयन्ति । सर्वस्य चानुमेयस्य वस्तुनो धर्मी प्रतिपादकश्च धर्मः प्रसिद्धो भवति । यथा शब्दस्यात्मसत्ता प्रसिद्धा, कृतकत्वं च । धर्मस्त्वनित्यलक्षणोऽप्रसिद्धः इति । तद्विशेषणोऽयमनुमीयते इति ॥

शेषवन्नाम परिशेष इति भाष्यम् । न कर्म शब्दः शब्दान्तरहेतुत्वात् इत्युभयव्यावृत्तेरसाधनम्[२], न हि शब्दान्तरहेतुत्वं कर्मणि नाकर्मणीति । न, अन्यार्थत्वात् । शब्दान्तरहेतुत्वादित्यस्य[३] समानजातीयारम्भकत्वादित्ययमर्थः । तथा च न दोष इति ॥

सामान्यतोदृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोरिति भाष्यम् । लिङ्गलिङ्गिनोः संबन्धोऽप्रत्यक्ष इति किं यदानुमीयते तदा अप्रत्यक्ष आहो न कदाचिदपि[४] प्रत्यक्ष इति ? यदि यदानुमीयत तदा अप्रत्यक्षः, तदा सर्वमनुमानमेवमिति विशेषणमनर्थकम् । अथ न कदाचित् प्रत्यक्षः, कथं तर्हि अनुमानमत्र प्रवर्तते ? व्याहतं च भवति नानुपलब्धे न निर्णीत इति । न, विशेषणभूतस्य अप्रत्यक्षस्य सर्वदा अनुमेयत्वात् । यदितरधर्मदर्शनाद् धर्मिणोऽधिगतिसाधनं तत् सामान्यतो दृष्टम्, यथा इच्छादिभिरात्मा । इच्छादयः खलु धर्मिणो भवन्ति । आत्मा च विशेषणं गुणभूत इति । इच्छादीनां गुणत्वं प्रतीतो धर्मः । तेन धर्मेण तानेव इच्छादीनात्मगुणविशिष्टाननुमिमीते । परतन्त्रा इच्छादयो गुणत्वात्, रूपवदिति । [५]पारतन्त्र्यमात्रप्रतिपत्तिरस्मादनुमानात्, आत्मतन्त्रता तु कुतः ? आत्मतन्त्रता परिशेषात्, आत्मसंवेद्यत्वात् बाह्यकरणाप्रत्यक्षत्वाच्च । न पृथिव्यादिषु । पृथिव्यादिगुणाः प्रत्यक्षा ये ते स्वात्मपरात्मप्रत्यक्षा[६] बाह्यकरणप्रत्यक्षाश्च । [७]आत्मप्रत्यक्षास्त्विच्छादयः । तस्मान्न पृथिव्यादिषु आकाशान्तेषु । न दिक्कालमनःसु, तद्गुणानां तद्वदतीन्द्रियत्वात् । न च द्रव्यान्तरं शिष्यते । आत्मा च शेषः । तस्मात् तत्तन्त्रा इति ॥

सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानमिति भाष्यम् । किं तावद् धर्मिणमभिप्रेत्यार्थभेद उत धर्ममिति ? यदि तावद् धर्मिणमभिप्रेत्य, न कदाचित् असद्विषयमनुमानम् । न ह्यनुपलब्धसामान्येऽर्थे अनुमानं प्रवर्तते इत्युक्तम् । न चासतः सामान्यदर्शनमस्ति । अथ धर्ममभिप्रेत्य ब्रूषे ? धर्मा अपि त्रिविधा

---

१. °स्वभावादयो C २. °रसाधारणम् C ३. °त्वमित्यस्य C ४. अपि om C
५. °तन्त्र्यप्रति° C ६. गुणाः आत्म° C ७. आत्माबाह्यकरणाश्चेच्छा° C

भवन्ति। विधीयमानाः, प्रतिषिध्यमानाः स्वतन्त्राश्चेति। तत्र विधीयमानो धर्मः पृथिव्यां गन्धवत्त्वम्, प्रतिषिध्यमानोऽप्सु गन्धवत्त्वम्, स्वतन्त्रः समवायिनां समवाय इति। कथं पुनः स्वतन्त्रः समवायः? समवायान्तराभावात्। यत् हि यत्र वर्तते तद् वृत्त्या तत्र वर्तते। न च [1]समवायान्तरं समवायस्य वृत्तिरस्ति। अथ समवायान्तरं स्यात् समवायस्य तस्यापि [2]समवायान्तरपरिकल्पनायामनवस्था। अथ नानवस्था, आद्य एव व्यवस्थास्तु[3]। किमिदं श्रद्दधानेन प्रतिपत्तव्यमनाश्रितः समवाय इति, आहोस्वित् न्यायोऽप्यस्ति? न सन्देहः, अस्त्येव न्यायः, पञ्चपदार्थवृत्तिशब्द-वाच्यत्वात् परमाणुवदनाश्रितः समवाय इति न्यायः। अनाश्रितः समवायो[4] व्यापकत्वे सतीहबुद्धिनिमित्तत्वादात्मवत्। यदि पुनराश्रितः समवायः स्यात्, ततः किं स्यात्? कार्यमनाधारं स्यात्। कथमिति? पूर्वं तावत् कार्यमात्मानं लभते, पश्चात् कारणेषु समवायेन वर्तते इति प्राग्वृत्तेरनाश्रितं प्राप्नोति। समवायश्च कार्यकारणयोर्वर्तत इति वृत्तिरस्य वाच्या, न हि वर्तमानं किञ्चिदवृत्तिमद् दृष्टम्। प्राप्तित्वात् संयोगवद् वर्तत इति चेत्—न, व्याघातात्। प्राप्तिः संयोगः, वर्तते इति, किमियं वृत्तिः, प्राप्तिधर्म आहोस्वित् कार्यधर्म इति? वयं तु ब्रूमः कार्यधर्मो न प्राप्तिधर्म इति। तथा च कार्यान्तराण्यपि प्राप्तिमन्ति सन्तीति। यदि पुनरियं वृत्तिः प्राप्तिधर्मोऽभविष्यत्, प्राप्तेरपि प्राप्त्यन्तरमभविष्यदित्यनवस्थादोषः, प्राप्तेर्वृत्तिमत्त्वात्। न चैनामनवस्थां कश्चित् शक्तः प्रतिपादयितुम्, प्रमाणाभावात्, समवायश्च समवायान्तरेण वर्तते इति ब्रुवाणः शास्त्रं बाधते, तत्त्वं भावेन व्याख्यातम् [ वै. सू. ७.२.२८ ] इति। संबन्धिनिवृत्तौ संबन्धोऽवतिष्ठते इति न प्रमाणमस्ति। न नास्ति, ख्यातिनिमित्तानां निवृत्तेः, ख्याति-निमित्तान्यस्य निवर्तन्ते। न समवायः, अकृतकत्वात्। अकृतकः समवाय इति च कार्यस्याधारवत्त्वेनानुमीयते। यद्ययं कृतकः स्यात् कार्येण [5]सहोपादानादनाश्रितं कार्यं स्यात्। अथ कार्यात् पूर्वं भवति? तथापि कस्येति वाच्यम्? अथ पश्चाद् भवति? कार्यानाधारतादोषस्तदवस्थः। तस्मात् स्वतन्त्रः समवाय इति सिद्धम्। तत्र प्रति-षिध्यमानधर्मविषयमनुमानम् असद्विषयं न पुनर्विधीयमानस्वतन्त्रधर्मविषयमिति॥

भवतीत्यसद्विषयमिति चेत् भवति जायत इत्येकोऽर्थ इति। न, जायमाना-र्थानभ्युपगमात्। भवति विद्यत इति। एवं तावद् व्यवस्थितमेतत् तत्पूर्वकमनुमानमिति॥

---

१. समवायान्तरं om C  २. आश्रयान्तर° J  ३. अनवस्था स्यात्, व्यवस्थाया-माद्य एव व्यवस्था। C  ४. अना° वायः om C  ५. सहोत्पादात् J

अपरे तु ब्रुवते नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति । अस्यार्थः, योऽर्थो यमर्थमन्तरेण न भवति, स भवति नान्तरीयकः । नान्तरीयकश्चासावर्थश्चेति नान्तरीयकार्थः । तस्य दर्शनं तद्विदोऽनुमानम् । यस्तं वेद तन्नान्तरीयकोऽयमिति । अत्रार्थग्रहणमतिरिच्यते । न हि नान्तरीयकः स्यान्न चार्थ इति । नान्तरीयकार्थ इति च समासपदम् एतत् । तत्र यदि षष्ठीसमासो नान्तरीयकस्यार्थ इति, नान्तरीयकं तावत् कृतकत्वम् । तस्यार्थो धर्मः, प्रयोजनं वा ? यदि तावद् धर्मः कृतकत्वस्यार्थः, सत्त्वप्रमेयत्वाभिधेयत्वाद्यनुमानं प्राप्तम् । अथ प्रयोजनम्, अनित्यत्वप्रतिपत्तिर्हेतुः प्राप्तः । अथ बहुव्रीहिः नान्तरीयकोऽर्थो यस्येति, तत्रापि कृतकत्वं नान्तरीयकमिति । तद्यस्य स हेतुः प्राप्तः । तच्च कृतकत्वं घटादेः, शब्दस्यानित्यत्वस्य वा ? यदि घटादेः, घटादिर्हेतुः प्राप्तोऽनित्यः शब्दो घटादिति । अथ शब्दस्य, शब्दो हेतुः प्राप्नोति, अनित्यः शब्दः शब्दादिति । अथानित्यत्वस्य साधनभावेन कृतकत्वं धर्मः, तथाप्यनित्यः शब्दोऽनित्यत्वादिति हेतुः प्राप्नोति, अनित्यत्वस्यार्थः कृतकत्वमिति । सर्वथा कृतकत्वमनित्यत्वे न हेतुः । अथ समानाधिकरणो नान्तरीयकश्चासावर्थश्चेति, तथाप्यसमर्थः समासः विशेषणविशेष्यनियमासंभवात् । उभयपदव्यभिचारे सति समानाधिकरणे भवति नीलोत्पलादिवत् । नीलशब्दस्याप्यनेकार्थवृत्तित्वात् उत्पलशब्दस्य च तथाभावात् सामानाधिकरण्यं भवति । न पुनरिह नान्तरीयक इत्युक्ते अस्ति व्यभिचारोऽर्थोऽनर्थ इति, यतोऽर्थग्रहणं [१]समर्थं स्यादिति । एकपदव्यभिचारेऽपि दृष्टं सामानाधिकरण्यम्, यथा पृथिवी द्रव्यमिति । अत्रापि उभयपदव्यभिचारः, प्रधानाङ्गभावस्य भेदेन पृथिवीशब्देन द्रव्यमुच्यते, पृथिवीत्वं च । द्रव्यशब्देनापि प्रधानाङ्गविवक्षायां द्रव्यं द्रव्यत्वं च । अत उभयपदव्यभिचारात् पृथिवी द्रव्यमिति युक्तं वक्तुम् । इदं पुनर्न युक्तं नान्तरीयकार्थदर्शनमिति । कस्मात् ? अर्थप्रत्यायनार्थत्वात् शब्दप्रयोगस्य, अर्थप्रत्यायनार्थं हि शब्दस्य प्रयोगमिच्छन्ति । नान्तरीयक इति चोक्ते अर्थो गम्यते, अतो न युक्तोऽर्थशब्द इति । तद्विद इति च न युक्तम्, नैवान्यथा नान्तरीयक इति । न हि नारिकेलद्वीपवासिनो धूमदर्शने नान्तरीयकमिति ज्ञानमस्ति । अतस्तद्विद इत्येतदपि न वक्तव्यम् ॥

एतेन तादृगविनाभावि धर्मोपदर्शनं हेतुरिति प्रत्युक्तम् । कोऽतिदेशार्थः ? यथा [२]नान्तरीयकार्थदर्शनेऽर्थग्रहणमयुक्तं तथा धर्मग्रहणमपीति । उदाहरणं तु यथा धूमोऽग्नेरिति । एतच्च न संभवतीत्यनेकधा वर्णितम् ॥

---

१. सामर्थ्यं J २. नान्तरीयकार्य° C

अपरे तु मन्यन्ते,

अनुमानेऽथ तत्तुल्ये सद्भावो नास्तितासति ॥

इत्यनुमानम् । एतेन चानुमेयैकदेशवृत्तिरपि संगृहीत इत्यलक्षणम् । यथा अनित्याः परमाणवो गन्धवत्त्वाद् घटवदिति । अनुमेये सद्भाव इत्यभिधानादप्रसङ्गोऽयम् । नाप्रसङ्गः, एकदेशवृत्तेस्तद्धर्मत्वाद् विपक्षैकदेशवृत्तिवत् । यथा विपक्षैकदेशे वर्तमानो न विपक्षे नास्ति, एवं पक्षैकदेशे वर्तमानो न पक्षे नास्तीत्येतद्व्युदासे यत्नः कर्तव्यः । न न कर्तव्यः, अवधारणान्निवृत्तेः । अनुमेये सद्भाव इत्यत्रावधारणे द्वे । किमनुमेय एव सद्भावोऽथानुमेये सद्भाव एवेति । किं पुनरनेन पूर्वेणावधारणेन क्रियते—किमसंभवो निवर्त्यते, अथ संभवो ज्ञाप्यते ? [1]उभयथा च नावधारणेनार्थः, विनैव तदधिगतेर्विनाप्यवधारणेनायमर्थो गम्यते, अनुमेये सद्भावोऽसद्भावश्च नेति । न चैकदेशवृत्तिर्निराकृत इत्यवधारणं व्यर्थम्, उत्तरपदबाधा च । अथोत्तरमवधारणमभ्युपगम्यते तस्य व्याप्तिरर्थः, तथाप्यनुमेयमवधारितं भवति व्याप्त्या न धर्मो, यत एव करणं ततोऽन्यत्रावधारणमिति । संभवव्याप्त्या चानुमेयं नियतम्, [2]व्याप्त्यव्याप्तिभ्यां च संभवः प्रसृतः । तस्य च द्वौ राशी शिष्यमाणौ तत्तुल्यो विपरीतश्च । तत्र नास्तिता असतीत्यनेन विपरीतान्निवर्त्यताम् । तत्तुल्ये सद्भाव इति किमर्थमारभ्यते ? न ह्यनेन अप्राप्तं किञ्चित् प्राप्यते । तत्तुल्ये च संभवमात्रं विवक्षितमिति । संभवमात्रं च [2]व्याप्त्यतिव्याप्तिभ्यामनियतेन संभवेन लभ्यते । अथ तत्तुल्ये सद्भाव इत्येतदवधारणार्थमारभ्यते, किं पुनरत्रावधार्यते ? किं तत्तुल्य [3]एव सद्भावः अथ तत्तुल्ये सद्भाव एवेति ? यदि तत्तुल्ये एव सद्भाव इति सद्भावोऽवधारितः, [4]तदा पूर्वोत्तरपदे बाधिते भवतः । न हि भवति देवदत्तमेव भोजय यज्ञदत्तं च । तथेहापि तत्तुल्य एव सद्भावोऽनुमेये चेत्युन्मत्तवाक्यम् । [5]अथ तत्तुल्ये सद्भाव एव, तत्तुल्यैकदेशवृत्तेरहेतुत्वं यस्तज्जातीयस्यैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिस्तेन स हेतुरिति प्राप्तम् ॥

असति नास्तितेति चासंप्रधार्य प्रोक्तं यदसत् स्वयमेव[6] तन्नास्ति । न हि असदाधारो भवति यतस्तत्र प्रतिषेधः स्यादिति । एतदपि चावधारणार्थमारभ्यते । किमवधार्यते, नास्तितैव असत्येवेति वा ? यदि तावन्नास्तितैव, असतीति व्यर्थम्, अनुक्तेऽपि तदधिगतेः । अनुक्तेऽप्येतद् गम्यतेऽसति नास्तीति । अथ पुनरसत्येव

---

१. उभयथापि नावधारणार्थो, विनापि C २. व्याप्त्यव्या° J ३. अथ J
४. तथा च J ५. अथापि J ६. °स्वरूपमेव C

नास्तिता ? गौरयं विषाणित्वादित्येतदपि हेतुः प्राप्नोति । [१]एष ह्यसत्येव नास्ति, न पुनर्नास्त्येव । यद्यप्येकद्विपदपर्युदासेन सप्तिकासंभवेन षट्प्रतिषेधमुक्त्वा त्रिपदपरिग्रहेण त्रिलक्षणो[२] हेतुरभिधीयते, एतदपि द्विपदयुक्तयोरन्वयिनोर्हेतुत्वात् द्विपदयुक्तस्य च व्यतिरेकिण एकस्य हेतुत्वादयुक्तम् । अनभ्युपगतनित्यपक्षस्य कृतकत्वप्रयत्ननान्तरीकत्वे द्विपदयुक्ते एव विपक्षाभावाद्धेतू भवतः । व्यतिरेक्यपि तत्तुल्यासंभवात् द्विपदयुक्तश्च भवति हेतुश्चेति, यथा नेदं निरात्मकं जीवच्छरीरम् अप्राणित्वप्रसङ्गादिति । अतोऽव्यापकत्वादलक्षणमेतदिति ॥

एतेन संबन्धादेकस्मात् प्रत्यक्षात् शेषसिद्धिरनुमानमिति लक्षणं प्रत्युक्तम् । कथमिति ? न ह्येकस्मात् प्रत्यक्षादनुमानं भवति । अथापि संबन्धादेकस्मात् प्रत्यक्षात् इति ? एतदपि नैव, न ह्ययं तदा संबन्धं पश्यति यदानुमिमीते इति । अथ पूर्वं दृष्टम् इति ? तथाप्युपलब्धसंबन्धस्य पूर्वमनुमानकाले चानुपलब्धलिङ्गस्यानुमानं[३] प्रसज्येत । न चान्या गतिरस्ति । रूपेण च स्पर्शानुमाने स्वदृष्टिव्याकोपः । न ह्ययं रूपस्पर्शयोः संबन्धमुपलभते । अथैकार्थसमवायः संबन्ध इति । सोऽपि स्वदर्शनव्याघातादयुक्त इति । न हि रूपस्पर्शावेकस्मिन्नर्थे परस्य वर्तेते । यत्र रूपं तत्र स्पर्श इति एतदपि नास्ति । न क्वचिद्रूपं स्पर्शो वा परस्पराधाराधेयत्वेन स्यादिति चेत् , परस्पराधाराधेयभावेऽपि न रूपं स्पर्शो न स्पर्शो रूप इति ॥

एतेन सप्तविधः संबन्ध इति प्रत्युक्तम् । न हि कार्यकारणभावादीनां संबन्धानां रूपस्पर्शयोरन्यतमः संभवति । तस्मात् न रूपेण स्पर्शानुमानं युक्तम् । अतोऽव्यापकत्वादलक्षणमिति निष्ठितमनुमानम् ॥५॥

॥ टीका ॥

प्रत्यक्षलक्षणानन्तरमनुमानलक्षणपरं सूत्रं पठति—अथ **तत्पूर्वकं त्रिविधमनुमानमिति** । अत्रानुमानमिति सिद्धवत् प्रमाणविशेषरूपलक्ष्यानुवाद एव नाप्रत्यक्षं प्रमाणमित्यप्रामाण्यमनुमानस्य सुदूरं प्रतिक्षिपति । दृष्टप्रामाण्याप्रामाण्यविज्ञानव्यक्तिसाधर्म्येण हि कासांचिद् व्यक्तीनां प्रामाण्यमप्रामाण्यं वा विदधीत । दृष्टसाधर्म्यं चानुमानम् एवेति कथं तेनैव तस्याप्रामाण्यम् ? अपि चानुमानमप्रमाणमिति वाक्यप्रयोगोऽज्ञं विप्रतिपन्नं सन्दिग्धं वा पुरुषं प्रत्यर्थवान् । न च परपुरुषवर्तिनो देहधर्मा अपि

१. एवं C २. त्रि° हेण om C ३. तथाप्यनुपलब्ध° C

सन्देहाज्ञानविपर्यासा गौरत्वादिवत् प्रत्यक्षमीक्षन्ते । न च तद्वचनात् प्रतीयन्ते, वचनस्यापि प्रत्यक्षादन्यस्याप्रामाण्योपगमात् । पुरुषविशेषमनधिकृत्य तु वचनमनर्थकं प्रयुञ्जानो नायं लौकिको न परीक्षक इत्युन्मत्तवदनवधेयवचनः स्यात् । परिशिष्टं तु परीक्षापर्वणि निवेदयिष्यते[1] । तस्मादकामेनापि प्रमाणमनुमानमुपेतव्यमिति । लक्ष्यं प्रमाणभेदमनुमानमनूद्य तत्पूर्वकमिति लक्षणं विधत्ते । अथेत्यानन्तर्ये उक्तं प्रत्यक्षम् अनुमानस्य हेतुः । [2]अथेदानीमनुमानं हेतुमदृ्व्युत्पाद्यते इत्यर्थः । लक्षणसूत्रतात्पर्यमाह—**अनुमानेति** । तदेव स्फुटयति—**अनेनेति** । समानजातीयानि प्रमाणतया प्रत्यक्षादीनि, असमानजातीयानि चानुमानाभासादीनि, यथा क्षणिकत्वादिषु साध्येषु सत्त्वादीनि । स्यादेतदतिव्यापकमेतत् तत्पूर्वकत्वम् । तदिति हि प्रत्यक्षं परामृशत्यानन्तर्यात् । तथा च प्रत्यक्षपूर्वकत्वमनुमानस्येवागमस्मृतिसंशयविपर्यासानामप्यस्तीति तान्यप्यनुमानं प्रसज्येरन् । अनुमानादिपूर्वकं चानुमानं न प्रत्यक्षपूर्वकमिति नानुमानं स्यात्, अनुमानलक्षणेनाव्याप्तत्वात्[3] । तस्मादव्याप्त्यतिव्याप्तिभ्यामलक्षणमेतदित्यत आह—**तत्पूर्वकमिति** । तत्पूर्वकमित्यावृत्या विग्रहत्रयप्रदर्शनम् । तत्र प्रथमे विग्रहे तानीत्यनन्तरं सूत्रम् उलङ्घ्य विभागसूत्रगताः प्रत्यक्षादयः संबन्धनीयाः योग्यत्वात् । यथाहुः,

यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः ।

इति तदनेन लक्षणस्याव्याप्तिः परिहृता । तदिदमाह—**यदा तानीति** । नन्वेवं प्रत्यक्षपूर्वकमिति भाष्यविरोध इत्यत आह—**पारम्पर्येणेति** । पारम्पर्येण हि प्रत्यक्षपूर्वकत्वमुक्तं भाष्यकृता, तस्मान्न विरोध इति । अतिव्याप्तिनिरासाय द्वितीयं विग्रहं विवृणोति—**यदापीति** । ते इति विग्रहे अनन्तरसूत्रगतमेव प्रत्यक्षपदं संबध्यते । तथा च **द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य** लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्य । **तदिदं तत्पूर्वकं प्रत्यक्षम्**, तद्धि[4] स्वविषये प्रत्यक्षमप्यनुमेयार्थप्रत्ययं कुर्वदनुमानम् । तदिदं तदित्युच्यते । प्रत्यक्षग्रहणमुपलक्षणार्थम्, अनुमाने इत्याद्यपि द्रष्टव्यम् । स्यादेतत् । संबन्धग्रहणसमये [5]पदतदर्थगोचरं प्रत्यक्षं प्रथमम् । अथ तदर्थविषये द्वितीये प्रत्यक्षे सति या तत्पदविषयाः स्मृतिरुत्पद्यते सापि प्रत्यक्षद्वयपूर्वा । एवं लिङ्गालिङ्गिसंबन्धस्मृतिरपि प्रत्यक्षद्वयपूर्वेति तदवस्थैवातिव्याप्तिरित्याशयवान् पृच्छति—**कतरे द्वे इति** । उत्तरम्—**लिङ्गेति** । सर्वसन्देहेष्विदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति भावः । न च द्वितीयलिङ्गदर्शनं व्याप्तिस्मरणसमये विनश्यदवस्थमप्यस्ति, व्याप्तिसंस्कारोद्बोध-

---

१. २।१।३७ २. अथ om C ३. ०व्यापनात् C ४. तत्तु C ५. यदेतत्तद० C

समयजन्मना स्वजनितेन संस्कारेणास्य व्याप्तिस्मरणसमये विनाशात्। विनश्यदवस्थस्य द्वितीयलिङ्गदर्शनस्य व्याप्तिस्मरणेन सह यौगपद्येऽपि तयोः परस्परवार्तानभिज्ञतया मिथो घटनायोगः। न चात्मा [१]ते घटयतीति युक्तम्। वृत्त्या खल्वयं घटयेत्, न स्वरूपतः। तस्माद् उभाभ्यामुत्पन्नं परामर्शज्ञानमिन्द्रियार्थसन्निकर्षजं तृतीयं प्रत्यक्षम् एषितव्यम्। [२]बुभुत्सावतो द्वितीयादिति। बुभुत्साप्यनुमानज्ञानोत्पत्तौ कारणमिति दर्शयितुं बुभुत्सावत इत्युक्तम्। **लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षम्** इत्यत्र संबन्धपदेनानुमानाङ्गं संबन्धं विवक्षन् परोक्तान् संबन्धविकल्पान् अनुमानानङ्गभूतान् प्रतिक्षिपति—**प्रत्यक्षमिति** च तस्य प्रमाणमाह। तथा हि केचिदविनाभावं तादात्म्यतदुत्पत्तिनिबन्धनमनुमानाङ्गमाहुः। द्विविधो ह्यर्थः, प्रत्यक्षश्च परोक्षश्च। तत्र यो बुद्धौ साक्षादात्मीयं रूपं निवेशयति स प्रत्यक्षः। स हि स्वविषयाया बुद्धेः जनक इति तमन्तरेण बुद्धिरात्मानमनासादयन्ती तस्य सत्तां निश्चाययतीति युक्तम्। परोक्षस्तु बुद्धौ साक्षात् स्वरूपोपधानसामर्थ्यरहितोऽयुक्तप्रतिपत्तिरेव। न चान्यदर्शने अन्यकल्पना युक्ता, अतिप्रसङ्गात्। नान्तरीयकतया त्वन्योऽप्यन्यं गमयेत्। स हि प्रतिबद्धस्वभावो यथाविधः सिद्धः, तथाविधसन्निधानं सूचयति। स च प्रतिबन्धो [३]न दर्शनादर्शनमात्रादवसेयः, तथा सति स श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यप्यनुमानं स्यात्। इहापि हि स्तो दर्शनादर्शने। तस्मात् तादात्म्यतदुत्पत्तिनिबन्धन एव प्रतिबन्धः। यथाह

कार्यकारणभावाद् वा स्वभावाद् वा नियामकात्।
अविनाभावनियमो दर्शनान्न न दर्शनात्॥[४]

तथा च लिङ्गविकल्पं विना न लिङ्गिविकल्पः। न लिङ्गविकल्पो लिङ्गानुभवं विना। न लिङ्गानुभवो लिङ्गं विना। न चाविनाभूतं लिङ्गं विना लिङ्गिनमिति लिङ्गिस्वलक्षणाप्रतिभास्यपि पारम्पर्येण तत्प्रतिबन्धात् [५]तत्राविसंवादकोऽनुमानविकल्प इति। कार्यकारणभावश्चेदम्। अस्मिन् सति भवति सत्स्वपि तदन्येष्वस्मिन्नसति न भवति एवमाकारो नान्वयव्यतिरेकाभ्यामतिरिच्यते। तौ च प्रत्यक्षपृष्ठभाविना विकल्पेनावसीयेते। तथा हि सत्यग्नौ धूम इति प्रत्यक्षमेव विकल्पानुगतव्यापारमध्यवस्यति। असति चाग्नौ न धूम इत्यपि प्रत्यक्षमेव, न ह्यग्निधूमानुपलम्भावन्यौ। अतस्तद्विविक्तवस्तूपलम्भात्

---

१. तु घटयिष्यतीति C २. बुभुत्सावतो° इत्युक्तम् om C ३. न दर्शनमात्रात् C
४. प्र. वा. ३.३० ५. तत्रापि संवा° C

नाप्यनयोर्व्यतिरेकोऽन्यस्तद्विविक्ताद् वस्तुनः। एवं तादात्म्यमपि विपर्यये बाधकप्रमाणोपपत्त्या निश्चेतव्यम्, यथा सत्त्वस्य क्षणिकतया सह तादात्म्यं विपक्षेऽक्षणिके[1] क्रमाक्रमयोर्व्यापकयोरनुपलम्भान्निश्चीयते। तस्मात् तादात्म्यतदुत्पत्तिभ्यामेव प्रतिबन्धो नान्यत इति॥

अत्रोच्यते। सत्यं यत् किञ्चित् क्वचिद् दृष्टम्, तस्य यत्र प्रतिबन्धः तद्विदस्तस्य तद्गमकं तत्रेत्यनुजानीमः। स एव तु प्रतिबन्धो न तावत् तदुत्पत्त्या संभवति। का पुनरियं तदुत्पत्तिर्धूमस्य? किं वह्न्यनन्तरं भावः? स तादृशोऽस्ति रासभस्यापीति तत्प्रतिबद्धोऽपि धूमः स्यात्। अथ तदनन्तरमेव भावः, न च रासभानन्तरं भवन्नपि तदनन्तरमेव भवति, तस्मिन् सत्यप्यसत्यग्नौ तदभावात्। असत्यपि तस्मिन् सति आर्द्रेन्धनवति वह्नौ तद्भावात्। अथ यद्यपि धूमस्य वह्निभावाभावानुविधानं तत्रोपलब्धं तथापि देशान्तरादिषु तद्भावोऽस्य कुतस्त्यः? तथा हि भूयो भूयो रासभे दृष्टे धूमो दृष्टः, तदभावे चादृष्टः। न च स तत्कार्यः। तज्जातीयस्यैव धूमस्य रासभं विना सति वह्नौ भावात्। एवं सत्यप्यग्नौ पिशाचेन जनितो धूमः क्वचित् देशादौ तज्जातीय एव रासभवद् वह्न्यभावेऽपि पिशाचादेव भविष्यतीति,

अवश्यं शङ्कया भाव्यं नियामकमपश्यताम्।

न च सति भावमात्रं नियामकम्, तस्य [2]रासभादिष्वप्यविशेषात्। तदनन्तरमेवेति चावधारणस्य [3]शङ्कापनयनमन्तरेणासंभवात्। अवधारणेन तु शङ्कापनये परस्पराश्रयप्रसङ्गः॥

स्यादेतत्। यो यो धूमो दृष्टः स सर्वस्तावदार्द्रेन्धनसहितवह्न्यनन्तरमेव न पिशाचानन्तरम्। स च कादाचित्कतया निमित्तमपेक्षमाणो यदनन्तरमेव गम्यते तदेवाप्रतीतव्यभिचारं[4] निमित्तीकरोति, न तु प्रतीतव्यभिचारं रासभादि। नापि सर्वथा अनुपलब्धपूर्वपिशाचादि। यदि [5]न तन्निमित्तं कस्मात् विनापि वह्निं क्वचिद् धूमो नोपलभ्यते? अथासौ सर्वथा वह्निसहितः, तथा सत्यार्द्रेन्धनवत् कथं वह्निरपि न कारणम्? कारणं चेत् कथं तदन्तरेण धूमभावशङ्का? अकारणस्य हि कार्यस्य नित्यं सत्त्वमसत्त्वं वा स्यात्, अनपेक्षत्वात् न कादाचित्कत्वम्। नाप्यनेककारणकम्, अकारणकत्वप्रसङ्गादेव। [6]वह्न्यनन्तरमेव भाव इति हि धूमस्य वह्निकार्यत्वम्। स चेत्

१. क्षणिकत्वे　२. अपि om C　३. च शङ्कायामभावात् C　४. निमित्तं C
५. तु J　६. तथा हि वह्न्य° J

अवह्नेरप्यनन्तरं नैवकारार्थः स्यादिति न वह्नेः कार्यम् । एवमन्यस्यापि न कार्यम् । न हि अन्यानन्तरमेव भवति, वह्नेरप्यनन्तरं भावात् । ततश्चाहेतुको धूमः स्यात् । तथा च कादाचित्कत्वव्याहतिः ॥

सत्यम्, तत्कार्यत्वसिद्धौ स्यादेवम् । तदेव तु तदनन्तरमेव भाव इत्येवंरूपं [1]नास्ति । यद्यपि च विना वह्निं नोपलब्धो धूमो यद्यपि च पिशाचानन्तरं नोपलभ्यते तेषामनुपलब्धेः, तथापि पिशाचकार्य एव धूमस्यत्र तत्र वह्निः कुतश्चित् स्वहेतोरुपनिपतितो रासभ इव न तु धूमस्य जनकः । तेन तदभावेऽपि तज्जातीय एव कारणभेदजन्मा कदाचित् कादाचित्को धूमः स्यादिति अनिवृत्तिरेव शङ्कायाः । न च दृष्टसंभवे नादृष्टं कल्पयितुं युक्तमिति शक्यं भवद्भिर्वक्तुम्, अनुपलब्धिलक्षणप्राप्तस्य अशक्यनिराकरणत्वात् । न चानुपलब्ध्यन्तराण्यपि तन्निषेधे प्रभवन्ति । तस्मात् अनन्तरमेवेत्यवधारणाभावात् [2]नैवंरूपं कार्यकारणभावावधारणं युक्तम् । न च यद् यदन्यसहितानन्तरम् मुपलब्धं तत् तदन्यरहितात् तस्माद् भवद् भिन्नजातीयं भवति । उक्तं हि रासभसहिताद् वह्नेर्यादृशो धूमः तादृश एव तद्विरहिताद् वह्नेरिति । तस्मादेवंविधा शङ्कापिशाची स्वनिवारकं तदुत्पत्तिनिश्चयमास्कन्दन्ती न शक्या निवारयितुम् । अपि चास्तु तदुत्पत्तिनिश्चयः, तथापि कस्मात् कारणमन्तरेण न कार्यं भवति ? तथा च सत्यनपेक्षतया कादाचित्कत्वविहतिरिति चेत्—यथाह,

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः[3] ॥

इति । अस्तु तर्हि संबन्धः स्वाभाविकतया अन्यानपेक्षोऽव्यभिचारी गमकाङ्गम् । स च यो वा स वा भवतु, कृतं कार्यकारणभावावधारणायासेन । यथा चैतत् तथात्रैव[4] प्रदर्शयिष्यामः ॥

अपि च कार्यात् कारणमनुमीयमानं ततः पूर्वमेवानुमीयेत, न तु वर्तमानकालम् । न हि हेतुसत्ता कार्यकाला कार्योत्पादाङ्गम्, अपि तु तत्पूर्वकाला । न हि नदीपूरभेदः स्वसत्तासमयवर्ति वर्षं गमयत्यपि तु तत्पूर्वकालम् । तत्कालं तु न तस्य कारणम् । अतएव साधकबाधकप्रमाणाभावेन तत्कालवर्तिनि वर्षे सन्दिहाना न तदर्थिनः प्रवर्तन्ते । एवं धूमादप्यग्निः तत्पूर्वकाल एवानुमीयेत, न तु वर्तमानकालः । तथा च सति न तदर्थिनः

१. नास्ति om J २. नैवं C only, कार्यावधारणं J ३. प्र. वा. ३.३४
४. तथाग्रे C, पृ॰ ३०९.१२

तत्र निःशङ्कं प्रवर्तेरन्। अपि च रसादन्यद्रूपं रससमानकालमनुमिमतेऽनुमातारः। न चानयोरस्ति कार्यकारणभावः तादात्म्यं वा। यद्युच्येत तत्पूर्वेभ्यो रूपरसगन्धस्पर्शक्षणेभ्यो रसक्षणो जायते, स स्वकारणं पूर्वरूपक्षणमनुमापयन् यादृशा तेन जनितः, तादृशमेवानुमापयति। स चानुमापकरसक्षणसमानकालरूपक्षणान्तरजनक एव स्वकारणम् इति तादृशमेव गमयति। तथा च कार्यसमानकालरूपानुमानसिद्धिः। एतेन धूमानुमानं व्याख्यातम्। यथाह,

एकसामग्र्यधीनस्य रूपादेरसतो गतिः।
हेतुधर्मानुमानेन धूमेन्धनविकारवत्[१] ॥

इति ॥

अत्रोच्यते। योऽयं गमकरससमानकालो रूपक्षणः, स किं तज्जनकस्य रूपक्षणस्य स्वभाव उत तत्स्वभावावच्छेदकोऽस्वभावभूतः? न तावत् स्वभावः, एकस्मिन्नभिन्ने जन्यजनकभावानुपपत्तेः, तस्य भेदाश्रयात्। तदस्वभावभूतः कथं तदनुमाननिवेशी? तदवच्छेदकत्वादिति चेत्? ननु नैतावताप्यस्य[२] तुल्यकालस्य रूपस्य कारणभाव इति कथं कार्यं हेतोर्गम्येत[३]? विशिष्टेन कारणस्वभावेनास्वभावोऽपि असावाक्षिप्यते विशेषणतयेति चेत्? नन्वाक्षिप्यते ज्ञाप्यत इत्यनर्थान्तरम्। [४]स किं कारणानुमितेः [५]प्रागथानुमितिसमये पश्चाद् वा? न तावत् प्राक् न हि सत्तामात्रेण कारणं तद् गमयत्यतिप्रसङ्गात्, किं तु स्वज्ञानेन। न च कार्यमस्य गमकम्, अकारणत्वादित्युक्तम्। अतएवानुमितिसमयेऽप्यगमकम्, स्वज्ञानेन गमकत्वात्। उभयोश्च ज्ञानयोः सहभवतोः सव्येतरविषाणवत् कार्यकारणभावाभावात्। तथा च रसात् कार्यात् तत्कारणं रूपमनुमातव्यम्। ततश्चानुमिताद् रूपात् कारणात् तत्कार्यं रससमानकालं रूपमनुमातव्यम्। तथा च कारणात् कार्यानुमानं तादात्म्यतदुत्पत्तिभ्यामन्यत इति[६] नाभ्यामेव प्रतिबन्धसिद्धिः। लौकिकानां चेदं रसाद् रूपानुमानम्, न चैते पिशितचक्षुषः क्षणानामन्योन्यभेदमध्यवस्यन्ति। न चानध्यवस्यन्तः [७]प्रवृत्तरूपोत्पादनसामर्थ्यं रसहेतुं रूपमनुमातुमुत्सहन्ते। न च [८]लक्षणानुरोधेन लक्ष्यस्यान्यथाकरणं युक्तं परीक्षकाणाम्। अतिपतितलोकमर्यादानां तेषां तत्त्वानुपपत्तेः। यथाहुः,

---

१. प्र॰ वा. ३.८ २. एतावताप्यस्य K ३. कार्यहेतोः J ४. सा...मितिः C ५. प्रागप्यनु॰ C ६. ॰मभूदिति C ७. प्रवृत्त J ८. स्वलक्षण॰ CK

सिद्धानुगममात्रं च कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम्[1] ॥

इति । अपि चाद्यतनस्य सवितुरुदयस्य ह्यस्तनेन सवितुरुदयेन, चन्द्रोदयस्य च समानकालस्य समुद्रवृद्ध्या, मध्यनक्षत्रदृष्ट्या चाष्टमास्तमयोदयस्य, न कार्यकारणभावः तादात्म्यं वा, अथ च दृष्टो गम्यगमकभावः । अपि च तादात्म्येऽपि कथं गम्यगमकभावः ? न हि तदेव कर्म च कर्तृ चेति युक्तम् । तस्य भेदाश्रयत्वात् । यद्यपि च वृक्षत्वशिंशपात्वे परमार्थतो न भिन्ने तथापि भेदान्तरप्रतिक्षेपाप्रतिक्षेपाभ्यां कल्पितभेदयोर्गम्यगमकभाव इति चेत्—न, वास्तवमेव वृक्षत्वशिंशपात्वयोर्भेदमुपपादयिष्यामः[2] । अपि च काल्पनिकमपि रूपं विचार्यमाणं न यथा भिन्नमेवमभिन्नमपि न भवति, वस्तुनोऽपि तुच्छत्वप्रसङ्गात् । काल्पनिकस्यावास्तवत्वेन तत्त्वानुपपत्तेः । तस्मात् कल्पनारूढयोर्न वस्तुतादात्म्यम् , नापि परस्परम् । तथा सति सद्द्रव्यपार्थिववृक्षशिंशपादिविकल्पानां च पर्यायत्वप्रसङ्गात् ॥

स्यादेतत् । कल्पनाभेदविरहिणां भेदमुल्लिखन्त्यपि परस्परमेषामभेदमप्यवगाहते सामानाधिकरण्याकारत्वात् , अभेदानुल्लेखे तदनुपपत्तेः । तथा च तादात्म्यं सिद्धमिति । [3]तदयुक्तम् । उक्तं हि यथा सामानाधिकरण्यं न भावानामभेदसाधकम् । जात्यादिशब्दा हि जात्यादीन् निमित्तीकृत्य द्रव्ये वर्तन्ते । तच्चाधिकरणमेकमिति सामानाधिकरण्यम् अश्नुवते, न पुनर्जात्यादीनपि मिथो मिश्रयन्ति । शब्दसमानविषयाणां विकल्पानाम् अपीयमेव गतिः । तस्माद् यत्र गम्यगमकभावो न तत्र तादात्म्यम् , यत्र तादात्म्यं न तत्र गम्यगमकभाव इति सिद्धम् । यत्तु विदितशिंशपाव्यवहारमविदितवृक्षव्यवहारमुच्चायां हि शिंशपायां वृक्षशब्दः प्रयुक्तः, तस्मादुच्चत्वमेव वृक्षशब्दप्रवृत्तिनिमित्तमिति मन्यमानं मूढं प्रति शिंशपात्वेन वृक्षव्यवहारमात्रं साध्यते । वामनायामपि शिंशपायां वृक्ष इति व्यवहर्तव्यम् , शिंशपामात्रानुबन्धित्वाद् वृक्षत्वस्येति । तत्रापि चेद् व्यवहारः साध्यः स शिंशपाया भिन्न इति, न तादात्म्यम् । व्यवहारयोग्यता चेत् ? सा शिंशपाया अभिन्नेति न गम्यगमकभावः । व्यावृत्तिभेदे चोक्तम् । तस्मात् तादात्म्यतदुत्पत्तिभ्यां प्रतिबन्ध इति मनोरथमात्रम् ॥

यश्च वैशेषिकैः चतुष्प्रकारः संबन्ध उच्यते, अस्येदं कार्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकम् [ वै. सू. ९।२।१ ] ॥ इति, अत्रापि संबन्धि-

---

१. श्लो. वा. प्रत्यक्ष. १३३ २. पृ॰ ३०८.१५ ३. °युक्तं यथा हि C

पदेनैव सर्वोपसंग्रहात् शेषाभिधानं व्यर्थम् । न च संबन्धिपदोपात्तस्यातिप्रसक्तिः शेषपदैर्निवार्यते । तथा सति शेषपदान्येव सन्तु कृतं संबन्धिपदेन, तेभ्य एव संबन्धिभेदानामधिगतेः । न चैवं चातुर्विध्यं संबन्धस्यानुमानाङ्गस्य । तच्चेष्यते । तथा च संबन्धिपदस्य [१]संबन्धिमात्रावरोधेऽतिव्याप्तिः । अपि च [२]भूतं वर्षम् अभूतस्य वाय्वभ्रसंयोगस्य कथं विरोधि ? तद्धि तदनुकूलमेव । एवम् [३]अभूतम् वर्षं भूतस्य वाय्वभ्रसंयोगस्याप्रतिकूलम् । एवं [४]भूतो नकुलजयो न भूतस्य सर्पपराजयस्य विरोधी । नापि [५]अभूतोऽसौ अभूतस्य विरोधी । येषां पुनर्विरोधः, तेषामन्यतमदन्यतमस्य न लिङ्गमपि तु प्रतिक्षेपकमेव ॥

एतेनैव,

मात्रानिमित्तसंयोगिविरोधिसहचारिभिः ।
स्वस्वामिवध्यघाताद्यैः सांख्यानां सप्तधानुमा ॥

इत्यपि पराकृतं वेदितव्यम् ॥

तस्माद् यो वा स वास्तु संबन्धः केवलं यस्यासौ स्वाभाविको नियतः, स एव गमको गम्यश्चेतरः संबन्धीति युज्यते । [६]तथा हि धूमादीनां वह्न्यादिसंबन्धः स्वाभाविकः, न तु वह्न्यादीनां धूमादिभिः । ते हि विनापि धूमादिभिरुपलभ्यन्ते । यदा त्वार्द्रेन्धनादिसंबन्धमनुभवन्ति, तदा धूमादिभिः सह संबध्यन्ते । तस्माद्वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः संबन्धो न स्वाभाविकः, ततो न नियतः । स्वाभाविकस्तु धूमादीनां वह्न्यादिसंबन्धः, तदुपाधेरनुपलभ्यमानत्वात् । क्वचिद् व्यभिचारस्यादर्शनात् अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः । अतो नियतः संबन्धोऽनुमानाङ्गम् । न चादृश्यमानोऽपि दर्शनानर्हतया साधकबाधकप्रमाणाभावेन सन्दिह्यमान उपाधिः [६]संबन्धस्य स्वाभाविकत्वं प्रतिबध्नातीति सांप्रतम् ॥

अवश्यं शङ्कया भाव्यं [७]नियामकमपश्यताम् ।

इति दत्तावकाशा खल्वियं [८]लौकिकप्रमाणमर्यादातिक्रमेण शङ्काशिाची लब्धप्रसरा न क्वचित् नास्तीति नायं क्वचित् प्रवर्तेत । सर्वत्रैव कस्यचित् कथञ्चिदनर्थस्य शङ्कास्पदत्वात् । अनर्थशङ्कायाश्च प्रेक्षावतां निवृत्त्यङ्गत्वात् । अन्ततः स्निग्धान्नपानोपयोगेऽपि मरणादिदर्शनात् । तस्मात् प्रामाणिकलोकयात्रामनुपालयता यथादर्शनं शङ्कनीयम् ।

१. सर्वमात्राव° C २. द्रः वै. सू. ३. १. ८[च] ३. तदेव ४. तदेव ५. तदेव, ६. संबन्धस्य om C ७. नियामकाभावादिति C ८. लौकिक° J

न त्वदृष्टपूर्वमपि । न त्वदृष्टपूर्वमपि । विशेषस्मृत्यपेक्षो हि संशयो नास्मृतेर्भवति । न च स्मृतिरननुभूतचरे भवितुमर्हति । तस्मादुपाधिं प्रयत्नेनान्विष्यन्तोऽनुपलभ्यमाना नास्तीत्यवगम्य स्वाभाविकत्वं संबन्धस्य निश्चिनुमः ॥

स्यादेतत् । अन्येनान्यस्य सहकारेण चेत् स्वाभाविकः संबन्धो भवेत्, सर्वं सर्वेण स्वभावतः संबध्येत । तथा च सर्वं सर्वस्माद् गम्येत । [1]अथान्यस्य चेदन्यत् कार्यम्, कस्मात् सर्वं सर्वस्य न भवति, अन्यत्वाविशेषात् । ततश्च स एवातिप्रसङ्गः । यद्युच्येत, न भावस्वभावाः पर्यनुयोज्याः, तस्मादन्यत्वाविशेषेऽपि किञ्चिदेव कारणं कार्यञ्च किञ्चिदिति । नन्वेष [2]स्वभावानामनुयोगो भिन्नानामकार्यकारणभूतानामपि स्वभावप्रतिबन्धे तुल्य एव । तस्माद् यत्किञ्चिदेतत् । कः पुनः प्रमाणेन स्वाभाविकः संबन्धो गृह्यते ? प्रत्यक्षसंबन्धिषु प्रत्यक्षेण, यथाह—**लिङ्गलिङ्गिसंबन्धदर्शनमाद्यमिति** । यदा तावत् प्रथमं वह्निधूमयोः सहार्द्रेन्धनयोः संबन्धं पश्यति तदा द्वयोरपि किं स्वाभाविकः संबन्ध औपाधिको वा ? अथ धूमस्यौपाधिको वह्नेः स्वाभाविकः, वह्नेर्वौपाधिको धूमस्य तु स्वाभाविक इति न शक्यं निर्धारयितुम् । तत्र वह्नेरनार्द्रेन्धनस्य विनाधूममयोगोलकादौ दर्शनाद् आर्द्रेन्धनोपाधिरस्य धूमेन संबन्धो, न तु स्वभाविक इति निश्चीयते । धूमविशेषस्य तु विना वह्निमनुपलम्भाद् उपाधिभेदस्य चादृश्यमानस्य कल्पनायां प्रमाणाभावाद् विशेषस्मृत्यपेक्षस्य च संशयस्यानुपलब्धपूर्वे अनुत्पादात्, उत्पादे वा अतिप्रसङ्गात् प्रेक्षावतां प्रवृत्त्युच्छेदात् स्वाभाविकः संबन्धः अवधार्यते । तदिदमवधारणं न मानसम्, अनपेक्षस्य मनसो बाह्ये प्रवृत्तावन्धबधिराद्यभावप्रसङ्गात् । भूयोदर्शनसापेक्षस्य च प्रवृत्तौ प्रमाणान्तरापातात्, न हि मनो निमित्तम् इत्येव मानसं प्रत्यक्षं भवति । तथा सति न किञ्चिन्मानसम्, प्रत्ययमात्रस्य मनोनिमित्तत्वात् । तत्तदसाधारणकारणापेक्षया तु तत्प्रमाणव्यपदेशो अत्रापि भूयोदर्शनम् असाधारणमिति प्रमाणान्तरं जातम् । तस्मादभिजातमणिभेदतत्त्ववद्भूयोदर्शनजनितसंस्कारसहायमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविकसंबन्धग्राहीति युक्तमुत्पश्यामः ॥

एवं मानान्तरविदितसंबन्धिषु मानान्तराण्येव यथास्वं भूयोदर्शनसहायानि स्वाभाविकसंबन्धग्रहणे प्रमाणमुन्नेतव्यानि । स्वभावतश्च प्रतिबद्धा हेतवः स्वसाध्येन यदि साध्यमन्तरेण भवेयुः, स्वभावादेव प्रच्यवेरन्निति तर्कसहाया निरस्तसाध्यव्यतिरेकवृत्तिसन्देहा यत्र दृष्टाः तत्र स्वसाध्यमुपस्थापयन्त्येव । न च श्यामादिषु मैत्रतनयादीनां

---

१. उत्तरम्—अथा° J २. स्वभावानु° J

स्वाभाविकप्रतिबन्धसंभवः, अन्नपानपरिणतिभेदस्योपाधेः श्यामताया मैत्रतनयसंबन्धं प्रति विद्यमानत्वेन मैत्रतनयत्वस्यागमकत्वात् । एतेन पक्वान्यस्य वृक्षस्याग्रवर्तीनि फलानि एतद्वृक्षप्रभवत्वात् पतितफलवदित्यादयोऽप्यौपाधिकसंबन्धा व्याख्याताः । तस्मात् सर्वमवदातम् ॥

नन्वन्तिमप्रत्यक्षमतीताभ्यां प्रत्यक्षाभ्यां कथमनुगृह्यते इत्यत आह—**स्मृत्या चेति** । **चो** हेत्वर्थे । यद्यपि स्वरूपतो लिङ्गदर्शने अतीते, तथापि तज्जनिता स्मृतिः अनुगृह्णाति यस्मादतस्ताभ्यामनुगृह्यते । अनुग्रहश्च करणमेव । संबन्धस्मृतिसहकारिणा इन्द्रियेण स्वसाध्याविनाभूतलिङ्गविज्ञानं यदुपजन्यते तत् परामर्श इत्याख्यायते । तथाभूतलिङ्गगोचर एव चतुर्थो वाक्यावयव उपनय इत्याख्यायते । अत्र पृच्छति—**कः पुनरिति** । अनुमानशब्दस्यार्थो न तावदनुमितिः । न खलु लिङ्गपरामर्शोऽनुमितिः, प्रत्यक्षफलत्वात् । तस्मादनुमीयते अनेनेति करणार्थो वक्तव्यः । स च लिङ्गविषयः क्रिया च लिङ्गिविषयेति विषयवैषम्यात् न क्रियाकरणभाव इति भावः । उत्तरम्—**अनुमीयत** इति । तेनैवाभिप्रायेण पृच्छति—**किं पुनरिति** । उत्तरम्—**अग्नीति** । प्रष्टा स्वाभिप्रायमुद्घाटयति—**कथं पुनरन्यविषयमिति** । **एकदेशिन** उत्तरम्—**नानियमादिति** । वृक्षोद्देशेन प्रवर्तितः परशुः कर्त्रा न तदवयवोद्देशेन, तस्माद् वृक्षविषयः परशुर्न तदवयवविषयः । द्वैधीभावश्चावयवेषु न वृक्षे, तस्य ततो विनाशात् इति भावः । **क्वचित् पुनर्यद्विषयमिति** । औष्ण्यापेक्षो वह्निसंयोगः करणं तण्डुलेषु । रूपादिपरावृत्तिरूपः पाकः तेष्वेव । तण्डुलेन पिठरं लक्षयति । न केवलं समानविषयत्वानियमः कर्तुः करणं भिन्नमित्यपि नियमो नास्तीत्यनियमाभिधानप्रसङ्गेनाह—**क्वचित् पुनरिति** । स्थितिः सावयवेषु समवायो वा प्रदेशविशेषे संयोगो वा । एवमनियमं दृष्टान्त उक्त्वा दार्ष्टान्तिके योजयति—**एवमन्यविषयस्येति** धूमविषयस्य प्रमाणस्याग्निविषया क्रिया प्रमितिः । यदा अग्निविषयमेव ज्ञानं प्रमाणं तत्राह—**क्वचित् पुनरिति** । आक्षिपति—**किं पुनरिति** । अत्र हेतुमाह—**प्रमितत्वात्** । उत्तरम्—**प्रमीयते** । [1]तद्विभजते—**हेयत्वेनेति** । अनियमवादिन **एकदेशिनो** मतं नियमवादी दूषयति—**तन्नेति** । हेतुमाह—**प्रमाणफलयोरिति** । यदि अन्यविषयं करणमन्यविषया क्रिया भवेत् ततश्छेदने खदिरं प्राप्ते पनसादावपि च्छिदा स्यादित्यतिप्रसङ्गः स्यात् । यद्यपि वृक्षोद्देशेन कर्त्रा परशुः प्रयुक्तस्तथाप्ययं वृक्षमिव तदवयवानपि प्राप्त

१. तद्विभजते om C

इति तद्विषयो भवति। तेन तदवयवद्वैधीभावमुखेन वृक्षविषयामपि द्वैधीभावक्रियां जनयतीति न वैयधिकरण्यं करणफलयोः। एवं यद्यपि लिङ्गविषयं प्रत्यक्षफलतया लिङ्गज्ञानम्, तदनुबद्धस्य तस्य मानसप्रत्यक्षगोचरत्वात्, लिङ्गनिरूपणमन्तरेण तदनिरूपणात्। न तु लिङ्गज्ञानं लिङ्गिनं विना न निरूप्यते। तस्मात् प्रतिपत्त्यनुबन्धितया विषयो न लिङ्गज्ञानस्य लिङ्गी, किं तु लिङ्गमेव। तथापि लिङ्गिविषयप्रतिपत्तिजनकत्वात् लिङ्गज्ञानं भवति लिङ्गिविषयम्। न चातिप्रसङ्गः, स्वाभाविकसंबन्धशालित्वात् लिङ्गस्य लिङ्गिनि। तस्माद् द्विविधो विषयभावः [1]प्रतिपत्त्यनुबन्धितया, प्रतिपाद्यतया च। तत्र पूर्वः फलस्य, उत्तरस्तु प्रामाण्यस्येति [2]विवेकः। तस्मात् सुष्ठुक्तम्—**प्रमाणफलयोर्विषयभेदानभ्युपगमादिति**। स्थितौ तु भेदो दर्शयिष्यते कर्तुः करणस्य चेति। तदेवं तानि ते इति विग्रहद्वयं परस्परापेक्षमुपपाद्य तानि तदिति विग्रहद्वयं परस्परापेक्षमुपपादयति—**यदा पुनरिति**। लिङ्गलिङ्गिसंबन्धदर्शनं च अनन्तरलिङ्गदर्शनं च तत्स्मृतिश्चेति विग्रहः। अत्रापि सर्वसन्देहेष्विदमुपतिष्ठते, व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति भावः॥

ननु यदि प्रमाणफलयोरेकविषयत्वं तर्हि परामर्शज्ञानविषयीकृत एवार्थो विषयीकर्तव्यो नान्यः। स च प्रत्यक्षप्रमाणविषय एवेति कृतमनुमानेनेत्याशयवान् पृच्छति—**किं पुनरिति**। तैर्विशिष्टेन लिङ्गपरामर्शेनेत्यर्थः। उत्तरम्—**शेषोऽर्थः**। प्रत्यक्षप्रमितात् लिङ्गादन्यो लिङ्गी तद्विषयत्वं च लिङ्गपरामर्शस्योक्तमिति। पृच्छति—**अनुमानमित्यत्र किं कारकम्?** अनुमीयतेऽनेनेति करणकारकमेव युक्तं, तस्यैव लिङ्गदर्शनद्वयस्मृतिपूर्वकत्वात्, न त्वनुमितिरनुमानं [3]प्रमाणव्यापारत्वेनातन्निमित्तत्वात् करणकारकादन्यत्वाद् अतत्पूर्वकत्वाच्चेति भावः। उत्तरम्—**भावः करणं वा**। ननूक्तं न भावः कारकमित्यत आह—**यदेति**। न द्रव्यादीनामेव कारकत्वम्, अपि तु व्यापारस्यापि। अन्यथा कर्मनामधेयेषूद्भिदादिशब्देषु न करणविभक्तिः श्रूयेत, उद्भिदा यजेत दर्शपौर्णमासाभ्यां यजेतेत्यादि। संभवति हि तस्यापि सिद्धस्य फलभावनायां निमित्तत्वम्। एवं वह्निप्रमायाः सिद्धायाः संभवति हानादिबुद्धिनिमित्तभावः। एतस्मिंश्च कल्पे तत्पूर्वकमित्यत्र तदा हानादिसंबन्धावधारणसमये [4]प्रथमं वह्नित्वस्य लिङ्गस्य दर्शनम्, अथानुमानिकं द्वितीयम्, अथ संबन्धस्य स्मृतिरिति त्रयमेकीकृत्य

१. °न्धितया° पाद्यतया C २. तद्विवेकः C ३. °व्यापारत्वे न तन्निमित्तात् कारकत्वादन्य° J ४. प्रथमं ज्ञानं C

परामर्शोऽन्यम् । तत्पूर्वको हि तथा चायमनुमीयमानो वह्निरिति लिङ्गपरामर्शः । तस्माद् दाहपाकादिकारित्वादुपादेयो वह्निरिति ज्ञानमनुमानस्य फलम् । ततश्च तत्पूर्वकत्वमपि सिद्धं भवतीति भावः । करणकारकपक्षे फलमाह—**यदा करणमिति** । अत्र विमृशति—**लिङ्गेति** । तत्पूर्वकत्वानुमितिनिमित्तत्वसमानधर्मदर्शनात् संशयः । अत्र **आचार्यदेशीय**-मतमाह—**एके तावदिति** । सत्स्वपीतरेषु स्मृतेरभावादनुमितेरनुत्पादनेन स्मृतिरेव अनुमानम्, इतरे तु तदनुग्राहका इत्यर्थः । मतान्तरमाह—**अपर इति** । सत्स्वपीतरेषु लिङ्गपरामर्शं विना अनुमित्यनुत्पादात्, लिङ्गपरामर्श एवानुमानमितरैरनुगृहीत इत्यर्थः । स्वमतमाह—**वयं त्विति** । अन्वयव्यतिरेकाभ्यामशक्यो गुणप्रधानभावो विवेक्तुम्, तयोः सर्वत्र तुल्यत्वादिति भावः । तत् किमिदानीं नास्त्येव गुणप्रधानभाव इत्यत आह—**प्रधानेति** । [1]नान्वयव्यतिरेकावत्र प्रभवतो न तु न्यायान्तरमिति भावः । पृच्छति—**कः पुनरत्रेति** । उत्तरमाह—**आनन्तर्येति** । नेहास्ति तिरोहितं किञ्चित् ॥

अतिव्याप्तिं चोदयति—**यदीति** । ननु भवतु प्रत्यक्षद्वयपूर्वकः संस्कारोऽनु-मानम्, तेनापि शेषोऽर्थोऽनुमास्यत इत्यत आह—**स्मृतिहेतुः** नानुमितिहेतुरित्यर्थः । परिहरति—**नैष दोष इति**। विशिष्टज्ञानं विज्ञानम् विशेषश्च स्मृतेरन्यत्वम्, न हीन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानं स्मृतिः । तस्याः संस्कारमात्रप्रभवतया अन्यस्मादनुत्पत्तेः । तेन च ज्ञानेन स्वकारणं विशेषितम्, प्रत्यक्षसूत्रे यत इत्यध्याहारात् । तस्मादिहापि स्वकारणविशेषकं स्मृतेरन्यद् विज्ञानमधिकृतम् । न च संस्कारः प्रत्यक्षपूर्वोऽपि तादृशज्ञानकारणमिति न तस्य प्रसङ्ग इत्यर्थः । निर्णयेऽनुपजनितफले प्रसङ्गं निवारयति—[2]**निर्णय** इति । विभागसूत्राक्षिप्तप्रमाणसामान्यलक्षणपूर्वकं विशेषप्रमाणलक्षणं तदपेक्षं प्रवर्तमानं नानुपजनितफलेऽप्रमाणे निर्णयमात्रे प्रवर्तितुमर्हति, जनितफलस्तु निर्णयः प्रमाणमेवेति भावः । स्वविषयपरिच्छेदकत्वात् फलं परिच्छेद एव परिच्छेदकः । स्वार्थिकः प्रत्ययः ॥

त्रिविधमिति सूत्रावयवमर्थगौरवादराद्[3] **वार्तिककार** उद्भाष्यं व्याचष्टे—**त्रिविधमितीति** । अन्वयव्यतिरेकिणं लक्षयति—**तत्रेति** । **विवक्षितोपपत्तिः** पक्षधर्मता । **तज्जातीयोपपत्तिः** अन्वयः । **विपक्षावृत्तिः** व्यतिरेकः । अन्वयिमात्रात् व्यतिरेकिमात्राच्च व्यावृत्तोऽन्वयव्यतिरेकी दर्शनीय इति हेतुत्रयसाधारणे अबाधितविषय-त्वासत्प्रतिपक्षत्वे सती [4]अपि हेतुरूपे न दर्शिते । [5]विवक्षितप्रत्ययमन्तरेण चान्वय-

१. °रेकात् तत्रभवतो न न्याया° C २. निर्णयस्त्विति J ३. गौरवात् C
४. अपि रूपे C ५. पक्षज्ञानमन्तरेण J

व्यतिरेकयोः तज्जातीयातज्जातीयवृत्तिव्यावृत्त्योरशक्यप्रतीतित्वाद् विवक्षितोपादानम्। तत्प्रसङ्गेन च [1]तद्धर्मता हेतुत्रयसमानापि दर्शिता। तस्योदाहरणमाह—यथेति। प्रत्यक्षत्वादिति हेतुरात्मनि नित्येऽस्तीत्यत उक्तम्—बाह्यकरणेति। तथापि [2]सामान्यविशेषैर्घटत्वादिभिर्व्यभिचार इत्यत उक्तम्—सामान्यविशेषवत्त्व इति। तथापि [3]परमाणुभिर्बाह्यकरणप्रत्यक्षैर्योगिनां व्यभिचार इत्यत उक्तम्—अस्मदादीति। तथा चायं नित्येभ्य आकाशादिभ्यो घटादिषु चानित्येष्वन्वित इति भवत्यन्वयव्यतिरेकी। अन्वयिनं लक्षयति—अन्वयीति, विपक्षहीन इति। विपक्षाभावेन ततो व्यतिरेकाभावं दर्शयति। सद्भ्यामभावो निरूप्यते नैकेन [4]सतेत्युक्तम्। तेन हेतोर्यतो विपक्षान्निवृत्तिः स एव नास्तीति कुतो निवर्तताम्, पक्षादन्यस्य सर्वस्यैव सपक्षत्वात्? न निवर्तत इति चेत्? अस्तु [5]तर्हि हेतोस्तत्र वृत्तिः, [6]निवृत्तिनिषेधरूपत्वाद् वृत्तेरिति चेत्? यस्याभावाधिकरणत्वमपि न संभवति निरुपाख्यस्य तस्य भावाधिकरणत्वशङ्केति सुभाषितम्। न खलु मुमुर्षोस्तोयाभ्यवहारेऽप्यसमर्थस्य[7] शष्कुलीभक्षणं शङ्कते चेतनः। तत् किमिदानीं भावाभावौ न परस्पराभावात्मानौ यदेकनिषेधेनान्यविधिः स्यात्? सत्यम्, यत्रैकतर एतयोर्निषिध्यते विधीयते वा[8] तत्र तदितरविधिर्निषेधो वावश्यं भवेत्। न त्विह परमार्थतः कस्यचित् निषेधः। [9]न चात्र निरुपाख्यो हेतोर्व्यतिरेको निषिध्यते। ननु निरुपाख्यो निषेधाधिकरणमिति च वचः स्वचरितविरुद्धम्। न चैतत् तत्त्वतो निरुपाख्ये हेतोर्व्यतिरेकं [10]वा हेतुं वा व्यासेधामो नाप्यन्वयं विदध्मः। नो खल्वयं सकलप्रतिपत्त्यभाजनं क्वचिदप्युपयुज्यते। उपयोगे वा निरुपाख्यो न भवेत्। कस्तर्हि न निरुपाख्ये हेतोर्व्यतिरेक इत्यस्य वचनस्यार्थः? अथ निरुपाख्ये हेतोर्व्यतिरेक इत्यस्य भवद्भाषितस्य कोऽर्थः? अहृदयवाचां खल्वहृदया एव प्रतिवाचो भवन्ति। यक्षानुरूपो बलिरिति हि लौकिकानाम् आभाणकः। न चात्यन्तादृष्टपूर्वाणां [11]कल्पनाजालगोचरत्वमिति चोपपादितमन्यथाख्याति निरूपणवासरे[12]। कल्पितगोचरश्च व्यतिरेकोऽपि काल्पनिक इति नानुमानाङ्गम्। स्वाभाविकरूपसंपन्नं हि प्रमाणं तत्त्वज्ञानरूपफलाय कल्पते न कल्पितरूपसंपदा, तस्याः सर्वत्र सुलभत्वादिति। तत्त्वविषयत्वं चानुमानस्योपपादयिष्यते।

---

१. पक्षधर्मता J २. सामान्यविशेषे घटत्वादौ C ३. बाह्यप्र° C ४. पृः ४४.१० ५. तर्हि om C ६. अनुवृत्ति° C ७. अपि om C ८. व्यतिरेको निषिध्यते विधीयते C ९. ननु च निरुपाख्ये च J १०. वा हेतुं वा J ११. कल्पनाज्ञानगो° J १२. द्रः १.१.२

तस्मादनुपाख्ये विपक्षे हेतोर्व्यतिरेकनिवृत्तौ वा व्यतिरेके वा [1]हेतुप्रवृत्तौ वा सहृदयानां मूकतैवोचिता । न चैतावता हेतोरगमकत्वम् । न हि व्यतिरेकोऽस्तीत्येव गमको भवति । मा भूदसाधारणस्यापि गमकत्वम्, किं तु स्वसाध्येन सह स्वाभाविकसंबन्धशालितया । सा चान्वयव्यतिरेकाभ्यामिवान्वयमात्रेणाप्युपाधिरहितेन शक्या ज्ञातुमिति कृतमत्र व्यतिरेकेण । विपक्षसंभवे तु तत्रापि हेतुवृत्तिशङ्कानिराकरणाय व्यतिरेकग्रहणम् उपासनीयमिति सर्वमवदातम् ॥

उदाहरणमाह—**यथेति** । स्वमते त्वभिधेयो विशेषः प्रमेयत्वात् सामान्यवत् । परमाण्वाकाशादयः कस्यचित् प्रत्यक्षाः प्रमेयत्वात् [2]घटवदित्यादयो द्रष्टव्याः, विश्वस्यैव सदसत्प्रभेदभिन्नस्य यथास्वं पक्षसपक्षयोरन्तर्भावेन विपक्षाभावादिति । व्यतिरेकिणं लक्षयति—**व्यतिरेकीति** । तमिमं व्यतिरेकिणं हेत्ववयवलक्षणव्याख्यानावसरे[3] वार्त्तिककृद् उपपादयिष्यतीति[4] नेहोपपादितः । तदेवं त्रिविधमित्यवच्छिद्य व्युत्पाद्य संप्रति पूर्ववदित्यादिना एकवाक्यतया व्याचष्टे—**अथ वा त्रिविधमिति** । तिसृष्वपि विधासु साध्यवचनस्य पूर्वमुपपादनात् पूर्वं साध्यं तद् यस्यास्त्यधिकरणतया तत्पूर्ववत् । तथाप्यनित्याः परमाणवो गन्धवत्त्वाद् घटवदित्यपि हेतुः स्यात् । अस्ति हि साध्यं तस्यापि, पार्थिवानामप्यणूनामनित्यत्वेन सिषाधयिषितत्वादित्यत आह—**व्याप्त्येति** । अस्ति गन्धवत्त्वस्य साध्यं न तु व्याप्त्या, पृथिवीमात्रवृत्तितया चतुर्षु परमाणुषु तदभावात् । साध्यस्योपयुक्तत्वात् ततोऽन्यस्तज्जातीयः शेषः, साध्यसामान्येन समान इति यावत् । तदिदमाह—**साध्यतज्जातीय** इति ॥

पदानि विभज्यार्थमाह—**पूर्ववन्नामेति** । सामान्यतोऽदृष्टमिति नञमन्तर्भाव्य व्याचष्टे—**सामान्यतश्चेति** । तथा च बाधितविषयं प्रकरणसमं चानुमानं स्यादित्यत आह—**चशब्दादिति** । **वार्त्तिके** चशब्देनासत्प्रतिपक्षत्वमपि सूचितम् । तेन [5]सूत्रस्थेन चशब्देनाबाधितविषयत्वमसत्प्रतिपक्षत्वमपि रूपद्वयं समुच्चितमित्युक्तं भवति । नन्वेवं त्रिविधोऽपि हेतुः पञ्चलक्षणः स्यादित्यत आह—**एवमिति** । एतदुक्तं भवति अबाधितविषयमसत्प्रतिपक्षं पूर्ववदिति च ध्रुवं कृत्वा शेषवदित्येका विधा, सामान्यतोदृष्टमिति द्वितीया, शेषवत्सामान्यतोदृष्टं चेति तृतीया । तदेवं त्रिविधमनुमानम् । तत्र चतुर्लक्षणं द्वयम् । एकं पञ्चलक्षणमिति ॥

---

१. हेतु....वा om C   २. घटादि° J   ३. १.१.३५   ४. दर्शयिष्य° C
५. °स्थेनाबाधितत्व° C

तदेवं स्वमतेन सूत्रं व्याख्याय भाष्यकृन्मतेन व्याचष्टे—अथ वेति। आक्षेप्तुं स्वरूपतो व्याचष्टे—तत्रेति। पूर्वं कारणं कार्यात्। तद् यस्यास्ति विषयतया परामर्शज्ञानस्यानुमानस्य तत् पूर्ववदित्यर्थः। विकल्प्य आक्षिपति—यदि तावदिति। सर्वत्रानुमानप्रसङ्गादिति भावः। अतिप्रसङ्गभिया कल्पान्तरमातिष्ठते—अथ पुनरिति। दूषयति—एतदपीति। दूषणान्तरं समुच्चिनोति—कारणदर्शनाच्चेति। नासिद्धाश्रयो हेतुर्गमक इति भावः। परिहरति—नेति। द्वयमपि नाभ्युपेयत इत्यर्थः। किं तर्हि अभ्युपेयते इत्यत आह—कार्यं त्विति। एनं प्रकारमन्यत्राप्यतिदिशति—एवमिति। पृच्छति—कथमिति। उत्तरम्—द्वयोरिति। पूर्वशब्देन कारणमभिधायिना प्रतिसंबन्धितया कार्यमप्युपक्षिप्तम्। अतो द्वयोरप्युपक्षिप्तयोः कारणस्योपयोगादनुमानभावेनेति योचना। उदाहरणमाह—उदाहरणमिति। यद्यपि कारणमात्रं व्यभिचरति कार्योत्पादम्, तथापि यादृशं न व्यभिचरति तत्र निपुणेन प्रतिपत्त्रा भवितव्यम्। अन्यथा धूममात्रमपि [1]वह्निसत्तां व्यभिचरतीति न धूमविशेषो गमको भवेत्। रसाद्रूपानुमाने तु वैनाशिकानामापादितं कारणात् कार्यानुमानमस्माभिः। अपि चान्त्यतन्तुसंयोगानन्तरं पटो जायते तत्रापि शक्यं कारणात् कार्यानुमानम्। यदा खल्वयमन्यत एवोद्बुद्धसंस्कारो व्याप्तिस्मृतिमान् [2]अविरलेष्वितरेषु तन्तुषु अन्त्यतन्तावुत्पन्नायां क्रियायामिन्द्रियसन्निकर्षात् प्रथममेव परामृशति तथा चेयमिति, तदैव क्रियातो विभाग इत्येकः कालः। अथ यदा विभागात् पूर्वसंयोगविनाशः, तदा परामर्शात् तस्मादवश्यंभाविपटविशिष्टेयं क्रियेत्यनुमानोत्पाद इत्येकः कालः। अथान्त्यस्य तन्तोस्तन्तुसंयोगः, अथ पटोत्पादः, तत्र रूपाद्युत्पादः, अथ प्रत्यक्षदर्शनम् इत्यनुमानोत्पादस्य परस्ताच्चतुर्थे क्षणे प्रत्यक्षम्। यदि तु क्रियोत्पादानन्तरमालोचनमिष्यते, तथापि तृतीये क्षणे प्रत्यक्षस्य उत्पाद इति नानवसरमनुमानम्। अपि च बधिरो मुरजमुखमभिहत्य [3]स्वपाणिनाभिघातादेव शब्दकारणात् तत्कार्यं शब्दं निःशङ्कमनुमिमीते। एवमन्यान्यपि कारणात् कार्यानुमानानि ऊहनीयनीति॥

शेषवदुदाहरणमाह—नद्या इति। चोदयति—कथं पुनरिति। परिहरति—नेति। अनुमीयतेऽनेनेति अनुमानं नदीपूरः। न तु वृष्टिरनुमीयमाना पूरविशेषात् नातीता शक्यानुमातुम्, अनुमानसमये तदत्ययस्याशक्यनिश्चयत्वात्। नापि वर्तमाना तदत्ययस्यापि तदानीं संभवात्। एवं भविष्यन्त्यपि साधकबाधकप्रमाणाभावेन सन्दिग्धैव।

---

१. वह्निमत्तां C २. अविचले॰ अत्यन्तानु॰ C ३. स्वकारणाभिघातादेव स्व॰ C

तस्मात् त्रैकाल्यस्याशक्यनिश्चयत्वात् अनुपपन्नमनुमानमित्यत आह—**भविष्यतीति**। कारणस्य हि कार्यात् पूर्वकालता शक्या निश्चेतुम् कार्येण लिङ्गेन। तेन[1] अतीतादिसन्देहः क्षतिमावहति। **यः कश्चिदिति** योग्याभिप्रायम्। स च कार्यस्य पुरस्तात् ततो निश्चयव्याप्त इत्यर्थः[2] ॥

सामान्यतोदृष्टोदाहरणं भाष्यकारीयं दुःखबोधम्, शेषवदुदाहरणान्तर्गतं च। अत्रापि कार्येण सवितुर्देशान्तरप्राप्त्या तत्कारणस्य व्रज्याया अनुमानात्। न चैतावता अनुमानस्य त्रैविध्यं भवति, उदाहरणमात्रस्यानन्त्येनानन्त्यप्रसङ्गात्। तस्माद् भाष्यकारव्याख्यानमरोचयमानो वार्त्तिककृत् अन्यथाव्याख्यायोदाहरणान्तरमाह—**सामान्यतोदृष्टं नामेति**। साध्यधर्माविनाभाविना विशेषणेन साधनधर्मेण विशिष्यमाणो धर्मी गम्यते गमकत्वेन। हेतुविशिष्टो हि धर्मी गमकः, जिज्ञासितधर्मविशिष्टश्च गम्यः। यथाहुः,

स एव चोभयात्मायं गम्यो गमक इष्यते।
असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः ॥

इति। अविनाभावित्वं स्वभावप्रतिबद्धत्वं सर्वेषामेव हेतूनां [3]सामान्यम्। तत्र धर्मधर्मिणोरभेदविवक्षया हेतुरेव सामान्यमुक्तः। सामान्येनाविनाभाविना हेतुना [4]अवच्छिन्नं दृष्टं धर्मिरूपमनुमानं सामान्यतो दृष्टमनुमानम्। तृतीयायास्तसिः। तदेतत् पूर्ववच्छेषवतोरपि प्रापकमपि तत्पदसन्निधानात् गोबलीवर्दन्यायेन ते परित्यज्यान्यत्र निविशते। तदिदमुक्तम्—**अकार्यकारणभूतेनेति**। उदाहरणमाह—**यथा बलाकयेति** ॥

भाष्यकारीयमुदाहरणमुपन्यस्याक्षिपति—**अपरे पुनरिति**। तदिति गतिमानिति। परामृशति—**उपलब्धिलक्षणप्राप्तत्वादिति**। कर्मणो हि महत्त्वरूपविशेषैकार्थसमवाय उपलब्धिलक्षणप्राप्तिः प्रत्यक्षोपलब्धियोग्यता। समाधत्ते—**नैवेदमिति। देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसंबन्धाद् अनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात् मण्यादिवत्**, तत्प्रत्ययविषयत्वाद् इत्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचारः, सोऽपि हि प्रत्यभिज्ञाविषयो भवति तत्रैव स्थितः। तन्निवृत्त्यर्थं परिवृत्येत्युक्तम्। तथापि गुणादिभिर्व्यभिचारः। तन्निवृत्त्यर्थं द्रव्यत्वे सतीति विशेषणम्। तथापि [5]प्रदीपादिभिराशुतरविनाशिभिर्व्यभिचारः,

१. तु न C २. इत्युक्तम् J ३. सामान्यतोऽत्र C ४. लक्षितम् C
५. °दिभिर्व्यभि° C

तन्निवृत्त्यर्थं क्षयवृद्धिप्रत्ययाविषयत्वे सतीति विशेषणम् । तथापि पृष्ठतोऽवस्थितया स्थूणया व्यभिचारः, तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यत्वे सतीति विशेषणम् । उपलभ्यता च उपलब्धिकर्मता । सा चेहातीता विवक्षिता, अन्यथा पूर्वापरजलधिवेलावगाहिना तुहिनशैलेन व्यभिचारः । यद्यप्ययमपि [१]परिघृत्य तत्प्रत्ययवतोऽतिपतितोपलम्भकर्मभावः, तथापि तदा नरान्तरस्योपलभ्यः । मार्तण्डमण्डलं त्वस्ताचलचूडावलम्बि न प्राच्यां कस्यचिदुपलम्भगोचर इति वैषम्यम्, तथापि यदि द्रष्टैव पुरोऽवस्थितस्य पश्चिमाभिमुखस्य प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति, तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारः । तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येति विशेषणम् । तदभिमुखदेशसंबन्धादिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स तथोक्तः । तमुद्दिश्य खल्वयं पद्भ्यां संचरमाणः प्रासादस्य पृष्ठतो भवतीति भावः । देशान्तरप्राप्तौ साधनान्तरमाह—**देशान्तरेति** । सत्यविनाश इति च द्रष्टव्यम् । ये त्विमामनुमानपरम्पराम् अमृष्यमाणा दिशः प्रत्यक्षतामिच्छन्ति, विप्रतिपन्नं चानुमानेन बोधयन्ति, [२]तन्मतमुपन्यस्यति—**एके त्विति** । दूषयति—**तच्च नेति** । अरूपमात्मसुखाद्यपि प्रत्यक्षमिति शङ्कमानेन बाह्यकरणेनेत्युक्तम् । पृच्छति—**कथं तर्हीति** । उत्तरम्—**दिग्देशेति** । अन्यथासिद्धतया अङ्गुल्या निर्देशस्य दिक्प्रत्यक्षत्वेन न स्वाभाविकः प्रतिबन्ध इत्यर्थः ॥

स्यादेतत् । अप्रत्यक्षायां दिशि दिग्देशसंबन्धिष्वित्येतदेव कुत इत्यत आह—**आदित्येनेति** । तद्विभजते—**प्राचीत्ययमिति** । तत् पुनरिदं प्रत्यक्षम् आ चोदयात् आ चास्तमयाद् देशान्तरं सञ्चरणं मार्तण्डमण्डलस्य [३]अनाकलितद्रव्यत्वे सतीत्यादिदण्डकानुमानानामिन्द्रियव्यापारान्तरमुपजायमानत्वात् । तत्र मा भूवन्नाकाशदिगादयः प्रत्यक्षाः, तथापि परितो विनिष्पतदतिविशदमयुखजालमध्यवर्तिनो हेलिमण्डलस्य त एव मयुखभागभेदाः [४]प्रत्यक्षदेशा इति तेषां प्रत्यक्षाणां प्रत्यक्षेण सवितृमण्डलेन संयोगविभागाः प्रत्यक्षा भविष्यन्तीति युक्तम् । इदं त्वतिस्फुटतया नाभिधाय शिष्यव्युत्पादनायाक्षुण्णं मार्गान्तरं दर्शितमिति मन्तव्यम् । तदेवं रूपेण स्पर्शानुमानम्, शिंशपात्वेन श्रुतेन वृक्षत्वानुमानमित्यादि सामान्यतोदृष्टेन संगृहीतं वेदितव्यम् ॥

स्वमतेन व्याख्यान्तरमाह—**अथवा त्रिविधमिति** । तद्विभजते—**प्रसिद्धमिति** । पक्षैकदेशे सदपि सिद्धम्, पक्षव्यापकं तु प्रकर्षेण सिद्धमित्यर्थः । यद्यपि

१. परावृत्त्य C २. ॰न्यस्य दूषयति C ३. अनाकालित(?)द्र॰ C ४. देशान्तर इति C

अविनाभावः पञ्चसु चतुर्षु वा रूपेषु लिङ्गस्य समाप्यते इत्यविनाभावेनैव सर्वाणि लिङ्गरूपाणि संगृह्यन्ते, तथापीह प्रसिद्धसच्छब्दाभ्यां द्वयोः संग्रहे गोबलीवर्दन्यायेन तत् परित्यज्य विपक्षव्यतिरेकासत्प्रतिपक्षत्वाबाधितविषयत्वानि संगृह्णाति। अत्रापि यथासंभवं चतुर्णां पञ्चानां वा रूपाणां [1]लिङ्गेषु संबन्धः। तदनेन प्रबन्धेनानुमानवादिनां स्वरूपसंख्याफलविप्रतिपत्तयो निराकृताः। तत्र तत्पूर्वकमिति स्वरूपविप्रतिपत्तिः। अनुमानमिति समाख्यानिर्वचनसामर्थ्यात् फलविप्रतिपत्तिः। त्रिविधमिति न्यूनाधिकसंख्याव्यवच्छेदेन संख्याविप्रतिपत्तिर्निराकृता ॥

संप्रत्यान्तर्गणिकभेदानन्त्येनानन्त्याद्[2] अनुमानस्याशक्यलक्षणमिति यदि कश्चिदनुमन्येत, तन्निराकरणाय त्रैविध्यमनुमानस्य उच्यते इति त्रिविधपदस्यतात्पर्यान्तरमाह—अथ वेति। त्रिविधत्वेन यतो नियतमतः शक्यलक्षणमित्यर्थः। अनित्यः शब्दः कृतकत्वादिति सपक्षे सदेव। अनित्य शब्दोऽस्मदादिप्रयत्नानान्तरीयकत्वादिति सपक्षे सदसत्। तदेतदन्वयव्यतिरेकि द्विविधम्। एवमन्वय्यपि द्वेधा। तत्र सपक्षे सदेव, यथा परमाण्वादयः कस्यचित् प्रत्यक्षाः प्रमेयत्वाद् घटादिवदिति। तथा सपक्षे सदसद् यथा तत्रैव साध्ये सत्त्वाद् घटादिवदिति। कालभेदः त्रैकाल्यम्। प्रतिपन्नोऽप्रतिपन्नः सन्दिग्धो विपर्यस्तश्चेति पुरुषभेदः। पूर्वं सिद्धवत् पूर्ववदित्यनूद्य तस्योदाहरणमुक्तम्। संप्रति प्रश्नपूर्वकं तदर्थाभासनिराकरणेन तात्त्विकमस्यार्थमाह—पूर्ववदित्युक्तमिति। [3]भाष्यव्याघात इत्यर्थः। पूर्ववदित्यस्य व्याख्यानं शेषवदित्यत्रापि योजयति। सामान्यतोदृष्टं च ज्ञानमतिदिशति—एवं शेषवदादिष्विति। अथवा पूर्ववदिति भाष्यम्। तस्यार्थः, पूर्वेण तुल्यं वर्तते इति पूर्ववत्। क्रियातुल्यतायां च वतिरिति क्रियातुल्यता दर्शिता। यत्रेति। पूर्वमन्यतरदर्शनेन सहान्यतरदर्शनं दृष्टान्तधर्मिणि, यथापूर्वं प्रत्यक्षभूतयोरिति प्रमाणमात्रोपलक्षणम्। एवं साध्यधर्मिणि [4]अन्यतरधर्मदर्शनेन साधनधर्मदर्शनेनान्यतरस्य साध्यधर्मस्यानुमानमनुमिति दर्शनमिति भवति क्रियातुल्यता। तदेतत् भाष्यमनुभाष्य व्याचष्टे—अथ वेति ॥

अत्र दिग्नागेन धूमादग्निरूपधर्मान्तरानुमानम् अग्निदेशयोः संबन्धानुमानं च दूषयित्वा अग्निविशिष्टदेशानुमानं समर्थितम्। तथा चाह—

१. लिङ्गसंबन्धः C २. भेदानामान° C ३. भाष्यव्याख्यान C ४. अन्यतरदर्शनेन J

केचिद् धर्मान्तरं मेयं लिङ्गस्याव्यभिचारतः ।
संबन्धं केचिदिच्छन्ति सिद्धत्वाद् धर्मधर्मिणोः ॥
लिङ्ग धर्मे प्रसिद्धं चेत् किमन्यत् तेन मीयते ।
अथ धर्मिणि तस्यैव किमर्थं नानुमेयता ॥
संबन्धेऽपि द्वयं नास्ति षष्ठी श्रूयेत तद्वति ।
अवाच्योऽ[1]नुगृहीतत्वान्न चासौ लिङ्गसंगतः ॥

न हि संबन्धधर्मतया लिङ्गं [2]प्रतीयते, अपि तु देशसंगतमित्यर्थः, इति । तत्र

लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र [3]दृश्यते ।
तत्र प्रसिद्धं तद्युक्तं धर्मिणं गमयिष्यति ॥ इति ।

तत्र **दिग्नाग**दूषितान् कल्पान् अन्यांश्च विकल्पान् **दिग्नाग**समर्थितं च कल्पमुपन्यस्य दूषयति—**अन्ये पुनरिति धर्मधर्मिभावानुपपत्तेरिति** । धर्मेण हि धर्मिप्रतिपत्तव्यः, अन्यथा अतिप्रसक्तेरिति भावः । देशस्य च स्वरूपेणेत्यर्थः । शङ्कते—**अथापीदमिति** । निराकरोति—**तच्च नैवमिति** । यः कश्चिद् वा देशोऽग्निमान् साध्यो, धूमवान् वा देशभेदः ? तत्र पूर्वस्मिन् कल्पे निराकरणमाह—**अतद्धर्मादिति** । यः कश्चिदग्निमत्तया देशः [4]साध्यते न तस्यावश्यं धूमो धर्म इत्यर्थः । न चैतत् साध्यं सिद्धत्वादित्याह—**न चाग्नेरिति** । द्वितीयं कल्पमाशङ्कते—**अयमिति** । निराकरोति—**न, तस्येति**, शङ्कां विभजते—**देशेति** । निराकरणं विभजते—**न ह्ययमिति** । न ह्ययमेवंवादी **दिग्नागो** धूमाधारं देशविशेषं पश्यति । न ह्यस्य मते पर्वतो नाम कश्चिदवयवी यदाधारो धूम उपलभ्येत, किं तु परमाणवः परमसूक्ष्मा अतीन्द्रियाः पर्वतः । एवं धूमोऽपि तादृश एव । यथा वक्ष्यति—**सर्वाग्रहणमवयव्यसिद्धेः** [ २।१।३४ ] इति । येषामपि देशभेदोऽवयवी दर्शनार्हः, तेषामपि वियद्वर्तिनीं धूमलेखामभ्रंलिहामुपलभ्यानुपलब्धदेशानां नानुमानसंभव इति भावः । शङ्कते—**अविनाभावेनेति** । तदेव विभजते—**अथापीति** । निराकरोति—**तन्नेति** । विकल्पयति—**अग्निधूमयोरिति** । कार्यकारणभावमालम्बते—**अस्त्विति** । दूषयति—**तन्नेति** । धूमेन हि वह्निरनुमीयते, न च कार्यसत्ता निमित्तकारणसत्तया व्याप्ता । न हि यदा यत्र वा पटः, तदा तत्र वा कुविन्दः । नाप्यसमवायिकारणसत्तया, न हि यदा यदा संयोगस्तदा कर्म । तस्मात् समवायिकारणाविनाभावः कार्यस्य वक्तव्यः ।

१. अर्थगृहीत° J २. प्रमीयते C ३. दृश्यंते J ४. साध्यो C

तत्रेदं दूषणम्—**अतद्वृत्तित्वादिति**। एकार्थसमवायमविनाभावं दूषयति—**नैकेति**। एकार्थसमवाय इति हि द्वेधा, एकस्यार्थस्य समवायः, एकस्मिन् वार्थे समवाय इति। तत्र प्रथमं कल्पं दूषयति—**ताभ्यामिति**। यदि हि वह्निधूमाभ्यामेकोऽर्थः कश्चित् आरभ्येत ततोऽसौ तयोः समवेयात्, न त्वेतदस्तीत्यर्थः। द्वितीयं कल्पं दूषयति—**न च ताविति**। तत् किमसंबद्धावेव वह्निधूमौ, तथा च प्रतीतिविरोध इत्यत आह—**संबन्धमात्रमिति**। संयोग इत्यर्थः। तदेव तर्ह्यवधार्यतामित्यत आह—**तदपीति**। पृच्छति—**कथमिति**। उत्तरम्—**यदि तावदिति**। कुरुते प्रयोगम्। **अस्ति संबन्धोऽग्निधूमयोर्धूमादिति**। दूषयति—**तन्नाप्रतीतत्वात्**। तदनेनानैकान्तिकत्वं दर्शयति। संबन्धान्तरम् आशङ्कते—**रूपस्पर्शवदिति**। न हि बौद्धराद्धान्ते द्रव्यं नाम किञ्चिदस्ति यत्र रूपस्पर्शौ समवेतौ, किं त्वेकसामग्र्यधीनतया नियतसाहचर्यौ, तथा वह्निधूमावपि इत्यर्थः। दूषयति—**नोभयोरिति**। उभयसाहचर्यनिराकरणेन यत्र धूमस्तत्राग्निरित्यपि पराकृतम्, तस्यापि साहचर्यविशेषत्वादित्याह—**यत्र धूम इति**। गत्यन्तराभावादुपसंहरति—**न चेति**। शङ्कते—**लोक इति**। निराकरोति—**नास्तीति**। यत्र तावत् पर्वतनितम्बवर्तिनी धूमलेखा सन्ततमुद्गच्छन्ती दृश्यते, तत्रासौ देश एव तद्विशिष्टोऽनुमीयते इति लोकप्रसिद्धमेवेति किमत्र वक्तव्यम्। यत्र तु भूयिष्ठतया तस्य धूमस्य दूरत्वेन देशो न दृश्यते, धूम एव त्वभ्रंलिहो [1]लिम्पन्निव अभ्रमण्डलमवलोक्यते, तत्र देशानुमानप्रयासालसतया दृश्यमानो धूमविशेष एवाग्निमत्तया साध्यते धूमत्वैकार्थसमवायिभिः तद्गतैः संतत्यूर्ध्वगमनादिभिरित्याह—**धूमविशेषेण इति**। विशिष्यते तेनेति विशेषः संतत्यूर्ध्वगमनादिः। तेन धूममात्राद् वह्निव्यभिचारिणो वह्न्यविनाभावी धूमो विशेष्यत इत्यर्थः। शेषमतिरोहितार्थम्॥

**शेषवन्नाम परिशेषः**। द्रव्यत्वकर्मत्वयोः शब्दे निराकार्यत्वेन उपयुक्तत्वात् ताभ्यामन्यद् गुणत्वं शेषः। स यस्यास्त्यनुमानस्य प्रतिपाद्यतया, तच्छेषवत्। तत्र **न द्रव्यं शब्दः एकद्रव्यत्वात्**। द्विविधमेव हि द्रव्यम्, अद्रव्यमनेकद्रव्यं च। अद्रव्यं परमाण्वादि, अनेकद्रव्यं च घटादि। शब्दस्त्वेकद्रव्यः। तस्मात् न द्रव्यं रूपादिवत्। **न कर्म, शब्दान्तरहेतुत्वादिति**। तदेतद् भाष्यमाक्षिपति—**कर्मेति**। परिहरति—**नेति**। अन्यमस्यार्थं दर्शयति—**समानजातीयारम्भकत्वादिति**। यत् समानजातीयारम्भकं न तत् कर्म, यथा रूपादय इति। कार्यत्वात् तावत् शब्दः समवायिकारणवान्।

---

१. लिम्पन्नभोमण्डल° J

तत्र च पृथिव्यादिनिषेधात् नभोऽस्य समवायिकारणम् । न चैष नभोऽव्यापकः सर्वत्र उपलम्भप्रसङ्गात् । तस्मादव्यापकः । [1]कर्णशष्कुल्युपसन्निहितं च नभः श्रोत्रम् । ताल्वादिसंयोगोपधानेन च नभःप्रदेशे शब्दः समवेतः । प्राप्यकारि च श्रोत्रम् । न च वक्तृवक्त्रावरुद्धं नभःप्रदेशं तत् प्राप्नोति । न चाद्रव्यं शब्दो गत्वा श्रोत्रेण संबध्यते । तस्माद् वीचीतरङ्गरीत्या स्वदेशानन्तरदेशे शब्दान्तरारम्भणपरम्परया श्रोत्रदेशोत्पन्नं शब्दं गृह्णातीति सिद्धं सजातीयारम्भकत्वादिति । इदं तु परिशेषस्य उदाहरणं नादरणीयम्[2] । व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । एष पुनरन्वयव्यतिरेकी द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद्, विपक्षे [3]सामान्यादावभावात् । तस्माद् आत्मतन्त्रतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यम् । तच्चानन्तरमेव वक्ष्यतीति[4] ॥

**सामान्यतोदृष्टं नामेत्यादि भाष्यम्** अनुभाष्याक्षिपति—**सामान्यत** इति । **कथं तर्हि अनुमानमत्र प्रवर्तते** इति । नित्यपरोक्षेण सह कस्यचित् लिङ्गस्य संबन्धादर्शनादित्यर्थः । **व्याहतं चेति** । स खल्वत्यन्तापरिदृष्टः स्वरूपतो वा साध्येत, दृष्टधर्मिविशेषणतया वा ? तत्र पूर्वस्मिन् कल्पे नानुपलब्ध इति व्याघातः । उत्तरस्मिन् सन्दिग्ध इति, विशेषस्मृत्यपेक्षो हि संशयो [5]नात्यन्तानुपलब्धपूर्वधर्मवत्तया क्वचिद् भवितुम् अर्हति । न खलु सप्तमरसवत्तया केचिद् द्रव्ये [6]संशेरत इति भावः । समाधत्ते—**न विशेषणभूतस्येति** । न तावत् स्वरूपेणानुमीयते येन नानुपलब्ध इति व्याहन्येत, किं तु दृष्टस्य धर्मिणो विशेषणतया । न चैवं सर्वानुमानाविशेषः । साध्यधर्मिण्यस्यास्मदादिभिः कदाचिदपि प्रत्यक्षेणानुपलम्भात् । तज्जातीयेन तु दृष्टान्तधर्मिणोर्दृष्टेन प्रत्यक्षतो वा मानान्तराद् वा साधनधर्मस्य स्वाभाविकप्रतिबन्धग्रहसंभवादित्यर्थः । उदाहरणमाह—**यथेच्छादिभिरात्मा** । तदेवं विभजते—**इच्छादयः खलु धर्मिणो भवन्ति** मानसप्रत्यक्षदृष्टाः, तेषाम् **आत्मा विशेषणम्** । कुतः ? गुणभूतोऽवच्छेदकतया यतः, तस्मादात्मविशिष्टा इच्छादयः साध्या इत्युक्तं भवति । साधनधर्मं तद्वर्तिनं दर्शयति—**इच्छादीनां गुणत्वमिति** । ननूक्तमनुपलब्धचरेण साध्यधर्मेण न संदेहविषयत्वम्, अनुपलब्धचरश्चात्मेति कथं तद्विशिष्टा इच्छादयो न्यायविषया इति शङ्कामुरीकृत्य प्रयोगं सूचयति—**परतन्त्रा** इति । मा तत्र सैत्सीदात्मपारतन्त्र्यम्[7], पारतन्त्र्यमात्रं तु सिद्धम् इत्यर्थः । तेन सामान्यतोदृष्टस्य पारतन्त्र्यमात्रविषयता, न पारतन्त्र्यमिच्छादीनाम्

---

१. ॰ल्योपहितं J   २. आदरणीयम् J   ३. ॰दावसत्त्वात् J   ४. वा. २९८.१८
५. ॰लब्धधर्मवत्तायां C   ६. संदिह्यते J   ७. तत्रात्मा C

अनुमेयात्मवादिनां कदाचिदप्यस्मदादिप्रत्यक्षगोचरः । परस्य तदाश्रयस्य नित्य-परोक्षत्वादिति ॥

तदेवं सामान्यतोदृष्टमुदाहृत्य परिशेषोदाहरणं पारमार्थिकं प्रश्नपूर्वकमादर्शयति—**पारतन्त्र्येति** । इच्छादीनां हि बाधकैरपनीते द्रव्याष्टकगुणत्वे गुणत्वमेव व्यतिरेकी हेतुः आत्मपारतन्त्र्ये प्रमाणम् । यद्यपि चायं स्वरूपेणात्मा न प्रसिद्धः, तथापि द्रव्याष्टकव्यति-रेकादिशब्दैरदूरविप्रकर्षेण परामृष्टः शक्नोति विशेष्टुं धर्मिणि च न्यायप्रवृत्त्यङ्गं संशयम् आपादयितुमिति निरवद्यम् ॥

अत्र भाष्यं **विभागवचनादेव त्रिविधमिति सिद्ध** इति, तस्यार्थः, त्रिविधम् इति विभागवचनादेव त्रिविधे पूर्ववदादौ सिद्धे किमर्थं पूर्ववदाद्युपादानं सूत्रेणेति । तत्र समाधानं **त्रिविधवचनं** त्रिविधस्य पूर्ववदादेर्वचनमुक्तिः । **महतः** त्रिविधस्य **महा-विषयस्य** अतीतानागतवर्तमानविषयस्य **लघीयसा सूत्रेण** तत्पूर्वकमित्येतावतैवो**पदेशे परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः सूत्रकारस्येति** शिष्यान् व्युत्पिपादयिषोः । अत्रैव[1] निदर्शनम्—**तथा चायम्** । अस्य समाचारः—**इत्थंभूतेन वाक्यविकल्पेन** वैचित्र्येण **प्रवृत्त** इति योजना ॥

एवं तावत् लक्षणभेदानुमानं भिन्नं प्रत्यक्षाद् दर्शितम् । **भाष्यकारस्तु** विषय-भेदादपि भेदमाह—**सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्** । चो विषयभेदं समुच्चिनोति । सदिति वर्तमानम् । असदित्यतीतानागते । प्रत्यक्षं हि लौकिकं वर्तमान-विषयमेव । अनुमानं तु त्रैकाल्यविषयम् । यद्यपि प्रत्यक्षमप्यतीतानागतयोः संप्रति निषेध्यनिषेधयोर्निषेधे प्रवर्तमानमसद्विषयं तथापि न प्रतिषेध्ययोः प्रवर्तते इत्येतावता सद्विषयमुक्तम् । अनुमानं तु तयोरपि प्रवर्तते इत्येतावता असद्विषयमुक्तम् । तदेतदाक्षि-पति—**सद्विषयं चेति** । **न ह्यनुपलब्धसामान्ये** इति सामान्यत उपलब्धो विशेषत-श्चानिर्णीतो धर्मो न्यायप्रवृत्तावधिक्रियते । न त्वनुपलब्धसामान्य इत्यर्थः । न चासतः स्वतन्त्रस्य [2]सामान्येन दर्शनमस्तीति । द्वितीयं कल्पमाशङ्कते—**अथेति** । एतद्दूषयितुं धर्मत्रैविध्यमाह—**धर्मा** इति । तद्विभजते—**तत्रेति** । पृच्छति—**कथं पुनरिति** । यदि हि स्वतन्त्रः समवायः, न तर्हि कस्यचिद् विशेषणम् , तथा च न विशेषणतया गृह्येतेति भावः । उत्तरम्—**समवायान्तराभावात्** । न विशेषणत्वं स्वातन्त्र्येण निरा-

---

१. एव om C २. सामान्यदर्शनम् C

कुर्मः, किं तु वृत्तिमस्येत्यर्थः। कस्मात् पुनरस्य न समवायान्तरमभ्युपेयत इत्यत आह—**अथेति**। पृच्छति—**किमिदमिति**। अनवस्थाप्रसङ्गो हि नाम तर्कः। नैष प्रमाणमन्तरेण निर्णयाय पर्याप्त इत्यर्थः। उत्तरम्—**न संदेहः**, किं त्वस्त्येव न्यायः। तमाह—**पञ्चेति**। अयं पञ्चपदार्थवृत्तिशब्दो बहुव्रीहिणा परमाणौ वर्तते, षष्ठीसमासेन तु समवाये। न च कथञ्चित् शब्दाभेदमात्रमनुमानाङ्गम्, मा भूद् गोशब्दसाम्येन वागादीनाम् अपि विषाणित्वमित्यपरितोषात् न्यायान्तरमाह—**अनाश्रितः समवाय** इति। इइ बुद्धिनिमित्तत्वं कारणत्वम्। संयोगेनानैकान्तो मा भूदित्यत उक्तम्—**व्यापकत्वे सतीति**। [१]सत्युपलब्धिकारणान्तरसमवधाने सर्वत्रोपलभ्यता व्यापकत्वम्। तच्चेह प्रत्ययकारणे आत्मनि[२] च समवाये चाविलक्षणमिति। न्यायेतिकर्तव्यताभूतं[३] तर्कं पृच्छति—**यदि पुनरिति** उत्तरम्—**कार्यमिति**। उक्तमनवस्थाप्रसङ्गमवतारयितुमनाधारत्वप्रसङ्ग उक्तः ॥

स्यादेतत्। भवतु वृत्तेः प्रागनाश्रितं कार्यं पश्चात् समवैष्यति, तुरीसंयुक्तेभ्य इव तन्तुभ्य उत्पद्य पटः पश्चात् तुर्या इत्यत आह—**समवायश्चेति**। अनवस्थाप्रसङ्गः पूर्वोक्त इत्यर्थः। शङ्कते—**प्राप्तित्वादिति**। [४]प्रमाणवत्त्वात् प्राप्ता समवायस्य वृत्तिर्न शक्या अनवस्थाभिया परित्यक्तुमित्यर्थः। विमर्शपूर्वकं शङ्कां निराकरोति—**किमियमिति**। संयोगे प्राप्तित्वस्य निवृत्त्या स्वाभाविकः संबन्धः कार्यत्वस्योपाधेः तत्प्रयोजकस्य विद्यमानत्वादित्यर्थः। अथ प्राप्तिधर्मोऽपि कस्मात् न भवतीत्यत आह—**यदि पुनरियमिति**। नन्वियमनवस्था कस्माद् बीजाङ्कुरादिष्विवेहापि नाभ्युपेयते इत्यत आह—**न चैनामनवस्थामिति**। अनिदंप्रथमेष्वनादित्वात् शक्या प्रतिपादयितुमनवस्था प्रमाणेन, न त्विदंप्रथमेष्वादिमत्त्वेन तस्याशक्यनिश्चयत्वात्। तदिदम् उक्तम्—**प्रमाणाभावादिति**। शास्त्रविरोधश्च समवायान्तराभ्युपगम इत्याह—**समवायश्चेति**। तत्त्वमेकत्वं समवायस्य **भावेन** सत्त्वया व्याख्यातमिति शास्त्रमाह, तदनेकत्वमुपपादयता बाध्येतेत्यर्थः। चोदयति—**संबन्धिनिवृत्ताविति**। तथा च विनश्यति, विनष्टे च तस्मिन् यो दृश्यते स ततोऽन्य उत्पन्न इति सिद्धं समवायस्य नानात्वमित्यर्थः[५]। परिहरति—**न नास्तीति**। ख्यातिरुपलब्धिः। कस्मात्? अकृतकत्वात्। अकृतकत्वमेव कुत इत्यत आह—**अकृतक** इति। कार्यं स्वोपादानेन अकृतकसंबन्धवद् आधारवत्त्वादिति व्यतिरेकी हेतुः। व्यतिरेकाव्यभिचारमाह—

---

१. ॰न्तरसद्भावे C २. प्रत्ययकारणत्वमात्मनि C ३. ॰कर्तव्यतां तर्कम् C ४. प्रमाणसत्त्वात् प्राप्तसम॰ C ५. ॰मिति। C

यद्यत्यमिति । उत्पद्यमानः खल्वयं समवायः सहकार्येण, न कार्यस्य । न हि सहोत्पन्नौ रूपस्पर्शौ मिथः संबध्येते । एकार्थसमवायस्तु तयोः[१] । सोऽपि समवाये नास्ति । सन्नप्यसौ न कार्यमाधारवत् करोति । तस्मात् [२]सहोत्पादे कार्यमनाधारं स्यादिति । शङ्कते—**अथेति** । कार्यात् पूर्वमुत्पन्नः समवायः पश्चादुत्पद्यमानं कार्यमुपादानाधारकं करिष्यति कार्यहेतुबलादित्यर्थः । निराकरोति—**तथापीति** । त्रिभ्यो हि कारणेभ्यः कार्यं भावरूपं जायते । कार्यकारणसमवायस्य च कार्यकारणे समवायिकारणे वक्तव्ये, कार्यात् प्राग् जातस्य च समवायस्य न कार्यं कारणम् । न च निमित्तकारणमात्रादस्य जन्मेति सांप्रतम्, भावोत्पादस्य सर्वत्र कारणत्रयपूर्वकत्वनियमात् । तस्मात् समवायस्य समवाय्यसमवायिकारणाभावात् न कार्यात् प्राग् उत्पाद इति सुष्ठूक्तम्—**तथापि कस्येति वाच्यमिति** । शङ्कते—**अथेति** । दूषयति—**कार्येति** । न च पटतुरीसंयोगवत् समवायस्य पश्चात् कार्यकारणसमवाय इति युक्तम् । संयोगजस्य संयोगस्य कारणत्रयसंभवाद् अस्य तु समवायान्तरमन्तरेण कारणत्रयायोगात् । [३]अन्यथानवस्थाप्रसङ्गादिति भावः । उपसंहरति—**तस्मादिति** । ततश्च न ज्ञायते किमभिप्रेत्य असद्विषयमित्युक्तमित्याक्षेप इति । समाधत्ते—**तत्र प्रतिषिध्यमानेति** । अतीतानागते संप्रति प्रतिषिध्यमाने तद्विषयमनुमानम् असद्विषयमुक्तम् । तन्निषेधस्तु भवतु प्रत्यक्षगोचरः, तथापि सिद्धो विषयभेद इत्यर्थः । अत्र चैष धर्मत्रैविध्यक्रमो द्वेधा तावत्, विधीयमानः प्रतिषिध्यमानश्च । [४]विधीयमानोऽपि द्वेधा, परतन्त्रः स्वतन्त्रश्चेति । स्वतन्त्रस्य च धर्मत्वं विशेषणत्वमात्रविवक्षया द्रष्टव्यम् । ननु विधीयमानोऽप्यसन् प्रत्यक्षश्च क्वचित् । यथा व्याप्रियमाणे कुलाले जायमानो घटः । विस्फारिताक्षो हि तदा घटो भवतीति प्रत्येति । न चासौ तदा सन्, सतो भवनं प्रत्यकर्तृकत्वात्, गमनवदिति शङ्कते—**भवतीति** । निराकरोति—**न, जायमानेति** । जायमानस्यार्थस्य विधिविषयस्य सत्तयासत्तया वानभ्युपगमात् । निषेधविषयतया तु तस्यासत्त्वमभ्युपेयत एवेति । कस्तर्हि भवतिशब्दस्यार्थ इत्यत आह—**भवतीति** । घटो जायत इति तु लौकिकः प्रयोगो घटशब्दं घटार्थेषु तदवयवेषूपचर्य तेषां च सिद्धतया कर्तृत्वादुपपादनीय इति । उपसंहरति—**एवं तावदिति** ॥

स्वलक्षणं समाधाय परेषामनुमानलक्षणं दूषयितुमुपन्यस्यति—**अपरे त्विति** । तस्यार्थमाह—**अस्यार्थ इति** । दूषयति—**अत्रेति** । यथासंभवं समासं विकल्प्य

१. °वाययुतयोः K २. सहेत्यादि C ३. तथा चान° J ४. °मानश्च C

दूषयति—**नान्तरीयकार्थ इति चेति**। सत्त्वं विधिविषयज्ञानगम्यत्वम्[1], न तु सामान्यम्। [2]सत्त्वादिभिरनित्यत्वानान्तरीयकैः तन्नान्तरीयककृतकत्वधर्मैरनित्यत्वानुमानं स्यात्, न च शक्यम्, तेषामाकाशादिषु नित्येषु व्यभिचारादित्यर्थः। **तथाप्यसमर्थः समास** इति। पूर्वमर्थातिरेकमात्रं दूषणमुक्तम्। संप्रति त्वर्थातिरेकेण हेतुना विशेषणसमासानुपपत्तिरित्यपौनरुक्त्यम्।

विशेषणं विशेष्येण बहुलम्॥

इत्यत्र विशेषणपदोपादादमात्रेण वा विशेष्यपदोपादानमात्रेण वा अन्यतरस्यार्थात् प्राप्तेरुभयपदोपादानस्यैतत् प्रयोजनम्—यत्रोभयोः प्रत्येकं व्यभिचारः समुदाये त्वव्यभिचारः, तत्र समासो यथा स्यादिति। स चात्र नास्तीति समासानुपपत्तिरित्यर्थः। सामर्थ्यं प्रयोजनाभिसंबन्धः। चोदयति—**एकपदेति**। परिहरति—**अत्रापीति**। प्रधानं व्यक्तिर्विशेष्यत्वात् अङ्गं जातिर्विशेषणत्वात्। पृथिवीत्युक्ते भवति संशयः, किं पृथिवीत्वं सामान्यमस्य विवक्षितं यथा पशुना यजेत इति, किं वा तद्विशेष्यं द्रव्यम्, ग्रहं संमार्ष्टीति। अत्रेदमुपतिष्ठते—**द्रव्यमिति**। तद्धि पृथिवीत्वात् सामान्यविशेषात् पृथिवीं व्यवच्छिनत्ति। एवं द्रव्यमित्यप्युक्ते द्रव्यत्वं वा सामान्यं व्यक्तिर्वेति विमर्शे पृथिवीत्येतदुपतिष्ठते। न द्रव्यत्वं सामान्यं किं तु पृथिवी। न च द्रव्यत्वपृथिवीत्वयोः सामानाधिकरण्यमस्ति। न हि भवति पृथिवीत्वं द्रव्यत्वमिति। तस्मात् सामानाधिकरण्यसंभवात् प्रधानैकव्यक्तिलाभः। इह त्वर्थो नान्तरीयकत्वं व्यभिचरति। नान्तरीयकत्वं तु नार्थम्। न ह्यस्ति संभवो नान्तरीयकश्च स्यात् न चार्थ इति, नान्तरीयकशब्दवाच्यस्यानभिधेयत्वासंभवात्। वस्तुवचनत्वेऽप्यर्थशब्दस्य लक्ष्यासंभवाद् अविषयं लक्षणम्, न हि [3]**दिग्नागस्य** मते किञ्चिदस्ति वस्तु यन्नान्तरीयकं सद्धेतुर्भवति। यथाह—

सर्वोऽयमनुमानानुमेयभावो बुद्ध्यारूढेन धर्मधर्मिभावेन न बहिः सदसत्त्वमपेक्षते इति।

अव्यापकं च, न हि वस्त्वेव नान्तरीयकमसतोऽपि नान्तरीयकत्वादिति भावः॥

दूषणान्तरमाह—**तद्विद इति चेति**। नान्तरीयकदर्शनमित्युच्यमाने शब्दसामर्थ्यादेव लभ्यते नान्तरीयकत्वविशिष्टार्थदर्शनमिति, सति संभवे शब्दार्थपरित्यागाभावात्। [4]अतस्त्रिरूपलिङ्गदर्शनस्य सिद्धेः किमपरमवशिष्यते [5]यदवरोधाय तद्विद इत्युपादीयते

---

१. विधिविषयप्रमाणविषयत्वं J २. °रनित्यत्वनान्तरीयककृत° C ३. परेषां मते C ४. त्रिरूपलिङ्गदर्शनसि° C ५. यदवबोधाय C

इत्यर्थः । एतदेव व्यतिरेकमुखेन निरूपयति—**न हीति** । एतल्लक्षणदूषणं लक्षणान्तरे अप्यतिदिशति—**एतेनेति** । पृच्छति—**कः** इति । न ह्यस्मिन् लक्षणे तद्विद इत्यस्ति, तेन तदतिरिच्यते इति भावः । उत्तरम्—**यथेति** । तेषामुदाहरणं दूषयति—**उदाहरणमिति** । तदनेन दिङ्नागस्य लक्षणं दूषयित्वा अन्येषां लक्षणं दूषितम् ॥

संप्रति दिङ्नागस्य स्वकीयलक्षणप्रपञ्चार्थं वाक्यम् **अनुमेयेऽथ तत्तुल्य** इत्याद्युपन्यस्य दूषयति—**अपरे त्विति** । अनन्तरलक्षणकारमपेक्ष्यापर इत्युक्तम् । चोदयति—**अनुमेय** इति । न हि योऽनुमेये संश्चासंश्च स शक्यः सन्निति वक्तुम् इत्यर्थः । समाधत्ते—**नाप्रसङ्ग** इति । यद्येवं स्याद् यो विपक्षे द्वेधा[1] स विपक्षावृत्तिरिति हेतुरेव स्यात् न सव्यभिचार इत्यर्थः । पुनश्चोदयति—**न कर्तव्य** इति । कुतः ? **अवधारणात् निवृत्तेः** । अनुमेये सद्भाव एवेत्यवधारणेनानुमेये सद्भावस्य[2] नियतत्वात् कुतः पक्षैकदेशवृत्तेः प्रसङ्ग इति भावः । एतन्निराकर्तुं यथासंभवं विकल्पयति—**अनुमेये** इति । तत्र पूर्वकल्पस्य तात्पर्यं विकल्पयति—**किं पुनरनेनेति** । **असंभवः** अत्यन्तासंभवो निराक्रियते, यथा नीलं सरोजं भवत्येव नात्यन्तं न भवतीति गम्यते[3], न तु नीलमेव सरोजं नानीलमिति, नापि सरोजमेव नीलं नान्यदिति । **अथ संभव** इति । अन्वयपरो न व्यतिरेकपर इत्यर्थः । एतद्विकल्पद्वयं दूषयति—**उभयथा चेति** । दूषणान्तरं चाह—**न चैकदेशवृत्तिरिति** । न ह्यत्यन्तायोगव्यवच्छेदेनायोगो व्यवच्छिन्नो भवति, नापि संभवमात्रविधानेनासंभवो व्यवच्छिन्नो भवति । ततश्चायोगाव्यवच्छेदादेकदेशवृत्तिरनुमानाभासो न व्यवच्छिन्न इत्यर्थः ॥

स्यादेतत् । विशेष्यसंगतोऽयमेवकारोऽनुमेय एव संभवति । यथा पार्थ एव धनुर्धर इति । न चायमन्ययोगव्यवच्छेदो विनैवकारं लभ्यते । तस्मात् न व्यर्थमवधारणमित्यत आह—**उत्तरपदबाधा च** । न ह्यस्ति संभवोऽनुमेय एवास्ति [4]तत्तुल्ये चेति । तस्मात् तत्तुल्य इत्यस्य बाधा । चकारो नैकदेशवृत्तिर्निराकृत इति दूषणं समुच्चिनोति ॥

अनुमेय एव सद्भाव इति पक्षं यथासंभवं दूषयित्वा अनुमेये सद्भाव एवेति द्वितीयं पक्षं दूषयितुमुपन्यस्यति—**अथोत्तरमिति** । तस्य प्रयोजनं दर्शयति—तस्य व्याप्तिरित्यर्थः । सद्भाव एवेति किल विशेषणसंगतमवधारणमयोगम् अव्याप्तिं व्यवच्छिन्दत् व्याप्तिं दर्शयति । तथा च व्याप्तिरस्यार्थ इत्यर्थः । दूषयति—**तथाप्यनुमेयमवधारितं संभवस्य**

१. द्वेधा न J २. °मेयस्य सद्भावे J ३. गम्यते om C ४. न तुल्ये C

**व्याप्त्या न धर्मः** सद्भावः। हेतुमाह—**यत एवकारकरणं ततोऽन्यत्रावधारणमिति**। मा वधारि सद्भावोऽवधार्यतां चानुमेयम्। किमेतावतापीत्यत आह—**संभवव्याप्त्या चेति**। अनुमेयं खल्ववधारितं सद्धेतुसंभवं परित्यज्य नान्यत्र वर्तते, ततश्चानुमेयं हेतुसंभवव्याप्त्यावधारितं भवति। हेतुसंभवस्त्वनवधारितः सर्वत्रैव तत्तुल्ये च विपक्षे च प्रसृतः। स च कश्चित् तत्तुल्यविपक्षौ व्याप्नोति, कश्चित् तदेकदेशवृत्तिः। तदस्य हेतुसंभवस्य विपक्षेऽपि प्रसक्तस्य प्रतिषेधाय युक्तमसति नास्तीति। तत्तुल्ये तु प्रसक्तमप्रतिषिद्धमनुमतमेवेति तत्तुल्ये सद्भाव इति व्यर्थमित्यर्थः॥

स्यादेतत्। तुल्यहेतुसद्भावसिद्धावपि तत्तुल्ये व्याप्त्या हेतोः सद्भावो भवत्वित्येतदर्थं तत्तुल्ये सद्भाव इति वचनम् इत्यत आह—**तत्तुल्ये चेति**। यदि पुनर्व्याप्तिर्विवक्ष्येत कृतकत्वे साध्ये प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्। न ह्ययं सपक्षव्यापक इति भावः। देशयति—**अथ तत्तुल्ये** इति। दूषयितुं विकल्पयति—**किं पुनरत्रेति**। **पूर्वस्य** विरोधाद् बाधनम्, उत्तरस्य पौनरुक्त्यादिति। पूर्वपदेन सह विरोधे निदर्शनमाह—**न हि भवतीति**। अनुमेये सद्भाव इत्यनेनानुमेये वृत्तौ हेतोर्लब्धायां तत्तुल्य एव सद्भाव इति समुच्चीयमानावधारणं विपक्षमात्राद् वृत्तिं व्यवच्छिनत्ति, न त्वनुमेयात्,

नरं च नारायणमेव चादौ स्वतः सुतौ द्वौ जनयां बभूव।

इति यथेति चेद् अत आह—**तथेहापीति**। समुच्चीयमानावधारणे हि तत्तुल्येन यथान्ययोगव्यवच्छेदेनैवकारः संबध्यते तथानुमेयेनापि संबध्येत। तथा चानुमेयैकदेशवृत्तिरपि हेतुः स्यात्। न खलु नरं च नारायणमेवेति निपातो नारायणेन सहान्ययोगव्यवच्छेदेन संबध्यते, नरेण चायोगव्यवच्छेदेनेति भावः। अथावधारणस्यावैचित्र्येण संबन्धमिच्छता अनुमेये यथायोगव्यवच्छेदः, तथा तत्तुल्येऽयोगव्यवच्छेदेन संबन्ध उच्येतेति शङ्कते—**अथ तत्तुल्य** इति। निराकरोति—**तत्तुल्य** इति। एतदेव विस्तारयति[1]—**स** इति। ते तव दर्शने इत्यर्थः। न च यस्यानुमेये सद्भाव एवेत्यनूद्य तत्तुल्य एव सत्त्वमिति विधातुं शक्यम्। न [2]ह्यनुमानं शक्यं विशेष्टुम्, तथा सति तद्विशेषणाय प्रयत्नान्तरास्थाने सति वाक्यभेदप्रसङ्गात्। यथा,

यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्।

इत्यत्र हि यद्यपि स्वरूपेणार्तेरशक्यप्रतिपत्तित्वेन हविषा विशेषणं मृग्यते, तथापि न शक्यं हविरुभयत्वेन विशेष्टुं विना [3]प्रयत्नान्तरादिति वाक्यभेदभिया प्रतीयमानमपि

---

१. स्फोरयति—इति ते C २. ०नूद्यमानं K ३. यत्नादिति C

उभयत्वमविवक्षितम्, एवमत्राप्यनुमेय इत्यविवक्षितम्। अथ तद्विवक्षयैव वाक्यभेदमभ्युपेत्य पश्चाद् वाक्यैकवाक्यतया अभिमतार्थसिद्धिरास्थीयते। न च विरोधाद् वाक्ययोरेकवाक्यता विरहः। तत्तुल्य एवेत्यन्ययोगव्यवच्छेदस्य विपक्षमात्रविषयत्वेनाप्युपपत्तौ विरोधासिद्धेः। तस्मात् अन्यापोहार्थत्वात् पदानां विरोधो वक्तव्यः। तथा हि अनुमेये सद्भाव इत्यत्रानुमेय एव नाननुमेये, सद्भाव एव नासद्भाव इति पदार्थः। तथा च तत्तुल्यविपक्षयोर्हेत्वभावो दर्शितः। एवं तत्तुल्ये सद्भाव इत्यत्रापि तत्तुल्य एव नातत्तुल्ये, सद्भाव एव नासद्भाव इति पदार्थः। तथा चानुमेयेऽसद्भाव इत्युक्तं भवति। न चानुमेयतत्तुल्यपदार्थयोः परस्परपरिहारवतोः समुच्चयसंभवः। द्वयोरपि विपक्षव्यावृत्तिमात्रपरत्वात् परस्परसमुच्चयसद्भाव इति चेत्—न, [1]वृक्षो गौरित्यनयोरपि हस्त्यादिनिवृत्तिमात्रपरत्वेनाभिन्नार्थयोः सामानाधिकरण्यप्रसङ्गात्, तस्माद् विरोधात् समुच्चीयमानावधारणं न युक्तमिति। न च समुच्चीयमानावधारणं **दिग्नागो** मेने, यदेवमूचे **वैशेषिकलक्षणदूषणावसरे**—

यदि रूपमेव चाक्षुषं ततो न द्रव्यं चाक्षुषं स्यात्। तथा च महदनेकद्रव्यसमवायाद् रूपाच्चोपलब्धिः [ वै. सू. ८।१।६ ] इति द्रव्यचाक्षुषत्वाभिधानं व्याहन्येतेति॥

अत्र हि [2]रूपवद्द्रव्यसहितं रूपमेव चाक्षुषं न गन्धरसादीति शक्यं समुच्चीयमानावधारणम्। तस्मात् समुच्चीयमानावधारणाभिधानं **कीर्तेः** स्वातन्त्र्येण। तच्चायुक्तमिति कृतं विस्तरेण॥

असति नास्तितेति दूषयति—**असतीति**। कस्मात्? यदसत् तत्तुच्छं स्वयमेव नास्ति, तन्न सदिति शक्यं व्यवहर्तुम् असदिति वा। भवतु, तथापि कस्मात् [3]तस्मान्न हेतोः व्यावृत्तिर्भवतीत्यत आह—**न ह्यसदिति**। यथा चैतत् तथा अन्वयिहेतूपपादनावसरेऽस्माभिरुक्तम्[4]। स्वरूपेण दूषयित्वा एतद्गतमवधारणं दूषयिष्यन्ननूद्य विकल्पयति—**किमवधार्यत** इति। प्रथमं कल्पं दूषयति—**यदि तावदिति**। तत्तुल्य एव सद्भाव इत्यनेन गम्यत इत्यर्थः। द्वितीयं कल्पं दूषयति—**अथ पुनरिति**। गौरयं विषाणित्वादित्ययं हेतुर्विपक्ष एव नास्ति, पक्षसपक्षव्यापकत्वात्। न तु नास्त्येव, विपक्षैकदेशे महिषादौ वृत्तेः। अतो विपक्ष एव नास्ति इत्ययमपि हेतुः स्यादिति। तदेवमवयवार्थं दूषयित्वा समुदायार्थं दूषयितुमुपन्यस्यति—**यदप्येकद्विपदपर्युदासेनेति**। तत्रैकपदपर्युदासेन त्रयः पक्षाः, द्विपदपर्युदासेनापि त्रय इति षट्कम्। तत्पर्युदासेन सप्तिकापरिग्रहः। यथानुमेये सद्भाव इत्युच्यमाने

१. अवृक्षोऽगौः C　२. पूर्ववद् C　३. तस्मिन् हेतोर्न C　४. पृः ३१८.१३

यस्य तत्तुल्ये नास्तिता विपक्षे च वृत्तिः सोऽपि हेतुः स्यात् यथा नित्यः शब्दः कृतकत्वादिति । तत्तुल्ये अस्तीत्युच्यमाने[1] विपक्षवृत्तेरपक्षधर्मस्य च हेतुत्वं स्यात्, यथा नित्यः शब्दः चाक्षुषत्वात् सामान्यवदिति । नास्तितासतीत्युच्यमाने योऽपक्षधर्मस्तत्तुल्ये च नास्ति स हेतुः स्यात् यथा नित्यः शब्दोऽसत्त्वात् । अनुमेये तत्तुल्ये चेत्युच्यमाने, अनित्यः शब्दः प्रमेयत्वादिति विपक्षवृत्तिर्हेतुः स्यात् । अनुमेयेऽस्त्यसति च [2]नास्तीत्येतावत्युच्यमाने नित्यः शब्दो जातिमत्त्वे सति श्रावणत्वादित्ययं [3]तत्तुल्यवृत्तिहीनोऽपि हेतुः स्यात् । तत्तुल्येऽस्ति असति च नास्तीत्येतावत्युच्यमाने अनित्याः परमाणवः कृतकत्वादित्ययम् अपक्षधर्मो हेतुः स्यात् । तदेतत्सर्वं मा भूदिति समुदायोपादानप्रयोजनम् । तदेतद् दूषयति—**एतदपीति** । सपक्षव्याप्त्यव्याप्तिभ्यां द्विरूपयुक्तस्यान्वयिनो द्वित्वम् ॥

संप्रति सांख्यीयमनुमानलक्षणं दूषयति—**एतेनेति** । **संबन्धो**ऽविनाभावः साधनस्य साध्येन । तस्मात् **प्रत्यक्षाद्** दृढतरप्रमाणावधारितात् । तथापि यत्राविनाभूते लिङ्गे भवत एकस्मिन् धर्मिणि विरुद्धाव्यभिचारिणी, तयोरपि हेतुत्वं प्रसज्येतेत्यत उक्तम्—**एकस्मादिति** । **शेषस्य** अनुमेयस्य **सिद्धिः** । अनुपपन्नत्वमात्रसाम्येनोक्तम् मेतेन [4]न प्रयुक्तमिति । अनुपपत्तिं पृच्छति—**कथमिति** । यथासंभवमनुपपत्तिमाह—**न हीति** । यदि प्रत्यक्षशब्दो ज्ञानवचनः ज्ञानं चैकत्वेन विशिष्यते, तदैतद् दूषणम् । अथ संबन्धविशेषणमेकस्मादिति, प्रत्यक्षशब्दश्च ज्ञेये न तु ज्ञाने, तदेतदुपन्यस्य दूषयति—**अथापि संबन्धादिति** । शङ्कते—**अथेति** । संबन्धस्य प्रत्यक्षतोक्ता पूर्वम्, न त्वनुमानकाल इत्यर्थः । दूषयति—**तथाप्युपलब्धसंबन्धस्य पूर्वमनुमानकाले चानुपलब्धलिङ्गस्यानुमानं प्रसज्येतेति** । स्यादेतत् । संबध्यते इति व्युत्पत्त्या संबन्धो लिङ्गम् । तेनाविनाभूताद्धेतोः प्रत्यक्षादेकस्माद् अनुमेयसिद्धिरिति । तथा च गृहीताविनाभावात् लिङ्गात् संप्रति प्रत्यक्षादित्युपपन्नमित्यत आह—**न चान्या गतिरस्ति** । अत्रापि व्याख्याने एकस्मादिति व्यर्थम् । तथा हि अन्वयव्यतिरेकमात्रसंपत्तिरविनाभाव इत्युच्यते, सर्वरूपसंपत्तिर्वा ? तत्र प्रथमे कल्पे मा भूद् विरुद्धाव्यभिचारी, बाधितविषयस्तु हेतुः स्यात् । द्वितीये तु कल्पे [5]न सर्वरूपसंपन्नो हेतुर्विरुद्धाव्यभिचारी संभवतीत्येकस्मादिति अतिरिच्यते । तस्मात् सुष्ठूक्तम्—**न चान्या गतिरस्तीति** । अव्यापकत्वं लक्षणदोषम् आह—**रूपेण चेति** । न तावदनयोः तादात्म्यम्, भिन्नेन्द्रियग्राह्यत्वाद् भिन्नबुद्धिबोध्यत्वाच्च । न चातदात्मनोरनयोः संबन्धः कश्चिदुपलभ्यते । न च प्रतिक्षणपरिणामवादे

१. यस्त तत्तुल्ये° च्यमाने rejected C २. नास्तीत्युच्यमाने C ३. तत्तुल्यहीनो C ४. न om J ५. न om J

कुण्डवदरादीनामपि कश्चिदस्ति संबन्ध इत्यपि द्रष्टव्यम्। शङ्कते—**अथेति**। निराकरोति—**सोऽपीति**। न हि **सांख्यानां बौद्धानां** वा राद्धान्तेऽस्ति संबन्धः समवायो नाम। नापि तदाश्रयो द्रव्यम्। अतः स्वदर्शनव्याघात इत्यर्थः। यद्युच्येत प्राधानिकत्वाद् रूपादीनां प्रधानमेकमाश्रयः, तथा च यत्र रूपं तत्र स्पर्श इत्यत आह—**यत्र रूपमिति**। कुतः? **न क्वचिदिति**। न हि प्रधानमाधारः कार्याणाम्, अपि तु प्रधानात्मकत्वमेषामिष्यते, तथा च यत्र तत्रेत्यनुपपत्तिः। न च तादात्म्यमित्यप्युक्तम्। न च भेदाभेदावेकत्र संभवतो विरोधादिति भावः। शङ्कते—**परस्परेति**। यथा ह्यासन्दिकाङ्गानि भिन्नान्यनौत्तराधर्यव्यवस्थितान्यपि परस्पराश्रयतया न पतन्ति, एवं रूपस्पर्शावपि परस्पराश्रयावित्यर्थः। निराकरोति—**परस्पराधारभावेऽपि** अन्यत्रासन्दिकाङ्गादौ, नासौ रूपस्पर्शयोः। कुतः? **न रूपं स्पर्शे न च स्पर्शो रूपे** इति। [१]परस्परसंयोगभेदप्रतिबद्धगुरुत्वानि आसन्दिकाङ्गानि [२]अपतन्ति स्थितानि परस्पराधारत्वेनापदिश्यन्ते। रूपस्पर्शादीनां तु स्थितिर्न परस्परहेतुका, अपि तु भोगापवर्गलक्षणपुरुषार्थहेतुकेति भावः। एतेन **साङ्ख्यानां** सप्तविधः संबन्धः प्रत्युक्तः। शेषं सुबोधम् ॥५॥

॥ परिशुद्धिः ॥

**सूत्रं पठति**। व्याख्यातुमिति शेषः। सूत्रावतारमात्रमसहमानं प्रत्याह—**अत्रेति**। साधर्म्येण हि नियमचतेति शेषः। उपलक्षणं चैतत्। वैधर्म्येणेत्यपि द्रष्टव्यम्। अप्रामाण्यविधानं प्रामाण्यनिषेध एव। नाप्रत्यक्षं प्रमाणमित्यनेन हि विशेषनिषेधेन कण्ठतः अनुमानप्रामाण्यनिषेधोऽर्थतः प्रत्यक्षप्रामाण्यविधिश्च विवक्षितः। न चैतदुभयमपि प्रमाणम् अन्तरेण सिध्यति। न चात्र प्रत्यक्षमेव प्रभवतीति चिन्तितमादिवाक्ये। नापि शब्दोपमाने, स्वप्रत्यये तयोरनवकाशात्, परप्रत्ययेऽपि धर्म्यसिद्धेः। सिद्धावपि परस्याप्तत्वानिश्चयात्। तस्मादतीन्द्रियविधिनिषेधयोरनुमानमनङ्गीकृत्याशक्यत्वादशक्यापह्नवमनुमानमित्यर्थः। दृष्टसाधर्म्यं च नियतमिति शेषः। कथं तेनैव तस्याप्रामाण्यमिति व्याघातमात्रं विवक्षितम्? तेनायमर्थः—यद्यनुमानमप्रमाणम्, कथं तेनैव विधिनिषेधसिद्धिः? अथ तेन[३] विधिनिषेधसिद्धिः, कथं तस्याप्रामाण्यमिति? किं चानुमानमनङ्गीकृत्य परप्रत्यायनाय शब्दप्रयोगोऽप्ययमशक्यः—परवेदनप्रतिपत्तेरेव तदन्तरेणाशक्यत्वात्। न चेत् परप्रत्यायनम्[४], नूनमौन्मत्त्यमाविष्करोति वक्तुरित्याह—**अपि चेति**॥

१. °संयोगप्रतिबध्य° C   २. न पतन्त्यव° C   ३. तेनैव BMA   ४. °यनाय BMA

सूत्रे विभागोऽप्यस्तीति व्यवच्छिद्याह—**लक्षणसूत्रतात्पर्यमाहेति**। **स्यादेतदतिव्यापकमिति**। अत्राव्यापकं चेत्यपि द्रष्टव्यम्, अत उभयव्युत्पादनोपसंहारविरोधः। **विग्रहत्रयप्रदर्शनं** विग्रहत्रयं द्रष्टव्यमित्यर्थः। व्याप्तिस्मृतिसहायाद् द्वितीयलिङ्गदर्शनादेवानुमितिसिद्धेरलं तृतीयलिङ्गदर्शनकल्पनयेति यथाश्रुतभाष्यानुसारिणः तान् निरस्यति[1] **न चेति**॥

स एष संस्कारोद्बोधमधिकमभ्युपगच्छतो दोष उक्तः। यस्तु सहकारिलाभादन्यो न कश्चिदुद्बोधो नामेति मन्यते, तं प्रत्याह—**विनश्यदवस्थस्येति**। न हि व्याप्तिस्मरणमात्रादनुमितिः, नापि लिङ्गदर्शनमात्रात्। किं तर्हि? व्याप्तिविशिष्टलिङ्गदर्शनात्। न च व्याप्तिविशिष्टं लिङ्गमेकैकस्योभयस्य वा गोचरः, किं तु स्वतन्त्रमुभयमुभयस्य। न च स्वतन्त्रोभयज्ञानेऽपि विशिष्टज्ञानं भवति। तदिदमुक्तम्—**परस्परवार्तानभिज्ञतया** स्वतन्त्रस्वस्वविषयपर्यवसिततया। **मिथो घटनायोगो**[2] विशिष्टप्रत्यययोग इत्यर्थः। न च स्वतन्त्रमेतदुभयमेकात्मसमवायमात्रेणानुमितिं भावयिष्यतीति वाच्यम्। द्वितीयलिङ्गदर्शनं हि वस्तुगत्या लिङ्गविषयमित्येतावतैव व्याप्तिस्मृतेः सहकारिलिङ्गत्वरूपोल्लेखितया वा? न तावदाद्यः, दूराद् धूमविषयवस्तुत्वज्ञानस्यापि प्रकारान्तरायातव्याप्तिस्मृतिं प्रति सहकारित्वप्रसङ्गात्। द्वितीयस्तु द्वितीयलिङ्गदर्शने नास्त्येव। तदिदमुक्तम्—वृत्त्या खल्वयं घटयेत्, व्यापारेण न रूपतो नोभयसमवायितामात्रेणातिप्रसङ्गादिति॥

तस्मात् लिङ्गत्वोल्लेखि तृतीयं लिङ्गदर्शनमास्थेयमित्याह—**तस्मादिति**। इह तादात्म्यतदुत्पत्तिस्वरूपादिनिश्चये प्रतिबन्धनिश्चयस्तदा[3] न स्यात् यदि ते एव प्रतिबन्धः, ताभ्यां समानोपायो वा प्रतिबन्धः, तयोरेव वा[4] प्रतिबन्धपर्यवसानम्, ते एव वा प्रतिबन्धनिश्चयोपायः। तत्रोपायत्वं सहचारावसाये वा, व्यभिचारशङ्कानिरासे वा, व्यभिचारशङ्काप्युपाधिदर्शनाद् वा, उपाधिशङ्कया वा, भूयो भूयः सहचरितयोः अप्युलब्धयोः कयोश्चिदर्थयोर्व्यभिचारानुसन्धानमात्रेण वेति? तत्र च सहचारावसायः तावदिन्द्रियसन्निकर्षाधीनोत्पत्तिः तदुत्पत्त्यनिश्चयेऽपि वह्निधूमयोः सिध्यति, व्यभिचारशङ्कापि दर्शनयोग्योपाध्यधीना योग्यानुपलम्भबाधादेव निरस्ता। अतीन्द्रियास्तु उपाधयः [5]अन्यत्र प्रमाणपरिदृष्टाः शङ्किता अपि यथा निवर्तन्ते, तथा वक्ष्यामः।

---

१. °स्तन्निवरियति BM २. °प्रत्यययोगः J ३. °ये प्रतिबन्धनिश्च° om B
४. प्रतिबन्धनिश्चयः··· तयोरेव वा om M ५. अत्र BM

प्रमाणपथानवतीर्णोपाधिशङ्का तु तदुत्पत्तिनिश्चयमप्यास्कन्दतीति कथं सा तेन निवर्तनीयेत्याह—**अत्रोच्यत** इति। सहचरितयोर्व्यभिचारदर्शनमात्रेण तु व्यभिचारशङ्का कार्यकारणयोरपि समाना, तदुत्पत्तिलक्षणविशेषसिद्धौ विपक्षे बाधकप्रमाणवृत्त्या शङ्कानिवृत्तिरिति यदि, तदास्माकमपि स्वाभाविकसंबन्धसिद्धौ[1] विपक्षे बाधकप्रमाणवृत्त्यैव शङ्कानिवृत्तिरिति समः समाधिः। विशेषस्तु स्वाभाविकसंबन्धस्य व्यापकत्वम्, अव्यापकत्वं तु[2] तदुत्पत्त्यादेरित्याह—**अपि चेति**। तदिदमुक्तम्—**स च यो वा स वेति**। न च समानोपायत्वादुभयोरन्यतरानिश्चये[3] नान्यतरनिश्चय इति साम्प्रतम्, प्रतिबन्धानिश्चयेऽपि हुताशभस्मनोः कार्यकारणभावावधारणात्। कार्यकारणभावानिश्चयेऽपि धामधूमयोः प्रतिबन्धावबोधात्। यदनतीतमेव वह्निमनुमिमत इत्याह—**अपि च कार्यादिति**। तयोरेव प्रतिबन्धः पर्यवस्यतीति पक्षं निराचष्टे—**अपि च रसादिति**॥

यत्तु भेदे सति व्याप्यव्यापकाभाव एव कार्यकारणभाव इति व्युदपादि[4] **प्रज्ञाकरेण**[5] तत् पापादपि पापीयः। तथा हि नियामकविरहे भिन्नयोरव्यभिचारः शङ्काकलङ्काङ्कितत्वात् दुरवधारण इति तामपनेतुं कार्यकारणभावोऽनेनोपनीतः, स चेद् रूप एव कथं तन्निश्चयेनैवाव्यभिचारनिश्चयः?

न चैतत् कीर्तेरनुमतं यद् रसेन रूपानुमानेऽन्यथाभ्युपायमाह—यदि च [6]सर्वलोकसिद्धमतिवाह्य स्वयंकृतलक्षणैर्व्यवहारः[7], तदा भेदे सतीत्येतदपि परिहीयताम्। अव्यभिचारमात्रं तदुत्पत्तिरित्येवास्तु। लघु चैवं सति लक्षणं स्यात्। तदात्मनोऽपि एतदस्तीति चेत्? अस्तु शिंशपापि वृक्षकार्यम्। कथं तेनैव तत्कर्तव्यमिति चेत्? को दोषः? असिद्धं सिद्धेन साध्यते, नतु तदेव सिद्धमसिद्धं चेति चेत्? हन्तैवमनागतमपि कथं व्यापकतामात्रेण कारणमसिद्धत्वात्? वर्तमानमपि कथं व्याप्यतामात्रेण कार्यं सिद्धत्वात्? एवं समानकालेऽपि कथमविनाभावमात्रेण कार्यकारणभूते, [8]असिद्धावस्थायामुभयोरप्यसाधकत्वाविशेषात्[9], सिद्धावस्थायामुभयोरप्यसाध्यत्वाविशेषात्? तस्मात् पूर्वकालभावनियमः कारणत्वं पश्चाद्भावितानियमः कार्यत्वम्। अविनाभावस्तु नियममात्रमित्येव ज्यायः॥

---

१. स्वाभाविकत्वसि° BM २. तु om B ३. °निश्चयेऽपि M ४. व्युत्पादितं B ५. प्रज्ञाकारे M ६. °सिद्धम् om BM ७. लक्षणेन M ८. असिद्धायां M ९. °विशेषाविशेषात् BM

अपि च रसरूपयोः कार्यकारणभावनिश्चयो वह्निधूमयोरिव प्रत्यक्षानुपलम्भसाध्यो वा स्यात्, क्षणभङ्गसिद्धौ पुञ्जात् पुञ्जान्तरोत्पत्तिरिति न्यायेन वा ? आद्यस्तावत् क्षणयोरशक्य एव, तयोरेव प्रत्यक्षानारोहात्। तत्र तस्यानिश्चायकत्वात्, सन्तानयोरपि दुरवबोधः। न हि वह्नेरिव रूपस्य पूर्वकालतानियमं धूमस्येव रसस्य पश्चाद्भावितानियमं लौकिकाः प्रतिपद्यन्ते। क्षणभङ्गसिद्धिन्यायस्तु न लौकिक इति वस्तुतो[1] लौकिकानां रसतो[2] रूपानुमानं न स्यादित्याह—**लौकिकानां चेदमिति** ॥

अपि च इत्यनेन **ते एव प्रतिबन्ध** इति निरस्तम्। तादात्म्यं तु गम्यगमकभावे प्रत्युत विरुद्धमित्याह—**अपि चेति**। न हि तदेव कर्म निश्चेयम्, कर्तृ च स्वनिश्चयेन निश्चायकं च[3], निश्चितानिश्चितयोः परस्परविरोधादित्यर्थः। भवत्वभेदेऽपि गम्यगमकभावः, तथापि न शिंशपात्वेन वृक्षत्वानुमानमनवसरदुस्थत्वात्। न ह्यस्ति संभवः सामान्यमनिश्चितं निश्चितस्तु विशेष इत्याशङ्क्य केनचित् समर्थितम् उत्थाप्य दूषयति—**यत्त्विति**। भिन्नयोरेव व्यावृत्त्योर्गम्यगमकभावः किं त्वभिन्नाध्यवसेयसंबन्धात् तयोरपि तादात्म्यं व्यवह्रियत इति। स यद्यभिन्नदेवदत्तसंबन्धात्, छत्रकुण्डलयोरप्यभेदं व्यवहरति को वारयिता ? केवलं प्रमाणप्रयोजनयोर्व्यावृत्तिर्लौकिकविरोधश्चेत्यनेनाभिप्रायेणोपसंहरति—**तस्मादिति** ॥

अस्येदं कार्यं कारणमित्येकः संबन्धः। स्वाभाविकं संबन्धमुपसंहृत्य तस्य स्वरूपमाह—**तथा हीति**। स्वाभाविको निरुपाधिरित्यर्थः। यद्यपि व्यभिचाराव्यभिचारव्याप्ते औपाधिकत्वानौपाधिकत्वे, ताभ्यां च [4]व्यभिचाराव्यभिचाराविति नियमः। तौ हि न तावन्निर्निमित्तौ सार्वत्रिकत्वप्रसङ्गात्, नियतविषयौ चोपलभ्येते। नाप्यनिमित्तौ। सोपाधेरप्यव्यभिचारे निरुपाधेरपि व्यभिचारे अनियमप्रसङ्गात्, तथा सति कार्यात्मनोरपि कारणात्मव्यभिचारः प्रसज्येत। तस्मादुपाधाववश्यं व्यभिचारोऽनुपाधौ अवश्यमव्यभिचारः। व्यभिचारेऽवश्यमुपाधिरव्यभिचारेऽवश्यमुपाध्यभावः। तथापि यत्र स्फुटो व्यभिचारस्तत्र निष्फलमुपाध्यनुसरणं तदर्थत्वात् तस्य। अस्फुटे तु व्यभिचारे तस्योपयोगः। न तूपाधितदभावसिद्धये व्यभिचाराव्यभिचारपर्येषणमुपयुज्यते। व्यभिचारादिसिद्धौ सत्यामुपाधितदभावपरीक्षाया निष्फलत्वात्। तस्मादन्योन्यव्याप्तिप्रदर्शनमात्रप्रयुक्तो व्यभिचारमुद्भाव्याप्युपाधिमाह—**यदा त्विति**। यतो न स्वाभाविको न निरुपाधिकः, ततो न नियतो नाव्यभिचारीत्यर्थः ॥

१. वस्तुतः om BJA २. ॰रसत om J ३. इति M ४. व्यभिचाराविति B

अथ धूमादीनामपि वह्न्यादिभिः कथं स्वाभाविक इत्यत आह—**स्वाभाविकस्त्विति**। नन्वस्फुटे व्यभिचारे सफलमुपाध्यनुसरणम्[1]। तत् किमत्र नासौ स्फुट[2] इत्यत आह—**क्वचिद्व्यभिचारस्यादर्शनादिति**। ननु क्वचित् कदाचिद् व्यभिचारोऽपि स्यादयोग्यत्वाच्च न दृश्येतापीत्यत आह—**अनुपलभ्यमानस्यापि कल्पनानुपपत्तेः**, अनुपलभ्यमानव्यभिचारकल्पनाद्वारीभूतोपाध्यभावादित्यर्थः। अतो नियतः अव्यभिचारीत्यर्थः॥

ननूपाध्यभावेऽनुपलभ्यमानव्यभिचारकल्पनानवकाशः[3], स एव तूपाध्यभावः कुतस्त्य इत्याशङ्कते—**न चेति**। परिहरति—**अवश्यमिति**। उपाधिर्हि प्रमाणपदवीमवतीर्ण एव वक्तव्यः। अन्यथा सर्वैः प्रमाणैः सर्वदा सर्वत्र सर्वेषां [4]जात्या कश्चित् अनुपलभ्यमानोऽपि स्यादुपाधिरिति शङ्का तदुत्पत्तावपि ब्रह्मणाप्यपनेतुमशक्या। नानाप्रमाणगोचरार्थसाक्षात्कारवतः सर्वज्ञस्यापि स्वभावत एवानुपलभ्यः कश्चिदर्थो भवेत्, भवेच्च सर्वप्रमाणापोढमपि कदाचिदद्वैतम्, प्रकृतिपुरुषौ वा, निःस्वभावता वा जगतः, वेदानां वाप्रामाण्यम्। तत् कथं चैत्यवन्दनादावपि भिक्षुः प्रवर्तेत ? अर्थसन्देहात् प्रवृत्तिरिति चेत् ? यत्र प्रमाणानि परिभूय शङ्कापिशाची प्रसरति कुतस्तत्रार्थसंभावनापि ? आस्तां तावत् परलोकप्रवृत्तिः, [5]इहलोकप्रवृत्तिरपि न स्यात् इत्याह—**अन्तत इति**॥

यद्यपि विशिष्टाहारानन्तरं भूयो भूयः पुष्टिधातुसाम्यादि दृश्यते, मरणं तु रोगाद्यनन्तरमेव, तथापि आहारविशेषो मरणस्यैव हेतुः कदाचिद् भवेत्, कथमन्यथान्ते तदन्तरमस्योपलम्भः[6]। यत्त्वियन्तं कालं न मारितवान् तन्मन्त्रप्रतिबद्धवह्निवत्, केनचित् प्रतिबद्धत्वात्। स एव प्रतिबन्धकः पुष्ट्यादिहेतुरित्यपि संभाव्येत। रोगादिकमेव च[7] पुष्ट्यादिहेतुः, तत्तु पुष्ट्यादिकाले अदृश्यत्वादेव नोपलभ्यते। न हि पुष्ट्यादिकारणैर्दृश्यैरेव भवितव्यमित्यपि कदाचित् स्यात्, यथा चाप्रामाणिकोपाधिशङ्कया व्यभिचारित्वशङ्कया वा अनुमाननिवृत्तिः, तथाप्रामाणिकानर्थशङ्कयैव विशिष्टाहारभोजनादिनिवृत्तिरित्यर्थः। तस्मादुत्प्रेक्षितार्थनिश्चयवत् तच्छङ्कापि बन्ध्यैव, प्रमितस्यैव तु निश्चयवत् शङ्कापि समीहोपयोगिनीत्याह—**तस्मादिति**॥

---

१. ॰धिपर्येषणं BA　२. ॰मत्र सोऽस्फुट BM　३. ॰नानुपपत्तिः MB var
४. अनुपलभ्योऽपि जात्या कश्चित् स्यादत्रोपा॰ A　५. दृष्टार्थप्रवृत्ति॰ A　६. ॰न्तरमेवोपलभ्यते BM　७. च om BM

तदयं संक्षेपः । व्यभिचार एव प्रतिबन्धाभावः । उपाधेरेव व्यभिचाराशङ्का । प्रमाणनिश्चित एवोपाधित्वेन शङ्कनीयः । साधने सोपाधिः साध्ये निरुपाधिरेव उपाधित्वेन निश्चेयः । अतोऽन्यश्चान्यथात्वेनेति । प्रमाणपरिदृष्टेष्वेव कश्चिदुपाधिर्भविष्यतीत्यत आह—**प्रयत्नेनेति** ॥

अयं प्रयत्नार्थः । [१]प्रत्यक्षोपलभ्यास्तावद् योग्यानुपलब्धेरेव निरस्ताः । प्रमाणान्तरपरिदृष्टानामपि व्यापकानामुपाधित्वे वह्नेः सार्वत्रिकत्वप्रसङ्गः । अव्यापकानामपि नित्यानाम् उपाधित्वे वह्नेः सदानुवृत्तिप्रसङ्गः । अनित्यास्तु त्रिविधाः उभयाव्यभिचारिणः, उभयव्यभिचारिणः, अन्यतराव्यभिचारिणश्चेति[२] । तत्र प्रथमद्वितीया[३] उपाधिलक्षणाभावादेव नोपाधयः । अन्यतराव्यभिचारिणश्च द्विविधाः—धूममात्राव्यभिचारिणो वह्निमात्राव्यभिचारिणश्चेति । पूर्वे लक्षणाभावादेव नोपाधयः[४] । वह्निमात्राव्यभिचारिणोऽपि द्विविधाः, व्याप्यमात्ररूपा उभयरूपाश्चेति । पूर्ववदेव पूर्वे । उभयरूपास्तु सामग्रीतः । नापि परे विद्यन्ते । सा च न क्वचिदुपाधिः, धूमस्य वह्निनेव तयापि स्वभावसंबन्धात् । वह्निजननसामग्र्यां वह्नेरप्यन्तर्भावाच्च । न च कृतकत्वानुष्णत्वयोः संबन्धे तेजोजातीयेतरत्ववदिहापि साध्यधर्मजातीयेतरत्वमुपाधिः, तस्य प्रमाणबाधैकमात्रनियतत्वात् ॥

अत एव उपाधिमपश्यन्तोऽपि[५] विरोधिप्रमाणसदसद्भावनिश्चयव्यग्रतया मुहूर्तम् अनुमितौ विलम्बामहे । तदेवं[६] सर्वथोपाध्यनुपलम्भात् तदभावनिश्चयो यथा धूमसंबन्धे तथान्यत्रापि द्रष्टव्यः । तर्कश्च सर्वशङ्कानिराकरणपटीयान् विजयत इति ॥

ननु प्रमाणसिद्धे वस्तुनि स्वभावोऽवलम्बनम्, न तु स्वभावावलम्बनेनैव वस्तुव्यवस्थेत्याशयवान् पृच्छति—**केन पुनरिति** । प्रथमदर्शनेनैव वह्निधूमयोः अव्यभिचारग्रहणम्, द्वितीयादिभिस्तु शङ्कामात्रमपनीयत इति केषांचिन्मतमपनयन्नेव प्रकृतं प्रपञ्चयति—**यदा तावदिति** । अत्र चैष[७] परमार्थः । योऽयमुपाधिमादाय येन सह संबध्यते स निरुपाध्यवस्थायां तस्यागमको यथा वह्निर्धूमस्य । सोपाध्यवस्थायामप्युपाधेः, केवलस्यैव सामर्थ्ये स एव गमको न तूपहितः । यथाहारपरिणतिभेदस्यैव गमकत्वे मैत्रतनयत्वम् । यत्र तूपाधिः केवलो व्यभिचारी तत्र सोपाधिरपि गमक एव ।

---

१. लभ्याः B २. अन्यतराव्यभिचारिण उभयव्यभिचारिणः BM ३. प्रथमतृतीया° M B var ४. तत्र पूर्वे पूर्ववत् BM ५. °मप्यपश्यन्तोऽपि M ६. तदेव BM ७. चैवं BM.

यथार्द्रेन्धनवान् वह्निर्धूमस्येति । तत् कस्य हेतोः ? विशिष्टस्य निरुपाधित्वादिति भूयोदर्शनमिति । तज्जनितसंस्कारसहितमिन्द्रियमित्यर्थः[1] ॥

अग्रे चैतदेव स्फुटीकृतमित्यविरोधः । मणिभेदतत्त्ववदिति । यथा मणिर्यैर्यैर्विशेषैः तत्तद्व्यवहारविषयो भवति, धारयितुश्च तत्तत्फलभेदसंपादकश्चोन्नीयते, ते ते सूक्ष्मा विशेषाः [2]परीक्षकैर्भूयोभिर्दर्शनैरुन्नीयन्ते, तथात्रापीति । तथा हि, प्रथमतस्तावद् भूयोदर्शनं काकतालीयन्यायव्युदासाय । ततः सातत्योर्ध्वगत्यादिविशेषावसायाय । तत उपाधिशङ्कानिराशाय । अत्र च न वारसंख्यानियमेऽभ्युपयोगः[3], मृदुमध्याधिमात्रबुद्धिभेदेन[4] पुंसां विचित्रशक्तित्वात् । न चैवं सति लक्षणशास्त्रवैयर्थ्यम्, अनियतवारविशिष्टतत्त्वसाक्षात्कारावधियोगाभ्यासोपदेशवदिहापि निरूपाधिसंबन्धबोधावधिनियमात् । कार्यकारणभावावगमेऽप्ययमेव मार्गो, न तु पञ्चप्रत्यक्षानुपलम्भाः । अन्यतोऽनागतस्य तत्रासतस्तदनन्तरम् उपलम्भेऽपि ततोऽन्यस्मादनुत्पत्तेः भावमात्रेण निश्चेतुमशक्यत्वात्; काकतालीयन्यायेनापि संभवात् । भूयःप्रवृत्तौ तु यदि न व्यभिचारोपलम्भः, उपाध्युपलम्भोऽपि न स्यात्, द्वयोपगमे तु तन्नियतः संबन्ध इति ॥

स्यादेतत् । धूमादीनां मैत्रतनयत्वादीनां च भूयोदर्शनत्वाविशेषेऽपि कुतो विशेषादेकस्य गमकत्वमपरस्य नेत्यत आह—**न चेति** । यत् त्वत्रोक्तम्, यथा ह्यनार्द्रेन्धने वह्नौ न धूम इति वह्नेस्तत्संबन्धे तथाविधमिन्धनमुपाधिः । तथा यदि मैत्राज्जातस्यापि कस्यचिद् विवक्षिताहारपरिणतिविरहेण श्यामतोपालप्स्यत स उपाधिर्निरचेष्यत ॥ न त्वेतदस्ति । तथा सत्यपि चोपाधिवादो व्यर्थः, व्यभिचारादेव मैत्रतनयस्याहेतुत्वादिति । तदिदमनवधारितोपाधिलक्षणस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं न किञ्चिदेव ॥

तथा हि नोपहितस्य [5]निश्चित एव साध्यव्यभिचारः, उपाधेर्लक्षणं किं नाम ? साधनाव्यापकत्वे सति साध्यव्यापकत्वम् । तच्च साध्याभिमतधूमश्यामत्वे[6] प्रति व्यापकत्वम् आर्द्रेन्धनान्नपानपरिणतिभेदयोरविशिष्टम्, अविशिष्टं च साधनाभिमतदहनमैत्रतनयत्वे प्रति तयोरव्यापकत्वम् । इयांस्तु विशेषः, वह्नेर्धूमेनेवार्द्रेन्धनेनापि साक्षादेव विनाभाव उपलभ्यते । मैत्रतनयस्य तु श्यामत्वेनेवान्नपानपरिणामेनाप्युपाधेरेवोन्नीयत इति । ननु वज्रे लोहलेख्यत्वं प्रति पार्थिवत्वहेतोः क उपाधिः ? प्रशिथिलावयवत्वम्[7] । तर्हि तन्निवृत्तौ पवेरिव स्फटिकादावपि लोहलेख्यत्वनिवृत्तिप्रसङ्गः । न खलु निबिडावयवत्वेन

---

१. इन्द्रिय° om BM. २. °क्षकेण J. ३. °पगमः M °माभ्युप° B. ४. °मध्यातिमात्र° B ५. निश्चय BM. ६. श्यामत्वं B ७. प्रशिथिलावयवत्वम् dam BM

उभयोः कश्चिद् विशेषः । न मृदादिभ्यो निबिडावयवत्वेऽपि स्फटिकस्य प्रशिथिलावयवत्वादेव । न ह्यद्भ्यो मेदिनी निबिडेति न प्रशिथिलावयवा । इयांस्तु विशेषः । यथा यथा शैथिल्यापकर्षस्तथा तथा लेखितुः प्रयत्नप्रकर्षः । यदि तु शैथिल्यमप्रयोजकं तदा मृत्काष्ठपाषाणादिषु प्रयत्नप्रकर्षोऽपि विफलः, पार्थिवत्वस्य सर्वत्राविशेषात् । स्फटिके कथमेषा प्रतिपत्तिरिति चेत् ? लोहलेख्यत्वादेव । लोहलेख्यत्वप्रशिथिलावयवत्वयोः समव्यासिकत्वात्[१] । अत एवानयोरेकतरप्रवृत्तिनिवृत्त्योरेवान्यतरप्रवृत्तिनिवृत्ती, न तु पार्थिवत्वप्रवृत्तिनिवृत्त्योरेव[२] लोहलेख्यत्वप्रवृत्तिनिवृत्ती, वज्रेऽदर्शनात्; जलादौ दर्शनाच्च । वह्नावनुष्णत्वसाधनस्य तु कृतकत्वस्य तज्जातीयेतरत्वलक्षणमुपाधिः[३], स च बाधकनियतविषय इति नातिप्रसङ्ग इत्युक्तम् । तदेतत्सर्वं हृदि निधायाह—इत्याद्य इति ॥

यद्यपि द्वितीयलिङ्गदर्शनस्य स्मृत्या सह विनश्यदवस्थस्यैव परामर्शजनकत्वं क्वचित्, तथापि यत्र दृष्टमात्र एव वह्निनिवृत्तौ निवृत्तो धूमः कालान्तरे जिज्ञासावशात् परामृश्यते, तत्र द्वयोरपि लिङ्गदर्शनयोरतीतत्वमित्याशयवतोक्तम्—यद्यपीत्यादि ॥

येन च परामर्शो नेष्यते तेन वाक्यस्य चतुर्थोऽवयव उपनयोऽपि नेषितव्यः । पक्षधर्मताप्रतिपादनेन तस्योपयोगः परार्थानुमाने । [४]स्वार्थानुमाने तु सा द्वितीयलिङ्गदर्शनादेवावगतेति किं परामर्शेनेति चेत्—न, पक्षधर्मता हि व्याप्त्या सह प्रतिसंहितानुमानोपयोगिनी, तादृशी चोपनयेन प्रदर्श्यते, न तु द्वितीयलिङ्गदर्शनेन । तस्य तु व्याप्त्यनुसन्धानरहितं पक्षधर्मतामात्रमेव गोचरः । न च तदनुमानोपयोगि । तस्मादुपनयार्थो न द्वितीयलिङ्गदर्शनविषयः । ततः स्वार्थानुमाने यद्यस्ति तस्योपयोगः, नूनं परामर्शोऽपि तृतीयः स्वीकर्तव्यः । नास्ति चेत्, परार्थानुमानेऽपि [५]लिङ्गपरामर्शैकार्थः उपनयोऽपि नादरणीयः, तुल्यविषयत्वादित्याशयवान् संकलय्यानयोः समानविषयत्वमाह—संबन्धेति ॥

ननु व्यापारानुबन्धितया विषयत्वम्, विषयत्वे च व्यापारानुबन्ध इति परस्पराश्रयत्वम् । अथ व्यापारानुबन्धितयैव विषयत्वम् ? तथाप्यसंबद्धत्वाविशेषात् कथं तस्यैव व्यापारानुबन्धितेत्याशङ्क्य परिहरति—न चातिप्रसङ्ग इति । न धूमज्ञानस्याग्निः स्वतन्त्रस्य व्यापारविषयो येनासंबद्धत्वाविशेषादतिप्रसङ्गः स्यात्, किं तु ज्ञेयविशेषणस्य, तस्य च ज्ञायमानस्य धूमस्याग्निना सह नियामकः स्वभावसंबन्ध एव, अतो नातिप्रसङ्गः इत्यर्थः ॥

---

१. °त्वादेव BM २. °रपि J ३. °क्षण उपा° JA ४. स्वार्थानुमाने om BM
५. °कार्थमुपनयोऽपि BM

पूर्वं लक्ष्यपदार्थप्रश्नावसरे अनुमीयतेऽनेनेति करणार्थ इत्युत्तरं दत्तम् । इदानीमनुमितिः कस्याञ्चिदवस्थायामनुमानं प्रमाणं भवेन्न वेति जिज्ञासाप्रश्ने भावः करणं वेत्युत्तरम् । अतो न विरोधोऽंशतः, पौनरुक्त्यं वा । अतः **टीकाकृद्** अपि व्यापारत्वेनाप्रामाण्यं पूर्वपक्षयित्वा फलान्तरहेतुत्वेन प्रामाण्यं समर्थयति स्म । इह यद्यपि विज्ञानप्रमाणयोरन्यतराधिकारेण संस्कारनिर्णययोर्व्युदासः, विज्ञानाधिकारे हि तत्पूर्वकम् अनुभवकारणमनुमानमिति सूत्रसंबन्धः । न चैवंभूतौ संस्कारनिर्णयविशेषौ, तयोरनुभवं [1]प्रत्यहेतुत्वात् । प्रमाणाधिकारेऽपि फलतः स एवार्थः, तत्पूर्वकं प्रमाकरणमनुमानमिति सूत्रसंबन्धात् । तथापि विवक्षाभेदात् विकल्पेनोभयमुभयत्र[2] संभन्त्स्यत[3] इति विवक्षित्वा एकैककनिष्ठतयैकैकं दर्शितमिति तथैव व्याख्यातवान् । वस्तुतस्तु उभयमुभयत्र संबद्धम् इति निगर्वः । विपक्षावृत्तिरिति **वार्त्तिके** बहुव्रीहिसमासस्थितो विशेषणतया व्यतिरेको निष्कृष्य स्वप्रधानतया[4] तत्पुरुषपदेन प्रदर्शितो विपक्षावृत्तिर्व्यतिरेक इति । अतो न **वार्त्तिके** हेतुसामानाधिकरण्यविरोधः । व्यतिरेकाभावं व्यतिरेकनिरूपणाभावम् इत्यर्थः । [5]इहावस्तुनो विधिनिषेधव्यवहारविषयत्वं लौकिकसमीहानुरोधाद् वा, शुक्तिरजतवद्रज्जुसर्पवच्च प्रमाणानुरोधाद् वा, गन्धं प्रति पृथिवीवदुदकवद् वा, वचनमात्रानुरोधाद् वा प्रधानवत् शशविषाणवच्च, मूढप्रश्नानुरोधाद् वा धर्मान्तरं प्रति पूर्ववदेव स्ववचनविरोधभयाद् वेति ॥

तत्र प्रथमस्तावदवस्तुन्यसंभवी, लौकिकप्रवृत्तिनिवृत्त्योर्वस्तुमात्रविषयत्वात् द्वितीयादिष्वेव च परम्परया प्रविशतीति न पृथक् [6]निराक्रियते । द्वितीयनिराकरणाय प्रामाणिकनिषेधव्यवहाररीतिमाह—**सङ्ख्यामिति** । यदि तद्विविक्तेतरस्वभावोऽभावो[7] यदि चोभयथातिरिक्तस्वभावः, उभयथापि निषेध्यनिषेधाधिकरणाभ्यामेव निरूप्यते, न त्वेकेन सता निषेध्येन निषेधाधिकरणेन वेत्यर्थः ॥

ननु सत एव कुतश्चित् प्रमाणप्रतीताश्चिवर्त्स्यतीत्यत आह—**पक्षादन्यस्येति** । तदनेनासत्यधिकरणे निवृत्तिनिरूपणं प्रतिषिद्धम् , निवृत्तौ तु मूकतैवोचितेति हृदयम् । निवृत्तिरेव प्रतिषिद्धेति । भ्रान्तस्तु चोदयति[8]—**न निवर्तते चेदिति** । निरूपणम् आदायैव परिहरति—**यस्येति** । यत्र खलु भावः सर्वथैव न निरूपितः तदधिकरणतया

---

१. . प्रत्ययहेतु॰ A २. ॰नोभयत्र BM ३. संबध्यते BM, संभत्स्यंत A ४. स्व om BM ५. इह वस्तुनो॰ M ६. तिरोक्रियते A ७. अभाव om BMA ८. भ्रान्तो देशयति BM

तस्यान्यत्रोपलब्धस्याभावो निरूप्यत इति दृष्टम्, यथा गवि दृष्टस्य शृङ्गस्य शशे। यत्र तु शृङ्गाभावोऽपि गगनकमलादौ निरूपयितुं न शक्यते, तत्र शृङ्गमेव निरूप्यत इत्यलौकिकमित्यर्थः। पुनर्भ्रान्तः शङ्कते—**तत् किमिदानीमिति**। स्ववचनविरोधभयमाशङ्कते—**ननु चेति**॥

तदुक्तं[1] **ज्ञानश्रिया**

धर्मस्य कस्यचिदवस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा।
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः॥

इति।

यद्यपि स्ववचनविरोधभियापि सर्वथाविचारासहोऽर्थः स्वीकर्तुं न शक्यते, वचनाद् विचारो गरीयानिति न्यायात्, अन्यथा विकल्पशब्दौ न वस्तुगोचराविति स्ववचनविरोधादेव परिहर्तव्यम्[2]। तथा हि स्वलक्षणस्यासाधारण्येनाशक्यसमयगोचरतया[3], शब्दस्य च समयाधीनप्रवृत्तिकतया विकल्पस्य च[4] तदेकविषयतया न तयोर्वस्तुगोचरत्वमिति विचारे,

शब्दस्य काचिदपि वस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः किमिहास्ति नो वा।
अस्त्येव चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः॥

इति तुल्या विभीषिका। तथापि तत्त्वं निरूपयन् परिहरति—**न वै तत्त्वत** इति॥

ननु यदि नैकतरनिषेधो विधिर्वा तत् किमुभयविधिः निषेधो वा? तथा सति अतितरां दुर्घटमापद्येतेत्यत[5] आह—**नो खल्विति**। ननु सर्वव्यवहाराभाजनमित्यपि निषेधव्यवहारभाजनत्वेनैव निर्वहेत्, अन्यथा पुनरपि स्ववचनप्रतिरोध इत्यत आह—**उपयोगे वेति**। स्ववचनप्रतिरोधभयाद्धि तदा निषेधव्यवहारगोचरत्वस्वीकारः स्याद् यदि तथा सति भयं निवर्तेत। न त्वेतदस्ति। नो खलु सकलव्यवहाराभाजनं च तन्निषेधव्यवहारभाजनं चेति वचनं परस्परमविरोधि।

---

१. यदुक्तम् BM २. परिहरेत् JA ३. °समयतया BJA ४. शब्दसमान° added Bvar ५. दुर्घटमित्याह AB var

[1]विधिव्यवहारमात्राभिप्रायेणाभाजनत्वव्यवहारे[2] कुतो विरोध इति चेत् ? हन्त ! सकलविधिनिषेधव्यवहाराभाजनत्वेन किञ्चिद् व्यवह्रियते न वा ? उभयथापि स्ववचनविरोधः । उभयथाप्यवस्तुनैव[3] तेन भवितव्यम्, वस्तुनः सर्वव्यवहारविरहानुपपत्तेः । नेति पक्षे सकलविधिनिषेधव्यवहाराभाजनमित्यनेनैव[4] व्यवहारेण विरोधात्[5]; अव्यवहृतस्य निषेद्धुमशक्यत्वात् । व्यवह्रियत इति पक्षे तु विषयस्वरूपपर्यालोचनेनैव विरोधात् । न हि सर्वव्यवहाराभाजनं च[6] व्यवह्रियते चेति च ॥

अपि च यद्यवस्तुनो निषेधव्यवहारगोचरत्वम्, विधिव्यवहारविषयतापि किं न स्यात् ? प्रमाणाभावस्योभयत्रापि तुल्यत्वात् । बन्ध्यासुतस्यावक्तृत्वेऽचेतनत्वादिकमेव प्रमाणम्, वक्तृत्वे तु न किञ्चिदिति चेत्—न, तत्रापि सुतत्वस्य विद्यमानत्वात्, न हि बन्ध्यायाः सुतो न सुतः । तथा सति स्ववचनविरोधात् । वचनमात्रमेतन्न तु परमार्थतः सुत एवासाविति चेत् ? अचेतनस्याप्येवंरूपत्वात्, चेतनादन्यत् स्वभावान्तरम् एवाचेतनमित्युच्यते । चैतन्यनिवृत्तिमात्रमेव विवक्षितमिह, तच्च संभवत्येवेति चेत्— न तत्राप्यसुतत्वनिवृत्तिमात्रस्यैव विवक्षितत्वात् ॥

[7]असुतत्वनिवृत्तिमात्रस्य स्वरूपतः कृतिज्ञप्त्योरसामर्थ्ये समर्थमर्थान्तरमवसेयम् अनन्तर्भाव्य कुतो हेतुत्वमिति चेत्—न, अचैतन्येऽप्यस्य न्यायस्य समानत्वात् । व्यावृत्तिरूपमपि च तदेव गमकं यदतस्मादेव, यथा शिंशपात्वम् । बन्ध्यासुतस्त्वसुतादिव घटादेः, सुतादपि देवदत्तादेः व्यावर्तते, अतो न हेतुरिति चेत् ? नन्वचैतन्यमप्यस्यैवं रूपमेव । न हि बन्ध्यासुतश्चेतनादिव देवदत्तादेरचेतनादपि काष्ठादेर्न व्यावर्तते । अतो न हेतुरिति । वक्तृत्वं वस्त्वेकनियतो धर्मः स कथमवस्तुनि साध्यो विरोधादिति चेत् ? स पुनरयं विरोधः कुतः प्रमाणात् सिद्धः, किं वक्तृत्वविविक्तस्यावस्तुनो नियमेनोपलम्भात्, आहोस्वित् वस्तुविविक्तस्य वक्तृत्वस्यानुपालम्भादिति ? न तावदवस्तु केनचित् प्रमाणेनोपलम्भगोचरः । तथात्वे वा नावस्तु । नाप्युत्तरः समानत्वात् । न ह्यवक्तृत्वमपि वस्तुविविक्तं कस्यचित् प्रमाणस्य विषयः । तद्विविक्तविकल्पनमात्रं तावदस्तीति चेत् ? तत्संसृष्टिविकल्पनेऽपि को वारयिता ?

ननु वक्तृत्वं वचनं प्रति कर्तृत्वम्, तत् कथमवस्तुनि, तस्य सामर्थ्यविरहलक्षणत्वादिति चेत् ? [8]अथावक्तृत्वमपि कथं तत्र, तस्य वचनेतरकर्तृत्वलक्षणत्वात् ।

१. मात्र om M २. °भाजनत्ववादे JA ३. °नैव च J ४. व्यवहारविरहीत्यने° BJ ५. विरोधः M ६. °राविषयश्च BJ ७. असुतनि° J ८. अन्यथाऽ° BM

सर्वसामर्थ्यविरहे वचनसामर्थ्यविरहो न विरुद्ध इति चेत् ? अथ सर्वसामर्थ्यविरहो बन्ध्यासुतस्य कुतः प्रमाणात् सिद्धः ? अवस्तुत्वादेवेति चेत् ? नन्वेतदपि कथम् ? सर्वसामर्थ्यविरहादेवेति चेत् ? सोऽयं केवलैर्वचनैरितस्ततो निर्धनाधमर्णिक इव साधून् भ्रामयन् परस्पराश्रयदोषमपि न पश्यति ॥

क्रमयौगपद्यविरहादिति चेत् न, तद्विरहसिद्धावपि [१]प्रमाणानुयोगस्यानुवृत्तेः। सुतत्वे च परामृष्यमाणे तदविनाभूतसकलवक्तृत्वादिधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरह-साधनस्यावकाशः ? कुतस्तरां चावस्तुसाधनस्य ? कुतस्तमां चावक्तृत्वादिसाधनानाम् ? ततश्च प्रमाणमेव सीमा व्यवहारनियमस्य, तदतिक्रमे त्वनियम एवेत्यनेनाभिप्रायेणेदमुक्तम्। **उपयोगे वा** निषेधव्यवहारोपयोगे वा। **न निरुपाख्यो** न विधिव्यवहाराविषयः। यस्मिन् किञ्चिन्निषिध्यते प्रमाणेन, तस्मिन् किञ्चिद् विधीयतेऽपीति नियमादित्यर्थः। [२]तत्र प्रष्टुरुत्तरे वक्तव्ये न विरुद्धमनर्थकं वा वक्तुमुचितमित्याशयवानाह—कस्तर्हीति। उत्तरम्—**अथेति**। [३]अनुत्तरविषये अहृदयैर्यदेवोत्तरीक्रियते, तदेव विरुद्धमित्यर्थः ॥

न च केवलमत्रोत्तरदः, प्रष्टाप्यहृदय एव। न ह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैयात्यं विना प्रश्नः। तत्रापि यद्येकोऽप्रतीतपरमार्थविषय एवोत्तरं ददाति न गौर इति, अपरोऽपि किं न दद्याद् गौर इति ? न चैवं सति [४]काचिदर्थसिद्धिः, प्रमाणाभावविरोधयोरुभयत्रापि तुल्यत्वात्। तदिदमुक्तम्—**अहृदयवाचामिति**। नन्वप्रतीते व्यहाराभाव इति युक्तम्, कूर्मरोमादयस्तु प्रतीयन्त एव। न ह्येते विकल्पाः कञ्चिदर्थभेदमनुल्लिखन्त एवोत्पद्यन्ते। न च प्रमाणास्पदमेव व्यवहारास्पदमित्यस्ति नियम इत्यत आह—**न चात्यन्तेति**। यद्यपि सर्वथाप्रतीते व्यवहाराभाव इति वदतो बौद्धस्यापि स्ववचनविरोध एव, तथाप्ययं विरोधः प्रागेवोद्भावितप्राय इत्येनमुपेक्ष्य शङ्कामात्रं समर्थितम् ॥

तथा हि शशविषाणमिति ज्ञानमन्यथाख्यातिः स्यादसत्ख्यातिर्वा ? न तावदाद्यस्ते रोचते, तथा सति किञ्चिदारोप्यं किञ्चिदारोपविषय इति स्यात्[५]। तथा चारोपविषयस्तत्रैवा-स्त्यारोपणीयं त्वन्यत्रेति जितं **नैयायिकैः**। नापि द्वितीयः, कारणानुपपत्तेः। इन्द्रियस्य ज्ञानजनने स्वविषयाधिपत्येनैव व्यापारात्, लिङ्गशब्दाभासयोरप्यन्यथाख्यातिजनकत्वात्।

---

१. प्रमाणानुपयोग॰ MB var २. तथापि A ३. उत्तरा वि॰ BM ४. कदाचित् A ५. ॰विषयः स्यात् BM

अपहस्तिततस्वार्थयोश्चासत्ख्यातिजनकत्वे शशविषाणशब्दात् कूर्मरोमादिविकल्पानामप्युत्पत्तिप्रसङ्गः[1], नियामकाभावात् ॥

स हि सङ्केतो वा स्यात्, शब्दस्वाभाव्यं वा ? [2]न तावदाद्यः, सङ्केतविषयाप्रतीतेर्निराकृतत्वात् । अतएव प्रतीतेरितरेतराश्रयत्वम् । पदसङ्केतबलेन तु[3] प्रवृत्तौ स्वार्थापरित्यागात् । तथा चानन्विताः पदार्था एवान्विततया परिस्फुरन्तीति विपरीतख्यातिरेवावर्तते[4] । स्वार्थपरित्यागे तु पुनरप्यनियमः, असामयिकार्थप्रत्यायनात् । शब्दस्वाभाव्यात् तु नियमे [5]व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयप्रसङ्गः । वासनाविशेषादिति चेत् ? अथासदुल्लेखिनः प्रत्ययस्य वासनैव कारणमुत वासनापि ? न तावदाद्यः, शशविषाणादिप्रत्ययानां[6] सदातनत्वप्रसङ्गात् । कदाचिद् वासनायाः[7], प्रबोधात् कदाचिदिति चेत्—न, प्रबोधोऽपि सहकार्यन्तरं वा, अतिशयपरम्परापरिपाको वा ? आद्ये वासनैवेति [8]पक्षानुपपत्तिः । द्वितीयोऽपि यदार्थान्तरप्रत्यासत्तेस्तदा पूर्ववत् । स्वसन्ततिमात्राधीनत्वे तु[9] बाह्यवादव्याघातः, नीलादिबुद्धीनामपि वासनापरिपाकादेव उत्पादात् । वासनापीति पक्षे तु तदन्योऽपि कश्चिद्धेतुर्वक्तव्यः । स विचार्यमाणः पूर्वं न्यायं नातिवर्तत इति ॥

न च शशविषाणादिशब्दानामसदर्थैः सह सम्बन्धावगमोऽपि । तथा हि परबुद्धीनामनुल्लेखात् तद्विषयस्याप्यनुल्लेख एव । न चार्थक्रियाविशेषोऽप्यस्ति यतो विषयविशेषमुन्नीय तत्र सङ्केतो गृह्यताम् । न च सङ्केतयितुरेव वचनात् तदवगमः । तद्विषयाणां वचनानां सर्वेषामेवाप्रतीतविषयत्वेनागृहीतसमयतया[10] अप्रतिपादकत्वात् । न च शशविषाणशब्दमुच्चारयतः कश्चिदभिप्रायो वृत्तः, तद्विषयोऽस्य वाच्य इति सुग्रहः समय इति वाच्यम् । न ह्येवमाकारः समयग्रहः । गां बधानेत्युक्ते अप्रतीतशब्दार्थस्य अभिप्रायमात्रप्रतीतौ समयग्रहप्रसङ्गात् । न च [11]विशेषान्तरविनाकृतः कल्पनामात्रविषयोऽस्य वाच्य इति साम्प्रतम्, घटकूर्मरोमादीनामपि तदर्थत्वप्रसङ्गात् । न च सर्वे प्रतिपत्तारः स्ववासनया असदर्थशब्दसम्बन्धप्रतिपत्तिभाज इति साम्प्रतम् । परस्परवार्तानभिज्ञतया अपरार्थत्वप्रसङ्गात् । न हि स्वयंकृतं सङ्केतमग्राहयित्वा परो व्यवहारयितुं शक्यते । न च व्यवहारोपदेशावन्तरेण ग्राहयितुमपि । न च गां बधानेतिवत् शशविषाणपदार्थे

१. प्रसङ्गात् BMA २. आद्यस्तावत् सङ्केतविषयाप्रतीतेरेव पराहतः JA ३. तु om JA ४. °ख्यातिरेवा° BM ५. व्युत्पन्नस्यापि BM ६. °दिविकल्पाना° MB var ७. वासनाया om JM ८. नियमानुप° BM ९. तु om BM १०. सङ्केततया BM ११. निषेधान्तर° MB var

वृद्धव्यवहारः। न चायमसावश्व इतिवदुपदेशः। न च यथा गौस्तथा गवय इतिवदुपलक्षणातिदेशः। न चेह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीतिवत् प्रसिद्धपदसामानाधिकरण्यम्[1]। तदमूः शशविषाणादिकल्पना नासत्ख्यातिरूपाः, तथात्वे कारणाभावात् मूकस्वप्नवदसांव्यवहारिकत्वप्रसङ्गाच्च[2]। तस्मादन्यथाख्यातिरूपा एवेति नैतदनुरोधेनाप्यवस्तुनो निषेधव्यवहारगोचरत्वमित्यर्थः॥

[3]भवतु तथापि नासौ सिद्ध्युपालम्भयोगीत्याह—**कल्पितगोचरश्चेति**। तथा हि कोऽयं व्यतिरेको नाम? यद्यतो व्यतिरिच्यते तस्य तत्राभावो वा, तदभावस्वभावत्वं वा? तत्र न तावत् क्रमयौगपद्ययोः शशविषाणेऽभावः प्रमाणगोचरः, वृक्षरहितभूभृत्कटकवत् क्रमयौगपद्यरहितस्य शशविषाणस्य प्रमाणाविषयत्वात्। नापि क्रमयौगपद्याभावरूपत्वं शशविषाणस्य प्रामाणिकम्, घटाभाववत् शशविषाणस्य प्रमाणेण अनुपलम्भात्। घटाभावोऽपि न प्रमाणगोचर इति चेत्—न, तस्य तद्विविक्तेतरस्वभावस्यापि प्रमाणत एव सिद्धेः। असिद्धौ वा तत्राप्यव्यवहार एव। घटस्तावत् स्वाभावविरहस्वभावः प्रमाणसिद्धः ताद्रूप्येण कदाचिदप्यनुपलम्भात्। एतावतैव तदभावोऽपि घटविरहस्वभावः सिद्ध इति चेत्—न, घटाभावस्य तद्विरहस्वभावत्वानभ्युपगमात्[4]। न चान्यस्य स्वभावे प्रमाणगोचरे तदन्योऽपि सिद्धः स्यात्, अतिप्रसङ्गात्। एवंभूतावेव घटतदभावौ यदेकस्य परिच्छित्तिरेवापरस्य [5]व्यवस्थितिरिति चेत्—न, घटवद् घटाभावस्यापि प्रामाणिकत्वानभ्युपगमे स्वभाववादानभ्युपगमात्[6]। प्रमाणसिद्धे हि [7]वस्तुनि स्वभाववादालम्बनम्। न तु स्वभाववादालम्बनेनैव[8] वस्तुपरिच्छित्तिरिति हि भवतामेव तत्र तत्र जयदुन्दुभिः। यदुक्तं **वार्तिकालङ्कारे**,

यत्किञ्चिदात्माभिमतं विधाय
निरुत्तरस्तत्र कृतः परेण।
वस्तुस्वभावैरिति वाच्यमित्थं
तदोत्तरं स्याद् विजयी समस्तः[9]॥

तत् किमिदानीं स्वाभावविरहस्वभावो घटः प्रमाणान्नैव सिद्धः? तव दृष्ट्या एवमेतत्। घटो हि यादृक्तादृक्स्वभावस्तावत् प्रमाणपथमवतीर्णः तस्य यदि परमार्थतः

---

१. न चेह °सामानाधिकरण्यम् om BM; B var accepts it २. प्रसङ्गात् BM ३. भवतु J ४. घटभावस्य तदभावविरह° JA ५. व्यवच्छित्तिः J ६. °नवकाशात् Bvar. ७. वस्तुनि स्वभावालम्बनम् JA. ८. स्वभावबलेनैव M ९. यदुक्तं·····समस्त om JMA

अभावोऽपि कश्चित् स्यात्, परमार्थतः सोऽपि तद्विरहस्वभाव इति तथैव प्रमाणावेदितः स्यात् । न चैतदभ्युपगम्यते भवता । तस्माद् घटवत् तदभावस्यापि प्रामाणिकत्वेनैवानयोः परस्परविरहलक्षणव्यतिरेकसिद्धिः । अप्रामाणिकत्वे वा अनयोरपि न तथाभाव इति शशविषाणादिष्वपीयमेव गतिः ॥

ननु काल्पनिकरूपसंपत्तिरेवास्त्वनुमानाङ्गमित्यत आह—**तस्याः सर्वत्र सुलभत्वादिति** । [1]दहनवत्त्वादिसाधने प्रमेयत्वादौ शब्दानित्यत्वादिसाधने चाक्षुषत्वादौ नित्यत्वादिसाधने कृतकत्वादावित्यर्थः । ननु पक्षसपक्षविपक्षास्तावद् वस्त्ववस्तुभेदेन द्विरूपाः । तत्र ये कल्पनोपनीताः, तत्र काल्पनिका एव पक्षधर्मत्वान्वयव्यतिरेकाः । प्रमाणोपनीतेषु तु प्रामाणिका एवेति विभागः । तदिह काल्पनिकान्निरग्नेर्यद्यपि प्रमेयत्वादेर्व्यावृत्तिः काल्पनिकी सिद्धा, तथापि प्रामाणिकात् जलह्रदादेः प्रामाणिक्येवैषितव्या, सा च न सिद्धेति कुतस्तस्य हेतुत्वम् ? एवं प्रामाणिके शब्देऽपि पक्षीकृते प्रामाणिक एव हेतुसद्भावो । वक्तव्यः न चासौ चाक्षुषत्वस्यास्तीति सोऽपि कथं हेतुः[2] ? एवं कृतकत्वस्यापि वस्त्वेकनियतस्य धर्मस्य वास्तव एवान्वयो वक्तव्यः । वस्तुनो[3] विपक्षाच्च वास्तव एव व्यतिरेको वक्तव्यः । न च तस्य तौ स्तः । तत् कथमसावपि हेतुरिति ? प्रलपितमेतत् । न हि नियामकमन्तरेण संपदं प्रति कल्पना त्वरते, विपदं प्रति तु विलम्बत इति शक्यं वक्तुम् । तथा च निरग्निकमपि कूर्मरोम सधूममिति कल्पनामात्रेण विपक्षवृत्तित्वाद् धूमो नाग्निं गमयेत् । वास्तव्यां रूपसंपत्तौ किममेन काल्पनिकदोषेणेति चेत् ? तर्हि वास्तव्यामसंपत्तौ किं काल्पनिक्या तयेति समानम् । विरोधाविरोधौ विशेष इति चेत् ? कुत एतत् ? उभयोरेकत्र वस्त्ववस्तुत्वादन्यत्रावस्तुवदिति चेत् ? तत् किं काल्पनिकोऽपि धूमो वस्तुभूतो येन कूर्मरोम्णस्तेन सह विरोधः स्यात् ?

क्वचिद् वस्तुभूत इति चेत् ? निर्धूमत्वमपि क्वचिद् वस्तुभूतमिति तेनापि विरोध एव । तस्माद् यथा काल्पनिकी विपत्तिर्न दोषाय, तथा काल्पनिकी संपत्तिरपि न गुणायेति तस्याश्च सर्वत्र सुलभत्वादिति **टीकार्थः** । एतच्चाभ्युपेत्योक्तम्—**वस्तुतस्तु न न निरुपाख्यं कस्यचिद् व्यवहारस्य भाजनमिति** ॥

ननु यद्यावयोरकुशलतया स्ववचनविरोधः, अथ प्रष्टुः किमुत्तरं वक्तव्यमित्यवशिष्टमुपसंहरन् परिहरति—**तस्मादिति** । यत्र वचने सर्वथैव विरोधस्तत्रावचनमेव श्रेय इत्यर्थः । एतेन मूकताहेतुविकल्पाः परिहृता बोद्धव्या इति ॥

---

१. इह नवत्वादि° M २. °हेतुरिति BM ३. वस्तुन एव BM

नन्वेकरूपमविकलमिदं कथं गमकम् ? गमकत्वे वा व्यतिरेकविकलवद् रूपान्तरविकलमपि तथा किं न स्यादविशेषादित्याशङ्क्याह—**न चैतावतेति**। रूपान्तरवैकल्यवन्न व्यतिरेकवैकल्यमविनाभावक्षतिमावहतीत्यर्थः । एवं तर्हि सत्यपि विपक्षे व्यतिरेको न पर्येषणीय इत्यत आह—**विपक्षसम्भवे त्विति** । विपक्षे सति तत्र वृत्तिशङ्का, ततस्तन्निवृत्त्यर्थं तदुपयोगः । विपक्षाभावे तु शङ्कैव नास्ति, यथोक्तं प्राक् । न हि तोयाभ्यवहरणेऽप्यसमर्थस्य मुमूर्षोः शष्कुलीभक्षणं शङ्कते चेतन इत्यर्थः ॥

**स्वमते त्विति** । अस्य तु काल्पनिकोऽपि विपक्षः परेणाभिधातुं न शक्यते, अभिधाने सपक्षत्वापत्तेः [1]असपक्षत्वेऽनभिधानप्रसङ्गात्, ततश्चाभिधेयत्वे साध्ये यः कश्चिद्धेतुरुपादीयते, तस्य किं विपक्षे वृत्तिरवृत्तिर्वेति प्रश्ने [2]अनेनोत्तरकोविदेन किं वक्तव्यम् ? मूकीभूय तिष्ठासोस्तु न कश्चित् प्रतिमल्ल इति स्वयमेवोल्लपितमनेन[3] । न त्वेवंभूतोऽहेतुरेव दोषाभावात्, अरुचिमात्रस्य सर्वत्र सुलभत्वादिति भागासिद्धिनिराकरणाय व्याप्त्येति वदतः ॥

पूर्ववदित्यतिशायने मतुपो विधानम् । अतिशयश्च व्यासिरेवेत्याशयः । तदिदम् उक्तं **टीकाकृता—अस्ति गन्धवत्त्वस्य साध्यं न तु व्याप्त्येति** । ननु साध्यसजातीये शेषशब्दस्य न काचिद् वृत्तिरित्यत आह—**साध्यस्योपयुक्तत्वादिति** । पौनरुक्त्यभ्रममपाकरोति—**पदानि विभज्येति** । नञमन्तर्भाव्य व्याख्याने सामान्यतोदृष्टपदमेवं योजनीयम् , उक्तविशेषरहितत्वेन विपक्ष एव सामान्य इत्युच्यते । तत्रादृष्टम् । सप्तम्यास्तसिः । योग्यदर्शननिवृत्त्या च दृश्यनिवृत्तिर्विवक्षिता, तेन विपक्षे असदित्यर्थः । अतः [4]सिद्धवत् त्रिरूपसंपत्तिमभ्युपेत्य रूपद्वयसंपदे चकारमवतारयति—**तथा चेति** ॥

तदेवं तत्पूर्वकमित्यनेन लिङ्गपरामर्शोऽनुमानमिति लक्षणार्थे व्याख्याते, अथ किं लिङ्गम् , कतिविधं वेति जिज्ञासायां त्रिविधमित्यवच्छेदेन व्याख्याय, किं लक्षणम् इति जिज्ञासायां पूर्ववदित्याद्येकवाक्यतया व्याख्यानेन परामर्शविषयः संज्ञितो विभक्तो लक्षितश्च[5] । विषयविषयिणोरभेदविवक्षया च सामानाधिकरण्यमिति मन्तव्यम् । **एवम् अन्यान्यपीति** । तद्यथा, [6]मनोज्ञमत्तकाशिनीसंदर्शनेन संसारिरागानुमानम् , शत्रुदर्शनेन

---

१. त्वेनाभि BM. २. नोत्तरं कोवि BM. ३. द्रः ज्ञानश्रीनिबन्धावली पृः ९० ४. सिद्धवत् त्रिरूपसम्प° dam BM ५. लक्षितश्च वेदितव्यः M ६. °कामिनी° A

क्रोधानुमानम् , विषयभोगेन सुखानुमानम् , रोगादिना दुःखानुमानम्[1], अविकलेन्द्रियस्य योग्यविषयावधानेन ज्ञानानुमानम् , श्रद्धावतां यथाविधि यागाद्यनुष्ठानेन धर्मानुमानम् , निषिद्धाचरणेनाधर्मानुमानम् , पट्वभ्यासादरप्रत्ययैः संस्कारानुमानम् , मिथ्याप्रत्ययेन[2] भविष्यत्संसारप्रवाहानुमानमित्यध्यात्मम् । बाह्ये च ज्वलन्तं तृणराशिमुपलभ्य भविष्यद्भस्मानुमानम् , तथाविधवृष्ट्या भविष्यन्नदीपूरादिज्ञानम् , प्रकारान्तरावगतेन वायुना त्वरावता वृक्षादिसंक्षोभानुमानमित्यादि नेयम् ॥

**दुरवबोधमिति** । सामान्यतोदृष्टस्वरूपस्यैवाविवेचनादित्यर्थः । उदाहरणद्वारेण तद्विवेचनं भविष्यतीत्याह—**शेषवदुदाहरणान्तर्गतं चेति** । शेषवल्लक्षणयोगेऽपि तदुदाहरणान्तरवैलक्षण्येनेदमेव सामान्यतोदृष्टपदार्थे भविष्यतीत्यत आह—**न चैतावतेति** । न तावदश्वकर्णादिशब्दवदयं सूर्यव्रज्यानुमाने वर्तते, अन्यत्रापि वृद्धप्रयोगात् । नापि **सूत्रकारस्यैव** परिभाषेयम्, निष्प्रयोजनत्वात् । तस्मादुदाहरणवैलक्षण्यमात्रविवक्षयेदमुच्यते । तथा चातिप्रसङ्ग इत्यर्थः । तस्माद् **भाष्यकार**व्याख्यानविरुद्धोदाहरणमात्राख्यानमरोचयमानः सामान्यतोदृष्टपदं व्याख्यायान्यथोदाहरणमाहेति योजना । क्षयवृद्धिप्रत्ययाविषयत्वे सतीति स्पष्टार्थम् , प्राङ्मुखोपलभ्यत्वे परिवृत्त्य तत्प्रत्ययविषयत्वादिति पर्यालोचनयैवाविनाशस्य प्राप्तत्वात् ॥

न ह्युपलब्धविनाशे उपलब्धं प्रत्यभिज्ञायते भ्रान्तावप्यनुपलब्धमेवोपलब्धतयेति[3] । प्राङ्मुखोपलभ्यत्वे चेत्यस्य **टीकया** स्फोरितस्य प्राङ्मुखोपलब्धस्य प्राङ्मुखेनानुपलम्भे सतीत्यर्थः । **नरान्तरस्य** तत्समानदेशस्थस्येति मन्तव्यम् । अन्यथा मार्तण्डमण्डलस्यापि लोकान्तरवर्तिपुरुषापेक्षया प्राङ्मुखोपलभ्यता दुर्वारेत्यसिद्धं विशेषणं स्यात् । तदेतत् नरपदेन सूचितम् । **तदभिमुखदेशसंबन्धादिति** शिष्यहिततया व्यभिचारौपयिकपादविहरणज्ञापनाय । न हि यथातथा पादविहरणमात्रमस्य हेतोः क्षतिमावहतीति । **सत्यविनाशे इति च द्रष्टव्यम्** सति द्रष्टव्यत्व इति वेति शेषः ॥

इह यद्यपि दिशः प्रत्यक्षत्वे साध्येऽङ्गुल्या निर्देशो व्यधिकरणः[4], तरुनगरादिषु एवाङ्गुल्या व्यपदेशात् । दिशः सामानाधिकरण्यं त्वङ्गुलीव्यपदेशस्य [5]न तदधिकरणतासाधनमन्यथासिद्धत्वात् । [6]तथापि यस्यां दिशि एते तरवः सा प्राचीति तर्वादिभेदेन

१. रोगादिना om BM   २. मिथ्याज्ञानेन BJA   ३. °लब्धमुपलब्ध° BM
१. द्रव्यत्वे सतीति BJM   ४. व्यपदेशादिति व्यधिकरणम् MB var   ४. न om A
६. तथापि यस्यां दिशि ए° indistinct BM

अप्यङ्गुल्या व्यपदेशोऽस्तीति न व्यधिकरणत्वमाहत्याभिधातुं शक्यत इत्यनेनाभिप्रायेण अन्यथासिद्धिमेव वार्तिकार्थमाह[1]—अन्यथासिद्धतयेति । उपलक्षणं चैतत् , चलन्तीं पताकामुपलभ्यायं वायुर्वातीति अङ्गुलीनिर्देशस्याचाक्षुषे वायावपि गतत्वेन व्यभिचारस्य अपि संभवात् । रूपेण स्पर्शानुमानमित्यादावादिग्रहणेन रसेन रूपानुमानम् , गन्धेन रसानुमानमित्यादि । वृक्षादर्शने सन्देहे वा न शिंशपादर्शनं निश्चयो वा ततोऽनवसर-पराहतमेवानुमानम् । वृक्षशब्दप्रयोगलक्षणव्यवहारानुमानं तु न स्वार्थम् , अविदित-समयेनाशक्यत्वात् ; विदितसमयस्य च व्यर्थत्वात् । परोऽपि यदि व्युत्पन्नो, यदि विदितशब्दप्रवृत्तिनिमित्तः, तदा स्वयमेव व्यवहरेत् । विपरीतस्तु[2] शिंशपात्वमपि न प्रतीयात् । अव्युत्पन्नश्चेत् , समयमग्राहयित्वा व्यवहारयितुमशक्य एव । न चायं समयग्रहप्रकारः । तथा सति शिंशपात्वादयं वृक्षो व्यवहर्तव्यः इति शिंशपात्वमेव वृक्ष-शब्दप्रवृत्तिनिमित्तमाकलयेत् । न च शिंशपात्वादयं वृक्षशब्दप्रवृत्तिनिमित्तवानिति वाक्यार्थः, विदिततन्निमित्तं प्रति व्यर्थत्वात् ; विपरीतं प्रत्यप्रसिद्धविशेषणत्वप्रसङ्गात् , सामान्योपक्रमे समयग्रहानुपपत्तेः; पुरुषेच्छामात्राधीनत्वाच्च समयस्य पक्षधर्मतया नियन्तुमशक्यत्वात् ; अविदितसमयं प्रति चान्वयोपक्रमस्यायुक्तत्वादित्यत आह—श्रुतेनेति । तदनेन ये चान्ये साध्यसमानकालाः, ते सर्वे सामान्यतोदृष्टानुमानसंग्राह्यत्वेन उपलक्षिता इति ॥

स्वमतेन व्याख्यानान्तरम् , न तु तात्पर्यान्तरमित्यर्थः, पूर्वं साध्यं तद्यस्य व्याप्त्येत्यनेनैकतात्पर्यत्वात् । अनेनैवाभिप्रायेणाह—अत्रापि यथासंभवमिति । नञ-नन्तर्भावचकारनिरपेक्षते चास्मिन् व्याख्याने पूर्वस्माद् विशेषः । सामान्येन कार्यं वा कारणं वा अनुभयात्मकं वा अविनाभावितया दृष्टं निश्चितं सामान्यतोदृष्टमेवं च योजना । तदिदमुक्तम्—असन्दिग्धतामाहेति । तत्र तत्पूर्वकमिति । स्वरूपविप्रतिपत्तिनिवृत्तिः स्वलक्षणसामर्थ्येन[3] न्यूनाधिकसंख्यत्वाशङ्कानिवृत्तिः प्रथमं तात्पर्यम् । नियमज्ञापने त्वशक्यलक्षणत्वशङ्कानिवृत्तिस्तात्पर्यमिति न पौनरुक्त्यमिति वृत्तवर्तिष्यमाणानुकीर्तन-फलम् ॥

यद्यपि प्रतिपन्नं प्रत्यनुमानस्य न संशयविपर्ययनिवृत्तिरज्ञातज्ञानं वोपयोगः, तथाप्यध्यवसिताभ्यनुज्ञानं वस्तुबलायातमपेक्षिते विषयेऽनुपेक्षणीयमेवेति तस्याप्यनुमान-

---

१. °कार्थं इत्याह BM २. अविदितशब्दप्रवृत्तिनिमित्तः added B var
३. °विप्रतिपत्तिर्लक्षण° JA

प्रतिपाद्येषु गणना । तेनादिवाक्ये प्रतिपन्नः प्रतिपादयितेति प्रतिपन्न एव प्रतिपादयिता, न तु प्रतिपन्नः प्रतिपादयितैवेति बोद्धव्यम् ॥

पुनः पौनरुक्त्यपरिहारार्थं वृत्तवर्तिष्यमाणे अनुकीर्तयति—**पूर्वं सिद्धवदिति** । साक्षात्कृत्यनुमित्योः क्रिययोस्तुल्यता विषयगता द्रष्टव्या । तेनायमर्थः । व्याप्तिग्राहकप्रमाणयोग्यो धर्मो यत्रानुमीयते तत् पूर्ववदनुमानम् । तदयोग्यस्तु यत्र तत् सामान्यतोदृष्टमिति । धूमत्वैकार्थसमवायिभिरिति सतात्पर्यं विशेषणम् । न हि संततमूर्ध्वगमनमात्रेणाग्निरनुमातुं शक्यते, धूलीपटलादौ व्यभिचारात् । एकद्रव्यत्वादित्यस्य सपक्षे रूपादावन्वयस्य स्पष्टत्वात् विपक्षव्यतिरेक एवोक्तः । **द्विविधमेव हीति** । न त्वत्रान्वयाभिधानमात्रेण केवलव्यतिरेकिशङ्का कर्तव्या । समानजातीयारम्भकत्वं शब्दस्य असिद्धमतः साधयति—**कार्यत्वादिति** । कार्यत्वं पुनरस्यानुपलब्धिकारणभावे सति अनुपलब्धस्योपलभ्यमानत्वाद् वा प्रत्यक्षाद् वेति । सर्वत्रोपलब्धिप्रसङ्गादित्यस्य विपर्ययेण हेतुः । प्रयोगस्त्वेवम्—अव्याप्यवृत्तिः शब्दः, आश्रयाप्राप्तावपि क्वचिदनुपलभ्यमानत्वे सति क्वचिदुपलभ्यमानत्वात् संयोगवदिति ॥

यद्यपि चैतावन्मात्रेण गुणत्वं सिध्यति, तथापि **भाष्यकारीयो** हेतुरुपेक्षितः स्यादित्यतोऽव्यापकतामात्रं प्रसाध्यैव प्रकृते लगयति[1]—**कर्णेति** । अत्रापि प्रयोगः, शब्दो वीचीतरङ्गन्यायेन कर्णशष्कुलीमन्तमाकाशदेशमासादयति, प्रकारान्तरासंभवे सत्युपलभ्यमानत्वादिति व्यतिरेकी । उदाहरणार्थं विवेचयति—**इदं त्विति** । [2]सदाद्यभेदः सत्तायोगः, अनित्यत्वम् , कारणवत्त्वम् , सामान्यविशेषवत्त्वमिति । साध्यधर्मिण्यस्मदादिभिः कदाचित् प्रत्यक्षेणानुपलम्भादित्यर्थः ॥

आभिप्रायिको ह्यर्थः पक्षधर्मताया विषयः । स एवाभिप्रायेण व्याप्यते, येन विना प्रतिज्ञातोऽर्थो नोपपद्यते । उभयथा संभावनायामेकतरत्र बाधकोपपत्तावन्यतरः प्रमाणान्तरगोचरः[3], तत्र विधायकप्रमाणाभावे केवलव्यतिरेकिणोऽवतारः । तथा हि क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र सर्वज्ञत्वमन्तरेण क्षित्यादीनां [4]कर्तृत्वमेव नोपपद्यते, परमाण्वदृष्टादीनामज्ञाने तदधिष्ठानानुपपत्तेः । तदधिष्ठाने वा असर्वज्ञत्वानुपपत्तेः । तस्मात् सर्वज्ञत्वमन्तरेण प्रतिज्ञातार्थानुपपत्तौ तदभिप्रायव्याप्तम् । आभिप्रायिकत्वाच्च पक्षधर्मतागोचरः । इच्छादयः[5] परतन्त्रा गुणत्वादित्यत्र पुनरात्मा नाभिप्रायव्याप्तः ।

---

१. लगति J　२. द्रः वै. सू. १.१.८　३. न्तरविषयः BA　४. सकर्तृकत्व° BM
५. °दयस्तु B

न हीच्छादीनां [1]क्षित्यादिपारतन्त्र्यमसंभावितम् , अपि तु [2]मानसप्रत्यक्षवेद्यत्वादिभिः बाधितम् । धूमगतनीलत्वेनेव[3] धूमस्यापालालत्वम् । तस्मादुभयथापि संभवादात्मा [4]नैवाभिप्रायव्याप्तः, तद्व्याप्तत्वाच्च न पक्षधर्मता [5]तमङ्कमारोपयितुमर्हति, अपि त्विच्छासंबद्धपरमात्रमादायैव निवर्तते । एतदुत्तरकालं क्षित्यादौ बाधिते तदन्यासिद्धौ विधायकप्रमाणाभावान्निषेधमुखेन व्यतिरेकी प्रवर्तते । तमिमं विशेषं हृदि निधायोक्तम्—**बाधकैरपनीते द्रव्याष्टकगुणत्व** इति ॥

ननु सामान्यतोदृष्टाद् यद्रूपं सिद्धम्, न तत् केवलव्यतिरेकिणा साध्यम् । यादृशं च तेन साध्यम्, तादृशं न क्वचित् सिद्धम् । तथा चाप्रसिद्धविशेषणः पक्षः । न च तथाभूते सन्देहोऽपि कारणाभावात् । समानासमानधर्मविप्रतिपत्तीनामनुपलब्धचराविषयत्वादित्यत[6] आह—**यद्यपि चायमिति** । **स्वरूपेण** असाधारणरूपेणेत्यर्थः ॥

न हि वाक्यार्थस्यापूर्वतया पदार्थानां विशेषणविशेष्यभावो विहन्यते । तथा सति, अन्वयिनोप्यनुत्थानमिति प्रलीनमनुमानेन । न च द्रव्याष्टकातिरिक्तादिपदार्था एवापूर्वे, येनाप्रसिद्धविशेषणता स्यात् पक्षस्य । न चैवं सति शशशृङ्गधनुर्धरादावपि प्रसङ्गः, तत्रापि पदार्थमात्रप्रसिद्धेः सर्वत्र सुलभत्वादिति वाच्यम् । सामान्यतोदृष्टपूर्वकत्वनियमसीमायाः दुर्लङ्घ्यत्वात् । अन्यथा सामान्यतोऽप्यसिद्धः कथं निष्प्रमाणकशब्दसामर्थ्यमात्रमाश्रित्य परामृश्येत । अपरामृष्टश्च कथं प्रमाणव्यवहारमवतारयेत् । तदिदम् उक्तम्—**अदूरविप्रकर्षेण परामृष्ट** इति । विशेषसिद्धेः सामान्यसिद्धिरदूरविप्रकर्षः, तदसिद्धिस्तु तद्विपर्यय इत्यर्थः ॥

एवं च संशयोऽप्यत्र वादिविप्रतिपत्तेरेव सुगमः, इच्छादीनामुभयवादिसिद्धे सामान्यतोऽधिकरणे द्रव्याष्टकातिरिक्तानतिरेककोट्योरुभाभ्यां[7] समुत्थापनात् । अथवा प्रत्येकोत्थितः संशयः समुदाये विश्राम्यतीति न्यायः । तथा हि गुणत्वं पृथिव्याश्रिते गन्धादौ, तदतिरिक्ताश्रिते स्नेहादौ च दृष्टम्, इच्छादिषु च दृश्यते । तत् किमिच्छादयः पृथिव्याश्रिता, उत तदतिरिक्ताश्रिता इत्यनेनाकारेण[8] सर्वद्रव्येषु भवन् सन्देहः समानधर्मदर्शनादेव द्रव्याष्टकतदतिरिक्तकोट्योरेव पर्यवसितो भवति । तदिदमुक्तम्—**धर्मिणि चेत्यादि** ॥

१. पृथिव्यादि° MBvar २. मानसवेद्यत्वादि° BJ ३. °नेव धूमस्य B
४. एव om BM ५. तमङ्कमारोहयितु° M ६. चर[गोचर B var]त्वात् B
७. °रिक्तानतिरिक्तकोट्यो° A ८. इत्यनेन कारणेन M

विभागवचनादेवेत्यादिभाष्यवक्रव्याख्यायाः[१] शङ्कापोषणे तात्पर्यम्। ननु सदसती तत्त्वमित्यत्र सदसच्छब्दाभ्यां भावाभावावुक्तौ। तदिह वर्तमानावर्तमानार्थत्वव्याख्यानं तद्विरुद्धमपि कुत उपादीयत इत्यत आह—**प्रत्यक्षं हीति**। अथ तथैव किं न स्यादित्यत आह—**यद्यपीति**। **न विशेषणत्वं स्वातन्त्र्येण** स्वातन्त्र्याभिधानेनेत्यर्थः। आहो न्यायोप्यस्तीत्यस्याक्षरार्थेन नञः संबन्धानुपपत्तेः, तात्पर्यार्थेन संबन्धमाह—**न सन्देह** इति। न्यायाभावेन हि[२] तर्कस्य निश्चयापर्याप्तौ सन्देहस्तदवस्थ इत्याशङ्कितम्, अतस्तन्निषेध एवोत्तरं युक्तमिति। **अस्त्येव न्यायः**, सन्देहविरोधिनिश्चयसमर्थो यत इति शेषः। निमित्तत्वं यदि विषयत्वं तन्नात्मनि दृष्टान्ते। अथोपादानत्वम्, न तत्साध्ये समवाय इत्यत आह—**निमित्तत्वं कारणत्वमिति**॥

ननु व्यापकत्वं परममहत्परिमाणयोगः, सर्वसंयोगिसमानदेशता वा। तदुभयमपि समवाये न संभवतीत्यत आह—**सत्युपलब्धीति**। उपलभ्यतेत्युच्यमाने घटादेरपि व्यापकत्वप्रसङ्गः। अत उक्तं **सर्वत्रेति**। देशस्यावच्छेदकतामात्रेण सप्तम्या निर्देशो वने सिंहनाद[३] इतिवत्। तथाप्यसिद्धं लक्षणम्, न ह्यात्मादयः सर्वत्रोपलभ्यन्ते इत्यत उक्तम्—**सत्युपलब्धिकारण** इति। तथापि विषयस्याप्युपलब्धिकारणत्वाद् यत्र यत्र घटादिपरमाणवन्ताः स्वोपलब्धिसामग्रीसहिताः, तत्र तत्रोपलभ्यन्त एवेति तैरेव व्यभिचार इत्यत उक्तम्—**अन्तरेति**। एतच्च द्रव्यरूपकारणान्तराभिप्रायेण द्रष्टव्यम्। अन्यथा यत्र घटादयो न सन्ति, तत्र ततोऽन्यस्य तदुपलब्धिकारणस्य तदिन्द्रियसंयोगस्याभावादेव तेषामनुपलम्भः, तत्सद्भावे तु सर्वत्रोपलम्भ एव[४] इत्येतदप्याशङ्क्येत। तथापि परमाण्वादिगुणैरेव यावद्द्रव्यभाविभिराश्रयाधीननिरूपणैर्व्यभिचारः, तन्निवृत्त्यर्थमनेकसंबन्धित्वे सतीति द्रष्टव्यम्। एतच्च सर्वत्रेत्यनेन **टीकाकृता** सूचितम्। यद्यपि च सर्वत्रास्तित्वं व्यापकत्वम्, तथापि लक्षणमन्तरेण तद् दुरवबोधमिति[५] तदेवोक्तमिति। न्यायेतिकर्तव्यताभूतं तर्कं पृच्छति। कर्त्रा अव्यापार्यमाणस्य करणस्य स्वयं व्यापारायोगादित्याशयवानिति भावः॥

अथोक्तमनवस्थानप्रसङ्गमवतारयितुं किमित्यनाधारत्वप्रसङ्ग उच्यते, यावता स्वतन्त्र एवायं प्रसङ्गः किं न स्यात्? न हि कार्यस्यानाधारत्वमस्येष्टमेवेत्यत आह—

---

१. °पंक्ति° B, °वक्तृ° M, वक्र° Prakāśa २. हि om BM, अनवस्थारूपस्य added B var. ३. इति om J ४. एव om B. ५. तत् om J

**स्यादेतदिति । पश्चात्** तुर्या संयुक्त इति शेषः । न [1]ह्युत्पन्नोऽप्यसंयुक्त एव तुर्या प्रथमे क्षणे पट इति कस्यचिन्निश्चयः, अथ च प्रमाणबलादिष्ट एवायमर्थः, तथोत्पन्नोऽपि प्रथमे क्षणे तन्तुष्वसमवेत एवेष्यत इति पादौ प्रसार्य तिष्ठतो नेदमुत्तरमित्यर्थः । तस्मादनवस्था-प्रसङ्गावतारणायैवेदमुक्तमित्याह—**समवायश्चेतीति** । [2]यद्यप्युपाधिकथनेनैव वृत्तिमत्त्वस्य प्राप्तिधर्मत्वं निराकृतम्, तथापि प्राप्तित्वस्यानैकान्तिकत्वसूचनाय पुनरप्यनवस्थाप्रसङ्गमव-तारयति—**अथेति** । अनवस्थाभिया अवश्यमन्ततः काचित् [3]प्राप्तिश्च न च वृत्तिमतीति स्वीकर्तव्यम्, ततश्च तथैव प्राप्तिमत्त्वमनैकान्तिकमित्यर्थः ॥

अथानवस्थास्वीकारे को दोष इत्याशङ्क्य निराकरोति—**नन्वियमिति** । अनादितायां ह्यङ्कुरोत्पादानुगुणसमयसंभविना बीजेन जनितेऽङ्कुरे वर्तमानमङ्कुरत्वम्, तस्य बीजपूर्वकत्वम् बीजोत्पादानुगुणसमयसंभविना चाङ्कुरेण जनिते बीजे वर्तमानं बीजत्वं तस्याङ्कुरपूर्वकतामवगमयतीति युज्यते, अविकलस्य हेतोः प्रमाणस्य विद्यमानत्वात् । इदंप्रथमतायां तु कार्योत्पादानुगुणसमये भविष्यत्प्रवाहस्यासत्त्वात् प्रथमस्यानुत्पादे तदाश्रयस्य हेतोस्तस्मिन्नसत्याश्रयासिद्धतया सर्वस्यागमकत्वे प्रमाणाभाव इत्यर्थः ॥

अभ्युपेतकणादासत्त्वस्य **शास्त्रविरोधश्चेत्यादि** । [4]कार्यमकृतकसंबन्धवदिति प्रतिज्ञायां घटादेर्भूतलादिनाप्यकृतक एव संबन्धः स्यात्, स चानिष्ट इति प्रतिज्ञां विशिनष्टि[5]—**स्वोपादानेनेति** । स्वसमवायिनेत्यर्थः । कार्यमिति च समवेतमात्रोपलक्षण-परम्, अन्यथा जात्यादिषु विपक्षेषु संभवे हेतोर्विरोधः स्यात् । अथवा[6] प्रतिज्ञा यथा-श्रुतैव, आधारवत्त्वादित्यत्राधारशब्देन नाश्रयमात्रं विवक्षितम्, किं त्वधिकरणं कार-कम् । तेनाधिकरणकारकवत्त्वाद् इत्यर्थः । न च वाच्यम्—कारकवत्त्वमात्रेणैव पर्याप्तौ किमधिकरणग्रहणेनेति, प्रध्वंसेन विरोधप्रसङ्गात् । **न कार्यस्य** कार्यः संबन्ध इत्यर्थः । **मिथः संबध्येते** । आधार्याधारभावेनावतिष्ठेते[7] इत्यर्थः । सोऽपि समवाये नास्ति समवायान्तराभावादित्यर्थः । सन्नप्यसौ न कार्यमाधारवत् करोति, स्वसमवायेनैव तस्याधार-वत्त्वात्, तदभावे त्वेकार्थसमवायोऽपि न स्यादित्यर्थः । सहोत्पादे कार्यमनाधारं स्यात् । सर्वदेति शेषः । समवायिकारणाभावेऽसमवायिकारणशङ्कापि नास्ति, तत्प्रत्यासन्नस्व-भावत्वात्[8] तस्येत्यभिप्रायवता तदुपेक्ष्य निमित्तमात्रादुत्पत्तिराशङ्क्य निराकृता ॥

---

१. ह्युत्पन्नोऽन्य MB var. २. अपि om B. ३. प्राप्तिर्न वृत्ति° MB var ४–५. om A ६. अस्तु वा Prakāśa ७. °ऽवतिष्ठते B var, Prakāśa ८. °स्वभाव° om MB var

ननु विधीयमाननिषिध्यमानव्यतिरेकेण जगति न स्वतन्त्रो नाम। तत् कथं धर्मस्त्रैविध्यमित्यत आह—**अत्र चेति**। **विधीयमानो** वर्तमान इत्यर्थः। **प्रतिषिध्यमानः** अवर्तमान इत्यर्थः। तत्र ये वर्तमानाः, तेषां कश्चित् परतन्त्रो वृत्तिमानित्यर्थः। कश्चित् स्वतन्त्रो[1] वृत्तिरहित इत्यर्थः। प्रतिषिध्यमानास्तु[2] परतन्त्रा न सन्ति, असत्त्वादेव[3] इति। तदेवं विधीयमानः स्वतन्त्रो विधीयमानः परतन्त्रः प्रतिषिध्यमानः स्वतन्त्रश्चेति तिस्रो विधा इत्यर्थः। तदेवमवर्तमानो धर्मः प्रतिषिध्यमानतयैव व्यवह्रियते, न चासौ प्रत्यक्षविषयः, किं त्वनुमानविषय इति दर्शितम्। तच्चानुपपन्नमिति शङ्कावार्त्तिकार्थम् आह—**नन्विति**। असन्नित्युद्देश्यम्। तेनायमर्थः, असन्नवर्तमानो न केवलं प्रतिषेधव्यवहारविषयः, किं तु विधीयमानोऽपि, विधिव्यवहारविषयोऽपि। एवमसौ न केवलम् अनुमानविषयः, प्रत्यक्षश्च। क्वचित् प्रत्यक्षविषयश्चेत्यर्थः। क्वेत्यत आह—**यथेति**। कथमसौ विधीयमान इत्यत आह—**जायमान** इति। कथमसौ प्रत्यक्षविषय इत्यत आह—**विस्फारितेति**। कथमसाववर्तमान इत्यत आह—**न चासाविति**। असत्तया सत्तया वानभ्युपगमादिति सत्ताया जायमानतया विरोधात्, असत्तया विधिविषयतयेति भावः। कथं नाभ्युपगम्यते न हि सत्तासत्ताभ्यामन्यः प्रकारोऽस्तीत्यत आह—**निषेधविषयतया त्विति**। विधीयमानतापक्षे हि जायमानताभ्युपगमे उभयथापि विरोधो, न तु प्रतिषिध्यमानतापक्षेऽपीत्यर्थः॥

तस्मात् जायमाने घटे न विधायकप्रत्यक्षप्रवृत्तिः, विरोधात्। निषेधकं तु प्रत्यक्षं प्रवर्तमानमपि तन्निषेधमेव गोचरयेत्, न तु निषेध्यं घटम्। ततः सिद्धो विषयभेद इति सारम्। **उपपादनीय** इति सत्कार्यवादमपनीय। **अपरे त्विति**। **अर्थातिरेकमात्रम्**। अर्थपदातिरेकमात्रम्। एवमुत्तरत्रापि॥

ननु केनैतदुक्तम्, यदुभयपदव्यभिचार एव [4]विशेषणसमासो भवतीत्यत आह—**विशेषणमिति**। ननु तथाप्युभयोरपि पृथिवीद्रव्यशब्दयोरुभयवाचित्वात् कथं विशेषप्रतिपत्तिरित्यत आह—**न चेति**। न हि भवति पृथिवीत्वं द्रव्यत्वमित्युपलक्षणम्। पृथिवीत्वं द्रव्यम्, द्रव्यत्वं च पृथिवीत्यपि न भवतीत्यपि द्रष्टव्यम्। न च नान्तरीयकार्थशब्दयोरपीयमेव गतिरस्त्विति वाच्यम्, अनियमप्रसङ्गात्। नान्तरीयकत्वार्थयोरपि सामानाधिकरण्यादर्थत्वनान्तरीकयोरपीति। ततस्तद्व्यवच्छेदार्थं पुनरपि प्रयत्नान्तरमास्थेयम्॥

---

१. B ends here   २. °श्च A   ३. एव om M   ४. विशेषण° om A

तस्मादनेकार्थत्वेऽपि विशेषपर एवायं नान्तरीयकशब्द इत्यकामेनाप्यभ्युपेयम्[1]। तथा च पूर्वदूषणानतिवृत्तिरिति। ननु अनियतप्रसरेणासति नास्तीति सहितेनेष्टलाभो यद्यपि तथापि सर्वथा सपक्षावृत्तिरसाधारणोऽपि निवर्तयितव्यः, न हि पक्षव्यापको विपक्षे च [2]नास्त्येवैतावतैव तस्य निराकरणम्, तस्याप्येवंभूतत्वात्। तस्मात् तत्तुल्ये सद्भाव इति कर्तव्यमेवेत्याशङ्क्याह—**प्रसक्तमप्रतिषिद्धमनुमतमेवेति**। प्रसक्तस्य प्रतिषेधादुपादाने तद्विपरीतस्य हानमर्थायातमित्यर्थः। न चासंभवोऽपि प्रसक्तो, येनानिषेधात् तस्याप्युपादाने तद्विपरीतहानं संभाव्येत। प्रथमे पदे संभवस्य विधेयत्वेन इवासंभवस्य निषेध्यत्वेनानुपादानादिति। **समुच्चीयमानेत्यादि** वैचित्र्येण हि निपातसंबन्धे वाक्यभेदप्रसङ्गः, अथैकवाक्यत्वमिच्छन्नवैचित्र्येणैव निपातसंबन्धमिच्छेदित्यर्थः। एतदेवानूद्यमानसमुच्चयमाशङ्क्यमानः स्फुटयति—**न चेति**। उदितं ह्यनूद्यते, नत्वनुदितम् न चोभयत्वविशिष्टं हविरुदितम्। किं तु हविर्मात्रम्। तथा चानुवादपक्षे[3] उभयत्वमविवक्षितम्। उभयत्वविवक्षायां तु नायमनुवादः, किं तु वाद एव। तथा च वाक्यभेदः। एवं दार्ष्टान्तिकेऽपि यदि साध्यायोगव्यच्छेदविशिष्टो हेतुरुदितः, युक्तमिदानीं [4]यत्तथासावनूद्यते, न त्वेतदस्ति। हेतुमात्रं [5]त्वविशिष्टमुद्दिष्टम्। विशिष्टस्य तु तस्यायमेव प्रथमो वादावतारः। तद्यदि यस्येत्ययमनुवादो, नूनमनुमेये सद्भाव एवेत्यविवक्षितं विशेषणम्, विवक्षिते तस्मिन्ननेनैव वाक्येन विशिष्टो वादः कर्तव्यः। पश्चादिदमेवावृत्त्यानुवाद इति वाक्यभेद इत्यर्थः। सोऽयं [6]प्रयत्नान्तरीयस्थानशब्दस्यार्थः॥

ननु यद्यनूद्यमानमशक्यं [7]विशेष्टुम्, अथार्तिरपि कथं हविषा विशेष्यत इत्यत आह—**अत्र हि यद्यपीति**। अनन्यगतिकत्वात् प्रासेन हविषा विशेषणमार्तेः। उभयत्वस्य तु न पूर्वप्रासत्वम्, नापि तदन्तरेणार्तिरशक्यप्रतिपत्तिः, साध्यायोमन्यवच्छेदः अपि हेतोरीदृश इत्यर्थः। यद्येवमुभयवचनं किमर्थमित्यत आह—**प्रतीयमानमपि उभयत्वमविवक्षितम्**। विशेषणतयेति शेषः॥

अयं वाक्यार्थः। आर्तिविशेषणतया हविस्तावदुपादातव्यम्, तस्य चाज्यपुरोडाशाद्यनेकरूपत्वादुभयत्वमप्यस्तीति प्रायिकतया तदप्युपात्तम्। तेनेदं सिद्धं भवति, एकमनेकं वा हविर्यस्यार्तिमाच्छेदित्यादि। उभयत्वविवक्षापक्षे तु नैकैकहविरार्तौ प्रायश्चित्तविधिः स्यादिति दोषः॥

---

१. नाप्युपेयम् M २. नास्तीत्येता° M ३. °वादमात्रो M ४. योऽसावनू° M ५. ह्यविशिष्ट° M ६. °त्नान्तरास्थान° JA ७. विशेषं तदार्तिं M

न चैवमस्त्विति वाच्यम् , वाक्यभेदप्रसङ्गस्य तादवस्थ्यादिति । न चानुमेये सद्भाव एव, तत्तुल्य एव सद्भाव इति वाक्यद्वयमेवेदमुभयविधायकमस्तु, को दोष इति वाच्यम् , त्रिरूपसंपन्नस्य हेतुरूपस्यैकस्यार्थस्यालाभप्रसङ्गात् । वाक्यभेदे ह्यवश्यमर्थभेद इति न्यायात् । शङ्कते—**अथेति** । अवान्तरवाक्यभेदेऽपि महावाक्यस्यैकत्वात् , विवक्षितैकार्थप्रतिलम्भ इति शङ्कार्थः ॥

अत्र नैयायिकसमाधानमाशङ्क्य बौद्धः स्वभाषया निराकरोति—**न चेति** । यद्यपि तत्तुल्य एवेत्यन्ययोगव्यवच्छेदस्य विपक्षमात्रविषयत्वं तदा स्याद् यदि विषयान्तर-संकोचः स्यात् , स च तदेकवाक्यतयेति परस्पराश्रयदोषः । अन्यथोभयोरपि तत्तुल्या-न्यत्वाविशेषे विपक्षयोगस्य व्यवच्छेदो न त्वनुमेययोगस्येति कुतः ? विहितत्वात् तस्येति चेत् ? अत एव विरोधादेकवाक्यत्वासङ्गतिरित्युच्यते, यस्मात् तदेकवाक्यतायामेव सत्यां विपक्षमात्रविषयत्वमस्य वक्तुं शक्यते । सापि तस्मिन् सत्येवेति दुरुत्तरदोषापत्तिः । तथापि बौद्धनये[१] शाब्दं व्यवहारमाश्रित्य समुच्चय एव न निर्वहेत् , कृतमनया विरोधे सूक्ष्मेक्षिकयेत्याशयवानाह—**अन्यापोहेति** । सोऽयं [२]साधारणोऽपि न्यायोऽप्रस्तुतत्व-भिया विशेषनिष्ठतयावतारित इति ॥५॥

॥ भाष्यम् ॥

अथोपमानम्—

**प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम् ॥१।१।६॥**

प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरेवं गवय इति । किं पुनरत्रोपमानेन क्रियते ? यदा खल्वयं गवा [३]समानधर्मं प्रतिपद्यते, तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति । समाख्यासम्बन्धप्रतिपत्तिः उपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा [४]समानधर्माणम् अर्थमिन्द्रियार्थसन्निकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते इति । यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा [५]माषपर्णीत्युप-माने प्रयुक्ते उपमानात्संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं[६] भैषज्याय आहरति । एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ॥६॥

---

१. बौद्धनयेऽपि M २. साधारणे BM ३. समानमर्थं धर्मं पश्यति J
४. समानमर्थमि° J ५. माषस्तम्बस्तथा J ६. °स्तां तामो° J

॥ वार्त्तिकम् ॥

अथोपमानम् । **प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्** ॥ सूत्रार्थः पूर्ववत् । **प्रसिद्धसाधर्म्यादिति** । प्रसिद्धं साधर्म्यं यस्य, प्रसिद्धेन वा साधर्म्यं यस्य[1], सोऽयं प्रसिद्धसाधर्म्यो गवयः । तस्मात् **साध्यसाधनमिति** । **समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः** । किमुक्तं भवति ? आगमाहितसंस्कारस्मृत्यपेक्षं सारूप्यज्ञानम् उपमानम् । यदा ह्यनेन श्रुतं भवति **यथा गौरेवं गवय** इति, प्रसिद्धे गोगवयसाधर्म्ये पुनर्गवयसाधर्म्यं पश्यति प्रत्यक्षम् । ततस्तस्य[2] भवत्ययं गवय इति समाख्यासंबन्धप्रतिपत्तिः[3] ॥

प्रत्यक्षागमाभ्यां नोपमानं भिद्यते । कथमिति ? यदा तावुभौ गोगवयौ प्रत्यक्षेण[4] पश्यति, तदायमनेन सरूप इति प्रत्यक्षतः प्रतिपद्यते । यदापि शृणोति यथा गौरेवं गवय इति तदास्य शृण्वत एव बुद्धिरुपजायते । केचिद् गोधर्मा गवयेऽन्वयिन उपलभ्यन्ते, केचिद् व्यतिरेकेण इति । अन्यथा हि यथा [5]तथेत्येतन्न स्यात् । भूयस्तु सारूप्यं गवा गवयस्य इत्येवं प्रतिपद्यते । तस्मात् नोपमानं प्रत्यक्षागमाभ्यां भिद्यते इति ॥

गवा [6]गवयसारूप्यं प्रतिपद्यते गवयसत्तां वेत्यहो प्रमाणाभिज्ञता भदन्तस्य । गवा गवयसारूप्यप्रतिपत्तेस्तु संज्ञासंज्ञिसंबन्धं प्रतिपद्यत इति सूत्रार्थः । तस्मादपरिज्ञाय सूत्रार्थं यत्किञ्चिदुच्यते ॥६॥

॥ टीका ॥

विभागसूत्रे अनुमानानन्तरमुपमानस्योद्देशाद् यथोद्देशं च लक्षणादनुमानलक्षणानन्तरमुपमानलक्षणमाह—**अथोपमानमिति भाष्यम्** । सूत्रं पठति—**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्** । अत्रापि यत इत्यध्याहार्यम् । सिद्धिः साधनम् । तदेतद् **भाष्यकारेण** व्याख्यातम् । **प्रज्ञातेन** प्रसिद्धेन । गवा साधर्म्यात् **सामान्याद्** गवयस्य । साधर्म्यं च सामान्यमभिदधता न सामान्यातिरिक्तं सादृश्यं [7]नाम पदार्थान्तरमस्तीत्युक्तं भवति । साधर्म्यं चाप्रसिद्धं न [8]साध्यसाधनायालमिति साधर्म्यप्रसिद्धिरपि द्रष्टव्या । सा च यथा गौस्तथा गवय इत्याप्तवाक्यात् । तदिदमुक्तम्—**यथा गौरिति** । साध्यसाधनपदव्याख्यानम्—**प्रज्ञापनीयस्य** गवयशब्दवाच्यतया

१. यस्य गवयस्य J २. गवा साधर्म्यं पश्यतोऽस्य C ३. °संबन्धं प्रतिपद्यते J
४. प्रत्यक्षेण om C ५. तथेत्येव C ६. °सादृश्यं C ७. नामार्था° C ८. साध्य° om J

प्रत्यक्षदृश्यमानगोसादृश्यस्य गवयत्वसामान्यविशेषवतः पिण्डस्य **प्रज्ञापनमुपमानम्** । पिण्डस्य हि गवयशब्दवाच्यतां पुरुषोऽतिदेशवाक्यस्मरणसहकारिणः प्रत्यक्षाद् गवयगताद् गोसादृश्यात् प्रजानन् तेन प्रज्ञाप्यत इति प्रमाणस्य व्यापारः प्रज्ञापनमुक्तमिति । तत्र **वार्त्तिककारः** प्रथमं तावत् सूत्रतात्पर्यमाह—**सूत्रार्थः पूर्ववत्** । समानासमानजातीयव्यवच्छेद इत्यर्थः । साध्यसाधनमित्युच्यमाने प्रत्यक्षादिसाधनेषु[1] सुखदुःखसाधनेषु प्रसङ्गः । अत उक्तं **प्रसिद्धसाधर्म्यादिति** । यद्यपि प्रसिद्धसार्म्यमुपमानमित्युच्यमाने प्रमाणविशेषाभिधाय्युपमानपदसामानाधिकरण्यात् [2]करणत्वलाभः, तथापि तदाभासनिराकरणाय साध्यसाधनपदोपादानम् । तेनोपमानाभासमपाकृतं भवतीति ॥

अवयवार्थं विभजते—**प्रसिद्धेति** । **वार्त्तिककारेण** बहुव्रीहिद्वयसंभवो दर्शितः, न तु तृतीयासमासो **भाष्यकारीयो** निरस्तः । **भाष्यकारेण** हि संज्ञितया [3]गवयप्रतिपत्तिः फलं साध्यसाधनपदवाच्यमुक्त्वा, आक्षिप्तप्रयोज्यव्यापारत्वात् । प्रयोजकव्यापारस्य प्रज्ञापनस्य पश्चात् निष्कृष्याभिधानं कृतम्—**समाख्यासंबन्धप्रतिपत्तिरुपमानार्थ** इति । एतदेव साध्यसाधनपदार्थतया **वार्त्तिककारो** व्याचष्टे—**समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः** फलम् । साध्यशब्देन[4] समाख्यासंबन्ध उच्यते । तस्य साधनं सिद्धिः प्रतिपत्तिरिति । ननु प्रतिपद्यतामयं गोसादृश्ययुक्तं गवयम् । समाख्यासंबन्धप्रतिपत्तिस्तु कुतस्त्या ? न हि यो यत्सदृशं यं प्रतिपद्यते, स तस्य समाख्यामप्यवगच्छति इत्याशयवान् पृच्छति—**किमुक्तं भवति** । उत्तरम्—**आगमेति** । आगमानुभवाहितात् संस्कारात् स्मृतिः । एतदुक्तं भवति, न केवलं सारूप्यज्ञानं समाख्यासंबन्धप्रतिपत्तिहेतुः, अपि त्वागमार्थस्मृत्यपेक्षमिति । नन्वसत्यागमानुभवे कुतः स्मृतिरित्यत आह—**यदा ह्यनेनेति** । प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिरुभयी [5]श्रुतमयी प्रत्यक्षमयी च । श्रुतमयी यथा गौरेवं गवय इति । प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टोऽयमीदृशः पिण्ड इति । तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासंबन्धप्रतिपत्तिहेतुः । यद्यपि यथा गौरेवं गवय इत्येतस्मादपि गोसदृशस्य [6]गवयशब्दः समाख्येति शक्यमवगन्तुम् , न खलु प्रत्यक्ष एव संज्ञाकर्म, समानजातीयव्यवच्छिन्ने हि तद्भवति । तच्च यदि मानान्तरेणापि तथावगम्यते, कस्तत्र[7] संज्ञाकर्म निवारयेत् ? गोसादृश्येन चोपलक्षितः पिण्डो य इति सर्वनाम्ना परामृष्टः शक्यो घटादिभ्योऽसमानजातियेभ्यो [8]महिषादिभ्यश्च

---

१. °साधने सुख° साधने घटे C २. कारकत्वलाभः C ३. °प्रतिपत्तिं J
४. पदेन C ५. श्रुतिमयी C ६. गवयः समा° J ७. कस्तत्र om C ८. महिष्यादि° J

समानजातीयेभ्यो व्यवच्छिन्नोऽवगन्तुं गवयः, तथापि यावदयमसौ गवय इति साक्षात् प्रतीते संबन्धिनि संज्ञां न निवेशयति, तावदयं परिप्लुतमतिः प्रमाता [1]कच्चित् खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञां प्रतिपत्स्य इति प्रमोत्सुक एवोदीक्षते । न चासौ वाक्यमात्रसहायोऽप्रत्यक्षीकृतगोसदृशगवयत्वजातिमत्पिण्डोऽसौ[2] गवयाख्य इति प्रतिपत्तुमर्हति । न च वाक्यं विना प्रत्यक्षमात्रात् । तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदम् आगमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम् ॥

ननु यदोदीच्येन क्रमेलकं निन्दतोक्तम् , धिक् करभमतिदीर्घवक्रग्रीवं प्रलम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति, तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ [3]इति प्रत्येति, तत् कतमदेतेषु प्रमाणम् ? न तावदुपमानं साधर्म्याभावात् । नापि पञ्चमं प्रमाणमुपगम्यते । यद्युच्येत निन्दापरं वाक्यं करभस्य तादृशत्वे न प्रमाणम् ; न ह्यन्यपरात् शब्दादन्यस्यावगम इति । यत्र तर्हि तादृक्त्वे पर्यवस्यति वाक्यं तत्र का गतिः ? अथ तत्रापि तादृक् करभ आगमावगतः प्रत्यक्षेण प्रत्यभिज्ञायते, करभशब्दवाच्यता तु तस्य तत्पूर्वं तादृक्करभपरत्वे अप्यागमस्य प्रयोगमात्रादवगता अनुमानात् । यो हि यत्र प्रयुज्यते शब्दोऽसति वृत्त्यन्तरे स तस्य वाचकः, यथा गोशब्दो गोत्वे । प्रयुक्तश्चायं तादृशि । तस्मात् तस्य वाचक इति । तदिदं प्रागेव प्रयोगानुमितं वाचकत्वमस्य प्रत्यक्षसमये केवलं स्मर्यते इति । समानमेतत् [4]उपमानवाक्येऽपि । तत्रापि वाक्यादवगतः साधर्म्यवान् पिण्डः प्रत्यक्षेण प्रत्यभिज्ञायते । प्रयोगानुमितं च [5]गवयपदस्य वाचकत्वं स्मर्यते इति न फलान्तरमवशिष्यते यत्रोपमानं [6]प्रमाणमिति ॥

अत्रोच्यते । न तावदाकाशादिशब्दवदेष गवयशब्दः साक्षात् पिण्डस्य वाचकः, किं तु गवयत्वं निमित्तीकृत्य पिण्डे वर्तते इति परमार्थः । न च यथा गौरेवं गवय इति वाक्याद् गवयत्वमवगतम् , न ह्यनवगतसंबधं [7]गवयपदमेतदवबोधयति । ततस्तदवगमात् तु संबन्धवेदने परस्पराश्रयप्रसङ्गः । न च गोसादृश्येनोपलक्ष्यते गवयत्वम् । न खल्वनुपलब्धचरेण गवयत्वेन गोसादृश्यं संबद्धं दृष्टम् । न चादृष्टसंबन्धम् उपलक्षकम् । न हि पुरुषेणादृष्टसंबन्धो दण्डः पुरुषमुपलक्षयितुमर्हति । तस्मात् [8]संबन्धिनो गवयत्वस्य सर्वथानुपलब्धेः कुतो वाक्याद् वा अनुमानाद् वा वाच्यवाचक-

---

१. कञ्चित् C २. गवयपिण्डमसौ C, गोसदृशो पिण्डेऽयमसौ C var ३. इत्यवैवि C ४. अपवादवाक्ये C ५. गययशब्दवाच्यत्वं C ६. प्रमाणान्तरम् C ७. पदमवधारयति C ८. संज्ञिनो J

संबन्धावसायः[1] ? कुतस्तरां च संबन्धस्मृतिः ? गवयत्वसामान्यविशेषवति तु पिण्डे प्रत्यक्षे युक्तः संबन्धावगमः, संबन्धिनो गवयत्वस्य प्रत्यक्षत्वात् [2]वाक्यार्थस्य च स्मर्यमाणत्वात्। तथापि किं गवयत्वजातिमान् पिण्डो वाच्यः, उत [3]गोसादृश्यवानिति कुतो विनिगमनेति चेत् ? वाक्यार्थस्मरणसहकारि गवयत्वजातिमतः पिण्डस्य गोसादृश्यदर्शनमेव तर्कसहायं गवयत्वाभिधाने प्रमाणम्। तर्कश्च गोसादृश्यविशिष्टपिण्डाभिधाने कल्पनागौरवप्रसङ्गः तथा हि सादृश्यविशिष्ट पिण्डाभिधाने, नाप्रतीतं सादृश्यं पिण्डं विशिनष्टीति तत्प्रतिपत्तव्यम्। न च शब्दादन्यतस्तदवगम इति शब्दस्य तत्र वाचकत्वं कल्पनीयम्। न चाविशिष्टं सादृश्यमपि पिण्डविशेषे गवयपदम् अवस्थापयितुमर्हति, यस्य कस्यचिद् येन केनचित् सह सादृश्यादिति तदपि गवा विशेषणीयम्। न चान्यतो गोत्वस्यापि प्रतिपत्तिरिति तदपि गवयपदेनाभिधातव्यम् इति कल्पनागौरवम्। गवयत्वजातिमत्पिण्डाभिधाने तु लाघवमिति तदनुजानाति। साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति करभसंज्ञाप्रतीतिफलमप्युपमानमेवेति नाव्याप्तिः। नापि पञ्चमप्रमाणाभ्युपगमः। अतएव बहून्युदाहरणान्युक्त्वाप्याह स्म **भगवान् भाष्यकारः, एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य** इति। तस्मात् सर्वं चतुरस्रम् ॥

तदीदृशमुपमानफलमविद्वान् सादृश्यविशिष्टवस्तुज्ञानं चोपमानफलमिति भ्रान्तो भदन्तो **दिग्नाग** आक्षिपति—**प्रत्यक्षेति**। पृच्छति—**कथमिति**। उत्तरम्—**यदा ताविति**। उपलक्षणं चैतत्, उभौ प्रत्यक्षेण पश्यतीति। यदा तु गवयमेकं प्रत्यक्षेण पश्यति, स्मरति च गाम्, तदापि गोसादृश्यं गवयस्थं प्रत्यक्षमेव। गगोस्थमप्रत्यक्षम्, अप्रत्यक्षत्वाद् गोरिति चेत् ? हन्त भोः किमभिमतं सादृश्यमायुष्मतो यदप्रत्यक्षायां गवि न प्रत्यक्षम् ? सामान्यबाहुल्यं जात्यन्तरवर्ति जात्यन्तरस्य। यथाहुः,

सामान्यान्येव भूयांसि गुणावयवकर्मणाम्।
भिन्नप्रधानसामान्यवृत्ति[4] सादृश्यमुच्यते ॥

इति चेत् ? तत् किमिदानीं कर्णत्वादिसामान्यं गोगवयगतकर्णादिभेदेन भिन्नमित्यपि वक्तुमध्यवसितोऽसि ? तस्माद् यथा कालाक्ष्यां गवि गोत्वमीक्षितवतः स्वस्तिमत्यां प्रत्यभिज्ञायमानं तदेवेदमिति, एतदेव तदित्यवगतं भवति, तथेहापीति न फलातिरेकः। तस्मात् न सादृश्यप्रतीतिफलमुपमानं प्रत्यक्षाद् वाक्याद् वा व्यतिरिच्यते

१. °अवगमः C २. वाक्या° त्वात् om C ३. न चादृष्टगो° C ४. त्यव्यक्तं C

इति सूक्तम् । **भदन्त**भ्रान्तिमुद्घाटयति—**गवेति** । **गवयसत्त्वं** सादृश्यविशिष्टम् इत्यर्थः । अर्थतत्त्वमुक्तं स्मारयति—**गवयेति** । उपसंहरति—**तस्मादिति** । प्रयोगस्तु, प्रत्यक्षादिभ्यः प्रमाणान्तरमुपमानम्, तज्जन्यप्रमाविलक्षणप्रमाजनकत्वात् । यदि तु न तेभ्यो विलक्षणमभविष्यद् न तद्विलक्षणां प्रमामकरिष्यत्, यथा तान्येव । न चैतत् तथा । तस्मात् तथेति ॥६॥

॥ परिशुद्धिः ॥

**यथोद्देशं च लक्षणादिति** भावपदम् । **लक्षणमाह** इत्यनयोर्मध्ये इतिः पूरणीयः । अत्रापीत्यपिशब्दः प्रत्यक्षलक्षणापेक्षया । ननु साध्यतेऽनेनेति [2]साधनमित्येवास्तु, संभवति चायमर्थो ज्ञानस्य करणतायाम्, तस्य प्रसिद्धसाधर्म्यसमुत्थत्वादित्यत आह—**तदेतदिति** । न सामान्यातिरिक्तं सादृश्यम्, अनाश्रितस्यान्याश्रयत्वे द्रव्यत्वप्रसङ्गात्, अनन्याश्रितस्याप्ययुतसिद्धोभयव्यङ्ग्यत्वे समवायत्वप्रसङ्गात्, गोगवयादियुतसिद्धनिष्ठाभिव्यक्त्यनुपपत्तेश्च । युतसिद्धाभिव्यङ्ग्यत्वेऽभावत्वप्रसङ्गात्, अयुतसिद्धावयव्यवयवादिनिष्ठाभिव्यक्त्यनुपपत्तेश्च । नित्यस्यानेकाश्रयत्वे जातित्वप्रसङ्गात् एकाश्रयत्वे तस्य नाशे अनाश्रयस्यावस्थानानुपपत्तेः नित्यत्वे प्रमाणाभावप्रसङ्गाच्च । सामान्यं ह्येकाश्रयनाशेऽपि आश्रयान्तरे ताद्रूप्येणैव प्रत्यभिज्ञानात् नित्यमिति व्यवस्थाप्यते । इदं तु न तथेति कथं नित्यमिति ज्ञातव्यम्? प्रत्युतानित्यैकाश्रयत्वादेवानित्यत्वमेवानुमीयते, नित्यैकवृत्तित्वे तु स्वरूपसतो विशेषत्वप्रसंगात् । सत्तासतो[2] गुणत्वापत्तेः । अनित्येषु च सदृशव्यवहारहानप्रसङ्गात्, अनित्यस्य त्वनेकाश्रयत्वे गुणवतो द्रव्यत्वप्रसङ्गात्, निर्गुणत्वे गुणत्वप्रसङ्गात् । एकाश्रयत्वे संयोगविभागयोरनपेक्षकारणस्य कर्मत्वप्रसङ्गात् । तद्विपरीतस्य तु गुणत्वप्रसङ्गात् । [3]गुणेषु च कर्मसु च सादृश्यव्यवहारो न स्यात्, तेषां समवायिकारणत्वाभावेनानित्यधर्मायोगात् । आश्रयसादृश्येन तद्व्यवहारोपपत्तौ विसदृशाश्रयाणां गुणकर्मणां तद्व्यवहारानुपपत्तेः, कारणत्रयविचारानुपपत्तेश्चेत्यर्थः । साधर्म्यप्रसिद्धिरपि द्रष्टव्येति । **सूत्रे** सा च कर्मधारयसमाश्रयेण । इत्याप्तवाक्यादिति वाक्यादारभ्य प्रत्यक्षपर्यन्तेनेति हृदयम् ॥

**प्रज्ञापनीयस्य गवयशब्दवाच्यतयेति** वदता अतिदेशवाक्यस्याकृतसमयसंज्ञासमभिव्याहारो दर्शितः । तथापि करणव्युत्पत्त्या साधनपदव्याख्यानस्य परित्यागे न

१. ॰मेवास्तु M.  २. सत्तावतो M.  ३. गुणेषु·····योगात् om M.

काचिदुपपत्तिर्दर्शिता, प्रज्ञापनपदस्यापि करणव्युत्पत्तिसंभवादत आह—**पिण्डस्य हीति**। प्रत्यक्षात् सादृश्यात् प्रजानन् तेन प्रज्ञाप्यत इति वदन् सादृश्यस्यैव प्रज्ञायमानस्य कारणत्वमभिप्रैति। तथा च तेन सह साध्यसाधनपदस्य व्यधिकरणत्वादन्यस्य च करणस्याभावात् साध्यसाधनपदमनर्थकमापद्येत, यदि भावसाधनं न स्यात्। न च तज्ज्ञानमेवास्तु करणमिति वाच्यम्, अवान्तरव्यापारविरहिणः करणत्वायोगात्। असमीचीनेऽपि सादृश्यज्ञाने तथाभावप्रसङ्गाच्च। [1]तदपि हि सादृश्यज्ञानमेव। प्रमाणानुवृत्त्या तन्निवृत्तिरित्यपि न[2] वाच्यम्, वृत्तैरेव पदैः समीहितसिद्धावनुवृत्तेरनवकाशात्[3]। सापि हि ग्रन्थवैचित्र्यमापादयन्ती [4]पदान्तरवृत्तिरेव। तथापि प्रज्ञानं प्रसिद्धिपदार्थो न तु प्रज्ञापनमित्यत आह—**इत्येतदर्थे**। प्रमाणस्य व्यापारोऽव्यवधानेन फलोपरक्ता प्रातिस्विकी क्रिया। ज्ञायमानस्य सादृश्यस्य करणत्वमाविष्कर्तुं तस्यान्यत्र अचरितार्थः फलानुगुणो व्यापारो दर्शित इति तात्पर्याऽर्थः॥

**तत्रेति**। तात्पर्यार्थाक्षरार्थयोः। लक्ष्यपदं हि [5]लक्षणव्यवस्थापकं न भवति [6]परस्पराश्रयत्वमगतिर्वेति दोषात्। ननु उपस्थापकमपीत्याशयवानाशङ्क्य द्वितीयपदोपादानतात्पर्यमाह—**यद्यपीति**। नन्वेवं सति प्रथमैवास्तु, न चेयमशोकवनिका, तस्याः प्रथमत्वादेव प्रथमं बुद्धावुपनिपातात्। न साध्यसाधनपदेन फलवाचिना सामानाधिकरण्यानुपपत्तेः। अस्तु तर्हि तदपि करणसाधनम्। एवं यत इत्यध्याहारकष्टसृष्टिरपि न स्यात्। सत्यमेवैतत्, किन्तु फलाभावेनैव हेतुनोपमानस्य प्रामाण्यमपनीयते परेण। तस्मात् तदवबोधाय निष्कृष्य[7] फलमस्य दर्शनीयमिति तथैव सूचितवान्। एतच्चाग्रे स्फुटमिति नेह **टीकाकृता** दर्शितम्॥

**भाष्यवार्त्तिकयोः** विरोधमाशङ्क्याह—**वार्तिककारेणेति**, तृतीयासमास इत्युपलक्षणम् अर्थसिद्धः कर्मधारयसमासोऽपि न निरस्त इति द्रष्टव्यम्, अविरुद्धत्वात्। प्रसिद्धं साधर्म्यं यस्येति बहुव्रीहावपि कर्मधारयार्थस्य प्रविष्टत्वात्। एवं प्रसिद्धेन साधर्म्यमित्यत्र तृतीयातत्पुरुषस्य प्रवेशाद् विरोधान्तरमाशङ्क्याह—**भाष्यकारेण हीति**। नायमर्थो भाष्याक्षरेभ्यः श्रूयत इत्यत आह—**आक्षिप्तेति**। पश्चान्निष्कृष्याभिधानं कृतम्, समयप्रतिपत्तेः फलस्य। तदाह—**समारुह्येति**। तथापि किमायातं **वार्त्तिक-**

---

१. तदपि···प्रमा° dam M. २. न om M. ३. °सिद्धा°······°काशादिति dam M. ४. पदान्तरावृत्ति M. ५. लक्ष्यव्यव° J ६. अतिगति M ७. निष्कृष्य om M

विरोधस्येत्यत आह---**एतदेवेति**। प्रतिपद्यतामयमित्यादिशङ्कोत्तरार्थं सूत्रोक्तं[1] करोति---**प्रसिद्धसाधर्म्यादित्यत्रेति**॥

अत्रोपमानस्य फले[2] विप्रतिपद्यमानान् प्रति साशङ्कं **जरन्नैयायिकजयन्त**प्रभृतीनां परिहारमाह---**यद्यपीति**। **संज्ञाकर्म** संज्ञाकरणम्। मानान्तरं शब्दो वा शब्दार्थो वा लिङ्गभूतः। तत्र लिङ्गपक्षे, उपलक्षितः प्रतिपादितः। शब्दादवगतेन गोसादृश्येन प्रतिपाद्यमानः पिण्डः समानासमानजातीयेभ्यो व्यवच्छिन्नः शक्यमवगन्तुमिति संबन्धः[3]। शब्दपक्षे तु, गोसादृश्येनोपलक्षितो विशिष्टः शब्दादवगम्यमानः पिण्डः समानासमानजातीयेभ्यो व्यवच्छिन्नः शक्योऽवगन्तुम्, गुणकर्मादिवत् सादृश्यस्यापि समानासमानजातीयव्यवच्छेदकत्वादिति सुगमम्। गोसदृशो गवयशब्दवाच्य इति तावदस्तु। अथ गोसदृश एव क इत्याशङ्कानिवर्तनासामर्थ्यमतेः[4] परिप्लवः। एनमेवार्थं कश्चिदित्यादिना दर्शितवान्। **यत्रेति** विषये। तर्हि विशिष्टैव[5] प्रतिपत्तिर्वाक्यादस्तु इत्यत आह---**न चेति**। [6]प्रत्यक्षमात्राद् भविष्यतीत्यत आह---**न चेति**॥

एतेन वाक्यप्रत्यक्षसमाहारोऽपि निरस्तः। स हि प्रमाणसमाहारो वा स्यात्, फलसमाहारो वा ? आद्येऽपि प्रमाणत्वे सति समाहारः, समाहृतयोर्वा प्रामाण्यमिति ? न तावत् प्रथमः, फलानेकत्वे सति समाहारानुपपत्तेः, तस्यैकफलं प्रति परस्पराधिपत्यरूपत्वात्। नापि द्वितीयः, वाक्यप्रत्यक्षयोर्भिन्नकालत्वात्। [7]वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डसंबद्धेनापीन्द्रियादिना तद्गतसादृश्यानुपनये समयपरिच्छेदासिद्धेः। फलसमाहारे तु तदन्तर्भावेऽनुमानशब्दयोरपि प्रत्यक्षत्वप्रसङ्गः। तत् किं तत्फलस्य तत्प्रमाणबहिर्भाव एव, अन्तर्भावे वा कियती सीमा ? तत्तदसाधारणेन्द्रियादिसाहित्यम्। अस्ति तर्हि सादृश्यादिज्ञानकालेऽपि विस्तारितस्य चक्षुषो व्यापारः ? न, तस्मिन् सति तस्यानुपयोगात्। उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यस्मृतिमतः कालान्तरेऽप्यनुसन्धानबलात् समयपरिच्छेदोपपत्तिरिति। तदेतत् **जरन्नैयायिक**मतमास्कन्दति---**नन्विति**। पूर्वे हि यथा गौस्तथेत्येव वाक्यं गवयपदेनाप्रतीतसमयेनापि[8] प्रयोगमात्रोपयोगिना सहितं संबन्धप्रतिपत्तिहेतुः, प्रतिसंबन्धिनस्तु शब्दाद् वोपलक्षणाद् वोपस्थापनमित्याहुः। **आधुनिकास्तु** प्रतिसंबन्ध्युपस्थितिः पूर्ववदेव, समयपरिच्छेदस्तु प्रयोगानुमानादित्याहुः॥

---

१. सूत्तोत्थं M २. फलैः J ३. संबन्ध om JA ४. मानासामर्थ्य J, मृतेः M ५. प्रतीतिः M ६. मात्र om J ७. वाक्य···काल॰ om M ८. समयपदेनापि M

अवाचकप्रयोगस्य वाक्यानङ्गतयेति तद्विरहिणश्च संबन्ध्युपलक्षणपर्यवसानादिति मन्यमाना एतदेव प्रयोगमारोप्य दर्शयन्ति—**यो हीति**। एतेनैव परिप्लवो निरस्तः। यदि हि संबन्धो विदितः, कः परिप्लवार्थः ? अथ न विदितः, किं तदुपवर्णनेन ? विशेषनिष्ठतया न विदित इति तत्राकाङ्क्षानुवृत्तेरेवमुच्यत इति चेत्—तदप्ययुक्तम्। न हि विशेषनिष्ठः समयः, तथा सत्यशक्यग्रहत्वात्[1], अपि तु किञ्चित् निमित्तीकृत्य देशकालादिविशेषविनाकृतव्यक्तिमात्रनिष्ठः। तदेव निमित्तं नावगतमिति चेत् ? अवगतिरेव तर्हि संबन्धस्य संबन्धिनोऽनवगमादिति किं परिप्लुतं प्रमातुः ? न चैष परमार्थः, सादृश्यविशिष्टपिण्डोपक्षेपे निमित्तस्याप्युपक्षेपात्। अन्यथा पिण्डोपक्षेपेऽपि निमित्तानुपक्षेपे मनोधर्मादिशब्दानां जातिशब्दत्वं न स्यात्, अवाचकत्वमेव वा स्यात्[2], तज्जातीयानां नित्यपरोक्षत्वादिति॥

अत्रोच्यते अभिनवनैयायिकैः, पञ्चधा हि वाच्यवाचकभावव्यवस्था। निमित्तोपलक्षणरहिते शृङ्गग्राहिकया चैत्रमैत्रवत्। निर्निमित्तेऽन्तर्भूतोपलक्षणे निर्वचनिकया पाचकादिशब्दवत्। निर्निमित्त एव तटस्थोपलक्षणे परिभाषणिकया[3] आकाशादिशब्दवत्। [4]सनिमित्ते तटस्थोपलक्षण एवंप्रकारिकया पृथिव्यादिवत्। विशेषवन्निमित्ते निमित्तसङ्कोचनिकया स्वर्गादिवदिति। तत्र प्रथमद्वितीययोरसंभावितत्वादिह विदितवृत्तान्ततया तृतीयं प्रकारं निरस्य पञ्चमश्चतुर्थमुपयातीति चतुर्थं व्यवस्थापयति—**न तावदिति**। अविदितगवयशब्दवृत्तान्तस्य तु यद् भविष्यति, तदनन्तरमेव वक्ष्यति। **तदिदमुक्तमिति**। परमार्थो वस्तुगतिः। ततश्च तथाभूत एव पिण्डे संबन्धो ग्राह्यो, न तु सादृश्योपलक्षणोपनीते पिण्डमात्र इत्यर्थः॥

ननु निमित्तमप्यवगतमित्यत आह—**न चेति**। न च गोसादृश्येनोपलक्ष्यत इति उपलक्षणमनुमापनम्, स्मारणं वा। उभयमप्यदृष्टसंबन्धेऽनुपपन्नम्। स्मरणमात्रापेक्षया दण्डपुरुषोदाहरणम्। एतावदेव च स्यात्। यदुत गवयशब्दो वा गवयत्वं गमयेत्, यथा गौः तथा गवय इति। शब्दार्थो वानुमापयेत् अव्यभिचारपक्षे। व्यभिचारपक्षे तु स्मारयेदिति[5]। ननु सादृश्यमेव जातिभेदमनन्तर्भाव्य प्रत्येतुं न शक्यम्, [6]तस्य भिन्नप्रधानसामान्यव्यक्तिगुणावयवकर्मसामान्यबाहुल्यरूपत्वात्। तस्मात् सदृशयथातथादिशब्दा एव तस्य प्रत्यायकाः। केवलं प्रसिद्धाप्रसिद्धसन्देहोऽवशिष्यते।

१. °शक्याग्रह° M २. नास्तीत्यवाचकत्वमेव स्यात् A ३. परिभाषया M
४. सन्निमित्ते M ५. स्मारयेदेव M ६. तस्याभिन्न° M.

तत्र हस्तित्वादिकं गोशब्देन निरस्तम्। महिषत्वादिकं तु अनुचितविषयतया, अन्यथोपमानस्वीकारेऽप्यप्रतीकारात् ॥

तदयं गोसदृश इत्यस्यार्थः। गोतो भिन्नजातीयः, तद्गतगुणावयवादिसामान्यबाहुल्यवानिति। नैतदपि साधीयः, दर्पण इव चन्द्रः, चन्द्र इव मुखम् मुखमिवारविन्दम्, अदोऽरविन्दमिवेदमरविन्दमिति चतुर्धा सादृश्यगतौ भिन्नप्रधानसामान्यनियमायोगेन तदनन्तर्भाव्यैव सादृश्यप्रतिपत्त्युपपत्तेः। क्वचिद् दृष्टमिह स्मर्येत तावदिति चेत्? स्मर्यतां [1]तावदत्रावगतम्, न त्विह तदवगतमिति ब्रूमः। तस्माद् [2]गोसामान्येनोपलक्ष्यमाणः पिण्डः किं तद्वानेव गवयशब्दस्य वाच्यो भवतु? [3]पचिक्रिययोपलक्ष्यमाणः कर्तेव पाचकशब्दस्य, आहोस्वित् तटस्थमेव गोसादृश्यम्, तदुपलक्षित एव पिण्ड आकाशवत् तस्य वाच्यो भवेत्? किं वोपलक्षणं विहाय गन्धोपलक्षितपृथिवीत्वजातिमानिव गोसादृश्योपलक्षितजातिविशेषवानेव पिण्डोऽस्य वाच्यो भविष्यतीत्यनियतकोटिसंशयतिरस्कारेण कोटित्रयावलम्बी सन्देह एव जरन्नैयायिकैरुपप्लुतः संबन्धपरिच्छेद इत्युच्यते, एतास्ववश्यमन्यतमा कोटिर्गवयपदार्थो भविष्यतीति निर्धारणसंभावनां हृदि निधाय। एतेन [4]मनोधर्मादिप्रतिबन्दिग्रहः प्रत्युक्तः। तत्राप्यनुमानेनोन्नीयमानानां [5]मनोव्यक्तीनां समानगुणतया समानार्थक्रियाकारितया समानजातीयत्वानुमानात्। सामान्यानवगतौ तु तत्राप्यशक्य एव समयग्रहः। सामान्यं वा न तस्य प्रवृत्तिनिमित्तमिति ॥

तदिदमुक्तम्—**सर्वथानुपलब्धेरिति**। यद्यपि गवयत्वावगमेऽपि संज्ञासंज्ञिसंबन्धानवगमे तत्र प्रयुज्यमानत्वादिति हेतुरसिद्ध एव। न ह्यसति वृत्त्यन्तरे तद्विषयतया प्रयोगः सङ्गतिमविज्ञाय ज्ञातुं शक्यते, प्रागेव प्रमाणान्तरात् तदवगमे तु किमनुमानेन साधनीयम्? अत एव प्रत्यक्षेऽपि गवये अनुमानमनवकाशमेव। तथापि संबन्ध्यवगमे गवयपदसमभिव्याहृतं वाक्यमेव संबन्धं बोधयिष्यति। अवाचकस्यापि च समभिव्याहार उपयोक्ष्यते उपमानपक्ष इव। तदपि ह्यतिदेशवाक्यं वाक्यमेवेति मत्वा तन्निरासार्थं संबन्धिन एवाप्रतिपत्तिरुपपादिता ॥

अत एवाह—**कुतो वाक्याद् वेति**। अत एव वाक्यस्य व्याप्तिपरतापि निराकृता, संबन्धिनोऽनवगमात्। न च व्यतिरेके तात्पर्यम्, संकेतयितुरभिप्रायोपाधिकत्वात्, सत्प्रतिपक्षत्वाच्चेति। यद्यपि विनिगमनायां हेत्वभावेऽपि नोपमानस्य काचित्

---

१. यदत्राव॰ J, यत्रावगतं A २. यच क्रिययो॰ M मनोधर्मप्रति॰ M ३. नाना व्यक्तीनां M

क्षतिः, उभयोरपि वाच्यत्वे संबन्धस्य तदानीमवधारणात्, तथापि वस्तुगतिं विवेचयति—**तथापि किम्** इत्यादि **तदनुजानाति** इत्यन्तं करभवृत्तान्तम्। परिहरति—**साधर्म्यग्रहणं चेति**। उपलक्षणपदप्रयोगश्चावान्तरभेदसंसूचनाय तेनेयं सूत्रगतिः। प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। स च प्रसिद्धो धर्मः समानः प्रतियोगितया तदुपक्षिप्तोऽसमानश्चेति। बहुव्रीहिपक्षे तु [1]प्रसिद्धधर्मण इति। शेषं पूर्ववत्॥

जरन्मीमांसकमतं गोसादृश्यं गवयस्थं प्रत्यक्षमेवेति वदता निरस्तम्। शाबरमतमाशङ्क्य निराचष्टे—**गोस्थमिति**। जात्यन्तरवर्ति जात्यन्तरस्येति प्रायोवादः। तथापि गवयव्यक्त्यवच्छिन्नस्य न गोव्यक्त्यवच्छेदोऽवगतः, तत्रोपमानमवतरिष्यतीत्यत आह—**तस्माद् यथेति**। दृष्टान्ते तात्पर्यम्। **प्रयोगस्त्वित्यादि**। अकृतसमयसंज्ञासमानाधिकरणवाक्यार्थोपधानं प्रमाणवैलक्षण्यमिह द्रष्टव्यम्। विषयस्वरूपवैलक्षण्ययोरसिद्धत्वादिति ॥६॥

॥ भाष्यम् ॥

अथ शब्दः—

आप्तोपदेशः शब्दः ॥ १।१।७ ॥

आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिः, तया प्रवर्तत इत्याप्तः। ऋष्यार्यम्लेच्छानां [2]समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, नातोऽन्यथेति ॥७॥

॥ वार्त्तिकम् ॥

अथ शब्दः। **आप्तोपदेशः शब्दः** ॥ न शब्दमात्रमिति सूत्रार्थः, **आप्तः खलु साक्षात्कृतधर्मा। साक्षात्करणमर्थस्याप्तिः, तया** सह वर्तते **इत्याप्तः**। स्वर्गापूर्वदेवतादिषूपदेशो न प्राप्नोति अतीन्द्रियत्वात्। यदि साक्षात्करणमर्थस्याप्तिः, स्वर्गापूर्वदेवतादीन् न कश्चित् पश्यतीति तत्प्रतिपादको व्यवहारो न स्यात्। तस्मात् आप्तश्चासावुपदेशश्चेति युक्तम्, नाप्तस्योपदेश इति। नैष दोषः। न ब्रूमोऽस्मदादीनां प्रत्यक्षा स्वर्गादय इति। अपि तु यस्य प्रत्यक्षाः तस्योपदेश इति॥

---

१. धर्मिणः A  २. एतत्समा° J

कः पुनरत्र न्यायः स्वर्गादयः कस्यचित् प्रत्यक्षा इति ? ब्रूमः, सामान्यविशेषवत्त्वात् कस्यचित् प्रत्यक्षा इति । आश्रितत्वात्, [१]यद् यदाश्रितं तत् कस्यचित् प्रत्यक्षमिति । परार्थत्वात्, यत् परार्थं तदपि कस्यचित् प्रत्यक्षमिति । वस्तुत्वादागमविषयत्वाच्च[२] । यद् वस्तु यच्च [३]परस्य कथ्यते, तत् कस्यचित् प्रत्यक्षं [४]दृष्टम्, यथा [५]घटादय इति । अनित्यत्वात् कस्यचित् प्रत्यक्षा इति । असिद्धम् अपूर्वस्यानित्यत्वम् ? न प्रायणानुपपत्तेः । यदि धर्माधर्मौ नित्यौ भवतः कस्य क्षयात् प्रायणमिति ? यदि पुनरनित्यौ, विपच्यमानयोरुपभोगात् प्रक्षये सति [६]विपक्ष्यमाणकर्माशयान्तराभावात्[७] पूर्वशरीरात् प्रच्यवनं मनसः [८]उत्तरशरीरोपसंप्राप्तिश्चेति जन्ममरणे स्तः । तस्मादनित्याविति । नित्ये वा अपूर्वे परिकल्पिते तस्य साधारणता असाधारणता वा वक्तव्या । यदि साधारणता, सर्वप्राणिसाधारणोऽभ्युदयः स्यात् । न [९]जात्वन्यनियामकमस्ति क्रियालोपश्चेति । नित्यत्वे व्यञ्जकभेदान्नोभयदोषः । नित्यत्वे साधारणत्वे वा अदृष्टस्य न [१०]साधारणोऽभ्युदयदोषो नापि क्रियाविलोपदोषः । कस्मात् ? व्यञ्जकभेदात् । नित्यमप्यपूर्वं योऽभिव्यनक्ति तस्य फलम्, अभिव्यक्त्यर्था च क्रिया[११] । अभिव्यक्त्यर्थत्वाच्च न[१२] क्रियालोप इति । येन यदव्यभिज्यते तस्यैव तत्फलप्रदातृ भवतीति दृष्टम् । न दृष्टम् । न हि देवदत्तप्रकाशितं घटं यज्ञदत्तो न पश्यतीति । नित्यस्य वा अपूर्वस्य काभिव्यक्तिः ? किमुपलब्धिः, अथ फलप्रदानसामर्थ्यम्, आहोस्विदावरणापगमः ? यद्युपलब्धिः, सा नास्ति । न हि कदाचिदप्ययमपूर्वं पश्यति, अतीन्द्रियत्वात् । अथ फलप्रदानसामर्थ्यमभिव्यक्तिः, फलप्रदानसामर्थ्यं किमपूर्वम्, अथापूर्वधर्म इति ? यद्यपूर्वम्, न हि किञ्चित् कृतम् । अथापूर्वधर्मः, तद्व्यतिरेकिणाप्यन्यत् अपूर्वमित्यत्र[१३] किं प्रमाणम् ? वयं तु पश्यामः, यतः फलं तदपूर्वमिति । अथावरणापगमेऽभिव्यक्तिः, किमस्यावरणमिति वक्तव्यम् । न ह्यतीन्द्रियाणामर्थानामावरणस्य संभवासंभवौ चिन्त्येते । एतेन प्रतिपुरुषं नित्यत्वं प्रतिषिध्यं वेदितव्यम् । कथमिति ? तत्रापि क्रियाविलोपो दोषः, व्यञ्जकस्य चासामर्थ्यमिति । उत्कर्षार्था च प्रवृत्तिरयुक्ता नित्यस्याभेद्यत्वादिति । व्यञ्जकभेदानुविधानाद् भेद इति चेत्—न, एकस्मिन्नदृष्टत्वात् । अथापीदं स्यात् एकमप्यपूर्वं व्यञ्जकभेदानुविधानाद् भिन्नमिव भवति, तद्भेदादुत्कर्षा-

---

१. यदाश्रितं C २. °त्वात् C ३. परस्य om C ४. भवति C ५. घटादि C
६. विपच्यमान° C ७. शयान्तरात् J ८. शरीरे सं J ९. न वान्य° C
१०. °भ्युदयो नापि क्रियाविलोप इति C ११. °र्था क्रियेति C १२. अतो न C
१३. अत्र om J

पकर्षौ भवत इति । [1]नैतदस्ति, एकस्मिन्नदृष्टत्वात् । न ह्येकं किञ्चिद् व्यञ्जकभेदानुविधायि दृष्टं यत [2]एतदेवं स्यादिति । ननु च खड्गादिभेदान्मुखभेदः तदनुविधानाद् दृष्टो न दृष्ट इति ब्रूमः । किं पुनस्तद् यदि न दृष्टम् ? मिथ्या प्रत्ययः स इति ब्रूमः । भिन्नमिव तत् , न पुनर्भिन्नमेव, एकस्यानेकरूपस्यासंभवात् । न ह्येकमनेकरूपं संभवति । तस्मादपूर्वस्यैकत्वं वा हातव्यम् उत्कर्षापकर्षकर्तृत्वं[3] वेति । प्रतिपुरुषमनेको नित्यो वेति[4] । अथायं पक्ष आश्रीयते, प्रतिपुरुषमनेकत्वं नित्यत्वं वा अपूर्वस्येति, अनिवृत्तो व्याघातः, प्रायणानुपपत्तिप्रसङ्गदोषः[5] । क्रियाविलोपदोषश्च न व्यावर्तते । [6]अभिव्यक्तश्च फलं ददातीति, किं यदा अभिव्यक्तिः तदा फलं ददाति, उत क्रियानिवृत्त्युत्तरकालमिति ? यदि [7]यदाभिव्यक्तस्तदा फलं ददाति, तन्न दृष्टम् । न ह्यश्वमेधक्रियानन्तरमेव स्वर्गप्राप्तिर्भवतीति । अथोत्तरकालम् ? असती क्रिया व्यञ्जिका, तया [8]चानुगृह्यमाणः फलं ददातीति चित्रम् । न हि किञ्चिदपूर्वं नाभिव्यक्तमिति सर्वं सर्वदा फलदातृ स्यादिति । अथापि स्वपक्षसंरिरक्षयिषया क्रियानित्यत्वमपि प्रतिपद्येथाः, एवमप्यनिवृत्तो व्याघातः क्रियाविलोपादिक इति । तदेवं यथा यथा अपूर्वस्य नित्यत्वं विचार्यते, तथा तथोपपत्तिं न सहते इति ॥

आप्तोपदेशः [9]शब्द इति किमाप्तानामविसंवादित्वं प्रतिपाद्यते, अथार्थस्य[10] तथाभाव इति ? यद्याप्तानामविसंवादित्वं प्रतिपाद्यते, तदनुमानात् । अथार्थस्य तथाभावः, सोऽपि प्रत्यक्षात् । यदा ह्ययमर्थं [11]प्रत्यक्षत उपलभ्यते तदा तथाभावमर्थस्य प्रतिपद्यते इति । तन्न, सूत्रार्थापरिज्ञानात् । नायं सूत्रार्थः आप्तोपदेशः शब्द इति, अपि त्विन्द्रियसंबद्धासंबद्धेष्वर्थेषु या शब्दोल्लेखेन प्रतिपत्तिः सा आगमस्यार्थः । तस्मादसंबद्धोऽयं विकल्पः ॥७॥

॥ टीका ॥

**अथ शब्द इति भाष्यम्** । उपमानानन्तरं शब्दोद्देशात् उपमानलक्षणानन्तरं शब्दस्य लक्षणमित्यर्थः । लक्षणसूत्रं पठति—**आप्तोपदेशः शब्दः** । अत्र शब्द इति लक्ष्यपदम् । आप्तोपदेश इति लक्षणम् । उपदिश्यतेऽनेनेति उपदेशो वाक्यज्ञानं वा तदर्थज्ञानं वा अभिधीयते । तत्र वाक्यज्ञानप्रामाण्यपक्षे तदर्थज्ञानं फलम् , पदार्थ-

---

१. एतदपि नास्ति C २. एतत् om C ३. हेतुत्वं C ४. अनेकं नित्यं वेति C ५. °प्रसङ्ग° om J ६. अभिव्यक्तिस्तु C ७. °व्यक्तिः C ८. °नुगृह्यमाणं ददातीति C ९. शब्द om J १०. आहोस्विदर्थस्य C ११. °क्षेण C

स्मृत्यादयस्त्वान्तरालिका इतिकर्तव्यताः। तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम्। यद्यपि विधिरुपदेशः प्रवर्तनमित्यनर्थान्तरम्, यद्यपि चायं नियोज्यप्रयोजने प्रवृत्तिनिवृत्ती विदधदाज्ञाध्येषणाभ्यामतिरिच्यते, ते हि नियोक्तृप्रयोजने प्रवृत्तिनिवृत्ती विधत्तः, तथापि भूतार्थपरोपनिषदादिशब्दव्यापकत्वात् परप्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम्। यद्यपि

सदेव सोम्येदमग्र आसीद्

इत्यादि वचनं क्वचित् न प्रवर्तयति, कुतश्चिद् वा निवर्तयति पुरुषम्, तथापि पुरुषश्रेयोऽभिधत्ते इत्युपदेश इत्युच्यते। तथाप्यतिव्याप्तिः, चैत्यवन्दनादिवाक्यानामप्येवं लक्षणत्वात्। अत उक्तम्—**आप्तेति**। आप्तानां ऋष्यार्यम्लेच्छानामुपदेशः शब्दो न त्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति। तदेवाह—**वार्त्तिककारः न शब्दमात्रमिति सूत्रार्थः** ॥

**सूत्रस्थाप्तलक्षणपरं भाष्यम्—आप्तः खलु साक्षात्कृतधर्मा**। सुदृढेन प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था हिताहितप्राप्तिपरिहारप्रयोजना येन स तथोक्तः। तथापि तत्त्वं विद्वान् अकारुणिकतया[1] वा अलसतया वा अनुपदिशन्, मत्सरितया वा विपरीतमुपदिशन् नाप्तः स्यादित्यत आह—**यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः**। यथादृष्टस्येति मत्सरितया विपरीतोपदेशो निवारितः। चिख्यापयिषयेति अकृपास्वार्थकामत्वे[2] निराकृते। प्रयुक्तः उत्पादितप्रयत्नः इत्यलसत्वम्। तथापि स्थानकरणपाटवाभावेन वर्णनिष्पादनासामर्थ्येनाप्तः प्रसज्येत, इत्यत आह—**उपदेष्टा**। स्थानकरणपाटववानित्यर्थः ॥

आप्त इति प्रकृतिप्रत्ययसमुदायात् प्रकृतिं निष्कृष्य तदर्थमाह—**साक्षात्करणमिति**। अनेन [3]यथोक्तरूपसंपदुपलक्षिता। प्रत्ययार्थमाह—**तयेति**। आप्तलक्षणस्य व्यापकत्वमाह—**ऋपीति**। दर्शनात् ऋषिः। करतलामलकफलवत्[4] साक्षात्कृतत्रैकाल्यवर्त्तिप्रमेयमात्रः, आराद् यातः पातकेभ्य इत्यार्यो मध्यमो लोकः, म्लेच्छः प्रसिद्धः। म्लेच्छा अपि हि [5]परिपथमवस्थिताः पान्थानामपहृतसर्वस्वानां मार्गाख्याने हेतुदर्शनशून्या भवन्त्याप्ता इति ॥

---

१. वा अलसतया ... दृष्टस्येति मत्सरितया J K २. अकृपाभ्यासकारिते C
३. चोक्तस्वरूप° C ४. करतला ... वत् om C ५. प्रतिपथ° C

तदनेन,

[१]आप्तिं दोषक्षयं विदुः ॥

इति परेषामाप्तलक्षणमव्यापकमित्युक्तं भवति ॥

तदेतद् भाष्यम् आक्षेप्तुमनुभाषते—**आप्तः खल्विति**। आक्षिपति—**स्वर्गेति**। आक्षेप्ता भाष्यम् आक्षिप्य सूत्रं समाधत्ते **तस्मादिति**[५]। आप्तः प्राप्तो युक्त इति यावत्। अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेवतादिविषयः स्वतःप्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः। लौकिकश्चार्यम्लेच्छानां प्रमाणान्तरमूलो युक्तः। मानान्तराभावे त्वनाप्तोऽयुक्तः। समाधत्ते—**न ब्रूम इति**। पौरुषेयत्वं वेदानां द्वितीयाध्याय[२] उपपादयिष्यते। तस्मात् पुरुषस्यैवाप्तस्योपदेश आप्तोपदेश इति साधु व्याख्यानं भाष्यकारीयमिति भावः ॥

पृच्छति—**कः पुनरिति**। अस्ति हि स्वर्गादीनामप्रत्यक्षत्वे न्यायः, योगिप्रत्यक्षं न स्वर्गादिविषयः प्रत्यक्षत्वात् अस्मदादिप्रत्यक्षवदिति भावः। उत्तरम्—ब्रूमो न्यायम्। तमाह—**सामान्यविशेषवत्त्वात् कस्यचित् प्रत्यक्षा इति**। अत्र यावति पक्षे यो हेतुः सिद्धः, तस्य तन्मात्रं पक्षीकार्यम्। योगजे च प्रत्यक्षे सिद्धे तत्साधकादेव प्रमाणात् तस्य स्वर्गादिविषयत्वमपि सिद्धमिति धर्मिग्राहकप्रमाणविरुद्धं **मीमांसकानाम्** अनुमानं नोदेतुमप्युत्सहते प्रागेव तद् बाधितुम्। असिद्धे तु योगजे प्रत्यक्ष आश्रयासिद्धो हेत्वाभासः। अस्माकं तु सम्यञ्चो बहवश्च न्याया इति भावः। अनित्यत्वं हेतुमाक्षिपति—**असिद्धमिति**। परिहरति—**नेति**। **नित्ये चापूर्वे इति**। अत्र त्रयः कल्पाः, किमेकमपूर्वं सर्वपुरुषसाधारणम्, आहो असाधारणम्? यदापि असाधारणं तदापि किं प्रतिपुरुषमेकैकमपूर्वम्[३], आहो प्रतिपुरुषमनेकमिति? तत्र प्रथमं कल्पं दूषयति—**यदि साधारणतेति**। न हि कदाचिदप्ययमपूर्वं पश्यति लौकिकः पुरुषः। योगिनस्त्वनभिव्यक्तमपि पश्यन्तीति भावः। द्वितीयं कल्पं दूषयति—**एतेन प्रतिपुरुषमिति**। उत्कर्ष आधिक्यमवयवोपचय इति यावत्। शङ्कते—**व्यञ्जकेति**। एकमपि व्यञ्जकभेदात् उत्कर्षनिकर्षवद् दृष्टम्। तद् यथा महति दर्पणतले महन्मुखम्, तदेव कनीनिकायाम् अण्विति भावः। [४]वक्ष्यमाणेनाभिप्रायेण निराकरोति—**न ह्येकमिति**। शङ्किता स्वाभिप्रायमुद्घाटयति—**ननु चेति**। स्वाभिप्रायेण निराकरोति—

१. आप्तं C ५. तस्मादिति om C २. २.१.६८ ३. असाधारणम् C ४. वक्ष्यमाणेन'' 'स्वाभिप्रायेण J K

**न दृष्ट इति ब्रूम** इति। शङ्किता पृच्छति—**किं पुनस्तत् यदि न दृष्टम्?** तत्र यदि [1]भेदेन न दृष्टम्, दृष्टिर्नास्ति। किं पुनस्तत्, यद् भेदेन भेददर्शनमिति[2] भासते? समाधाता स्वाभिप्रायमाह—**मिथ्याप्रत्यय** इति। न भेददर्शनमपजानीमहे, किं तु पारमार्थिकं भेदम्। न च कल्पितोऽपूर्वभेदः पारमार्थिकाय कार्यायालमिति भावः। उत्कर्षापकर्षकर्तृत्वं वेति कर्मण इति शेषः। तृतीयं कल्पमातिष्ठते—**प्रतिपुरुषमनेक** इति। दूषयति—**अनिवृत्त** इति। **अथोत्तरकालमिति**। अश्वमेधक्रियया तावत् तदपूर्वं स्वकाल एवाभिव्यक्तं फलदानाभिमुखीकृतम्, अभिव्यञ्जकसमानकालत्वादभिव्यक्तेः, प्रदीपादिषु दर्शनात्। तथापि फलं तावत् न दत्ते, यावत् क्रिया न निवर्तते। निवृत्तायां तु फलं दत्ते इत्यर्थः। दूषयति—**असतीति**। तत् खलु [3]पूर्वं सदपि फलं नाकार्षीत् चरमभाविन्याः क्रियायाः तज्जन्याया वाभिव्यक्तेरनुत्पादात्। उत्पन्नायां तु क्रियायामभिव्यक्तौ वा कस्मात् न करोति? न हि क्रियाया विनाशस्य [4]कश्चिदुपयोगः। तस्मादकामेनापि त्वया असत्या[5] एव क्रियाया व्यञ्जकत्वमनुग्राहकत्वं चाङ्गीकर्तव्यम्। तच्चैतदुभयमपि चित्रमित्यर्थः। अपि च सासती चेत् क्रियाभिव्यनक्ति, तथा सति असत्तायाः सर्वत्र सुलभत्वात् न किञ्चिदपूर्वं नाभिव्यक्तमिति। **क्रियाविलोपः** प्रयत्नविलोप इत्यर्थः॥

अत्र शब्दं प्रमाणान्तरमसहमानो **दिङ्नागः** तल्लक्षणं विकल्प्याक्षिपति—**आप्तोपदेश** इति। अन्यस्मादन्यस्य निश्चयो न तावदसंबन्धादतिप्रसङ्गात्। न च शब्दः अर्थात्मा, नाप्यर्थकार्यः। विनाप्यर्थं पुरुषविवक्षामात्रादेव तदुत्पादात्। तस्मात् न साक्षात् शब्दादर्थनिश्चयः, विवक्षाकार्यतया तु विवक्षां गमयेत्। सा चार्थाभिप्रायपूर्वा। अभिप्रायश्च कश्चिन्मनोमात्रयोनिः, अपरस्तु प्रमाणमूलः। तत्र यः प्रमाणनिश्चितमर्थं विवक्षति, यथाविवक्षं चोच्चारयति स आप्तः। तस्य वचनात् कार्यात् कारणं विवक्षा अनुमीयते। तस्याश्च कारणमर्थज्ञानम्। [6]ततश्चार्थज्ञानस्यार्थकार्यत्वादिति प्रमाणगतिः। तत्राप्तोपदेश इत्यत्रोपदेशक्रियया उपदेष्टार उपस्थापिताः। ते च प्रायेण विसंवादका दृष्टा इत्याप्तग्रहणेन तेषामविसंवादित्वम्। ततश्च उपदेशादर्थविनिश्चयो भवत्वित्येतदर्थं यद्युच्येत इत्याह—**यद्याप्तानामिति**। उपदेष्टृणामित्यर्थः। इमं कल्पं दूषयति—**तदनुमानात्**। अविसंवादित्वमुपदेष्टुरानुमानिकम्, तादृशस्य वचनमर्थविनिश्चये

---

१. भेदेन तद् दृष्टम् C २. यद् भेददर्शनमिव C ३. अपूर्वं J ४. क्वचित् C
५. सत्या C ६. ततश्चार्थः। तज्ज्ञानस्या° K

अनुमानमेव । तथा हि यद् यन्निर्दोषसत्त्वीयं वचनं तत्सर्वमर्थवत्, यथा बुद्धस्य क्षणिकनैरात्म्यादिविषय उपदेशः, तथा चायं विवादाध्यासित उपदेश इति । यथोक्तं **भदन्तेन**

आप्तवाक्याविसंवादसामान्यादनुमानता ॥

इति । द्वितीयं कल्पमातिष्ठते—**अथार्थस्य तथाभावः** । अत्र हि उपदिश्यत इत्युपदेश इति व्युत्पत्त्या अर्थ उच्यते । आप्तः प्राप्त उपदेशो यस्मात्[1] स तथोक्तः । एतदुक्तं भवति यस्मात् शब्दादवगम्यार्थं प्रवर्तमानः प्राप्नोति तमेवार्थं स आप्तोपदेशः शब्दः प्रमाणम् । एवं च यथा शब्देन योऽर्थो दर्शितः, तस्याप्त्या तथाता दर्शिता भवति । तदिदमुक्तम्—**अथार्थस्य तथाभाव** इति । दूषयति—**सोऽपीति** । तदेव स्फुटयति—**यदा हीति** । आप्त्या हि तथात्वं विनिश्चिन्वन् अर्थस्य नाप्रतिपन्नतया निश्चेतुमर्हति । प्रतिपत्तिश्च प्रायेण प्रत्यक्षेणेति प्रत्यक्षत इत्युक्तम् । तमिममाक्षेमपाकरोति—**तन्नेति** । नाप्तत्वसहायः शब्दोऽर्थं बोधयतीति सूत्रार्थः । नापि शब्दार्थप्राप्त्या शब्दार्थतथात्वमिति । कस्तर्हि इत्यत आह—**अपि त्विति** । **इन्द्रियसंबद्धासंबद्धेष्विति** दृष्टादृष्टेष्वित्यर्थः । यथोक्तं स द्विविधो दृष्टादृष्टभेदादिति[2] । एतदुक्तं भवति, नाप्तत्वहेतुकमविसंवादित्वमनेन सूत्रेणागमार्थतया प्रतिपाद्यते । नाप्यर्थतथात्वम् आगमार्थतया प्रतिपाद्यते । नाप्यागमः प्रत्यक्षानुमानाभ्यां न भिद्यते, किं तु उपदेशः शब्द इत्युक्तम् । उपदेश इति च कारकपदम्, उपदिश्यते ज्ञाप्यते प्रयोजनवानर्थोऽनेनेति । तथापि वार्तिकाद्युपदेशोऽपि शब्दः स्यादित्यत उक्तम्—**आप्तेति** । तेनोपदेशपदादेवागमस्य वाक्यार्थप्रतिपत्तिः फलमुक्तम् । तदिदमुक्तम्—**या शब्दोल्लेखेन** पदार्थस्मरणावान्तरव्यापारात् शब्दादेवार्थं प्रत्येमीत्यनेनोल्लेखेन [3]**प्रतिपत्तिः सागमस्यार्थः** फलमिति । आप्तत्वं च न वाक्यार्थं प्रत्याययति अपि त्वागमस्याव्यभिचारिताम्[4] । न च यतः प्रामाण्यमवगम्यते ततः प्रमेयमपि । तथा च सति प्रामाण्यज्ञानहेतोरनुमानादेव प्रत्यक्षादिप्रमेयावगतिरिति प्रत्यक्षादीनामप्रामाण्यप्रसङ्गः । [5]तथासति कस्यानुमानमपि प्रामाण्यमवधारयेत् । न चाप्तवाक्यं कार्यं [6]सद् वक्तृज्ञानानुमानद्वारेणार्थेऽप्यनुमानमेव, न त्वर्थस्य प्रत्यायकमिति सांप्रतम् । यदि हि नार्थं प्रत्याययेत् ज्ञानमात्रमनुमापयेत्, तथा च नार्थविशेषसिद्धिः । न च ज्ञानस्यार्थादन्योऽस्ति कश्चिद् विशेषः । तस्मात् वक्तृज्ञानविशेषणाय पूर्वं शब्दादेव केवलाद् वाक्यार्थज्ञानम्

---

१. इत्युपदेशोऽर्थ उच्यते इति आप्त्युपदेशो यस्मात् C २. तुल° १.१.८ ३. प्रतिपत्तिरागमार्थः C ४. चागमस्यार्थं प्रत्याययित्वा स्वस्याव्यभिचारित्वम् C ५. तस्मिंश्चासति C ६. स्ववक्तुर्ज्ञा° C

एषितव्यम् । एवं च कृतं वक्तृज्ञानानुमानेनार्थप्रतिपत्त्यर्थेन केवलं प्रामाण्यज्ञानाय तदुपयोग इति । न चाविनाभाव एव संबन्धो येन शब्दार्थयोरसंबन्धेन गम्यगमकत्वं न स्यात् । अस्ति हि साङ्केतिकः संबन्धोऽनयोरिति वक्ष्यते[1] । न चाविनाभावः एव प्रत्यायनाङ्गम् , चक्षुरादयो नीलादिभेदव्यभिचारिणोऽपि दृष्टाः तत्प्रतिपादका इत्युक्तम् । तस्मात् पदानि कृतसंकेतानि स्वार्थान् स्मारयन्ति , आकांक्षायोग्यतासत्तिसध्रीचीनानि अदृष्टपूर्वं वाक्यार्थं बोधयन्ति, न संगतिग्रहणमपि प्रतीक्षन्त इति दूरेऽनुमानाद् भवन्ति । यथा चैतत्, तथोद्देशे लेशत उक्तम् । उपपादितं च तत्त्वबिन्दौ । तस्मात् सर्वमवदातम् ॥७॥

॥ परिशुद्धिः ॥

इह शब्दे त्रिविधा विप्रतिपत्तिः—प्रामाण्यतो, भेदतो, लक्षणतश्चेति । तत्र प्रथमः कल्पो वचनविरोधादेव निरस्तः, तत्प्रामाण्यमनभ्युपगम्य विवक्षितार्थस्य प्रतिपादयितुमशक्यत्वात् ; प्रतिपादने वा तत एव तत्प्रामाण्यसिद्धेरिति । भेदस्तु परीक्षापर्वणि निरूपणीयः, लेशतस्त्विहापि । व्यावर्तकधर्मयोगादेव भेदव्यवहारोऽपि । लक्षणं च तथा । ततः तदेव विवेचनीयम् । तत्र विप्रतिपद्यमानं प्रति तु परीक्षावतार इत्याशयवान् सिद्धवत् सङ्गतिभाष्यं व्याख्याय लक्षणमवतारयति—अथेति ॥

तत्र समयवलेन सम्यक्परोक्षानुभवसाधनं शब्द इति एके[2] । इह चाद्येन पदेनानुमानम् , द्वितीयेन शब्दाभासः, तृतीयेन सविकल्पकप्रत्यक्षम् , चतुर्थेन पदार्थस्मरणम् , पञ्चमेन कर्तृकर्मणी निरस्येते । [3]अपरे तु चेष्टायामपि गतमेतदित्यतिव्यापकं मत्वा शब्दत्वसमवाये सतीत्याहुः ॥

अत्र प्राच्यानामयमाशयः । यदि चेष्टा न प्रामाणम् , अप्रसङ्ग एव तस्याः, किं शब्दत्वसमवाये सतीत्यनेन निर्वर्तनीयम् ? प्रमाणं चेत् तस्याः प्रत्यक्षाद्यनन्तर्भावे पञ्चमप्रमाणाभ्युपगमप्रसङ्गः । तस्मात् शब्द एव चेष्टायाः प्रवेशः समयबलप्रवृत्तेः । शब्द एव तु शब्दव्यवहारो लौकिकः प्रायिकत्वात् , चाक्षुषे ज्ञानदर्शनव्यवहारवदिति । तेऽपि स्थूलदृश्वानः । चेष्टा ह्यभिप्रायस्थशब्दस्मरणमात्रोपयोगिनी लिपिवत् । शब्द एव तु चेष्टोत्पादितस्मरणसमारूढः प्रमाणम् । अर्थेन च स्मृत्युत्पादनात् [4]शब्दविषयम् एवास्याः प्रामाण्यम् , प्रमाणफलस्य प्रमाणत्वात् । न च स्मृतिरस्याः

१. २.१.५२ २. द्रः न्यायसारः ३.२ ३. जयन्तप्रभृतयः [?] ४. शब्द एव M

अवान्तरव्यापारः। यदि चेष्टोपधानमन्तरेणावगतोऽपि शब्दो नार्थं गमयेदेवमपि संभवेत्, न चैतदस्ति ॥

नन्वेवं सति चेष्टया एडमूकव्यवहारानुपपत्तिः, न ह्यसौ ततः शब्दस्मृतिमान्, अगृहीतसमयत्वादिति चेत्?—अत एव तं प्रति समयबलेन शब्दवदर्थेऽपि चेष्टायाः कुण्ठत्वमेव। व्यवहारस्तु अन्वयव्यतिरेकाभ्यां नियतविषयाविनाभावग्रहे प्रवृत्तिनिमित्तौपयिकः[1], अभिप्रायानुमानादेव एडमूकस्य, करितुरगयोः कशाङ्कुशाभिघातादिव। अथ कृतसमयापि चेष्टैव किं न स्यात्, अविनाभावाभावात्? स्मारयतु वा पदार्थान्, [2]तथापि न प्रमाणम् ॥

द्विविधा हि सा समयप्रकारभेदात्—कृत्यन्वयिनी, ज्ञप्त्यन्वयिनी च। तत्र कृत्यन्वयिनी प्रयोजकाभिप्रायं स्मारयन्ती प्रवर्तयति, न तु किञ्चित् प्रमाणयति शङ्खध्वनिवत्। अतोऽप्रमाणमेव। ज्ञप्त्यन्वयिनी तु कारकेषु प्रातिपदिकार्थप्रधाना, क्रियासु वर्तमानार्थप्रधाना। तथा च गौरश्वः पुरुष इत्यादिपदैरिव स्वतन्त्रेषु पदार्थेषु स्मारितेषु[3] परस्परान्वययोगः। पदैकदेशविभक्तिविशेषवत् चेष्टैकदेशविशेषात् प्रकरणादिविशेषाद् वा[4] कारकादिस्मृतिनियम इति चेत्—चेष्टैकदेशविशेषाभावात्। न ह्यतीतानागतवर्तमानपाकादिप्रतिपादकं चेष्टैकदेशविशेषं पश्यामः। प्रकरणादयस्तु विषयविशेषे शब्दान् नियमयन्ति, न तु कारककालविशेषेषु प्रवर्तयन्ति। तथात्वे वा गौरश्वः पुरुषो हस्तीत्यादावपि कर्मत्वादीन्युन्नीय विवक्षितार्थावसायः स्यात्। न हि चेष्टाकलापे प्रकरणादयः कारकविशेषादीनाक्षेप्तुमलम्, न तु पदकदम्बक इत्यस्ति नियमः। तथा च कालसंख्याकारकविशेषप्रतिपादकविभक्तिसमभिव्याहारवैयर्थ्यप्रसङ्गः ॥

कथं तर्हि ततो व्यवहारविशेषाः? संशयप्रतिभयोरन्यतरस्माद् विशेषानुपलम्भे विदूरवर्तिनि समानधर्मिणि स्थाण्वर्थिन इवेति। तस्मादुभयथापि चेष्टा न प्रमाणम्। अतः कस्य चतुर्षु प्रवेशाप्रवेशौ चिन्तनीयौ? एतच्च संभावितप्रामाण्यम् ऐतिह्याद्यन्तर्भावयता चेष्टापभ्रंशलिपिध्वनिपदैकदेशान् सांव्यवहारिकानप्यकीर्तयता सूत्रकृता सूचितमपि मन्दमतयो न गृह्णन्तीति तदनुकम्पया लक्षणं व्याचक्षाण एव किञ्चिदुद्भावयति ॥

**वाक्यज्ञानं तदर्थज्ञानं वेति।** आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकं वाक्यम्। तस्य ज्ञानं ज्ञायमानं तदित्यर्थः। यथाश्रुतमुत्तरत्र। किं तु तत्रापि वाक्यमेव

१. °निमित्युपयिकः J २. तथा om M ३. स्मारितेषु om M ४. वा om J

प्रधानम्, असाधारणत्वादिन्द्रियादिवत् । सन्निधितारतम्यविवेचने तु सर्वस्मिन्नयं न्यायः । हानादिबुद्धिः परामर्शलक्षणा, इतरस्या अनुमानफलत्वात् । तदनेन निराकाङ्क्षायोग्यानासन्नानि पदानि निरस्यता चेष्टादयोऽपि निरस्ता भवन्तीति विजातीयव्युदासः । स्वार्थद्वारकं चाकाङ्क्षादिकमिति संगतिग्रहपदप्रतिसन्धानतदर्थस्मरणयोग्यताद्यनुसन्धानप्रकरणादिकमुक्तं भवति । अनेनैवाभिप्रायेणोक्तम्—पदार्थस्मृत्याद्यस्त्विति । तदनेन प्रत्यक्षादेः समानजातीयस्य व्युदासः । अनाप्तवचसां चाप्तग्रहणेन [१]निराकरणमिति सामान्यलक्षणलाभः ॥

ननु नायमुपदेशशब्दस्यार्थो यथाश्रुति चाव्यापकता सिद्धार्थसंग्रहादिवदित्यत आह—**यद्यपीति** । न केवलं भूतार्थासंग्रहः साध्यार्थमपि न किञ्चित् संगृह्णातीत्याह—**यद्यपि चेति** । ननु [२]प्रवर्तकत्वेन विधेराज्ञाध्येषणयोः को विशेषः, येनानयोरुपदेशपदेनासंग्रह इत्यतस्ताभ्यां विधेर्वैधर्म्यं प्रतिपाद्य तयोरपि ततो वैधर्म्यमुक्तम्—**ते हीति** । तत् किमाज्ञाध्येषणासंग्रहेऽपि प्रयत्नः कर्तव्यः ? नेत्याह—**तथापीति** ॥

अयमाशयः । यद्यपि लक्षणया ते अपि संग्रहीतुं शक्येते परस्थाने प्रयोक्तृपदं प्रक्षिप्य, तथापि नास्त्यस्माकं तदसंग्रहेऽपि काचित् प्रयोजनक्षतिः, स्वर्गापवर्गोपायविषयस्य शब्दविशेषस्य लक्षणारम्भात् शास्त्रस्य तदधिकारेण प्रवृत्तेः । सामान्यलक्षणे त्वकृते [३]विशेषलक्षणानवतार इत्यतः प्रथमं तथैव व्याख्यातम् । वक्ष्यति च **दिङ्नागनिराकरण**प्रस्तावे[४] । परपदमपहाय प्रयोजनवानित्येव वाक्यार्थप्रतिपत्तिः फलमिति च लाक्षणिकपदप्रयोगस्य चायमेवोपयोगो यदुभयलक्षणलाभः । प्रयोजनमर्थगतमसाधारणं ग्राह्यं च । साधारणं तु शब्दस्य स्वार्थप्रतिपादकत्वम्[५] । तच्च परस्यैव । ततः तदपेक्षया परेति विशेषणमनर्थकं स्यात् ॥

ननु यदि **उपनिषदः** प्रयोजनवत्यः, नूनं कञ्चिदर्थं प्रतिपादयन्त्यः क्वचित् परं प्रवर्तयेयुः प्रवृत्त्यङ्कितत्वात् प्रयोजनसद्भावस्य । न चेत् परं प्रवर्तयेयुः कथं परप्रयोजनवत्यः प्रवृत्तिविरहाङ्कितत्वात् प्रयोजनाभावस्येत्यत आह—**यद्यपीति । न क्वचिदित्यादौ** साक्षादिति शेषः । **बुद्धर्षभादी**नामनाप्तत्वे कारको हेतुर्मायामोहनिमित्तत्वम् । ज्ञापकस्तु प्रमाणविरुद्धसर्वधर्मक्षणिकनैरात्म्यादिवचनम् । यथाश्रुतं भाष्यमव्यापकं मन्वान आह—

---

१. न वारणं A, निवारण° J २. प्रवर्तकं न विधिना M ३. °लक्षण° om J ४. °करणावसरे J ५. °पादनम् JA

**सुदृढेनेति** । सुदृढं परितो निरस्तविभ्रमाशङ्कम् प्रमाणं प्रमा । **तथावधारिता** विषयीकृता इति । नेयं नित्यानित्यव्याप्तिमभिसन्धाय ॥

ननु कारणमधितिष्ठत एवेश्वरस्यापि कर्तृत्वम् । तथा च स्थानकरणादीनामन्वयव्यतिरेकाभ्यां वर्णनिष्पत्तिं प्रति सामर्थ्यावगमात्, तदधिष्ठानशून्यतया तस्य नागमकर्तृत्वं भवेत् । न च शरीरमन्तरेण तस्य स्थानकरणादिसंभवः, तेषां ताल्वादिविवृतादिरूपत्वादित्याशयवानाशङ्कते—**तथापीति** । **भाष्य**मुत्तरयति—**अत आह उपदेष्टेति** ॥

न वयमस्य भगवतः कार्यविशेषेणानुविहितभावाभावतयोपकरणं शरीरं निराकुर्मः, त्र्यणुकादिनिष्पत्तये द्व्यणुकादिवच्छरीरान्वयव्यतिरेकानुविधायिकार्यनिष्पत्तये तदुपग्रहस्यापीष्यमाणत्वात् । अपि स्वायतनतया कर्तृत्वनिर्वाहकतया व्यापकतया च तत् तस्य नेष्यते भोगाभावात्, कर्तृत्वस्य नित्यत्वात्, [1]कार्यस्य कर्त्रा निरूपाधिसंबन्धात्, [2]शरीरस्य व्यभिचाराच्चेत्यभिप्रायवतो विवरणम्—**स्थानकरणेति** । तदेवं रूप आप्तः कुतः प्रमाणात् निश्चेतव्यः, परचित्तवृत्तीनामप्रत्यक्षत्वात्? कायवाग्व्यापारयोश्च [3]बुद्धिपूर्वकम्, अन्यथापि [4]संभवादित्याशङ्क्य म्लेच्छा अपि हीत्यादिना **भाष्य**तात्पर्यं ब्रुवाणः तन्निश्चयोपायमपि लेशतो दर्शयति—**हेतुदर्शनशून्या** इति ॥

अयमाशयः । द्विविधो हि पुरुषोऽसर्वज्ञः सर्वज्ञश्चेति । तत्र पूर्वस्य तावत् [5]सत्त्वप्रसाधकादेव प्रमाणाद् रागद्वेषमोहविरहसिद्धावनाप्तत्वं निरस्तम् । उत्तरस्यापि ज्ञानेच्छाप्रयत्नस्थानकरणपाटवानि तावदुपदेशमात्रेणैव निश्चीयन्त इति तत्र सर्वेषामविवाद एव । ज्ञानं तु यथार्थमयथार्थं वा स्यात् । इच्छापि प्रतिपिपादयिषा विप्रलिप्सा वा स्यादिति सन्देहोऽवशिष्यते । तत्राप्यभ्यासदशापन्नोऽयमर्थोऽस्येति सामान्यतो निश्चये भवत्येव तज्ज्ञानस्य यथार्थत्वनिश्चयः, यथाभ्यासदशापन्नमिदमरण्यममीषां म्लेच्छानामतः अस्मिन्नेते मार्गामार्गविभागज्ञा इति पान्थानामेवं निश्चयः । विप्रलिप्सा च हेतुदर्शनेन व्याप्ता हेतौ सति स्यात् । स च द्विरूपः, स्वोपकारः परोपकारो वा? तत्र तावत् पान्थेषु विमार्गेण प्रतिष्ठमानेषु म्लेच्छादीनां न कश्चित् स्वोपकारः, स्वस्य गृहीतत्वात् शरीरमात्रस्य च करणीयान्तराभावात्, भावे वा अपरित्यागात् । नापि द्वितीयः, न ह्यनुन्मत्ता अनपकारिणमपकुर्वते । नापि परापकारमात्रं पुरुषार्थः तथा सति सर्वः

---

१. कार्यत्वस्य M  २. शरीरव्यभि° JA  ३. न बुद्धि° M  ४. भावा° M  ५. सर्वं° J

सर्वमपकुर्यादित्येवं विप्रलिप्सापि निवार्यते । अनभ्यासदशापन्नविषये तु प्रवृत्तिसामर्थ्यात् प्रमाणान्तरसंवादाद् वा मोहविप्रलिप्सयोर्निवृत्तिरिति ॥

म्लेच्छा अप्याप्ता भवन्ति यतः प्रतीतिगोचराः, ततः कः सन्देहो महाधियाम् आर्याणां च तत्त्वावधारण इति अपिशब्दार्थः। एतेन यद् येन रूपेण न निश्चितम्, न तत् तेन व्यवह्रियते, यथा रथ्यापुरुषः सर्वज्ञत्वेन, न प्रतीयते चाभिमतः पुरुष आप्तत्वेनेति व्यापकानुपलब्धेरसिद्धत्वमुक्तम् । **परेषाम्** अव्यापकमाप्तलक्षणम्, यथाश्रुतस्यार्यम्लेच्छयोः अभावात् । विशेषणान्तरप्रक्षेपे त्वस्मल्लक्षणाभ्युपगम इत्यर्थः । त्रिपर्यस्तस्यायं प्रश्नः, विपर्यासश्च प्रमाणाभासमूलः । अतस्तमाह—**अस्तीति** । भागासिद्धतामाशङ्क्याह—**अत्र यावतीति** । ननु परप्रयोगमदूषयित्वा स्वातन्त्र्येण प्रयोगान्तरोपादानं प्रकरणसमा जातिः, सत्प्रतिपक्षतया चेत् स्वर्गादीनां प्रत्यक्षत्वं कुतः सेत्स्यतीत्यत आह—**योगजे त्विति** ॥

ननु प्रत्यक्षं[1] नाम तत्सामग्रीसंपदा व्याप्तम् , सा च बहिरिन्द्रियगर्भा मनोगर्भा चेत्युभयरूपापि न परमाण्वादावस्ति चक्षुरादेर्नियतविषयत्वात्, मनसो बहिरस्वातन्त्र्यात् । प्रयोगोऽपि, स्वर्गादयो न कस्यचित् प्रत्यक्षज्ञानगोचराः तत्सामग्रीरहितत्वात् । तदुक्तम्—

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा,
चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मनः ॥

इति । तस्मादापाततस्तावत् सत्प्रतिपक्षा एवैते हेतव इत्यत आह—**अस्माकं तु सम्यश्च इति** ॥

अयमाशयः, दृश्यते हि तावद् बहिरिन्द्रियोपरमेऽप्यसन्निहितदेशकालार्थ-साक्षात्कारः स्वप्ने । न च वाच्यं स्मृतिरेवासौ पटीयसीति । न हि स्मरणानुभवविभागे अपि साक्षी प्रष्टव्यः । किं तर्हि ? इदं स्मरामीदमनुभवामीति प्रतीत्या स्वसाक्षिकोऽयम् अर्थः । न चारोपितं तत्रानुभवत्वम्—अबाधनात्, स्मृतित्वानुल्लेखनात्[2] अनुपलब्धस्य स्वशिरश्छेदादेरवभासनाच्च । स्मृतिविपर्यासोऽसाविति चेत् ? यदि स्मृतिविषये विपर्यास इत्यर्थः, तदानुमन्यामहे । अथ स्मृतावेवायमनुभवत्वविपर्यास इत्यर्थः, तदा प्रागेव निरस्तः। न च संभवत्यपि, न ह्यन्येनाकारेण व्यवसायविषयीभूतोऽयमर्थोऽन्येन ज्ञानावच्छे-दकतयानुव्यवसीयते । तथा च स घट इत्युत्पन्नायां स्मृतौ भ्राम्यतस्तं घटमनुभवामीति

---

१. प्रत्यक्षत्वं M २. ॰त्वानुपपत्तेः M

स्यात्, न त्विमं घटम्, न ह्ययं घट इति स्मृतेराकारः। तस्मादनुभव एवासौ स्वीकर्तव्यः॥

अस्ति च स्वप्नानुभवस्यापि कस्यचित् सत्यत्वम्, संवादात्। तच्च काकतालीयमपि न निर्हेतुकम्, सर्वस्वप्नज्ञानानामपि तथात्वप्रसङ्गात्। हेतुश्चात्र धर्म एव। स च कर्मजवद् योगजोऽपि योगविधेरवसेयः, कर्मयोगविध्योस्तुल्ययोगक्षेमत्वात्। तस्माद् योगिनामनुभवो धर्मजत्वात् प्रमा, साक्षात्कारिप्रमात्वात् प्रत्यक्षफलम्। धर्माजनकभावनाप्रभवस्तु न प्रमेति विभाग इति[1]। तत्सामग्रीरहितत्वादित्यसिद्धो हेतुरिति सूक्तम्॥

**अस्माकं तु सम्यञ्च इति बहुवचश्चेति** अन्वाचये चकारः। यद्यपि चास्माकं परमसर्वज्ञसिद्धाववान्तरसर्वज्ञे न सिध्यत्यपि न काचित् प्रकृतहानिः, तथापि तत्सद्भावे अपि प्रमाणसद्भावात् सोऽपि नोपेक्षामर्हतीति॥

इह दिङ्नागेन भावसाधनत्वकर्मसाधनत्वाभ्यामुपदेशपदं विकल्प्य दूषितम् करणसाधनत्वपक्षस्त्वस्मदभिमतोऽपि कुत उपेक्षित इत्यत आह—**अन्यस्मादन्यस्येति**। [2]अर्थेन हि साक्षात् प्रतिबन्धः प्रत्यक्षस्यैव, परम्पराप्रतिबन्धोऽनुमानस्य। तदस्य शाब्दस्य विज्ञानस्य साक्षादर्थप्रतिबन्धे प्रत्यक्षत्वप्रसङ्गः, परम्पराप्रतिबन्धे त्वनुमानत्वापत्तिः। अप्रतिबन्धे त्वप्रामाण्यमेव इत्यसंभव एव करणव्युत्पत्तिपक्षस्येति मन्यत इत्यर्थः। अत्र भावव्युत्पत्तिपक्षे आप्तत्वनिश्चयः शब्दफलम्, तद्द्वारा वाक्यार्थनिश्चयो वा। नन्वाप्तत्वेन निश्चितानां किमपरमविसंवादित्वमवशिष्यते, यन्निश्चेयमित्यत आह—**उपदेष्टृद्रष्टृणामित्यर्थ** इति॥

अर्थस्य साक्षात्कारः प्रत्यक्षत्वमिति वर्णयोजना। तेनायमर्थः। आप्तोपदेशः तस्मिन्नेवाप्ते निश्चयं कुर्वन् शब्दः प्रमाणम्, अथ वा आप्ते निश्चयं कृत्वा तत्सहायो वाक्यार्थनिश्चयं जनयन्नित्युभयं दूषयतीत्याह—**इममिति**। [3]अनुमानात्करुणाभ्यासहेतुदर्शनशून्यत्वादेः कर्मसाधनत्वपक्षमुत्थापयति—**द्वितीयमिति**। अत्राप्युपदर्शितार्थप्राप्तिनिश्चयः, तद्द्वारा [3]अर्थतथात्वनिश्चयो वा शब्दस्य फलम्। तत्र प्रथमं दर्शयति—**यस्मादिति**। द्वितीयं दर्शयति—**एवं चेति**। उपदिश्यमानोऽर्थः प्राप्तः, प्राप्तत्वेन निश्चितो यस्मादिति वा। तथात्वेन निश्चित इति वा सूत्रयोजना, उभयमपि दूषयतीत्याह—**दूषयतीति**॥

---

१. इति om JA　२. अर्थे तत्साक्षात् M　३. °नकरणाभ्यास° om M, indist. J　३. अर्थतत्त्व° M

नन्वर्थप्राप्त्या अर्थतथात्वं निश्चीयमानं लिङ्गभूतयैव निश्चीयते । तत् कथमाह प्रत्यक्षेणेत्यत आह—**आप्त्या हीति** । [1]आप्तिनिश्चयेऽपि शब्दस्य व्यापारो नास्तीति दर्शयितुमर्थतथात्वनिश्चयोऽपि प्रत्यक्षेणेत्युक्तम् , मूलभूतत्वात् तस्येत्यर्थः ॥

ननु शब्दोपलब्धस्यार्थस्य क्वचिदनुमानेनापि [2]प्रतिपत्तिरस्तीत्यत उक्तम्—**प्रायेणेति** । अत्र चोभयोरपि पक्षयोराप्तोक्तत्वप्रवृत्तिसामर्थ्यहेतुप्रधानयोः शब्दस्य प्रामाण्यनिश्चयः फलमिति [3]शङ्कितुमुचितमपि न शङ्कितम् , प्रामाण्यनिश्चयाविनाभूतत्वात् अर्थनिश्चयतत्तथात्वनिश्चययोः, तस्य तयोरेवान्तर्भूतत्वादिति मन्यमानेनेति । **तमिममिति** । **नाप्तत्वसहायो** नाप्तत्वनिश्चयसहाय इत्यर्थः । **प्राप्त्या** । प्राप्तिनिश्चयेनेत्यर्थः ॥

नन्वनभ्युपगतेभ्यः पक्षेभ्यो न कश्चिदभ्युपगतस्य विशेषं पश्याम इत्यत आह—**एतदुक्तं भवतीति** । नाप्तत्वहेतुकं नाप्तत्वनिश्चयहेतुकम् । [4]अविसंवादित्वम् अविसंवादित्वनिश्चयः । अनेन सूत्रेणागमार्थतया आगमफलतया प्रतिपाद्यते । नाप्यर्थतथात्वमर्थतथात्वनिश्चय[5] इति नेयम् । उपलक्षणतया च विधाद्वयमुदाहृतम् । यथा तु पूर्वपक्षे व्याख्यातम् , तथात्रापि द्रष्टव्यम् । किं तर्हि फलमस्येत्यत आह—**किं त्विति** । अनेनोल्लेखेनानुव्यवसायेन या प्रतिपत्तिर्विषयीक्रियते सेत्यर्थः ॥

यद्येवं तर्हि क्वाप्तोक्तत्वनिश्चय उपयुज्यत[6] इत्यत आह—**आप्तत्वं चेति** । आप्तोक्तत्वं चेत्यर्थः । ननु प्रामाण्यमर्थाव्यभिचारः । स खलु कथमर्थमप्रत्याय्य प्रत्याययितुं शक्येत ? ततश्च पुनराप्तोक्तत्वेनार्थनिश्चय आयात इत्यत आह—**न च यत इति** । **प्रमेयमिति** स्वातन्त्र्येणेति शेषः । अवच्छेदकतया तु तस्यापि स्फुरणमिष्यत एव, मनसैव । घटस्येत्यर्थः ॥

तदयं संक्षेपः । भूतार्थोपदेशकत्वं हि प्रामाण्यम् । तदेव प्रमेयमनुपदर्शयतः शब्दस्य न स्यात् । तथाचाप्तोक्तत्वेनापि हेतुना किं निश्चीयेत ? तथा च कस्यावच्छेदकतया अर्थोऽपि परिस्फुरेत् ? तस्माद् यथा सत्तामात्रावस्थितैरदुष्टैरिन्द्रियैः प्रत्यक्षं जन्यते, ज्ञातादुष्टत्वैस्तु[7] प्रमाणतया निश्चीयते, तथा सत्तामात्रावस्थितेनाप्तेन प्रमाणं शब्दो जन्यते । ज्ञाताप्तत्वेन तूपदेष्ट्रा तथात्वेन निश्चीयत इति प्रत्यक्षवत् स्वविषये व्यवस्थेति ज्ञानमात्रमनुमापयेत् । अव्युत्पन्नमिव व्युत्पन्नमपीति शेषः ॥

अयमाशयः । अस्ति तावद् वाक्यादर्थविशेषावसाय इत्यविवादम् । न चायं लैङ्गिकः, वचनमात्रस्यानैकान्तिकत्वात् , आप्तोक्तत्वस्य प्रागेवासिद्धेः । न च वचनस्य

---

१. प्राप्ति॰ J  २. प्राप्तिरस्ति JA  ३. ॰तुमुचियमपि न शङ्कि॰ om M
४. अविसंवादित्वम् om M  ५. ॰प्यर्थतथात्वनिश्चयः M  ६. क्वाप्तनि॰ M  ७. ॰दुष्टैस्तु M

लिङ्गत्वपक्षे साध्यमप्यस्ति। तथा हि, न तावत् तादात्म्यतत्प्राप्ती संभवतः। नापि तदुत्पत्तिः, आप्तवचसामप्यतीतानागतगोचराणां परम्परयाप्यर्थादनुत्पत्तेः। तस्मादर्थज्ञापकत्वमेव शब्दानामर्थवत्त्वम्। न च तदेवानुमेयम्, तस्य स्वातन्त्र्येण भवद्भिरनभ्युपगमात्। अभ्युपगमे वा विवादविच्छेदात्[1]। न च लिङ्गस्य स्वात्मनो लैङ्गिकज्ञानजनकत्वमेवानुमेयम्, तस्य लिङ्गान्तरविषयत्वात्। तस्माद् वचनमात्रलिङ्गपक्षे यद् वचनं तद् बुद्धिपूर्वकमित्युदाहरणीयम्। बुद्धिस्तु किञ्चिदुल्लिखन्ती जायत इति स्वभावादेवोल्लेख्यमात्रप्रतिलम्भः, न तु तत्रापि भूताभूतविभागो, न तु तरां प्रकारविभागः। तस्मात् ज्ञानमात्रमनुमापयेदिति सूक्तम्॥

किमतो यद्येवमित्यत आह—**तथा चेति**। व्यवहारानुभवाभ्यां [2]व्यवस्थापितापि नानुरोधिता स्यात्। व्युत्पत्तिप्रयासवैयर्थ्यप्रसङ्गश्चेत्यर्थः। ननु ज्ञानविशेषादेवार्थविशेषः सेत्स्यतीत्यत आह—**न चेति**। ज्ञानेनार्थः साधयितव्यः[3]। तस्य च न कश्चिद् विशेषोऽर्थाहिताकारादिलक्षणः समस्ति। साकारत्वेऽप्यतीतानागतादिगोचरस्य तस्यार्थादनुत्पत्तेः। तस्मादुल्लेख्यतयार्थ एव विशेषो वक्तव्यः। स चेत् ज्ञानसिद्धावन्तर्भूतः[4] किमपरं तेन साधनीयम्? न चेदन्तर्भूतः पुनरप्यविशिष्टमेव ज्ञानमित्यर्थः॥

स्यादेतत्। तज्ज्ञानसिद्ध्यन्तर्भूत एवार्थोऽवच्छेदकतया सिध्यतु[5]। यद्यपि वचनमात्रमर्थविशेषोल्लेखि ज्ञानपूर्वकतां व्यभिचरति, तथापि यः पदकदम्बकविशेषो यत्पदार्थजातं स्मारयति, स तत्संसर्गज्ञानपूर्वक इत्यस्ति[6] नियमः। एवं च समयग्रहस्याप्युपयोग इति चेत्—न, गौरश्वः पुरुष इत्यादिपदकदम्बकेन व्यभिचारात्। विशेषणविशेष्यभावेनावस्थितौ न व्यभिचरतीति चेत्? सोऽयं विशेषणविशेष्यभावो न तावत् स्वरूपतः, पदानां परस्परं स्वातन्त्र्यात्। नाप्यर्थतः, तस्यानवगमात्। अवगमे वा कस्ततोऽपरः पदार्थानां संसर्गो, यो ज्ञानावच्छेदकतया अनुमातुमिष्टः? आकांक्षादिमत्त्वे सतीति विशेषणान्न व्यभिचार इति चेत्? अथ केयमाकांक्षा? न तावदविनाभावः स्वरूपतोऽर्थतश्च, तस्या अभावेऽपि वाक्यार्थप्रतिपत्तेः[7]। भावेऽप्यप्रतीतेः, वाक्यार्थप्रतिपादनेन विनापर्यवसानमाकांक्षेति चेत्? एवं तर्हि वाक्यार्थविशेषप्रतिपादकं यत् पदकदम्बकम्, तत् तत्स्मारितार्थसंसर्गज्ञानपूर्वकमिति प्रयोगार्थः। तथा च प्रागेव साध्यविशेषसिद्धये हेतुविशेषसिद्धिमिच्छता वाक्यादेव वाक्यार्थविशेषप्रत्यय एषितव्य इत्युपसंहरन्नाह—**तस्मादिति**॥

---

१. विवादविनिवृत्तेः JA २. व्यस्थितापि M ३. °नार्थे साधयितव्ये M
४. °सिद्धान्वभूतः M ५. साध्यते M, सिध्यति A ६. इत्यस्तु M ७. प्रतीतेः M

स्यादेतत् । तथाप्यसंबद्धस्य प्रकाशकत्वेऽतिप्रसङ्ग इत्यत आह—न चेति ननु न हि संबन्ध इत्येव गमकोऽतिप्रसङ्गात् अपि त्वविनाभाव एव । स च शब्दस्यार्थेन नास्तीत्यत आह—न चाविनेति । यत् त्वत्रोक्तम्, चक्षुरपि रूपकार्यत्वादेव रूपं प्रकाशयतीति, तदयुक्तम् । यदि हि तत्कृतत्वादेव तद् गमयेत्, रूपमिव रसादीनपि गमयेत् । अविनाभावज्ञानं [1]वा अपेक्षेत । न ह्यविनाभावस्यैष महिमा यदयं सत्तामात्रेणैव गमयति । तथात्वे वा धूमादपि चक्षुष इव सत्तामात्रावस्थितादेवाग्निः प्रतीयेत । अपि च ज्ञानसमसमयो वार्थः प्रकाशते, अनन्तरसमयो वा । तस्माच्च न चक्षुषो जन्म, स्वकारणादेवायमस्य स्वभावभेदलाभो यदनात्मानमप्यकारणमपि कारणत्वाविशेषेऽपि वा रूपमेवाज्ञातमेव सत्प्रकाशयतीति रूपोलब्धिलक्षणकार्यदर्शनबलेनैव तद्व्यवस्थाप्यते । तस्याशक्यापह्नवत्वादिति चेत् ? तर्हि यस्य यत्र प्रतिबन्धो नास्ति, न तस्य तत्र प्रामाण्यम्, यथा दहनेऽप्रतिबद्धस्य रासभस्येति व्यापकानुपलब्धिस्त्वयैवानैकान्तिकी कृता । किमस्माभिरत्र वक्तव्यम् ? किंनिबन्धनस्तर्हि प्रमाणव्यवहारः शब्दे, यन्निबन्धनश्चक्षुरादिषु । तत्रैव किं निबन्धन इति चेत् ? इदं महापाण्डित्यं यत् सिद्धमातृकायामप्यद्यापि सन्देहः । [2]भूतार्थानुभवजनननिबन्धनो हि प्रमाणव्यवहारः सर्वत्रेति बालोऽप्याह । तद्बलेनैव शब्दस्यापि तदनुगुणः स स्वभावभेदः स्वकारणादायातो व्यवस्थाप्यते । यतः तत्तत्सङ्केतोपधानसूत्रमर्थं प्रतिपादयतीति, तथापि समयस्य पुरुषायत्तत्वात् किमयं सांव्यवहारिकसङ्केतानेव शब्दान् प्रयुङ्क्ते ? किं वा स्वयमिदानीमर्थभेदेषु सङ्केत्येति सन्देहो न निवर्तत इति चेत्—न, उभयथाप्यसंभवात् । यद्यसौ प्रतिपादकः कथं स्वहृदयगुहानिक्षिप्तसमयानेव शब्दानुच्चारयेत् ? जानात्येव ह्ययं नाविदितसमया एते प्रतिपादका इति ॥

अथ विप्रलम्भकः, तथापि समयान्तरकरणे क उपयोगः, प्रसिद्धसमयैरेव विप्रलम्भसंभवात् । यत्रापि हि गुप्तसमयैर्व्यवहारः, तत्रापि न प्रतिपाद्यं प्रति समयो गोप्यः, अपि त्वविश्वस्तान् प्रतीति हृदि निधायाह—तस्मादिति[3] ॥७॥

स द्विविधो दृष्टादृष्टार्थत्वात् ॥१।१।८॥

॥ भाष्यम् ॥

यस्येह दृश्यतेऽर्थः स दृष्टार्थः । यस्यामुत्र प्रतीयते सोऽदृष्टार्थः । एवमृषिलौकिकवाक्यानां [4]विभाग इति । किमर्थं पुनरिदमुच्यते ? स न

---

१. च M २. यथार्थां॰ JA ३. तस्मादिति om A ४. प्रविभागः J

मन्येत दृष्टार्थ एवाप्तोपदेशः प्रमाणम्, [1]अर्थस्यावधारणादिति, अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति । इति प्रमाणभाष्यम् ॥ ८ ॥

॥ वार्त्तिकम् ॥

स द्विविध इति नियमार्थम् । अनेकधा भिन्न आगमः प्रत्यक्षानुमानविषयतायामेव व्यवतिष्ठते इति । वक्तृभेदेन वा द्वैविध्यं दृष्टादृष्टार्थप्रवक्तृकत्वात् । प्रत्यक्षत उपलब्धोऽर्थः दृष्टार्थः, अनुमानत उपलब्धोऽर्थोऽदृष्टार्थः इति । ऋष्यार्यम्लेच्छानामेतत् समानं लक्षणमिति सर्वेषामागमेन व्यवहारदर्शनादनियमः ॥

एवं चत्वार्येतानि प्रमाणानि यैर्देवमनुष्यतिरश्चां [2]व्यवहाराः प्रकल्प्यन्ते इति ॥८॥

॥ टीका ॥

**स द्विविधो दृष्टादृष्टार्थत्वात्** इति सूत्रस्य तात्पर्यमाह—**नियमार्थम्** । तद्विभजते—**अनेकधेति** । दृष्टादृष्टार्थत्वादिति भाष्यमतेन व्याचष्टे—**प्रत्यक्षेति** । आप्तप्रणीतत्वलिङ्गानुमितप्रामाण्यशब्दैकविषयस्वर्गयागादिसंबन्धादीनामनुमानविषयता [3] । यथाह भाष्यकारः, यस्यामुत्र प्रतीयते सोऽदृष्टार्थ इति । अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति । तेन दृष्टोऽर्थो यस्यागमस्य स तथा । एवमितरोऽपीति । तदेवं भाष्यमतेन व्याख्याय स्वमतेन व्याचष्टे—**वक्तृभेदेनेति** । दृष्टोऽर्थो येन स दृष्टार्थः प्रवक्ता, एवमदृष्टोऽर्थोऽनुमितो येन स तथा । तत्र दृष्टार्था ऋषयोऽस्मदादयश्च । अनुमितार्था अस्मदादय एवेति । एवमपि शब्दद्वैविध्यसाधने मा भूदपक्षधर्मतेति प्रवक्तृपदेन पूरयति—**दृष्टादृष्टार्थप्रवक्तृकत्वादिति** । अदृष्टार्थः प्रवक्ता यस्यागमस्य स तथोक्तः । [4]अस्यार्थमाह न विग्रहं करोति प्रत्यक्षत इति । शेषं सुबोधम् । स न मन्येत दृष्टानां वाक्यानां प्रामाण्यम् । स इति । विप्रकृष्टो नास्तिकः परामृष्यत इति भाष्ययोजनिका । परिशिष्टं तु [5]परीक्षापर्वणि निवेदयिष्यते ॥८॥

॥ परिशुद्धिः ॥

स्वच्छाः स्वभावशुचयोऽतिशयेन गुर्व्यो
दुर्बन्धदुर्धरदुराग्रहदुर्विभाव्याः [6] ।
टीकागिरो विशदपारदविप्रुषो वा
येषां वशे ननु वशे जगदेव तेषाम् ॥८॥

॥ प्रमाणनिबन्धः समाप्तः ॥

॥ इति प्रमाणलक्षणप्रकरणम् ॥

---

१. °स्य दर्शनादिति J २. °रा प्रकल्प्यते ३. °विषयता स्वर्ग° J ४. अस्यार्थं सवि° ५. द्रः २।१।५२–६८ ६. दुःखभा° J

॥ प्रमेयप्रकरणम् ॥

॥ भाष्यम् ॥

किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति ? [1]तदुच्यते—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभाव-**
**फलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥**

तत्रात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभावी । तस्य भोगायतनं शरीरम् । भोगसाधनानीन्द्रियाणि । भोक्तव्या इन्द्रियार्थाः । भोगो बुद्धिः । सर्वार्थोपलब्धौ नेन्द्रियाणि [2]प्रभवन्तीति सर्वविषयमन्तःकरणं मनः । शरीरेन्द्रियार्थबुद्धिसुखदुःखसंवेदनानां[3] निर्वृत्तिकारणं प्रवृत्तिः, दोषाश्च । नास्येदं शरीरमपूर्वमनुत्तरं च । पूर्वशरीराणामादिर्नास्ति, उत्तरेषामपवर्गोऽन्त इति प्रेत्यभावः । ससाधनसुखदुःखोपभोगः फलम् । दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य [4]प्रतीतेः प्रत्याख्यानम् । किं तर्हि ? जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गात् दुःखेनाविप्रयोगाद्विविधबाधनायोगाद् दुःखमिति समाधिभावनमुपदिश्यते । समाहितो [5]भावयति, भावयन्निर्विद्यते, निर्विण्णस्य वैराग्यम्, विरक्तस्यापवर्ग इति । जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणमपवर्ग इति ॥

अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्, तद्भेदेन चापरिसङ्ख्येयम् । अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार[6] इत्यत एतदुपदिष्टं विशेषेणेति ॥ ९ ॥

॥ वार्त्तिकम् ॥

किं [7]पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति **भाष्यम्** । अनुपपन्नोऽयं प्रश्नः, सामर्थ्यतः प्रमाणविषयाधिगतेः । न हीमानि प्रमाणानि निर्विषयानि चर्चितानि, यतोऽयं प्रश्नः स्यात् किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति । न न युक्तः, प्रमेयविशेषविषयत्वात् । नायं [8]प्रमेयमात्रविषयः प्रश्नः, प्रमेयमात्रस्य प्रमाणलक्षणोद्देशेनाधिगतत्वात्[9] ।

---

१. तदुच्यते V, उच्यते J २. विभवन्तीति J ३. °सुखवे° C V T ४. प्रीतेः J
५. भावयतीति पतितम् J ६. °नाच सं° J ७. अनेन प्रमाणेन° न न युक्तः om C.
८. प्रमेयविशेषः प्रमेय° C. ९. °द्देशेन बोधितत्वात् C

प्रमेयविशेषावधारणार्थस्तु भवेत् । कतमं तत्[1] प्रमेयं यदनेन प्रमाणेन[2] यथावत् परिज्ञायमानमपवर्गाय, अनवगम्यमानं च संसारायेति[3] । एतदर्थप्रकाशनार्थम् **आत्मादिसूत्रम्** । अयमेव च सूत्रार्थ इति । अत्रापि समासश्चार्थे द्वन्द्वः[4], यथावचनं विग्रह इति । उभयावधारणप्राप्तावन्यतरावधारणे दोषः । किं पुनरत्रावधार्यते ? किमात्माद्येव प्रमेयम्, अथ प्रमेयमेवात्मादीति ? यद्यात्माद्येव प्रमेयमिति अत्यल्पमिदमुच्यते[5], दिगादीनां सामान्यविशेषसमवायानां च सूत्रेऽनभिधानादव्यापकम् । अथ पुनः प्रमेयमेव चात्मादि तदा[6] प्रमेया च तुलाप्रामाण्यवत् [२.१.१६] इत्यस्य[7] व्याघातः । तत्र हि सुवर्णादि द्रव्यं परिच्छेदसाधनत्वात् परिच्छेद्यत्वाच्च प्रमाणप्रमेयशब्दाभिलाप्यमित्युक्तम्[8] । लोकविरोधश्च, एकस्यानेककारकशब्दवाच्यत्वात् वृक्षस्तिष्ठतीति यथा, तत्रैकं वृक्षाख्यं वस्त्वनेकेन कारकशब्देनाभिधीयते[9] तस्य तस्य निमित्तस्य सन्निपातात् । एवं प्रमेयं प्रमाणमिति । न, सूत्रार्थापरिज्ञानात् । आत्माद्येव प्रमेयं यथावत् परिच्छिद्यमानमपवृत्तये भवतीत्ययं सूत्रार्थो, न प्रमेयान्तरनिराकरणार्थः सूत्रारम्भ इति । प्रमेयमेव चात्मादीत्यपि न दोषः । किमुक्तं भवति ? मुमुक्षुणा प्रमेयमेवात्मादि बोद्धव्यमेवैतदिति[10] । नास्य प्रमेयत्वं विधीयते । न चान्यस्य[11] प्रमेयत्वं निराक्रियते । अपि तु मुमुक्षुणा बोद्धव्यमेवैतदित्यनूद्यते । तस्मात् उभयमप्यवधार्यते । न च यथोक्तो दोषः । उपेत्य वा ब्रूमो दिगाद्यप्यत्रैव लभ्यते उपपत्तिसामर्थ्यात्, का पुनरुपपत्तिः ? प्रवृत्तेर्विंशतिभेदात् तत्संस्कारकत्वेन दिगादयोऽपि लभ्यन्ते, सामान्यविशेषसमवायाश्च विशेषणविशेष्यभावात्[12] । आत्मादयो विज्ञेयत्वेनोपदिष्टाः । तेषां चेतरेतरव्यवच्छेदहेतुभावेन[13] सामान्यविशेषसमवाया विशेषणं भवतीति सूत्रत उक्ता भवन्तीत्यचोद्यं दिगादिग्रहणं न[14] कृतं सूत्रे इति । न पुनरिदं प्रमेयमात्रावधारणार्थं सूत्रम्, अपि तु[15] प्रमेयविशेषावधारणार्थम्, प्रमेयमात्रावधारणार्थायां[16] च सूत्रप्रवृत्तौ[17] विहितविधानादकुशलः सूत्रकारः स्यात् । आद्येन च[18] सूत्रेण प्रमेयं विहितमिति पुनः प्रमेयस्याभिधानात्[19] प्रमत्तवाक्यमिदं स्यात् । एनं चार्थं जिज्ञापयिषुः[20] सूत्र-

---

१. ०धारणा न सिध्यति तत् C २. प्रमाणेन om C ३. अपरिज्ञायमानश्चासावात्मेति (for अनव० संसारायेति) C ४ अत्रापि (समान) (?) sic. C ५. इति० मुच्यते om C. ६. तथा च C ७. अस्य om C ८. इत्युक्तम् om C ९. उच्यते C १०. ०मेवात्मादि बोध्यव्यमेव C ११. न चास्य J. १२. विशेषणविशेष्यभावेन C, विशेषणभावात् J १३. ०दकभावेन C १४. भवतीति० दिगादिग्रहणं न om C १५. न तु० C १६. J ०मात्र० om J, १७. ०धारणार्थं च प्रवृत्तौ C १८ वा C १९. पुनर्विधानात् C २०. एनं चार्थमेवार्थकं C

**कारः** तुशब्दमाह । अन्यदपि प्रमेयमस्ति, यस्य तु तत्त्वज्ञानान्निःश्रेयसं तदिदं प्रमेयमिति तुशब्देन ज्ञापयति ॥

सुखं पुनः कस्मादस्मिन् नोक्तम् ? किमभावादाहोस्विदन्यत उपलब्धेरिति ? न तावदभावात्[1], प्रत्यात्मवेदनीयत्वात् । प्रत्यात्ममेव वेदनीयं सुखमुपलभ्यमानं न शक्यं नास्तीति वक्तुम् । न चान्यत उपलब्धिः, अस्मादेव ! अनभिधानं तु वैराग्यज्ञापनार्थम् । कथम् ? नायं मोक्षमाणः सर्वं दुःखं भावयेदिति तस्य दुःखभावनार्थं सुखस्यानपदेशः । सर्वं दुःखं भावयतस्त्रैलोक्येऽस्यानभिरतिसंज्ञा भवति । तां चोपासीनस्य त्रैलोक्यविषया तृष्णा विच्छिद्यते । तृष्णा नाम पुनर्भवप्रार्थना । सास्य सर्वं दुःखमिति भावयतो न भवति, न हि कश्चिद् दुःखं प्रार्थयते । तृष्णाप्रहाणाद्यानि पुनर्भवसाधनानि । तानि नोपादत्ते । तदनुपादानादनागतौ धर्माधर्मौ न भवतः । यावप्युत्पन्नौ धर्माधर्मौ[2], तावप्युपभोगात् प्रक्षयं गच्छतः । सोऽयं धर्माधर्मलक्षणस्य संसारबीजस्य उच्छेदादपवृज्यते, न पुनर्जायते इति । अस्यार्थस्य प्रदर्शनार्थं सुखानभिधानमिति ॥ ९ ॥

॥ टीका ॥

इह प्रमेयं हेयोपादेयभावेनावस्थितं मुमुक्षुणा प्रतिपित्सितम् । तच्च परीक्षितस्वप्रमाणविशेषाधीनप्रतिपत्ति । लक्षणं चास्य प्रमाणविशेषः । न चावान्तरप्रमाणसामान्यप्रत्यक्षादिलक्षणमन्तरेणात्मादिप्रमाणावतारः कर्तुं शक्यः, तस्य प्रत्यक्षादिसामान्यविशेषत्वात् । अतः प्रत्यक्षादिलक्षणानन्तरं तदवतारः । अपरीक्षितं च न तत्त्वनिर्णयाय पर्याप्तमिति परीक्षा विधायिष्यते[3] । तत्परिकरश्च संशयादय इति युक्तं तेषां पश्चाल्लक्षणम् । तदिह प्रमेयलक्षणाय तद्विभागोद्देशसूत्रमवतारयितुं **भाष्यकारः** पृच्छति स्म—**किं पुनरनेन प्रमाणेनेति** । जात्यभिप्रायमेकवचनम्, प्रकृते प्रमेये यथायथं प्रमाणानामुपयोगात् । तदेतद् **भाष्यम्** अनूद्य **वार्त्तिककार** आक्षिपति—**किं पुनरिति** । प्रमेयनान्तरीयकत्वं प्रमाणानां सामर्थ्यम् । समाधत्ते—**नेति** । प्रत्यक्षादिलक्षणसामर्थ्यात् प्रमेयमात्रं सिद्धम्, विशिष्टं तु प्रमेयमद्यापि न सिध्यतीति तदर्थं प्रश्नः । स च विशेषो **यथावदिति** न[4] दर्शित इति । **अयमेव** च **सूत्रार्थ** इति । येषां तत्त्वातत्त्वज्ञानाभ्याम् अपवर्गसंसारौ भवतः, त एतावन्त[5] एव । न न्यूना नाधिका इत्यर्थः । प्रथमसूत्रव्यवस्थाम् अतिदिशति—**अत्रापीति** । उक्तमर्थमनाकलयन्नाक्षिपति—**उभयेति** । **दिगादीना-**

१. ०वादन्यत उपलब्धेर्वा C २. धर्माधर्मौ om C ३. ND Chapters III & IV I. ४. न om J ५. त एते C.

सिति । द्रव्येषु दिक्कालपरमाणूनामनभिधानात् । वृक्षस्तिष्ठतीति । इतिशब्द आद्यर्थे तेन वृक्षं [1]पश्यति, वृक्षेण चन्द्रमसं पश्यतीत्यादयो वेदितव्याः । समाधत्ते—**न सूत्रार्थापरिज्ञानादिति**, न प्रमेयपदं प्रमेयमात्रे प्रवर्तते, किं तु यत् तत्त्वतो ज्ञायमानमपवर्गसाधनं तस्मिन्, तच्चात्माद्येव नान्यदिति युक्तोऽन्ययोगव्यवच्छेद इत्यर्थः । अयोगव्यवच्छेदेऽपि न दोष इत्याह—**प्रमेयमेवेति** । नन्वस्मिन् पक्षे न कदाचिदपि प्रमाणता स्यादित्यस्ति दोष इत्यत आह—**किमुक्तं भवतीति** । नास्य पुरुषमात्रं प्रति प्रमेयत्वं विधीयते, अपि तु मोक्षमाणशिष्यं प्रति विधीयते । **अनूद्यत** इति प्रमाणान्तरमूलकत्वेन विधानस्य दार्ढ्यं दर्शयति । उपसंहरति—**तस्मादिति** । कौशलमात्रमात्मनः ख्यापयितुमभ्युपेत्य समाधानान्तरमाह—**उपेत्येति** । प्रवृत्तिसंस्कारकत्वमस्ति दिक्कालयोः,

प्राङ्मुखोऽन्नानि भुञ्जीत ॥
प्राचीनप्रवणे वैश्वदेवेन यजेत ॥
पौर्णमास्यां पौर्णमास्या यजेत ॥
अमावास्यायाममावास्यया यजेत ॥

इत्येवमादि श्रवणात् । कौशलमात्रमिदं न तु समाधानमित्याह—**न पुनरिदमिति** । **विहितविधानादिति** । प्रमाणविधानसामर्थ्येन विहितमित्यर्थः । न केवलं प्रमाणविधानाक्षिप्तम्, अपि त्वाद्यसूत्रगतप्रमेयपदादपि लब्धमित्याह—**आद्येन चेति** । [2]एतस्मिंश्चार्थे सूत्रकारस्य अनुमतिमाह—**एनं चार्थमिति** । **भाष्यम्—सर्वस्य सुखदुःखसाधनस्य, द्रष्टा सर्वस्य सुखदुःखस्य भोक्ता,** यतः सुखदुःखसाधनं सर्वम्, सर्वं च सुखदुःखं जानाति, अतः **सर्वज्ञः** । न चाप्राप्तान्येतानि जानातीत्यत आह—**सर्वानुभावी** । अनुभवः प्राप्तिः । तदेतद् वैराग्योत्पादायोक्तम्, एवमुत्तरत्रापि बोद्धव्यम् । आत्मन्ययं विशेषो यदनेन रूपेण हेयः, कैवल्येन[3] चोपादेयः । शरीरादीनि तु हेयान्येव । अपवर्गस्तूपादेय एवेति । अविद्यमानं पूर्वं शरीरं यस्य तदपूर्वं शरीरम् । तन्निषेधति—**नास्येदमिति** । प्रमेयतत्त्वमविदुष आत्मन अविद्यमानमुत्तरं शरीरं यस्य तद् **अनुत्तरम्** । तदपि निषिद्धं [4]चेन, नेत्यनुकर्षणात् । ननु यथा पूर्वेषां शरीराणाम् अनादिता [5]एवमुत्तरेषामप्यनन्तता, तथा च मोक्षमाणानां प्रवृत्तयश्च तदर्थानि शास्त्राणि चानर्थकानि प्रसज्येरन्नित्यत आह—**उत्तरेषामिति** । प्रमेयतत्त्वावगमादित्यर्थः । ननु सुखेऽप्युद्देष्टव्ये दुःखमात्रोद्देशः किं सुखं प्रत्याचष्टे ? तथा चानुभवविरोध इत्यत

१. पश्य J. २. ०स्मिन्नर्थे C ३. केवलेन C ४. चेत्यनुकर्षणात् C ५. इत्येवम् C

आह—**नेदमिति**। तदेतद् भाष्यं वार्त्तिककार आक्षेपसमाधानाभ्यां व्याचष्टे—**सुखं पुनरिति न चान्यत** आत्मादिपदात्, **उपलब्धिः**, **अस्मादेव** आत्मादिभ्यो भेदेन प्रत्यात्ममुपलभ्यमानत्वादेव, **निर्विद्यते** इत्यस्य व्याख्यानम्—**अनभिरतिसंज्ञेति** उपेक्षाबुद्धिः। **निर्विण्णस्य वैराग्यम्** इत्यस्य व्याख्यानम्—**तां चोपासीनस्य तथैव** विरोधिगुणेन तृष्णा विच्छिद्यते, सुखानभिधानेन दुःखपक्षनिक्षेपं सूचयति। तथा च सुखेऽस्य वैराग्यं भवतीति तात्पर्यार्थः॥ ९॥

॥ परिशुद्धिः॥

ननु यदि **प्रमेयमेव** [1]मुमुक्षुणा प्रतिपित्सितम्, तदुल्लङ्घ्य किमिति प्रथमतः प्रमाणमभिहितमित्यत आह—**तच्चेति**। तर्हि उक्तानि प्रमाणानीदानीं परीक्ष्यन्तां किं प्रमेयलक्षणेनेत्यत आह—**लक्षणं चेति**। तर्हि प्रमेयलक्षणमेवाभिधीयताम्। किं प्रत्यक्षादिलक्षणेनेत्यत आह—[2]**न चेति**। ननु प्रमाणं तावत् प्रथमत एव वक्तव्यम्। तदितरस्य तदधीनत्वादिति प्रागेव संगमितमेतत्। इदानीं तु पञ्चदशसु [3]प्रथमं किमभिधीयतामिति जिज्ञासा। अभिधीयमानसंगतिपर्यालोचने [4]च संशयादीनामनुपयोगादनभिधानमेव [5]प्रसक्तम्, कुतः पूर्वापरभावस्पर्धेत्यत आह—**अपरीक्षितं चेति**। एतेन संशयादीनामुपयोगं दर्शयता वक्तव्यता [6]दर्शिता। एतस्माद् विशेषात् प्रमाणप्रकरणात् अपकर्षः संशयादिप्रकरणेभ्यश्च[7] उत्कर्षः प्रमेयप्रकरणस्येति समुदायार्थः। आरभ्यतां तर्हि प्रमेयलक्षणम्, किमन्तर्गड्डुना विभागेनेत्यत आह—**तदिहेति**। **प्रमेयनान्तरीकत्वं** [8]प्रमेयालम्बनफलत्वम्। [9]किं तदर्थजातमिति **भाष्यकारीयः** प्रश्नः श्लिष्टः, किं लक्षणं कतिविधं चेति। अस्मिन्नर्थे विभागवत् सामान्यलक्षणमन्तरेणापि विशेषलक्षणानवतारात्। तत्र द्वितीये—**सूत्र**पाठे नोत्तरम्। प्रथमे तु शब्दव्याख्यानेनेति भाष्यगतिः। [10]तदत्र द्वितीयप्रश्नार्थो [11]विभागोद्देशसूत्रमवतारयितुमित्यनेन दर्शितः। प्रथमस्तु विशिष्टं प्रमेयमद्यापि न सिध्यतीति तदर्थं प्रश्न इत्यनेन। तत्र **वार्त्तिककारेण** तुशब्दसूचितं सामान्यलक्षणं गृहीत्वा विभागनिष्ठः प्रश्नः कृत इत्याह—**स च विशेष** इति॥

नन्वयमेव च **सूत्रार्थ** इति विभाग एवास्य सूत्रस्यार्थ इति गम्यते। तथा च न विवक्षितविशेषलाभः सूत्रात्, एवं च प्रमेयमात्रविभागोऽनर्थकोऽसत्यश्चेत्यत आह—

---

१. मुमुक्षुणां M. २. न चेति om M. ३. प्रथमम् om M. ४. ०लोचनया M. ५. प्राप्तम् M. ६. व्यवस्थापिता JA. ७. प्रकरणेऽस्य M. ८. ०लम्बनत्वम् M. ९. किं ०तु तद० M. १०. तत्र M. ११. सूत्रम् om JA.

येषामिति । प्रकृतोपयोगिप्रमेयविशेषलक्षणकोडीकृतानामेव विभागोऽस्य सूत्रस्यार्थ इति वार्त्तिकार्थ इत्यर्थः । येषामित्यादिना यथासंख्यं लक्षणद्वयम् । नञश्च तत्त्वपदेन संबन्धः । साक्षादिति च पूरणीयम्[1] । अपवर्गो मिथ्याज्ञाननिवृत्तिः, तदादित्वात् । संसारो रागद्वेषौ, तदेकदेशत्वादिति । परमाणूनामित्युपलक्षणम्, तेनाशरीरानिन्द्रिया तदर्थरूपाणां द्व्यणुकादीनां तद्गुणकर्मणामपीति ॥

ननु यदा दिगादयोऽभिहिता एवार्थत इति समाधानम्, तदा तदभिधाने क उपयोग इत्यपि समर्थनीयमित्यत आह—कौशलमात्रमिति ॥ ९ ॥

॥ भाष्यम् ॥

तत्रात्मा तावत्प्रत्यक्षतो[2] न गृह्यते । स किमाप्तोपदेशमात्रादेव प्रतिपद्यत[3] इति ? नेत्युच्यते । अनुमानाच्च प्रतिपत्तव्य इति । कथम् ?

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्[4] ॥ १० ॥

यज्जातीयस्यार्थस्य सन्निकर्षात्सुखमात्मोपलब्धवान् , तज्जातीयमेव अर्थं[6] पश्यन्नुपादातुमिच्छति, सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्भवति[5] लिङ्गमात्मनः । नियतविषये हि बुद्धिभेदमात्रे न संभवति, देहान्तरवदिति । एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् दुःखहेतौ द्वेषः । यज्जातीयोऽस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन् आदातुं[6] प्रयतते । सोऽयं प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारम् अन्तेरण न स्यात् । नियतविषये हि बुद्धिभेदमात्रे[7] न संभवति, देहान्तरवदिति । एतेन दुःखहेतौ प्रयत्नो व्याख्यातः । सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते, सुःखदुःखे वेदयते । पूर्वोक्त एव हेतुः । बुभुत्समानः खल्वयं विमृशति किं स्विदिति, विमृशंश्च जानीते इदमिति, तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मनो लिङ्गम् । पूर्वोक्त एव हेतुरिति । तत्र देहान्तरवदिति विभज्यते । यथा अनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते, तथैकदेहविषया अपि न प्रतिसन्धीयेरन्, अविशेषात्[8] । सोऽयमेकसत्त्वस्य समाचारः स्वयंदृष्टस्य स्मरणं, नान्यदृष्टस्य, नादृष्टस्येति । एवं खलु नाना-

१. पूरणम् J. २. °त्मा प्रत्य° J. ३. °पत्तव्य J. ४. °ङ्गमिति C. ५. भवन्ती J Var ६. °मर्थमादा° J. ७. बुद्धिमात्रे C. ८. विशेषाभावात् J.

सत्त्वानां समाचारोऽन्यदृष्टमन्यो न स्मरतीति[1]। तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमित्येवमुपपन्नमस्त्यात्मेति ॥ १० ॥

॥ वार्त्तिकम् ॥

आत्मनः समानासमानजातीयविशेषणार्थं सूत्रम्—इच्छेति ॥ आगमस्यानुमानेन प्रतिसन्धानार्थं वा । [2]यो हि आगमेन प्रतिपन्न आत्मा, तस्यानुमानेन प्रतिसन्धानार्थम् । प्रमाणसंप्लवस्योदाहरणार्थं [3]वा । यत्तदवोचाम प्रमाणानि संप्लवन्ते इति, तस्यायं विषयः ॥

यज्जातीयस्यार्थस्य सन्निकर्षादिति भाष्यम् । तत्र[4] चेच्छादीनां प्रतिसन्धानम् आत्मास्तित्वप्रतिपादकम् । तत्रेदं विचार्यते, कथमिच्छादि अनुपलभ्यमानमात्मानं गमयतीति, स्मृत्या सहैकविषयभावात् ? यस्मादेते[5] स्मृत्या सहैकविषया भवन्ति, तस्मात् एककर्तृकत्वं प्रतिपादयन्ति । न हि नानाकर्तृकाणां नानाविषयाणां नानानिमित्तानां च [6]प्रत्ययानां प्रतिसन्धानमस्ति । न हि रूपरसगन्धस्पर्शप्रत्ययाः प्रतिसन्धीयन्ते । न हि भवति यद्रूपद्राक्षं सोऽयं स्पर्श इति । नापि भवति यत् स्पर्शमस्पार्क्षं तद्रूपं पश्यामीति । नापि [7]देवदत्तेन दृष्टेऽर्थे यज्ञदत्तस्य प्रतिसन्धानं दृष्टम् । न हि भवति देवदत्तो यम् अद्राक्षीत् [8]सोऽहं यज्ञदत्तस्तमद्राक्षमिति । किं कारणम् ? बुद्धिभेदानां प्रतिनियतविषयत्वादिति । प्रतिनियतविषया [9]बुद्धयः इतरेतरव्यावृत्तस्वरूपा नैरात्म्यवादिनो न भवन्तीति न युक्तं प्रतिसन्धानम् । तस्माद् यः प्रतिसन्धाता स आत्मेति ॥

कार्यकारणभावात् प्रतिसन्धानमिति चेत् ? अथापि मन्येथा नैककर्तृत्वात् प्रतिसन्धामम् ? किं तर्हि ? कार्यकारणभावात् । पूर्वपूर्वबुद्धिविशेषादुत्तरमुत्तरं बुद्ध्यन्तरं पूर्वबुद्धिशक्त्यनुविधानात्[10] सकलाहितशक्तिकलापमुत्पद्यते । अतो नानात्वेऽपि बुद्धीनां कार्यकारणभावादेव प्रतिसन्धानं बीजादिवदिवति । तद्यथा शालिगुटिकाद्यनन्तरमङ्कुरः प्रादुर्भवति, तस्य शालिशक्त्यनुविधानं तत्पूर्वकतया [11]व्यवतिष्ठते । अनन्तरं महाभूतैरनुगृह्यमाणमुत्तरकालं शालिबीजं [12]प्रादुर्भवति न यवबीजम्, अतत्पूर्वकत्वात्, तथेहाप्येकसान्तानिकीनां बुद्धीनां [13]कार्यकारणभावव्यवस्थानात् प्रतिसन्धानम् अतत्पूर्वकत्वात्, न सन्तानान्तरबुद्धीनामिति तत्पूर्वकत्वात् । न पुनरेककर्तृकत्वात्[14] प्रतिसन्धानमदर्शना-

---

१. इमे तु खलु··· चाराः । नान्यैः···न्ये न स्मरन्तीति J. २. यो हि om C ३. वा om J ४. च om C ५. °देवेच्छादयः C ६. प्रत्ययानां om C ७. देवदत्तदृष्टे यज्ञदत्तप्र° C ८. सोऽहं om C ९. बुद्धयः om C. १०. °धानेन C ११. अव° J १२. जनयति C. १३. °भाव° om C १४. अतत्पूर्वं°द्धीनाम् । न पुनः C

दिति । तदिदं प्रतिसन्धानमन्यथा भवन्नात्मनः सत्तां प्रतिपादयितुं शक्नोति । न, नानात्वस्याबाधनात्, कार्यकारणभावात् प्रतिसन्धानं ब्रुवन् न नानात्वं बाधते इति । किं कारणम् ? [1]कार्यकारणभावस्य नानात्वाधिष्ठानात् । कार्यकारणभावः खलु नानात्वाधिष्ठान एव[2] । उभयपक्षसंप्रतिपन्ने च नानात्वे न प्रतिसन्धानं दृष्टम् । कस्मात् ? अन्येनानुभूतस्यान्येनास्मरणात् । न चास्मृतमर्थं[3] प्रतिसन्धातुं शक्नोति । अकार्यकारणभावादनुपपत्तेः । न ब्रूमः कार्यकारणभावे दृष्टं प्रतिसन्धानम्, अपि त्वकार्यकारणभावे न दृष्टमतत्पूर्वकत्वादित्युक्तम् । तस्मादयथार्थोऽयमुपालम्भ इति ॥

तदयुक्तम्, विवादकारणाव्यतिरेकादिति । एवं ब्रुवाणो भवान् न कारणमतिरेचयति । मयोक्तं नानात्वे न दृष्टमिति । त्वं तु ब्रूषे अकार्यकारणभावान्नानात्वे [4]सति न दृष्टमिति अनैकान्तिकत्वान्न विवादकारणमतिरिच्यते । तुल्यं भवतोऽपि, नानात्वे अदर्शनादिति ब्रुवता न विवादकारणमतिरेचितं भवतीति । अभ्युपगमादनुत्तरं तुल्यमिति ब्रुवता भवताभ्युपगतं भवति । नासाधनात्, न मया कार्यकारणभावात् प्रतिसन्धानं साध्यते, अपि त्वन्यथैव तद्भवतीति हेतोरसिद्धार्थतादोषोऽभिधीयते इति । न, हेत्वर्थापरिज्ञानात् । न भवता हेतुरूपं विशेषतो व्यज्ञायि, केवलं हेतुसामान्यात् अन्यथैव[5] संभवतीति हेतुदोषोऽभ्यधायि । विशेषितं चैतत् प्रतिसन्धानम्, स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वेन प्रतिसन्धानम् । सा च स्मृतिर्भवत्पक्षेऽनुपपन्ना । कस्मात् ? अन्येनानुभूतस्यान्येनास्मरणात् । न ह्यन्येनानुभूतस्यान्येन स्मरणम्, न ह्यन्येनानुभूतमन्यः स्मरतीति । अस्ति च स्मृतिः । तस्माद् यस्मिन् पक्षे स्मृतिः संभवति तत्र प्रतिसन्धानमिति न्याय्यम् । भवानस्मान् स्मृत्यनुपपत्त्या भाययति, न हि नः पक्षे स्मृतिर्न संभवतीति । कथमिति ? कार्यकारणभावादेव यत्कार्ययचित्तसन्तानप्रभवोऽनुभवः स्मृतिहेतुरसाविति । यस्मिन् कायचित्तसन्ताने[6] स्मृतिरनुभवश्चोत्पद्येते[7] स कायचित्तसन्तानः स्मर्ता चानुभविता च भवतीति । न, अस्थिरत्वाद् बुद्धीनाम्[8] । स्थिरं हि वासकेन वास्यमानं दृष्टम् । न च बुद्धीनां [9]स्थैर्यमस्ति, असंबन्धाच्च । असंबद्धं च वासकेन वास्यमानं दृष्टम् । न च वासकेन सह संबन्धो बुद्धीनामस्ति । शक्तिविशिष्टश्चित्तोत्पादो वासनेति चेत् ? अथाप्येवं कल्प्येत पूर्वचित्तसहजाच्चेतनाविशेषात् पूर्वशक्तिविशिष्टं चित्तमुत्पद्यते । सोऽस्य शक्तिविशिष्टचित्तोत्पादो[10] वासनेत्युच्यते । अत्रोक्तमस्थिरत्वात्, वासकेनासंबन्धा-

१. कार्य॰नात् om C २. एव om C ३. अर्थं om C ४. सति om C
५. एव om J. ६. ॰नप्रभवोऽनु॰ चित्तसन्ता॰ om C ७. ॰रनुभवो वो॰ C.
८. बुद्धीनाम् om J. ९. स्थिरत्वम् C. १०. ॰चित्त॰ om J.

चेति । यश्चासौ चेतनाविशेषः पूर्वचित्तसहभावी स नापि वर्तमाने चेतस्युपकारं करोति, नाप्यनागते । कथमिति ? वर्तमानं तावदविकार्यं यथाभूतं जायते तथाभूतमेव नश्यति । [1]अनागतेनापि न संबध्यते । न चासंबद्धं वासयतीत्युक्तम् । तस्मात् कार्यकारणभावात् स्मृतिरित्यशिक्षितोत्त्रासनमेतदिति[2] ॥

इतश्च न भवत्पक्षे स्मृतिः भावस्य भवित्रपेक्षत्वात् । सर्वो हि भावो भवितारम् अपेक्षते क्रियात्वादुत्पत्तिवदिति । स्मृतेश्च भविता कर्म वा भवेत् कर्ता वा । तण्डुलानां [3]पाक इति कर्मणि, देवदत्तस्य गतिरिति कर्तरि । [4]तत्र न तावत् [5]कर्माधारा असतोऽपि स्मरणात् । यदा [6]त्वविद्यमानं स्मरति तदानाधारा स्मृतिः प्राप्नोति । अथ कर्त्राधारा सा, [7]तदास्मत्पक्षे प्रयुक्ता न भवत्पक्षे । कस्मात् ? कर्तुरनभ्युपगमात् । न हि भवन्तः कर्तारं [8]स्मृत्याधारं प्रतिपद्यन्ते इति । अनाधारैव स्मृतिरिति यदायं पक्षो भवति [9]तदाप्यनुमानं नास्ति, कार्यस्यानाधारस्यादर्शनादिति । कार्यं सर्वमाधारवद् दृष्टं [10]यथा रूपादि । [11]कार्यं च स्मृतिः । तस्मादाधारवतीति । कार्यकारणयोर्भावभवितृव्यवहारः । कार्यक्षणो भावः, कारणक्षणो भवितेति । एवं च किमन्येन भवित्रा कल्पितेनेति । तच्च न, कालभेदात् [12]कार्यकारणक्षणयोर्भिन्नकालत्वादाश्रयाश्रितभावानुपपत्तिः[13], कुण्डबदरादिवदिति । अथापीदं स्यात् उत्पत्तिर्भावः उत्पत्ता भवितेति स्मृतिरप्युत्पद्यते । तस्मात् तस्या अप्युत्पत्तिर्भावो भविष्यतीति स्मृतिरप्युत्पत्त्री भवित्रीति[14] । तच्च न विरोधादनभ्युपगमाच्च । यदि स्मृतिव्यतिरिक्तोत्पत्तिः, व्याहतं भवति, स्वरूपं च वक्तव्यम् । न हि भवन्त उत्पत्तिमद्व्यतिरेकेणोत्पत्तिं प्रतिपद्यन्ते[15] । व्यतिरिक्तां चोत्पत्तिं [16]प्रतिपद्यमानेन भवता तस्याः स्वरूपं वक्तव्यम् । स्वरूपं च निरूप्यमाणं तन्त्रं बाधते । कथमिति ? उत्पत्तिः स्वकारणसत्तासंबन्धः, सत्ता वा स्वकारणसंबन्धविशिष्टा । उभयं च [17]स्वतन्त्रेणाभ्युपगतमिति व्याघातः[18] । अथ स्मृत्यव्यतिरिक्तोत्पत्तिः[19], किं क्व वर्तते इति शून्यमभिधानम् । उत्पत्तिर्भाव उत्पत्त्री स्मृतिरिति । यदा चोत्पत्तिः स्मृतेर्भावत्वेन विवक्षिता भवति तदैवं वक्तुं न्याय्यम् । यदा तु स्मृतिर्भाव इति तदा भवित्रा भवितव्यम् । कस्मात् ? भावस्य

---

१. अनागते सोऽपि C. २. °रित्यनु° J, °त्यशिक्षितो वासनमिति C, °तो वासमानं Vvar. ३. पाचक C. ४. तत् C. ५. कर्मण्यसतोऽपि सम्भवात् C. ६. तु om C ७. तदा om J. ८. °त्यर्थकं C. ९. अपि om C. १०. यथा om C. ११. तच्च C. १२. °क्षण° om C. १३. °पत्तेः C. १४. भवितेति C. १५. मन्यन्ते C. १६. मन्यमानेन, भवता om J. १७. स्व° om C. १८. विरोधः C. १९. °त्तिपूर्वकम् C.

भवित्रपेक्षत्वादित्युक्तम्[1]। तस्मात् न कथञ्चन[2] भवत्पक्षे स्मृतिः संभवतीति। स्मृतिं चान्तरेण न प्रतिसन्धानमस्ति। अस्ति चेदं प्रतिसन्धानम्। तस्मात् यत्कर्तृकमेतत् सोऽन्य एक आत्मेति ॥

अथ वा अन्वयेनान्यः सूत्रार्थोऽभिधीयते इति। देवदत्तस्य [3]रूपरसगन्धस्पर्शप्रत्ययाः एकानेकनिमित्तकाः स्मृत्या सह मयेति प्रतिसन्धानात्। कृतसङ्केतानां [4]बहूनाम् एकस्मिन् नर्तकीभ्रूक्षेपे युगपदनेकपुरुषप्रत्ययवत्[5]। यथा नानाकर्तृकाणां [6]कृतसमयानां बहूनां नानाभूताः प्रत्यया निमित्तस्य भ्रूक्षेपस्यैकत्वात् प्रतिसन्धीयन्ते, तथेहापि नानाविषयाः प्रत्यया निमित्तस्यैकत्वात् प्रतिसन्धास्यन्ते। यत्तन्निमित्तं स आत्मेति ॥

अथ वा इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् [१.१.१०] इत्यन्यथा वर्णयन्ति। गुणा इच्छादयः। गुणाश्च परतन्त्रा भवन्तीति न्यायः। गुणत्वं च पारिशेष्यात्। न [7]सामान्यविशेषसमवायभावोऽनित्यत्वात्। न द्रव्यं कर्म वा व्यापकद्रव्यसमवायात् [8]शब्दवदिति। एवमादि सामान्यतोदृष्टमित्येतस्मिन्ननुमानं [9]वर्णितम्। एतेन अनित्यत्वात् पारतन्त्र्यमिच्छादीनां कार्यत्वाच्च रूपादिवदित्युक्तम्। अयावद्द्रव्यभावित्वेन च शरीरगुणत्वप्रतिषेधः। तत्प्रतिषेधाच्चात्मगुणत्वमिति [10]पारिशेष्यात् सिद्ध आत्मेति ॥१०॥

॥ टीका ॥

अपवर्गस्याप्यात्मार्थत्वेन[11] प्रमेयेष्वात्मनः प्राधान्यात् प्रथममात्मलक्षणसूत्रम् इच्छेत्यादि। तदवतारार्थं **भाष्यम्—तत्रात्मेति**। अहमिति ज्ञानं गौराद्याकारं शरीरावभासं[12] न शक्यं घटादिज्ञानवद् द्रागात्मनि प्रमाणयितुमित्यभिप्रायः, परदेहवर्त्यात्माभिप्रायं वा। [13]तदत्र **वार्त्तिककारः** सूत्रतात्पर्यमाह—**समानेति**। समानजातीयं शरीरादि, असमानजातीयं प्रमाणसंशयादि। सत्येवास्मिन् प्रयोजने प्रयोजनमन्वाचिनोति—**आगमस्येति**। ततश्चाप्तोक्तत्वानुमानसिद्धमपि प्रामाण्यं शब्दस्य अनेन तदर्थसंवादकेनानुमानेन दृढतरं भवतीत्यर्थः। प्रयोजनान्तरं चान्वाचिनोति—**प्रमाणसंप्लवस्येति**। द्वावपि चाशब्दौ चार्थेऽन्वाचये द्रष्टव्यौ। तदनेन **वार्त्तिकेन अनुमानाच्च प्रतिपत्तव्य** इति **भाष्यं** व्याख्यातम्। इच्छाया आत्मलिङ्गत्वकथनपरं

---

१. द्र॰ पृ॰ ३६०।५ २. तस्मात् कथं च न भव॰ C. ३. ॰गन्ध॰ om C. ४. वृद्धानां C.॰५. ॰दनेकप्रत्ययवत् C. ६. ॰संकेतानां C, बहूनां om C. ७. ॰समवायाः C. ८. शब्दवदित्यादि सामा॰ C. ९. व्यवस्थितम् C. १०. परिशेषात् C. ११. अपि om C १२. ॰भासनं न C १३. तत्र J

**भाष्यं यज्जातीयस्येति** । यज्जातीयस्येति व्याप्तिस्मृतिकथनम् । **तज्जातीयं पश्यन्निति** पक्षधर्मोपनयः । तस्मादयं सुखहेतुरित्यनुमायादातुमिच्छति । सेयमिच्छेदृशी व्याप्तिग्रहणतत्स्मरणपक्षधर्मताग्रहणानुमानेच्छादीनामेककर्तृत्वं सूचयति, भेदे प्रतिसन्धानाभावेन तदनुपपत्तेः । तदिदमुक्तम्—**एकस्येति** । यश्चासावेकोऽनुभविता च स्मर्ता चानुमाता चैषिता च स आत्मा । न च शरीरमेवं भवितुमर्हति, [1]तस्यापि बाल्यकौमारयौवनवार्द्धकभेदेनान्यत्वात् । नेन्द्रियम्, इन्द्रियान्तरगृहीत इन्द्रियान्तरेणाप्रतिसन्धानप्रसङ्गात् [2]यमहम् अस्प्राक्षं तं पश्यामीति । नापि मनः, मनसः करणत्वेनैवानुमानात् । वक्ष्यति ह्येतत् सर्वं

ज्ञातुर्ज्ञानसाधनोपपत्तेः ॥

[३।१।१७] इत्यत्र सूत्रे ॥

स्यादेतत् । असत्यपि आत्मनि [3]ज्ञातरि सत्यपि च बुद्ध्यादीनां भेदे, तत्सन्तानाभेदेन प्रतिसन्धानव्यवस्थोपपत्स्यत इत्यत आह—**नियतविषये** इति । नियतविषय इति बुद्धिभेदस्य प्रतिसन्धानमपाकरोति । मात्रग्रहणेन च संतानं संतानिव्यतिरिक्तमपाकरोति । तदभ्युपगमे वा स एवात्मेति सिद्धं नः समीहितम् । तदेतद् **भाष्यम्** अनुभाष्य वार्त्तिककारस्तात्पर्यमस्याह—**यज्जातीयस्येति** । तत्र विचारमारभते—**तत्रेति** । पूर्वपक्षमाह—**कथमिच्छादीति** । परिहरति—**स्मृत्येति** । नन्वेकविषयाणां स्मृत्यादीनां नानाकर्तृकत्वे को विरोध इत्यत आह—**न हीति** । नानाविषयत्व उदाहरणमाह—[4]**न हि भवति यद्रूपमिति** । नानानिमित्तत्व उदाहरणमाह—**नापि भवतीति, यद्** यस्मात् निमित्तात् त्वगिन्द्रियात् स्पर्शमहमस्पार्क्षं **तत्** तस्मात् निमित्तात् चक्षुषो रूपं पश्यामीति । नानाकर्तृत्व उदाहरणमाह—**न हि भवति देवदत्त इति** । तदेतत् किल प्रतिसन्धानं कर्तृभेदाद् देवदत्तयज्ञदत्तादेर्व्यतिरेकवत्तेनैककर्तृकत्वं साधयतीत्युक्तम् ॥

तदेतदनुपपन्नम्, भिन्नकर्तृकत्वाद् व्यतिरेकस्योपाधिसंभवेन स्वाभाविकप्रतिबन्धविज्ञानवैकल्यात्, अस्ति हि देवदत्तयज्ञदत्तविज्ञानानां भिन्नकर्तृकत्वमकार्यकारणभावश्च, तत्र किमकार्यकारणभावात् प्रतिसन्धानस्य व्यतिरेक उत भिन्नकर्तृकत्वादिति सन्दिग्धव्यतिरेकत्वादसाधनाङ्गं प्रतिसन्धानमित्याशयवांश्चोदयति—**कार्यकारणभावादिति** । तदिदमुक्तम्—**तदिदं प्रतिसन्धानमन्यथा भवदिति** । गूढाभिप्रायः परिहरति—[5]**न नानात्वस्येति** । चोदक आह—**अकार्येति** । गूढाभिप्राय एव परिहारवाद्याह—

---

१. अपि om C २. °मद्राक्षं तं पश्यामीति C ३. ज्ञातरि om J ४. न हि रूपेति C ५. न om C.

तदयुक्तमिति, अनैकान्तिकत्वं सन्दिग्धव्यतिरेकिता । चोदक आह—तुल्यं भवतोऽपीति । सिद्धान्ती गूढाभिप्राय एवाह—अभ्युपगमादिति । चोदक आह—नासाधनादिति । असिद्धार्थता अन्यथासिद्धार्थता । हेतोः हेतुवचनस्येत्यर्थः । संप्रति समाधाता स्वाभिप्रायमाविष्करोति—न, हेत्वर्थापरिज्ञानात् । [1]तदेव विभजते—न भवतेति । कः पुनरसौ हेतुविशेष इत्यत आह—विशेषितं चैतत्प्रतिसंधानम् । तत् कथयति—स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वेन प्रतिसंन्धानम् यज्जातीयं [2]चन्दनवनितादि सुखहेतुं प्रतीतं स्मरामि तज्जातीयमिमं प्रत्येमीति प्रतिसन्धानम् । तदनेन शालिबीजाङ्कुरस्य परम्परया शालिबीजान्तरजननलक्षणात् प्रतिसंधानात् कार्यकारणभावनियमाद् व्यवच्छिनत्ति ॥

नन्वियं पूर्वापरप्रत्ययसंहिता[3] स्मृतिरपि कार्यकारणभावादेवोपपत्स्यते, कृतमेकेन कर्त्रेत्यत आह—सा च स्मृतिर्भवत्पक्षेऽनुपपन्ना । पृच्छति—कस्मात् ? उत्तरम्—अन्येन निमित्तेन अनुभूतस्य अन्येन निमित्तेन अस्मरणात् । न हि भवति येनैव चक्षुषा घटमद्राक्षम्, तेनैव त्वगिन्द्रियेण तं स्पृशामीति । निमित्तभेदे प्रतिसंधानाभावमुक्त्वा विषयभेदेऽप्याह—न ह्यन्येन स्वभावेन घटत्वादिनानुभूतस्य अन्येन वृक्षत्वादिना स्मरणम् । न हि भवति यमहं घटमद्राक्षं सोऽयं वृक्ष इति । कर्तृभेदे प्रतिसंधानाभावमाह—न ह्यन्येन देवदत्तेन अनुभूतमन्यो यज्ञदत्तः स्मरति । न हि भवति योऽहं देवदत्तोऽद्राक्षं सोऽहं यज्ञदत्तः [4]पश्यामीति । न चेदं सत्यपि भेदे कार्यकारणभावात् प्रतिसंधानं भवितुमर्हति । न हि यत्र स्फुटतरः कार्यकारणभावः तन्तुपटयोर्घटकपालयोर्वा दृश्यते तत्र प्रतिसंधानं भवति, ये तन्तवः स एव पट इति वा यो घटक्षणः स एव कपालक्षण इति वा । वस्तुतः कार्यकारणभूतानामगृहीतभेदानां प्रतिसंधानहेतुभावः सभागेषु क्षणेषु तथा दर्शनादिति चेत् ? तन्न, आमलकफलस्यैकस्यापनयने तत्रैव स्थाने आमलकान्तरावस्थापने भवति प्रतिसंधानम् । न च तयोरामलकयोरस्ति कार्यकारणभावः । पूर्वापरप्रत्यययोः स्मृत्या सहैकविषयत्वं कर्तरि कार्यकारणभावनिबन्धनं न कर्मणीति चेत् ? हन्त, नैरात्म्यसाक्षात्कारसात्मीभावेऽप्यस्ति विज्ञानानां कार्यकारणभाव इति तन्निबन्धनं प्रतिसंधानं पूर्ववदेव प्रसज्येत । सैव चात्मदृष्टिर्दोषाणां निदानं परमिति व्यर्थो नैरात्म्यसाक्षात्कारसात्मीभावप्रयासः । अथासदपि प्रतिसंधानं [5]कार्यवशादाहरति तथागतो नट इव रामत्वमात्मनः, यदि तत् कार्यकारण-

१. तदेतद् C २. सुखहेतुचन्दन॰ C ३. ॰संहतिः C ४. स्मरामीति C. ५. ॰दाह तथा॰ C; ॰बलादाहरति J

भावनिबन्धनम्, कथमसत्[1], कथमाहार्यम्? अथ कार्यकारणभावोऽप्यवस्तुसन् कल्पनामात्रनिबन्धनः, स तर्हि तादृशः शालिबीजस्योत्पादं वास्तवं न नियन्तुमर्हति, न जातु कल्पितवह्निभावो माणवको दहनपाकयोरुपयुज्यते। न च प्रत्ययानां भेदाग्रहात् प्रतिसंधानमिति सांप्रतम्, प्रवृत्तिविज्ञानानां रूपादिविषयाणां भेदेन पृथग्जनैरपि प्रतीयमानत्वात्, आलयविज्ञानस्य च प्रवृत्तिविज्ञानातिरिक्तस्यानुपलब्धेः। अहमिति च सत्त्वदृष्टेः क्षणिकत्वनिराकृतावसति बाधके स्थिरवस्तुविषयत्वात्। तस्मात् स्मृत्या सह पूर्वापरप्रत्यययोः एकविषयत्वलक्षणस्य प्रतिसन्धानस्यानेककर्तृकत्वाद् व्यतिरेको निरुपाधिरेककर्तृकत्वं साधयति। स चैकः कर्ता शरीरेन्द्रियबुद्धिभ्यो भिन्न आत्मेति सिद्धम्॥

तदनेनाशयेनोक्तम्—**अस्ति च स्मृतिः** उक्तरूपा। **तस्माद् यस्मिन् पक्षे स्मृतिः संभवति तत्र प्रतिसंधानं न्याय्यमिति**। स च कर्त्रेकत्वपक्ष इति भावः। आशयमविद्वान् पुनः **परः** प्रत्यवतिष्ठते—**भवानिति**। पर एवैकग्रन्थेनाह—**कथमिति**। कथं न संभवतीत्यर्थः। स्यादेतत्, योगिचित्तमपि सर्वज्ञस्य चेतस आलम्बनप्रत्यय इति। तस्यापि योगिचित्तेन प्रतिसन्धानं स्यादित्यत आह—**यत्कायेति**। एतदुक्तं भवति, उपादानोपादेयभावेनावस्थितः चित्तप्रवाहः सन्तानः। न च योगिचित्तमुपादानं सर्वज्ञस्य चेतसः। आलम्बनप्रत्ययो हि तदिति। कायग्रहणं च एकसन्तानोपलक्षणपरम्। तेन जन्मान्तरेऽपि स्मृतिरुपपन्नेति। तमिममस्मदभिप्रायानभिज्ञं परमन्यथापि बोधयितुं विभवाम इति सिद्धान्ती अन्यथा स्मृत्यनुपपत्तिमाह—**न, अस्थिरत्वात् बुद्धीनाम्**। न ह्यजातानन्वयध्वस्तयोरस्ति कश्चिद् विशेष इति पूर्वोत्पन्नोऽनुभवः काञ्चन वासनामाधाय ध्वंसते, यया कालान्तरे स्मृतिराधीयते इत्यभ्युपगन्तव्यम्। न चास्थिरा बुद्धिः शक्या वासयितुमित्यात्मा स्थिरोऽभ्युपेय इत्यर्थः। युक्त्यन्तरमाह—**असंबन्धाच्चेति**। न च बुद्धीनामसमानकालानामस्ति संबन्ध इत्यर्थः। पुनः परः प्रत्यवतिष्ठते—**शक्तीति**। नास्माकं क्षणिकवस्तुवादिनामस्ति तज्जगति यदवस्थितं वासकेन वास्यमानं दृष्टमिति भावः। ननु तथाप्यसमानकालतया संबन्धरहितमशक्यं वासयितुमिति ग्रहणकवाक्यविवरणव्याजेनापाकरोति—**अथापीति**। पूर्वचित्तं प्रवृत्तिविज्ञानं यत्तत् षड्विधम्, पञ्च रूपादिज्ञानान्यविकल्पकानि, षष्ठं च विकल्पविज्ञानम्। तेन सह जातः समानकालः चेतनाविशेषः तदालयविज्ञानमित्युच्यते। अहङ्कारास्पदं स्मृतिशक्तिः। सा च न शक्तात् तज्ज्ञानादतिरिच्यते। तेन कथञ्चिद्

१. असत् कार्यम् C

भेदविवक्षया शक्तिविशिष्टमित्युच्यते । सिद्धान्तवाद्याह—**अत्रोक्तमिति** । उपपादयिष्यते हि भावानां सर्वजनप्रतीतिसिद्धा स्थिरता क्षणभङ्गनिराकरणेन । तथा च स्थिरस्य संबद्धस्य च वस्त्रादेः मृगमदादिना वास्यत्वं दृष्टमिति नास्थिरेऽसंबद्धे च भवितुमर्हतीत्यर्थः ॥

स्यादेतत् । अस्थिरयोरपि ज्ञानयोः समानकालतया अस्ति संबन्ध इति कस्मात् अन्यतरचित्तवासितमन्यतरच्चित्तं स्मृतिं नाधत्ते इत्यत आह—**यश्चासाविति** । वक्ष्यमाणापेक्षोऽपिशब्दः । ननु वर्तमाने चेतसि मा कार्षीदुपकारम्, अनागते तु करिष्यति इत्यत आह—**नापीति** । पृच्छति—**कथमिति** । उत्तरम्—**वर्तमानं तावदिति** । प्रकृतमुपसंहरति—**तस्मादिति** । इतोऽप्यसत्यात्मनि विज्ञानमात्रात् कार्यकारणभावेन[1] स्मृतिर्नोत्पद्यते इत्याह—**इतश्चेति** । कस्मात्? **भावस्य भवित्रपेक्षत्वात्** । भाव उत्पत्तिमान् धर्मः । भविता धर्मी । पाको विक्लित्तिः संयोगभेदः । स च तण्डुलावयवसमवेतोऽप्यवयवावयविनोरभेदोपचारात् तण्डुलानामित्युक्तम् । [2]**गतिः** परिस्पन्दो देवदत्ते **कर्तरीति** । सिद्धान्ती क्षणिकवादिनमुत्थाप्याक्षणिकत्वाभिप्रायेण दूषयति—**अनाधारेणेति** । पूर्वपक्षी क्षणिकत्वाभिप्रायेणाह—**कार्येति** । सिद्धान्तवाद्यक्षणिकत्वाभिप्रायेण परिहरति—**तच्च नेति** । समानकालयोराधाराधेयभावो दृष्टः, यथा कुण्डवदरयोः । स्थिरमेव हि कुण्डं स्थिरस्यैव वदरस्य गुरुत्वेन पततो गुरुत्वं प्रतिबध्नदधःपतनं निवारयदाधारो भवति । यद्युच्येत न स्मृतिर्भावः, किं तु भवित्री उत्पत्तिरस्या भावः । न तु भवितुर्भवित्रन्तरापेक्षा युक्ता अनवस्थापातादिति आशङ्कते—**अथापीदमिति** । निराकरोति—**तच्च नेति** । **विरोधादिति** विवृणोति—**यदीति** । कस्माद् व्याहतमित्यत आह—**स्वरूपं चेति** । चो हेत्वर्थे । स्वरूपमुत्पत्तेरुच्यमानं स्वतन्त्रं बाधते यतः, तस्माद् विरोध इत्यर्थः । **अनभ्युपगमादिति** विवृणोति—**न हि भवन्त इति** । विरोधादिति स्फोरयति—**व्यतिरिक्तां चेति** । तन्त्रं शास्त्रम् । शङ्कते—**अथेति** । तथा च न विरोधो [3]नाप्यनभ्युपग इत्यर्थः । निराकरोति—**किं क्वेति** । अभिधानस्वरूपमाह—**उत्पत्तिरिति** । अपि चोत्पत्तेर्भावत्वेऽपि न स्मृतिर्न भावः, भावत्वस्य कार्यमात्रानुबन्धित्वात् स्मृतेश्च कार्यत्वात् । न चानवस्था, नित्ये व्यवस्थानात् । तथा च स्मृतेः भावस्य भविता आत्मैव नित्यः परिशिष्यते इत्याशयवानाह—**यदा चोत्पत्तिरिति** । प्रकृतमुपसंहरति—**तस्मादिति** । तत् सिद्धमेतत्—स्मृतिः पूर्वापरप्रत्ययाभ्यामेककर्तृका,

---

१. °भावात् C २ गतिस्तु J ३. नाप्यभ्यु° C

[1]ताभ्यां सहैकविषयत्वेन प्रतिसन्धीयमानत्वात् । या पुनर्नाभ्यामेककर्तृका सा [2]नाभ्यां तथा प्रतिसन्धीयते, यथा देवदत्तस्य [3]स्मृतिर्न यज्ञदत्तप्रत्ययाभ्याम् । न [4]चेयं तथा[5] । तस्मात् तथेति ॥

तदेवं व्यतिरेकिसमर्थनं कृत्वा अन्वयव्यतिरेकिणमत्रार्थे प्रमाणयति—अथ वेति । अनेकग्रहणमनेकनिमित्तप्रतिषेधशङ्कानिवृत्त्यर्थं[6] येन मया रूपादयोऽनुभूताः[7] तेनैव गन्ध उपलभ्यते इति खलु मयेति स्मृत्या सह[8] प्रतिसन्धानं तस्माद् भरतमताभ्यासेनाभिनये ये कृतसङ्केताः, तेषाम् । यच्चोक्तं परैः,

नर्तकीभ्रूलताक्षेपो न ह्येकः परमार्थिकः[9] ।
परमाणुसमूहत्वादेकत्वं तस्य कल्पितम्[10] ॥

इति । तत्राह—भ्रूक्षेपस्यैकत्वात् । न भ्रूः परमाणुसमूहोऽपि तु अवयविद्रव्यमेकम्, तद्गतं च रेचितकमपि क्रियैकैव । भवतु वा परमाणुसमूह एव भ्रूक्षेपः, तथापि समूहस्य समूहिभ्योऽनन्यत्वात् परमाणव एव, तेषां च प्रत्येकमेकता चानेकभरतमतनिपुणप्रतिपत्तृसाधारणता च । अस्ति च तेषामपि [11]स्वगोचराविकल्पोत्पादनद्वारेण परंपरया मयेति प्रतिसन्धानहेतुभाव इति [12]यत्किञ्चिदेतदेकत्वं तस्य कल्पितमिति । तदेवं प्रतिसन्धानद्वारेणेच्छादीनामात्मलिङ्गत्वमुक्त्वा संप्रति गुणतया लिङ्गतां वार्त्तिककृद् आह—अथ वेति । गुणत्वेनेच्छादीनां पारतन्त्र्यं रूपादिवत् साधनीयम् । तच्चानित्यत्वेनैव सामान्यविशेषसमवायेभ्यो व्यावर्तकेन सिद्धम् । न ह्यनित्यो भावो द्रव्यात् स्वतन्त्रो भवति । तस्माद् गुणत्वप्रसाधकादेव हेतोः पारतन्त्र्यसिद्धेः कृतं गुणत्वेन पारतन्त्र्यसाधकेनेति हृदि निधाय वार्त्तिककारः तदपि पूर्वमुक्तमिति सिद्धेन पारतन्त्र्येण गुणत्वमपि साधयति । न चैतदनित्यस्य [13]पारतन्त्र्यं द्रव्येण सिध्यति, द्रव्यकर्मणोरप्यनित्ययोः पारतन्त्र्यात् । तस्मादनित्यत्वसिद्धेन द्रव्यपारतन्त्र्येण द्रव्यकर्मभ्यां व्यतिरेचयति[14]—न द्रव्यं कर्म वा इच्छादयः, व्यापकद्रव्यसमवायात् शब्दवद् इत्यादि । यद्यप्यनित्यत्वेन द्रव्यसमवायमात्रं सिध्यति, तथापि द्रव्यकल्पनमात्रेणैवोपपत्तौ तदवयवकल्पनायां प्रमाणाभावेन तद् द्रव्यमनवयवं तावत् सिद्धम् । अनवयवं च द्रव्यं द्वेधा, व्यापकम्

१. उभाभ्यां C २. नाभ्यां om C ३. न om C ४. त्वियं C ५. न तथा C ६. °निरासार्थं C ७. येनप्रागनुभूता C ८. मम C ९. परमार्थतः J १०. तत्त्वसंग्रहः पृ० ८६. ११. °गोचरो विकल्पोत्पादनपरं C १२. एतत् om C १३. पारतन्त्र्यं मात्रेण C १४. विवेचयति C

अणु च । न तावदणु, तत्रेच्छादीनामुपलब्धेः । क्वचिदन्यतरकर्मणा क्वचित् स्वभावतः तत्संयोगोपपत्तौ तद्गतिकल्पनायां प्रमाणाभावात् सिद्धमस्य व्यापकत्वम् । तदेतदादिग्रहणव्याख्यानम् । तदनया वक्रोक्त्या नित्यत्वं परममहत्त्वं चात्मनो दर्शितं भवति । एतच्च सामान्यतोदृष्टमनुमानं सूत्रयता सर्वं दर्शितमित्याह—**सामान्यत** इति । [1]यत् तत्पूर्वं हृदि स्थितमिच्छादीनां [2]द्रव्यपारतन्त्र्ये साध्येऽनित्यत्वहेतुकानुमानम्[3] तदुद्घाटयति, कार्यत्वमपि हेतुं समुच्चिनोति—**एतेनेति** । नन्वस्तु द्रव्यपारतन्त्र्यं तथापि शरीरपारतन्त्र्यमस्तु, कृतमनुपलब्धचरेणात्मना इत्यत आह—**अयावदिति** । सर्वपुरुषसाधारण्यप्रसङ्गाच्च न पृथिव्यादिगुणाः । तदुत्पत्तौ करणत्वेन कल्पनाच्च नाकर्तुर्मनसः । तस्माद् अष्टद्रव्यातिरिक्तं द्रव्यान्तरम् , तत्रेच्छादयः, स चात्मेति सिद्धमित्याह—**तत्प्रतिषेधादिति** ॥१०॥

॥ परिशुद्धिः ॥

ननु प्रत्यक्षमप्यात्मनि[4] प्रमाणमेव, अहमिति विकल्पस्य परैरपीष्टत्वात् । न चायमवस्तुकः संदिग्धवस्तुको वा, अशाब्दत्वादप्रतिक्षेपाच्च । न चायं लैङ्गिकः, अननुसंहितलिङ्गस्यापि स्वप्रत्ययात् । नापि स्मृतिरियम् , अननुभूते[5]स्मरणायोगात् । अनादिवासनावशादनादिरयमवस्तुको विकल्प इत्यपि न युक्तम् , नीलादिविकल्पेष्वप्येवं वक्तुं सुकरत्वात् । कादाचित्कत्वेन तत्र वस्तुकल्पनमिहापि समानम् । अर्थक्रियास्थितेः [6]सूत्रप्रामाण्यसिद्धेर्वस्तुस्थितिरित्यपि न युक्तम् , अर्थक्रियास्थितिनिश्चयस्यापि[7] वासनामादायोपप्लावयितुं शक्यत्वात् । अतएव प्रमाणान्तरप्रवृत्तेरित्यपि गतम् । तस्माद् वासनावादमात्रं[8] विहाय आगन्तुकमपि किञ्चित् कारणं वाच्यम् । तच्चाप्तानाप्तशब्दो वा लिङ्गतदाभासे वा प्रत्यक्षतदाभासे[9] वा ? तत्र यथा प्रथममध्यमप्रकाराभावात् नीलविकल्पश्चरमं कल्पमालम्बते, तथाहमित्ति विकल्पोऽपि । तत्रायम् ,

प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः ।
तदाभासे तु मूलेऽस्य पारम्पर्यात् सवस्तुता ॥

इति । न च बाह्यप्रत्यक्षनिवृत्तावेव निर्मूलत्वम्, बुद्धिविकल्पस्यापि निर्मूलत्वप्रसङ्गात् । तत्र स्वसंवेदनं मूलम् , इहापि मानसमिति न कश्चिद् विशेषः । तत्कथमात्मनि प्रत्यक्षप्रतिषेधकं **भाष्यमि**त्यत आह—**अहमिति** । यद्यपि सवस्तुकोऽयं

१. तत् om C  २. द्रव्य° om C  ३. °त्वत्वानु° J  ४. आत्मने M
५. °भावात् JA  ६. °स्तत्र M  ७. °नियमस्यापि M  ८. °मात्रवादं M  ९. प्रत्यक्षतदाभासे वा repeated J

तथापि शरीरप्रत्ययसामानाधिकरण्यात् तद्वस्तुक[1] एवायमित्यपि स्यात् । अतो न तदतिरिक्ते वस्तुनि प्रमाणयितुं शक्यते तावद् यावद् देहादिभ्यो भिन्न आत्मा प्रमाणान्तरेण न साध्यत इत्यर्थः । तदिदमुक्तम्—**द्रागिति** । घटादिज्ञानवदिति व्यतिरेकिदृष्टान्तः । यथा हि घटादिज्ञानं शरीरादिप्रत्ययवैयधिकरण्यात् तदतिरिक्ते वस्तुनि द्रागेव प्रमाणयितुं शक्यते, तथा नेदमित्यर्थः ॥

ननु यदि नाम न द्रागेव, विचारक्रमेण तु प्रमाणयिष्यते । तथा हि, निरुपाधिशरीरबुद्धितत्समुदायालम्बनत्वेन अहंप्रत्ययस्यातिप्रसङ्गात्[2] स्वसंबन्धिनि शरीरादावयमहंप्रत्यय[3] इति वाच्यम् । तत्रात्मव्यतिरेकेण कः स्वार्थ इति चिन्तनीयम् । अनन्यत्वं स्वत्वं सर्वभावानाम् । तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादनन्यत्वादहमिति[4] स्यात् । अतएव घटादयो न कदाचिदप्यनन्यानुभवितृका इति न कदाचिदप्यहमास्पदमिति चेत् ? एवं तर्हि त्वन्मतेऽप्ययमहमिति प्रत्ययः शरीरादावारोपरूप एव, ततः प्रत्येतुरन्यत्वात् । बुद्धौ मुख्य इति चेत्—न, तस्याः क्रियात्वेनानुभूयमानाया भिन्नस्य तत्कर्तुरहं छिनद्मीतिवदहं जानामीत्यनुभवात्[5] नीलादिप्रत्येतव्याकारवत् प्रतिपत्त्राकारोऽपि प्रतीतेरेवायमात्मा तथा भासत इति चेत् ? तर्हि प्रत्येतव्याकारसमानयोगक्षेमत्वेन प्रतिपत्त्राकारस्यापि सिद्धं नः समीहितम् । अस्तु स्वोपादानमात्रमिति चेत्—न, तत्प्रतिभासने तद्गतार्थाकारस्यापि प्रतिभासप्रसङ्गात् । आकारमन्तरेणाकारिणोऽनवभासनात् । [6]प्रवृत्तिविज्ञानसंतानादन्य एवायं बुद्धिसंतानः प्रतिपत्ता, [7]यमालयविज्ञानमाचक्षत इति चेत् ? एवं तर्हि प्रवृत्तिविज्ञानोपादानमनादिनिधनः सिद्धोऽधिकः प्रतिपत्ता । स किं संतन्यमानज्ञानरूपः, तद्विपरीतरूपो वेति चिन्ता परिशिष्यते । तस्याश्च रङ्गभूमिः क्षणभङ्गभङ्ग इत्यत आह—**परेति** । दृढतरं विशेषनिष्ठम् । स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वमेकज्ञानगोचरत्वम् । पूर्वानुभूतितत्कार्यस्मृतितत्कार्यानुभूतीनामेकेनानुव्यवसायेन एककर्तृकतया संकलनमित्यर्थः ॥

एतेन[8] प्रतिसंधानं प्रत्यभिज्ञानं वा स्यात्, कार्यकारणविशेषयोरेकसंताननियमो वा ? आद्ये तत्त्वतः प्रत्यभिज्ञानमसिद्धम्, अभिमानतो विरुद्धम्, अविशिष्टमनैकान्तिकम् । द्वितीयेऽपि विरोध एवेति निरस्तम् । तदाह—**तदनेनेति** । तदत्र प्रतिसंधाने कार्यकारणभावः परेणोपन्यस्तः किमुपाधितया विपक्षव्यावृत्तिसंदेहमुद्भावयितुम् ? अथ स्वदर्शने

---

१. एवाहमि॰ M. २. ॰त्वेऽहंप्रत्य॰ M ३. अहमिति MA ४. ॰दव्यतिरे···M; ॰मिति प्रत्ययः A ५. ॰त्यनुभवप्रत्ययात् M. ६. ॰त्तिसन्तान॰ JA ७. यत्तमा॰ A ८. एकेन A

प्रतिसन्धानव्यवस्थां प्रतिपादयितुम् ? प्रतिसन्धानस्य तु क्षणभङ्गसाधनमेव [1]बाधनमित्याशयः । तत्र प्रत्यभिज्ञानं प्रतिसन्धानमिति गृहीत्वोपाधिलक्षणमपनिनीषन् कार्यकारणभावप्रतिसन्धानयोः परस्परेण व्याप्तिं खण्डयति—**न हि यत्रेति** । पुनः बौद्धः[2] । न हि कार्यकारणभावमात्रं प्रतिसन्धाननिबन्धनमाचक्ष्महे । किं तर्हि ? सादृश्यविशिष्टमिति शङ्कते—**वस्तुत इति** । तदिदमुक्तम्, **सभागेषु** इति । एतद्व्यतिरेकव्यभिचारेण दूषयति—**तन्नेति** । विशिष्टोऽपि कार्यकारणभावो न प्रतिसन्धानं प्रति प्रयोजको यतस्तन्निवृत्तावपि नेदं निवर्तत इत्यर्थः । न च सादृश्यमात्रमेवास्तु तन्निबन्धनमिति साम्प्रतम्, भेदग्रहे तस्यापि व्यभिचारात् । तदग्रहपक्षस्तु वाच्य इति तमुपेक्ष्यास्मदभिप्रेतं प्रतिसन्धानमादाय शङ्कते—**पूर्वापरेति** । यत्र कर्तरि प्रतिसन्धानं तत्रावश्यं प्रतिसन्धेयानां बुद्धीनां कार्यकारणभावः । यत्र चैष एवंभूतः, तत्रावश्यं कर्तृप्रतिसन्धानमिति न व्यभिचरतीत्यर्थः । दूषयति—**हन्तेति** । नैरात्म्यसाक्षात्कारसात्मीभाव इति सर्वज्ञोपलक्षणपरम्[3] ॥

तदयमर्थः, सर्वज्ञस्तावदुभयवाद्यविवादविषयः[4] । स किमात्मनः पूर्वापरप्रत्ययानेककर्तृकतया प्रतिसंधत्ते न वा ? आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धम् । ज्ञानानां भेदस्य[5] धियामस्थैर्यस्य सर्वैरेव प्रतीतेः । प्रतिसन्धातुः क्षणिकतायाः सर्वज्ञेनाप्यप्रतीतेः । अथ न प्रतिसन्धत्ते, न तर्हि कार्यकारणभावनिबन्धनं कर्तर्यपि प्रतिसन्धानम् । न ह्यस्ति संभवो यदन्वयेऽपि यस्यानन्वयस्तत् तावन्मात्रनिबन्धनमिति । सैव च इत्यादि सोत्प्रासम् । **व्यर्थ** इति । स्वनिबन्धनानुवृत्तौ सत्त्वदृष्टेर्दुरपह्नवत्वात्[6] । अवश्यं च तस्य प्रतिसंधानेन भवितव्यम् । कथमन्यथोपदिशेत् ? अवश्यं [7]चोपदेष्टा स्वीकर्तव्यः । यदि पारलौकिकेऽर्थे विप्रलम्भका एव वक्तार इति निश्चयः, संभावनयापि प्रेक्षावन्तो न प्रवर्तेरन् । तस्मादुभयथापि प्रतिसन्धातुरेकत्वं सिद्धम् ॥

अत्र शङ्कते—**अथासदपीति** । [8]ततश्च न कार्यकारणभावो न तस्य निबन्धनम् अव्यभिचारात् । नाप्यनुपदेशप्रसङ्गः, तन्निबन्धनस्य प्रतिसन्धानस्य भावात् । नापि दोषावकाशः, स्वरसवाहिनस्तस्य[9] तद्धेतुत्वात् । अस्य त्वाहार्यत्वादित्यर्थः । शङ्कते—**न चेति** । सोऽयं कार्यकारणभावे सत्येव द्रष्टव्यः । उपदेशस्तु पूर्वप्रतिसन्धान-

१. साधनम् M २. पुनः बौद्धः om JA ३. लक्षणमिदम् M ४. °विवादविवादसिद्धः M ५. °नाद्भेदश्च M ६. °पनेयत्वात् M ७. च स उप° JA ८. तत्र च M ९. तस्य om M

बलोपनीतकरुणाभ्यासप्रकर्षादेव विरोधप्रतिसन्धानबलेन सुप्तस्येव प्रबोध इति शङ्कार्थः । उत्तरम्—**प्रवृत्तीति** । न च स्फटिकवद् विषयोपरागपरिहारेण[1] बुद्धिषु भेदाग्रह इति युक्तम्, स्फटिकवदुपाधिपरिहारेण बुद्धीनां प्रत्येतुमशक्यत्वात् । तथाभावे बुद्धिमात्रेण भेदाग्रहे पार्थिवतया वृक्षात् काष्ठं काष्ठादङ्गारः, ततो भस्मादिभेदेन न गृह्येत । गृह्यते च । तस्मान्निमित्तव्यावृत्तौ[2] प्रतिसन्धानं न स्यात्, भवद् वा निमित्तान्तरमाक्षिपतीत्यर्थः । न चोपदेशः प्रतिसन्धानमन्तरेण समर्थितः स्यात् । स हि विवक्षायोनिः । सा च सङ्केतितशब्दस्मरणादियोनिः । तदेव च प्रतिसन्धानम् ॥

नन्वालयविज्ञानभेदाग्रहात् प्रतिसन्धानं भविष्यतीत्यत आह—**आलयेति** । स ह्यालयसन्तानोऽहमास्पदं[3] प्रवृत्तिविज्ञानादन्य एव स्यात्, तदन्तःपातिकादाचित्कानेकाहंप्रत्ययरूपो वा ? न तावदाद्यः, न ह्यहमहमिकया परस्परस्वतन्त्रसन्तानद्वयमनुभूयते । सत्यपि वा परस्परमनुपादानानुपादेयभावान्न परस्परप्रत्याकलितार्थानुसन्धानबन्धः । तथात्वे वा चैत्रमैत्रादिष्वपि प्रसङ्गः । उभयोर्वा उभयोपादानत्वे एकमप्यनेकाश्रितमिति किमपराद्धमवयविसंयोगादिभिः ? न चालयविज्ञानोपात्तं प्रवृत्तिविज्ञानं न किञ्चिदुपादत्त इत्यपि[4] युक्तम् । तथा सति निमित्ततामपि न यायात्, उपादानत्वव्याप्तत्वान्निमित्ततायाः । एवं च यदि ज्ञानान्तरमुपाददीत, तदा अपूर्वानन्तसन्तानप्रवृत्तिप्रसङ्गः । तस्मान्नालयसन्तान आनुभविको न चौपपत्तिक इत्यर्थः । द्वितीये त्वाह—**अहमिति** ॥

अयमाशयः । अस्य हि भेदाग्रहः स्वरूपतो वा स्यात्, विषयतो वा ? स्वरूपतोऽपि पूर्वाहमिति प्रत्ययमात्राद् वा, प्रवृत्तिविज्ञानेभ्योऽपि वा ? न तावदाद्यः, अहमित्यज्ञासिषम्, अहमिति जानामि, अहमिति ज्ञास्यामीत्यतीतत्वादिप्रतीतेर्भेदनिश्चयमन्तरेणानुपपत्तेः । कथञ्चिद् भेदाग्रहेऽपि तदर्थस्यैव प्रतिसन्धानमुचितम्, न प्रवृत्तिविज्ञानानाम् । न च तेभ्योऽपि भेदाग्रह इति चोक्तमेव । नापि विषयतः । स हि स्वाकारो वा[5] स्यात्, वस्त्वन्तरमेव वा, अलीकं वा ? नाद्यः, प्राग्दूषणेनैव[6] गतत्वात् । न ह्यनेन स्वाकारः स्वात्मनो भेदेनारोपितः, अपि तु[7] स्वात्मविषय एव दर्शितः । तस्य च भेदो निश्चित इति । नापि द्वितीयः, स्वयमनभ्युपगमात् । नापि तृतीयः, अहमिति विकल्पस्य सवस्तुकतायाः प्रागेव प्रसाधनात् । अवस्तुकत्वेऽपि न तत्र प्रकृतोपयोगिभेदाग्रहसंभवः । स हि विद्यमान एव भेदो न गृह्यते, अविद्यमान

१ °विरहेण M २. निवृत्तौ M ३ °सन्तानाद° J ४. अपि om M ५. स्यात् om J ६. निरस्तः M ७. स्वात्मभूतः M

एव वा, आरोपितो वा, आरोपितासत्त्वो वा ? न तावदाद्यः, अलीकस्य अज्ञायमानभेदसम्पत्तावनलीकत्वप्रसङ्गात् । नापि द्वितीयः, पारमार्थिकस्य भेदाभावस्य पारमार्थिकाभेदपर्यवसायित्वात् । न च परमार्थत एव नानाविकल्पोल्लिखितमलीकमेकात्मकम् अनात्मकत्वात्[1] । तथात्वे वा क्व भेदाग्रहस्योपयोगः, एकत्वादेवैकत्वेनानुसन्धानात् ? नापि तृतीयः, विरोधपराहतत्वात् । यदि हि तत्र भेदारोपः[2], कथं तदग्रहः ? तदग्रहे वा कथं भेदारोपः ? न च भेदारोपेऽभेदारोपस्याप्यवकाशः[3] । नापि चतुर्थः, आत्माश्रयप्रसंगात्, पारमार्थिकभेदप्रसङ्गाच्च । घटपटयोर्यो भेदः पारमार्थिकः, शशविषाणनरविषाणयोर्वा यो भेदः काल्पनिकः, स इह न गृह्यते इत्यभेदानुसंधानमिति चेत्— न, अन्यविषयभेदाग्रहे अन्यत्राभेदारोपेऽतिप्रसङ्गात् । चतुष्कोटिविनिर्मुक्ताव्यपदेश्यभेदाग्रहे त्वभेदारोपे त्रैलोक्यैकतारोपप्रसङ्गः ॥

तत्र भेदग्रहोऽप्यस्तीति चेत् ? तर्हि यथाभूतो भेदः तत्र गृह्यते, तदग्रहे एवाभेदारोप इत्येव साधु । न चैतदलीकविषयत्वपक्षे[4] संभवतीति स्थिरवस्तुगोचरत्वम् एव सत्त्वबुद्धेर्ज्यायः । क्षणभङ्गस्तु निषेत्स्यत इति भावः । तदिदमुक्तरूपं प्रतिसन्धानं निमित्तवत्तया व्याप्तं निर्निमित्तत्वे नियमानुपपत्तेः । तच्चानेककर्तृत्वे नास्तीति[5] व्यापकानुपलब्ध्या विपक्षान्निवर्तमानं निमित्तवत्येककर्तृकत्वे विश्राम्यतीति प्रतिबन्धसिद्धिः इत्यनेनाभिप्रायेणोपसंहरति—**तस्मादिति** ॥

तदेतत्सर्वं बुद्धीनामुपादानोपादेयभावमभ्युपेत्योक्तम् । वस्तुतस्तु तत्रैवायं विवादः । तथा हि व्यवहितकाला अपि प्रत्यया यद्येककर्तृकाः, क्व बुद्धीनामुपादानोपादेयभावः ? स चेत्, क्व तेषामेककर्तृकता ? सा ह्येकोपादानतैव । न चैकजातीयत्वे सति तदुत्पत्तिः एवोपादानोपादेयभावः । शिष्यो पाध्यायबुद्ध्योरपि तथाभावप्रसङ्गात् । भेदाग्रहे सतीत्यपि न युक्तम्, समस्तोपाधिस्वीकारपरिहारेण[6] शिष्याचार्यबुद्ध्योरपि भेदाग्रहात् । सोपाधिभेदग्रहस्य प्रकृतेऽपि भावात् । शरीरभेदाग्रहस्य जन्मान्तरेण व्यभिचारात् । अनुपलब्धपितृकेण बालेन चाति प्रसङ्गात् । घटकपालक्षणयोरतथाभावप्रसङ्गाच्च । एकाधारतानियम इत्यपि न युक्तम्, तस्य वास्तवस्य क्षणिकपक्षे विषमसमयानां क्षणानामभावात्, काल्पनिकस्य त्वतिप्रसंजकत्वात् । अस्ति हि सर्वेषामभिमानो यत्रैव घटे गन्धः तत्रैव रूपरसस्पर्शा इति, यत्रैव शरीरं तत्रैव ज्ञानमिति । एतेन चाभ्रान्तसमतैकावसायः[7] प्रकृतिविक्रिये । ततो

---

१. °मेकमनात्मक° J २. तदा° M ३. °स्यावकाशः M ४. अलीकपक्षे J
५. निर्निमित्तकत्वे नास्तीति M ६. °स्वीकार° om J ७. °त्वमतैका° M

हेतुफलस्योपादानोपादेयलक्षणमिति निरस्तम् । काष्ठस्य तु प्रकृतेर्विकृतिरङ्गार इति कुतो निश्चितं भवता ? यावता वह्नेरेवासौ विकारः किं न स्यात् , वह्निसंबन्धे काष्ठादेव तदुत्पत्तेरिति चेत्—न, काष्ठसंबन्धे वह्नेरेव तदुत्पत्तिरित्येवं किं न स्यात्[1] ? पार्थिवं पार्थिवोपादानकमेवेति निश्चयादिति चेत् ? कुत एतत् ? सभागेषु क्षणेषु तथा दर्शनादिति चेत् ? तदपि कुतः ? अभ्रान्तसमतैकावसायादिति चेत्—न, नीलपरमाणुषु परस्परप्रत्यासन्नेषु निरन्तरं ज्ञायमानेषु परस्परोपादानत्वप्रसंगात् । अस्ति हि तेषां तदुत्पत्तौ सत्यां ममता आभिमानिकैकत्वावसायश्च[2] । पारमार्थिकस्तु न क्वचिदपि । अस्तु पिण्डितानां रूपरसपरमाणूनां सर्वेषां सर्वोपादानत्वमित्यपि न युक्तम् , अनेकवृत्तेः एकस्य स्वयमनभ्युपगमात् , सप्रसिघानां समानदेशत्वाभावाच्च । [3]एतेन भ्रान्तसंमतैकावसाय इति[4] पाठान्तरमपास्तम् , लौकिकानां भ्रान्तसंमतेस्तत्रापि[5] तुल्यत्वात् । परीक्षकाणां तु प्रकृतेऽप्यसत्त्वात् । तस्मात् कार्यकारणभावमात्रमवशिष्यते । स च नोपाधिरतिप्रसंगात् । किञ्चिदेव स्वकारणसामग्रीवशादुत्पद्यते ज्ञानं यत् कांश्चिदेव कारणसान्तानिकान् प्रत्ययान् प्रत्यवेक्षते नान्यत् । नापरानित्येतदप्यसाधीयः, नियामकमन्तरेण शिष्यस्याप्युपाध्यायचित्तप्रत्यवेक्षकज्ञानोत्पादप्रसङ्गात् । तत्र तेषामनभिसंस्कारकत्वात् नैवमिति चेत् ? कारणत्वज्ञानत्वाविशेषेऽप्येतदेव कुतः ? विचित्रा हि कारणानां शक्तिः । तत् किमतिनिर्बन्धेन ? यत्र यथा कार्यं दृश्यते तत्र तथा कल्प्यत इति चेत् ? तत् किमिदानीं किंभूतस्य कुत्र सामर्थ्यमित्यनुयोगोऽनुत्तर एव । एवं तर्हि सर्वत्र ज्ञापकजनकेष्वनाश्वासात् निरीहं जगत् जायेत । क्षणभङ्गसाधनबाधितत्वात् प्रतिसन्धानहेतोरेवं कल्प्यत इति चेत् ? अथानेनैतत्[6] किं न बाध्यते ? तस्य निर्दोषत्वादिति चेत् ? अस्य तर्हि दोषान्तरं वचनीयम् । अगृह्यमाणविशेषत्वादस्तूभयोः सत्प्रतिपक्षत्वमिति चेत् ? नन्विदमपि ते व्यसनं निवर्तयिष्यामो मा त्वरिष्ठा इत्युपसंहारशेषः ॥

यदि हि[7] सर्वज्ञस्य चेतसोऽस्मदादिचित्तमालम्बनप्रत्ययत्वेनोदाह्रियते[8] वैसदृश्याद् दण्डघटवन्न प्रतिसंधत्त इत्यपि परिहरेदत उक्तम्—**योगिचित्तमपीति । तस्यापि योगिचित्तेन प्रतिसन्धानं स्यादिति** विपर्ययो हेतुविपर्यासस्यापि[9] संभवात् । सहार्थे वा तृतीया । इहानुभवो वा कालान्तरभाविनीं स्मृतिं जनयति[10], तज्जनितो वा संस्कारः ? सोऽप्यतीन्द्रियोऽध्यक्षसिद्धो वा ? अतीन्द्रियोऽपि तत्कालस्थायी, संतन्यमानो वा ?

---

१. ॰रित्यपि कल्प्येत J २. ॰वसायः M ३. आप्तस॰ M ४. इत्यपि M
५. संमतेस्तुल्य॰ M ६. ॰नैव तत् M ७. तर्हि M ८. ह्रियेत M ९. ॰विपर्ययस्यापि J
१०. जनयेत् J.

[१]अध्यक्षसिद्धोऽपि तदुत्तरबुद्धिधारारूपो वा, तदन्यो वा, तद्विशेषो वा ? विशेषोऽप्यनुभवप्रसवत्वमात्रं वा, अनुभवितृसन्तानवैजात्यं वेति ? तत्र प्रथमं दूषयति—**न ह्यजातेति**। अध्यक्षसिद्धस्तु[२] तदुत्तरबुद्धिधारारूपात्, अन्यस्तावदनुपलब्धिबाधितः, तैरनभ्युपगतश्च[३]। अनुभवप्रभवतामात्रलक्षणस्तु विशेषोऽविशेष एव। न हि कर्मकरकरोपनीतम् एव बीजं क्षितिमासाद्याङ्कुरं कुरुते। न तु तथाभूतमपि प्रमादपतितम्, तथा नीलाद्यनुभवसन्तानः पीताद्यनुभवेन वोपनीयताम्[४], नीलाद्यनुभवेनैव वेति न कश्चित् स्वरूपकृतो विशेषः। एवं चाननुभूतेऽपि स्मरणप्रसङ्गो न चानुभूतेऽपीति वैजात्यं तु विशेषो भवेत्। यथा क्षीरावसेकादम्लत्वं परिहृत्य माधुर्यमादायानुवर्तमानामलकी कालान्तरे अपि फले माधुर्यमुन्मीलयति, लाक्षारसावसेकाद् धवलतां परिहृत्य रक्ततामुपादायानुवर्तमानं कार्पासबीजं कुसुमेषु रक्तताम्, न चैवं प्रकृते संभवति। जवाकुसुमाद्युपधानात् तद्रूपतां[५] परिहृत्य धवलिमानमुपादायैव संतन्यमानस्य[६] स्फटिकस्येव ज्ञानस्यापि विषयोपरागं परिहृत्य चिद्रूपतामात्रमुपादायानुवृत्तेः। सर्वाकारत्वमेव सर्वविज्ञानानां किं तु कश्चिदाकारः स्फुटः[७], अन्ये त्वपटव इति तु स्वदर्शनश्रद्धा, यतो विरुद्धधर्माध्यासादपि न भीः। निराकारपक्षेऽपि यावानर्थो बुद्धेर्विषयस्तत्र स्फुटैव सा। यत्र त्वस्फुटा नासौ तस्या विषयः। तथात्वे वा विषयेतरव्यवस्था न स्यात्। तस्मादतीन्द्रियः संस्कारः परिशिष्यते। स चेत् कालान्तरस्थायी, नूनं तदुपादानमपि तथैव स्थायि। न ह्युपादाननिवृत्तावपि[८] उपादेयमवतिष्ठत इत्याशयवानाह—**इति पूर्वोत्पन्न इति**। संतन्यमान एवातीन्द्रियः संस्कारो भविष्यतीत्याशयवानाशङ्कते—**पुनः पर इत्यादि**। पृथक्संस्कारसन्तानो हि न तावत् पराभ्युपेतो नाप्युपपन्नः, आलयस्य प्रागेव प्रतिषेधात्। ततोऽप्यधिकत्वे तत्रैव स्मृत्यादिफलप्रसङ्गात्। तस्मात् प्रवृत्तिसन्ताने फलानवकाशात् अन्यत्र[९] संस्कारेऽन्यत्र फलेऽतिप्रसङ्गात्। तस्माद् यत्रानुभवस्तत्र संस्कारः, यत्र च स तत्र स्मृत्यादिफलमिति [१०]परमुपपद्यते॥

एवं च क्षणभङ्गसाधनं प्रतिरोधकमवशिष्यते। तत्राह—**उपपादयिष्यते हीति**। एतेन यो यः संस्कारः क्वचित् सन्तान आहितः, स तत्रैव फलदानयोग्यो नान्यत्रेत्यादि निरस्तम्, अतिरिक्तस्य संस्कारस्याश्रयासिद्धत्वात्, विशेषलक्षणस्य च स्वरूपासिद्धत्वात्, अविशिष्टोत्तरकार्यप्रवाहलक्षणस्य च विरुद्धत्वादिति। अनित्यत्वस्य

१. प्रत्यक्ष° J २. °वस्तु M ३. °गतैश्च M ४. °नैवोप° M ५. तद्रक्ततां M ६. संतन्वानस्य J ७. पटुः M ८. अपि om M ९. तृतीयेऽधिकत्वे तत्रैव। स्मृतफलानवकाशप्रसङ्गादन्यत्र M १०. परम् om M

हेतोर्विशेषव्यावर्तकत्वोत्कीर्तनं गुणत्वसिद्ध्युपयोगात् । अतएव नेतरेतराश्रयत्वशंका, अनित्यत्वेन पारतन्त्र्यं साधयित्वा तेन[1] गुणत्वप्रसाधनात् । गुणत्वं तु यदर्थं साधितम्, तत् तत्साधकेनैव साधितमिति वैयर्थ्यमवशिष्यते । तदुपसंहरति—**तस्मादिति** । [2]ननु यदि वैयर्थ्यमस्य हृदि निहितमेव **वार्त्तिककृता**, तत् किमर्थममुमेव हेतुमुपन्यस्तवानित्यत आह, तदपि पूर्वमुक्तम्, न तु प्रसाधितम् । न चासिद्धं साधनं नामेति कृत्वा इति गर्भशोषः[3] ॥

अयमर्थः । यथा अनित्यत्वं द्रव्यपारतन्त्र्याविनाभूतम्, तथा गुणत्वमपि । यथा च तदिच्छादिषु, तथा गुणत्वमपीति । न तावदनयोः साधनत्वं प्रति कश्चिद् विशेषः [ केवलमनुमानकालाभावो [4]विवक्षितः । सोऽपि नास्ति, एकहेतुसिद्धेऽपि हेत्वन्तरजिज्ञासुं प्रति भावात् । अननुसंहितानित्यत्वमपि तल्लक्षणयोगेन गुणत्वव्यवहारिणं प्रति च । दृश्यते हीच्छादीनां सामान्यवतामचलनात्मकानां गुणान्तरायोगः । [5]अत्र विप्रतिपत्तौ त्वनित्यत्वादेरुपन्यासः । तदयमपेरर्थः[6] । अनित्यत्वेन पारतन्त्र्यमपि साधयति, तत्साधकं गुणत्वमपीति । उत्तरप्रबन्धोपयोगमाह—**न चैतदिति** । द्रव्यपारतन्त्र्येण विशेषितेनेति शेषः । तदेतद् विशेषणं कुतः सिद्धमित्यत आह—**यद्यपीति** ॥

अयमाशयः । प्रत्यक्षग्रहणयोग्यास्तावदस्यावयवाः प्रत्यक्षानुपलम्भेनैव निरस्ताः । अतीन्द्रियेष्वनुमानं प्रमाणम्, तच्च द्विविधं समव्यासिकमसमव्यासिकं चेति । तत्र यद्यपि द्वितीयस्य निवृत्तौ न साध्यनिवृत्तिः, तथापि प्रथमस्य निवृत्ताववश्यं निवर्तेत । तथा हि, क्वचिदुपलभ्यमानस्पर्शवत्तया द्रव्यस्यारम्भकत्वं कल्प्येत । आरम्भके सति च तत् कार्यद्रव्यं सावयवं व्यवस्थाप्येत, वायुवत् । न [7]चेह क्वचिदुपलभ्यमानस्पर्शवत्त्वास्तीति नारम्भसंभवः, तदभावे न सावयवत्वमाकाशवत् । तदिदमुक्तम्—**तदवयवकल्पनायां प्रमाणाभावेनेति**[8] । **न तावदण्विति** । व्यापकमित्यर्थः, विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् । कुत इत्यत आह—**तत्र तत्रेति** । तथा सत्येव हीच्छादीनां सार्वत्रिकत्वमुपपद्यते यत इत्यर्थः । तदुपपादयति—**क्वचिदिति** । **अन्यतरत्** शरीरादि । **क्वचित् स्वभावतः** कार्यद्रव्योत्पत्तेरारभ्य तत्करणसंयोगादेः । अथ गतेरेव किं न तं तमाप्नोतीत्यत आह—**गतिकल्पनायां प्रमाणाभावात्** । गतिकल्पनाप्रमाणं हि मूर्तिः । तया अपरिदृश्यमानापि गतिः कल्प्यते मनसि परमाणुषु च । तदभावश्चात्मनि ।

---

१. अनेन M  २. ननु वैय° M  ३. नामेति निगर्वशेषः M  ४. वक्तव्यः J
५. वत्र M  ६. अपरोऽर्थः M  ७. चेत् J  ८. °ल्पनाया प्रमाणाभावादिति M

तथा हि, न परमाण्वाश्रया इच्छादयः, अनित्यत्वे सत्यस्मदादिप्रत्यक्षत्वात्, शब्दवत्। निरवयवद्रव्याश्रितत्वं च साधयता सावयवाश्रितत्वं प्रागेव निरस्तम्। अतोऽमूर्तत्वान्न गतिसंभवो मूर्तेर्गत्या समव्याप्तिकत्वादिति पूर्ववन्नेयम् ॥

ननु नैतदेकमपि वार्त्तिककृत्स्थमित्यत आह—**तदेतदादिग्रहणेति**। ननु तथापि किमनया कष्टसृष्ट्या, यावता गुणत्वमन्यथाप्यमीषां साधयितुं शक्यम्? तथा हि इच्छादयो गुणा अनित्यत्वे सत्येकेन्द्रियग्राह्यजातिमत्त्वात्, रूपादिवदित्यादिना इत्यत आह—**तदनयेति** ॥ १० ॥

॥ भाष्यम् ॥

तस्य भोगाधिष्ठानम्—

**चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥११॥**

कथं चेष्टाश्रयः? ईप्सितं जिहासितं वार्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा, सा यत्र वर्तते तच्छरीरम्। कथमिन्द्रियाश्रयः? यस्यानुग्रहेणानुगृहीतानि उपघाते न चोपहतानि स्वविषयेषु [1]साध्वसाधुषु प्रवर्तन्ते, स एषामाश्रयः तच्छरीरम्। कथमर्थाश्रयः? यस्मिन्नायतने इन्द्रियार्थसन्निकर्षादुत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते, स एषामाश्रयः तच्छरीरमिति ॥ ११ ॥

॥ वार्त्तिकम् ॥

**चेष्टेन्द्रियार्थाश्रयः शरीरमिति**। का पुनरियं चेष्टा? हिताहितप्राप्तिपरिहारार्थः [2]परिस्पन्दः। सुखसाधनोपलब्धौ तदीप्साप्रयुक्तस्य यः परिस्पन्दः सा चेष्टा इत्युच्यते[3]। एवं दुःखसाधनोपलब्धौ तज्जिहासानुष्ठानलक्षणः परिस्पन्द इति ॥

कथमिन्द्रियाणां शरीरमाश्रयः? स्वकारणवृत्तित्वादवृत्तित्वाच्च। यानि तावत् कार्याणीन्द्रियाणि तानि स्वकारणवृत्तीनि। यदकार्यं तदवृत्ति। घ्राणादीनि त्वक्पर्यन्तानि कार्याणि, श्रोत्रमनसी त्वकार्ये। न च घ्राणादिमनःपर्यन्तमिन्द्रियं शरीरवृत्ति। तस्मादयुक्तमिन्द्रियाश्रयः शरीरमिति। शरीरानुविधानमिन्द्रियाश्रयत्वं ब्रूमः। न पुनः आधाराधेयभावेनेन्द्रियाणि शरीर वर्तन्ते इति। अपि तु [4]शरीरानुग्रहोपघातानुविधानम्

१. साधुष्वसाधुषु च प्रव° J २. स्पन्दः C ३. गम्यते C ४. शरीरस्योपघात° C

इन्द्रियाश्रयत्वस्यार्थः । शरीरानुग्रहेणानुगृह्यन्ते, तदुपघाते चोपहन्यन्ते[1] इत्ययमाश्रयार्थः । तस्मादयथार्थोऽयमाक्षेप[2] इति ॥

एतेनार्थानामाश्रयार्थ उक्तो वेदितव्यः । किं कारणम् ? न हि गन्धादयोऽर्थाः शरीरवृत्तयः । यत्तु तेषां कार्यं सुखदुःखोपलब्धिनिमित्तत्वम्, तन्नासति शरीरे भवतीति शरीराश्रया इत्युच्यन्ते । यथा ग्रामीणा ग्रामण्यमाश्रिता इति । कथं पुनरेते चेष्टादयः सामान्यशब्दाः सन्तो विशेषवृत्तयो भवन्तीति ? सामान्यशब्दानामपि विशेषवृत्तित्वं सामर्थ्यात् । सामर्थ्यं प्रकरणादि । ब्राह्मणान् [3]भोजयेदिति यथा अशेषब्राह्मणभोजनस्याशक्यत्वात् विशेषेण सन्निधीयमानं प्रकरणापन्नं ब्राह्मणविशेषमाह, एवं [4]चेष्टादिशब्दानामपि समानतायां सत्यां सामर्थ्याद् विशेषेऽवस्थानम् । सामर्थ्यं च लोकतस्तदधिगतिः प्रमाणासंभवो वा । [5]लोकस्तावत् चेष्टाशब्दं न क्रियामात्रे प्रयुङ्क्ते किं तु [6]क्रियाविशेष इति, यथा स्पन्दते सर्पति धावतीति । यथैते स्पन्दादिशब्दाः क्रियावाचकाः सन्तः विशेषेष्ववतिष्ठन्ते, तथा चायं चेष्टाशब्दः सामान्यवाच्यपि प्रमाणासंभवात् क्रियाविशेषे वर्तते, न क्रियामात्राधारस्य शरीरत्वव्यक्तिहेतुत्वं संभवतीति । एवं च न घटादिषु प्रसङ्गः । यैरप्यत्राद्यादिपदप्रयोगे घटादिषु प्रसङ्ग[7] इति देश्यं क्रियते, तदप्यनेन व्याख्यानेन प्रत्युक्तम् । सति च प्रसङ्गे समस्तपदप्रयोगेऽपि न परमाणुषु प्रसङ्गो [8]निवर्तते इति । यथा त्वस्माभिर्वर्णितं तथा न क्वचिदपि शरीराद् अन्यत्र [9]वर्तते इति ॥ ११ ॥

॥ टीका ॥

आत्मानं लक्षयित्वात्मनो दुःखनिदानानामिन्द्रियादीनां सर्वेषां साक्षात् पारम्पर्येण [10]च शरीरमाश्रित्य तन्निदानत्वमिति तदेवास्य दुःखमूलकारणमित्यनन्तरं शरीरं लक्षयितुं **सूत्रम्—चेष्टेत्यादि** । तदवताराय **भाष्यम्—तस्येति** । तस्येत्यात्मानं परामृशति । भोगः सुखदुःखसंवित् । तदधिष्ठानं शरीरम् । तदनेन सर्वस्यानर्थसंभारस्य परमनिदानं शरीरम् । अतस्तदेवेन्द्रियादिभ्यः पूर्वं लक्षणीयमित्युक्तम् । अत्र चेष्टाश्रयत्वेनेन्द्रियाश्रयत्वेनार्थाश्रयत्वेन च प्रत्येकं समानजातीयेभ्य आत्मेन्द्रियादिभ्योऽसमानजातीयेभ्यः प्रमाणसंशयादिभ्यः शरीरं व्यवच्छिद्यते ॥

**कथं चेष्टाश्रयः** इति भाष्यम् । तस्यार्थं व्याचष्टे—**का पुनरिति** । चेष्टा

---

१. °तेनोप° J २. अयम् om C ३. भोजयोति C ४. °शब्दानामपि साम° C ५. लोकत॰ C ६. क्रिया° om C ७. दिष्वप्र° C ८. वार्यते C ९. प्रसङ्ग इति J १०. च om C

व्यापारः। स चातिव्यापकतया अव्यापकतया च न लक्षणम्, वृक्षादिषु भावात्, अभावाच्च पाषाणमध्यवर्तिमण्डूकादिशरीरे इति भावः। **अत्रोत्तरभाष्यम्—ईप्सितमित्यादि**। तद् व्याचष्टे—**हिताहितेति**। **प्रयुक्तस्य** उत्पादितप्रयत्नस्य। न च व्यापारमात्रं चेष्टा अभिमता, [1]अपि तु विशिष्टो व्यापारः। स च न वृक्षादिष्वस्तीति नातिव्यापकता। यद्यपि च दारुयन्त्रादिषु ईदृशो व्यापारोऽस्ति, तथापि मूर्तान्तराप्रयोगे सतीति विशेषणात् न व्यभिचारः, तेषां [2]शरीरेण मूर्तेन प्रयोगात्। शरीरस्य तु मूर्तान्तराप्रयुक्तस्य ईदृशव्यापाराश्रयत्वम्, पाषाणमध्यवर्तिनश्च मण्डूकदेहस्य तद्व्यापारायोगेऽपि तद्योग्यत्वात्, पाटिते पाषाणे तादृशस्य तद्व्यापारस्य दर्शनादिति भावः॥

**कथमिन्द्रियाश्रय** इति भाष्यं व्याचष्टे—**कथमिति**। संयोगितया त्विन्द्रियाश्रयत्वे घटादीनामपि शरीरत्वप्रसङ्गः, तेषामपीन्द्रियसंयोगित्वादिति भावः। **यस्ये**त्यादि परिहारभाष्यं व्याचष्टे—**शरीरेति**॥

**एतेनेति**। तद्वृत्तित्वेनानुपपत्त्या अर्थानामप्यन्यादृश आश्रयार्थो व्याख्येयः। यद्यपि गन्धादयो विषया न स्वरूपेण शरीरमाश्रयन्ते तथापि यदेषां सुखाद्युपलम्भहेतुत्वं कार्यं प्रयोजनं तदर्थमाश्रयन्ते इत्यर्थः। तदनेन **यस्मिन्नित्यादि भाष्यं** व्याख्यातम्। चोदयति—**कथं पुनरिति**। परिहरति—**सामान्येति**। विशेषेण बुभुक्षितत्वादिना[3] प्रकरणापन्नं नियन्त्रितं सामर्थ्यम्। [4]**प्रकरणादी**त्यत्रादिपदसंगृहीतमपरमपि सामर्थ्यशब्दार्थमाह—**सामर्थ्यं चेति**। अपरमप्याह—**प्रमाणेति**। अत्र प्रथमे पक्षे चेष्टाशब्दो व्यापारविशेषे स्पन्दादिवन्मुख्यार्थः। तदेतत्—**लोकस्तावदि**त्यादिना **तथा चायं चेष्टाशब्द** इत्यन्तेन दर्शितम्। **प्रमाणासंभवो वेति** द्वितीयं पक्षं विवृणोति—**सामान्यवाच्यपीति**। अपिरभ्युपगमे। प्रमाणासंभवोऽनुपपत्तिः। **सा च**[5] **न क्रियामात्र** इत्यनेन दर्शिता[6]। एवं चेष्टापदव्याख्याने न घटादिषु शरीरत्वप्रसङ्गः॥

एवं भाष्यानुसारेण स्वमतेन [7]च प्रत्येकं चेष्टाश्रयत्वादि शरीरस्य लक्षणमिति वर्णयित्वा समस्तमेवेदं शरीरलक्षणमिति ये [8]वर्णयांबभूवुः, तन्मतं [9]निराकरोति—**यैरपीति**। यद्याद्यं पदं लक्षणं चेष्टाश्रय इति, तदा घटेन व्यभिचारः। तदर्थं द्वितीयपदोपादानम् इन्द्रियाश्रय इति, इन्द्रियसंयोगीत्यर्थः। तथापि तेनैव घटादिना व्यभिचारः, प्राप्यकारित्वेनेन्द्रियाणां घटादीनामपि इन्द्रियसंयोगित्वात्। अत आह—**अर्थाश्रय**

१. किं तु J  २. शरीरे C  ३. बुभुत्सित॰ C  ४. ॰दित्यादि॰ C  ५. सा तु C  ६. वा॰ पृः ४०६.१०  ७. च om C  ८. वर्णयन्ति C  ९. ॰मपाकरोति C

इति । एवमपि व्यभिचारस्तदवस्थ एव, घटादीनामपि रूपाद्यर्थसमवायेनार्थाश्रयत्वात् । अथ समवायाभिप्रायेणाश्रयत्वम्, तथापि न समवाय इन्द्रियाणां शरीरे । घ्राणस्य पार्थिवत्वेन समवायो न विरुद्ध इति चेत्—न, तस्य शरीरावयवसमवायित्वेन शरीरासमवायात् । यदि नासिकाग्रमेव घ्राणम् , अथ तदाधारमतीन्द्रियम् , तथापि न तत्समवेतं शरीरम् , प्रत्यक्षाप्रत्यक्षवृत्तेर्वायुवनस्पतिसंयोगवदप्रत्यक्षत्वप्रसङ्गाद् देहस्य[1] । अपि च यदा चेष्टेन्द्रियार्थस्य समवायेन शरीरत्वम् , हन्त भो इन्द्रियसमवायिकारणेषु परमाणुषु समस्तम् एतदस्तीति तेषामपि शरीरत्वप्रसङ्ग इत्याह—समस्तेति । स्यादेतत् । भवन्मतेऽपि चक्षुरादिभिरिन्द्रियैर्व्यभिचारः, तेषामपि यथोक्तव्यापाराधारत्वादित्यत[2] आह—**यथा त्विति** । मूर्तान्तराप्रयोगे सतीति विशेषितम् । चक्षुरादयस्तु उन्मीलनान्मूर्तेन शरीरेण प्रयुज्यन्ते इति न प्रसङ्गः । श्रोत्रं तु चेष्टाधार एव न भवति । तदेतदुपलक्षणं शरीरं भावयन्निर्दिश्यते इति सिद्धम् ॥ ११ ॥

॥ परिशुद्धिः ॥

यस्य कृतेऽपवर्गो मृग्यते स तावल्लक्षितः । अथेदानीं पुरुषस्यापेक्षिततमत्वात् अपवर्गो[3] लक्षयितुमुचितः । तत् किमन्तराले[4] शरीरादिलक्षणमित्यत आह—**आत्मानमित्यादि** । अपवर्गस्याभावरूपत्वात् प्रतियोग्यधीननिरूपणतया दुःखादपकर्षः । तस्यापि हेत्वधीनोत्पत्तिकतया तद्धेतुरूपेभ्य इन्द्रियादिभ्योऽपकर्षः । तेषामपि शरीरमाश्रित्य तथाभावात् शरीरादपकर्ष इति संगतिसंक्षेपः । **साक्षात् शरीरमाश्रित्येति** । इन्द्रियाणां मनसः अंशतोऽर्थादेः परम्परया तु शरीराश्रितत्वम् । बुद्धेर्दोषाणामर्थाद्यंशस्य[5] च । अस्मिन्नेवार्थे **भाष्यम्** इत्याह—**तदवतारायेति** ॥

अत्र हि चेष्टायाः शरीराव्यभिचारपक्षे अर्थेन्द्रियसमुच्चयोऽनुपपन्नः, सम्भवे व्यभिचारे च विशेषणस्यार्थवत्त्वात् । समुच्चयपक्षे व्यभिचारदर्शिनः कथं चेष्टाश्रय इति प्रश्नोऽनुपपन्नः, प्रत्येकव्यभिचारे सत्येव हि समुच्चयसम्भवात् । अतो विकल्पं गृहीत्वा **भाष्यमुत्थापयति—अत्रेति** । यद्यपि चेष्टा कायव्यापारस्तथापि तस्यैव लक्ष्यत्वादितरेतराश्रयभिया व्यापारमात्रं वक्तव्यमित्याह—**चेष्टा व्यापार** इति । प्रयुक्तस्य इति सतात्पर्यं पदम् । अतो व्याचष्टे—**प्रयुक्तस्योत्पादितप्रयत्नस्येति** । तेन कारणद्वारा चेष्टानिरुक्तिः । प्रयत्नवदात्मसंयोगासमवायिकारणान्त्यावयविक्रिया चेष्टा । फलद्वारा तु

---

१. द्र० वै. सू. ४.२.१ २. ०त्वादत C ३. ०क्षिततमोऽपवर्गं M ४. कथमन्तरा M
५. अर्थांशस्य M

हिताहितप्राप्तिपरिहारफलेति । तदिदमुभयं विवक्षतोक्तम्—**अपि तु विशिष्टो व्यापार** इति । तेन फलद्वारनिरुक्तौ व्यभिचारोदाहरणम् । दारुयन्त्रादिकारणद्वारनिरुक्तौ तु प्राणाख्यो वायुः । मनःकरचरणादयस्तु अन्त्यावयविपदेनैव निरस्ताः । तत्रोभयव्यभिचारमुद्भावयन् **दारुयन्त्रादी**त्याह । द्वयमपि परिहरति—**मूर्तान्तरेति** । अत्र च स्पर्शवद्द्रव्यपरिमाणं मूर्तिरिति परलक्षणाभिप्रायेण मूर्तिशब्दः प्रयुक्तः । तेन च स्पर्शवद्द्रव्यान्तराप्रयोगे सतीत्यर्थः । प्रयोगश्च क्रियौपयिको गुणः । स च दारुयन्त्रादौ नोदनादिः । प्राणे तु प्रयत्नः । तेन यद्यपि शरीरस्य प्रयोजकं मनोऽस्त्येव, तथापि न तत् स्पर्शवत् । यद्यपि च[1] शरीरेणापि तत्र प्रयत्यते[2], तथापि न तत् [3]ततोऽन्यत् । तदिदम् अन्तरग्रहणफलम् । अतो नासिद्धं विशेषणमिति । एतच्च यथाश्रुतं **भाष्यवार्त्तिका**नुरोधेन विशेषणम् । आगामि**वार्त्तिक**पर्यालोचनायां तु चेष्टाशब्द एवायमेवम्भूतेऽर्थविशेषे वर्तत इति[4] न न्यूनं सूत्रमाशङ्कनीयम् । **पाषाणेत्यादि** । न च तस्यापि प्राणित्वेनोच्छ्वासनिःश्वासानुमानात् नयनोदराद्यवयवसंकोचविकाशलक्षणा[5] चेष्टास्तीति वाच्यम् , उच्छ्वासनिःश्वासावकाशाभावात् अन्त्यावयविनो निष्क्रियत्वाच्च । अपि च मृतशरीराव्याप्तिपरिहाराय योग्यतैव शरणम् । न चोदाहरणमादरणीयमिति ॥

ननु यद्यपीन्द्रियाणि शरीरे न समवयन्ति, तथापि संयुज्यन्ते । [6]तावतैव आश्रयार्थ उपपन्न इत्यतो **वार्त्तिककार**स्य भावमाविष्करोति—**संयोगितया त्विति** । यद्यपि [7]गोलकस्याभिघातेऽपि चक्षुरुपहन्यते तदनुग्रहे चानुगृह्यते, तथापि विशेषानुपादानात् सर्वेन्द्रियाभिप्रायमेतद् द्रष्टव्यम् । न हि गोलकमात्रस्योपघातेऽनुग्रहे वा त्वगादीन्युपहन्यन्ते अनुगृह्यन्ते वा । यथा जरायौवनादिना शरीरोपघातानुग्रहाभ्यां सर्वाणि विकलायन्ते पटूनि वा सम्पद्यन्त इति । तदेतद् **भाष्यवार्त्तिककाराभ्यामेवानुगृह्यन्ते** उपहन्यन्त इति बहुवचनप्रयोगेण स्पष्टं दर्शितमित्युपेक्षितवान् । **न स्वरूपेण शरीरम् आश्रयन्त** इति । [8]अव्याप्त्यतिव्याप्ती विहायेति शेषः । ननु सुखाद्युपलब्धिहेतुत्वमर्थानां कार्योपहितं रूपम् , न तु तदेव कार्यमित्यत आह—**प्रयोजनं तदधिकारेण तत्र प्रवृत्ते**रिति । तदयं लक्षणार्थः । यदवच्छिन्ने आत्मनि अर्था भोगं जनयन्ति तच्छरीरम् । तेन नात्मना व्यभिचारः । न ह्यात्मात्मनैवावच्छिद्यते । नापि मनसा, तस्य शरीरानवच्छेदेन प्रवृत्तेरभावात् । नापीन्द्रियैः, तदवच्छेदेन तत्र भोगोत्पत्तौ बहिरपि भोगप्रसङ्गादिति । तदेतत् तस्य भोगधिष्ठानमिति वदता **भाष्यकृता** एव प्राक् दर्शितं स्फुटमिति

१. च om M  २. तत्प्रयुज्यते M  ३. °न्यतरदिद° J  ४. °विशेष इति J
५. नयनादेवाप्यवयव M  ६. तस्याश्रयानुप° M  ७. गोलकाद्यु° J  ८. इति J

नेह वितन्यते । **चोदयतीति**[1] । अर्थगतिं समर्थ्य शब्दगताविति शेषः । चेष्टादयः सामान्यशब्दा इति **वार्त्तिके** बहुवचनं दृष्टान्तब्राह्मणादिशब्दान्तर्भावेन । आश्रयशब्दा वृत्तिभेदविवक्षया वेत्यतो मन्दाशङ्कत्वादुपेक्षितम् । अशेषब्राह्मणभोजनस्याशक्यत्वादित्यनुपपत्तिवर्णनं सम्पातायातमस्य पक्षस्याग्रे वर्णनीयत्वात् । अतएव तदुपेक्ष्य प्रकृतोपयुक्तं विवृणोति—**विशेषेणेति** । **बुभुक्षितत्वादिना सन्निधीयमानमित्यनेन** सम्बन्धः । अत्रानयोः प्रकरणादीत्यादिपदसंगृहीतयोर्मध्य इत्यर्थः । प्रमाणासम्भवोऽनुपपत्तिर्बाध इत्यर्थः । यस्यापि प्रमाणेन शरीरत्वं बाधितं भवति[2], तत्रापि व्यापाराश्रयत्वं गतमिति ॥

**अथ समवायाभिप्रायेणेति** । अत्र हीन्द्रियाश्रय इति षष्ठीतत्पुरुषो बहुव्रीहिर्वा । तत्र समवायाभिप्रायेणोभयं दूषयति—**तथापीति** । उपलक्षणं चैतत् । शरीरस्येन्द्रियेष्वित्यपि द्रष्टव्यम् । प्रथमपक्षे मूर्तानां समानदेशताप्रसङ्गात्, एकस्य द्रव्यस्य अनारम्भकत्वात्, पृथिव्या अबादिद्रव्यानारम्भकत्वाच्च । द्वितीयपक्षे तु विजातीयानाम् अनारम्भकत्वात् । श्रोत्रमनसोर्द्रव्यानारम्भकत्वादित्यर्थः[3] । इन्द्रियविशेषं गृह्णाति—**घ्राणस्येति** । श्लिष्टं वाक्यम्[4] । अत्रायमनुयोगः[5] । शरीरावयवान्तरेण घ्राणस्य समवायो वा संयोगो वा ? प्रथमेऽपि द्वयी गतिः, घ्राणस्य वा शरीरावयवे समवायः, तस्य वा घ्राण इति । तदेतदनुयोगद्वयमभिप्रेत्याह—**न तस्येति** । शरीरावयवसमवायिकारणत्वेन शरीरेऽसमवायात् । न हि कारणं कार्यकार्ये समवैतीत्यर्थः इति षष्ठीतत्पुरुषपक्षे । बहुव्रीहिपक्षेऽपि शरीरस्यासमवायात् । न हि कारणकारणे कार्यं समवैतीत्यर्थः । घ्राणस्य शरीरावयवे समवाय इति तु न सम्भवत्येव, मूर्तयोरेकाश्रयत्वानुपपत्तेरित्यत्र **टीका** स्फुटा । संयोगपक्षं गृह्णाति—**अथ तदाधारमिति** । तत्र संयुक्तमित्यर्थः । अत्रापि द्वयीगतिः, आरम्भकतया अनारम्भकतया वा । तत्र प्रथमं दूषयति—**तथापीति** । आरभ्यमाणं हि द्रव्यमैन्द्रियकैरेवावयवैरारभ्यते यथा घटः । अतीन्द्रियैरेव वा यथा द्व्यणुकादिकम् । न तु मिश्रैरिति व्याप्तिः, तामुपोद्बलयितुमप्रत्यक्षत्वप्रसङ्ग उक्तः । अनारम्भे तु संयोगिद्रव्यमात्रं स्यात् केशादिवत् । तथा च न तत्र शरीरसमवायसम्भव इति किमनेन शङ्कितेनापीत्युपेक्षितवान् । एतेन शरीरसमवेतमेतदिति[6] निरस्तम्, अतीन्द्रियद्रव्यस्यैन्द्रियकेणानारम्भात्, एकद्रव्यस्य च द्रव्यस्याभावात् । अल्पपरिमाणस्य महतानारम्भात् । शरीरव्यापकत्वे च तस्य सर्वत्र गन्धोपलब्धिप्रसङ्गात् । **अपि चेति** ।

---

१. देशयतीति M  २. भवति om J  ३. °देवेत्यर्थः M  ४. शिष्टवा° M
५. अर्थयोगः M  ६. °मेव तदिति M

यद्यर्थशब्दो रूपादिमात्रवचनः, तदैवं दूषणम् । यदा त्विन्द्रियविषयवचनः, तदा वायवीयशरीराव्याप्तिः । योगिनस्तदपि तथेति यदि तदेन्द्रियपरमाणुभिरेव व्यभिचारः, तेषामपि तथाभावादिति । तदेतत्सर्वं शब्दगतिमुपेक्ष्य चर्चितम्[1] । परमार्थतस्तु यदि द्वन्द्वानन्तरं बहुव्रीहिः क्व लिङ्गसङ्गतिरर्थसङ्गतिश्च[2] ? अथ प्रथमत एव बहुव्रीहिः कैकपद्यमिति ? ॥ ११ ॥

॥ भाष्यम् ॥

भोगसाधनानि पुनः,

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥**

जिघ्रत्यनेनेति घ्राणं गन्धं गृह्णातीति । रसयत्यनेनेति रसनं रसं गृह्णातीति । चष्टेऽनेनेति चक्षू रूपं पश्यतीति । त्वक्स्थानमिन्द्रियं त्वक् । [3]तदुपचारः स्थानादिति । शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति । एवं समाख्यानिर्वचनसामर्थ्याद्बोध्यं[4] स्वविषयग्रहणलक्षणानीन्द्रियाणीति । भूतेभ्य इति । नानाप्रकृतीनामेषां सतां विषयनियमः, नैकप्रकृतीनाम् । सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं [5]भवतीति ॥ १२ ॥

॥ वार्त्तिकम् ॥

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्रम् । लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानि सर्वाणीति सूत्रार्थो द्रष्टव्यः । उद्देशसामान्यान्न[6] लक्षणाभिधानम् । नामधेयेन पदार्थमात्रस्याभिधानमुद्देश इत्युद्देशलक्षणमुक्तम्[7] । इदं च तथा । तस्मात् नेदं लक्षणमिति । नेदं तथा, करणभावात् स्वविषयग्रहणलक्षणत्वमिन्द्रियाणाम् । करणस्वभावकानीन्द्रियाणीति । तेषामतीन्द्रियाणां [8]इन्द्रियाणां यत् स्वविषयग्रहणं तेन लक्ष्यन्त इति स्वविषयग्रहणलक्षणत्वं वेदितव्यम्, असाधारणत्वादिति ॥

भूतेभ्य इति पृथिव्यादिकारणोपदेशो नियमार्थः । कः पुनरयं नियमः ? भूतगुणविशेषग्रहणसाधनत्वम्, न सर्वमिन्द्रियं सर्वभूतगुणविशेषं[9] गृह्णाति । अपि तु यज्जातीयमिन्द्रियं भवति, तस्य यो गुणविशेषः इतरेतरभूतव्यवच्छेदहेतुर्गन्धादिः[10] स तेनैवेन्द्रियेण गृह्यत इत्ययं नियमः । ऐकात्म्ये पुनरयं नियमो न स्यात् । यदि पुनः इन्द्रियाण्येकात्मकानि एककारणकानि स्युः, कारणस्वभावानुविधानादैकात्म्याद् विषय-

१ वर्णितम् M २. °तिः प्रयोगसङ्ग° M ३. तद्वद्दुप° J ४. °ध्यऽयं J ५. संभव° J ६. न om C ७. द्रः पृ १८१.२१ ८. इन्द्रियाणां J ९. भूतगुणं J १०. गन्धादिः om C

व्यवस्था न स्यात् । सर्वं सर्वार्थमेकं वा सर्वार्थमिति स्यात् । एककारणानामपि स्वभावभेदो रूपादिवदिति चेत् ? [1]अथापि मन्येथाः दृष्ट एककारणकाणां पाकजरूपादीनां स्वभावभेदः । कतमत् पुनरेकं कारणं रूपादीनाम् ? अग्निसंयोग इति । न, सिद्धान्तापरिज्ञानात् । न ब्रूमोऽग्निसंयोगात् [2]केवलाद् रूपादय इति, अपि तु पूर्वरूपादिविशेषापेक्षात् । यद्द्रव्यं पच्यतेऽग्निसंयोगेन, तस्य ये पूर्वे रूपादयः, तेषां यः स्वगतो विशेषः, तमपेक्षमाणोऽग्निसंयोग उत्तरान् रूपादीन् विशिष्टानारभते । एवं च कृत्वा परमाणोः पक्वतरतमादिभेदः । तस्मान्नैककारणपूर्वका रूपादय इति न किञ्चिदप्येककारणकं कार्यं दृष्टमिति । सर्वं हि कार्यं प्रादुर्भवत् समवाय्यसमवायिनिमित्तकारणेभ्यो भवतीति । एकं कर्म संयोगविभागयोः कारणं दृष्टमिति चेत्—न, अनभ्युपगमात् । स्यान्मतिः, ननु च [3]दृष्टमेकं कर्म संयोगविभागयोः कारणमिति । न, अनभ्युपगमात् । नैतदभ्युपगच्छामो निरपेक्षं कर्म संयोगविभागयोः कारणमिति । यदि तर्हि कर्मापि सापेक्षं संयोगविभागौ करोति, [4]ततः कर्मलक्षणहानिः । यन्निरपेक्षं संयोगविभागकारणं तत् कर्मेत्युक्तम्[5] तद्धीयते, लक्षणहानेश्च न कर्म । ततश्च संयोगविभागौ न कर्मपूर्वकाविति । नैष दोषः । न ब्रूमो निरपेक्षं कर्म कारणमिति न किञ्चिदपेक्षत इति । अपि तु चरमभविनिमित्तान्तरं नापेक्षते इत्ययं निरपेक्षार्थः । यथा द्रव्यजातं समानजातीयद्रव्यं संयोगं च चरमभाविनमपेक्षमाणं द्रव्यमारभते, नैवं कर्मजातं[6] पश्चाद्भाविनिमित्तमपेक्षते । [7]अपि तु उत्पन्नं सत् कर्म संयोगविभागावारभते इति । तस्मान्न कर्मलक्षणहानिः । न चैकपूर्वकत्वं संयोगविभागयोरिति ॥ १२ ॥

॥ टीका ॥

इन्द्रियस्योपनायकत्वेनार्थादिभ्यो विशेषादिन्द्रियाणामर्थादिभ्यः पूर्वं लक्षणम् । न च विशेषलक्षणमकृते सामान्यलक्षणे शक्यमिति भाष्यकारः प्रथममिन्द्रियाणां सामान्यलक्षणं निर्वेदोपयुक्तमाह—भोगसाधनानीति । अनेन यच्छरीरसंयुक्तं [8]सत्कारकदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति सामान्यलक्षणं सूचितम् । साक्षात्प्रतीतिसाधनमिन्द्रियमिति वक्तव्ये भोगसाधनाभिधानं निर्वेदोपयोगीति । पारम्पर्येण च [9]भोगसाधनत्वं घ्राणादीनाम्, साक्षान्मनस एव तत्साधनत्वात्, सुखदुःखसाक्षात्कारस्य भोगत्वात् ॥

---

१. अपि om C २. एकस्मात् C ३. एकं om C ४. ततः om C ५. वै. सू. १.१.१७ ६. °जातीय C ७. अपि तु कर्म सत् C ८. संस्कारक° C ९. °साधनत्वे J

घ्राण—भ्यः ॥१२॥ अत्रेन्द्रियाणीति लक्ष्यनिर्देशः घ्राणादीनीत्यर्थः । तेषां पञ्चानां पञ्चैव लक्षणानीति कथयति—लक्षणसूत्राणीति । आपाततः सूत्रम् , विचार्यमाणानि [1]तु सूत्राणीत्यर्थः । समानजातीयं घ्राणादे रसनादि प्रतिनियतविषयत्वात् । असमानजातीयं तु मन आदि सर्वविषयमिति । जिघ्रतीत्यादिभाष्यनिराकरणीयशङ्कामाह—उद्देशेति । प्रमाणाद्युद्देशेन सामान्यादित्यर्थः । लक्षणं हि विधेयम् । लक्ष्यं चोद्देश्यम् । ज्ञातं चोद्दिश्यते, अज्ञातं [2]च विधीयते इति । न चैकस्य युगपज्ज्ञाताज्ञातत्वे संभवतः । नापि लक्ष्यलक्षणत्वे इति भावः । परिहरति—नेदं तथा यथोद्देश इत्यर्थः । कस्मात् ? करणभावात् स्वविषयग्रहणलक्षणत्वं यतो घ्राणादीनाम् । एतदुक्तं भवति, इन्द्रियाणामतीन्द्रियत्वात् सर्वदा स्वस्वविषयोपलब्धिकरणत्वेनैवानुमातव्यानि । तस्मात् स्वस्वविषयोपलब्धिसाधनत्वमेव समानासमानजातीयव्यवच्छेदकतया लक्षणम् । तदेकार्थसमवायि [3]तु घ्राणत्वादि लक्ष्यम् । अत्र च घ्राणादिशब्दाः पङ्कजादिपदवदवयवार्थं निमित्तीकृत्य क्वचित् , क्वचित् सामान्यविशेषे वर्तन्ते, [4]अवयवार्थसंबन्धस्य प्रतीयमानस्यासति बाधके परित्यागायोगात् । अश्वकर्णादौ वृक्षविशेषवाचके वाजिकर्णायोगेन बाधकेनावयवार्थपरित्यागात् । अवयवार्थयोगेऽपि [5]च गन्धाद्युपलब्धिसाधने सन्निकर्षादौ घ्राणादिशब्दाप्रयोगात् अवयवार्थान्वितं घ्राणत्वाद्येव घ्राणादिशब्दप्रवृत्तिनिमित्तम् । तथा च घ्राणादिपदमेव घ्राणत्वादिपरं लक्ष्यनिर्देशः । तच्च इन्द्रियाणि इत्यनेन सूचितम् । तदेव त्ववयवार्थपरं लक्षणनिर्देशो [6]घ्राणेत्यादि । न च सन्निकर्षेण गन्धोपलब्धिसाधनेन [7]च व्यभिचारः, इन्द्रियसामान्यलक्षणयुक्तस्य गन्धोपलब्धिसाधनत्वं न सन्निकर्षस्यास्ति । तदनेन जिघ्रतीत्यादि स्वविषयग्रहणलक्षणानि इत्यन्तं भाष्यं व्याख्यातम् । निर्वचनग्रहणेन पदप्रवृत्तिनिमित्तमात्रमुच्यते । तेन त्वक्पदमपि संगृहीतं भवति । तस्यापि त्वक्स्थाने इन्द्रिये स्पर्शोपलब्धिसाधने एव उपचार इति ॥

भूतेभ्य इति [8]सूत्रावयवतात्पर्यव्याख्यानपरं भाष्यं भूतेभ्य इतीति । नानाप्रकृतीनामित्यादि । तद् वार्त्तिककारो व्याचष्टे—भूतेभ्य इति । पृच्छति—कः पुनरिति । उत्तरम्—भूतगुणविशेषग्रहणसाधनत्वम् घ्राणेनैव हि पृथिव्या यो गुणविशेषो गन्धः स गृह्यते, न रसनादिना । एवं रसनेनैवापां यो माधुर्यं गुण-

---

१. च C  २. च om J  ३. तु om C  ४ °संबन्ध° om C.  ५. च om C
६. घ्राणेति C  ७. च om J  ८. °व्याख्यान° om C

विशेषः स गृह्यते, [1]न घ्राणादिना । एवं चक्षुषैव शुक्लभास्वरं रूपं तेजसः । एवं त्वचैवानुष्णाशीतस्पर्शोऽपाकजो वायोः । एवं श्रोत्रेणैव शब्दो नभस इति हि नियमः ॥

अत्र च प्रयोगः, गन्धोपलब्धिः करणसाध्या क्रियात्वात् छिदिक्रियावदिति । एवं सा तदन्यक्रियाकरणातिरिक्तकरणनिष्पाद्या, तदन्वयव्यतिरेकाननुविधाने सति कार्यत्वात् । या यत्क्रियाकरणान्वयतिरेकाननुविधाने सति कार्या, सा सर्वा [2]तत्क्रिया-करणातिरिक्तकरणनिष्पाद्या, यथा पटादिक्रिया घटादिक्रियाकरणचक्रदण्डाद्यतिरिक्त-वेमादिकरणनिष्पाद्या । तथा चेयम् । तस्मात् तथेति । तच्च करणं चक्षुराद्यतिरिक्तं घ्राणम् । तद् द्रव्यम्, संयोगाधारत्वाद् घटादिवत्[3] । तच्च पार्थिवम्, द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, पार्थिवान्तरवत् । एवं रसनादिष्वपि योज्यम् । तदिदमुक्तम्—**यज्जातीयमिन्द्रियं** पार्थिवं पाथसीयं वा भवति, तस्य पृथिव्याः पाथसो वा यो गुणविशेषो गन्धो वा मधुर एव वा रसभेदः, तेन हि पृथिवी [4]अबादिभ्यः, आपो वा पृथिव्यादिभ्यो व्यवच्छिद्यन्ते इति । **इतरेतरभूतव्यवच्छेद-हेतुः स तेनैवेन्द्रियेण गृह्यते** नान्येनेति । न चैवं रसना अपामिव पृथिव्या अपि रसभेदं गृह्णातीति पार्थिवी भवति । तथात्वे तया गन्धोऽप्युपलभ्येत । तेन **तेनैवे-न्द्रियेणेति** नियमो गुणविशेषमवधारयति, न त्विन्द्रियमिति । अत्र च कर्णशष्कुली-संयोगोपाधिना श्रोत्रस्य नभसः कथञ्चिद् भेदं विवक्षित्वा भूतेभ्य इति पञ्चम्यर्थो व्याख्येयः[5] ॥

अनेन खल्वाहङ्कारिकाणीन्द्रियाणि इति यदाहुः **सांख्याः**, तत् निराकृतम् । निराकरणहेतुमाह—**ऐकात्म्य** इति श्लिष्टं पदम् । **सांख्यानां** किल राद्धान्ते कारणात्मकं कार्यम् । तच्च कारणमिन्द्रियाणामहङ्कार एक इत्यैकात्म्यमेककारणकत्वम् । तथा चैकात्म्यमेकत्वं घ्राणादीनामित्यनियमः स्यादिति । तदेतद् विभजते—**यदि पुनरिति** । शङ्कते—**एकेति** । विभजते—**अथेति** । एकः पाक्य एकोऽग्निसंयोगः एकं चौष्ण्यमित्यर्थः । निराकरोति—**न ब्रूम** इति । यद्यप्यौष्ण्यं निमित्तं साधारणम्, तथापि गन्धाद्युत्पत्तौ पूर्वगन्धादिध्वंसानां [6]निमित्तानां भेदादुत्पन्नं[7] कार्यनानात्वमिति । तदिदमुक्तं **ये पूर्वे रूपादयः तेषां स्वगतो विशेषः** प्रध्वंस इत्यर्थः । अथ रूप-त्वादिसामान्यमेव कस्मात् स्वगतो विशेषो न भवतीत्यत आह—**एवं च कृत्वेति** । रूपत्वादिसामान्यानां तादवस्थ्ये न पक्वतरतमादिभेदः । प्रध्वंसानां तु स्तोकभूयस्त्वं[8]

---

१. न घ्राणादिना om C °वेमादि° om C ३. घटादिवत् om C ४. अब्वा-य्यादिभ्यः C ५. व्याख्यातः C ६. निमित्तानां om C °दुपपन्नं K ८. °भूयस्त्वनि° JK

निःशेषत्वे नोपपद्यते इति भावः। पुनराशङ्कते—**एकं कर्मेति**। निराकरोति—**नेति**। समवायिकारणं [1]स्वाश्रयप्रत्यासत्तिं वापेक्षत इति भावः। शङ्कते—**यदि तर्हीति**। **लक्षणहानिः** तथा च लक्षणहानिरित्यर्थः। निराकरोति—[2]**नेति**। **चरमभावि निमित्तान्तरं** भावरूपमित्यर्थः। संयोगाभावं तूत्तरसंयोगजननायापेक्षत एव। उपसंहरति—**तस्मादिति**॥ १२॥

॥ परिशुद्धिः॥

**इन्द्रियस्येति**। केनचिदुपाधिना शरीरादीनामेव फलत्वमिति स्वाभाविकरूपप्रतीत्यधीनत्वाच्चौपाधिकरूपप्रतीतेः तेभ्यः फलस्यापकर्षः। शरीरादीनामेव धर्मः प्रेत्यभावो [3]धर्मिनिरूपणाधीनत्वाच्च धर्मस्य तेभ्यः प्रेत्यभावस्यापकर्षः। अर्थादीनां दोषान्तानां शरीरमाश्रित्य दुःखहेतुत्वाविशेषेऽपि परम्परया शरीराश्रितत्वादिन्द्रियाणां[4] तु साक्षात् तथाभावादेभ्यस्तेषामपकर्षः। मनसस्त्वेवंरूपत्वे सत्यपि बाह्येन्द्रियवैधर्म्यज्ञापनार्थत्वात् बुद्धिक्रमानुमेयत्वाच्च बुद्धेः सकाशादपकर्षः। तदिदमुक्तम्—**उपनायकत्वेनेति**। साक्षाच्छरीरमाश्रित्य प्रतिनियतविषयाद्युपनयद्वारा दुःखहेतुत्वेनेत्यर्थः। **शरीरसंयुक्तं** सदिति शेषः। अतो नोभयावधारणे भागासिद्धमसिद्धं वेति दोषः। सर्पमणिप्रदीपादीनां तु **संस्कार**पदेनैव निरासः। एतावांस्तु विशेषो यदञ्जनादीनामिन्द्रियसंस्कारकत्वम्। प्रदीपादीनां तु विषयसंस्कारकत्वमिति॥

ननु भाष्यकृद् आह—**भोगसाधनानीति**, तत्कथमेतत् तेन सूचितमित्यत आह—**साक्षादिति**। यद्यपि भुज्येत इति भोगौ सुखदुःखे इति साक्षादेव भोगसाधनत्वं सर्वेषां सम्भवति, तथापि **भोगो बुद्धिरिति** तत्र तत्र भाष्यदर्शनात् तदनुसारेण व्याचष्टे—**पारम्पर्येण चेति**॥

यथा च सामान्यलक्षणमन्तरेण न विशेषलक्षणावसरः, तथा विभागमन्तरेणापीति सोऽपि वक्तव्यः स्यात्। तदेतदेवंलक्षणकमिन्द्रियं बाह्यमाभ्यन्तरं चेतीन्द्रियप्रकरणात् मनोऽन्यत्र नयता **सूत्रकृता** एव सूचितम्। बाह्यमपि पञ्चधेति। गन्धरसरूपस्पर्शशब्दा इति प्रतिनियतार्थविभागं कुर्वता **सूत्रकृता** एव दर्शितम्। यदि ह्यपरमपि बाह्यम् इन्द्रियं स्यात्, कथं पञ्चैव प्रतिनियता विषया इति तदेव व्यवच्छेद्यं दर्शयन्नेव मनाक् स्मारयति, रसनादि प्रतिनियतविषयम्, मन आदि सर्वविषयमिति च। आदिग्रहणेन

---

१. स्वात्मप्र॰ C २. नेति om C ३. धर्म्यधीननिरूपणत्वाच्च M ४. ॰राद्हेतुत्वा॰ M

आत्मशरीरे । न त्वात्मादिप्रमेयोद्देशसूत्रे सामान्येनेन्द्रियमात्रमुद्दिष्टम् । इह तु घ्राणेत्याद्युच्यते । तत् कथं ततो न विशेष इत्यत आह—**प्रमाणाद्युद्देशेनेति** । उद्देशविशेषेण । [1]अथ विभागसूत्रत्वेऽपि लक्षणसूत्रं[2] किं न स्यात् ? न ह्यनयोः कश्चिद् विरोध इत्यत आह—**लक्षणं हीति** । ज्ञातं चोद्दिश्यते विधिविषयतया अनूद्यत इत्यर्थः । अज्ञातं च विधीयते ज्ञाप्यत इत्यर्थः ॥

परार्थानुमाने विरोधमुक्त्वा स्वार्थानुमानेऽप्याह—**नापि लक्ष्यलक्षणत्वे इति** । लक्ष्यस्य पक्षरूपतया साध्यत्वात्, लक्षणस्य च लिङ्गरूपतया सिद्धत्वादित्यर्थः । तथापि कथमेभ्य एव पदेभ्यो विवक्षितोभयलाभ इत्यत आह—**अत्र चेति** । **क्वचित् क्वचित् सामान्यविशेष इति** । जातिरूपे [3]साधर्म्यरूपे चेत्यर्थः । तेन श्रोत्रपदमप्यवयवार्थं निमित्तीकृत्य नभसो विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नत्वे वर्तत इति । तर्हि योग एवास्त्वित्यत आह—**अवयवार्थयोगेऽपीति** । तथाप्युभयाभिधायकत्वाविशेषे कथं लक्ष्यलक्षणपदव्यवस्थेत्यत आह—**तथा चेति** । ननु केवलेनावयवार्थेन[4] लक्षणे अतिव्याप्तिः, घ्राणत्वादिसहितेन तु इतरेतराश्रयत्वमित्यत आह—**न चेति** । **सामान्यलक्षणयुक्तस्येति** । यावता व्यभिचारो निवर्तते तावदुपलक्षणपरम् , न तु समुच्चितं पदं निरुच्यते त्वक्पदं त्वनवयवं वृद्धिक्षयवद्द्रव्यसहजावरणमात्रे वर्तत इत्यभिप्रायवता **भाष्यकृता** लक्षणं तद्बीजं च दर्शितम् । तथापि न प्रकृतसिद्धिः । न ह्येवमपि लक्ष्यलक्षणव्यवस्था सिध्यतीत्यत आह—**निर्वचनग्रहणेनेति** । **क्रियात्वादिति** कार्यत्वाद् इत्यर्थः । **संयोगाधारत्वादिति** ग्राह्यस्य मृगमदादिगन्धस्य तत्रासमवायात् मृगमदादीनां स्वावयवसमवायेन समवेतसमवायाभावात् । स्वातन्त्र्येण ग्रहे विशेषणत्वाभावात् अप्राप्तस्य चाग्रहणात् । इतरसन्निकर्षत्रयस्य संयोगगर्भत्वात् संयोगः सिद्ध एवेत्युपक्रमः । अथ को नियमार्थः ? किं यज्जातीयं यदिन्द्रियं तत्तज्जातीयस्यैव गुणविशेषं गृह्णाति ? अथ यज्जातीयं यदिन्द्रियं तज्जातीयस्य तेनैव गुणविशेषो गृह्यते इत्यत आह—**न चैवमिति** । यद्यपि प्रथममप्यवधारणं घ्राणश्रवसोः संभवति, तथापि रसनादिषु व्यभिचारात् तदुपेक्ष्योत्तरं ग्रहीतव्यमित्यर्थः । तथापि भूतेभ्य इति [6]सूत्रपदस्य किं तात्पर्यम् इत्यत आह—[7]**अनेन खल्विति** । यद्यपि विशेषसिद्धिरेव शेषं निषेधति, तथापि विपर्यये बाधकं वक्तव्यमित्यत आह—**निराकरणहेतुमाहेति** । न त्वेकप्रकृतिकत्वमाह **सांख्यो** न त्वेकस्वाभाव्यमिन्द्रियाणामित्यत आह—**श्लिष्टं पदमिति** । एकः

---

१. अर्थ॰ M २. ॰सूत्रत्व॰ M ३. ॰रूपेणेत्य॰ M ४. ॰वयवत्वेन M ५. लक्षणाबीजा J ६. सूत्रस्य M. ७. अनेन…आह om M

पाक्यः । सर्वसाधारण इति शेषः । एवमुत्तरत्रापि । **स्तोकभूयस्त्वनिःशेषत्वेन** इति, प्रारब्धपाकापेक्षया । **तथा च लक्ष्यहानिरिति**—न ह्यस्ति संभवो निर्हेतुको व्यवहार इति भावः ॥ १२ ॥

॥ भाष्यम् ॥

कानि पुनरिन्द्रियकारणानि ?

**पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥**

सञ्ज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां सुवचं[1] कार्यं भविष्यतीति ॥ १३ ॥

॥ टीका ॥

इन्द्रियप्रकृतित्वं तु भूतलक्षणं वेदितव्यम्[2] ॥१३॥

॥ परिशुद्धिः ॥

**इन्द्रियप्रकृतित्वं** बाह्येन्द्रियप्रकृतित्वमिति ॥१३॥

॥ भाष्यम् ॥

इमे तु खलु—

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥**

पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्था विषया इति ॥ १४ ॥

॥ वार्त्तिकम् ॥

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इत्येतत् **सूत्रम्** । पृथिव्यादिगुणा इत्येतस्मिन् पदेऽनेकः समासः संभवति । कथमिति ? पृथिव्यादीनां गुणाः इति षष्ठीसमासः । पृथिव्यादीनि च गुणाश्चेति द्वन्द्वः । पृथिव्यादयो गुणा येषामिति बहुव्रीहिः । तदेवमनेकसमासोपपत्तेः संशयः किमत्र[3] तत्त्वमिति । द्वन्द्वः समास इत्येतत्[4] तत्त्वम् । षष्ठीसमासस्तावन्न, पृथिव्यादीनामनिन्द्रियार्थत्वप्रसङ्गात् । यदि पृथिव्यादीनां गुणा इति षष्ठीसमासः आश्रीयेत[5], पृथिव्यादीनां गन्धादिगुणविशेषणत्वेनोपयुक्तानाम् इन्द्रियार्थत्वं न स्यात् , विशेषणवैयर्थ्यं च स्यादिति । गन्धरसरूपस्पर्शशब्दा इत्युक्ते

१. सुकरं J २. No Vartika on १. १. १३. ३. सन्देहः, अत्र च किं C
४. एतत् om C ५. स्यात् C

पृथिव्यादिगुणा इति गम्यते[1]। अतश्च पृथिव्यादिग्रहणं व्यर्थम्। न हि गन्धादीनां द्वैराश्यमस्ति पृथिव्यादिगुणत्वं चान्यगुणत्वं च यतो विशेषणमर्थवत् स्यात्। तस्मान्न षष्ठीसमासः। गुणिनामसिद्धेर्न बहुव्रीहिरपि पृथिव्यादयो गुणा येषामिति[2]। के ते गुणिनो येषां पृथिव्यादयो गुणाः। न च पृथिव्यादीनां गुणत्वं शक्यं प्रतिपादयितुम्। न चान्यथा बहुव्रीहिः। प्रायेणायं समानाधिकरणपूर्वो भवति, यथा चित्रगुरिति। गोमत्तायां प्रसिद्धायां चित्रगुणसम्बन्धे सुप्रसिद्धे च गवां चित्रगुरिति बहुव्रीहिर्भवति[3]। न पुनरिह गुणी प्रसिद्धः। नापि पृथिव्यादीनां गुणत्वं प्रसिद्धम्[4]। विशेषकत्वाद् गुणाः पृथिव्यादय इति स्यात्। तन्न[5], सर्वो गुणः स्यादेतस्यां[6] कल्पनायाम्। न हि कस्यचित् कश्चित् विशेषणं वा विशेष्यो वा न भवतीति सर्वगुणत्वप्रसङ्गः इति। तस्माद् बहुव्रीहिरपि न। उभयसमासप्रतिषेधादन्यसमासाभावाच्च द्वन्द्वः। यस्मात् [7]प्रसक्तौ षष्ठी-तत्पुरुषबहुव्रीही। तौ च[8] प्रतिषिद्धौ, समासान्तरं च न सम्भवति। शिष्यमाणश्च द्वन्द्वः। तस्माद् द्वन्द्वः समास इति। न द्वन्द्वः समासः, शास्त्रयुक्त्योरभावात्[9]। यद्ययं द्वन्द्वो भवति शास्त्रं युक्तिर्वा पृथिव्यादीनामिन्द्रियार्थत्वे वक्तव्या इति। न, उभयस्यापि उपपत्तेरिति। उभयं पृथिव्यादीनामिन्द्रियार्थत्वे शास्त्रं युक्तिश्च सम्भवति। शास्त्रं तावत् दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् [३.१.१] इति। युक्तिरपि दर्शनस्पर्शनप्रत्यययोरेकविषयत्वेन प्रतिसन्धानम्, यमहमद्राक्षं तं स्पृशामीति [10]यं चास्पार्क्षं तं पश्यामीति दृष्टिस्पर्शनविषया युक्तिः। शास्त्रमप्यस्मिन् पक्षेऽवतरतीति[11]। ऐन्द्रियकत्वाभिधानाच्च सामान्यस्येति। तस्मात् सिद्धं पृथिव्यादीनि च गुणाश्चेति द्वन्द्वः समास इति॥

पृथिव्यादिग्रहणेन पृथिव्यप्तेजांसि बाह्यकरणग्राह्याण्यपदिश्यन्ते, गुणग्रहणेन च सर्व आश्रितो गुण इति संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहद्रवत्व-संस्कारकर्मसामान्यविशेषाः[12], अनाश्रितश्च समवायस्तद्धर्मत्वाद् गुण इति। गन्धरसरूप-स्पर्शशब्दास्तर्हि पृथङ् न वक्तव्याः, गुणग्रहणेन ग्रहणात्। पृथिव्यादिगुणास्तदर्था [13]इत्येवं च वक्तव्यम्। लघु चैवं[14] सूत्रं भवति। स एव चार्थः सेत्स्यतीति। तन्न कर्तव्यम्। गन्धरसरूपस्पर्शशब्दानां पृथगभिधानम् इन्द्रियविषयनियमज्ञापनार्थम्[15]। इन्द्रियाणि गन्धरसरूपस्पर्शशब्देषु तत्सामान्येषु नियतानि। अन्यत्रानियतानीति। तत्र

---

१. गुणाः गम्यन्ते C २. न बहुव्रीहिः पृथिव्यादयो गुणा येषां C ३. भवति om C ४. गुणत्वमिति C ५. इति चेत् ननु J ६. स्यादित्येतस्यां J ७. प्रसक्तौ om C ८. तौ च om C ९. °रसम्भवात् C १०. यं °पश्यामी om C ११. सम्भवतीति C १२. वेग for द्रवत्वसंस्कार C १३. इति सूत्रे वक्तव्यम् C १४. चैवं C १५. °विशेषनि° C

पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि, शेषश्च गुणराशिः, सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये। समवायोऽभावश्च तथा ॥

दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतदमृष्यमाणः पर आह—स्पर्शग्रहणमेव स्पर्शनेन, रूपग्रहणमेव चक्षुषेति। स पर्यनुयोज्यः, अथ रूपस्पर्शौ चक्षुस्पर्शनाभ्यां गृह्यते इति कथमवगम्यते, यस्मात् चक्षुःस्पर्शनाभ्यां तद्विशिष्टः प्रत्ययो भवति? अनास्पदस्तर्हि प्रतिषेधः, घटादावपि तद्विशिष्टप्रत्ययदर्शनात्। घटादिकमप्यर्थं दर्शनस्पर्शनाभ्यामुपलभमानश्च तद्विशिष्टं घटादिकमर्थं प्रतिपद्यते। तस्मादसंप्रधारितः प्रतिषेध इति। रूपादिभ्यस्तथा सन्निविष्टेभ्यो घटादिप्रत्यय इति चेत्? यदिदं भवतापदिश्यते दर्शनस्पर्शनाभ्यामयं घटं प्रतिपद्यते इति, मिथ्यैतत्। रूपादय एव तेन तेनाकारेण सन्निविशन्ते, तानयमुपलभ्य्या तथाकारान् प्रतिपद्यमानो घट इति प्रतिपद्यते। न पुना रूपादिव्यतिरिक्ता घटादय इति। न, आकारार्थानभिधानात्। अतथाभूतस्य तथाभूतेन सामान्यमाकारशब्दस्यार्थोऽभिधेयम्। तद्यथा स्थाण्वाकारः पुमानित्यपुरुषस्य स्थाणोः पुरुषेण यत् सामान्यं स आकारशब्दस्यार्थः स्थाणुपुरुषप्रसिद्धौ सत्यां भवति। न पुनर्भवतां घटाकारा रूपादय इति रूपादिषु घटाकारबीजं किञ्चिदस्ति। तस्माद् घटाकारा रूपादय इति यत्किञ्चिदेतदिति। रूपादिमात्रे च घटादिबुद्ध्यभावः, यस्य च रूपादिमात्रं घटादयः तस्य तेषां समानत्वात्, [1]या इमा विभक्ता बुद्धयो गौरश्वो घट इति, ता न प्राप्नुवन्ति, रूपादिगतस्य बुद्धिनियामकस्य विशेषहेतोरभावात्। [2]संस्थानविशेषात् भेदप्रत्यय इति चेत्—केनचित् संस्थानविशेषेणावतिष्ठमाना रूपादयः संस्थानभेदानुविधानाद् घटादिबुद्धिहेतवो भवन्तीति। नैतदस्ति, संस्थानस्यान्यत्वेऽनन्यत्वे संज्ञाभेदमात्रात् व्यर्थाभिधानप्रसङ्गाच्च। यदि [3]तावत् संस्थानं रूपादिभ्योऽन्यत्, द्रव्यं तदिति संज्ञाभेदमात्रम्। अथानन्यत्, तथापि रूपादीनां संस्थानभेदानुविधानात् घटादिप्रत्यया इति व्यर्थमभिधानम्। घटादिप्रत्यया मिथ्याप्रत्यया इति चेत्—स न मन्येत घटादिप्रत्ययाः सम्यक्प्रत्यया इति, किं तु शब्दवासनावशात् मिथ्याप्रत्यया भवन्तीति। तदयुक्तम्, मिथ्याप्रत्ययानां सम्यक्प्रत्ययानुकारित्वात्। [4]य एते मिथ्याप्रत्यया लोके भवन्ति [5]सर्व एते सम्यक्प्रत्ययानुकारिणो भवन्ति, न पुनर्घटादिप्रत्ययानां मिथ्याप्रत्ययत्वेन कल्पितानां किञ्चिद्[6] बीजमस्ति। न चैते निर्बीजाः प्रादुर्भवन्ति। तस्मान्न मिथ्याप्रत्यया इति। मिथ्याप्रत्ययाश्चैत इत्यव्यतिरेके प्रमाणोपपत्तौ सत्यां

१. यास्ता बुद्धयो विविक्ता C २. ॰भेदात् C ३. तावत् om C ४. यत्र ते C ५. सर्वत्र ते C ६. किञ्चित् om C

सिध्यति, न चान्यतिरेकप्रतिपादकं प्रमाणमस्ति । न नास्ति, तदग्रहे तद्बुद्ध्यभावात् , यद् यस्मादनर्थान्तरं भवति तदग्रहे तस्याग्रहो दृष्टः, तद् यथा यूषस्य षड्क्तेश्च । यच्च यतोऽर्थान्तरं भवति तदग्रहेऽपि तस्य ग्रहो दृष्टः, तद् यथा रूपाद्यग्रहे [1]रसग्रह इति ॥

नायं हेतुरनेकान्तात् , ये घटादिभावमापन्नाः पृथिव्यादयस्तेषां पृथिव्यां [2]संगृह्यमाणायामर्थान्तरभूतानामबादीनामग्रहणम् । अथ चार्थान्तरभूता अबादयो न दर्शनविषयभाजो भवन्ति, तस्मादनेकान्तः । अथ न चत्वारि महाभूतानि तथा सन्निविष्टानीति पक्षस्तथापि रूपं चत्वारि महाभूतानीति वचनं व्याहन्यते । अथ ब्रूषे, नैव नो रूपादिव्यतिरिक्ताः पृथिव्यादय इति ? तथाप्यस्य वाक्यस्यायमर्थो भवति रूपादयो रूपमिति, [3]तथा च कामेऽष्टद्रव्यकोऽणुरिति[4] व्याहन्येत । अथ पृथिव्यादीनां संघातमात्रे रूपादिव्यवहारः ? तथापि न रूपं पृथिव्यादयो वस्तुतः सन्ति । कथमिति ? पृथिव्यादीनां संघातो रूपं पृथिव्यादयश्च रूपादिसंघात इति संहन्यमानस्याभावात् न संघातोऽस्ति । सर्वः संघातः संहन्यमानतन्त्रो दृष्ट इति सर्वथा न व्याघातान्मुच्यसे[5] ॥

तदग्रहे तद्बुद्ध्यभावादिति च तच्छब्दार्थानुसृतावसंबद्धार्थम् । यदा तच्छब्दार्थोऽनुस्रियते तदा तदग्रहे तस्यैवाग्रह इति प्राप्तम् । एतच्चासंबद्धम् । यदा पृथिव्यादि रूपादिविशेषणं साध्यते तदा तदग्रहे तद्बुद्ध्यभावादित्यस्य हेतोः[6] पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति हेत्वर्थः प्राप्नोति । किं कारणम् ? पृथिव्यादिविशेषणानां रूपादीनां तच्छब्देनानभिसंबन्धात् । एतेन पृथिव्यादिविशेषणा रूपादयः प्रत्युक्ताः । अत्रापि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति हेत्वर्थः प्राप्नोति, तच्छब्दस्य प्रधानसंबन्धित्वादिति । एवं रूपादिमात्रं पृथिवी, पृथिवीमात्रं रूपादय इति पृथिव्येव रूपादयो रूपादय एव पृथिवीति पूर्ववत् प्रसङ्गः । सर्वत्र च प्रतिज्ञापदयोर्व्याघातो वचनभेदात् । पृथिवीत्येकवचनं रूपादय इति बहुवचनम् । वचनभेदानुविधानं च यत्र तत्रार्थभेदः । तद् यथा नक्षत्राणि शशीति । अस्ति चात्रापि वचनभेदः । तस्मात् अत्राप्यर्थभेदेनैवँ भवितव्यम् । नन्वेकस्मिन्नप्यर्थे वचनभेदो दृष्टः । तद् यथा चत्वार आश्रमाश्चातुराश्रम्यमिति । तन्नानभ्युपगमात् । नायं वचनभेदः क्वचिदेकत्वे दृष्टः, चातुराश्रम्यमिति चतुर्णामाश्रमाणां समानं धर्मसाधनत्वमभिधीयते । एतेन षडेव गुणाः षाड्गुण्यम् , विशेष एव वैशेषिकमिति प्रत्युक्तम् ॥

---

१. बालग्रह C २. अगृह्य° J ३. ततश्च C, तथा च Alamkāra ४. व्याघातः J द्रः अभिधर्मकोशः २।२२ ५. मुच्यते C ६. पृथिव्याद्यग्रहे° किं कारणं J C var ७. एव om C

तदग्रहे तद्बुद्ध्यभावादिति चासिद्धोऽप्ययं हेतुः । कथमसिद्धः ? रूपाद्यग्रहे द्रव्यग्रहात् । यस्मान्नीलाद्युपधानभेदानुविधायिनः स्फटिकमणे रूपाद्यनुपलब्धौ स्फटिक इति प्रत्ययो दृष्टः । योऽप्ययं दृष्टान्तो यूषवत् पंक्तिवच्चेति, तन्न भवता यूषो व्यज्ञायि न पंक्तिः । यूषो हि नाम उत्पन्नपाकजानां द्रव्याणां कालविशेषानुग्रहे सति द्रव्यान्तरसंपृक्तानां पाकजोत्पत्तौ यः संयोगः स यूष इति । स [1]चार्थान्तरमित्यसिद्धो दृष्टान्तः । एतेन पानककाञ्जिकविरेकावक्षारादयः प्रत्युक्ताः । पंक्तिरप्येकदिग्देशसंबन्धिषु परस्परप्रत्यासत्त्यनुगृहीतेषु अवधारितानवधारितेयत्तेषु भिन्नभिन्नजातीयेषु आधारेषु वर्तमाना बहुत्वसंख्यैवोच्यते । एवमनियतदिग्देशसंबन्धिषु [2]गजपुरुषतुरंगमस्यन्दनेषु [3]परस्परप्रत्यासत्त्युपगृहीतेषु अवधारितानवधारितेयत्तेषु वर्तमाना बहुत्वसंख्यैव सेनेत्युच्यते । एवं जातिविशिष्टपुरुषोपग्रहेण वर्तमाना परिषत् । प्रव्रजितविशेषोपग्रहेण वर्तमाना [4]बहुत्वसंख्या सङ्घः । एवं यथासंभवं पूगवनयूथव्रातगणशब्दाः[5] अपि द्रष्टव्याः । एवमनियतदिग्देशसंबन्धिषु अनाद्यन्तेषु मध्यशून्येषु वर्तमाना कुण्डलकं बहुत्वसंख्यैवेति । तस्मात् पंक्तिरनर्थान्तरमित्यसिद्धो दृष्टान्तः । अर्थान्तरे किं प्रमाणमिति ? उपलभ्यस्य समस्तैरुपलभ्यैर्व्यपदेशः । यदिदं चन्दनमुपलभ्यते तस्य श्वेतं रूपं तिक्तो रसः पटुर्गन्धः शीतः स्पर्श इति । यश्चायं प्रत्यक्षस्य प्रत्यक्षेण व्यपदेशः सोऽर्थान्तरे दृष्टः । [6]तद् यथा, ब्राह्मणस्य कमण्डलुरिति । न खल्वयमेवं प्रतिपद्यते यदिदं श्वेतं रूपमुपलभ्यते[7] तदनुमीयमानानां रसगन्धस्पर्शानामिति । सेनावनादिभिरनेकान्त इति चेत् ? अथापीदं स्याद्[8], दृष्टोऽनर्थान्तरेऽपि व्यपदेशः सेनाया हस्ती, काननस्य वृक्ष इति ? न, असिद्धत्वात् । असिद्धमेतद् अनर्थान्तरत्वं सेनायाः काननस्य च । यथा च तदर्थान्तरं सेना वनं वा तदुक्तमिति ॥

तदसत्त्वमिति चेत् ? अथाप्येवं कल्प्येत, संख्यैव तावन्नास्ति, कुतोऽर्थान्तरभाव इति ? नैवम्[9] । संख्या नास्तीति ब्रुवता एकानेकप्रत्ययानां विधीयमानं प्रतिषिध्यमानं वा निमित्तमुपादेयम् । कस्मात् ? एकानेकप्रत्ययानामप्रत्याख्येयत्वात् । विशिष्टाश्च प्रत्यया भवन्तो न निमित्तप्रत्याख्यानेन भवितुमर्हन्तीति । किं कारणम् ? कुम्भप्रत्ययनिमित्तान्यनिमित्तक एकानेकप्रत्ययः । कुम्भप्रत्ययविलक्षणत्वात्, नीलादि-

---

१. अर्थान्तरवदि° C २. गजतुरगस्यन्द° C ३ °प्रत्यासत्त्यनुगृहीतेषु C ४. बहुत्वसंख्या J ५. °यूथब्राह्मणगण° C ६. तद् om C ७. उपलभ्यते om C ८. अथापि स्याद् बुद्धिः C ९. नैवम् om J

प्रत्ययवत्[1]। तस्माद् यत्तत्प्रत्ययनिमित्तं सा संख्येति। तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेण ततोऽन्यस्य तद्विशिष्टप्रत्ययस्योत्पत्तौ [2]निमित्तान्तराकांक्षित्वाद् यस्तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेण प्रत्ययो भवति, तस्य निमित्तान्तराकांक्षित्वं दृष्टम्। तद्यथा वस्त्रचर्मकम्बलेषु वस्त्रचर्मकम्बलप्रत्ययास्तेभ्य एव भवन्ति। तेषु तु योऽन्यो नीलमिति प्रत्ययः स निमित्तान्तराद् भवन् दृष्टः। तथा च घटादिष्वपि घटादिविषयनिमित्तव्यतिरेकभाजस्तत्रैकादिप्रत्ययाः। तस्मात् तैरपि निमित्तान्तराद् भवितव्यम्, यन्निमित्तं ते संख्यादय इति। महत्पुष्पितशब्दाभ्यां सामानाधिकरण्यात् न संख्या सेना वनं वा भवितुमर्हति। यदि संख्या सेना वनं वा, महती सेना पुष्पितं वनमिति न प्राप्नोति[3]। न संख्याया महत्त्वमस्ति, न पुष्पयोग इति। नैष दोषः। महती सेनेति किमुच्यते? तानेव गजादीन् संख्याधारानवधारितानवधारितेयत्तान् स्थान्यङ्गान्तरोपचये सति महती सेनेति व्यपदिशन्ति। तत्रेयं स्थानिषु गजादिषु महच्छब्दवाच्येषूपचयकरणा[4] बहुत्वसंख्या महतीत्युच्यते। पुष्पितं वनमित्यत्रापि पुष्पसंबन्धिषु वृक्षेषु पुष्पसंबन्धैनैकार्थसमवायमनुभवन्ती बहुत्वसंख्यैवाभिधीयते, यथा मधुरो रसः, स्निग्धोऽशीतो[5] गुडश्चेति। अतएव व्यपदेशात् संख्यादीनामपि अर्थान्तरभावः॥

असति दर्शनान्न हेतुरिति, यथा गर्तश्छिद्रमिति। न, अपरिज्ञानात्। गर्तो हि नाम रूपादिमद्भिः सावयवैरारब्धकार्यैर्मध्यशून्यैः संस्थानविशेषोपगृहीतमाकाशमिति[6]। एतेन छिद्रं व्याख्यातम्। एकस्मिन्नपि दर्शनात् व्यपदेशादर्थान्तरभावो न युक्तः, तद् यथा खदिरस्य स्थाणुरिति। बहुषु चासंयुक्तेषु दर्शनात्, तद् यथा प्रासादानां मालेति। संयुक्तेषु [7]चासमानजातीयेषु दर्शनाद् यथात्रिवृत्पृथिव्युदकतेजसां[8] विरेक इति। यत्तावदेकस्मिन्नपि दर्शनादिति, तदयुक्तम्; खदिरशब्दस्य जातिविशिष्टद्रव्यवाचकत्वात्। खदिरशब्देन जातिविशिष्टं द्रव्यमुच्यते। स्थाणुशब्देनापि संस्थानविशेषोऽभिधीयते। संस्थानविशेषश्च प्रचयाख्यः संयोगः। स चार्थान्तरम्। एतेन सर्पकुण्डलकम्, प्रतिमायाः शरीरम्, सुवर्णस्याङ्गुरीयकम्, शिलापुत्रकस्य शरीरमित्येवमादि[9] भेदवाचकमित्युक्तं भवति। प्रासादानां माला पंक्तिवद् द्रष्टव्या। संयोगो

१. उक्तप्रत्यय° J २. निमित्तान्तरा° भवति तस्य rejected as text C ३. स्यात् J ४. वाच्येष्वपचयोपचयकरणात् C ५. तिक्तः for स्निग्धो शीतः C ६. °षोपहित° C ७. चासजातीयेषु C ८. °नात् त्रिवृताद्युदकतेजसां J ९. इत्यादिकं C

विरेक इत्युक्तमेतत् । गुणसमुदायव्यतिरेकेणाग्रहणादिति चेत्--अथापि मन्येथाः, यदि रूपादिव्यतिरिक्तं द्रव्यं स्यात् [1]तदा रूपादीनन्तरेण पृथगुपलभ्येत । न तूपलभ्यते । तस्मान्नास्ति । अग्रहणस्य द्विनिमित्तत्वादनेकान्तः । किमिदमग्रहणं ग्राह्यस्याभावादाहो ग्रहणाभावादिति[2] सन्दिह्यते । ग्राह्याभावादिति चेत् ? प्रतिज्ञार्थेन हेत्वर्थस्याक्षेपात् अयुक्तो हेतुः । ग्रहणाभावादिति चेत् ? न व्यतिरेकप्रतिषेधः । यश्च तदग्रहे तद्बुद्ध्यभावादिति हेतोर्दोषः, सोऽस्यापि द्रष्टव्य इति । सोऽयमनन्यत्ववादो यथा यथा विचार्यते तथा तथा स्पष्टमन्यत्वं प्रतिपादयति, प्रमाणानामेकत्रोपपत्तेः, एकत्र चानुपपत्तेरिति । तस्माद् व्यवस्तितमेतत् पृथिव्यादीनि गुणाश्चेति चार्थे द्वन्द्वः समास इति ॥ १४ ॥

॥ टीका ॥

क्रमप्राप्तमर्थलक्षणमवतारयति **भाष्यकारः**—**इमे त्विति** । तुशब्देनार्थमात्राद् व्यवच्छिनत्ति । येषामिन्द्रियविषयत्वेन भाव्यमानानां निःश्रेयससाधकत्वम् , मिथ्याज्ञानविषयीकृतानां तु संसारनिमित्तता, त इमे इत्यर्थः ॥

**गन्ध—र्थाः** ॥१४॥ अत्र चोद्देशक्रमस्मारिता अर्था लक्ष्यतया प्रतिपत्तव्याः, तेषां लक्षणं **तदर्था** इति । तदित्यनन्तरलक्षितानीन्द्रियाणि परामृशति, तेषामिन्द्रियाणाम् अर्थाः । इन्द्रियैरर्यमाणत्वमर्थानां लक्षणम् । एतावतैव लक्षणे पर्यवसिते सुहृद्भावेन प्रविभागाभिधानं **पृथिव्यादिगुणा** इति । पृथिव्यप्तेजांसि च गुणाश्च धर्माः संख्याकर्मादयः । प्रविभागेऽप्येतावतावगते गन्धाद्यभिधानं सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम् । **पृथिव्यादीनामिति** भाष्यं न षष्ठीसमासज्ञापनार्थम् , अपि त्वर्थाभिधानमात्रम् । **यथाविनियोगमिति** । यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्रिद्व्येकनियमेन विनियुक्ताः । शब्दश्चाकाश एवेत्यर्थः । तदर्था इति लक्षणपदं व्याचष्टे—**इन्द्रियाणामिति** । येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिताः येन चेह गन्धादय, तदनतिक्रमेणेत्यर्थः । अत्र **वार्त्तिककारः** पृथिव्यादिगुणा इत्यत्रानेकसमासप्रतिभासनात् संशयं कृत्वा द्वन्द्वसमासमवधारयति—**पृथिव्यादिगुणा** इति । षष्ठीसमासेनाभिन्नार्थत्वात् [4]सप्तमीसमासस्येत्यसौ न दर्शितः । ननु कण्ठेकाल इतिवद् वैयधिकरण्येन बहुव्रीहिर्भविष्यति पृथिव्यादीनां गुणा येभ्यो गन्धादिभ्यः, ते तथा । तथा हि परमाणुगता गन्धादयोऽवयविनि गन्धाद्यारभन्ते, नभोगतश्च शब्दो नभसि समानजातीयं शब्दमित्यत

१. तद्रूपा° C २. आहो ग्रहे हेत्वभावात् C ३. चार्थे om C ४. °समासो न C

आह—**न चान्यथेति** । ज्ञापकवशात् क्वचिद् व्यधिकरणानां बहुव्रीहिः । ज्ञापककृतं च न सर्वत्र । न च गन्धादीनां पृथिव्यादिगुणहेतुत्वप्रतिपादनं क्वचित् [1]निर्वेदादावुपयुज्यत इति भावः । **अन्यसमासः** कर्मधारयादिः । द्वन्द्वमवधारितमाक्षिपति—**न द्वन्द्व** इति । समाधत्ते—**न, उभयस्यापीति** । **पृथिव्यादिग्रहणेनेति** । यद्यादिशब्देन वाय्वादयो गृह्येरन् , तदर्था इति लक्षणमव्यापकं स्यात् , तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः । **गुणग्रहणेन सर्व** इति आश्रितानाश्रितत्वाभिप्रायम् , गुणशब्दस्य धर्मवचनत्वात् । **विशेषस्तु** रेखोपरेखादिः न त्वन्त्यः, तस्यातीन्द्रियत्वात् । एतेषां च यथायोगं मिथ्याज्ञानसम्यग्ज्ञानविषयाणां रागवैराग्यहेतुत्वमूहनीयम् । चोदयति—**गन्धेति** । परिहरति—**न कर्तव्यं लघुसूत्रम्** । गन्धादीनां पृथगभिधानं कर्तव्यमित्यर्थः । नियममाह—**इन्द्रियाणीति** । **तत्रे**त्यनियतेषु मध्ये, पृथिव्यप्तेजांसि **द्वीन्द्रियग्राह्याणि, शेषश्च गुणराशिः** संख्यादिर्विशेषान्तो द्वीन्द्रियग्राह्य इत्यर्थः । **तथा** सर्वेन्द्रियग्राह्य [2]इत्यर्थः ॥

अत्र बौद्धमुत्थापयति—**दर्शनस्पर्शनाभ्यामिति** । तस्य पर्यनुयोगमाह—**स** इति । स्वसंवेदनेन वा मानसेन वा ज्ञानेन[3] रूपाद्यालम्बनः प्रत्ययो रूपादिविशिष्टो यथानुभूयते, एवं रूपाद्यतिरिक्तघटादिविशिष्टोऽनुभूयत इत्यर्थः । अत्र **पर** आह—**रूपादिभ्यस्तथा सन्निविष्टेभ्य** इति । तथेत्याकारं निर्दिशति । **सन्निवेशो** व्यवस्थानम् । रूपादिपरमाणव एव **तेन तेनाकारेण** उत्पन्ना एकयोदकाहरणक्रियया व्यवच्छिन्ना घट इत्युच्यन्ते । अनुरञ्जनादिकया तु रूपादिव्यपदेशः । यथाह घट इत्यपि च रूपादय एवैकार्थक्रियाकारिणस्तथा व्यपदिश्यन्ते इति । निराकरोति—**न, आकारार्थेति** । तथार्थस्य यथापदार्थेन नित्याभिसम्बन्धात् यथा घटः, तथा सन्निविष्टा रूपादय इत्यर्थो गम्यते । तेन घटाकारेण घटसादृश्येनेत्ययमर्थः । तथा च दूषणमिति । दूषणान्तरमाह—**रूपादिमात्रे चेति** । न तावद् रूपादिक्षण एको घटः, क्षणान्तरे तत्प्रयोगाभावप्रसङ्गात् । तस्माद् रूपादिमात्रमविवक्षितभेदम्[4], तथा सत्येतद्दूषणमित्यर्थः । शङ्कते—**संस्थानभेदादिति** । यथासंस्थाना [5]रूपादयोऽर्था अनुभूयन्ते, तथा सन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः । निराकरोति—**नैतदिति** । **अन्यत्वे** तदेवावयवीति संज्ञाभेदमात्रम् । अनन्यत्वे व्यर्थाभिधानम् । शङ्कते—**घटादिप्रत्यया** इति । एकानेकविचारासहत्वाद् असन्त एव घटादयोऽनादिविकल्पवासनाजनितविकल्पप्रत्ययप्रति-

१. निर्वेदायोप° C २. इत्यर्थः om J ३. ज्ञानने om C ४. °विवक्षितम् C
५. अर्थाः om J

भासिनः[१] । शब्दशब्देन विकल्पमुपलक्षयति—**शब्दवासनावशादिति** । निराकरोति—**तद्युक्तमिति** । बीजं मिथ्याप्रत्ययस्य सम्यक्प्रत्ययविषयोऽर्थः । तस्य क्वचिदभ्युपगमेऽभिमतार्थहानमित्यर्थः । यस्तु भिन्नलोकमर्यादतया ब्रूते आदिमान् मिथ्याप्रत्ययः सम्यग्ज्ञानं निमित्तीकरोति, अयं पुनरनादिः पूर्वपूर्वमिथ्याप्रत्ययजन्मा[२] मिथ्याप्रत्ययप्रवाहः, कृतमत्र सम्यग्ज्ञानेनेति, तं प्रत्याह—**मिथ्याप्रत्ययाश्चैत** इति । [३]रूपाद्यव्यतिरेके अवयविन इत्यर्थः । [४]परस्त्वव्यतिरेके प्रमाणमाह—**न नास्तीति** । न हि मांसतोयातिरिक्तः कश्चिद्यूपो नाम । नापि तृणराजतरुव्यतिरिक्ता पङ्क्तिर्नाम ॥

दूषयति—**नायं हेतुरिति** । ये **घटादिभावमापन्ना** भवतां दर्शने इति । **कामेऽष्टद्रव्यकोऽणुरशब्दः** रूपधातुररूपधातुः कामधातुरिति त्रैधातुकं जगत् । तत्र कामधातुस्वरूपमुक्तम् । **कामे** कामधातौ । **अष्टद्रव्यकोऽणुः** । रूपरसगन्धस्पर्शा इति चत्वारि द्रव्याणि, पृथिव्यप्तेजोवायव इति चत्वारि । द्रव्यशब्दो वस्तुवचनः । [५]तेनाष्टद्रव्यकोऽणुरित्यागमः । सोऽयं रूपाद्यतिरिक्तपृथिव्याद्यनभ्युपगमे बाध्येत । अथ वैयात्यादुच्यते—**पृथिव्यादीनामिति** । ततश्च सांवृतत्वेनाष्टसंख्यासिद्धेर्नागमविरोध[६] इति भावः । उत्तरम्—**तथापीति** । मा भूवन् वस्तुतः, उभयेऽपि सांवृता भविष्यन्तीत्यत आह—**संहन्यमानस्येति** । यो हि यत्तन्त्रः स तदभावमभ्युपगम्याशक्याभ्युपगमः, न खलु संयुज्यमानानामभावे संयोगः शक्याभ्युपगम इत्यर्थः । न च संवृतिः, सा हि पररूपं स्वरूपेण संवृणोति, संहन्यमानाभावे च न संघातः, नापि संहन्यमाना इति किमनया स्वरूपेणाव्रियेतेति भावः ॥

तदेवं **तदग्रहे तद्बुद्ध्यभावाद्** इत्यस्य व्याघातदोषं दर्शयित्वा स्वसामर्थ्यालोचने न विवक्षितलिङ्गाभिधायिता, किं त्वसंबद्धार्थता हेतुवचनस्येत्याह—**तदग्रहे** इति । एवं किलात्राभिमतम्, पृथिव्यादयो रूपादिभ्योऽभिन्ना, रूपाद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति । [७]तन्न, तदेत्तदग्रहे [८]तद्बुद्ध्यभावादित्यनेन न शक्यं वक्तुम् । तदग्रह इत्यत्र तच्छब्दः प्रधानपरामर्शी, पृथिव्यादयश्च धर्मितया प्रधानमिति त एव परामर्ष्टव्याः[९] । तथा च पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति स्यात् । तथा च प्रतिज्ञातस्तेषां रूपाद्यभेदो न सिध्येदित्यसंबद्धम् । अथ रूपादयः पक्षीक्रियन्ते, तथापि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति स्यात् । तथापि न प्रतिज्ञातार्थसिद्धिरित्यसंबद्धार्थमित्यर्थः । एवं शब्दान्तरेणापि प्रतिज्ञा-

---

१. ॰भासमानाः C २. ॰मिथ्याप्रत्ययजन्मा om J ३. रूपादिव्यतिरेके C ४. परस्तदव्यति॰ J ५. तेषामष्ट॰ C ६. सिद्धिरिति ना॰ J ७. तन्न om J ८. तदेतत्तदग्रहे J ९. ॰म्रष्टव्याः J

प्रयोगे तुल्यः प्रसङ्ग इत्याह—**एवं रूपादिमात्रमिति**। प्रतिज्ञादोषमाह—**सर्वत्र चेति**। नानात्वैकार्थसंबन्धनियताया बहुत्वसंख्याया अभेदैकार्थनियतैकत्वसंख्यया सामानाधिकरण्यविरोध इत्यर्थः। तदेतदनैकान्तिकमिति चोदयति—**नन्विति**। निराकरोति—**तन्न, अनभ्युपगमादिति**। **समानं धर्मसाधनम्**। यमाः पञ्च। नियमाश्च पञ्च। ब्रह्मचारिगृहस्थवानप्रस्थयतीनामविशेषेणैव दश धर्मसाधनम्। तेषां धर्मसाधनत्वमेकं चातुराश्रम्यमिति [1]प्रकृतिगता विभक्तिराह। आश्रमप्रकृतिगता तु विभक्तिः प्रकृत्यर्थसमवेतामेव [2]बहुत्वसंख्यामाह, समानार्थानामपि प्रकृतीनां रूपभेदेन तत्परस्य प्रत्ययस्य सामर्थ्यभेदात्। यथाप्तोयशब्दयोस्तुल्यार्थत्वेऽपि तोयशब्दात् परा विभक्तिस्तोयानीति तोयसमवेतामेव बहुत्वसंख्यामाह। आप इति न तोयगताम्, अपि तु तत्संबद्धगताम्। तत्संबद्धाश्च तदवयवाः, तद्गतरूपादयो वा बहव इत्येकस्यामपि पाथःकणिकायां बहुवचनोपपत्तिराप इति। न च सोरस्ताडं क्रन्दतोऽपि [3]लोकस्याविनिवृत्तेर्नैवमिति साम्प्रतम्। लोको हि दृष्टव्यवहारमात्रप्रयोजनो न विवेचयति, परीक्षकास्तु तदनुसारिणो विवेचयन्त्येव। अन्यथा हि प्रत्यक्षादिलक्षणप्रणयनवैयर्थ्यप्रसङ्गः। एतेन दाराः षण्णगरीत्यादयोऽपि व्याख्याताः। षाड्गुण्यमिति[4] षण्णां गुणानामेकं राजप्रयोजनसाधकत्वम्। वैशेषिकमित्यत्रापि विशेषाणां समानासमानजातीयव्यवच्छेदकत्वमेकमुच्यते इति गमयितव्यम्। हेतुदोषमाह—**असिद्धोऽपीति**। स्फटिकस्य धवलं रूपम्। तच्च नीलीद्रव्यानुषङ्गादभिभूतं न प्रतीयते। स्फटिकश्च प्रतीयते। न च नीलस्य स्फटिकलक्षणस्योत्पत्तिरिति तृतीये निवेदयिष्यते[5]। तस्मादसिद्धो हेतुरित्यर्थः॥

दृष्टान्तश्च साध्यविकल इत्याह—**योऽप्ययमिति**। उत्पन्नपाकजानां तैले सर्पिषि वा भृष्टमांसपिण्डावयवानाम्, द्रव्यान्तरेण तोयेन [6]संपृक्तानां पाकजोत्पत्तौ सत्याम्। न चासौ सहसेति। [7]अत उक्तम्—**कालविशेषानुग्रहे सतीति**। स च संयोगभेद एव तोयमांसयोः, न त्ववयवी विजातीययोरनारम्भकत्वात्। नापि यूषजातीयं तोयसंयोगि द्रव्यं क्षीरजातीयमिवेति युक्तम्। तोयविरहे काठिन्येऽपि क्षीरबुद्धिव्यपदेशयोस्तादवस्थ्यात्। इह तु काठिन्ये न यूषबुद्धिव्यपदेशाविति [8]संयोगभेद एव तोयमांसयोर्यूष इति न्याय्यम्। स चानुभवसिद्धः संयोगिव्यतिरिक्तः। एवं बहुत्वसंख्या संख्येयातिरिक्तानुभवसिद्धैवेति। एवं तत्र तत्र व्याख्येयम्। **अनाद्यन्तेषु** अनारब्धावय-

---

१. ॰गतविभक्तिः C २. बहुत्व॰ om J ३. ॰स्य निवृत्तेः C ४. ॰ण्यमपि C
५. द्रः टी ३।२।६ ६. संयुक्तानां C ७. अतः om C ८. संबन्धभेदः C

विष्विति द्रष्टव्यम् । न च परकीय साधनदोषोद्भावनमात्रात् स्वपक्षसिद्धिरिति सिद्धान्तिनं साधनं पृच्छति—**अथ रूपादिभ्योऽर्थान्तरे द्रव्ये किं प्रमाणमिति** । यतोऽयं परो[1] रूपादिभ्योऽर्थान्तरं द्रव्यं प्रत्यक्षेण विद्वानपि स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मारो न तथा व्यवहरति, अतोऽनेनानुमानेन स व्यवहार्यते । अस्ति हि सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवत् चन्दनस्य रूपादय इति व्यपदेशः । तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति चन्दनोपलम्भमपि । अन्यथा तद्बुद्ध्यभावादित्येतावन्मात्रे वक्तव्ये कथमाह तदग्रह इति ? [2]तेनावगच्छामो रूपादिग्रहेऽस्य चन्दनबुद्धिरभिमतेति । न चासौ मनोमात्रयोनिः स्मार्तीति न्याय्यम् । उपपादितमेतस्याः [3]सविकल्पिकाया इन्द्रियजन्यत्वं व्यवसायात्मकपदव्याख्यानावसरे[4] । द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि निराकरिष्यन्ते । तस्मात् सिद्धमुपलभ्यत्वं चन्दनस्य[5] । सोऽयं चन्दनो विवादगोचरेभ्यो रूपादिभ्यो भिन्नः, स्वयमुपलभ्यस्य च समस्तैरुपलभ्यैर्व्यपदिश्यमानत्वात् । प्रधानमपि सांख्यैर्व्यपदिश्यते, प्रधानस्य रूपादय इति । तन्निवृत्त्यर्थम् **उपलभ्यस्येति** । प्रधानं तु काल्पनिकं नोपलभ्यम्, तथापि रूपादीनां मूलकारणं प्रधानमित्यस्ति सांख्यानां व्यपदेशः । अत उक्तम्—**उपलभ्यैरिति** । तथापि रूपादीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यत इत्युक्तम्—**समस्तैरिति** । अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति । उपलभ्यस्योपलभ्येनेति वक्तव्ये **प्रत्यक्षस्य प्रत्यक्षेणेति** वचनं रूपावगमसमयेऽनुमेयेभ्यो रसादिभ्य एकान्ततो व्यपदेशं व्यावर्तयितुम्, न त्वस्यानुमान उपयोग इति । अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति—**सेनावनादिभिरिति** । संख्यायामसत्त्वमाशङ्क्य निराकरोति—**तदसत्त्वमिति चेदिति** । **विधीयमानं प्रतिषिध्यमानमिति** यथासंख्यं निषेधस्य विध्यधीननिरूपणतया निषेध्यमेकत्वम् अङ्गीकार्यम्, तच्च संख्येत्यर्थः । ननु सन्त्वमी प्रत्ययाः, ते तु द्रव्यमात्रनिबन्धना[6] भविष्यन्ति, कृतं संख्ययेत्यत आह—**विशिष्टाश्चेति** । **न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेन** इत्यर्थः । प्रयोगान्तरमाह—**तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति** । घटप्रत्ययस्य विषयश्च, निमित्तं च, घटप्रत्ययश्च तद्व्यतिरेकेणेति, **तद्विशिष्टसंख्यादिप्रत्ययस्य निमित्तान्तराकाङ्क्षित्वात्** । [7]तत् किमर्थमत उक्तम्—**उत्पत्ताविति** ।

चर्मणि द्वीपिनं हन्ति

इतिवद् घटादिविषयनिमित्तव्यतिरेकभाज इत्यत्रापि प्रत्ययग्रहणं कर्तव्यम् । चोदयति—

---

१. परः om J   २. तेनाधि° C   ३. स° om J   ४. द्रः टीका १.१.४
५. °स्य व्यपदेश्यस्य C   ६. °मात्रनिमित्ता J   ७. तत् om J

महत्पुष्पितेति । न संख्याया गुणस्य [१]परिमाणपुष्पयोगसम्भव इत्यर्थः । परिहरति—नैष दोष इति । स्थानशब्देन तिष्ठतीति व्युत्पत्त्या संख्योच्यते । सा येषामस्ति ते गजवाजिपदातिप्रभृतयः स्थानिनः प्रत्येकं महान्तः । तत्र ते क्वचिच्छतमेव, क्वचित् पुनः स्वजातीयस्थान्यङ्गान्तरसन्निधाने सत्युपचिताः सहस्रं भवन्ति । तेन बहुत्वसंख्योपचयोपकरणा तदेकार्थसमवेतमहत्त्वोपचारात् महती सेनेत्युच्यते । न चैतावता यत्र शतं गजादयः यत्र च सहस्रं तयोः सेनयोर्महत्त्वाविशेषः, [२]उपचयापचयोपकरणत्वेन विशेषितत्वात् । एवं पुष्पितवनादयोऽपि[३] द्रष्टव्याः । प्रत्ययभेदाद् द्रव्यादिभ्यः संख्याया भेदमुक्त्वा व्यपदेशादभेदादप्याह—अत एवेति ॥

स्थाणुशब्देनापीति । मूर्तानां समानदेशत्वाभावात् न पर्वसु खदिरश्च स्थाणुश्च समवेतौ । न चावस्थितसंयोगेभ्यस्तरुविनाशापेक्षेभ्यः स्थाणोरुत्पत्तिरिति युक्तम् । यस्य द्रव्यस्य [४]यावान् संयोगप्रचयोऽसमवायिकारणं स तावानुत्पन्नमात्र एव तज्जनकः, [५]तस्य क्षेपायोगात् । तस्मात् पर्वणां संस्थानविशेष एव स्थाणुरिति गमयितव्यम् । अथावस्थितसंयोगानां द्रव्यविनाशापेक्षाणां जनकत्वम्, ततः संयोगप्रचयपदेन स्थाणुत्वसामान्यविशेषवद् द्रव्यमुपलक्षणीयम् । तच्च खादिरतरोर्भिन्नमिति । प्रतिमाया महारजतमय्या अवयविन्याः शरीरं संस्थानमेव, एवं शिलापुत्रकस्य अवयविनः संस्थानमेव शरीरम् । शङ्कते—गुणसमुदायेति । अतादात्म्येनाग्रहणं व्यतिरेकेणाग्रहणम् पृथक् शब्दोऽप्यतादात्म्यमेव ब्रूते । दूषयति—अग्रहणस्येति । सतामपि वस्तूनामनुपलम्भो यथा [६]मूलकीलोदकादीनां प्रमाणाभावेन, शशविषाणादीनां चानुपलम्भो ग्राह्याभावेन । तस्माद् व्यतिरेकाग्रहणमात्रं हेतुरनेकान्त इति । शङ्कते—ग्राह्याभावादिति चेत् ? ग्राह्याभावे सत्यग्रहणादिति हेतुः, न त्वग्रहणमात्रमित्यर्थः । दूषयति—प्रतिज्ञार्थेनेति । प्रतिज्ञार्थस्यासत्त्वेन[७] । तद्विशिष्टो हेतुरसिद्ध इत्यर्थः । शङ्कते—ग्रहणेति । ग्रहणं प्रमाणम् । निराकरोति—न [८]प्रमाणाभावमात्राद् व्यतिरेकप्रतिषेधः, यस्तु योग्यप्रमाणाभावादिति विशेषयेत्[९] तं प्रत्याह—यश्च तदग्रह इति । असिद्धता हेतोर्दोषः । दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानमेव रूपादिव्यतिरिक्तद्रव्यग्रहणम् । [१०]अतो गुणसमुदायव्यतिरेकेणाग्रहणादित्यसिद्धो[११] हेतुरिति । एकत्र अन्यत्वे । प्रमाणानामुपपत्तेः । एकत्र अनन्यत्वे [१२]चानुपपत्तेरिति । प्रकृतमुपसंहरति—तस्मादिति ॥ १४ ॥

---

१. पुष्पयोगगुणयोग° J २. °अपचय° om J ३. अपि om C ४. यावत्सं° C ५. तस्य च C ६. °कीलका° C ७. °स्यासिद्धत्वेन C ८. °णमात्राभावात् J ९. विशेषहेतुः C १०. इतः C ११ °ग्रहणमित्य° C १२. प्रमाणानामनु° C

॥ परिशुद्धिः ॥

प्रवृत्तेर्दोषापकर्षे मनस प्रवृत्त्यपकर्षे वक्ष्यते। बुद्धेर्मनोऽपकर्षे चोक्तम्। विषयनिरूपणीयत्वाच्चार्थेभ्यो बुद्धेरपकर्षः। ततोऽर्थलक्षणमेव क्रमप्राप्तमित्याह—**क्रमप्राप्तमिति**। सूत्रे विभागभागस्यापि विद्यमानत्वात्। श्लिष्टं तु शब्दार्थमाह—**येषामिति**। येषाम् उक्तलक्षणयोगस्त इमे विभज्यन्त इत्यर्थः। येषां मिथ्याज्ञानविषयीकृतानां निमित्तानुव्यञ्जनसंज्ञाविषयीकृतानां संसारहेतुत्वं त इमे लक्ष्यन्त इत्यर्थः॥

तत्र चाद्ये पदे विभागपरे। ततस्तदर्था इति लक्षणपदं चेत्, [1]लक्ष्यपदं नास्ति। लक्ष्यपदं चेत्, लक्षणं[2] नास्ति इत्यत आह—**अत्र चेति**। अर्थानिमित्तानुव्यञ्जनसंज्ञाविषयतया संसारहेतव इत्यर्थः। के ते? य इन्द्रियाणामर्था विषया इत्यर्थः। आगामिनो **वार्त्तिकस्य भाष्येण** विरोधं परिजिहीर्षुराह—**न षष्ठीति**। घ्राणादयः शब्दा इति शेषः। व्यधिकरणबहुव्रीहौ न केवलं लक्षणाभावः प्रयोजनाभावश्चेत्याह—**न चेति**। **तदर्था इति लक्षणमव्यापकं स्यादिति**। यदि वाय्वादयः परमार्थतोऽर्था इति शेषः। आदिग्रहणेन वाय्वादिसंग्रहे लक्षणविभागयोर्व्याघात इत्यर्थः॥

**एतेषां चेत्यादि**। तद्यथा, दन्तौष्ठमित्यनुरागः। अस्थिमांसमिति वैराग्यम्। श्यामेति हर्षः। पाकजमिदं मांसपार्थिवरूपमिति माध्यस्थम्। मुखामोद इति [3]प्रमोदः। औपाधिकोऽयमस्य, सहजस्तु पूतिरिति वैमुख्यम्। अहो मधुरमिदम् एतन्मुखावर्जितं ताम्बुलमिति प्रवृत्तिः। उच्छिष्टमिदमिति निवृत्तिः। प्रेयसीस्पर्श इत्युत्सवः। पार्थिवद्रव्यमात्रस्पर्श इति न किञ्चित्[4]। बहुकेशीत्यनुरागः। मज्जधातुमला इमे बहवः श्मशाने तराविव शरीरे संयुक्ता इत्युद्वेगः। पीनस्तनीत्यानन्दः। स्फिङ्निर्विशेषौ पललपिण्डावित्यलंप्रत्ययः। मृतशरीरादचेतनात् पृथगियमिति हर्षः। चेतनादात्मनः पृथगियं सहजशवभूताचेतनादपृथग्भावस्तु भ्रान्त[5] इत्यरतिः। दिव्यमाल्याभरणवसनवतीति प्रीतिः। पार्थिवं पार्थिवेन संयुक्तमिति विरतिः। हसतीति हर्षः। अस्थिमांसविभाग इति विषादः। मम प्रिया परापरा वेति हर्षविषादौ। शरीरापेक्षया परापरभावो न मदपेक्षयेति न किञ्चित्। नृत्यमिति[6] रतिः। सत्प्रत्ययासत्प्रत्ययकर्मसन्तानो मायाशरीर इवेति विरतिः। गम्यजातीयेति स्त्रीति[7] चोत्साहः। त्वङ्मांसशोणितस्नाय्वस्थि-

---

१. लक्ष्यं J २. लक्षणे पदं M ३. आमोदः J ४. किञ्चिदेतत् M ५. °स्तद्भ्रान्तिः M ६. °तीति M ७. तीयास्त्विति M

मज्जशुक्रमूत्रपुरीषसमुदायोऽयं चण्डालीसाधारण इत्यलंबुद्धिः। वक्रभ्रूः ऋजुरोमराजी गभीरनाभिरुन्नतपयोधरा पृथुनितम्बा कृशमध्येति स्नेहः। अन्नपानपरिणतिरियं मेदोमांसाद्यपचयापचयसंस्थानभेदवती अचिरस्थायिनीति निर्वेद इति [3]निमित्तसंज्ञया सह अशुभसंज्ञेति। अनुव्यञ्जनसंज्ञयापि सह द्रष्टव्येति ॥

अस्ति तावदिह दर्शनस्पर्शनाभ्यामेकार्थानुसन्धानम्। तदिदमेकैकविषयं वा, समुदायविषयं वा, तदतिरिक्तवस्तुविषयं वा, वस्त्वनुरोधाकारविषयं वा, अलीकविषयं वेति ?

न तावदाद्यः, न हि भवति यदेव रूपं स एव स्पर्श इति। न च रूपं द्वीन्द्रियग्राह्यम्, अन्धस्यापि नीलपीतादिप्रत्ययप्रसङ्गात्। न चैकमेव वस्तु कारणभेदादन्यथा[4] प्रथत इति युक्तम्, अनात्मकत्वप्रसङ्गात्, भेदाभेदव्यवस्थानुपपत्तेश्च ॥

नापि द्वितीयः, स ह्येकदेशतया वा, एककालतया वा, एककार्यतया वा, एककारणतया वेति। न तावदुपादानलक्षणैकदेशसंभवः, तयोः प्रतिनियतोपादानात्। संभवे वा तदेव द्रव्यमिति पर्यवसितं विवादेन। नाप्यधिकरणीभूतभूतलाद्याधारतया तत्संभवः। तथा हि चक्षुषोपलभ्यमाने भूतले रूपविशेषे घटोऽपि चक्षुषैवोपलभ्यमानो रूपविशेषस्तदाधार इति शक्यते निश्चेतुम्, तयोरधरोत्तरभावेन एकज्ञानसंसर्गित्वात्। तदधिकरणाः स्पर्शादयोऽपीति तु कस्य प्रमाणस्य विषयः ? न हि स्पर्शादयश्चाक्षुषे चेतसि चकासति, त्वचोऽयं व्यापार इत्यपि न युक्तम्, तथापि भूतले घटस्पर्शयोरेवाधाराधेयभावप्रतीतेः। न च समुदाययोरेवाधाराधेयभावानुभवः[1], परस्पराश्रयप्रसङ्गात्, एकाधारतया समुदायानुसन्धानम्, तदनुसन्धाने चैकाधारतानुभव इति। अनवस्थाप्रसङ्गाच्च, भूतलस्यापि हि समुदायत्वं किंकृतमित्यनुयोगानिवृत्तेः। अतएव नैककालतयापि, तयोरेककालतायां प्रमाणाभावात्। भावे वा रासभकरभयोरप्येककालतया समुदायत्वप्रसङ्गात्[2]। भेदाग्रहस्त्वत्रासंभावित एव। अतएव नैककार्यतयापि उपादेयलक्षणस्यैकस्य कार्यस्याभावात्। [3]अतएवैकोदकाहरणक्रियेत्याद्यपि न युक्तम्, रूपाद्यतिरिक्तस्योदकस्यानभ्युपगमात्। एकैकस्यानेकाहार्यत्वे प्रमाणाभावात्, समुदायस्य चासिद्धेः। अतएव नैककारणतयापि, निमित्तमन्तरेण समुदायव्यवहारेऽतिप्रसङ्गात् ॥

---

३. संज्ञया सहाशुभ° M ४. करणभेदेनान्यथान्यथा J १. भावानुभवात् M
२. प्रसङ्गो J ३. एकोदाहरण° M

तृतीये तु न विवादः ॥

नापि चतुर्थः । स हि विज्ञाननयमाश्रित्य वा स्यात्, द्विचन्द्रादिवद् विसंवादाद् वा, स्थैर्यवद्बाधकाद् वेति ? आद्ये रूपादिषु कः पक्षपातः ? प्राप्तेरर्थक्रियास्थितेश्च न द्वितीयोऽपि । ते द्वे अपि रूपादीनामेवेति चेत् ? न तेषां किं तु तस्यैवेत्येव किं न स्यात् ? बाधकादिति चेत् ? स यदि क्रमयौगपद्यविरोधः, क्षणिकं तावदस्तु । रक्तारक्तादिविरोधश्चेत् ? परमाणुरूपं तावदस्तु । संबन्धाभाव इति चेत् ? असंबद्धं तावदस्तु । कथं तद्वत् प्रतीयेतेति चेत् ? तैः सह तथोत्पादादिति परिहारोऽस्तु, भवतामेव यथा शरीरं चेतनावदिति । रूपादिभिरेव समस्तार्थक्रियासिद्धेः किं तदतिरिक्तवस्तुकल्पनयेति चेत्—न, तावन्मात्रेणैव समस्तार्थक्रियासिद्धेः किं रूपादिकल्पनयेत्यस्यापि वाचाटवचसोऽवकाशप्रसङ्गात् । प्रतीयमानत्वादिति चेत् ? तुल्यम् ॥

एतेनैवालीकविषयता निरस्ता । अभेदसाधनानि प्रमाणानि बाधकमिति तु चिन्त्यत इत्याशयवान् पर्यनुयोगार्थमाह—**स्वसंवेदनेनेति** । अत्र **पर आह** अनाकलितसमय इति शेषः । **अनुरञ्जनादिकया त्विति** । अतद्रूपस्य स्वरूपसंक्रान्तिः अनुरञ्जनम् । यथा नीलद्रव्यसम्पर्काद् धवलोऽपि नीलो महारजनसंपर्काद्रक्त इति । अत्र नीलादयो द्रव्यव्यपदेशं विहाय[1] रूपव्यपदेशमेव लभन्ते, नीलरूपः पटो रक्तरूपः पट इति । आदिशब्देन गन्धादीनां वासनादिकाः क्रियाः संगृहीताः । शब्दगतिदूषणमेतदिति विभावयन्निराकरणं विवृणोति—**तथार्थस्येति** । अर्थगतिरपि त्रिधा । उत्पादमात्रं वा, त्रैलोक्यविलक्षणोत्पादो वा, सभागसन्तानभेदोत्पादो वेति । तत्र द्वयं दूषयतीत्याह—**दूषणान्तरमिति** । तृतीयमुत्थापयतीत्याह—**शङ्कत इति** । दृष्टिसृष्टिविषये हि कस्मिंश्चिद् घट इति व्यवहारः । स चेदनया वचोभङ्ग्यातिरिक्तः समर्थितः, सिद्धं नः समीहितमित्याह—**अन्यत्व इति** । **अनन्यत्वे व्यर्थाभिधानमिति** । तथा सति हि रूपपरमाणवः स्पर्शपरमाणवश्चेत्येव । ते[2] च कथमप्युत्पद्यन्ताम्, न कदाचिदपि द्वीन्द्रियग्राह्याः । समुदायश्च दुरुपपादः । तथा च दृष्टिसृष्टिविषयो नैकः[3] समर्थितः स्यात् । अतो निष्प्रयोजनमुत्तराभिधानमित्यर्थः । **शङ्कत इत्यादि** । यद्यपि क्षणिकपरमाणुरूपे द्रव्ये न कश्चिद् विचारविरोधः, तथापि स्थिरावयव्यभिप्रायेण शङ्का । सोऽपि ह्यस्माकं प्रसाध्य इति । अत एवाह—

---

१. रूपव्यपदेशं विहाय added J २. ते om J ३. °योनेकः M

**एकानेकविचारासहत्वादिति** । **असन्त** इति उपलक्षणम् । बाह्यानन्नुरोधिज्ञानाकाररूपा इत्यपि द्रष्टव्यम् । **बीजमिति** ॥

अत्र प्रयोगः, ये घटादिप्रत्यया न सत्याः, त एवम्भूतसम्यक्प्रत्ययपूर्वका मिथ्याप्रत्ययत्वात् , तैमिरिककेशप्रत्ययवदिति । अत्र चोपाधिमुद्भावयति—**यस्त्विति** । यद्यपि हि आदिमाननादिरिति विभागोऽनुपपन्न एव । तथा हि केयमनादिता ? किमेवंरूपमिथ्याज्ञानप्रवाहाविच्छेदः, किं वा पूर्वमप्येवंभूतस्य विभ्रमस्य कदापि भावः ? न तावदाद्योऽसम्भवात् । द्वितीये तु तैमिरिककेशज्ञानमप्यनाद्येव । अनादौ संसारे विप्लुतस्य केशज्ञानस्याभूतचरत्वानुपपत्तेः । तथा चानादिता नोपाधिः । तस्यां सत्यामपि केशज्ञानस्य सत्यज्ञाननिमित्तापेक्षणात्[1] । न च विप[ ]ये बाधकाभावाद्[2] विभ्रमश्च स्यात् । सत्यप्रत्ययाननुकारी चेति शङ्कया भवितव्यमिति वाच्यम् । अनन्यथासिद्धान्वयव्यतिरेकानुविधानसिद्धकारणभावपरिहारे मिथ्याप्रत्ययानामाकस्मिकत्वप्रसङ्गात् । सत्यप्रत्ययाननुकारे[3] घटादिप्रत्ययानामप्रवर्तकत्वप्रसङ्गाच्च । तथा हि मिथ्याप्रत्यया अप्याभिमानिकं पाक्षिकं वा प्रामाण्यमुपादायैव प्रवर्तयेयुः । विभ्रमत्वनिश्चये त्वप्रवृत्तेः[4] । न च प्रमाणाननुकारे प्रामाण्याभिमानसंशयः । न च प्रमाणभेदाग्रहमात्रेण तत्त्वाभिमानसंभवः, विसदृशार्थगोचरत्वे तस्याभावात् । सदृशार्थगोचरत्वे तु सत्यप्रत्ययानुकारोऽकामेनापि स्वीकर्तव्य इति । तथापि घटादिप्रत्ययानां सत्यत्वे किं निबन्धना बौद्धस्येर्ष्येति जिज्ञासुं प्रतिबुबोधयिषुराहेत्याह—**तं प्रतीति** । **अवयविन** इति द्रव्यमात्रोपलक्षणपरम् । यद्यस्मादिति **वार्त्तिकम्** यत्तदोर्व्यत्यासेन[5] सुगममेवेत्युपेक्षितवान् । व्यक्त्यभिप्रायेणानैकान्तिकत्वे दहनायोगोलकमुदाहरणम् । **वार्त्तिकोक्तं** तु व्याघातस्फोरणाय । जात्यभिप्रायेण बुद्धितद्विषयावुदाहार्यौ । अस्ति हि विषयाग्रहे बुद्धिजातीयाग्रहो[6] न चाभेदो बाह्यस्थितौ सत्यां गुणगुणिवादारम्भात् । द्विविधोऽणुः, शब्दात्मकोऽशब्दात्मकश्च । तत्रानन्तरोऽष्टद्रव्यक इति । कवडीकाराहारपर्यन्ताः कामधातवः । ध्यानाहारा रूपधातवः । आनन्दाहारा अरूपधातव इति विभागः । **सा हीति** । यतस्त्वयैवोक्तम् ,

परस्रूपं स्वरूपेण धिया संव्रियते यया ।
एकार्थप्रतिभासिन्या तामाहुः संवृतिं किल[7] ॥

इत्यर्थः । उद्भावनप्रकारसंकलनार्थं पूर्वोक्तैकदेशं स्मारयित्वा परमतमवतारयति—**तदे-**

---

१. °ज्ञाननिमित्तापेक्षयात् A, °ज्ञानापेक्ष° M २. विपर्ययश्च M ३. °कारी······प्रत्ययाननु° om M ४. निवृत्तेश्च M ५. व्यत्ययेन M ६. °जातीयग्र° M ७. द्रः प्र० वा० ३.६७

वमिति । तदत्रानैकान्तिकत्वेन हेत्वाभासो निग्रहस्थानम् । [1]तदभ्युपेतप्रामाण्यागमव्याघातेनापसिद्धान्तः । तच्छब्दपर्यालोचनया निष्प्रयोजनत्वेनापार्थकम् , प्रतिज्ञापदयोर्व्याघातेन विरोध इति ॥

आनुशासनिकं वचनभेदमादाय विरोध उद्भावितः । ततो न पारिभाषिकेण व्यभिचारशङ्कासमानार्थानां प्रकृतीनामिति प्रकृतेऽभ्युपगमवादः[2] । उत्पन्नतद्धितायाः प्रकृतेरधिकार्थत्वात् , स्वार्थिकस्य प्रत्ययस्य निराकरिष्यमाणत्वात् । नन्वाप इत्यपि तोयगतामेव बहुत्वसंख्यामाचष्टाम् , को दोष इत्यत आह—**इत्येकस्यामपीति** । यद्युपनिबन्धेन यदि तोयपरमाणावप्याप इति शिष्टप्रयोगस्तदैवं नेयम् । वस्तुतस्तु यथैकवचनात्तोयमनुशासनबलादसाधुस्तथैकसंख्यावच्छिन्ने पाथस्यपीति न कश्चिद् विरोधः । दारा इत्यत्र त्वेषैव युक्तिरित्यर्थः । **क्रन्दत** इत्यनादरे षष्ठी । भवत इति पूरणीयम् । षण्णगरीत्यादिषु तु सुगममेव, समाहारे समासानुशासनात् । स च समाह्रियमाणार्थातिरिक्त एवाभ्युपगम्यतेऽस्माभिः ॥

यदि यथालोकव्यवहारमाद्रियसे, किमिति सविकल्पकं प्रत्यक्षं परिहरसि ? कुतश्च न शब्दादीनि प्रमाणानि पृथगेवाभ्युपगच्छसीत्याह—**अन्यथेति** । वार्त्तिकोक्तोदाहरणानुरोधेनाह्रीकं प्रत्याह—**न च नीलस्येति** । वस्तुतस्तु पीतशङ्खविभ्रमे [3]अयम् अपि न पीतस्यैव शङ्खस्योत्पादमिच्छति, पुरुषान्तरेणापि तथोपलम्भप्रसङ्गात् । ततो धवलिम्नि प्रतीतेऽपि तदाश्रयं शङ्खद्रव्यमभिप्रेत्येत्येव । **तोयविरह** इत्यादि । न चैतद् वैधर्म्यमात्रम् , उपष्टम्भकस्याविनिर्भागेनैवावस्थाननियमात् । यथा हेम्नि पार्थिवो भागः । तैले पयसि सर्पिषि च पाथसीयः । न च संयोगिमात्रं यूषे जलम् । तदसंयोगे यूषत्वनिवृत्तेरिति तैर्व्यपदेशः । तैर्विशेषणैस्तस्य व्यवच्छेद्यस्य व्यवच्छेदः । स चात्रानुभविको विवक्षितः । स ह्येवं प्रवर्तते, चन्दनोऽयं सुरभिः, तिक्तः, शुक्लः, शीतः इति । तादात्म्यभ्रमनिरासार्थं तु शब्दो व्यपदेशकतयोपात्तः[4], चन्दनस्य शुक्लं रूपमित्यादि । एतच्चागम्भीरमिति मत्वा यथाश्रुतमेवोपादाय तात्पर्यमाह—**अस्ति हीति** । न केवलं हेतुस्वरूपालोचनेन प्रतिज्ञालोचनेनापि चन्दनस्योपालम्भाभ्युपगमोऽवसीयते परस्य । न ह्यनुपलब्धस्यैव रूपाद्यभेदं साधयति । तथा सत्यप्रसिद्धविशेष्यः पक्षः स्यात् । स्वातन्त्र्येण वा सत्त्वे साध्ये आश्रयासिद्धो हेतुरिति तृतीये व्युत्पादनीयमिति

---

१. तदप्युत्पत्तिप्रा० M २. इत्यभ्यु० M ३. स्वयमपि M ४. व्यपदेश उपा० J

इहोपेक्षितवानिति । **एकान्ततो व्यपदेशं व्यावर्तयितुमिति** प्रयोगान्तरसूचनाय[1] । तथा हि, अयं चक्षुर्गोचरः चन्दनो रसादिभ्यो भिद्यते, तदनुपलम्भेऽप्येतस्योपलभ्यमानत्वात् । यद्यस्मिन्ननुपलभ्यमानेऽप्युपलभ्यते तत् ततो भिद्यते, यथा रूपादिभ्यः शब्दः । तथा चायं चन्दनः । तस्मात् तथेति । रूपमात्राच्चु व्यवच्छेदः[2] सन्दिग्धः तत्र व्यपदेशो हेतुरिति ॥

**प्रयोगान्तरमाहेति** । वैलक्षण्यस्य हेतोर्व्यक्त्यपेक्षयानैकान्तिकत्वात्, जात्यपेक्षया ह्यसिद्धत्वात्, विषयवैलक्षण्यस्य च साध्यत्वात् । [3]तदाहिताकारलक्षणस्यानभ्युपगमादित्याशयवानिति शेषः । अत्र च हेतुतया व्याप्तिं प्रधानीकृत्य षष्ठ्यन्तो हेतुरुक्तः । पञ्चम्यन्तश्च साध्यः । पर्वतोऽयमग्निमान् । [4]कस्मात् ? धूमवत्त्वात् । किं कारणम् ? धूमवतोऽग्निमत्त्वादितिवत् । ग्रंथगौरवभिया तु यथाश्रुतं व्याचष्टे— **घटप्रत्ययस्येति** । **विषयो** घट एव । **निमित्तं** घटत्वम् । तद्धि निमित्तीकृत्य घटप्रत्ययो घटे वर्तते । घटप्रत्ययस्त्वनुभवः स्मरणं च । तदियं प्रयोगपरिशुद्धिः । घटादिष्वेकादिप्रत्यया उक्तनिमित्तव्यतिरिक्तप्रवृत्तिनिमित्ताधीनजन्मानः, उक्तनिमित्तम् अन्तरेणापि जायमानत्वात् । तेष्वेव घटादिषु नीलादिषु[5] नीलादिप्रत्ययवदिति । अत्र यदि घटमन्तरेणापि जायमानत्वादित्येतावन्मात्रं क्रियेत तदैकघटपरित्यागे घटान्तरे जायमानघटप्रत्ययेन व्यभिचारः, तथाभूतस्यापि निमित्तान्तरानपेक्षत्वात् । तन्निमित्तम् अन्तरेणेत्येतावन्मात्रे तु घटनिर्विकल्पकेन व्यभिचारः, तस्य तन्निमित्तनिरपेक्षस्यापि निमित्तान्तरानपेक्षणात् । तत्प्रत्ययमन्तरेणेत्येतावन्मात्रेऽपि तेनैव व्यभिचारः । प्रथमद्वितीयपदोपादानेऽपि तत्स्मरणानुव्यवसायविभ्रमैर्व्यभिचारः । तत्प्रत्ययविषयनिमित्तव्यतिरेकेणापि[6] तेषां जन्म । [7]न च प्रवृत्तिनिमित्तान्तरापेक्षा । द्वितीयतृतीययोरपि निर्विकल्पकेन व्यभिचारः । प्रथमतृतीययोरपि घटान्तरप्रत्ययेन व्यभिचार इति समस्तोपादानम् । अतो यन्न्यूनं तत्पूरयति—**भाज इत्यत्रापीति** । तदेतद्घटादिप्रत्ययवैलक्षण्यमेकादिप्रत्ययानामिति । स्थाणुर्द्रव्यमित्येवं साधु । न च जातिसंकरः, तत्र खदिरजातेरभावात् । तद्गुणयोगात् तु तद्व्यवहारो माणवके सिंहव्यवहारवत् तदवयवारब्धत्वात् तदीयताव्यवहारः क्षीरस्य दधीतिवत् । [8]सर्पेणान्त्यावयविना एकेनानारम्भात् तदवयवानां कार्याविष्टब्धत्वात् सर्पकुण्डलकं संस्थानमेव स्फुटम् । प्रतिमाया

---

१. सूचनात् J २. °मात्राच्चाभेदः M ३. तदा क हिता° M ४. कस्मात् om J ५. नीलादिषु om M ६. °त्तमन्तरेणापि M ७. न च निमि° M ८. स्पर्शेणा° M

इति । शरीरलक्षणाभावात् न[1] तत्र मुख्यः शरीरशब्दः, तदेकार्थसमवेतसंस्थाने औपचारिक इह प्रयुज्यते[2], तत्सादृश्यात् । राहोः शिर इत्यत्र तु संस्थाने शिरः शब्दोपचारमात्रम् । सुवर्णस्याङ्गुरीयकमित्यत्र जातिसङ्करप्रसङ्गात् संस्थानमेवाङ्गुरीयकम्, रजतादेरप्यङ्गुरीयकदर्शनादिति स्फुटम् । शिलापुत्रकस्येत्यत्रोक्तयुक्तिं स्मारयन्नाह—एवमिति । व्यतिरेकोपदेशविवेको यदि स्यात् तदा बुद्धिशरीराभ्यामेवानैकान्तिकं स्यादत आह—अतादात्म्येति ॥ १४ ॥

॥ भाष्यम् ॥

अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः, चेतनस्याकर्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचक्षाणक[3] इवेदमाह—

बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥

नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति । तद्धि चेतनं स्यात् । एकश्चायं चेतनो देहेन्द्रियसङ्घातव्यतिरिक्त[4] इति । प्रमेयलक्षणार्थस्य[5] वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति ॥ १५ ॥

॥ वार्त्तिकम् ॥

अथ बुद्धेरवसरप्राप्ताया लक्षणापदेशद्वारेण सूत्रम्, बुद्धिरुपलब्धिरित्यादि । एतैः पर्यायशब्दैर्योऽभिधीयते पदार्थः, सा बुद्धिरिति । पर्यायशब्दाः कथं लक्षणम् ? व्यवच्छेदहेतुत्वात् । [6]सर्वं हि लक्षणमितरेतरपदार्थव्यवच्छेदकम् । एतैश्च पर्यायशब्दैर्नान्यः पदार्थोऽभिधीयते इत्यसाधारणत्वात् लक्षणम् ॥

उपपत्तिसामर्थ्यात् पर्यायशब्दाभिधानाद् बुद्धिवृत्तेर्निराकरणम् । य आहुः बुद्धेर्ज्ञानं वृत्तिरात्मन उपलब्धिरिति[7] तन्निराकरणार्थं समानार्था एते शब्दा इति बुद्धिवृत्तिः पृथङ्निराकृता भवति । का पुनरत्रोपपत्तिः ? आत्मा उपलभते बुद्धिर्जानीते इति ब्रुवाण उभयोश्चैतन्यं प्रतिपद्यते । उभयचैतन्ये च प्रत्ययव्यवस्थानुमानं न स्यादिति । यदि बुद्धिश्चेतना आत्मा च चेतनो न बुद्ध्यवसितानर्थानात्मोपलभेत । किं कारणम् ? [8]चेतनोपलब्धानामर्थानां चेतनान्तरस्याप्रतिपत्तेः । अस्ति च प्रतिपत्तिः । तस्मादेकश्चेतन इति । बुद्धिवृत्त्यविशिष्टायां [9]च ज्ञातृवृत्तौ कल्पितायामात्मनः स्वरूपं वक्तव्यमिति । बुद्धिरध्यवस्यत्यात्मा चेतयत इति चेत् ? अथापीदं स्यात् यथा बुद्धिरर्थानध्यवस्यति, तथा

---

१. °योगात् M २. प्रसज्यते M ३. इवाह J ४. °न्द्रियबुद्धिसं° J ५. °स्यापि J
६. सर्वथा लक्षणमितरेतर° J ७. °लब्धिर्वृत्तिरिति C ८. चेतनान्तरोप° C ९. चाज्ञवृत्तौ J

आत्मा अधिदेशमधिकालं चोपलभत इति । अध्यवस्यत्युपलभत इति पर्यायशब्दौ । न च पर्यायशब्दैः पदार्थानां नानात्वं युक्तम्, यथा ध्वनिः [1]शब्दो नाद इति । अन्यथा हि [2]इन्द्रः शक्र इति नानात्वं स्यादिति । अथात्मा चेतयते बुद्धिर्ज्ञापयतीति[3] ? अद्धा बुद्ध्या जानीते पुरुषो न बुद्धिः । बुद्धिर्ज्ञापयतीति ज्ञानसाधनं भवतीति ॥ १५ ॥

॥ टीका ॥

आत्मादीनां बुद्धिहेतूनां लक्षणस्यानन्तरं हेतुमती बुद्धिर्लक्षणीयेत्याह वार्त्तिककारः—**अथ बुद्धेरवसरप्राप्ताया** इति । लक्षणं तावत् प्रकृतत्वादपदेष्टव्यमेव, तदपदेशद्वारेणान्यदपि किञ्चित् सूचनीयम् । अतएवोक्तम्—**सूत्रमिति** । अन्यच्च सांख्यमतनिराकरणम् । यथोक्तं भाष्यकारेण—**अचेतनस्य करणस्य बुद्धेरिति** । इवकारेण नेदं प्रत्याख्यानपरम् , अपि तु लक्षणपरादयमप्यर्थः प्रतीयमानोऽपेक्षितश्च नोपेक्षणीय इत्युक्तं भवति ॥

**बुद्धि—रम्** ॥१५॥ सूत्रतात्पर्यमाह—**एतैरिति** । पृच्छति—**कथमिति** । समानासमानजातीयव्यवच्छेदकं हि लक्षणमव्यभिचारितया । पर्यायशब्दाश्च संकेतमात्राधीनप्रवृत्तयः क्व नाम न सम्भवन्ति ? तस्मात् नैते लक्षणमिति भावः । उत्तरम्—**व्यवच्छेदेति** । ननु व्यभिचारसम्भवेन व्यवच्छेदकत्वमयुक्तमित्यत आह—**एतैश्चेति** । संकेतो हि द्वेधा, [4]सर्वजनीनो यथा गौरिति गोजातीयस्य वाचकः, प्रादेशिकश्च यथा चैत्र इति पुरुषभेदस्य । तत्र [4]सर्वजनीनः शक्नोति व्यवच्छेदबुद्धिं भावयितुम् , तद्विवक्षयैवोक्तम्—**एतैश्चेति** । **उपपत्तिसामर्थ्यादिति** भाष्यावयवं व्याचष्टे-**पर्यायेति** । **अचेतनस्येत्यादि** भाष्यम् । तद् व्याचष्टे—**य आहुर्बुद्धेरिति** । बुद्धिः किलत्रैगुण्यविकारः । त्रैगुण्यं चाचेतनमित्यचेतना[5] केवलमिन्द्रियप्रणालिकया अर्थाकारेण परिणमते । चितिशक्तिश्चापरिणामिनी नित्यचैतन्यस्वभावा । तस्याः सन्निधानाद् अयस्कान्तमणिकल्पा बुद्धिस्तत्प्रतिबिम्बोद्ग्राहितया चैतन्यरूपतामापन्नेवार्थाकारपरिणतार्थं चेतयते । तेन योऽसौ नीलाकारः परिणामो बुद्धेः, स ज्ञानलक्षणा वृत्तिरित्युच्यते । आत्मप्रतिबिम्बस्य तु बुद्धिसंक्रान्तस्य यो बुद्ध्याकारनीलसम्बन्धः, स आत्मनो व्यापार [6]इवार्थोपलब्धिरात्मनो वृत्तिरित्याख्यायते । तदिदं बुद्धितत्त्वं जडप्रकृतितया [7]इन्दुमण्डलम् इव स्वयमप्रकाशं चैतन्यमार्तण्डमण्डलच्छायापत्त्या प्रकाशते, प्रकाशयति चार्थानिति ।

---

१. शब्दः om C २. ध्वनिर्नाद इत्यत्रापि नाना° C ३. °तीति चेत् C ४. सार्वजनीनः C ५. °चेतनं C ६. इवोपलब्धिः C ७. °बिम्बमिव J

तन्निराकरणाय पर्यायोपन्यासः । नात्मवृत्तेरुपलब्धेरन्यास्ति बुद्धिः । नापि बुद्धिवृत्तिर्ज्ञानम् अन्यदिति । अयमभिसन्धिः । न तावद् बुद्धेरात्मच्छायापत्तिरिन्दाविव [1]मार्तण्डमण्डलतेजःसंक्रान्तिः पारमार्थिकी, चितेरपरिणामितया संक्रमायोगात् । तस्माद् भ्रान्तिः । सा च न तावद् बुद्धेः, तस्या अचैतन्यात् । नाप्यात्मनः, तस्यावृत्तिकत्वात् , तथात्वे वा परिणामापत्तेः । तस्मात् कृपणधनमिवात्मचैतन्यं न स्वपरोपकारीति बुद्धेः स्वाभाविकं चैतन्यमास्थेयम् । तथा च उभयचैतन्ये दूषणमुक्तम्[2] । प्रत्ययव्यवस्थया यदेककर्तृत्वानुमानं तन्न स्यादित्यर्थः । अथ द्वयोश्चेतनयोरेका [3]वृत्तिर्भेदाग्रहो वा, तेनैककर्तृकत्वाभिमान इत्यत आह—**बुद्धिवृत्त्यविशिष्टाश्चामिति** । **बुद्धिर्ज्ञानसाधनमिति** । बुध्यतेऽनेनेति व्युत्पत्त्या मन उच्यते । गन्धादिविषयतया सुखदुःखविषयतया चेयं बुद्धिर्भाव्यमाना निर्वेदाय कल्पत इति ॥ १५ ॥

## ॥ परिशुद्धिः ॥

अर्थकथनपूर्वकं सङ्गतिवार्त्तिकमवतारयति—**आत्मादीनामिति** । कारणत्वेऽपि मनसोऽपकर्षे तूक्तम् । सर्वजनीनेनापि समयेन गोशब्दवद् यद्यर्थान्तरेऽप्येते प्रवर्तेरन् तदा को विरोध इत्यत आह—**तत्र सर्वजनीनः शक्नोतीति** । स्वाभिधेयद्वारेणेति शेषः । तेनायमर्थः । एतेषां शब्दानां व्यवह्रियमाणानां यदेकं प्रवृत्तिनिमित्तं तद्योगाद् इतरेभ्यो बुद्धिर्भिद्यत इति । तदिदमुक्तं सूत्रकृता—**इत्यनर्थान्तरमिति** । तेनैतन्निरस्तम् । गृहीतसमयैरेभिर्बुद्धिः समानासमानजातीयेभ्यो व्यावर्तनीया । तथाभूतायां च [4]तस्यामेतेषां समयो ग्राह्य इत्यन्योन्याश्रयत्वम् । व्यवहारे तु साध्ये आत्माश्रयत्वमिति । तर्हि बुद्धिर्ज्ञानमित्येवास्तु किमनेकशब्दोच्चारणेनेत्याशङ्क्य **परमतमपाकर्तुम्** इत्याह[5] **भाष्यकार एवेति स्फुटमिति—उपपत्तिसामर्थ्यादिति**[6] **भाष्यावयवं व्याचष्टे—पर्यायेति** । तत्रोपपत्तिपदार्थः पर्यायशब्दाभिधानमित्यनेन व्याख्यातः । शेषेण सामर्थ्यपदार्थः । तेनायमर्थः, पर्यायशब्दाभिधानलक्षणाया उपपत्तेः सामर्थ्यम् अनेकार्थत्वप्रतिषेधाक्षेपकत्वम् । **तस्मादिति** । तदेतन्निराकरणं सूचितम् । यदुपपत्तिसाध्यं तां पृच्छति **वार्त्तिककारः—का पुनरुपपत्तिरत्रेति** । निर्विकल्पकव्यापाराणीन्द्रियाणि । सविकल्पकव्यापारं मनः । अधिकाराभिमानव्यापारोऽहंकारः । कृत्यध्यवसायव्यापारा बुद्धिः । निर्व्यापार एव कल्पितबुद्धिव्यापारः पुरुष इति । [7]तेनायमर्थः, अकारणम्

---

१. °मण्डल° om J २. वा० पृ० ४३५.२२ ३. वृत्तिवृत्तिभेदा° K ४. सत्या° M ५. °र्हमाह M ६. उप······दिति om J ७. तेना···र्थः om J

अकार्यश्च पुरुषः । आदिकारणं प्रकृतिः । आदिकार्यं बुद्धिः । ततोऽहंकारादिसर्ग इति । पुरुषः कूटस्थचैतन्यरूपः । इतरदचेतनमिति साङ्ख्याः । तत्र बुद्धिरंशत्रयवती, पुरुषोपरागो विषयोपरागो व्यापारावेशश्चेत्यंशाः । भवति हि मयेदं कर्तव्यमिति । मयेति हि चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः । इदमिति विषयोपरागः इन्द्रियप्रणालिकया परिणतिभेदो दर्पणस्येव मलसंबन्धः पारमार्थिकः । [1]तदुभयायत्तो[2] व्यापारावेशोऽपीति । तत्रैवंरूपव्यापारलक्षणा बुद्धिः । विषयोपरागलक्षणं ज्ञानम् । तेन सह यः पुरुषोपरागस्यातात्त्विकस्य संबन्धो दर्पणप्रतिबिम्बितस्य मुखस्येव तद्गतमलिनिम्ना[3] सोपलब्धिरिति तेषां रहस्यम् । तदुत्थापयति—**बुद्धिः किलेति । सा च न तावद् बुद्धेः, तस्या अचैतन्यादिति ।** यद्यप्यचेतन एव भ्राम्यतीति साङ्ख्याभ्युपगमो यथाहुः,

योगश्चित्तवृत्तिनिरोधः[4] ।

इति, तास्तु

प्रमाणसंशयविपर्ययस्वप्नस्मृतयः[5] ।

इति, तथापि व्याप्त्या प्रत्यवस्थानम् । यत्र हि चेतनाचेतनयोरसंसर्गाग्रहे संसर्गभ्रमः, तादात्म्यभ्रमो वा, तत्र चेतनस्यैव, यथा दर्पणचैत्रयोः शरीरशरीरिणोर्वा । न हि तत्र दर्पणस्य शरीरस्य वा भ्रम इति । अपि च बुद्धिरात्मानं चेतयमाना भ्राम्येत् , पुरुषेण वा चेत्यमाना । नोभयमपि प्रागुक्तयुक्तेरेव । न च स्वतः परतो वा अप्रकाशमानैव बुद्धिर्भ्राम्यतीति युक्तम् । न ह्यदृश्यमान[6] एव दर्पणः तिमिरे मैत्रसन्निधानमात्रेण तत्प्रतिबिम्बमुद्ग्राहयति । तस्मादुभयथापि बुद्धेः सहजं चैतन्यमापन्नमित्युपसंहारव्याजेनाह—**तस्मात् कृपणेति ॥ १५ ॥**

॥ भाष्यम् ॥

**स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि । तेषु सत्स्वयमपि—**

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥**

**अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति ।**

---

१. तथोभया° J २. °यत्तौ M ३. तद्गतमलोपलेपः M ४. योगसूत्रम् १ । १ ५. द्रः तदेव, १ । ५ ६. °मान om M

युगपच्च खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु [1]युगपज्ज्ञानानि नोत्पद्यन्ते । तेनानुमीयते, अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि, यस्यासन्निधेर्नोत्पद्यते ज्ञानम् , सन्निधेश्चोत्पद्यत इति[2] । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ॥ १६ ॥

॥ वार्त्तिकम् ॥

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहा इति भाष्यम् । एते स्मृत्यादयो मनसो लिङ्गं भवन्ति । किमेत एव ? नेत्युच्यते[3] । किं तर्हि ? [4]इदं चान्यत् । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥

यस्मादिन्द्रियार्थसन्निकर्षेषु सत्स्वपि युगपज्ज्ञानानि न संभवन्ति, अतोऽवगम्यते अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि, यस्य सन्निधानासन्निधानभेदानुविधानात्[5] ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति । कुतः ? कारणवैकल्ये कार्यप्रतिबन्धदर्शनादिति[6] सूत्रार्थः ॥

कथं पुनः स्मृत्यादयो मनसो लिङ्गं भवन्ति, अन्यत्र वर्तमाना इति ? न ब्रूमः स्मृत्यादयो मनोवृत्तित्वान्मनसो लिङ्गम्[7], अपि तु गन्धादिक्रियान्यत्वे सति क्रियात्वात् करणान्तरप्रयोजकत्वम् , या गन्धादिभ्योऽन्या क्रिया सा [8]करणान्तरप्रयोजिका दृष्टा, यथा रथादिक्रिया । क्रिया चेयं गन्धादिव्यतिरिक्ता[9] स्मृत्यादिका । तस्मादियम् अपि करणान्तरं प्रयोजयतीति । सुखादयोऽपि गन्धादिभ्योऽन्यत्वे सति विषयत्वात् चक्षुरादिव्यतिरिक्तकरणान्तरप्रयोजका रथादिवदिति । तद् यथा रथादयो विषयाः चक्षुरादिव्यतिरिक्तं करणं वास्यादि प्रयोजयन्ति, विषयाश्च सुखादयः, तस्मात् तैरपि करणान्तरं प्रयोजयितव्यमिति । [10]अथायुगपज्ज्ञानोत्पत्तिर्ज्ञानधर्मः, स कथं [11]मनोऽस्तित्वे लिङ्गं भवति ? अथासंबद्धमपि लिङ्गमिष्यते, सर्वं सर्वस्य लिङ्गं स्यात् । अस्त्यात्मा काकस्य कार्ष्ण्यादित्यपि सिध्येत्[12] । न त्वेवं भवति । तस्मात् नासंबद्धं लिङ्गमिति[13] । असंबद्धमपि लिङ्गमित्येके । यथा प्रत्यग्रशरावदर्शनं कुलालावृत्ति कुलालसद्भावं बोधयति, भ्रान्तिमच्चक्रदर्शनं चेति । तन्न, नैवात्र कुलालसद्भावो बोध्यव्यः, किं तु देश एवाविदूर-

१. यद्युग° J　२. °द्यते तन्मनः J　३. इत्युच्यते om C　इयं च युग° C
५. °भेद° om C　६. °बन्धादिति C　७. °ङ्गं भवन्ति C　८. °प्रयोज्या C　९. गन्धादिव्यतिरिक्ता om C　१०. °पद्युत्पत्तिः J　११. मनोलिङ्गं C　१२. दित्येतदपि स्यात् C
१३. °ङ्गं संभवति C

कुलालवत्त्वेन साध्यः। तस्य च प्रत्यग्रशरावक्त्वं धर्मः। भ्रान्तिमच्चक्रवत्त्वेनापि देशोऽविदूरकुलालवत्त्वेन साध्यते। तस्मात् नासंबद्धमनुमानं क्वचिदपीति। युगपज्ज्ञानानुत्पत्तिस्तर्हि कथं मनसा असंबद्धा मनोलिङ्गं भवति। [1]अयुगपज्ज्ञानोत्पत्तेरेव पक्षीकरणात् नासंबद्धम्। कथमिति? रूपादिग्रहणानि चक्षुरादिव्यतिरेकेणाधिष्ठायकान्तराप्रयोज्यानीति[2] अयुगपदुत्पत्तेः। तद् यथा अनेकशिल्पपर्यवदातस्य पुरुषस्य अनेकं वास्यादि युगपत्सन्निधानेनोपस्थितं हस्ताद्यधिष्ठायकापेक्षं न युगपदनेकरथादिक्रियां निर्वर्तयति, तथा च चक्षुरादि न युगपदनेकं ज्ञानं करोति। तस्मात् तदप्यधिष्ठायकान्तरमपेक्षते इति ॥

इन्द्रियाणि वा पक्षीकृत्य वक्तव्यम्। कथमिति? चक्षुरादीन्द्रियम् आत्मप्रवृत्तावधिष्ठायकान्तरापेक्षम्, अयुगपत् प्रवृत्तेः वास्यादिवदिति। यदि तर्हि चक्षुरादीन्द्रियं मनःसन्निधानापेक्षमर्थानामयुगपद्ग्राहि, य एकेन्द्रियग्राह्यास्तेषु कथमयुगपद्ग्रहणम्? न हि तत्रासन्निहितं मन इति। संबन्धिभेदादिति चेत्, युगपत्संबन्धिसु कथम्? भवतु तावन्नीलादिभेदेषु एकेन्द्रियविषयेषु इन्द्रियविषयसंबन्धिभेदादयुगपद्ग्रहणम्, अथ ये युगपत्संबध्यन्ते तेषु कथं शुक्लो गौर्गच्छतीति प्रत्यया युगपत् न[3] प्राप्नुवन्ति? बुभुत्साभेदादयुगपद्ग्रहणमित्येके। एके तावद् वर्णयन्ति, संबद्धोऽप्यर्थोऽबुभुत्सितत्वान्न युगपद् गृह्यते इति। तन्न, [4]मनोनिवृत्तिप्रसङ्गात्। एवं तर्हि मनः परित्याज्यम्, यदि बुभुत्साभेदादयुगपद्ग्रहणानि भवन्ति। अन्यत्रापि बुभुत्साभेदो न दण्डवारित इति मन इदानीमनर्थकं परित्याज्यम्। सत्यां च बुभुत्सायामयुगपद्ग्रहणे न्यायोऽन्योऽवधारणीयः तस्मादन्यनिमित्तमयुगपद्ग्रहणमिति। किं पुनर्निमित्तम्? करणत्वम्। यथैवायं करणधर्मो नानधिष्ठितं करणं प्रवर्तते इति, तथा [5]संबद्धस्याप्यनेकसमानकालक्रियाकर्तृत्वं नास्ति। न हि करणं संबद्धमपि एकदानेकां क्रियां शक्नोति कर्तुम्। यदि पुनरात्मैवाधिष्ठाता भवेत्, तथाप्यात्मनो युगपदनेकेन्द्रियसंबद्धस्यानिषेधादयुगपज्ज्ञानोत्पत्तौ न्यायोऽन्योऽवधार्यः। स च नान्तरेण मनः [6]सिध्यतीति सिद्धं मन इति ॥ १६ ॥

॥ टीका ॥

**भाष्यकारः** क्रमप्राप्तं मनोलक्षणसूत्रमवतारयन् उत्सूत्रमन्यान्यपि लक्षणानि

१. युग॰ C २. ॰रापेक्षाणि C ३. न om J ४. मनोऽतिवृत्ति J ५. ॰समानकाल॰ om C ६. सिध्यति om C

आह—स्मृतीत्यादि । सुखादिप्रत्यक्षमित्यादिशब्देन विषयतयेच्छादयः संगृहीताः । इच्छादय इत्यत्रादिशब्देन कार्यतया सुखादयः संगृहीताः ॥

**युग—ङ्गम् ॥१६॥** अनिन्द्रियनिमित्ता अबाह्येन्द्रियनिमित्ता इत्यर्थः । स्मृतीत्यादिभाष्यस्य वार्त्तिककारः तात्पर्यमाह—स्मृतीति । अनिन्द्रियेत्यादिभाष्यं व्याचष्टे—यस्मादिति । [1]इन्द्रियगतरूपादिनिवृत्त्यर्थमुक्तम् इन्द्रियसंयोगीति । तथापि आकाशादीनामपि मनस्त्वं मा भूदित्यत उक्तम्—सहकारीति । तथाप्यालोकस्य मा भूदित्यत उक्तम्—निमित्तान्तरमिति । तथाप्यात्मनो मा भूदित्यत उक्तम्—अव्यापीति ॥

आक्षिप्य भाष्यं समाधत्ते—कथं पुनरिति । चक्षुरादिभ्योऽनुत्पत्तौ सत्यां क्रियात्वात् । अत्र च य आत्मनो विशेषगुणास्ते सर्वे इन्द्रियजन्मानो यथा गन्धादिप्रत्ययाः, तथा च विवादाध्यासिताः स्मृत्यादयः । तस्मात् तेऽपीन्द्रियजन्मानः । एवं च संस्कारादिषु न करणत्वप्रसङ्ग इति । सौत्रं हेतुमाक्षिप्य समाधत्ते—अथायुगपदिति । सम्बन्धिभेदादिति । यदा तस्यैव मनःसंयुक्तस्येन्द्रियस्य क्रमेण नीलादयोऽर्थाः सम्बध्यन्ते तदा तत्क्रमात् क्रम इत्यर्थः । बुभुत्साक्रमं गृहीत्वा सिद्धान्तेऽपि मनःपरित्यागो मा [2]भूदिति भिया उक्तम्—सत्यां बुभुत्सायामयुगपद्ग्रहण इति । न हि किञ्चित्करणं सम्बद्धमपि सदिति स्यात् । यद्येवं धारावाहिकज्ञानोत्पत्तिर्न स्यात्, द्वितीयादिज्ञानेष्वपि सैव सामग्रीति सकृदेव यावत् कर्तव्यकरणात् समर्थस्य क्षेपायोगात् । क्षेपयोगे वा पश्चादपि न जनयेत्, अविशेषात् । न च कर्तुरप्ययं क्रमकारिताधर्मः स ह्यनेककरणाधिष्ठानेन युगपन्नानाकार्याणि करोति । [3]यथा युगपन्माणवको गच्छति, पठति, [4]पन्थानं वीक्षते, वहति चाचार्यस्य कमण्डलुमिति । तस्मात् सर्वमवदातम् । तदिदमपि मनः स्मृत्यादिसाधनतया भाव्यमानं निर्वेदाय कल्पत इति सिद्धम् ॥ १६ ॥

॥ परिशुद्धिः ॥

वैधर्म्यादिन्द्रियप्रकरणादपसारितस्य बुद्धिक्रमोन्नेयतया प्रवृत्तिहेतुतया च तयोः मध्येऽर्थादवसरो मनस इत्याह—क्रमप्राप्तमिति ॥

यस्मादित्यादिवार्त्तिकं वाक्यभेदेन सूत्रकारोक्तस्वोक्तहेतुपपादकभाष्यव्याख्यानमित्याह—अनिन्द्रियेति । यद्यपि निमित्तान्तरमित्यनेनैवाकाशोऽपि[5] व्यवच्छिद्यते,

---

१. °दिव्यावृ° C २. भूदत उक्तम् C ३. यथा om C ४. पन्थानं वीक्षते J
५. °शोऽयमपि M

अव्यापीत्यनेनैव वा, सहकारीत्यनेनैवात्मादि , उपादानातिरिक्तस्यैव सहकारित्वप्रसिद्धेः, तथापि यथाविवक्षं गोबलीवर्दन्यायेन व्यवस्था। इन्द्रियं प्रधानीकृत्य वा आत्मनि सहकारिवाद इति। ननु मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात् , विशेषगुणशून्यद्रव्यत्वात् , नित्यत्वे सत्यनारम्भकद्रव्यत्वात् , ज्ञानसमवायिकारणसंयोगाधारत्वात्[१] इत्यादेः। तत्कथमुच्यते—अव्यापीति। नैतदेवं, सर्वेषामेषामापाततः स्वरूपासिद्धत्वात्। तथा हि यदा[२] सुखाद्युपलब्धीनां क्रियात्वेन करणतया मनोऽनुमितम् , तदा न द्रव्यत्वसिद्धिः, अद्रव्यस्यापि करणत्वात्। अथासामेव साक्षात्कारितया इन्द्रियतया तदनुमातव्यम् , तथापि व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। तत्र यदि कर्णशष्कुलीवन्नियतस्य शरीरावयवस्योपाधित्वम् , तदा तावन्मात्रे[३] वृत्तिलाभः। तद्दोषे च वृत्तिनिरोधः श्रोत्रवत् प्रसज्येत। ततः शरीरमात्रमुपाधिरभिधेयः। तथा च तदवच्छेदेन वृत्तिलाभे शिरसि मे वेदना, पादे मे सुखमित्याद्यव्याप्यवृत्तित्वप्रतीतिविरोधः। असमवायिकारणानुरोधेन [४]विभुकार्याणां देशनियमात्। शरीरतदवयवावयवपरमाणुपर्यन्तोपाधिकल्पनायां च कल्पनागौरवप्रसङ्गः, नियमानुपपत्तिश्चेति। ततोऽन्यदेवैकं सूक्ष्ममतीन्द्रियम्[५] उपाधित्वेन कल्पनीयम्। तथापि तस्यैवेन्द्रियत्वे स्वाभाविके [६]अधिककल्पनायां प्रमाणाभावात् धर्मिग्राहकप्रमाणबाधः। अथ ज्ञानक्रमेणेन्द्रियसहकारितया तदनुमानं तदा सुतरामेव प्रागुक्तदोषः। यदि तु मनसो वैभवेऽपि अदृष्टवशात् क्रम उपपद्यते, तदा मनसोऽसिद्धेराश्रयासिद्धिरेव वैभवहेतूनामिति। अथ यत्रादृष्टस्य दृष्टकारणोपहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पद्यत एव, अन्यथा [७]अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित्पटो न जायेत। जातोऽपि वा कदाचिन्निर्गुणः स्यात्। बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत्। यत्र तु दृष्टानुपसंहारेण अदृष्टस्य व्यापारः[८] तत्र तद्वैगुण्यात् कार्यानुदयो यथा परमाणुकर्मणः। तदिहापि यदि विषयेन्द्रियात्मसमवधानम् एव ज्ञानहेतुः, तत्सद्भावे सदैव कार्यं स्यात्। न ह्येतदतिरिक्तमप्यदृष्टस्योपहरणीयमस्ति। न च सदैव ज्ञानोदयः। ततोऽतिरिक्तमपेक्षणीयमस्ति। तच्च यद्यपि सर्वाण्येवेन्द्रियाणि व्याप्नोति, तथापि करणधर्मत्वेन क्रियाक्रमः संगच्छते। [९]अकल्पिते तु तस्मिन् नायं न्यायः, प्रतिपत्तुरकरणत्वात्, चक्षुरादीनामनेकत्वात्। तस्मादन्तःकरणमस्तीति चेत् ? नन्वेवमपि युगपज्ज्ञानानि मा भूवन्। युगपज्ज्ञानं तु केन वार्यते ? भवत्येव समूहा-

१. °रणाधार° J २. यथा C ३. तन्मात्रे M ४. तु का° M ५. °मतीन्द्रियम् om M ६. उपाधिकल्प° M ७. अन्य° J ८. उपभोगः M ९. अविकल्पिते M

लम्बनमेकं ज्ञानमिति चेत्—न, एकेन्द्रियग्राह्येष्विव नानेन्द्रियग्राह्येष्वपि प्रसङ्गात् । तेष्वपि भवत्येवेति चेत्—न, व्यासङ्गकाले ज्ञानक्रमेण विवादविषये क्रमानुमानात् । बुभुत्साविशेषेण व्यासङ्गे क्रियाक्रम इति चेत्—नैवम्, न ह्येष बुभुत्साया महिमा, यदबुभुत्सिते विषये ज्ञानसामग्र्यां सत्यामपि न[1] ज्ञानमपि तु तत्र संस्कारविशेषाधायकः प्रत्ययः स्यात् । यदि [2]त्वबुभुत्सिते सामग्रीमेव सा[3] निरुन्ध्यात् । [4]तथा च घटायोन्मीलितं चक्षुः पटं न दर्शयेत् । तस्माद् बुभुत्सापीन्द्रियान्तरादाकृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती युगपत् ज्ञानानुत्पत्तावुपयुज्यते, न तु स्वरूपत इति युक्तमुत्पश्यामः । तस्मात् सुष्ठूक्तम्—**अव्यापीति** । गन्धादिक्रियान्यत्वे सतीति **वार्त्तिकं** यथाश्रुतं द्रव्यकर्मादिज्ञानेनानैकान्तिकमतो व्याचष्टे—**चक्षुरादिभ्य** इति । ननु स्मृत्यादिषु संस्कारादयः सन्ति । ततो नैते करणान्तरकल्पनायां प्रभवन्तीत्यत आह—**अत्र चेति** । इन्द्रियजन्मानः शरीरसंयुक्तद्रव्यरूपकरणजन्मान इत्यर्थः । नन्विन्द्रियत्वेनैव मनोऽपि जनकं स्मृत्यादीनां तथात्वे साक्षात्कारित्वप्रसङ्गादिति । अथेत्यादि**वार्त्तिके** प्रतिभासमानव्यधिकरणतामुपादाय चोद्यम् । एकदेशिसमाधानं च । व्याप्तिर्व्यधिकरणयोरशक्यग्रहेति वस्तुगतिमुपादाय समाधानं स्फुटमित्याह—**सौत्रमिति** ॥ १६ ॥

॥ भाष्यम् ॥

क्रमप्राप्ता तु—

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ॥ १७ ॥**

मनोऽत्र बुद्धिरित्यभिप्रेतम्, बुध्यतेऽनेनेति[5] बुद्धिः । सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः [6]पापश्च दशविधः । तदेतत्कृतभाष्यं द्वितीयसूत्र इति ॥ १७ ॥

॥ वार्त्तिकम् ॥

**प्रवृत्तिर्वाग्बुद्धिशरीरम्भः** इति ॥ १७ ॥ शरीरेण वाचा मनसा च सेयं प्रवृत्तिः प्रत्येकं दशविधा, पुण्या पापा च । पुण्या कायेन परित्राणं परिचरणं दानमिति । वाचा सत्यं हितं प्रियं स्वाध्यायश्चेति । मनसा दया अस्पृहा श्रद्धा चेति । विपर्ययेण पापा दशविधैव । क्षणिकत्वात् प्रवृत्तेर्जन्मकारणत्वानुपपत्तिः । सेयं प्रवृत्तिः

---

१. न om M २. त्व॰ om M ३. सा om M ४. तदा M ५. अनयेति J ६. ॰श्च प्रत्येकं J

क्षणिका। [1]क्षणिका च सती जन्मकारणमिति न युक्तम्। ततश्च द्वितीयसूत्र-व्याघातः। न व्याघातः, प्रवृत्तिफले प्रवृत्त्युपचारात्। प्रवृत्तिफले धर्माधर्मौ अस्मिन् सूत्रे प्रवृत्तिरित्युच्येते। कस्मात्? तत्साधनत्वात्, अन्नं वै प्राणिनः प्राणा इति यथा ॥ १७ ॥

॥ टीका ॥

क्रमप्राप्तां विवृति भाष्यस्य प्रवृत्तिलक्षणमवतारयितुम्। मनसोऽपि प्रवृत्तिर्दर्श-नीया। न चाप्रतिपादिते मनसि शक्या दर्शयितुमिति मनसोऽनन्तरत्वं प्रवृत्तेरित्यर्थः ॥

प्रवृ—म्भः ॥१७॥ आरम्भ प्रवृत्तिः। सा च द्विविधा ज्ञानहेतुः क्रिया-हेतुश्च। तत्र या ज्ञानोत्पादद्वारेण पुण्यपापहेतुः सा वाक्प्रवृत्तिः। वागिति च ज्ञापक-हेतूपलक्षणम्। तेन मनसा इष्टदेवताद्यनुचिन्तनं चक्षुरादिभिश्च[2] साध्वसाधुदर्शनादि सूचितं भवति। क्रियाहेतुर्द्वयी कायनिमित्ता मनोनिमित्ता चेति। तदेतद् वार्त्तिककारो विभजते—शरीरेणेति। ननु प्रवृत्तेर्जन्महेतुत्वमुक्तं द्वितीयसूत्रे। न चेयं क्षणिका सती आमुष्मिकं जन्म साधयितुमर्हति। तस्माद् द्वितीयसूत्रव्याघात इति चोदयति—क्षणिकत्वादिति। परिहरति—नेति ॥१७॥

॥ परिशुद्धिः ॥

प्रेत्यभावादुत्कर्षे सति प्रवृत्तेर्मनोऽपकर्षे हेतुमाह—मनसोऽपीति ॥

प्रवृत्तेः विकल्पसमुच्चयाभ्यामव्यापकतया नेदं सामान्यलक्षणम्। न च तदन्तरेण विशेषलक्षणावकाश इत्याशङ्क्य सूत्रवाक्यं भिनत्ति—आरम्भः प्रवृत्तिः। जन्महेतुः स्थिरात्मविशेषगुणजनकः प्रयत्न आरम्भः। न चैवं दयाद्यव्याप्तिः। तत्रापि तदर्थं प्रयत्नस्य विद्यमानत्वात्। यदि त्वयतमानस्यैवेच्छामात्रं ज्ञानमात्रं द्वेषमात्रं वा प्रवृत्तिः स्यात्, प्रवर्तमानं प्रति प्रयोजकत्वममीषां निवर्तेत। ततश्चोत्तरसूत्रव्याघात इति। अत्र यद्यपि वागित्यादियथाश्रुतविशेषलक्षणावसरे[3] दयाद्यसंग्रह इति बुद्धिपदं मनोऽभि-प्रायेण व्याख्यातं भाष्यकृता, तथापि विशिष्टदेवताद्यनुचिन्तनाद्यसंग्रह इत्यत आह—सा च द्विविधेति। ज्ञातुं ज्ञापयितुं वा प्रयत्नः उभयथापि ज्ञानहेतुः, तेन वाग्गोच-रोऽपि प्रयत्नः संगृहीतः। कर्तुं कारयितुं वा प्रयत्नः उभयथापि क्रियाहेतुः। तेन स्तेयहिंसादौ अज्ञानादिगोचरोऽपि[4] प्रयत्नः संगृहीतः। एतेन यत् सिद्धं तदाह—

---

१. क्षणिका च om C २. च om C ३. णादरे M ४. राज्ञादि M

**तत्रेति** । तदर्थं प्रयत्नो ज्ञानं जनयन् ज्ञापकहेतुविषयो भवतीति ज्ञापकैकदेशेन वाचोपलक्षयता स्वसमवेतज्ञानमात्रहेतुरित्यपि भ्रमो निरस्तः । **कायनिमित्तेति** कायो निमित्तं विषयतया यस्याः सा तथोक्ता । दानस्तेयाद्यर्थं यः खलु प्रयत्नः स कायविषयो भवति । एवं मनोनिमित्तं दयाद्रोहाद्यर्थं यः खलु प्रयत्नः, स मनोविषयो भवतीति **नेयम्** । अन्यथा नास्त्येवासौ पुरुषव्यापारो यत्र कायमनसी न निमित्तमिति ॥१७॥

**प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥**

॥ भाष्यम् ॥

प्रवर्तना—प्रवृत्तिहेतुत्वम् , ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा । [1]यत्र मिथ्याज्ञानं [2]तत्र रागद्वेषाविति । प्रत्यात्मवेदनीया हीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्त इति ? कर्मलक्षणाः खलु रक्तद्विष्टमूढाः, रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा [3]लभते, तथा द्विष्टस्तथा मूढ इति । दोषा [4]रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति ॥१८॥

॥ वार्त्तिकम् ॥

**प्रवर्तनालक्षणा दोषाः ॥ १८ ॥** का पुनरियं प्रवर्तना, यया अवशः प्रवर्तते ? [5]ज्ञाता तावत् प्रवर्तते, प्रवर्तमानं रागादयः प्रवर्तयन्तीत्यतः । सेयं प्रवृत्तिहेतुत्वात् प्रवर्तनेत्युच्यते यथा कारणा हारणेति । सा पुनरियं प्रवर्तना कथं गम्यते ? प्रत्यात्मं प्रत्यक्षा । परशरीरे त्वानुमानिकी आत्मवदिति । यथा आत्माहङ्कारविषयत्वेनावतिष्ठमानः प्रत्यात्मं प्रत्यक्षो भवति । न हीयमहङ्कारबुद्धिरानुमानिकी, न चागमिकी । कथं नानुमानिकी ? लिङ्गाभावात् । कथं नौपदेशिकी ? अनुपदिष्टार्थप्रतिपत्तेः । तस्माद् रूपादिवत् प्रत्यात्ममात्मा प्रत्यक्ष इति । प्रवृत्तिनिवृत्त्यनुमेयस्तु [6]पुनः परशरीरे इति ॥१८॥

॥ टीका ॥

प्रयोज्यव्यापारपूर्वकत्वेन प्रयोजकव्यापारनिरूपणात् प्रवृत्त्यनन्तरं दोषलक्षणम् ॥ **प्रव–षाः ॥ १७ ॥** रागद्वेषौ मोहप्रभवौ पुरुषं प्रवर्तमानं प्रवर्तयतः । तयोर्धर्मः प्रवर्तना । सा च मोहैकार्थसमवायः । तावद्धि अयं रागादिवशः स्पन्दते, यावदस्य मोहो वर्तते इति । **प्रत्यात्मवेदनीया** इत्यादि **चोद्यभाष्यम्** । तस्यार्थः । लक्षणं

---

१. तत्र J २. तत्र om J ३. भजते J ४. दोषा राग° J. ५. ज्ञाता° वर्तते om C ६. पुनः om C

खल्वनुमानम् । न च प्रत्यात्मवेदनीयेषु समानासमानजातीयव्यावृत्तेषु स्फुटतरेषु तद् युक्तमिति भावः । परिहारभाष्यम्—कर्मलक्षणा इत्यादि[1] । तस्यार्थः । स्वरूपतः स्फुटत्वेऽपि न निर्वेदविषयतया स्फुटता । तथा चेह प्रयोजनम् । प्रवर्तनावत्त्वेन चैते निर्वेदविषयाः । सा च प्रवृत्त्या कार्येण लक्ष्यत इति कर्मलक्षणा इत्युक्तम् । यतः कर्मणा प्रवृत्त्या प्रवर्तकरागादियुक्ताः पुरुषा लक्ष्यन्ते, अतो रागादीनां[2] प्रवर्तनावत्वत्त्वमपि लक्षितं भवति । बहु नोक्तं भवतीति । स्वरूपमात्रं रागादीनामुक्तं भवति, न तु[2] प्रवर्तनावत्वमपि तेषामित्यर्थः । तदेतत् सर्वं वार्त्तिककारः प्रश्नपूर्वकं व्याचष्टे—का पुनरिति । अवशोऽस्वतन्त्रः । सा पुनरियं प्रवर्तना प्रवर्तकानां दोषाणां व्यापारः कथं गम्यते ? दोषा हि गम्यन्ते, न तु तेषां प्रवृत्तिहेतुत्वमित्यर्थः । उत्तरम्—प्रत्यात्ममिति । स्वपरात्मनोर्यथासंख्यं प्रत्यक्षानुमानाभ्याम् । मौहैकार्थसमवायो हि रागादीनां मानस प्रत्यक्षवेदनीय इत्यर्थः ॥१८॥

॥ परिशुद्धिः ॥

प्रेत्यभावादुत्कर्षे सति दोषाणां प्रवृत्त्यपकर्षे हेतुमाह—प्रयोज्येति । पुरुषं प्रवर्तयतः उत्करूपप्रयत्नयोगिनं कुरुत इत्यर्थः । आनन्तर्यादनयोरभिधानम्, मोहोऽपि प्रवर्तयतीति द्रष्टव्यम् । मोहैकार्थसमवायो मोहसंस्कारैकार्थसमववायः । मोहान्तरेण वा । एतदेवाह—तावद्धि अयमिति । तस्यार्थ इति । भाष्यस्य इति भाव इति चोदकस्य[3] । अत्र च समवायो यद्यपि न व्यापारः तथापि मोहादेः प्रवर्तकस्य स्वाश्रयसमवेतरागद्वेषमोहजननावान्तरव्यापारस्य प्रवर्तकत्वमित्यदूरविप्रकर्षेण[4] सम्बन्धसम्बन्धिनोरेतद् द्रष्टव्यम् । तेन फलगोचरौ मोहरागौ मोहद्वेषौ वा तत्साधनविषयौ मोहरागौ मोहद्वेषौ वा जनयन्तौ पुरुषं प्रवर्तयतः । ततः फलविषया रागद्वेषमोहाः प्रवर्तकाः, साधनविषयास्तु तदेकार्थसमवायिनः प्रवर्तना इति वस्तुगतिः । व्यापारोऽपि च कार्यानुगुण इति कृत्वा रागादयः प्रवर्तयन्ति प्रवृत्तिहेतुत्वाद् दोषा इत्युच्यन्ते ॥१८॥

पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

॥ भाष्यम् ॥

उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः । उत्पन्नस्य—सम्बद्धस्य । सम्बन्धस्तु [5] देहेन्द्रियबुद्धिवेदनाभिः । पुनरुत्पत्तिः—

१. इति C २. ॰नात्त्वम् J ३. तस्यानुमिति भाष्यस्याभाव इति देशकस्य M
४. ॰त्यर्थः दूर॰ M ५. ॰मनो [विषय–J] बुद्धि॰ C

पुनर्देहादिभिः सम्बन्धः । पुनरित्यभ्यासाभिधानम् । यत्र क्वचित्प्राणभृन्निकाये वर्त्तमानः पूर्वोपात्तान् देहादीन् जहाति तत्प्रैति । यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति । प्रेत्यभावः—मृत्वा पुनर्जन्म । सोऽयं [1]जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥१९॥

## वार्त्तिकम्

**पुनरुत्पत्तिः प्रेत्यभावः** ॥ १९ ॥ [2]पूर्वोपात्तशरीरादिपरित्यागादन्यशरीराद्युपसंक्रान्तिः[3]प्रेत्यभाव इति। पुनर्ग्रहणं संसारस्यानादित्वज्ञापनार्थम् । पुनः पुनर्जन्मरणे भवत इत्यनादित्वं संसारस्य [4]ज्ञापयति । कः पुनरयं संसारः ? [5]दुःखादीनां कार्यकारणभावः । दुःखादीनां मिथ्याज्ञानान्तानामविच्छेदेन यः कार्यकारणभावः स संसार इति । स चानादिः पूर्वापरकालानियमात्[6] । यदि पूर्वं दुःखम्, [7]तत् जन्मना विना न युक्तम् । अथ पूर्वं जन्म, [8]तदपि धर्माधर्मावन्तरेण न युक्तम् । अथ पूर्वं धर्माधर्मौ तावपि विना रागद्वेषाभ्यां न युक्तौ । अथ पूर्वं रागद्वेषौ, न मिथ्याज्ञानादृते तयोः प्रादुर्भाव इति । मिथ्याज्ञानं तर्ह्यादिः ? तदपि शरीरादीनन्तरेण न युक्तम् । सोऽयं दुःखादीनां मिथ्याज्ञानपर्यन्तानां कार्यकरणभावोऽविच्छिन्नः संसार इति [9]आजरञ्जरीभाव इति चोच्यते । सोऽयं संसारः [10]कस्य ? किमात्मनः, आहो मनस इति ? यदि क्रियामधिकृत्योच्यते, तदा मनसः, तद्धि संसरतीति । अथोपभोगमधिकृत्योच्यते, तदात्मनः । स हि सुखदुःखे उपभुङ्क्ते इति ॥१९॥

## ॥ टीका ॥

उद्देशक्रमप्राप्तं प्रेत्यभावं लक्षयति—**पुनः—वः** ॥ १९ ॥

**सत्वनिकायः** प्राणिनिकायः । नन्वात्मनो नोत्पत्तिः संभवति नित्यत्वादित्यत आह **भाष्यकारः—उत्पन्नस्य संबद्धस्येति** । तदेतद् **वार्त्तिककारो** व्याचष्टे—**पूर्वेति । पुनर्ग्रहणमिति** । पुनरित्यभ्यासमाह, तथा चानादिता सूचिता भवति । तदेतद्

---

१. °प्रबन्ध° om J २. °र्वोत्पन्न J ३. °रीरोपसंक्रान्तिः सः C ४. दर्शयति C ५. दुःखा° भावः om C ६. °कालनियमाभावात् C ७. तत् om C ८. तदा C ९. °जव-ञ्जवीभा° in other texts like निरुक्तम् १४।८; मध्यमकशास्त्रम् २५।९; बुद्धचरितम् १२।४१; युक्तिदीपिका पृः १४७; तुल° महाव्युत्पत्तिः २२४।२४; पञ्चास्तिकायसमयव्याख्या अमृतचन्द्रकृता [मुम्बई सं] पृः ६ १०. कस्य om C

वार्त्तिकजातं द्वितीयसूत्रे[1] कृतव्याख्यानम् । पूर्वाभ्यस्तसूत्रे चायमर्थ उपपादयिष्यते[2] । आजरञ्जरीभाव इत्यागमभाषया अस्यार्थस्यागमिकत्वं सूचयति । क्रियामिति उपसर्पणमपसर्पणं चेत्यर्थः ॥१९॥

॥ परिशुद्धिः ॥

शरीरादीनां दोषपर्यन्तानां परित्यागपूर्वकः प्राप्तिलक्षणो धर्मः प्रेत्यभाव इति तदनन्तरमेवास्यावसर इत्याह—उद्देशक्रमेति ॥

ननु पूर्वशरीरादिपरित्यागादिति सूत्रे नास्त्येव । न चोत्पत्तिमात्रं प्रेत्यभावः, एकस्मिन्नपि जन्मनि तथाव्यहारप्रसङ्गात् । न च पुनःशब्दस्यायमर्थः, तस्याभ्यासमात्रार्थत्वात् । अत उक्तं वार्त्तिककृता पुनरिति । तद् व्याचष्टे—पुनरित्यभ्यासमाहेति । अभ्यासं वदन्नेव नान्तरीयकतया पूर्वशरीरादिपरित्यागं प्रतिपादयतीत्यर्थः । तथापि किं वक्रोक्तेः प्रयोजनमित्यत आह—तथा चेति । ननु द्वितीयसूत्रे दुःखादीनां कार्यकारणभाव संसार इत्युक्तम्, इह तु पुनरुत्पत्तिरिति, तत् कुतो न विरोध इत्याशयवतो वार्त्तिककृत आक्षेपः, कः पुनरिति । दुःखादीनां कार्यकारणभावे सति पूर्वदेहादिपरित्यागादन्यदेहादिप्राप्तिलक्षणः प्रेत्यभावः । ततस्तेषां तथाभूतप्रवाहविच्छेदे प्रेत्यभावापरनामा संसारो विच्छिद्येत इति तुल्यप्रवृत्तिनिमित्तत्वात् स एव तत्र संसार उक्त इत्यतो न विरोध इत्याशयवतः परिहारो दुःखादीनामिति । तदेतत्स्मरणमात्रेण व्याचष्टे, तदेतद्वार्त्तिकजातमिति । सेयमुक्तरूपा पुनरुत्पत्तिर्यद्यचेतनस्य मनसः संसारः किमिति निवर्तनीयः ? अथात्मनस्तदाशक्यनिवृत्तिः, मुक्तस्यापि संसारिदेहादिपरित्यागात् तदीयापरदेहादिप्राप्तिसंभवादित्याशयवता वार्त्तिककृता शङ्कितम्—सोऽयमिति । [3]नेयं भोगेनविशेषिता पुनरुत्पत्तिः संसार इत्याशयवता परिहृतम्—यदीति । तत्रास्फुटं पदं स्फुटयति—क्रियामिति ॥१९॥

## प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

॥ भाष्यम् ॥

सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकं [4]च । तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् । तथा

---

१. न्या० सू० १. १. २ २. तदेव, ३. १. १९ ३. सेयं भोगसाधनविं° M

४. कर्मेति J

हि प्रवृत्तिदोषजनितोऽर्थं फलमेतत्सर्वं भवति । तदेतत्फलमुपात्तमुपात्तं हेयम्, त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा पर्यवसानं वास्ति, स खल्वयं [1]फलस्य हानोपादानस्रोतसोह्यते लोक इति ॥ २० ॥

॥ वार्त्तिकम् ॥

प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ शरीरादिजन्यं सर्वं फलम् , धर्माधर्मपूर्वकत्वात्[2] । मुख्यतया तु कल्पनया[3] सुखदुःखोपभोग एव, तदवसानात् । यस्माद् धर्माधर्मयोः सुखदुःखोपभोग एवावसानिकं फलम् , तस्य तु नान्तरेण शरीरादीन् संभव इति कृत्वा शरीरादीन् धर्माधर्मावारभ्य सुखदुःखोपभोगं कुरुत इति । सोऽयं फलशब्दः सुखदुःखोपभोगे मुख्यः, शरीरादिषु[4] गौण इति ॥ २० ॥

॥ टीका ॥

यद्यपि [5]शरीरेन्द्रियबुद्धिसुखदुःखोपभोगातिरिक्तं गौणमुख्यफलं भिन्नं नास्ति, ते च यथायोगं पूर्वं लक्षिताः, [6]तेनापि च रूपेण ते निर्वेदोपयोगिनः, तथापि प्रवृत्तिदोषजनितत्वेनापि रूपेणामी निर्वेदोपयोगिन इति तेन रूपेण लक्ष्यन्ते ॥

प्रवृ—लम् ॥ अत्र च प्रवृत्तिजनित इति वक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुभावः, अपि तु प्रवृत्तिकार्ये सुखदुःखे अपि प्रति इति दर्शनार्थम् । दोषसलिलावसिक्तायां खल्वात्मभूमौ धर्माधर्मबीजे सुखदुःखे जनयतः, नान्यथा । न चास्ति सम्भवो न तत्र [7]तृष्यति तच्च तस्य सुखम् , न च तद् द्वेष्टि तच्च तस्य दुःखमिति । सूत्रे अर्थग्रहणं गौणमुख्यफलावरोधार्थम् । भाष्ये च निष्ठा समाप्तिः । सा च [8]महाप्रलयेऽप्यस्तीत्यत उक्तम्—पर्यवसानमिति । अवसानमात्रमस्ति, न तु[9] परितः पुनरपि सर्गहानोपादानयोर्भावादित्यर्थः । सुबोधं वार्त्तिकम् ॥ २० ॥

॥ परिशुद्धिः ॥

शङ्कामपनयन्नेव सङ्गतिं करोति—यद्यपीति । सामान्येन ज्ञाता हि विशिष्टतया ज्ञातुं शक्यन्ते । ततः सामान्यरूपेण लक्षितानां विशिष्टलक्षणावसरः । उभयोश्चाकारयोर्निर्वेदोपयोगादुभयोपादानमित्यर्थः ॥

अत्र च सूत्रे पदद्वयमतिरिक्तम् । तत्र प्रथमोपयोगमाह—अत्र चेति । यद्यपि स्वरूपतोऽपि प्रवृत्तेः कार्यभूतौ धर्माधर्मौ प्रति दोषाणामतिशयेनोपयोगो, वक्ष्यति च, दोष-

---

१. फलस्यास्य J. २. ॰र्मप्रवर्तकत्वात् C ३. मुख्यकल्पनायां C ४. शरीरे C ५. ॰दुःखभोग॰ C ६. अपि om C ७. हृष्यति C ८. महा॰ om C ९. न पुनः C

तुषावनद्धा हि कर्मतण्डुला इत्यादि, तथापि प्रवृत्तिफले दोषाणामुपयोगो दर्शनीयः सूत्रे प्रकृतत्वात् । न च धर्माधर्मयोः फलव्यवहारः । ततो व्यापारद्वारमुपादायोपयोगमाह— **अपि त्विति** । तदेव द्वारं स्फोरयति—**दोषसलिलेति** । अतो धर्माधर्मश्रुत्या न लक्षणाश्रमः कर्तव्यः । स्वरूपतस्तु प्रवृत्तिं प्रति दोषाणां सहकारित्वं सूत्रकार एव चतुर्थे वक्ष्यतीति । तत् किं निर्दोषस्य सुखदुःखे न स्त इत्युपात्तकर्मप्रचयस्य तादवस्थ्यमदत्तफलस्यैव वा विनाश इत्यत आह—**न चास्तीति** । न ब्रूमो निर्दोषस्य उपभोग एव नास्ति । अपि तु यादृशः संसारहेतुस्तादृशो नास्ति । दोषान्तरजनको हि तादृश इत्यर्थः । अर्थपदस्योपयोमाह—**सूत्र इति** ॥ २० ॥

॥ भाष्यम् ॥

अथैतदेव—

**बाधनालक्षणं दुःखम्** ॥ २१ ॥

बाधना पीडा ताप इति । [1]तयानुबद्धमनुषक्तमविनिर्भागेन वर्तमानं दुःखयोगाद् दुःखमिति । सोऽयं [2]सर्वं दुःखेनानुबद्धमिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते निर्विण्णो विरज्यते विरक्तो विमुच्यते ॥ २१ ॥

॥ वार्त्तिकम् ॥

**बाधनालक्षणं दुःखम्** ॥ एतदेव शरीरादि बाधनानुषङ्गाद् दुःखमित्युच्यते । स्वभावतस्तु दुःखमेव दुःखम् । लक्षणशब्दोऽनुषङ्गार्थः, सर्वमिदं शरीरादि दुःखानुषक्तमिति । तत्र शरीरं दुःखस्य निमित्तम्, निमित्तार्थोऽनुषङ्गः । इन्द्रियाणि विषया बुद्धय इति साधनम्, साधनार्थोऽनुषङ्गः । सुखं दुःखेनाविनाभावि, [3]अत्राप्यविनाभावोऽनुषङ्गः । स्वरूपतस्तु [4]दुःखमिति । सर्वं स्वरूपतो दुःखमिति केचित् । न, प्रत्यक्षविरोधात् । न हि प्रत्यक्षं सुखं शक्यं प्रत्याख्यातुमिति । दुःखविकल्प इति चेत् ? अथापीदं स्याद् दुःखविकल्प एव सुखमिति, न पुनः स्वरूपतोऽस्तीति ? न, विकल्पे नञ्प्रयोगासम्भवात् । न हि विकल्पे नञ् प्रवर्तमानो दृष्टः । न हि ब्राह्मणविशेषे भवत्यब्राह्मण इति । एवं दुःखविशेषेऽदुःखमिति न स्यात् । यदि च सुखं न स्याद् धर्मवैयर्थ्यम् । किं कारणम् ? सुखसाधनं धर्म इति, सुखं च नास्तीति व्यर्थो धर्मः । दुःखप्रतिषेधः फलमस्येति न युक्तम्, धर्मस्याभावफलत्वप्रसङ्गात् अभावफलो धर्म इति [5]स्यात् । [6]प्रवृत्ति-

---

१. नुविद्धम् C २. सर्वं जन्म °विद्ध° C ३. इत्यप्य° J ४. दुःखं दुःखमिति C
५. स्यात् om C ६. प्रवृत्ति द्वैविध्यं J

द्वैतं च लोके दृष्टं तन्न स्यात् । हितमाप्स्यामीत्येकः प्रवर्तते, अनिष्टं हास्यामीत्यपरः[1], हितस्याभावात् प्रवृत्तिद्वैतं लोके न[2] स्यात् । दुःखभावनोपदेशश्च[3] न स्यात् , प्रतिपक्षाभावे शक्त्यभावात्[4] । न हि कश्चिद् दुःखे सज्यत इति [5]दुःखभावनोपदेशो न स्यात् । तस्मान्न मुख्यतः सर्वं दुःखम् , दुःखभावनोपदेशेन तु[6] दुःखमित्युच्यते इति ॥ २१ ॥

॥ टीका ॥

नानुक्ते शरीरादौ तेषां दुःखत्वं शक्यं लक्षयितुमिति तल्लक्षणेभ्यः परमिदं दुःखलक्षणम्—

**बाध—खम्** ॥२१॥ अत्र च बाधनेति बाधनाविषयां बुद्धिमुपलक्षयति[7] । तेन बाधना च तदनुषङ्गिणश्च शरीरादयो गौणमुख्यभावेन लक्षिता भवन्ति । सैव हि बाधना बुद्धिर्दुःखे मुख्या, शरीरादौ गौणीति । अलमेभिरिति प्रत्ययो निर्वेदः, वशितया योगिनः स्वयमुपलभन्ते[8] स्वयमुपनीतेष्वपि[9] विषयेषु औदासीन्यमुपेक्षाबुद्धिर्वैराग्यम् । **लक्षणशब्द** इति **वार्त्तिकम्** । अनुषङ्गश्च सम्बन्धः । स च बाधनायां विषयविषयीभावः शरीरादिषु उक्तः । केचिद् विरक्तंमन्या मन्यन्ते न [10]सुखं नामास्ति स्वरूपत इति । तान्निराचिकीर्षुराह—**स्वरूपतस्तु दुःखमिति** । **विकल्पो** विशेषः । **अभावफलत्वप्रसङ्गादिति** । यद्यप्युपात्तदुरितक्षयहेतवोऽपि धर्माः सन्ति, [11]तथाप्यधिकाधिकोत्कर्षफलानां दर्शपौर्णमासादीनां सहस्रसंवत्सरपर्यन्तानां विधायकेभ्यो वचनेभ्यो भावफल एव धर्मो गम्यते भावस्यैवोत्कर्षशालित्वादिति ॥२१॥

॥ परिशुद्धिः ॥

मुख्यं दुःखमधिकृत्य सङ्गतिरुक्ता । गौणाभिप्रायेणाह—**नानुक्त** इति ॥

ननु लक्षणशब्दो यदि स्वरूपवचनः स्यात्, गौणदुःखाव्याप्तिः स्यात् । आवृत्तौ वाक्यभेदः[12] । तत एकवाक्यत्वं रोचयन्नयमाह—**अत्र चेति** । एवं चासिद्धिः । तां परिहरति—**सैव हीति** । मुख्या स्वरूपतो, गौणी विधेयदुःखोपाधिनिबन्धना । न चैवमितरेतराश्रयप्रसङ्गः । दुःखतया तद्विषयत्वं तथात्वे च[13] दुःखत्वमिति लोकसुप्रसिद्धेन बाधनाबुद्धिविषयत्वेन हेयतायाः प्रसाधनात् । यो हि दुःखं तद्धेतुं वा शरीरादि तदनुषक्तं

---

१. °परः प्रवर्तते C २. °द्वैतं च न C ३. च om C ४. °पक्षासम्भवात् । सक्त्यभावश्च C ५. दुःख° स्यात् om C ६. च C ७. उप° om C ८. स्वय°न्ते om C . ९. अपि om C १०. दुःखं C ११. °प्यधिकोत्कर्षशालित्वादिफलानां C १२. शक्यभेदः M १३. °त्वेन M

वा सुखं जानानोऽपि सुखतृष्णापरिप्लुतमतिर्न हातुमिच्छति, तं प्रत्युच्यते शरीरादिदुःखान्तं दुःखं हेयमित्यर्थः, बाधनालक्षणत्वात्, यत्तु न हेयं न तदेवम्, यथात्मस्वरूपापवर्गाविति । वशी जिताविद्यः । यद्यपि रागाभावो वैराग्यं तथापि सुषुप्त्यादौ [1]तस्य भावे मोक्षानुपयुक्ततया आत्यन्तिको विवक्षितः । स च कारणयोग्यतानिवृत्त्या सिध्यति । ततः सैव दर्शिता । उपनतेष्वपि विषयेष्वौदासीन्यं किं तदुपेक्षाबुद्धिः प्रबलतत्त्वसाक्षात्कारसमुन्मूलितनिरवशेषमविद्यासंस्कारे हेयोपादेयपक्षव्यवच्छेदवती बुद्धिरित्यर्थः । शरीरादिषु उक्तः उक्तरूप एव ग्राह्य इत्यर्थः । नन्वभावफलत्वं धर्मस्य दुःखाभावसुखवादिनो नानिष्टम् । नापीदमदृष्टमित्यत आह—यद्यपीति । यथा च कालोत्कर्षः सुखस्यागमिकः, तथा स्वरूपोत्कर्षोऽप्यानुभविक आगमिकश्चेति[2] द्रष्टव्यम् । न चान्धकारवत् प्रतियोग्युत्कर्षादुत्कर्षोपपत्तिरिति[3] वाच्यम् । धर्मफलं हि दुःखाभावो भवन् प्रध्वंसो वक्तव्यः, प्रागभावादेरसाध्यत्वात् । तस्य च[4] कालेनानवच्छेद एव । न च तज्जातीयावधिसद्भावनियमोऽन्धकारवदेव । न हि ब्रह्मलोकोपभोगानन्तरमेवावश्यं दुःखेन भवितव्यमित्यस्ति नियामकम् । यथा च विशिष्टशालिसूपादिना कुल्माषपिण्डिकया चोदरपूरणे कृते दुःखनिवृत्तिस्तुल्या, तथेन्द्रब्राह्मपदयोरपीति न कश्चित् स्वरूपतो विशेषः स्यात्, अपि च स्वर्गार्थी यागादिकं कृत्वा कदाचिल्लब्धवृत्तेरधर्मान्नरकदुःखमनुभूय स्वर्गमनुभवति । कदाचित् तु मनुष्यदेहपातानन्तरमेव इत्यनियमः । सोऽयं न स्यात्, दुःखप्रध्वंसफलत्वाद् धर्मस्य । न चानुत्पन्नस्य प्रध्वंसः तस्माद् धर्मं चरित्वा अवश्यमकामयमानोऽपि प्रथमतस्तावन्नरकादिदुःखमनुभवेत् । ततस्तदभावमिति कृतं धर्मेण,

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्[5] ।

इति न्यायात्[6] ॥ २१ ॥

॥ भाष्यम् ॥

यत्र तु निष्ठा यत्र तु पर्यवसानं सोऽयम्—

तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तेन दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्गः । कथम् ? उपात्तस्य जन्मनो हानम्, अन्यस्य चानुपादानम् । एतामवस्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः । [7]तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति ॥

---

१. तस्याभावो M २. °श्चेत्यपि M ३. °र्षोत्पत्ति° J ४. वै M ५. वरमस्पर्शनमिति J ६. न्यायात् om M ७. तुल° बृहदारण्यक° ४।४।२५

नित्यं सुखमात्मनो [1]महत्त्ववत्, तत्तु मोक्षे अभिव्यज्यते, तेनाभिव्यक्तेनाऽत्यन्तं विमुक्तः सुखी भवतीति केचित् मन्यन्ते । तेषां प्रमाणाभावादनुपपत्तिः । न प्रत्यक्षं नानुमानं नागमो वा विद्यते, नित्यं सुखमात्मनो महत्त्ववत्, तत्तु मोक्षेऽभिव्यज्यत इति ॥

नित्यस्याभिव्यक्तिः संवेदनम्, तस्य हेतुवचनम् । [2]नित्यस्य सुखस्याभिव्यक्तिः संवेदनम् [3]ज्ञानमिति, तस्य हेतुर्वाच्यो यतस्तदुत्पद्यत इति ॥

सुखवन्नित्यमिति चेत् ? संसारस्थस्य मुक्तेनाविशेषः । यथा मुक्तः सुखेन तत्संवेदनेन च [4]सन्नित्येनोपपन्नस्तथा संसारस्थोऽपीत्यविशेषः[5] प्रसज्यते[6], उभयस्य नित्यत्वात् ॥

अभ्युनुज्ञाने च धर्माधर्मफलेन साहचर्यं [7]यौगपद्यं गृह्येत । यदिदम् उत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं च संवेद्यते पर्यायेण, तस्य च नित्यसंवेदनस्य[8] च सहभावो यौगपद्यं गृह्येत, न सुखाभावो नानभिव्यक्तिरस्ति, उभयस्य नित्यत्वात् ॥

अनित्यत्वे हेतुवचनम् । अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम् ? यतस्तदुत्पद्यते स हेतुर्वाच्यः । आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम् । [9]तस्य सहकारिनिमित्तान्तरवचनम् । आत्ममनःसंयोगो हेतुरिति चेत् ? एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति ॥

धर्मस्य कारणवचनम् । यदि धर्मो निमित्तान्तरम् ? तस्य हेतुर्वाच्यो यत उत्पद्यत इति । योगसमाधिजस्य कार्यावसायविरोधात्प्रक्षये[9] संवेदनेनिवृत्तिः । यदि योगसमाधिजो धर्मो हेतुः ? तस्य कार्यावसायविपोधात्प्रक्षये[10] संवेदनम् अमत्यन्तं निवर्तेत ॥

असंवेदने चाविद्यमानेनाविशेषः । यदि धर्मक्षयात्संवेदनोपरमो[11] नित्यं सुखं न संवेद्यत इति किं विद्यमानं न संवेद्यते, अथाविद्यमानमिति नानुमानं विशिष्टेऽस्तीति ॥

---

१. तत् and अभि om C २. सुखस्य om CT ३. उपलब्धिः ज्ञानम् J ४. सन्नित्येन om J ५. इत्यविशेषः om CT ६. °ज्यत इति CT यौगपद्यं om J ७. °सुखसंवे° J ८. तस्य° वचनम् om CT ९. प्रलये Cvar १०. °रमे J

अप्रक्षयश्च धर्मस्य निरनुमानमुत्पत्तिधर्मकस्यानित्यत्वात्[१]। योगसमाधिजो धर्मो न क्षीयत इति नास्त्यनुमानम्। उत्पत्तिधर्मकमनित्यमिति विपर्ययस्य त्वनुमानम्[२]। यस्य तु संवेदनोपरमो नास्ति तेन संवेदनहेतुर्नित्य इत्यनुज्ञेयम्[३]॥

नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम्[४]। यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च, संवेदनस्य तूपरमो नास्ति, कारणस्य नित्यत्वात्, तथा संसारस्थस्यापीति। एवं च[५] सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति॥

शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेत्? न, शरीरादीनामुपभोगार्थत्वात्, विपर्ययस्य चाननुमानात्। स्यान्मतम्, संसारावस्थस्य शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकः, तेनाविशेषो नास्तीति। एतच्चायुक्तम्, शरीरादय उपभोगार्थास्ते [६]भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम्; न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति॥

इष्टाधिगमार्था प्रवृत्तिरिति चेत्? न, अनिष्टोपरमार्थत्वात्। इदम् अनुमानम्, इष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणाम्, नोभयमनर्थकमिति। एतच्चायुक्तम्, अनिष्टोपरमार्थो[७] मोक्षोपदेशः, प्रवृत्तिश्च मुमूक्षूणामिति। नेष्टमनिष्टेनाननुबद्धं[८] सम्भवतीति [९]अनिष्टानुबन्धात् इष्टमप्यनिष्टं सम्पद्यते, अनिष्टहानाय च घटमान इष्टमपि जहाति, विवेकहानस्याशक्यत्वादिति॥

दृष्टातिक्रमश्च देहादिषु तुल्यः। यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते[१०], एवं देहेन्द्रिय बुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः, साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति[११]॥

उपपत्तिविरुद्धमिति चेत्? समानम्। देहादीनां नित्यत्वं प्रमाण-

---

१. °धर्मकत्वात् CT २. °र्ययेऽस्त्यनु J ३. °मेयम् CT ४. °क्तं प्राक् J ५. च om J Cvar ६. उपभो° J ७. °र्थो हि J ८. °विद्धं CT ९. अनिष्टानुबन्धाद् om CT १०. अतिक्रम्य नित्यं मुक्तस्य सुखं कल्प्यते J ११. कैवल्यं कल्पितं भविष्यतीति J

विरुद्धं कल्पयितुमशक्यमिति ? समानम्[१]। सुखस्यापि तर्हि[२] नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति ॥

आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेऽपि सत्यविरोधः। यद्यपि कश्चिदागमः स्यात् मुक्तस्यात्यन्तिकं सुखमिति ? सुखशब्द आत्यन्तिके दुःखाभावे[३] प्रयुक्त इत्येवमुपपद्यते, दृष्टो हि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोक इति ॥

नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात्। यद्ययं[४] मोक्षे नित्यं सुखमभिव्यज्यत इति नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेत्, नाधिगन्तुमर्हतीति। बन्धनसमाज्ञातो हि रागः। न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति ॥

[५]प्रहीणनित्यसुखरागस्याप्रतिकूलत्वम्। अथास्य नित्यसुखरागः प्रहीयते, तस्मिन्प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति ? यद्येवम्, मुक्तस्य नित्यं सुखं भवति, अथापि न भवति, नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्प्यत इति ॥२२॥

॥ वार्त्तिकम् ॥

**तदत्यन्तविमोक्षोऽपवर्गः** ॥ तेन शरीरादिना [६]दुःखान्तेनात्यन्तिको वियोग इति। आत्यन्तिकी सुखाभिव्यक्तिरिति एके। एके त्वात्यन्तिकीं सुखाभिव्यक्तिमपवर्गं[७] ब्रुवते। तन्न, प्रमाणासम्भवात्। मुक्तस्यात्मनो नित्यं सुखमिति न प्रमाणमस्ति। न नास्ति, नियामकत्वादिति चेत्, अनेककारणनिष्पन्नसुखस्यात्मनि समवायो नियामकम् अनन्तरेण न युक्तः। तस्मादात्मनि नित्यं सुखमस्ति, येनेदं सुखं नियम्यमानमात्मानमाश्रयते इति चेत्[८]—न, सर्वोत्पत्तिमत्प्रसङ्गात् सुखवदात्मनि दुःखमपि नित्यं कल्पयितव्यम्, इच्छादयश्चेति। अनैकान्तिकता वा। अभिव्यक्त्यर्थानभिधानाच्च। नित्यं सुखमभिव्यज्यत इति कोऽभिव्यक्त्यर्थः ? ज्ञानमिति चेत्, नित्यमनित्यं वेति [९]कल्पानुपपत्तिः। अनित्यमिति चेत् कारणं [१०]वक्तव्यम्। आत्ममनःसंयोगः कारणमिति चेत् ? तस्यापेक्षाकारणं वक्तव्यम्। यदि मन्यसे आत्ममनःसंयोगो ज्ञानस्य कारणमिति, तस्य तर्हि अपेक्षा-

१. °नमेतत् J २. तर्हि om CT ३. स सुख° संसारदुःखा° J ४. मोक्षः C
५. प्रहाणे Cvar ६. दुःखेन J ७. मुक्ति C ८. चेत् om J ९. कल्पना° C
१०. आत्ममनःसंयोगो वा कारणं तस्या° C

कारणं [१]वक्तव्यम् । न हि द्रव्यगुणकर्मस्वारब्धव्येषु संयोगो निरपेक्षं कारणमिति । आत्ममनःसंयोगः सुखापेक्षो [२]ज्ञानकारणमिति चेत्—न, कैवल्यविरोधात् । अथ मन्यसे आत्ममनःसंयोगो नित्यमात्मनि व्यवस्थितं सुखमपेक्षमाणो ज्ञानकारणं भवतीति, तन्न युक्तम् , कैवल्यविरोधात् । यथायमात्ममनःसंयोगो विषयमात्रमपेक्षमाणः अन्यनिमित्तनिरपेक्षः सुखज्ञानं करोति, एवं रूपादीनपि विषयानपेक्षमाणः तद्विषयाणि ज्ञानानि कुर्यात् । ततश्च कैवल्यं निवर्तते, सर्वानर्थानयमात्मा उपलभते इति । नित्योपलब्धिप्रसङ्गाच्चेति । योगजधर्मानुगृहीतो नित्ये सुखे ज्ञानं करिष्यतीति ? [३]तन्न युक्तम् , तत्क्षये तदभावात् । यदा योगजो धर्मः क्षीणो भवति, तदास्य किमनुग्राहकमिति वाच्यम् । योगजो धर्मो न क्षीयते इति चेत् ? न युक्तम् , उत्पत्तिधर्मकस्य सर्वस्यानित्यत्वात् , सर्वमुत्पत्तिधर्मकमनित्यं दृष्टमिति । नित्योऽसौ योगसमाधिजो धर्म इति न युक्तम्[४] । योगसमाधिजश्च नित्यश्चेति व्याहतम् । नित्यं ज्ञानमिति चेत्—न, सुखवत् प्रमाणाभावात्[५], मुक्तसंसारावस्थयोरविशेषप्रसङ्गाच्च । सुखदुःखसंवेदनपर्यायश्च न स्यात्, नित्यमयं सुखमुपलभते । ततश्च मोक्षार्थः प्रयासो व्यर्थः स्यात् । न चायं सुखं जिहासति, विवेकहानस्याशक्यत्वात्, दुःखं [६]हातुकामः सुखमपि जहाति । न चायं कदाचिद् दुःखमुपलभते इति कस्य हानार्थः प्रवर्तेत ? शरीरादिप्रतिबन्धादप्रसङ्ग इति चेत् ? नित्यं सुखमुपलभत इति नास्ति प्रसङ्गः, यस्माच्छरीरादयो नित्यस्य सुखस्योपलब्धेश्च प्रतिबन्धका भवन्तीति । न, शरीरादीनामुपभोगार्थत्वात् [७]नित्यशरीरादिप्रसङ्गाच्च । यथा मुक्तस्य नित्यं सुखं कल्प्यते, एवं शरीरादयोऽपि नित्याः कल्पयितव्याः । एवमस्य कैवल्यं साधीयो भवति । शरीरादीनां नित्यत्वं दृष्टविरुद्धमशक्यं कल्पयितुमिति चेत्—न, सुखस्यापि तर्ह्यस्मादेव दृष्टविरोधात्[८] नित्यत्वमशक्यं कल्पयितुमिति, प्रमाणाभावादित्युक्तम्, तच्च नास्ति । कस्मात् ? इष्टार्थाधिगमार्थत्वात् । इहायं लोकः प्रवर्तमान इष्टाधिगमार्थं प्रवर्तते । प्रवर्तन्ते च मोक्षमाणाः । तेषामपीष्टाधिगमार्थया प्रवृत्त्या भवितव्यम्, सेयं प्रवृत्तिर्नित्यसुखेऽर्थवती नान्यथेति । न, प्रवृत्तिद्वैतदर्शनात् । द्वे प्रवृत्ती लोके दृष्टे, इष्टाधिगमार्थानिष्टादिहानार्था च । तत्रेदं पारिव्राज्यं किमिष्टाधिगमार्थमाहोऽनिष्टहानार्थमिति सन्दिह्यते । आगमादिति चेत्, आगमादेतद् गम्यते मुक्तस्यात्मनो नित्यं सुखमिति । मुक्तः सुखी भवतीति श्रूयते । आगमोऽप्येवं विचारणीयः । किमयं नित्येन सुखेन योगमाह, उत दुःखेनात्यन्तिकं वियोगमाहेति । दृष्टश्च दुःखाभावेऽपि सुखशब्दप्रयोगो

---

१. वचनीयम् J २. ज्ञान° om ३. चेत् for तत् C ४. इति चेत्, C ५. °भाव उक्तः J ६. बिहासमानः J °बिहासति C ७. नित्यं शरी° C ८. °स्मदादेर्दृष्टविरुद्धं C

बहुधा लोक इति । एवं च ज्वरादिवियोगे लौकिका अप्याचक्षाणका भवन्ति सुखिनः संवृत्ताः स्म इति । यदि पुनरयं सञ्चक्षाणको मोक्षे नित्यं सुखमिति सुखरागेण प्रवर्तते, न मुच्येत । कस्मात् ? रागस्य बन्धनसमाज्ञानात् । बन्धनसमाज्ञातो हि राग इति । यद्यपि द्वेषात् प्रवर्तते दुःखं हास्यामीति, तथापि न मुच्येत, द्वेषस्य बन्धनसमाज्ञानादिति, रागद्वेषौ हि बन्धनमिति । न, अप्रतिकूलत्वात् । अप्रतिकूलं दुःखहानं भवति । न पुनरयं दुःखं द्वेष्टि । अद्विषंश्चायं प्रवर्तमानोऽप्रतिकूलं दुःखहानमधिगच्छतीति ॥

चित्तं विमुच्यत इति अन्ये रागादिनां तत्र सामर्थ्यात्, यस्माद् रागादिवशं[1] चित्तमालम्बनानन्तरगत्यन्तरेषु उत्पद्यते । न पुनरात्मनि रागादीनां सामर्थ्यमस्ति । न, अयत्नतस्तत्सिद्धेः । ये चित्तस्यानुत्पादनं निरोधं चापवर्गमिच्छन्ति, तेषामयत्नसिद्धो[2] मोक्षः । किं कारणम् ? जन्मनो विनाशार्थत्वात् । जातं विनश्यतीत्ययत्नेन सिद्धमेतत्[3] । सन्ततेरनुत्पादोऽपवर्ग इति चेत्—न, तस्याशक्यत्वात् । सन्ततेरनुत्पादो न शक्यः कर्तुम् । कार्यकारणभावप्रवाहस्य सन्ततिभावात् । अनागतानुत्पादः क्रियत इति चेत् ? अनागतानुत्पादस्य विद्यमानत्वात् किं क्रियत इति सर्वथा न चित्तस्यापवर्गः सिध्यतीति ॥

कस्य तर्ह्यपवर्गः ? योऽपवृज्यते । कोऽपवृज्यते ? आत्मा । अथ कापवृक्तिः ? दुःखादिभिर्वियोग इति ॥२२॥

॥ टीका ॥

क्रमप्राप्तमपवर्गलक्षणमवतारयति **भाष्यकारः—यत्र त्विति** ॥

**तद—र्गः** ॥२२॥ तदित्यनन्तरं गौणमुख्यभेदभिन्नं दुःखं परामृशतीत्याह **भाष्यकारः—तेन दुःखेनेति** । मुख्यमेव दुःखमिति भ्रमो मा भूदत[4] आह—**जन्मनेति** । अनेन जायमाना दुःखशब्देन सर्वे शरीरादय उच्यन्ते इत्युक्तं भवति । **अभयमिति** पुनः संसारभयाभावमाह,

अभयं वै[5] ब्रह्म

इत्यसकृदभयश्रुतेः । ये तु ब्रह्मैव नामरूपप्रपञ्चात्मना परिणमत इत्याहुः, तान् प्रत्याह—**अजरमिति** । सर्वात्मना वा परिणाम, एकदेशेन वा ? पूर्वस्मिन् कल्पे सर्वात्मना ब्रह्मणोऽन्यथात्वाद् विनाशप्रसङ्गः । एकदेशपरिणामे तु सावयवत्वात् घटादिवदनित्यत्वप्रसङ्गः इति सूक्तम्—**अजरमिति** । **वैनाशिकाः** प्राहुः

---

१. °न्तरं गत्य° C २. °त्नतः सिद्धो C ३. विनष्टमित्ययत्नसिद्धमेतदिति C
४. उक्तम् J ५. च C

प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतसः ।

इति । तान् प्रत्याह—**अमृत्युपदमिति** । एतदुपपादयिष्यत्यग्रे[१] **वार्त्तिककारः** । तदेतद् **भाष्यं वार्त्तिककारो** व्याचष्टे—**तेनेति** । **आत्यन्तिक**ग्रहणं महाप्रलयावस्थानिवृत्त्यर्थम् ॥

**अत्र भाष्यं नित्यं सुखमात्मन** इत्यादि । अस्यार्थः—

विज्ञानमानन्दं ब्रह्म

इति सामानाधिकरण्यश्रुतेः ब्रह्मस्वभावं सुखम्, तया च ब्रह्मणो नित्यत्वात् तदपि नित्यमित्यर्थः । **आत्मन** इति च षष्ठी राहोः शिर इतिवत् मन्तव्या । तदेतद् भाष्यं व्याचष्टे—**आत्यन्तिकीति** । **तेषामित्यादि** भाष्यं व्याचष्टे—**तन्नेति** । अत्रानुमानमुपन्यस्यातिप्रसङ्गेन निराकरोति—**न**[२], **नेति** । अथात्मनि [३]दुःखादिकं नित्यं नेच्छति, तत्राह—**अनैकान्तिकता वा** । **नित्यस्याभिव्यक्ति**रित्यादिभाष्यार्थमाह[४]—**नित्यमिति** । अयमभिसन्धिः । सुखं तावदात्मनो गुणो नात्मा । उपपादितो हि गुणगुणिनोर्भेदः[५] । एवं विज्ञानमप्यात्मगुणः, न ह्युदयव्ययवतीभ्यो विज्ञानव्यक्तिभ्योऽनुदयव्ययधर्मा भवितुमर्हत्यभिन्न आत्मा । न चात्मैव विज्ञानस्वभावः तत्तद्विषयोपधानेनोदयव्ययधर्मेव भवतीति[६] सांप्रतम् । घटमहं जानामीति मानस्यां बुद्धौ त्रयाणामपि ज्ञानज्ञेयज्ञातॄणां भेदेनानुव्यवसायात् । विषयतज्ज्ञानभेदेऽपि च ज्ञातुरेकस्य[७] प्रतिसन्धीयमानत्वात् । न चैतदसति बाधके भेदज्ञानं भ्रान्तमिति युक्तम् । न चागन्तुकज्ञानातिरिक्तं स्वाभाविकमात्मनि चैतन्यमनुभूयते । न चात्मैव तत्स्वभावः, सुषुप्तत्वानुपपत्तेः । अचेतयन्नेव हि सुषुप्त इत्युच्यते । न च तदा विषयशून्यं स्वनिष्ठमात्मचैतन्यमिति युक्तम्[८] । तदवस्थाभेदस्य सुषुप्तोत्थितेन स्वप्नान्तिकस्येव स्मरणप्रसङ्गात् । सुखं च न ज्ञानजातीयमित्युपपादितं प्रत्यक्षसूत्रे । न च किञ्चिदपि स्वप्रकाशमस्तीति चतुर्थे विज्ञानवादं निराकुर्वन् वक्ष्यति[९] ॥

तदेवं व्यवस्थिते दूषणं भाष्यवार्त्तिकोक्तं द्रष्टव्यं **यथायमात्ममनःसंयोग** इति । संसारावस्थायां तावदयमात्ममनःसंयोगो धर्मं निमित्तमपेक्षमाणः सुखज्ञानम् अकार्षीत् । यदि तु मुक्त्यवस्थायां तदनपेक्ष एव सुखज्ञानं करोति, हन्त रूपादिज्ञानेषु

१. ०ष्यते C २. न om C ३. दुःखमेकं C ४. ०ष्यं व्याचष्टे C ५. टी १।१।१४ ६. भविष्यतीति C ७. ०कत्तेन C ८. ०मित्युक्तम् C ९. ०र्थे निवेदयिष्यते; द्रः वा ४.२.३४

इन्द्रियान्तराण्यपि नापेक्षेतेति भावः। शङ्कते—**योगजेति**। न वयं विषयमात्रापेक्षां ब्रूमो येन रूपादिष्वपि ज्ञानमुत्पादयेत्, अपि तु संसारावस्थायां यत् सुखज्ञानायानेनापेक्षितं तदपेक्षते। धर्मश्च तदा तेनापेक्षित इति मुक्त्यवस्थायामपि धर्ममेवापेक्षते। एतावान् विशेषो यदयं योगज इति। तथा च न रूपादिविज्ञान प्रसङ्ग इति। शङ्कते—**नित्योऽसाविति**। निराकरोति—**योगेति**। ननु त्वन्मते यथा सुखसंवेदनं जिहासितम्, एवमस्मन्मतेऽपि सुखसंवेदनहानाय घटिष्यत इत्यत आह—**न चायं सुखमिति**। अस्मन्मते हि दुःखहानायैव तदनुषक्तं सुखं जिहासितम्। नित्यं तु सुखं सर्वदुःखविनिर्मुक्तं सन्न दुःखहानाय जिहासितं संभवति इत्यर्थः। न केवलमानुकूल्यात् प्रतिबन्धकत्वं नास्ति शरीरादीनाम्, प्रत्युत मुक्त्यवस्थायामपि कल्पनीयता इत्याह—[1]**नित्यं** [2]**शरीरादि** इति। सिद्धान्तिनो वचनमनुभाष्य देशयति—**प्रमाणाभावादित्युक्तं तच्च नेति**। शास्त्रेण हि मोक्षसाधने लोकः प्रवर्तनीयः। अप्रवर्तमानश्च प्रवर्तनीयः। इष्टार्थी च प्रवर्तते तत्साधने। सुखं चेष्टम्। सुखात्मको मोक्ष इत्यर्थः। सेयं लोकप्रवृत्तिरनैकान्तिकत्वेन संशयहेतुरिति परिहरति—**न, प्रवृत्तीति**॥

स्यादेतत्। मुख्यासंभवे गौणमश्रीयते। सुखशब्दश्च सुखे मुख्यः, भाक्तस्तु दुःखनिवृत्तौ। तस्मात् नित्यानन्द एव मोक्ष इत्यत आह—**यदि पुनरिति**। संचक्षाणकः संख्यानप्रवृत्तो योगी। धर्माधर्मौ तावदात्मनि पारमार्थिकौ, न त्वविद्याकल्पितौ। तौ च वीतरागेणासक्तेन सता शक्यौ भोगेन क्षेतुम्, [3]न तु शक्तेन। स हि सक्तस्तेषु तेषु विषयेषु उपात्तमुपात्तं भुञ्जानः त्यक्तं त्यक्तं चोपाददानः संसारात् न मुच्येत। तस्मादयं रागो बन्धनमिति समाज्ञातः। तन्निबन्धना च प्रवृत्तिः परिहर्तव्या। अन्यथा तु नित्यसुखावधारणलालितेयं[4] तृष्णापिशाची लब्धप्रसरा विषयसुखेष्वपि प्रत्यासन्नेषु पुरुषं प्रवर्तयन्ती मोक्षमस्य सुदूरं प्रतिक्षिपेदिति मनागपि प्रसरोऽस्या न दातव्यः। तस्मात् नित्यानन्दप्रतिपादकश्रुतिरात्यन्तिके दुःखवियोगे भाक्तीति युक्तमिति भावः। चोदयति—**यद्यपीति**। रागवद् द्वेषस्यापि प्रसरो न दातव्यः। तस्य च त्वया प्रसरो दत्त इति तुल्यो दोष इति। परिहरति—**न, अप्रतिकूलत्वात्**। यथा नित्यसुखोपादानं मोक्षम् अप्रतिकूलया सक्त्या [5]सप्रतिकूलं नैवमात्यन्तिकदुःखहानं [6]दुःखद्वेषानुषक्तम्। द्वेषः क्रोधो मन्युरित्यनर्थान्तरम्। ज्वलनात्मको हि स भवति। नैवं वैराग्यम्। अलं प्रत्ययो हि स

---

१. नित्य॰ om J, नित्यं C   २. शरीरादिति C   ३. न तु शक्तेन om K; तु om C   ४. ॰रणजनितेयं C   ५. प्रतिकूलं C   ६. दुःख॰ om C

इत्यप्रतिकूलं दुःखहानमित्यर्थः । तदनेन **नित्यं सुखमात्मनो मोक्षेऽभिव्यज्यते** इत्यादि **तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवतीत्येवमन्तं** भाष्यजातं व्याख्यातं वेदितव्यम्[1] । **यद्येवमित्यादे**र्भाष्यस्यायमर्थः । **एवं वैराग्येण** मोक्षमाणस्य प्रवृत्तौ सत्याम्, [2]मुक्तस्य **यदि नित्यं सुखं भवति** कामं भवतु मा वा भूत्, **उभयोरपि पक्षयोः** वीतरागस्य प्रवृत्तौ **न मोक्षाधिगमो** विकल्प्यते, न सन्दिग्धो भवतीत्यर्थः ॥

वैनाशिकानां मोक्षमुपन्यस्यति—**चित्तं विमुच्यत** इति । संसारी हि मुच्यते । रागादयस्तद्धेतवः । न चात्मनि नित्ये रागादयः संसारं कर्तुमुत्सहन्ते, नित्यस्याविकार्यत्वेन तादवस्थ्यादुपनेयापनेयाभावात् । यथाहुः,

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः ॥

इति । चित्तं तु कार्यं रागादिवशात् संसारी, तद्वियोगाच्च मुच्यते इति युक्तमित्यर्थः । देवमनुष्यादिजातिः **गतिः** तत्रोत्पत्तिः । तदेतद् दूषयति—**न, अयत्नत** इति । क्षणिकत्वात् चित्तस्य, जन्मविनाशप्रयोजनमेव । जन्मान्तरं हि[3] विनाश इति क्षणस्याभेद्यत्वेनोपनेयापनेयाभावात् । स्वरसभङ्गित्वाच्च वैयर्थ्यमित्यर्थः । शङ्कते—**सन्ततेरिति** । अनादिः खलु कार्यकारणप्रवाहरूपा बुद्धीनां सन्ततिः । सा चात्मसाक्षात्कारोन्मूलितसवासनक्लेशजालस्य निवर्तते । निवृत्तिश्चेयमेव तस्या यत् तत्सन्तानवर्तिनश्चेतसोऽनागतस्यानुत्पाद इति भावः । निराकरोति—**न, तस्याशक्यत्वात्** । उत्पन्नस्यानुत्पादो न शक्यः, नापि सन्ताननिवृत्तिः शक्या कर्तुम्, अन्त्यक्षणानुपपत्तेः । स हि अन्त्यः क्षणः किञ्चिदारभते न वा ? आरम्भे नान्त्य इति न कार्यकारणप्रवाहनिवृत्तिः, प्रवाहश्च सन्तान इति न सन्ताननिवृत्तिः । अनारम्भे तस्यासामर्थ्येनासत्त्वम् । ततः[4] पूर्वे सर्वेऽपि[5] क्षणा असन्तः स्युरिति कस्योच्छेद इति भावः । शङ्कते—**अनागतानुत्पाद** इति । तथा सत्यनागतानुत्पादलक्षणार्थक्रियाकारित्वादन्त्यक्षणोपपत्तिरिति भावः । निराकरोति—**अनागतेति** । प्रागभावस्यानादित्वादित्यर्थः[6] । पृच्छति—**तर्हि कस्येति** । नित्यस्यानुपकार्यत्वादुपनेयापनेयाभाव इति भावः । उत्तरम्—**य इति** । यथा चाक्षणिकस्योपकार्यत्वं[7] तथा [8]क्षणभङ्गभङ्गे उपपादयिष्यत इति सिद्धम् ॥२२॥

---

१. बौद्ध° C २. प्रसक्तस्य C ३. °न्तरमेव C ४. °नासत्त्वात्ततः C ५. सर्व एव C ६. °दिति भावः C ७. °स्यैवोप° C ८. टी ३।२।१०–७

॥ परिशुद्धिः ॥

शरीरादिषु प्रतियोगिषु लक्षितेषु तन्निवृत्तिरूपस्यापवर्गस्य लक्षणावसर इत्याह-—**क्रमेति** ॥

यद्यपि मनो न जायते, तथापि कर्मोपग्रहमन्तरेण तस्याकिञ्चित्करत्वात् स एव तस्य जन्मेति जायमानाः सर्व इत्युक्तम्। अत्र च[1] प्रतियोगिनां शरीरादीनामाध्यात्मिकत्वात् तत्प्रध्वंसोऽप्याध्यात्मिक एव। तद्विशिष्टस्य जीवन्मुक्त्युत्तरकाले दुःखस्यात्यन्ताभावो मोक्ष इति नाकाशादिगतेन दुःखस्यात्यन्ताभावेन व्यभिचारः। परिणामो हि पूर्वधर्मिनिवृत्तौ धर्म्यन्तरोत्पादो वा स्यात्, **वैनाशिका**नामिव। पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पादो वा स्यात् **सांख्या**नामिव। तदेतत् पक्षद्वयं विकल्पयति—**सर्वात्मना वेति**। **पूर्वस्मिन्निति**। आस्तां तावत्कौटस्थ्यं परिणामिनित्यतापि न स्यादित्यर्थः। **एकदेशेति**। यदि धर्मधर्मिणोरेकान्तेनाभेदो यदि वा भेदाभेदः, उभयथापि न कूटस्थनित्यता। एकान्तभेदेन तु कथम्

ब्रह्मैवेदं सर्वमिति

श्रुतिवचनमाद्रियत इत्यर्थः। **सावयवत्वादिति** सांशत्वात्। स्वात्मीभूतोपजनापायधर्मवत्त्वादिति यावत्। **घटादिवदिति**। यथा घटादयो ब्रह्मधर्मा अनित्याः, तथा तदभिन्नस्वभावं ब्रह्माप्यनित्यं स्यादित्यर्थः। न च वाच्यं परिणामिनित्यमेव ब्रह्मास्तु। अनेकान्तवादस्य निराकृतत्वात्। सत्कार्यवादस्य निराकरिष्यमाणत्वात्। न चैकान्तभिन्न एवायं ब्रह्मधर्मप्रपञ्चोऽस्तु इति वाच्यम्, व्यक्ताद् व्यक्तस्य निष्पत्तिः प्रत्यक्षप्रामाण्यादित्युपादानादिचिन्तायाः करिष्यमाणत्वात्, परमाणूनां नित्यताव्यवस्थापनाच्च। तत्कार्यतामात्रत्वे तु सिद्धसाधनादिति। नित्यमित्यादि **भाष्यं** न यथाश्रुतं परमतोत्थापनमित्यत आह—**अस्यार्थ इति**। **इत्यर्थ इति**। **परेषामभिमत इति**। आत्मा नित्यसुखवान् कारणान्तराणि परित्यज्य तज्जातीयेन कार्येणाश्रीयमाणत्वात्। यद्यज्जातीयेन कार्येण कारणान्तराणि परित्यज्याश्रीयते तत्तज्जातीयनित्यगुणवत्, यथा वर्णात्मकेन शब्देनाश्रीयमाणमाकाशं नित्यशब्दवदिति **मीमांसानये**। सत्कार्यनये तु, आत्मा नित्यसुखवान्। तेनाश्रीयमाणत्वात्[2]। यद्येनाश्रीयते तत्तेन नित्येन तद्वत्, यथा पटेन तन्तव इत्युत्थाप्य दूषयतीत्याह—**अत्र चेति**। अनैकान्तिकतां द्रढयितुमतिप्रसङ्गोऽवतारितः। ननु सुखतत्सं-

---

१. अत एव M　२. °माणमाकाशं·······श्रीयमाणः om M

वेदनेन ब्रह्मणो भिन्ने ब्रह्म चानुदितानस्तमितरूपं शुद्धबुद्धस्वभावं स्वत एव सिद्धम् । कस्तत्र प्रमाणप्रश्नावकाशः ? सर्वेषामेव प्रमाणानामनुभव एव सीमा । कुतश्चाभिव्यक्त्यादिचिन्ता ? मुक्तसंसारावस्थयोरविशेषश्च प्रसञ्जितोऽपि नानिष्ट इत्यत आह—**अयमभिसन्धिरिति** । विषयसुखसंवेदने एवात्मा तदतिरिक्तो वा ? आद्यं दूषयति—**सुखमिति** । उक्तोपपत्तिं स्मारयित्वा अपरामाह—**न हीति** । ननु सुखसंवेदनयोरुदयव्ययौ न तात्त्विकौ । न च कल्पितो विरुद्धधर्माध्यासो भेदहेतुः स्फटिकस्यापि जवातापिच्छादिसन्निधानापादितारुणिमनीलिमादिना भेदप्रसङ्गादित्याशङ्क्य परिहरति—**न चात्मैवेति** । न ह्यस्ति संभवः स्फटिकः स्वरूपेण पूर्वापरकालैकतया स्फुरन्नेव नीलादिव्यावृत्तात्मा नीलाद्यात्मनारोप्यत इति भावः ॥

स्यादेतत्, स्वसंवेदनमात्मस्वभावमप्यनाद्यविद्यावशादनात्मतया स्फुरत् तत्तद्विषयोपरागेण भिन्नमिव स्फुरत्यात्मन्येकतया प्रतिसन्धीयमानेऽपि [1]यथा गगनसवितुरेकत्वेनानुभूयमानस्यापि प्रतिबिम्बमम्बुनि तरङ्गभेदादित्यत[2] आह—**न चैतदसतीति** । अयमर्थः, न तावत् स एव तस्मिन्नेव तदानीमेव भ्रान्तोऽभ्रान्तश्चेति संभवति । तस्मादविद्याया [3]दुर्घटत्वं नामालङ्कार एवेति पादप्रसारिकया प्रत्यवस्थेयम् । सेयं भेदज्ञाने बाधकमालम्ब्य स्यात् । तच्च नास्तीति वक्ष्यामः । प्रतिबिम्बे तु सुव्यक्त एव भ्रम इति । द्वितीयं दूषयति—**न चागन्तुकेति** । नन्वात्मनि नित्यं चैतन्यमिति क एवमाह ? किं त्वात्मैव नित्यचैतन्यस्वभाव इत्यत आह—**न चात्मैवेति** । न च सुखेनाहमस्वाप्समित्यस्त्येव स्मरणमिति वाच्यम् । घटमहं जानामीति तदज्ञासिषमितिवत् सुखेनाहं स्वपिमीति तदज्ञासिषमित्येवमपि स्मरणप्रसङ्गात्, तर्हि किमिदं सुखमहमस्वाप्समिति दुःखाभावानुमानमात्रं सुप्तोऽहं न किञ्चिदज्ञासिषमिति ज्ञानाभावानुमानवत् । अथ केन लिङ्गेन स्मरणार्हास्मरणेन । को धर्मी ? आत्मा अनुभूयमानः स्मर्यमाणो वा प्रत्यभिज्ञायमानः । तथापि सुषुप्तावस्था या नानुभूता अत एव न स्मृता, कथमिव तच्छब्देन परामृश्यत इति चेत्—न, पूर्वापरावस्थयोरेकत्वप्रत्यभिज्ञानेन मध्यावस्थाया अपि सामान्येनोपनयनात् । यथा प्रागुपलब्धः पश्चादुपलभ्यमानो घटो मध्यावस्थायां नायं ज्ञात इति ज्ञानाभावविशिष्टोऽनुमीयत इति न किञ्चिदनुपपन्नम्, [4]स्तामात्मनो ज्ञानसुखे भिन्ने न तु मिथस्तथा च सुखात्मकं ज्ञानमात्मनि ज्ञानान्तरेण यदि नानुभूयते । एवमेतत्, स्वयमपि न प्रकाशत इति त्वसिद्धमित्यत आह—**सुखं चेति** । तदेवमात्मनि सुखं नित्यं भिन्नं

---

१. यथा om J २. ॰दिनेत्यत J ३. दुर्वचत्वं M ४. तामात्मनो M

भिन्नेनैव ज्ञानेन [1]प्रकाश्यमानमास्थेयम् तत्र भाष्यवार्तिके इत्याह—**तदेवमिति**। ननु वैषयिकसुखज्ञाने कर्तव्ये सुखातिरिक्तं किमात्ममनःसंयोगोऽपेक्षते, येन तत्रापि विषयमात्रापेक्षायां मनसैव रूपाद्युपलब्धिप्रसङ्गो न स्यात्, अथ बहिर्मनःसापेक्षं [2]नन्वन्तरिति परिहारः, स इहापीति। अतो वार्त्तिकं स्फोरयति—**संसारावस्थायामिति**॥

आपादितप्रयासवैयर्थ्यपरिहारं परस्य वार्त्तिककृतो हृदिस्थं स्फुटीकरोति सिद्धान्तवार्त्तिकं संगमयितुम्—**ननु त्वन्मत** इति। यथा हि शास्त्रेण प्रवर्तमानः प्रवर्तयितव्यः, तथा स एव शक्यसाधने। न च नित्यं शक्यम्। तद्धि न निर्वर्त्यं नित्यत्वात्। नापि विकार्यमपरिणामित्वात्। नापि प्राप्यम्। न हि तस्य संबन्धलक्षणा प्राप्तिरप्रतिसंक्रमत्वात् नापि तादात्म्यलक्षणा, तस्याः प्रागेव सिद्ध्यसिद्ध्योरुभयथापि अशक्यत्वात्। नापि ज्ञानलक्षणा, नित्यानित्यविकल्पेन तस्या अप्यपासितत्वात्[3]। नापि विषयत्वलक्षणा, अनतिरेकात्। तथात्वे चोत्पन्नतया विनाशे पुनरसंबन्धात्। षट्पदार्थातिरेकस्यासिद्धेः। भावत्वेऽवश्यं तदन्तर्भावात्। अभावत्वे प्रतियोग्यनुपपत्तेः। नापि संस्कार्यं [4]तत्, अनाधेयत्वातिशयत्वादिति॥

तस्मात् नित्यं सुखमशक्यत्वात् न प्रयोजनम्। प्रयोजनं तु दुःखाभावः, तस्य निर्वर्त्यत्वादिति वस्तुगतिः। अत्राहुः—ननु ससाधनं दुःखमपि न पारमार्थिकमस्ति। ततः कस्याभावः शक्यः। यथाविद्योपदर्शनं तु प्रवृत्तिः सुखेऽपि समानेति, तत्राह—**धर्माधर्माविति**। तदिदं पूर्वोक्तं हृदि निधायोक्तम्—**शक्यौ भोगेन क्षेतुमिति**। न केवलमित्थं नित्यसुखदृष्टिर्मोक्षानुपयोगिनी, प्रत्युत विरोधिनीत्याह—**अन्यथा त्विति**। तस्मान्मनागप्यस्या अवकाशो न दातव्यः **परैः**, अपि त्वविद्यानिवृत्तिमात्रे प्रयतितव्यं शक्यत्वात्, अविरुद्धत्वाच्चेत्यर्थः। तस्मादुपपन्नानवद्यवादिनः परमेश्वरस्योपदेशो नाशक्यप्रयोजनो न विपरीतप्रयोजनो वा भवितुमर्हतीति भाक्तत्वमेवानन्दश्रुतीनां न्याय्यमित्याह—**तस्मादिति**। नित्यं सुखं भवत्यस्ति। यद्यपि किञ्चिन्नारभते नोपादत्ते तथापि निमित्ततया किंचित्कुर्वन् सन् भविष्यतीति चेत्? नैवम्, **टीकार्थानवबोधात्**। निमित्तता हि उपादानतयाव्याप्ता। अन्यथा रूपादेरप्यनुपादानस्यापि किंचित्प्रतिनिमित्ततामुपगम्य निवृत्तौ सर्वसन्ताननिवृत्ति-

---

१. प्रकाशमा° M २. नन्वेतदिति M ३. अपसारितत्वात् M ४. तत् om M

प्रसङ्गात् । एवमस्त्विति चेत् ? अत्र टीकयोत्तरं, '[1]तदेवमस्मदभिप्रेतापवर्गलक्षणे संप्रतिपन्नावपि लाभहान्योरधिकवादिनौ निरस्तौ, सांख्यादयस्तु नैवमिति नोत्थापिताः । ते हि प्रकारे [2]परं विवदन्ते । स च तत्र तत्र चिन्तनीयः ॥२२॥

॥ इति प्रमेयलक्षणप्रकरणम् ॥

॥ न्यायपूर्वाङ्गलक्षणप्रकरणम् ॥

॥ भाष्यम् ॥

स्थानवत एतर्हि[3] संशयस्य लक्षणं वाच्यमिति तदुच्यते—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥२३॥**

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति । स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरं नावधारयति, यत् तदनवधारणज्ञानं स संशयः । समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धिः अपेक्षा । सा संशयस्य प्रवर्त्तिका वर्त्तते । तेन विशेषापेक्षो विमर्शः संशयः ॥

अनेकधर्मोपपत्तेरिति । समानजातीयमसमानजातीयं चानेकम् । तस्यानेकस्य धर्मोपपत्तेः विशेषस्योभयथा दृष्टत्वात् । समानजातीयेभ्योऽसमानजातीयेभ्यश्चाऽर्था विशिष्यन्ते, गन्धवत्त्वात्पृथिव्यवादिभ्यश्च विशिष्यते, गुणकर्मभ्यश्च । अस्ति च शब्दे विभागजन्यत्वं विशेषः । तस्मिन् द्रव्यं गुणः कर्म वेति सन्देहः[4], विशेषस्योभयथा दृष्टत्वात्[5] । किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः, आहोस्विद्गुणस्य सतो द्रव्यकर्मभ्यः, अथ कर्मणः सतो द्रव्यगुणेभ्य इति ? विशेषापेक्षा अन्यतमस्य व्यवस्थापकं धर्मं नोपलभ इति बुद्धिरिति ॥

विप्रतिपत्तेरिति । व्याहतमेकार्थदर्शनं विप्रतिपत्तिः, व्याघातः विरोधोऽसहभाव[6] इति । अस्त्यात्मेकं दर्शनम् नास्त्यात्मेत्यपरम् । न च सद्भावासद्भावौ सहैकत्र सम्भवतः । न [7]चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणं संशय इति ॥

---

१. अभिमता° J २. परम् om M ३. एव तर्हि CT ४. वै. सू. २।२।२५ ५. वै. सू. २।२।२६ ६. सहासंभवः J ७. °तरप्रवादस्य साधको J

उपलब्ध्यव्यवस्थातः खल्वपि । सच्चोदकमुपलभ्यते तडागादिषु, मरीचिषु चाविद्यमानमुदकमिति, अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यतेऽथासदिति संशयो भवति ॥

अनुपलब्ध्यव्यवस्थातश्च । सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं निरुद्धं वा, ततः क्वचिदनुपलभ्यमाने[1], किं सन्नोपलभ्यते उतासदिति संशयो भवति । विशेषापेक्षा पूर्ववत् ॥

पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे, एतावता विशेषेण पुनर्वचनम् । [2]समानधर्माधिगमात्समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति ॥२३॥

॥ वार्त्तिकम् ॥

प्रमेयानन्तरं प्राप्तिः संशयस्य, स्थानवतो लक्षणवचनमिति । या प्रमेयानन्तरं क्रमप्राप्तिः साभिधीयते इति ॥

**समानानेकधर्मोपपत्तेरिति सूत्रम्** ॥२३॥ तत्र समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्च त्रिविध एव संशय इतरपदविशेषणाद् भवतीति सूत्रार्थः । तत्र विषयस्वरूपानवधारणात्मकः प्रत्ययः संशयः समानधर्मादिभ्य उत्पन्नो विषयस्य विशेषं नावधारयति यः [3]प्रत्ययः स संशय इत्युच्यते । प्रत्ययोऽनवधारणात्मकश्चेति व्याहतम् । प्रत्ययस्यैतत् प्रत्ययत्वं यदुत[4] विषयस्वरूपावधारणात्मकत्वं नाम । न चेदयं विषयस्वरूपमवधारयति, प्रत्ययत्वं तर्हि व्याहतं भवति । न, स्वरूपप्रत्यायनात् । स्वरूपमस्य प्रतीयते, न पुनरयं विषयस्वरूपमवधारयति, अतश्च संशयः । प्रतीयत इति हि प्रत्यय इत्युच्यते ॥

समानशब्दः साधारणार्थः समानस्य धर्मस्योपपत्तेरिति साधारणस्येति यावत् । किं पुनरत्र साधारणम्, किं गुण आहो सामान्यमिति ? यदि गुणः, स न साधारणः । कस्मात् ? एकद्रव्यवृत्तित्वात् परिमाणस्य । एकद्रव्यवृत्ति परिमाणम्, तत् कथं साधारणं भविष्यतीति ? सामान्यमपि न युक्तम्, द्रव्यावृत्तित्वात् न ह्यूर्ध्वत्वं द्रव्ये वर्तते । किं [5]तर्हि ? गुणे परिमाणे । न चोर्ध्वत्वं परिमाणे वर्तमानं सामान्यं द्रव्ये संशयं कर्तुमुत्सहते । कस्मात् ? गुणस्यावधारितत्वात्, यद्वृत्ति सामान्यं सोऽर्थोऽवधारित इति । न, साधारणार्थस्यान्यथा व्याख्यानात् । न ब्रूमो गुणः साधारण इति । नापि सामान्यम्,

---

१. ०माने संशयः C २. विशेषापेक्षः J ३. प्रत्ययः om K ४. उत om K
५. तु K

अपि तु सादृश्यार्थः समानार्थः[1] । यावहमर्थौ पूर्वमद्राक्षं तयोर्यो धर्मः ऊर्ध्वत्वलक्षणो वर्तते, तेन धर्मेण सदृशोऽयं धर्म उपलभ्यत इति । तस्य उपपत्तिरध्यवसायः । यदुक्तं भवति सदृशस्य धर्मस्योपलब्धिः, तदुक्तं भवति समानस्य धर्मस्योपपत्तिरिति । कस्मात् पुनरेवमेव नोच्यते समानधर्मोपलब्धेरिति ? अनुक्तमपि यस्मादेतद्गम्यते, गम्यमानस्य चाभिधानं व्यर्थम् । केन पुनरेतद् गम्यते इति विशेषापेक्ष इति वचनेन । कथम् ? विशेषस्यापेक्षा आकाङ्क्षा । सा चानुपलभ्यमाने विशेषे युक्ता । यदि चायं विशेषं न पश्यति विशेषानुपलब्धेर्गम्यत [2]एतत् सामान्यं पश्यतीति । अथ पुनरयं न सामान्यं न विशेषं पश्येत्, तदा विशेषापेक्ष इति व्यर्थं वचनं स्यात् । एतेन सामर्थ्येन गम्यते सामान्यमुपलभत इति । अथ वोपलब्धिपर्याय एवोपपत्तिशब्द इति । उपपत्तिः प्रमाणगम्यता । सा चोपलब्धिः । यः पुनरनुपलभ्यमानसद्भावो धर्मः, सोऽविद्यमानवद् भवतीति । का पुनर्विद्यमानस्याविद्यमानेन समानता ? प्रमाणानालम्बनत्वम् । अविद्यमानम् अपि प्रमाणस्यालम्बनं स्वतन्त्रं न भवति, [3]सदप्यनुपलब्धिलक्षणप्राप्तमिति । विषयशब्देन वा विषयिणं [4]प्रत्ययमाह, समानधर्मोपपत्तिशब्देन वा विषयी प्रत्ययोऽभिधीयत[5] इति । लौकिकं वा न्यायमनेन वाक्येनावरुणद्धीति, यथा लोके वक्तारो भवन्ति धूमेनाग्निरनुमीयत इति । न च वाक्ये दर्शनशब्दः श्रूयते । अर्थप्रत्यायकत्वाद् वाक्ये दर्शनशब्दम् अनुजानाति धूमं दृष्ट्वाथाग्निरनुमीयत इति ॥

अव्यवच्छेदहेतोरिति वक्तव्यम् । यदिदं समानधर्मोपपत्तेरिति पदम् एतस्मिन्नव्यच्छेदहेतोः समानस्य धर्मस्योपपत्तेरिति वक्तव्यम् । न हि केवला समानधर्मोपपत्तिः संशयकारणं भवति । अन्यथा[6] कृतकत्वादिनापि संशयः स्यात् । समानं हि कृतकत्वं सर्वानित्यानामिति व्यवच्छेदहेतुत्वान्न भवति । न, समानार्थापरिज्ञानात् । व्यवच्छेदहेतुश्च[7], समानश्च धर्म इति न युज्यते । व्यवच्छेदहेतुर्नाम विवक्षिततज्जातीयवृत्तित्वे सति यो विजातीयावृत्तिः स व्यवच्छेदहेतुः । तस्य च समानार्थता नास्ति । समानो हि नाम[8] विवक्षिततज्जातीयवृत्तित्वे सति अन्यजातीयवृत्तिः । तस्मादव्यवच्छेदहेतोरिति न वक्तव्यम् ॥

सोऽयं साधारणो धर्म उपलभ्यमानः संशयहेतुः, किं केवल इति ? न केवलः । किं तर्हि ? उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च । यदि चोपलब्ध्यनुपलब्धी न व्यव-

---

१. समानार्थः J २. एव C ३. तदपि C ४. प्रत्याह C ५. विधीयते C
६. कारणमन्यथा C ७. ॰श्च भवति C ८. धर्मो यो C

स्थिते भवत इति । किमेतावन्मात्रं साधनमिति ? नेत्युच्यते । यदि च[१] विशेषाकाङ्क्षा भवति समानधर्ममुपलभते । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इदन्तया [२]नेदन्तया वा । विशेषाकाङ्क्षायां च सत्यामर्थसन्देहो भवतीति ॥

किमिदं समस्तं कारणम्, उतासमस्तमिति ? समस्तमिति ब्रूमः । यदि समानधर्मोपपत्तेरिति[३] केवलमुच्येत उपलब्धविशेषस्यापि सामान्योपलब्धिरस्तीति[४] तदापि संशयः स्यात्[५] । यदि पुनरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च संशय इत्येतावदुच्येत, अनुपलब्धसामान्यस्यापि क्वचिदुपलब्ध्यनुपलब्ध्यव्यवस्था अस्तीति संशयः स्यात् । विशेषापेक्ष इत्येतावति चोच्यमानेऽनुपलब्धसामान्यस्यापि क्वचिद् विशेषस्मृतिरस्तीति संशयः स्यात् । एवं समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति पदद्वयेऽपि नौयानप्रेङ्खादिगतस्य न भवति संशयः । एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति पदद्वये [६]विधीयमानेऽत्यन्तानुपलब्धे [७]सामान्येऽर्थे संशयः स्यात् । एवं समानधर्मोपपत्तेर्विशेषापेक्ष इति चोच्यमाने सामान्यधर्मदर्शने सत्यपि विशेषापेक्षायां च सत्याम् उपलब्ध्यनुपलब्ध्योर्व्यवस्थानात् न भवति संशयः । एवं च यदायं द्रष्टा दृष्टपूर्वं सामान्यविशेषवन्तमर्थमुपलभते, तत्र चोपलब्ध्यनुपलब्धी व्यवस्थिते भवतः । सोऽयं द्रष्टा तस्मात् स्थानाद् यदापैति ततोऽस्यापगमाद् विषयविप्रकर्षान्निमित्तादल्पविषया विशेषा नावभासन्ते । महाविषयं सामान्यमवभासते । उपलब्ध्यनुपलब्धी पुनर्व्यवस्थिते भवतः[८] । [९]विशेषानुस्मृतिश्चास्ति, न च सन्दिह्यते । तस्मादेकद्विपदपर्युदासेन समस्तं लक्षणमुच्यत इति समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्ष इति चैकैकपदपर्युदासः[१०] । समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च समानधर्मोपपत्तेर्विशेषापेक्ष इति च उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च द्विपदपर्युदासः कृतः समस्तपदपरिग्रहेण । यस्मात् समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इत्याह, तेन ज्ञापयति समस्तमेतल्लक्षणमिति । विमर्श इति । नानार्थावमर्शनं विमर्शः । उभावर्थौ [११]स्पृशतीव संशीतिः संशय इति भावसाधनम्, करणसाधनं वा संशेतेऽनेनात्मा इति सुप्त इव भवति । क उपमार्थः ? अर्थानवधारणमुपमानार्थः । एतेनानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति व्याख्यातम् । कोऽतिदेशार्थः ? यथाद्ये पक्षे त्रिपदपरिग्रहेण एकद्विपदपर्युदासः कृतः, तथानन्तरयोरपि द्रष्टव्यमिति ॥

---

१. च om C २. वानिदं° C ३. °लब्धेरिति J ४. °न्यत उप° C ५. तस्यापि° स्यादिति C ६. अभिधीय° C ७. सामान्ये J ८. व्यवतिष्ठेते C ९. विशेषार्थं° नास्ति C १०. चैकपर्युदासः कृतः C ११. स्पृशतीव C

अनेकधर्मोपपत्तेः संशय इति । अनेकस्यानेकश्च धर्म इति केचित् । अनेकस्य धर्मोऽनेकधर्मः । अनेकस्य द्रव्यगुणकर्मलक्षणस्य संयोगजत्वं धर्मः । अनेकश्च धर्मः संयोगजत्वनिर्गुणत्वनिष्क्रियत्वक्षणिकत्वानि शब्दे । तदेवमनेकधर्मोपपत्तेः संशय इति केचित् । तदयुक्तम्, समानधर्मोपपत्तेरित्यनेनैव[1] चरितार्थत्वात् । समानधर्मोपपत्तेरित्यनेनैव यश्चैकोऽनेकवृत्तिः यश्चानेक एकवृत्तिः, स लभ्यत इति चरितार्थत्वात् । न पुनरनेकधर्माभिधानेन प्रयोजनमस्तीति । अथानेकधर्मशब्दस्य कोऽर्थः ? असाधारणो धर्म इति । कथं पुनरसाधारणो धर्म इति । कथं पुनरसाधारणो धर्मोऽनेकधर्म इत्यनेन समासपदेनाभिधीयते ? समानासमानजातीयविशेषकत्वात् । समानजातीयमसमानजातीयं चानेकम् । तस्माद् विशेषो विशेषको धर्मः, अनेकस्माद् विशेषोऽनेकधर्म इति । तस्य चानेकस्य धर्मो यथास्वं सोऽयमनेकधर्म इति । एकानेकप्रत्ययहेतुर्वा धर्मोऽनेकधर्मः, यत एष प्रत्ययो भवति इदमेकमिदमनेकमिति । तत्रैकप्रत्ययहेतुरभेदः अनेकप्रत्ययहेतुर्वा धर्मो विशेषः । यथा शब्दस्य विभागजत्वम् । सामान्यविशेषसमवायेभ्यः शब्दस्य सदादिना विशेषेण निर्भक्तस्य, तस्मिंस्तु द्रव्यं गुणः कर्म वेति विभागजत्वात् संशयः । न हि[2] द्रव्यगुणकर्मणामन्यतमं[3] विभागात् जायमानं दृष्टं सर्वत्रासंभवात् । विभागजत्वं संशयं करोति सर्वतो व्यावृत्तेरिति । ननु च विभागजो विभागो विद्यते, गुणश्च ? सत्यम्, अनभ्युपगतविभागजविभागस्यैतदेवं भवति । यः पुनरभ्युपगतविभागजविभागः, तस्यायं [4]निश्चयहेतुः, गुणः शब्दो विभागजत्वात् विभागजविभागवदिति । अस्तु वा तस्यापि विभागजविभागासमवायिकारणकत्वात् विभागजविभागासमवायिकारणकः शब्दो नान्यः पदार्थ इति । तदेवं विभागजत्वं विभागजविभागासमवायिकारणत्वं वा नर्ते शब्दं संभवतीति सर्वतो [5]व्यावृत्तेः संशयहेतुः । तुल्यजातीयेष्वर्थान्तरभूतेषु च विशेषस्योभयथा दृष्टत्वादिति । समानधर्मोपयोगाद् वासमानोऽनेकधर्मो भवति । यद् वा द्वयस्यापि संशयकारणत्वेनोपनीतस्य समानधर्मस्यासमानस्य च समानधर्मस्योपयोगादनुपयुक्तोऽसमानः सोऽनेकशब्दस्य विषयविशेष इति ॥

कस्मात् पुनरेवमेव नोच्यते समानासमानधर्मोपपत्तेरिति ? नैवं शक्यं भवितुम्[6] । अनेकस्माद् व्यावृत्तो यो धर्मः सोऽनेकधर्म इति अयं विग्रहो न लभ्यते । लाघवं च[7] प्रयोजनम् । एकाक्षरापचयात् लाघवं प्रयोजनमाश्रित्यैवमभिधानं वा[8] । यद्यनेकधर्मार्थोऽसा

---

१. °रित्यत्र C २. हि किञ्चित् C ३. अन्यद् J ४. निर्णय° C ५. व्यावृत्तः C ६. अभिधातुम् C ७. वा C ८. वा om J

धारणार्थः, असाधारणश्च धर्मः संशयकारणमिति, नेदं निरात्मकं जीवच्छरीरम् अप्राणादिमत्त्वप्रसङ्गादित्ययमप्यसाधारणत्वात् संशयहेतुः प्राप्तः। नैष दोषः। यथैव साधारणो धर्मः संशयहेतुरिति नान्वयिनः साधारणत्वे सति संशयहेतुत्वं भवति, [1]अन्वयव्यभिचारात्। एवं व्यतिरेकिणोऽपि सत्यप्यसाधारणत्वे विपर्ययसंबन्धस्याव्यभिचारात् हेतुभाव इति। तस्मात् नैकवृत्तित्वमनेकवृत्तित्वं वा संशयकारणत्वे निर्णयकारणत्वे वा हेतुः। किं तर्हि? साधारणासाधारणत्वे सति व्यभिचाराव्यभिचारौ संशयनिर्णयहेतू। यो व्यभिचारी स संशयहेतुः, योऽव्यभिचारी स निर्णयहेतुरिति। यदि तर्ह्युभयोर्व्यभिचारित्वात् संशयहेतुत्वम्, ननु समानधर्मोपपत्तेरित्यनेनैव गतमेतत्[2]। गतार्थत्वात् न संशयकारणत्वेन पृथगुपादेयमिति? सत्यम्, न व्यभिचारितामन्तरेणान्यत् संशयकारणम्, अपि तु व्यभिचारितायां सत्यां विधीयमानव्यभिचारः प्रतिषिध्यमानव्यभिचारश्चेति भेदः। समानधर्मोपपत्तेरित्यनेन विधीयमानस्य व्यभिचार उपदिश्यते, अनेकधर्मोपपत्तेरित्यनेन[3] प्रतिषिध्यमानो व्यभिचार इति। एतावता च भेदेन[4] पृथगभिधानम्॥

नञः पर्युदासविषयत्वादव्यभिचारिधर्मद्वयोपनिपातोऽनेकधर्म इति केचित्। एके त्वनेकधर्मोपपत्तेरित्यन्यथा व्याचक्षते, एकस्मादन्योऽनेकधर्म इति। एवं च विरुद्धाव्यभिचारिधर्मद्वयोपनिपातो लभ्यत इति यत् तं प्रति[5] तर्कमाहुः। स च संशयहेतुः, यथा श्रावणत्वकृतकत्वे शब्दस्येति। तदयुक्तम्, असंभवात्। न ह्यव्यभिचारिणौ विरुद्धावेकस्मिन्नर्थे धर्मौ संभवतः वस्तुनो द्वैरूप्यासंभवात्। यद्युभावव्यभिचारिणौ स्याताम्, एकं वस्तु द्व्यात्मकं भवेत्। न चैतदस्ति। तस्मात् नोभावव्यभिचारिणाविति॥

न चायं प्रयोगो युक्तः। कथमिति? यदि तावदेवं प्रयुङ्क्ते, यथा प्राक्तनो हेतुः, तथायमपीति। प्रसिद्धेन व्यपदेशा[6] भवन्तीति सिद्धं पूर्वस्य हेतुत्वम्। विरुद्धार्थप्रतिपत्तिबाधितत्वादुत्तरस्यानभिधानम्। अथैवं क्रियते यथेदं द्वितीयमनुमानं न भवति तथा प्राक्तनमपीति? एवमपि प्रतिपन्नं द्वितीयस्यानुमानस्यासाधकत्वम्[7]। अथ विरुद्धधर्मावेकत्र संभवत इति संभवान्न विरुद्धौ? कश्च विरुद्धार्थः? किं सहासंभवः, आहो विरुद्धार्थसाधकत्वम्, अथ स्वरूपमिति? यदि सहासंभवो विरोधः, स नास्ति, दर्शनात्। अथ विरुद्धार्थसाधकत्वं विरोधः, तदपि न युक्तम्, वस्तुनो द्व्यात्मकत्वासंभवात्। यदि विरुद्धार्थसाधकत्वमनयोर्धर्मयोर्भवेत्, एकं वस्तु द्व्यात्मकमापद्यते। अथ स्वरूपम्

---

१. अन्वयस्याव्यभि° J  २. गतमेतत् om J  ३. विभागजत्वादित्यनेन C
४. च भेदेन om C  ५. लभ्यते, यं प्रति C  ६. °नातिदेशाः J  ७. प्रतिपन्नद्वितीयानु° C

अनयोर्विरुद्धर्मेति, न किञ्चिद् बाधितं भवति । यस्मात् कृतकत्वं न श्रावणत्वं श्रावणत्वं वा न कृतकत्वम्, तस्मात् न संशय इति ॥

उपेत्य वा विरोधं यदि विरुद्धार्थाभ्यां कृतकत्वश्रावणत्वाभ्यां शब्दे संशयः क्रियते, स [1]विशेषदर्शनादुपजातः कस्य दर्शनात् निवर्तेत ? न हि विशेषदर्शने [2]सति विशेषाकाङ्क्षा अपि यथोपलब्धसामान्यस्य विशेषाकाङ्क्षेति[3] । प्रत्यक्षतो निवर्तिष्यत इति चेत्—न, योऽनुमानाभ्यां सन्निपतिताभ्यामर्थे संशयः, स प्रत्यक्षदर्शनान्निवर्तिष्यत इति न[4] युक्तम्, प्रत्यक्षाविषयत्वात् । नायमर्थः प्रत्यक्षस्य विषयः, किं शब्दो नित्यः अथानित्य इति । आगमान्निवर्तिष्यत इति चेत्—न, आगमस्य च विचार्यमाणत्वात् । आगम एवायं विचार्यते किं शब्दो नित्योऽथानित्य इति ? न चायं प्रत्यक्षविषयो नागमविषयः, [5]अनुमानाभ्यां चायं परिच्छेत्तुमशक्यः[6] । सोऽयमनिवर्त्यः संशयः प्राप्तः । भवतु किं नो बाध्यते ? कथं न बाध्यते, यदा वस्त्वन्तरपरिच्छेदकमनुमानं न भवति, यथानित्या बुद्धिः कृतकत्वादिति ? इदं खलु कृतकत्वं शब्दे दृष्टम् । स चानवधारितस्वभावो नित्योऽनित्य इति । [7]तथा चोपलभ्यमानं कृतकत्वमन्यत्र बुद्ध्यादौ संशयहेतुरिति सर्वमनुमानमनित्यत्वसाधनं न स्यात् । सर्वं चानुमानमयं न्यायो बाधत इति । यश्च न्यायोऽनुमानमूलमुच्छिनत्ति, नासौ न्यायविदा युक्तोऽभिधातुम् । नित्यासंभवात् नायमस्मात् न्यायो बाधते । यस्य नित्यं किञ्चिदस्ति, तस्य विरुद्धाव्यभिचारी भवति । अस्माकं तु पक्षे नित्यं किञ्चित् नास्ति । न, बाधापरिज्ञानात् । न भवता बाधविषयोवलोकितः, किं तु नित्यमस्माकं नास्तीति एतावन्मात्रमवधार्य परपक्षे दोषोऽभिधीयते इति भवतामपि पक्षे विरुद्धाव्यभिचारी कृतावकाशः । कथम् ? सप्रतिघं विज्ञानं सत्त्वाद् रूपादिवदित्येकः, अप्रतिघं विज्ञानमरूपत्वाद् वेदनावदित्यपरः । तदेवमव्यभिचारिधर्मद्वयोपनिपातान्न सप्रतिघं नाप्रतिघं सिध्येत् । तस्मादपन्यायोऽयं विरुद्धयोश्च धर्मयोः सन्निपातात् शब्दे संशय इति । धर्मयोः सातत्यादभिलापानुपपत्तिः । नायमतद्धर्मा कदाचिदपि शब्द उपलभ्यते । सततं तु तद्धर्मैव भवति । श्रावणः कृतकश्चेति अभिलापो न स्यात्, नित्योऽनित्यो वेति । न हि कदाचिदयं द्रष्टा एकस्मिन् वस्तुनि स्थाणुपुरुषधर्मावुपलभमानः शक्नुयाद् वक्तुं स्थाणुर्वा पुरुषो वेति । नैवं भविष्यतीति चेत् ? व्याहतमुच्यते । ननु च भवताभिधीयते नित्य इति, मयाप्यभिधीयते अनित्य

---

१. विशेषादर्श° K २. भवति C ३. °काङ्क्षा भवति C ४. प्रत्यक्षन्निव° तन्न C ५. अनुमानोपमानाभ्यां C ६. नायं परिच्छेत्तुं शक्यते C ७. तन्न C

इति । कथं नाभिलप्यते ? सोऽयं विरुद्धाव्यभिचारी न्यायो विचार्यमाणः सर्वथानुमानमूलं बाधते इत्यलमनेन ॥

अथ कृतकत्वश्रावणत्वे सहिते संशयहेतू भवत इति ? तथापि कृतकत्वश्रावणत्वे सहिते न विभागजत्वादन्यत्रासंभवाच्च संशयहेतू भवतः । सोऽयमस्माद् भिद्यते । यथैव विभागजत्वं [1]सर्वतो व्यावृत्तत्वादसाधारणं शब्दे संशयं करोति, तथा कृतकत्वश्रावणत्वे अपि शब्दवृत्तित्वादन्यत्रासंभवाच्च संशयहेतू भवतः । सोऽयमसाधारण एव धर्मान्तरम् , अतस्तद्ग्रहणेनैवायं संगृहीत इति । तस्मादेकस्मादन्यो धर्मोऽनेकधर्म इति न वक्तव्यमिति ॥

यदा पुनरेवम्भूतौ धर्मावेकस्य वस्तुनो भवतः, तदोपलब्धा तस्य वस्तुनः किं प्रतिपत्तव्यमिति ? तदा तयोरेव धर्मयोः सामर्थ्याधिगतौ यत्नः कर्तव्यः । नोभावत्र साधनम्[2] । कतरोऽत्र साधनं कतरश्च न साधनमिति सामर्थ्याधिगमे यत्नः करणीय इति । यत्नश्च क्रियमाणोऽनित्यत्वसाधनेष्वेवावतिष्ठत इति । कुतः ? नित्यत्वस्य प्रमाणबाधितत्वात् । तच्चोपरिष्टात् वक्ष्यामः[3] । तदेवं व्यवस्थितमेतत् , अनेकधर्मोपपत्तेरसाधारणात् धर्मात् संशय इति ॥

विप्रतिपत्तेः संशय इति व्याहतार्थः प्रवादो विप्रतिपत्तिशब्दस्यार्थो [4]व्याहतार्थप्रवादविषयमर्थमुपलभमानस्योपलब्ध्यनुपलब्ध्योरव्यवस्थाने सति तद्गतविशेषानुस्मृतौ च सत्यां संशयो भवतीति ॥

तत्र समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे इति भाष्यम् । तत्रोपलब्ध्यनुपलब्ध्योस्तावत् पृथक् संशयकारणत्वं न भवतीति चर्चितमेतत् । समानः अनेकश्च धर्मो ज्ञेयस्थ इत्येतदपि न बुध्यामहे, किमत्र धर्मः संशयकारणमुत ज्ञानमिति ? न धर्मः संशयकारणमित्यनेकधा समर्थितम् । समानानेकधर्मज्ञानं तु संशयकारणम् । तच्च ज्ञातरि वर्तते इति नास्ति भेदः । समानानेकधर्मयोस्तु पृथगभिधाने उक्तं प्रयोजनम् , विधीयमानप्रतिषिध्यमानधर्मभेदादिति । विप्रतिपत्तेरित्ययं वक्तृगतः संशयहेतुः । केऽत्र सम्यक्प्रतिपन्नाः के मिथ्येति श्रोतुः संशयो भवति । एतावता भेदेन पृथगभिधानम् ॥

समानधर्मः सर्व एवायमिति चेत् ? समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति सर्व एवायं समानधर्म एवाभिधीयते । तस्माद् वैयर्थ्यात् पृथगनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति

१. अन्यावृत्तित्वात् C २. नोभावेतौ साधने C ३. न्या. सू. २.२.२२
४. °विषयत्वमुप° C

न प्रयोजनमस्ति। अत एवं कर्तव्यम्, समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति। न, सूत्रार्थापरिज्ञानात्। सूत्रार्थमपरिज्ञायैवैतच्चोद्यत इति। यथा च भेदः समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति तथा च वर्णितम्॥

अपरे पुनः समानधर्मोपपत्त्यादिभिः पदैः पृथक् पञ्चविधं संशयं वर्णयन्ति। समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति। एवं शेषेषु पदेषु। तन्न युक्तम्, उपलब्ध्यनुपलब्ध्यव्यवस्थायाः पूर्वपदविशेषणत्वात्। समानधर्मोपपत्तौ सत्यामुपलब्ध्यनुपलब्ध्यव्यवस्थायां च सत्यां विशेषापेक्षो विमर्शः संशय इति सूत्रार्थः। एवमनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति वाच्यम्। तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्था पृथक् संशयकारणमिति। उपलब्ध्यनुपलब्ध्योर्द्वैविध्याच्च संशयो न युक्तः। कुतः? लोकविरोधात्। उपलब्ध्यनुपलब्ध्यव्यवस्थानात्[१] संशयो भवतीति ब्रुवाणो लोकं बाधते। कथमिति? यत्किञ्चिदयमुपलभते सर्वत्रास्य संशयेन भवितव्यम्। किं कारणम्? उपलभ्यमानं द्वेधा भवतीति। उपलब्ध्योर्द्वैविध्याच्च यः संशयो भवति तस्य कुतो निवृत्तिः? विशेषदर्शनान्निवर्तते इति चेत्? विशेषेष्वप्येवम्। य एते विशेषा उपलभ्यन्ते किमेते सन्त उताहोऽसन्त इति यावद् यावदुपलभते[२], सर्वत्रोपलब्धिद्वैविध्यात् संशय इत्यनिवर्त्यः संशयः। एवमनुपलब्धिद्वैविध्येऽपि [३]वक्तव्यम्। न चास्य क्वचित् समाश्वासः स्यात्। यदायमपवरकादौ सर्पादीन्नोपलभते तदा तस्य सर्पवदेतद्वेश्म आहोऽसर्पवदिति संशयो भवति। अयमपि संशयोऽनिवर्त्त्य एवेति सर्वत्राश्वासो न स्यात्। येषां च पञ्चविधः संशय इति सूत्रार्थः, तैरप्यस्य कारणकृतो भेदो वक्तव्यः स्वभावकृतो वा। तद् यदि तावत् कारणकृतो भेदः? न पञ्चविधः, अनेकविधः संशय इति प्राप्तम्। अथ स्वभावभेदात्? स्वभावभेदस्यासंभवादेकरूपः संशयः, संशीतिः संशय इति। तस्मात् पञ्चविधः संशय इति न सूत्रार्थः॥

समानधर्मग्रहणान्न संशयो धर्मिविषयत्वात्। यदिदमुच्यते समानधर्मोपपत्तेः संशय इति, तदयुक्तम्, धर्मिविषयत्वात्। न हि समाने धर्मे उपलब्धे धर्मिणि संशयो [४]युक्तः धर्मधर्मिणोर्भेदात्। न हि गवि दृष्टेऽश्वे संशयो भवति, धर्मिणश्चादृष्टत्वात् नानुपलब्धे न निर्णीते संशयो भवतीति व्याघातः। धर्मधर्मिभावात् संशय इत्येके। एके तावत् परिहारं ब्रुवते, धर्मे दृष्टे धर्मिणि संशयः। स धर्मधर्मिभावात्। न पुनर्गवि दृष्टेऽश्वे संशयो भवति धर्मधर्मिभावानुपपत्तेः। न, नानात्वानिवृत्तेः। न हि धर्मधर्मिभावेन नानात्वं

१. उपलब्ध्योर्द्वैविध्यात् C २. °लभ्यते C ३. कर्तव्यम् J ४. न युक्तः C

निवर्तते । अथ धर्मधर्मिभावो नियामकः ? इच्छादिसूत्रं [१.१.१०] तर्हि व्याहन्यते । कथमिति ? इच्छादयः प्रतिसन्धानादात्मानं गमयन्तीति सूत्रार्थः । तत्र परः प्रत्यवस्थितः कार्यकरणाभावात् प्रतिसन्धानमिति [2]न नानात्वस्याबाधनादित्यनेन निवर्तते इति । इह पुनर्भवता धर्मधर्मिभावादिति ब्रुवता नानात्वमेव धर्मधर्मिभावविशिष्टं नियामकमुच्यते[3] इति शक्नुयात् परोऽपि वक्तुं कार्यकारणभावो नियामक इति । तस्मादपव्याख्यानमेतत् धर्मधर्मिभावात् संशय इति ॥

अथ समानधर्मोपलब्धेरन्यस्मिन्[4] धर्मिणि संशयो भवतीति कः परिहारः ? अयं परिहारः । बहुव्रीहिः समासः । अतो धर्मिणोऽभिधानम् । समानधर्मोपपत्तेरित्यनेन पदेन बहुव्रीहिसमासवान् धर्म्येवापदिश्यते । कथम् ? समानो धर्मो यस्य स भवति समानधर्मा । समानधर्मेण उपपत्तिः समानधर्मोपपत्तिः । किमुक्तं भवति ? समानधर्मवतो धर्मिणो दर्शनादिति ॥

विशेषापेक्षो विमर्शः संशयः इति । विशेषापेक्षो विशेषस्मृत्यपेक्ष इति । अथ सा विशेषस्मृतिः किं विशेषविषया, किं संशयविषयविशेषविषया,[5] उतान्यविषयेति ? योऽसौ संशयस्य विषयः यत् तं समानधर्माणमुपलभते[6] किं तस्यायं विशेषाननुस्मरति, उतान्यस्येति ? यदि तावत् तस्य ? तन्न युक्तम्, तद्विशेषाणां क्वचिदननुभूतत्वात् । योऽर्थः पूर्वमुपलब्धविशेषः तद्गतान् विशेषाननुस्मरतीति युक्तम्, तद्विशेषाणामनुभूतत्वात् । यदा पुनरयमनुपलब्धपूर्वविशेषः सामान्यत उपलभ्यमानः सन्दिह्यते तत्र विशेषानुस्मृतिः । कथम् ? तद्विशेषाणामननुभूतत्वादिति । न सामान्यवचनत्वात्[7] । विशेषापेक्ष इति सामान्यवचनं, न[8] पुनरनेनावधार्यते तस्य वा अन्यस्य वेति । यदा तद्गता विशेषाः सुस्मूर्षिता भवन्ति, तदानुभूतेषु विशेषेषु[9] स्मृतिः । यदा त्वनुपलब्धपूर्वेऽर्थे संशयः, तदा सादृश्यादन्यगतान् विशेषान् सुस्मूर्षत इति । एवं तावद् व्यवस्थितं त्रिविधः संशय इति ।

अनेन च संशयलक्षणेन यान्यविरुद्धानि संशयलक्षणानि तान्यपि संगृहीतानि, यथा **काश्यपीयम्**—

सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च संशयः[10] ॥

१. न युक्तः C  २. न om C  ३. °भावनियामक°C  ४. °स्मिन्ननुपलब्धे C
५. संशयविषयविषया J  ६. किम् om C  ७. न °त्वात् om J  ८. न om C
९. विशेषविषया C  १०. वै. सू. २. २. १६

इति । अस्यार्थः । सामान्यप्रत्यक्षादिति । सामान्यवतः प्रत्यक्षाद् धर्मिण इति । न पुनरयं पदार्थः सामान्यस्य [1]प्रत्यक्षादिति । विशेषाप्रत्यक्षत्वमव्यवस्थितविशेषत्वम्, नास्मिन् विशेषा व्यवस्थिता इति । विशेषस्मृतेश्च संशय इति समानम् । कथं पुनरनेन सूत्रेणासाधारणो लभ्यते इति ? लभ्यते, व्यभिचारित्वात् । व्यभिचारि साधारणम् । तच्चासाधारणेऽपि व्यभिचारित्वमस्तीति लभ्यते । अनेकधर्मोपपत्तिस्तर्हि पृथङ् न पठितव्या, अन्वय-व्यतिरेकभेदविवक्षया[2] पृथगभिधानं पुनः संशयकारणभेदविवक्षयेति । ये त्वत्र विशेषाप्रत्यक्षाद् विशेषस्मृतेश्चेति पदयोः पौनरुक्त्यं वर्णयन्ति, सामान्यप्रत्यक्षाद् विशेषस्मृतेश्च संशय इत्यभिधीयमाने किल गम्यते एवैतद् विशेषाप्रत्यक्षादिति, न हि कश्चिद् विशेषान् प्रत्यक्षान् स्मरतीति । तन्न, सूत्रार्थापरिज्ञानात् । नायं सूत्रार्थः विशेषाणां न प्रत्यक्षत्वमिति, अपि त्वव्यवस्थितविशेषवत्त्वम्, नास्मिन् विशेषाप्रत्यक्ष-वत्त्वमित्यतो[3] नायं दोष इति ॥

अन्ये तु संशयलक्षणमन्यथा व्याचक्षते, साधर्म्यदर्शनाद्विशेषलिप्सोर्विमर्शः संशय इति । तैरपि साधर्म्यस्यावधारितत्वात् संशयस्य विषयो वक्तव्यः । धर्मीति चेत् ? ननूक्तः संशयस्य विषयो धर्मी । सत्यमुक्तो न पुनर्युक्तः । कथं न युक्तः ? यदि तावद् धर्मव्यतिरिक्तं धर्मिणमभ्युपैति, व्याहतं भवति । धर्मधर्मिणोश्च नानात्वाभ्युपगमे धर्मस्याव-धृतत्वात् धर्मिणश्चादृष्टत्वात् न संशयः । न ह्यन्यस्मिन् दृष्टेऽन्यत्र संशयो भवति । अथाप्यस्मद्दिशा साधर्म्याभिधानेन धर्म्येवोच्येत ? तन्न युक्तम्, सधर्मणो भावः[4] साधर्म्य-मिति भावाभिधानेन धर्मोऽभिधीयते, न धर्मीति । न युक्तोऽन्यस्य दर्शनादन्यस्मिन् संशय इति । अथार्थान्तरभावं नाभ्युपैति ? तथापि साधर्म्यस्यावधृतत्वात् क्व संशय इति । यदि चायं धर्मिणं नोपलभते, कस्यायं[5] विशेषानुपलिप्सेत ? न हि साधर्म्यस्य विशेषाः सन्ति । अथ सामान्यवतो विशेषा इति ? तन्न, तस्यादृष्टत्वादित्युक्तम् । न सामान्यस्य विशेषाः सन्तीति सामान्यवतो विशेषा भवन्तीत्येवं[6] ब्रुवता सामान्यविशेषतद्वतां भेदोऽभ्यनुज्ञातो भवति । व्यर्थं चाभिधानं न सामान्यस्य विशेषाः [7]किं तु तद्वतो विशेषा इति । उपलब्ध्यनुपलब्धिव्यवस्थाने च साधर्म्यस्य दर्शने सत्यपि विशेषलिप्सायां च [8]सत्यां न संशयो भवति । उपलब्ध्यनुपलब्ध्यव्यवस्थात इति वक्तव्यम् । अनेक-धर्मदर्शनादिति च ॥

---

१. ०क्षत्वादिति J २. ०क्षायां C ३. ०शेषा व्यवस्थिता इत्य० C ४. साधार्म्यम्, साधर्म्यलिति च C ५. विशेषमु१० C ६. संभवन्ति इति C ७. किं तु om C ८. सत्यां om C

समानानेकधर्मोपपत्तेरित्येवमादिवाक्यं संशयलक्षणम् । तद्विचार्यम् । किं तावदयं कारणोपदेश आहो संशयस्वरूपावधारणमिति ? यदि कारणनिर्देशः ? अत्यल्पमिदमुच्यते समानानेकधर्मादिभ्य इति । अन्यान्यपि संशयकारणानि, तान्युपसंख्येयानि । यथा आत्ममनःसंयोग आन्तरस्य, [1]इन्द्रियमनःसंयोग इन्द्रियार्थसन्निकर्ष [2]आत्ममनःसंयोगश्च बाह्यस्येति । अथ स्वरूपावधारणम् ? कारणनिर्देशोऽनर्थकः । संशीतिः संशय इति वक्तव्यम् । अस्तु तावत् कारणावधारणम् । [3]ननूक्तं कारणान्तरमप्युपसंख्येयमिति ? नैष दोषः ।[4] नेदं कारणावधारणार्थम्, अपि त्वसाधारणकारणनिर्देशोऽयम् । तस्मात् इन्द्रियार्थसन्निकर्षादीनामप्रसङ्गः, [5]प्रत्यक्षादिसाधारणत्वात् । स्वरूपनिर्देशो वा भवतु । इदमेवास्य स्वरूपं समानधर्मदर्शनादिभ्यो जन्मेति । सोऽयमेवंभूतः संशयो विचाराङ्गतयोपादीयते । संशयवद् विपर्ययोऽपि विचारस्याङ्गम् । सोऽपि पदार्थत्वेन वक्तव्यः । सत्यमसौ पदार्थो, न तु विचाराङ्गमित्यतो नाभिधेयः । कथं न विचाराङ्गम् ? यथा सन्दिग्धस्तद्विशेषप्रतिपत्तये प्रयतते, नैवं विपर्यस्त इति । अतो न्यायविधानङ्गत्वात् नाभिधीयते इति ॥ २३ ॥

॥ टीका ॥

संशयलक्षणावतारणपरं भाष्यं **स्थानवत एतर्हि** इति । तस्यार्थः । **स्थानं** क्रमः । तद्वतः । **एतर्हि** इदानीमिति । क्वचित् पाठः स्थानवत एव तर्हीति । **तर्हि** तदानीमुद्देशसमये, क्रमवतः संशयस्य प्रमेयानन्तरमुद्दिष्टस्य, प्रमेयलक्षणानन्तरं स्थानं क्रमो लक्षणस्येत्यर्थः । तदेतद् **वार्त्तिककारो** व्याचष्टे—**प्रमेयेति** । एतदेव स्फुटयति—**येति** । स्थानं क्रमग्रहणेन व्याख्यातम्, मतुबर्थश्च प्राप्तिग्रहणेन ॥

**समा—यः** ॥ अत्र च विमर्शः संशय इति संशयसामान्यलक्षणम् । तत्र[6] संशय इति लक्ष्यनिर्देशः, विमर्श इति लक्षणपदम् । एकस्मिन् धर्मिणि विरोधिनानार्थावमर्शो विमर्शः, किं स्विदिति ज्ञानम् । तदनेनासमानजातीयेभ्यः प्रमाणादिभ्यः समानजातीयेभ्यश्च विपर्ययादिभ्यः संशयो निवर्तितो भवति । समानेत्यादीनि तु त्रीणि विशेषलक्षणानि । तेषु च विमर्शः संशय इत्येतदनुवर्तनीयम् । अत्र विशिष्टोऽवमर्शो[7] विमर्शविशिष्टः संशय इति लक्ष्यपदम् । समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेरिति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणानीति । तदेतदाह **वार्त्तिककारः—तत्र समानेति** । **त्रिविध**

१. आत्ममनःसन्निकर्षः C २. आत्ममनःसंयोगाश्च om C ३. ननु चोक्तम् J ४. एष दोषः om C ५. °आदि° om C ६. तत्र च C ७. विमर्श° om J

**एवेति** ये पञ्चविधमाचक्षते ते निराकृताः। **तदनवधारणज्ञानं स संशय इति** संशयसामान्यलक्षणपरं भाष्यं व्याचष्टे—**तत्र विषयस्वरूपेति**। **प्रत्ययोऽनवधारणात्मकश्चेति**। आक्षेपपरिहारौ प्रथमसूत्र एव व्याख्यातौ[1]। प्रत्ययशब्दस्य निश्चयवचनत्वमभ्युपेत्य व्याख्यानं **प्रतीयत इति**। परमार्थतस्तु प्रत्ययशब्दो ज्ञानपर्यायः। ज्ञानत्वं च[2] सामान्यं संशयादिष्वप्यस्तीति न विरोध इति॥

समानधर्मोपपत्तेरिति व्याचष्टे—**समानेति**। विकल्प्याक्षिपति—**किं पुनरिति**। **कस्मादिति**। मा कार्षीद् द्रव्ये संशयम्, गुण एव कस्मात् न करोतीति प्रश्नार्थः। समाधत्ते—**न, साधारणेति**। यादृशं संख्याप्रचयपरिमाणभेदयोनि[3] परिमाणं स्थाणुपुरुषयोः, तादृशमस्यापि पुरोवर्तिनो द्रव्यस्य परिमाणम्। तस्मात् सदृशपरिमाणधर्मस्य धर्मिण[4] उपपत्तेरित्यर्थः। महत्त्वदीर्घत्वसामान्यधर्मयोगस्तु[5] सन्नपि न संशयकारणम्, असादृश्ये तद्योगेऽपि संशयाभावादिति भावः। स्यादेतत्। उपपत्तिः सत्ता। न च सदृशो धर्मः सत्तामात्रेण संशये हेतुः, अपि तूपलब्धः। न चोपलब्धिवाचकमत्रास्ति पदमित्यत आह—**तस्योपपत्तिरध्यवसाय इति**। यद्यप्ययमुपपत्तिशब्दः सत्तावचनस्तत्परश्च, तथापि पदान्तरसमभिव्याहारादवगम्यते सत्तामात्राभिधानेऽपि तदुपलब्धिर्विवक्षितेति। विषयविषयिणोरभेदविवक्षया सामानाधिकरण्यमुपपत्तिरुपलब्धिरिति। पृच्छति—**कस्मादिति**। अस्मदायत्ते हि शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इत्यर्थः। उत्तरम्—**अनुक्तमपीति**। विशेषापेक्षा इति वचनेन विशेषस्यापेक्षा उच्यते। अपेक्षाशब्दश्च यद्यपीच्छायां वर्तते, तथापीह जिघृक्षायां वाक्यसामर्थ्यात्। न च सा संशयस्य हेतुः, तस्याः संशये सति भावात्। तस्माद् विशेषापेक्षया जिघृक्षालक्षणयेह विशेषयोः [6]पुरोवर्तिवस्तुसादृश्यात् स्मरणे सत्यग्रहणं लक्षणीयम्, यथा गङ्गाशब्दस्तीरं संबद्धमेव लक्षयति, न तु तीरमात्रम्। एवं बुभुत्सयापि स्मर्यमाणमेवागृह्यमाणं संबद्धं लक्षणीयम्, न त्वगृह्यमाणमात्रम्। अनेनैवाभिप्रायेण वक्ष्यति भाष्यकारः **विशेषस्मृत्यपेक्ष इति**। तस्माद् विशेषग्रहणप्रतिषेधात् [7]सामान्य ग्रहणमभ्यनुज्ञातं भवतीत्यर्थः। परिहारान्तरमाह—**अथ वेति**। स्यादेतत्, उपपत्तिशब्दः सत्तावचनश्चोपलब्धिवचनश्च। तथा च विनिगमनायां को हेतुरित्यत आह—**यः पुनरिति**। नन्वभावः प्रमाणालम्बनमुक्तः, तत्[8] कुतो न विरोध इत्यत उक्तम्—**स्वतन्त्रमिति**। अथ वा सत्तावाचकोऽप्ययमुपपत्तिशब्दः स्वाभिधेयविषयामुपलब्धिं लक्षयतीत्याह—**विषयशब्देनेति**। न चेयम्

---

१. वा १४/१० ; ४७/२१ २. तु C ३. °योगि C ४. उपपत्ति° C ५. °न्यवद्धर्म° C ६. पुरोवर्त्तिनोस्तु C ७. °न्यज्ञानमभ्य° C ८. कथं C

अलौकिकी लक्षणेत्याह—**लौकिकमिति**। यथा च धूमो न सत्तामात्रेण हेतुस्तथोक्तं प्रागिति ॥

एकदेशिनामुपसंख्यानमुपन्यस्यति—**अव्यवच्छेदेति**। ते [1]किल मन्यन्ते व्यवच्छेदहेतुरपि धर्मः समानो भवति। यथा कृतकत्वं साध्यधर्मिणि शब्दे दृष्टान्तधर्मिणि च घटादौ समानम्, न चासौ [2]नित्यानित्यत्वसंशयहेतुः, अपि त्वनित्यत्वस्यायोगं साध्यधर्मिणि व्यवच्छिनत्ति। [3]अतोऽव्यवच्छेदहेतोरिति वक्तव्यमित्यर्थः। तदेतद् वक्तव्यं दूषयति—**न समानेति**। समानो हि धर्मः प्रतिसंबन्धिनमपेक्षते—**केनेति**। संशयपदेन च स्वविषयोपस्थापकेन परस्परविरोधिनौ तावुपस्थितौ। तेन ताभ्यां समान इति गम्यते। तेन विवक्षिततज्जातीयवृत्तित्वे सत्यन्यजातीयवृत्तिरेव गम्यते। न चैवं कृतकत्वम्। तस्मात् न वक्तव्यमव्यवच्छेदहेतोरिति। समानशब्दार्थः सादृश्यं तत्र नास्तीत्यर्थः। अत्रैवोपलब्धीत्यादिपदद्वयं शङ्कापूर्वकं योजयति—**सोऽयं साधारण इति**। **उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इति**। शिरःपाण्यादीनामुपलब्धिर्वक्रकोटरादेरनुपलब्धिः पुरुषस्य साधकं प्रमाणम्। तद्विरुद्धस्य वा शिरःपाण्यादेरनुपलब्धिर्वक्रकोटरादेरुलब्धिः पुरुषस्य बाधकं प्रमाणम्, तद्धि पुरुष एवायं वा, **इदंतया** व्यवतिष्ठते, इदंतानिषेधेन वा। नायं पुरुष इत्यनिदन्तया व्यवतिष्ठते। तदभावोऽव्यवस्था[4]। तदनेन साधकबाधकप्रमाणाभावो दर्शितः। **विशेषाकाङ्क्षायां चेति** विशेषस्मृतिर्दर्शिता ॥

विमर्शपूर्वकं समस्तमित्यवधारयति—**किमिदमिति**। तत्रैकपदपरिग्रहे दोषमाह—**यदि समानेति**। विशेषः शिरःपाण्यादिः। विशिष्यते ह्यनेन पुरुषः स्थाणोरिति अनुपलब्धसामान्यस्यापि क्वचिदुपलब्ध्यनुपलब्ध्यव्यवस्थास्तीति। यथा सप्तमे रसे, दशमे वा द्रव्ये। न हि तत्र साधकं बाधकं वास्ति प्रमाणम्। न च[5] संशयः। **विशेषापेक्ष इत्येतावतीति**। तद् यथा हस्तिनं दृष्ट्वा तत्संबन्धिनो स्थूणाहस्तिपकौ स्मरति न च तत्र संन्दिग्धे ॥

द्विपदपरिग्रहे दोषमाह—**एवं समानेति**। नौदोलारूढो हि गच्छन् विदूरे आरोहपरिणाहवद्वस्तुदर्शनेऽपि सत्यपि च साधकबाधकप्रमाणाभावे विशेषस्मृत्यभावात् नग इति वा नाग इति वा न सन्दिग्धे। एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति[6] पदद्वये विधीयमानेऽन्यतः स्मर्यमाणाद् विशेषात् सदृशधर्मवति धर्मिण्यनुपलभ्यमाने

१. हि C २. नित्यत्वसं° C ३. तस्माद° C ४. °भावोऽव्यव° C ५. प्रमाणानां च C ६. इति च C

संशयः स्यात्। अस्ति हि तदा विशेषस्मृतिः साधकबाधकप्रमाणाभावश्च, नो खल्वनुपलभ्यमाने समानधर्मे धर्मिणि तद्गता वक्रकोटरादयो वा शिरःपाण्यादयो वा शक्यग्रहा इति। **यदायं द्रष्टेति**। यदा खल्वयं द्रष्टा प्रतिपरुरङ्कुरोद्भेदपुलकिताभिर्मन्दमलयमारुतान्दोलनललितलास्यशालिनीभिः शाखाभिर्मधुमदमुदितमधुपमालाशिञ्जितवल्लकीवाद्यमनोहराभिर्मत्तपुंस्कोकिलकुलविपञ्च्यमानपञ्चमाभिरारब्धसङ्गीतकं सहकारतरुमनुभूयार्थं[1] विदूरवर्ती कुञ्जरसदृशधर्मवन्तमनुभवति, तदास्यास्ति समानधर्मोपलब्धिः। अस्ति च करितरुरूपविशेषस्मृतिः, न तु साधकबाधकप्रमाणाभाव इति न संशेते। कतिपयव्यक्त्याश्रयत्वं सहकारत्वादेर्विशेषस्याल्पविषयत्वम्। आरोहपरिणाहादेस्तु बहुव्यापित्वं महाविषयत्वम्। नानार्थावमर्शनं च विरुद्धार्थावमर्शनं द्रष्टव्यम्। तदनेन स्थाणुपुरुषयोरित्यादि **भाष्यं** व्याख्यातम्। **पश्यन्** इत्युपपत्तिविवरणम्। **विशेषं बुभुत्समान** इति विशेषापेक्ष इत्यस्य विवरणम्। **किं स्विदिति** विमर्शविवरणम्। स्यादेतत्। संशयोत्तरकाला बुभुत्सेति, कथं बुभुत्समानः संशेत इत्यत उक्तं **भाष्यकृता, समानमनयोरिति**। विशेषापेक्षाशब्देनेच्छावाचिना अगृह्यमाणविशेषस्मरणं लक्षितमिति भावः। सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिर्विनश्यदवस्था विशेषस्मृत्या सहाविनश्यदवस्था एकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम्। त्रिपदपरिग्रहमनेकधर्मोपपत्तेर्विप्रतिपत्तेरित्यत्रापि योजयति—**एतेनेति**। द्वे द्वित्वेनैकीकृत्याद्यानन्तरयोरिति द्रष्टव्यम्॥

अनेकधर्मोपपत्तेरित्यत्र **भाष्यकृतो** व्याख्यां ग्रहीतुम् एकदेशिव्याख्यानमुपन्यस्य दूषयति—**अनेकेति**। शब्दो हि संयोगजः। संयोगजत्वं हि कार्ये द्रव्ये गुणे च रूपादौ शरीरादिक्रियायां चास्तीति द्रव्यगुणकर्मणां समानम्। तस्मादनेकस्य धर्मः चरितार्थः। एवं शब्दगतोऽनेकोऽपि धर्मः समानतयैव द्रव्यत्वादिसन्देहहेतुः त्रिषु, संयोगजत्वं साधारणं सत्त्वादिना निर्भक्तस्य[2], निर्गुणत्वं गुणकर्मणोः। एवं क्षणिकत्वं द्रव्यगुणकर्मणामिति समानधर्मोपपत्त्या गतार्थमित्यर्थः। पृच्छति—**अथेति**। **भाष्यकृद्**व्याख्ययोत्तरम्—**असाधारण** इति। पुनः पृच्छति—**कथमिति**। समासपदशब्देन तदेकदेशोऽनेकशब्दो लक्ष्यते समासगतेनानेकशब्देनेत्यर्थः। उत्तरम्—**समानेति**॥

एतदुक्तं भवति। यतोऽनेकस्मात् समानासमानजातीयादेष स्वाश्रयं व्यावर्तयति, अतोऽनेकापादानकव्यावृत्तिहेतुकत्वात् लक्षणयानेक इत्युच्यते। तदनेन **समानजातीयम्**

---

१. आलोक्याय C २. निर्विभक्तस्य C

**असमानजातीयं चानेकमिति भाष्यं** तस्माद् विशेष इत्यध्याहृत्य व्याख्यातम्। अध्याहृतविशेषपदविवरणं **विशेषको धर्म** इति। संबन्धसामान्यविवक्षया तु षष्ठी **तस्यानेकस्येति**। लक्षणाबीजान्तरमाह—**तस्य चानेकस्येति**। निवर्त्यनिवर्तकसंबन्धेनानेकशब्देन धर्मो लक्ष्यत इत्यर्थः। तदनेन विनैवाध्याहारं समानजातीयमसमानजातीयं चानेकम्। तस्य धर्मो निवर्तकतयेति व्याख्यातम्। न त्वत्र समासभ्रान्तिः कर्तव्या। दर्शयिष्यति हि बहुव्रीहिमिहैव[1] **वार्त्तिककारः**। [2]तदेवं लक्षणाबीजद्वयोपन्यासेन **असाधारणो धर्म** इति ग्रहणकवाक्यं व्याख्यातम्। प्रकारान्तरेणानेकधर्मपदं व्याचष्टे—**एकानेकेति**। एकं चानेकं च तदुभयमनेकं [3]तस्यानेकस्य प्रत्ययहेतुर्धर्मोऽनेकधर्मः भेदाभेदप्रत्ययहेतुरित्यर्थः। **विभागजत्वं** विभागजानां शब्दानामन्योन्यस्याभेदप्रत्ययहेतुः, तदितरेभ्यश्च भेदप्रत्ययहेतुः। तदिदमाह—**यतो** विभागजत्वात् **एष प्रत्ययो भवतीदं** विभागजं शब्दजातम् **एकम्**। इदं च ततोऽन्यद् **अनेकं** भिन्नम्। तत्र य एव **एकप्रत्ययहेतुः** धर्मोऽभेदः[4] स एव **अनेकप्रत्ययहेतुर्विशेषः**[5]। जात्यभिप्रायं चैकवचनम्, सदादिर्हि धर्मो द्रव्यगुणकर्मणामभेदप्रत्ययहेतुः, सामान्यादिभ्यश्च शब्दं निर्भजति[6]। तदिदमाह—यतः सदादेरेष प्रत्ययो भवतीदमेकं यतश्च विभागजत्वादेष प्रत्ययो भवतीदमनेकमिति, तस्मात् सिद्धमेकं चानेकं च। अनेकमिति तत्प्रत्ययहेतुरुपचारेणानेक इति। तदिदमुद्भाष्यं व्याख्यानम्। अत्रोदाहरणमाह—**यथेति**। द्रव्यत्वादिकोटित्रयविषयसंशयप्रदर्शनार्थमुक्तं[7] **सामान्यविशेषसमवायेभ्य** इति॥

सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः[8]॥

तेनानेन **सदादिना निर्भक्तस्य**[9] पृथक्कृतस्येत्यर्थः॥

स्यादेतत्। यद् येन सहचरितं दृष्टं तत् क्वचिद् दृश्यमानं तत् स्मारयत् तद्विरुद्धेनापि च संबन्धादनिश्चाययत् संशयहेतुर्भवति, यथा समानो धर्मः। असाधारणस्तु धर्मो विभागजत्वं नर्ते शब्दात् क्वचित् पृथिव्यादौ वा उत्क्षेपणादौ वा गन्धादौ वा दृष्ट इति कथं स्मारयेत्, अस्मारयद् वा कथं तत्र[10] संशयं जनयेत्? तस्मात् कोऽयं भवेदित्यतो धर्मादिति जिज्ञासामात्रमुत्पादयेत्, न त्वयं वायं वेति संशयमित्यत आह—**न हीति**। कस्मात् न दृष्टमित्यत आह—**सर्वत्रासंभवात्**। न हि द्रव्यादेर्विभागतो जन्म संभवति, तदन्वयव्यतिरेकाननुविधानादित्यर्थः। नन्वत एवोक्तं न संशयहेतुरित्यतः

१. वा ४७३।८  २. तदनेन C  ३. तदेतस्या° C  ४. अभेदप्रत्ययहेतु: C  ५. हेतुर्धर्मोऽनेकधर्मो भेदप्रत्ययहेतुर्वि° C  ६. निर्विभजति C  ७. त्रयविशेषे सं°  ८. वै. सू. १.१.८. ६.  ९. निर्विभक्तस्य C  १०. तत्र om C

आह—**विभागजत्वं संशयं करोति सर्वतो व्यावृत्तेरिति**। अयमर्थः, यद्यपि विभागजत्वं न द्रव्यादौ क्वचिद् दृष्टम्, तथापि तद्व्यतिरेकः प्रत्येकं द्रव्यादौ दृष्ट इति विभागजत्वेन सदाद्यविशेषवान् शब्दो द्रव्यकर्मभ्यां व्यावर्तमानः किं गुणः, गुणकर्मभ्यां व्यावर्तमानः किं द्रव्यम्, गुणद्रव्याभ्यां व्यावर्तमानः किं कर्मेति व्यतिरेकमुखेन तत्तत् स्मारयन् असाधारणो धर्मो भवति संशयकारणमिति। देशयति—**ननु चेति**॥

अयमभिसन्धिः। वंशे पाट्यमाने वंशदलयोः क्रिया, ततस्तयोर्मिथो विभागः, ततो वंशदलावरुद्धनभोभागविभागः। सोऽयं विभागजो विभागो न वंशदलकर्मजः। अवयवक्रिया हि तदवयवावरुद्धनभोभागविभागजनिका द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकत्वेन व्याप्ता विकसत्कमलकुड्मलदलेषु[1] दृष्टा। न हि तत्र मुकुलिताद् विकासि कमलमन्यत्, आकुञ्चितप्रसारिताङ्गुलिकरतलवत् तत्त्वेन प्रत्यभिज्ञायमानत्वात्। वंशदलक्रियापि चेत् तादृशी, नूनमनयापि द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनिकया भवितव्यम्। तथा च द्रव्यं कार्यमपि न नश्येत्। तस्मात् नानया वंशदलाकाशविभागो जनयितव्यः। न चान्यदस्य कारणं संभवति। तस्माद् वंशदलक्रियाजनितो दलयोर्विभागः कार्यैकार्थसमवेतः तदवरुद्धाकाशप्रदेशविभागस्यासमवायिकारणमेषितव्यः। एवं च गुणः शब्दो विभागजत्वाद् विभागजविभागवदिति विभागजत्वं गुणत्वनिश्चयहेतुरिति सिद्धं भवतीति। परिहरति—**अनभ्युपगतविभागजविभागस्यैतद् विभागजत्वम् एवं संशयकारणं भवति**। अनभ्युपगमबीजं च कुतः पुनरेवदेवमवगतं पद्मपत्रावयवक्रिया विभागद्वयजनिकेति, विभागद्वयक्रमकल्पनायां प्रमाणाभावादिति चेत्? हन्त, वंशदलविभागयोरपि[2] तुल्यम्। ननूक्तं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकं स्यात् कर्म, ततश्च द्रव्यनाशो न भवेदिति। अथ विपर्ययः कस्मात् न भवतीति वंशदलद्वयक्रियैव विभागद्वयजनिका, पद्मपत्रावयवक्रिया त्ववयवविभागजनिका, तदवयवाकाशविभागस्त्ववयवविभागजन्मा। यदि तु[3] पद्मपत्रावयवक्रिया उभयजनिका भवेत्, वंशदलक्रियैव द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनं विभागं जनयेदिति। न चान्यतरत्र[4] विभागद्वययौगपद्यनिश्चयः क्रमप्रमाणाभावश्च[5] तुल्यः। तस्मात् पद्मपत्रावयवक्रियाविभागजनकत्वसंदेहादशक्यविनिश्चयो व्याप्यव्यापकभावः। क्रियावैलक्षण्यात् तु स्वहेतुवैलक्षण्यजन्मनः कार्यस्य विभागस्य वैलक्षण्यं स्यात्, यदेको द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी अप्रतिद्वंद्वी चेतरः, तथापि चैतद्वैलक्षण्यं क्रियाया अभ्युपेतव्यम् यदेका विभागमेकं

---

१. °कुट्मलेषु C २. °दलयोरपि C ३. च C ४. विभागविषयया° C
५. °निश्चयक्रम° C

जनयति। अन्या तु विभागद्वयमिति। तस्मादेतदुदाहरणबलेन न विभागजविभागसिद्धिः॥

यस्त्वङ्गुलिकर्मानन्तरमङ्गुलितरुविभागो हस्ततरुविभागः, शरीरतरुविभागश्च दृश्यते, तत्राङ्गुलितरुविभागमङ्गुल्याश्रया क्रिया करोतु, हस्ततरुविभागं तु न शक्ता जनयितुम्, तस्याः स्वाश्रयसमवायात्, स्वाश्रयसमवेतकार्यजनने च क्रियायाः सामर्थ्यावधारणात्। तस्मात् हस्तादितरुविभागः क्रियातोऽसंभवन्नङ्गुल्यादितरुविभागमेव [1]कार्यैकार्थसमवायलक्षणया प्रत्यासत्त्या निमित्तीकरोतीति विभागजविभागसिद्धिं मन्यते, तं प्रत्याह— यः पुनरिति। अस्तु वा विभागजो विभागः, तथापि विभागजत्वमीदृशमसाधारणमेवेत्यत आह—अस्तु वा तस्य अभ्युपगतविभागस्य अपि विभागजत्वमसाधारणं विशिष्टम्। तदेव दर्शयति—विभागजेति। पाट्यमाने हि वंशे शब्दोत्पत्तौ वंशदलयोर्मिथो विभागो निमित्तकारणम्। वंशदलावरुद्धाकाशविभागस्त्वस्यासमवायिकारणम्, न तु भेर्याकाशसंयोगवत् वंशदलाकाशसंयोगोऽसमवायिकारणं भवितुमर्हति। तथा हि प्रयोगः, योऽयं वंशदलविभागनिमित्तः शब्दः, स निमित्तसमानजातीयासमवायिकारणजन्यः, तदसाधारणनिमित्तजन्यशब्दत्वात्[2]। यो यः शब्दो यदसाधारणनिमित्तजन्मा, स सर्वस्तज्जातीयासमवायिकारणजन्यः, यथा भेरीदण्डसंयोगनिमित्तः शब्दो भेर्याकाशसंयोगासमवायिकारणकः। तथा चायम्। तस्मात् तथेति। तदेवं वंशदलविभागलब्धजन्मना वंशदलाकाशविभागेनासमवायिकारणेन जनितः शब्दः। तदेवं विभागजविभागासमवायिकारणकत्वं शब्दस्य, तदपि यद्यप्यङ्गुल्याकाशविभागजहस्ताकाशविभागासमवायिकारणे कायाकाशविभागेऽस्ति, तथापि कारणमात्रविभागजविभागासमवायिकारणकत्वादिति हेतुः भाष्यकारेण विभागजत्वात् इत्यनेन सूचितः। न चाङ्गुल्याकाशविभागपूर्वकः कायाकाशविभाग एवम्। स हि कारणाकारणविभागपूर्वको, न तु कारणमात्रविभागपूर्वकः। तदिदमुक्तम्—विभागजविभागासमवायिकारणकः शब्दो नान्यः पदार्थ इति॥

ननु सहचरितो दृष्टः स्मारयन् विशेषसंशयहेतुर्भवति, न तु यो व्यावृत्तः [3]तेन सहास्यासाहचर्यादिति शङ्कामपनेतुं भाष्यकारीयमुत्तरमाह—तुल्यजातीयेष्विति। यद्यपि व्यतिरेकमुखेनासाधारणः शक्तः स्मारयितुम्, तथापि भाष्योक्तमप्युक्तम्। यत् खलु सदादिरूपसंपन्नं विशेषवत् तत्समानजातीयेभ्योऽसमानजातीयेभ्यश्च व्यावृत्तम्, यथा पृथिवीद्रव्यम्। अबादिभ्यश्च द्रव्यान्तरेभ्यो गुणकर्मभ्यश्च विजातीयेभ्यो गन्धवत्त्वेन व्यावृत्तं

१. °कार्यैकारणैकार्थ° C २. °जन्यत्वात् C ३. तेन साह° C

द्रव्यजातीयम्। एवं रूपत्वेन रूपं गुणः। उत्क्षेपणत्वेनोत्क्षेपणं कर्म। तथाविधः शब्दः सदादिरूपसंपन्नो विभागजत्वेन समानासमानजातीयेभ्यो विशिष्यते। तस्माद् भवति द्रव्यं गुणः कर्म वेति संशय इति। पूर्वव्याख्यानतोऽनेकशब्देनासाधारणधर्मो लक्ष्यत इत्युक्तम्। संप्रति समानशब्दपर्यालोचनयाप्यनेकपदमसाधारणे वर्तते लक्षणयैवेत्याह—**समानधर्मस्य संशयकारणत्वेन उपयोगाद् वेति**। समानं हि प्रतियोगितया असमानं बुद्धौ सन्निधापयति। तत्र द्वयस्यापि समानशब्देन श्रुत्यर्थाभ्यामुपात्तस्य **समानस्य धर्मस्यासमानस्य च**, समानस्य संशयकारणत्वेनोपयोगादिति योजना। पृच्छति—**कस्मादिति**। अस्मदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इति भावः। उत्तरम्—**नैवमिति**। असाधारणो हि धर्मो व्यतिरेकमुखेन संशयहेतुः। स चानेकस्माद् व्यावृत्त्या सिध्यति। सा च लाक्षणिकानेकपदाधीना नासमानपदात् लभ्यत इति प्रयोजनवल्लाक्षणिकपदोपादानम्। लक्षणैव चेयम् अनेकस्माद्व्यावृत्तो धर्मोऽनेकधर्म इति विग्रहेण निर्वर्ण्यते इति। अभ्युच्चयमात्रमाह—**लाघवं वेति**। असाधारणस्य संशयकारणत्वे व्यावृत्तिः प्रयोजिकेति मन्वानश्चोदयति—**यद्यनेकेति**। परिहरति—**नैष दोष इति**। व्यभिचाराव्यभिचारौ हि संशयनिर्णययोः प्रयोजकौ, नान्वयव्यतिरेकमात्रमित्यर्थः[1]। चोदयति—**यदि तर्हीति**। सपक्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः। स चेत् संशयस्य कारणम्, हन्त, समानधर्मोपपत्तिरेव सर्वत्र संशयकारणमिति कृतम् अनेकग्रहणेनेत्यर्थः। परिहरति—**सत्यमिति**। [2]सपक्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः। स च संशयस्य प्रयोजकः। तथाप्येकस्यान्वयः साधारणोऽपरस्य व्यतिरेक इत्येतावतोभयोपादानमित्यर्थः॥

एवमनेकधर्मोपपत्तेरिति स्वमते व्याख्याय परमतव्याख्यानं दूषयितुमुपन्यस्यति—**नन्व इति**। नित्यः शब्दः श्रावणत्वात् शब्दत्ववदित्येकः पञ्चरूपोपपन्नोऽव्यभिचारी हेतुः। अनित्यः शब्दः कृतकत्वाद् घटवदिति चायमपरः पञ्चरूपोपपन्नोऽव्यभिचारी हेतुरिति। तदेतद् दूषयति—**तदयुक्तमिति**। न ह्यव्यभिचारिणौ पञ्चरूपोपपन्नावित्यर्थः। **न चायं प्रतिवादिनः प्रयोगोऽपि युक्तः** इति। विरुद्धशब्दस्यार्थो **विरुद्धार्थ** इति, स्वरूपमनयोर्विरुद्धं परस्पराभाववदित्यर्थः। **विशेषदर्शनादुपजात** इति। संशयस्य हि विशेषादर्शनं जनकम्, विशेषदर्शनं च निवर्तकमिति। स चेत् त्वन्मते निवर्तकादुत्पद्येत, अव्यभिचारिहेतुजनिताद्विशेषदर्शनात् नास्य निवृत्तिः स्यादित्यर्थः। न च यदा निवर्तकत्वमस्यास्ति तदा जनकमपीत्याह—**न हि विशेषदर्शने सतीति**॥

---

१. °मात्रे इत्यर्थः J २. सत्यं सपक्षा° C

स्यादेतत् । प्रत्यक्षमेव स एवायं गकार इत्येवमाकारं प्रत्यभिज्ञासमाज्ञातं शब्दस्य स्थेमानमाकलयत्,

तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ॥

इति नित्यत्वं परिच्छेत्स्यतीत्यत आह—**नायमर्थः प्रत्यक्षस्य विषयः**। तदेव हि प्रत्यक्षं संशयस्य निवर्तकं यदनन्यथासिद्धम्, यथौष्ण्यग्राहि वह्नेः। इदं तु सादृश्येनापि संभवात् स्वयं सन्दिग्धं सन्न संशयोच्छेदायालमित्यर्थः। मा भूत् प्रत्यक्षस्य विषयः, भवति त्वागमस्य। नो खलु क्षणिकः शब्दोऽर्थप्रत्यायने समर्थः, तस्यान्वयव्यतिरेककालानवस्थायिनोऽशक्यसमयत्वेनार्थप्रतिपत्तेरनुपपत्तेः। तस्माद् यद्यपि साक्षान्नित्योऽहम् इत्यागमो नाभिधत्ते, तथापि विदितसंगतेरर्थप्रत्ययं कुर्वन्नात्मनो नित्यतामाक्षिपन्नित्यताविषयो भवति। यथाहुः

नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्[1] ॥

इत्यत आह—**नागमविषयः**। यद्यपि वर्णव्यक्तयः क्षणिकाः, तथापि स्वस्वसामान्यविशेषगत्वाद्युपहिता गवादिव्यक्तय इव गोत्वाद्युपधानाः शक्यसंकेता इति न नित्यतामाक्षिपत्यागम इत्यर्थः। **भवतु किं नो बाध्यत** इति। न खलु चन्द्रमसः परभागे हरिणसदसद्भावसन्देहः शक्यः कदाचिदप्युच्छेत्तुमस्मदादीनामित्यर्थः। **कथं न बाध्यत** इति। सन्दिग्धनित्यानित्यभावे शब्दे कृतकत्वं दृष्टमिति नानित्यत्वेन स्वभावतः प्रतिबद्धम्। तथा च न बुद्ध्यादीनामनित्यत्वं साधयितुमर्हतीत्यर्थः। **सर्वमिति**। [2]कृतकत्वप्रयत्ननान्तरीयकत्वप्रत्ययभेदभेदित्वादीत्यर्थः। **सर्वं चानुमानमिति**। यदि च पञ्चरूपोऽपि हेतुः, संशयकारणं [3]सर्वमेवानुमानमिति सर्वमप्रमाणं स्यादित्यर्थः। **वैनाशिकाः प्राहुः नित्यासंभवादिति। न, बाधापरिज्ञानादिति**। बाधाविषयापरिज्ञानादित्यर्थः। स्वदेशे परोत्पत्तिप्रतिबन्धकत्वं **सप्रतिघत्वम्**। **सौत्रान्तिकमते** हि रूपं सप्रतिघमिष्यते मूर्तं च, नित्य एवेति वा अनित्य एवेति वा **अभिलापो** नोपपद्येत, स्थाणुरेवेति वा पुरुष एवेति वा अभिलापः। चोदयति—**नैवं भविष्यतीति**। मा भूदभिलाप इत्यर्थः। परिहरति—**व्याहतमिति**। स एवैकग्रन्थेनाह—**ननु चेति** ॥

तदेवं पञ्चरूपयोर्हेत्वोरेकत्र समवायाभावः[4] उक्तः। यदि पुनरसत्प्रतिपक्षरूपरहितयोरेकत्र संभवोऽङ्गीक्रियते, तथा च संशयहेतुत्वमित्यभिप्रायेण शङ्कते—**अथ कृतकत्वेति**,

---

१. मी. सू. सू. १. १. १८. २. कृतकत्वं प्र° C ३. सर्वमनुमानमेवमिति C
४. समावेशाभा° C

निराकरोति—**तथापीति**। प्रत्येकं सत्प्रतिपक्षत्वम्, मिलितयोस्त्वसाधारणत्वम्, तादृशः अन्यत्रादर्शनादित्यर्थः। तत् किमिदानीं सत्प्रतिपक्षतया कृतकत्वमसाधनमेव शब्दानित्यत्वे, तथा च बहु व्याहतं भवतीत्याशयवान् पृच्छति—**यदा पुनरेवंभूताविति**। उत्तरम्—**तदा तयोरिति**। ननु कृतकत्वस्य साध्यत्वात् श्रावणत्वस्य च सिद्धत्वात् प्रथमभाविना नित्यत्वानुमानेन सिद्धाङ्गकेनापहृतविषयं चरमभाविसाध्याङ्गकमनित्यत्वानुमानमेव बाध्यताम् इत्यत आह—**यत्नश्च क्रियमाण** इति। सिद्धमपि श्रावणत्वमनुनासिकताद्यनित्यधर्मसाधारणतया सव्यभिचारं सन्नित्यत्वस्य साधनं न भवितुमर्हतीति। कृतकत्वस्य तु पाञ्चरुप्यम्। नित्यत्वस्य च प्रमाणबाधनमुपपादयिष्यत[1] इत्यर्थः॥

विप्रतिपत्तेरित्यस्य व्याख्यानम्—**विप्रतिपत्तेरिति**। यद्यपि विरुद्धा प्रतिपत्तिर्ज्ञानं विप्रतिपत्तिः, तथापि तस्या वादिप्रतिवादिगताया अत्यन्तपरोक्षत्वात् संशयकारणत्वानुपपत्तेः स्वकार्यं प्रवादं लक्षयतीत्यर्थः। अत्र **भाष्यकारः** उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्वं मत्वा समानधर्मोपपत्तेरित्यनेन गतार्थतां परिहरन्नाह स्म—**पुर्वः समानोऽनेकश्चेत्यादि**। तदुपन्यस्य **वार्त्तिककारो** दूषयति—**तत्रेति**। नो खलु समानानेकधर्मोपलब्धौ सत्याम्, सत्यां च विशेषस्मृतौ[2] साधकबाधकप्रमाणासद्भावे संशयो भवतीत्युक्तम्। तस्मात् नोपलब्ध्यनुपलब्ध्यव्यवस्थे पृथक् संशयकारणे इति। विशेषमपि दूषयति—**समान** इति। ननु यदि नास्ति भेदः, तत् किमिदानीं सर्वेषां ज्ञातृस्थत्वाविशेषण त्रयाणामपि संशयकारणानां समानानेकविप्रतिपत्तीनामभेदः, तथा च पृथगुपादानवैयर्थ्यमित्यत आह—**समानानेकधर्मयोरिति**। पुनश्चोदयति—**समानधर्मः सर्व एवायमिति**। अयमभिसन्धिः। असाधारणो ह्यदृष्टपूर्वः क्वचिदपि न संशयं कर्तुमुत्सहते, यत् पुनरसाधारणवत्त्वं संशयहेतुत्वेनोपवर्णितं **भाष्यकृता** तत् समानमेव, न त्वसाधारणम्। यथाहुः,

अन्योऽसाधारणो धर्मस्तद्वत्तान्या च दृश्यते।
सर्वसाधारणी सा चेदिष्टा संशयकारणम्।
ततः साधारणस्यैव सिद्धा संशयहेतुता॥

यच्च **वार्त्तिककारेण** सर्वतो व्यावृत्त्या असाधारणस्य संशयकारणत्वमुक्तम्, तत्रापि तदभावस्य साधारणस्य संशयहेतुत्वे किमायातमसाधारणस्य ? यथाहुः,

---

१. वा २।२।२२ २. ०प्रमाणसद्भावे J

सर्वतोऽस्य निवृत्तत्वादभावात् संशयो यदि ।
[1]अनन्यवृत्तिरूपस्य ततोऽसाधारणस्य किम् ॥

इति ॥

विप्रतिपत्तिरपि विरुद्धहेतुद्वयसमुत्था एकस्मिन् संशयकारणम्, विरुद्धहेतुसमवायश्चासाधारण[1] एव । स च साधारणे निविशते इति सूक्तम् सर्व एवायं समानधर्म एवाभिधीयत इति । परिहरति—न, सूत्रार्थापरिज्ञानादिति । न वयं सर्वत्र साधारणमपजानीमहे अन्वयव्यतिरेकव्यभिचारवक्तृगतत्वभेदमात्रमाद्रियमाणाः कारणभेदेन त्रिविधं संशयमाचक्ष्महे इत्यर्थः ॥

वार्त्तिककारो भाष्यकारमतमुपन्यस्य दूषयति—अपरे पुनरिति । साधकबाधकप्रमाणाभावरहितं त्रयमपि न संशयकारणमित्युक्तमित्यर्थः । अपि चैतयोः पृथक् [2]संशयकारणत्वेऽतिप्रसङ्गात् निश्चयपूर्वं न प्रवर्तेत लोकः, तथा च लोकविरोध इति दर्शयति—उपलब्ध्यनुपलब्ध्योर्द्वैविध्याच्चेति । न चास्य क्वचिदाश्वासो निःशङ्कता, न चानभ्यासदशापन्ने उपलब्ध्यनुपलब्ध्यव्यवस्थायां[3] संशय इति वाच्यम्, अनभ्यासदशापन्ने हि दूराद् वह्निज्ञाने उपलब्ध्यव्यवस्थाया अपि न नागो वा नगो वेति संशेरते,[4] किं तु किंशुककुसुमनिचयो वा उषर्बुधो वेति, तत्र समानधर्मोपपत्तिरेव कारणमितरसहिता । एवमयोग्यानुपलब्धिमात्रादपि न संशयो विना समानधर्मादिदर्शनमित्युक्तम् । विकल्प्य दूषणान्तरमाह—येषां चेति । सामग्रीभेदेन भेदे त्रैविध्यं संशयस्य सामग्रीनिवेशिकारणभेदेन तु न पञ्चविधः, अपि त्वनेकविध एत्यर्थः ॥

समानानेकधर्मोपपत्तेरित्यत्र षष्ठीतत्पुरुषं मत्वा आक्षिपति—न समानधर्मग्रहणादिति । बहुव्रीहिं मत्त्वा समाधत्ते—अयं परिहार इति । अथेति । कश्चासौ विशेषश्चेति किंविशेषः अनुपलब्धपूर्वो विशेषोऽस्येत्यर्थः । उपलब्धपूर्वायां व्यक्तौ संशये तद्गता विशेषाः सुस्मूर्षिताः तज्जातीयव्यक्त्यन्तरसंशये त्वन्यगतास्ते सामान्यद्वारेणोपलब्धा एवेति—सामान्यप्रत्यक्षादिति । सामान्यवानेव सामान्यः । यथा

सामान्योऽयं धर्मसेतुर्नृपाणाम्

इति । सामान्यश्चासौ प्रत्यक्षश्चेति धर्मी तथोक्तः । अव्यवस्थितविशेषत्वं साधकबाधकप्रमाणाभाव इत्यर्थः ॥

---

१. °हेतुद्वयसमावेश° C २. °संशयहेतुत्वे J ३. °स्थायाः C ४. संशयः C

बौद्धाभिमतं संशयलक्षणमुपन्यस्यति—**अन्ये त्विति** । निगूढाभिप्रायो दूषयति—**तैरपीति** । अविदिताभिप्रायः शङ्कते—**धर्मी चेदिति** । दूषणवादी स्वाभिप्रायमुद्घाटयति—**यदि तावदिति** । बौद्धानां हि राद्धान्ते न रूपादिधर्माश्रयः कश्चिदस्ति धर्मी । ततश्च सिद्धान्तव्याकोपः । यदि त्वाह भवतु राद्धान्तव्याकोपो न हि शास्त्राश्रयो वाद इति, तत्रापि दोषान्तरमाह—**धर्मधर्मिणोश्चेति** । **अथाप्यस्मद्विशेति** । समानानेकधर्मपदवद् बहुव्रीहिरित्यर्थः । सामान्यशब्दस्तु[1] भवितरि दृष्टो यथा,

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।

इति भावः । **व्यर्थं चाभिधानमिति** । सामान्यविशेषतद्वदभ्युपगमेऽपि तद्वतोऽश्रवणात् साधर्म्यस्य सामान्यस्य विशेषा इति गम्येत, न च सामान्यस्य विशेषा इति विरुद्धार्थमभिधानं स्यादित्यर्थः । **वैशेषिकलक्षणे** हि विशेषाप्रत्यक्षादित्यनेन साधकबाधकप्रमाणाभावो दर्शितः । इह त्वसौ वक्तव्यः । तस्मात् न्यूनं बौद्धलक्षणमित्याह—**उपलब्धीत्यादि** । यदि च साधर्म्यदर्शनादित्यनेनान्वयमात्रव्यभिचारोऽभिमतो बौद्धेन ततोऽनेकधर्मदर्शनादिति वक्तव्यमिति । तदेवं सामान्यलक्षणमेकं, त्रीणि च विशेषलक्षणानीति स्थितम् ॥

तदेतानि चत्वारि लक्षणानि पुञ्जीकृत्य विचारयति—**समानेति** । यदि तावत् संशयसामान्यलक्षणे स्थिते त्रीणि विशेषलक्षणानि ततः संशयत्वेनोपगृहीतानां त्रयाणां परस्परव्यवच्छेदकमात्रं लक्षणं वक्तव्यम् । ततः समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरित्येतावन्मात्रं वक्तव्यम् । कृतमत्र शेषेण, तन्मात्रादेव परस्परव्यवच्छेदसिद्धेः । तस्मात् परस्परव्यवच्छेदमनपेक्ष्य संशयकारणकथनपरमेतत् सूत्रम् । तथा चान्यान्यपि संशयकारणानि सन्तीति तान्यपि वक्तव्यानि । यदा खल्वयमात्मनः शमादौ संशेते, किमहं चन्दनवनितादिसन्निधाने रज्ये विरज्ये वेति, सोऽयमस्यात्मनः सन्निकर्षजन्मा संशयः आन्तरस्य शमादेर्विषयस्येति समाधत्ते—**अस्तु तावदिति** । यद्यपि तावन्मात्रेण समानजातीयव्यवच्छेदसिद्धिः, तथापि विजातीयनिर्णयादिव्यवच्छेदाय[2] सामान्यलक्षणमनुवर्तनीयम् । तथा च प्रतिपत्तिगौरवं स्यादिति तल्लाघवाय शेषापेक्षा युक्ता । [3]आत्ममनःसन्निकर्षादयस्त्वत्यन्तसाधारणा विजातीयव्यवच्छेदायापि नालमिति नोपात्ता इति भावः । एवं संशयकारणावधारणादर्थात् संशयभेदावधारणमित्युक्तम् । संप्रति कारणविशेषणत्वेन[4] संशयस्वरूपमेवोच्यत[5] इत्याह—**स्वरूपनिर्देशो वेति** । विप्रतिपन्नोऽपि पुरुषः

१. शब्दो हि C २. विजातीयव्यवर्तनाय C ३. आत्मनः C ४. °विशेषेण C

५. °रूप एवो° J

संदिग्धवत् प्रतिपाद्य एवति मन्वानश्चोदयति—**संशयवदिति**। विप्रतिपन्नो न शिष्यः, किं तु जल्पवितण्डाभ्यां शिष्यतां नीत्वा सन्दिग्ध एव प्रतिपाद्य[1] इत्यभिप्रायेण परिहरति—**सत्यमिति**॥२३॥

## ॥ परिशुद्धिः ॥

सर्वेषां प्रमाणाधीनत्वात् प्रमेयस्य तु बुभुत्सिततमत्वात् ताभ्यां संशयादीनामपकर्षः। साङ्गोपाङ्गे च न्याये व्युत्पाद्ये पूर्वांगतया प्रकरणान्तरेभ्यः संशयादिप्रकरणस्योत्कर्षः। तत्रापि सन्दिग्धे प्रयोजनादिचिन्ता। न च प्रयोजनमनुसन्धाय संशय इति संशयस्य प्राथम्यमेवंलक्षणक्रमेऽपि न्यायः। उद्देश्यलक्षणयोरेकवाक्यत्वादित्यभिसन्धिना **भाष्यम्** इत्याह—**संशयेति**। अतएव द्वितीयं पाठं व्याचष्टे—**क्वचिदिति**॥

ननु संशयसामान्यलक्षणं चेदिदम्, विमर्शः संशय इत्येतावदेवास्तु। विशेषलक्षणानि चेत्? नाकृते सामान्यलक्षणे तेषामवसरः। विमर्शसंशयपदयोश्चान्यतरत् अनर्थकमित्यत आह—**अत्र चेति**। लक्षणं लक्षणवाक्यम्। विमर्श इत्यनेन च विषयतः स्वरूपतश्च सामान्यलक्षणद्वयं सूचितम्। तत्र प्रथममाह—**एकस्मिन्निति**। विरोधिचतुरर्थावमर्श इति तु परिसंख्यानमनर्थकम्। स्थाणुर्वा पुरुषो वेत्यत्र [2]द्रव्यादेः अनन्तस्यावमर्शात्। प्राधान्येन चेत्? द्वयस्यैव। न ह्ययं निषेधः प्रधान इति। द्वितीयमाह—**किंस्विदिति**। किमित्युपक्रमे। स्विदिति पक्षान्तरे। तेन किमिदमेवम् उतस्विदेवमित्यर्थः। [3]अनुवर्तनीयमावर्तनीयमर्थानुरोधात्। संशयपदसन्निधेश्च विमर्शपदं विवक्षितमर्थमाहेति तत्सहितमेवोक्तवानिति परस्परनिषेधवदुभयविधिप्रधान एकः। परस्परविधिमदुभयनिषेधप्रधानोऽपरः। परस्परविरहरूपविधिनिषेधप्रधानोऽन्य इति यथासंख्यं विशिष्टः संशयो लक्ष्य इत्याह—**अत्र विशिष्ट** इति। लक्ष्यपदं लक्ष्यपदार्थ इति। गुणगतं सादृश्यमवान्तरसामान्यविशेष एव। यतस्तुल्यारोहपरिणाहाविमाविति प्रत्ययो भवति, तमेव व्यक्तिकारणमुखेन दर्शयति—**संख्यापरिमाणेति**। महत्त्वदीर्घत्वसामान्यधर्मयोग इति। महत्त्वदीर्घत्वसामान्यमात्रधर्मयोग इत्यर्थः। इह **वार्तिककारेण** समानधर्मोपपत्तेरित्यादौ सत्तामात्रेण संशयाहेतुतया उपलब्धेरश्रुत्या च पूर्वपक्षयित्वा समाधानत्रयमभिहितं तद्विवेचयति—**यद्यपीति**। प्रथमेऽनुपपत्तिशब्दः[4] सत्तावाचकः तत्परश्च। उपलब्धिस्तु विशेषापेक्ष इत्यनेनाक्षिप्यते। द्वितीये तूपपत्तिशब्दोऽयमनेकार्थोऽपीहोपलब्धिवाचक

१. प्रतिपाद्यत C २. द्रव्यत्वादे° M ३. °मावर्तनीय° om JA ४. उपपत्ति° A

उपात्तः । तृतीये तु सत्तावचन एव लक्षणयोपलब्धिपर इति । तत्र विशेषापेक्ष इति[1] पदं तदा सामान्यज्ञानमाक्षिपेत्, यदि विशेषज्ञानं निषेधेत् । न त्वेतदस्तीत्यत आह—**विशेषेति** । वाक्यसामर्थ्यादन्वययोग्यतासामर्थ्यात् । यद्यपि विशेषापेक्षशब्दः साक्षाद् विशेषोपलब्धिं न निषेधति, तथापि लक्षणया तत्परः । सा च मुख्ये बाधकात्, विवक्षिते संबन्धात् अवाचकोपादाने प्रयोजनात् प्रवर्तते । तत्र मुख्ये बाधकमाह—**न चेति** । प्रयोजनानुयोगपरिहाराय [2]लौकिकलक्षणात्वं सूचयन् दृष्टान्तपूर्वकं संबन्धमाह—**यथेति** । यथा हि गङ्गातीरयोः संयोगमन्तर्भाव्याविनाभावस्तथा अगृह्यमाणस्मरणबुभुत्सयोरेकविषयतया संशयमन्तराकृत्वा पौर्वापर्यनियमेनाविनाभाव एव संबन्ध इत्यर्थः, सौकर्यविशेषात् । [3]तत्प्रयोजनमप्यभिधातुं शक्यते । विशेषमपेक्षत इति हि विशेषापेक्षः संशय उक्तः । तथा च विशेषे जिज्ञासाजनक इत्युक्ते[4] फलमस्य दर्शितं भवति । तदिदमुक्तम्—**तस्याः संशये सति भावादिति** । एतेन फलद्वारकमपि सामान्यलक्षणमनुगन्तव्यम् । द्वितीये तु विनिगमनायां प्रमाणाभावश्चोद्यम् । तदुत्थाप्य **वार्त्तिकेणोत्तरयति—स्यादेतदिति** । तृतीये प्रयोजनाभावश्चोद्यम्, तद् **वार्त्तिकमुखेनैव** परिहरति—**न चेयमलौकिकी लक्षणेत्यादि** येन प्रयोजनमनुरुध्येतेति शेषः । ननु कृतकत्वं परिच्छेदस्य हेतुः, न व्यवच्छेदस्येत्यत आह—**अपि त्वनित्यत्वस्येति** । ननु तथापि विवक्षिततज्जातीयवृत्तित्वे सत्यन्यवृत्तिरेव धर्मः समानशब्दवाच्य इति कुतो नियम इत्यत आह—**समानो हीति** । [5]अत्रोत्तरपदस्य यावन्नावतारस्तावत् परिहारः । तस्मिंस्त्ववतीर्णे प्रसक्तिरेव नास्ति । यदि हि समानो धर्मो व्यवच्छेदहेतुरिति कुतः साधकबाधकप्रमाणाभावः, तस्यैव तदभावरूपत्वात् । स चेत् कथमसौ व्यवच्छेदहेतुः ? न चोपलब्ध्यादिपदं तदितरस्य साधकबाधकत्वं प्रतिक्षिपति ॥

ननु तस्येति [6]विशेषलक्षणमस्तीति, तस्मात् तस्मिन्नसत्यपि न वक्तव्यस्यावकाश इति दर्शयितुमियं युक्तिरुक्तेति । पौनरुक्त्यं परिहरन्नाह—**विमर्शपूर्वकमिति** । पूर्वं हि करणाकरणयोर्गुणदोषौ न चिन्तितौ, इदानीं तौ चिन्त्येते इत्यपौनरुक्त्यम् । अतएव प्रागाह—**योजयतीति** । इदानीमाह—**अवधारयतीति** । **यथा सप्तमे रस इति** । तथा हि सप्तमो रसः संशयज्ञाने धर्मितया विषयः स्याद्, धर्मतया वा ? न कदाचिल्लोक एवं सन्दिग्धे यदयं सप्तमो रसः स्थाणुर्वा पुरुषो वेति, द्रव्यं वा गुणो वेति । नाप्येवं सन्दिग्धे अयमुपलभ्यमानः पदार्थः सप्तमो वा रसो दशमं वा द्रव्यमिति ?

१. तत्र विशेषापेक्षः om M २. °लक्षणार्थं M ३. तत् om M ४. °क्तेव M ५. अयं चोत्तर° M A ६. न त्वस्ये° A विशेषकारणम° A

सप्तमो रसः किमस्ति नास्ति वेति सन्देहो भवत्येवेति चेत् न, अननुभूते स्मरणाभावात्। अस्मृतस्य च संशयाविषयत्वात्। **नौदोलेति**। सदृशदर्शनेऽप्यस्मरणं तु पटुत्वभ्यासादरप्रत्ययाभावात्। यथा हि तथाविधप्रत्ययजन्यः संस्कारः, तथा तदुद्बोध्योऽपीति। **द्वे द्वित्वेनेति**। समुदितयोरानन्तर्यं विवक्षितमित्यर्थः ॥

अनेकधर्मपदं लक्षणया असाधारणं धर्ममाह—**तत्रैकदेशिव्याख्यादूषणव्याजेन** मुख्ये बाधकमाह **वार्त्तिककृत्** इत्यत आह—**अनेकेति** न सर्वत्र द्रव्यादौ संयोगजत्वमतो विशेषयति—**कार्यद्रव्य इत्यादि**। अतो मुख्ये बाधकं दृष्ट्वा जघन्यां वृत्तिम् आलम्ब्य **भाष्यकृता सूत्रं** व्याख्यातमिति दर्शयन्निव **वार्त्तिकम्** अवतारयति—**भाष्यकृद्व्याख्ययेति**। **पुनः पृच्छति**। यदि लाक्षणिकमिदं पदं कः संबन्ध इत्याशयवानिति शेषः। अवध्यवधिमद्भावः संबन्धः[1] इति संकलय्य **वार्त्तिकार्थ**माह—**एतदुक्तं भवतीति** धर्मपदसामानाधिकरण्येन विशेषशब्दस्य भावसाधनत्वं निवर्तयतीत्याह—**अध्याहृतेति**। यद्येवमलग्नकं तर्हि भाष्यं तस्यानेकस्येत्यत आह—**संबन्धसामान्येति**। बीजान्तरं संबन्धान्तरम्। पूर्वं हि विभागजत्वादिना स्वाश्रय एव शब्दस्तद्विपरीतेभ्यो व्यावर्तत इत्युक्तम्। इदानीं तु स्वाश्रयाच्छब्दान्तर एवेति न [2]निवर्त्यत इत्यभिसन्धिः। अतो निवर्त्यनिवर्तकभावः संबन्धो भवतीति **बीजान्तरमिति**। तस्यानेकस्य धर्मो निवर्तकतया यः स एवानेक इत्युच्यते इति व्याख्यातमित्यर्थः ॥

नन्वेवं सति किं लक्षणया यावता मुख्य एवानेकशब्दोऽस्तु। तथा हि पूर्वम् अनेकस्य धर्मोऽनेकधर्मः साक्षात् समवायादिवृत्त्या चेत् समानपदेनैव गतार्थ इति मत्वा [3]दूषितः। निवर्तकतया त्वनेकस्य संभवत्येवेत्यत आह—**न त्वत्रेति**। कुतः? **दर्शयिष्यतीति**। यदि संबन्धिवचन एवानेकशब्दः स्यान्न धर्मशब्देन समानाधिकरणः स्यात्। तथा च बहुव्रीहेरलाभे धर्मी न लभ्येतेत्यर्थः ॥

एवं भाष्यानुगतं **वार्त्तिक**मुपसंहृत्य स्वतन्त्रं **वार्त्तिक**मुत्थाप्य लक्षणानुरोधेन तावद् व्याचष्टे—**प्रकारेति**। एकमेकजातीयम्। अनेकं नैकजातीयं, भिन्नजातीयम् इत्यर्थः। तेन विशेषणविशेष्ययोर्विशिष्टबुद्धिहेतुत्वेनाभेदमुपचर्य विशेष्यवचनोऽयम् अनेकशब्दो विशेषणे धर्मे प्रयुक्तः इत्याशयवानाह—**भेदाभेदप्रत्ययहेतुरित्यर्थ** इति। अतएवोपसंहारे वक्ष्यति—**तत्प्रत्ययहेतुरुपचारेणानेक** इति। **तदितरेभ्य इति**। द्रव्यगुणकर्मभ्यो न तु शब्देतरेभ्य एव, तद्व्यतिरेकस्य संशयं प्रत्यनुपयोगात्।

१. इति om MA २. व्यावर्त्यत M ३. दूषयति M

इममेवार्थं **वार्त्तिकेन** संवदति—**तदिदमाहेति** ।यद्यप्यसाधारणे धर्मे विवक्षिते एकप्रत्ययहेतुरिति मन्दप्रयोजनम्, तथाप्यसाधारणात् संशयो भवन् तज्जातीयतायामेव पर्यवस्यति । न तु तद्व्यक्तितायाम् तज्जातीया अपि हि विधर्माणो दृश्यन्ते । न तु त एवेत्येतत् सूचयितुमनेकव्यक्तिनिष्ठता [2] दर्शिता । अत एकवचनं समर्थयति—**जात्येति** ॥

इदानीमुदाहरणानुरोधेन व्याचष्टे—**सदादिरिति** । **अत्रेति** व्याख्याने, अनुरूपम् उदाहरणमाहेत्यर्थः । उदाहरणपरतां व्याख्यानस्य स्फुटयितुमसाधारणावसरे साधारणमपि सदादि किमित्युपन्यस्तमिति शङ्कां निवारयति—**द्रव्यत्वादिकोटीति** । **सत्** सत्तावत् । **अनित्यं** [3]प्रध्वंसयोगि । **द्रव्यवत्** समवायिकारणतया द्रव्यमस्यास्ति । **कार्यं** प्रागभाववत् । **कारणं** निमित्तेतरतयापि[4] **सामान्यविशेषवत्** अवान्तरसामान्यवदिति । यत्तदवोचाम, परस्परविधिमदुभयनिषेधप्रधानः संशयो लक्ष्यो [5]द्वितीयलक्षण इति, तत् सिद्धान्तप्रसङ्गेन निषेधमुपक्रम्य विधिपर्यवसानेन दर्शयति—**द्रव्यकर्मभ्यां व्यावर्तमानः किं गुण इत्यादि** ॥

ननु चोद्यमेवैतदनुपपन्नम् । न हि विभागजे विभागे प्रमाणमस्ति । यौगपद्येनैव विभागसहस्रस्यापि समानदेशस्य जायमानत्वादित्यत आह—**अयमभिसन्धिरिति** । यद्यपि वंशदलयोर्विभागानन्तरं संयोगनाशः, ततो द्रव्यनाशः, ततो द्रव्यनाशविशिष्टं कालं स्वतन्त्रं वा अवयवमपेक्ष्य दलयोर्वर्तमानो विभाग आकाशादिदेशाद् विभागं करोतीति वैशेषिकाः, तथाप्यप्रकृतत्वात् संयोगनाशद्रव्यनाशक्रमो नोपन्यस्तः । प्रकृतस्य हि कर्मणो विभागद्वयजनकत्वं क्रमेण वा स्याद्, यौगपद्येन वा । न तावदाद्यः, कर्मणो विभागारम्भेऽनपेक्षतया अविलम्बकारित्वनिश्चयात् । अपेक्षायां वा, आद्यमपि विभागम् अनन्तरमेव न कुर्यात् । उत्तरसंयोगे कर्तव्ये पूर्वसंयोगप्रध्वंसापेक्षेति विलम्बः । आगन्तुकभावमभिसन्धाय तु नैरपेक्ष्यमुक्तम् । न द्वितीयः, यदा आकाशादिदेशाद् विभागं करोति कर्म न तदावयवान्तरादिति स्थितिरिति वैशेषिकाः । तदेतद् यथाश्रुतमुभयमप्यनुपपन्नम् । आद्ये विभागे हि कर्तव्ये कर्मणो निरपेक्षत्वात् [6]स एव कालः । द्वितीये तु कर्तव्ये प्रथमानन्तरकाल एव नैरपेक्ष्यम् । अतो न कालातिपात इत्येवमप्युपपत्तेः । यदेत्यादिस्थितिस्तु [7]विकसत्कमलकुड्मलेष्वेव भग्नेत्यतोऽस्यार्थमाह—**अवयवक्रिया हीति** । **कार्यैकार्थेति**—प्रत्यासत्तिसूचनम् ॥

---

१. ॰धारणत्वात् M २. सूचिता M ३. प्रध्वंसि M ४. अपि om M ५. द्वितीये M ६. स एव काल om M ७. ॰दलेष्वेव JA

ननु भवत्वेवं तावदुक्तव्याप्तेरनवधारणम्, तथापि या क्रिया द्रव्यानारम्भकसंयोगप्रतिद्वन्द्विनं विभागमारभते, नासौ द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनमपि। तथात्वे वा यतः कुतश्चित् कर्मणो युगपदुभयविभागोपपत्तौ[1] चलत्येवावयवे [2]सर्वद्रव्यनाशप्रसङ्गः, न चैवम्। तस्माद् यदनारम्भकसंयोगप्रतिद्वन्द्विजनकं तन्नारम्भकसंयोगप्रतिद्वन्द्विजनकं कर्मेति सिद्धे विपर्ययोऽपि सिद्ध इति तत्राह—क्रियावैलक्षण्यात्विति। अयमर्थः। विभागस्य तावद्वैलक्षण्यमवश्यमभ्युपेतव्यम्, अन्यथा नियमानुपपत्तेः। तदनुरोधात् कर्मणोऽपि जातिकृतं सहकारिकृतं वा वैलक्षण्यमवश्यं स्वीकर्तव्यम्। तदेतस्य वैलक्षण्यम् आरम्भकानारम्भकसंयोगप्रतिद्वन्द्विविभागद्वयजनकतया एकत्र, अन्यत्र त्वनारम्भकसंयोगप्रतिद्वन्द्विविभागमात्रजनकतया पर्यवस्यति[3], आहोस्विदारम्भकसंयोगप्रतिद्वन्द्विविभागमात्रजनकतयैकत्र, अन्यत्र त्वनारम्भकसंयोगमात्रप्रतिद्वन्द्विविभागजनकतयेति न नियन्तुं शक्यते। अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वं हि कर्मण उत्सर्गः। तस्मिन् [4]सत्येव कुतश्चिद् विशेषादारम्भकसंयोगप्रतिद्वन्द्विनमपि विभागं करिष्यति, को विरोधः? यथानारम्भकोत्तरसंयोगजनकत्वे सत्येव कुतश्चित् विशेषादारम्भकोत्तरसंयोगजनकत्वमपि कर्मणः, अन्यथा तत्राप्यनयैव दिशा कारणमात्रसंयोगपूर्वकाः कारणाकारणसंयोगाः कल्पनीयाः स्युः। यथा च तत्र क्रमे प्रमाणं नास्ति तथेहापीति। यदेकान्तविभागमेकमवयवद्वयमात्रवर्तिनम्, अन्या तु विभागद्वयमवयवद्वयवर्तिनमवयवानवयववर्तिनं चेति। यथा चैतद्वैलक्षण्यं तथा वरमेवमस्तु यदेकानारम्भकसंयोगप्रतिद्वन्द्विनमन्या तु [5]आरम्भकानारम्भकप्रतिद्वन्द्विनं जनयतीत्यर्थः॥

तस्मात् कारणमात्रविभागपूर्वके कारणाकारणविभागे प्रमाणं नास्तीति नाभ्युपगम्यत इत्येतावन्मात्रव्यक्तीकरणफलोऽयमनभ्युपगम इत्याह—तस्मादिति। कारणाकारणविभागपूर्वकस्तु कार्याकार्यविभागः प्रामाणिक इत्यभ्युपगम्यत इत्याह—यस्त्विति। कार्यैकार्थसमवायस्तरुमधिकृत्य क्वचित् पाठः। कार्यकारणैकार्थसमवायः। सोऽङ्गुलीमधिकृत्येति। स इति। असाधारणीभूतनिमित्तजातीयासमवायिकारणजन्य इति प्रतिज्ञार्थः। आद्यशब्दत्वादिति हेत्वर्थः। यद्यपि विभागापेक्षविभागासमवायिकारणम् असाधारणं शब्दे तदेव वक्तुमुचितम्, तथापि कारणमात्रविभागजविभागमभ्युपेत्योक्तं वार्त्तिककृतेति तथैवाह—तदेवमिति, [6]एतदपि व्यभिचार्य समर्थयति—तदपीति।

---

१. °गोत्पत्तौ JA  २. सर्वत्र द्रव्य° M  ३. जनकतश्च एकत्र अन्यतर तत्रत्वन°…वस्यतु M  ४. असत्येव M  ५. आरम्भकप्रति° A  ६. एतदेवं M

यद्यप्येवमपि विभागजत्वादिति हेतुरदोष एव, न हि विभागाद् द्रव्यस्य जन्म संभवति, कर्मणो वा। स हि द्रव्यानारम्भकसमवेतोऽकारणमेव, आरम्भकसमवेतस्तु संयोगनाशद्वारा विनाशक एव, कर्मणोऽपि कारणं विभागो भवन्न तावदाद्यस्य तस्मिन्नसति विभागस्यैवानुपपत्तेः। तदुत्तरस्यापि पूर्वकर्मनिवृत्तौ जन्म। यदा तु[1] तन्निवृत्तिरुत्तरसंयोगात्, तदा विभागस्यापीति कथमुत्तरकर्मजन्म विभागात्? तस्मादसन्दिग्धव्याप्तिकं विभागजत्वं शब्दस्य गुणत्वे प्रमाणमेव। न च तदवान्तरविशेषमादायासाधारण्यं दोषः। तथा सति धूमोऽप्यगमकः स्यात्। तथापि भाष्योक्तोदाहरणव्युत्पादनमात्रमिदमिति मन्तव्यम् ॥

ननु तुल्यजातीयेष्वित्यादिविवक्षितविपरीतापादिकेयं युक्तिरित्यत आह— यद्यपीति। पूर्वैव युक्तिरियं भाष्यकारगौरवादुक्तेत्यर्थः। पूर्वस्मारणेन प्रकारान्तरत्वं स्फुटयन्[2] वार्त्तिकमवतारयति—पूर्वमिति। समानो हि धर्मः पक्षे वर्तमानः सपक्षविपक्षधर्माभ्यामेकजातीयः, तद्रूपप्रतिषेधश्चायमनेक इति। तथा च पक्षे वर्तमानस्य सपक्षविपक्षधर्माभ्यां विजातीयत्वमुक्तं भवति। यश्च पक्षगः सपक्षविपक्षधर्माभ्यां[3] विजातीयो धर्मः, सोऽसाधारण एवेति भवत्यभिधेयाविनाभूतत्वात् लक्षणाविषयः। तदिदमुक्तम्—लक्षणयैवेति। वार्त्तिकं योजयति—समानेति। समानशब्देन प्रतियोगितया बुद्धावसमानेऽप्युपस्थापिते संशयकारणत्वे च तस्य प्रमाणसिद्धे तस्मिन् वक्तव्ये यदनेकपदमुपादत्ते सूत्रकारस्तेन जानीमो नूनमयमेवार्थोऽनया वचोभङ्ग्या अनेन दर्शित इति योजनार्थः। एतेन सर्वेषूक्तप्रकारेषु सूत्रकारस्य संप्रतिपत्तिर्दर्शिता भवति ॥

पृच्छतीत्यादिना लक्षणप्रकाराणां प्रयोजनं दर्शितमित्यनुगन्तव्यम्। प्रत्यभिज्ञानं तावद्व्यक्तिविषयकं नास्त्येव गकारादाविति द्वितीये व्युत्पादनीयम्। यदाप्यस्ति तदाप्यस्य विषयः किं व्यक्तिरुतजातिरिति विषयतः सन्दिह्यते। यदापि व्यक्तिरेवास्य विषयः, तदापि प्रमाणमप्रमाणं वेति सन्देह इत्यभिप्रायवान् संमुग्धमाह सादृश्येनापि संभवति, स्वयं सन्दिग्धं सदिति। यद्यपि गवादिव्यक्तय इव गोत्वाद्युपधाना इति जातिमात्रपदार्थवादी न स्वीकरोत्येव, तथापि स्वसिद्धान्तदार्ढ्येन परोऽप्येवमङ्गीकारयितव्यः। अन्यथाभिधेयस्याविनाभावप्रतीतिरेव कथं व्यक्तिभिः? तदभावे च कथं लक्षणापीति? कथं नेत्यादि। न च वाच्यं शब्दस्य तथाभावसन्देहेऽपि घटादौ निश्चितत्वेन व्याप्तिग्रहो यदि स्यात् को दोष इति। सर्वोपसंहारेण हि व्याप्तिनिश्चये

१. च A २. सूचयन् M ३. °विपक्षाभ्यां° JA

यत्कृतकं तदवश्यमनित्यमिति कृतकत्वं शब्दे निश्चयमेव कुर्यात्। सत्प्रतिपक्षतया शब्दे साध्यसिद्धिं न करोति। अप्रतिहततया तु बुद्ध्यादौ करोतीति चेत्—न, प्रतिपक्षसाधने व्याप्तिमदूदूषयति सत्यपि साध्यसिद्धेरविरोधात्। विरोधेऽदुष्टादपि न साध्यसिद्धिरिति सर्वानुमानोच्छेदप्रसङ्गः। इमं चार्थमनन्तरमेव वक्ष्यते। व्याप्तिदोषे तु सर्वोपसंहाराभावात् कथं तद्बलेन बुद्ध्यादौ साध्यसिद्धिरिति सन्दिग्धतत्त्वं शब्दं विहाय व्याप्तिरिति चेत्? एवं तर्हि[1] शब्दादन्यत्वे सति कृतकत्वादिति वाच्यम्। तथा च यदि दैवात् शब्दोऽप्यनित्य एव वस्तुतः, तदा असमर्थविशेषणत्वापत्तिरिति सन्दिग्धासमर्थविशेषणत्वमिति। तस्मात् सुष्ठूक्तं सन्दिग्धे नित्यानित्यभावे शब्दे कृतकत्वं गतमिति नानित्यत्वेन स्वभावतः[2] प्रतिबद्धमिति॥

प्रत्ययभेदभेदित्वं कारणतीव्रत्वादितारतम्येन तीव्रतीव्रतरादित्वं प्रत्येकं सत्प्रतिपक्षत्वम् इत्येकैकस्यान्वयतो व्यतिरेकतो वोभयकोट्यनुपनायकतया न संशयहेतुत्वम्। नापि निश्चयहेतुत्वमसत्प्रतिपक्षत्वरूपवैकल्यादित्यर्थः। मिलितयोस्त्वसाधारणत्वमिति। तथा च तेनैव रूपेण संशयकारणत्वं नान्यथेत्यर्थः। अनुनासिकत्वादयो हि सामान्यविशेषाः प्रत्यक्षा भवन्तः प्रत्यक्षव्यक्तिवृत्तय एव भवितुमर्हन्ति। न चान्येन्द्रियेण व्यक्तिरन्येन जातिरुपलब्धिगोचरः। तथा चानुनासिकत्वादिसामान्याश्रयभूताया एव व्यक्तेः श्रावणत्वेऽप्यनित्यत्वमुभयवादिसिद्धम्। केवलं स व्यक्तिराकाशाश्रया वा, अन्याश्रया वेति विप्रतिपत्तिः। सेयमास्तां तावत्॥

ननु तथापि **नैयायिकानां** मते शब्दाश्रया एवानुनासिकत्वादयो धर्मा, न च पक्षेणैव व्यभिचारः। न, अवर्णात्मकेनापि तद्धर्मशालिनानैकान्तिकतोपपत्तेः। तस्यापि पक्षत्वमिति चेत्—न, तद्दर्शनेऽनैकान्तिकोऽयमिति विरोधमुखेनाप्युद्भावनात्, वस्तुतः शब्दधर्मत्वे च कालात्ययापदेशदोषात्। अप्रयोजकाश्च रूपादयो नित्याश्चक्षुराद्येकैकेन्द्रियग्राह्यत्वात्[3] रूपत्वादिवदित्यनेन समानयोगक्षेमत्वादिति॥

**विप्रतिपत्तेरित्यादि**। अस्य च लक्षीभूतस्य संशयस्य परस्परविरहरूपविधिनिषेधप्राधान्यात्। अस्त्यात्मा नास्त्यात्मेत्युदाहरणं तु **भाष्यकृतैव** दर्शितं स्फुटमिति न प्रपञ्चितं **वार्तिकटीकाकाराभ्याम्**। उदाहरणमात्रं चैतत्। न न्विदमेव आदरणीयम्। आत्मनोऽनुपलब्धचरत्वे स्मृत्यनारूढस्य संशयानास्पदत्वात्। उपलब्धचरत्वे

---

१. तर्हि om M  २. स्वभावः A  ३. ग्राह्यत्वात् तस्समान° M; ग्राह्यत्वात् रूपत्वात् रूपत्वादि° J

वा सर्वथापह्नवायोगात् । एतच्च **तृतीये** प्रपञ्चनीयमितीहोपेक्षितम्, शब्दो नित्य इत्येके । नेत्यपरे इत्यादि तूदाहरणीयम् ॥

**कारणभेदेनेति** । लक्षणभेदरूपेण त्रिविधम्, विधिप्रधानं निषेधप्रधानं निषेधविधिप्रधानमिति । **न चानभ्यासदशापन्न** इति । अनभ्यासदशापन्नोपलब्धौ हि प्रमाणोत्तरभावानिश्चये बुद्धित्वसामान्योपलब्धेः सत्यत्वासत्यत्वसंदेह इति यद्यभिमतम्, प्रथमपदेनैव गतमेतत् । [1]ततस्तदुद्धारकेऽर्थे संदेह इह विवक्षित इति यदि, सोऽपि स्वरूपतो देशकालतः प्रकारतो वेति ? आद्यस्तावद्विरोधादेवासंगतः । न हीदमिदं न वेति संभवति । निद्राद्युपप्लवाभावनिश्चयेन तदेककारणकोटिन्युदासात् द्वितीयोऽपि निरस्तः । उपप्लवसंदेहे त्वाध्यात्मिक एव संशयः । तृतीये त्वाह—**न नागो वा नगो वेति । एवमयोग्येति** । एतावांस्तु विशेषो यत् स्थाणुर्वा पुरुषो वेत्यत्रोपलब्ध्यनुपलब्धी अनुत्पादादेवाव्यवस्थिते । प्रकृते तूदाहरणे जातमेव जलज्ञानमप्रामाण्यशंकया[2] न व्यवस्थितमिति ॥

**एवमयोग्येति** । यदि विशेषस्मृतिसहिताया अयोग्यानुपलब्धेः धर्मिणमनन्तर्भाव्य[3] संशयः स्यात्, स तावन्नात्यन्तानुपलब्धकोट्युल्लेखी, तत्र स्मृतेरभावात् । नाप्युपलब्धकोट्युल्लेखी । न हि भवति परमाणुरस्ति नवेति [4]अस्त्येव यतः । इहेति चेत् ? तर्हि देशकालादिविशेषं[5] धर्मिणमुपादायोपपद्यते । तथा च स उपलब्धः सन्नन्वयतो व्यतिरेकतो विप्रतिपत्तितो वा विशेषौ स्मारयेत्, न स्वरूपत इति पूर्वानुप्रवेश इत्यर्थः ॥

तदिदमुक्तम्—**न संशयो विना समानधर्मादिदर्शनमिति** । सामग्रीभेदेन भेदे त्रैविध्यं विषयकृतमिति । अपि त्वनेकविधः, प्रत्येकं कारणानां विषयव्यवस्थां प्रत्यहेतुत्वादित्यर्थः ॥२३॥

॥ भाष्यम् ॥

स्थानवतां लक्षणवचनमिति समानम् ।

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥**

यमर्थमाप्तव्यं हातव्यं वा व्यवसाय[6] तदाप्तिहानोपायमनुतिष्ठति, प्रयोजनं तद्वेदितव्यम्, प्रवृत्तिहेतुत्वात् । इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः, एवं व्यवसीयमानोऽर्थोऽधिक्रियत इति ॥ २४ ॥

---

१. ततः om J २. शङ्कायां J ३. योग्यानुप...मन्तर्भाव्य M ४. अस्मेरयतः M ५. विशिष्टं M ६. अध्यवसाय Cvar

॥ वार्त्तिकम् ॥

**यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्** ॥ यमर्थमधिकृत्येति व्यवसायोऽधिकारः। कस्य व्यवसायः ? सुखदुःखसाधनानाम्। इदं सुखसाधनमिति बुद्ध्वा[1] सुखावाप्तये यतते। इदं दुःखसाधनमिति चाधिगम्य दुःखहानायेति। सुखदुःखयोरवाप्तिहानाभ्यामयं लोकः प्रयुज्यते इति सुखदुःखाप्तिहानी प्रयोजनमिति। अनेन च प्रयोजनेन सर्वेऽर्थाः संगृहीता भवन्तीति। एतस्मिंश्च सूत्रार्थे परस्य दोषविवक्षया चोद्यमानस्य वक्तुमशक्तस्य व्याहारो लौकिकोऽयमर्थः प्रयुज्यतेऽनेनेति प्रयोजनमिति। न चानेन [2]किञ्चित् परीक्षाविधेः क्रियते इति न्यायाङ्गभावो नास्तीति। यथावत् लौकिकोऽयमर्थ इति। एतत् नर्ते प्रकृष्टतार्किकादन्यो वक्तुमर्हति, [3]अयमेवैकः पदार्थो लौकिको न प्रमाणादय इति। कश्चासौ लौकिक इति ? यदि प्रमाणोपपन्न इत्यर्थः, अतिदोषोऽयम्, प्रमाणोपपन्नं न वक्तव्यमिति। अथान्यो लौकिकशब्दार्थः ? तन्न बुध्यामहे कथमन्य इति। यदपि प्रयोजनं न्यायस्याङ्गं न भवतीति, [4]तदपि न युक्तम्। या खलु निष्प्रयोजना चिन्ता, नासौ न्यायस्याङ्गमिति। परीक्षाविधेस्तु प्रधानाङ्गं[5] प्रयोजनमेव, तन्मूलत्वात् परीक्षाविधेरिति ॥ २४ ॥

॥ टीका ॥

उद्देशक्रमप्राप्तस्य प्रयोजनस्य लक्षणम्—**यम—नम्** ॥२४॥ अत्रार्थशब्दो गौणमुख्यप्रयोजनावरोधार्थः। तत्र मुख्यं सुखदुःखाप्तिपरिहारौ, गौणं तु तत्साधनम्। अत्र **भाष्यं—यमर्थम्** इत्यादि। अत्राधिकृत्येत्यस्य व्याख्यानम्—**व्यवसाय** विनिश्चित्येत्यर्थः। ससाधनौ च सुखदुःखाप्तिपरिहारावर्थः। न च सुखदुःखप्राप्तिपरिहारौ स्वरूपेण प्रवृत्ति निवृत्तिगोचराविति तदुपायप्रवृत्त्यैव चेतनप्रवृत्तिगोचराविति दर्शयति—**तदाप्तिहानोपायमनुतिष्ठतीति। प्रवृत्तिहेतुत्वादिति**। यद्यपि सुखदुःखाप्तिहाने तदुपायाश्च सन्ति, तथापि सामान्येन ज्ञायमानानीच्छाद्युपहारमुखेन प्रवृत्तिहेतवः। ननु **सूत्रेऽधिकृत्ये**त्यस्ति, **भाष्ये** च **व्यवसायेति**, तत् कुतो न विरोध इत्यत आह—**व्यवसायोऽर्थस्याधिकार** इत्यादि। तदेतद् **वार्त्तिककारो** व्याचष्टे—**यमर्थमधिकृत्येति, व्यवसायेति**। पृच्छति—**कस्येति** सुखदुःखाप्तिपरिहारयोर्व्यवसायस्तत्रैव प्रवर्तयेत्। न चानयोः प्रवृत्तियोग्यता। न चान्यनिश्चयोऽन्यत्र प्रवर्तयति, अतिप्रसङ्गादिति भावः।

---

१. ज्ञात्वा C २. न्यायस्य किञ्चित् क्रियते C ३. °मेव च C ४. अपि om C
५. अङ्गं om J

उत्तरम्—**सुखदुःखसाधनानामिति**। ततश्च प्रतीतिप्रवृत्त्योः संप्रतिपत्तिरित्यर्थः। सर्वव्यापितामस्य दर्शयति—**अनेन प्रयोजनेनेति**। वितण्डाया अपि प्रयोजनमुक्तं प्रथमसूत्रे। **चोद्यमानस्य** प्रवर्त्तमानस्येत्यर्थः। शङ्कते—**यदीति**। लोक्यतेऽनेनेति लोकः प्रमाणम्। **तदन्वितः** तदुत्पन्नः। न च प्रमाणमीदृशम्, अनवस्थाप्रसङ्गादिति भावः। निराकरोति—**अतिदोषोऽयमिति**। यथा च प्रमाणस्य प्रमाणोपपन्नता न चानवस्था[1], तथा **द्वितीये** निवेदयिष्यते[2]। न च प्रसिद्धतरतया न प्रयोजनं लक्षणीयम् इति युक्तम्, कथमस्य [3]प्रयुक्तौ साधनत्वम्, क च प्रयोजयति, कथं च व्यापकमिति सर्वस्य परीक्षकप्रवेदनीयत्वात्। **अथान्य इति**। अप्रामाणिको लौकिक इति। यथा

वटे वटे वैश्रवणः

इति। निराकरोति—**तन्न बुध्यामह इति**। प्रयोजनस्य प्रामाणिकत्वादित्यर्थः। यदप्युक्तं **न्यायस्याङ्गं प्रयोजनं न भवति**, तस्मात् न वक्तव्यमिति, तन्न युक्तम्। **या खलु निष्प्रयोजनेति** न ब्रूमः प्रयोजनं न्यायस्याङ्गमित्यपि[4], मुख्यं प्रयोजनमेव हि तत्र स्याद् यद्दते पुरुषादन्यार्थमिति। प्रयोजनवांस्तु न्यायो निष्प्रयोजनां तद्गतां चिन्तामङ्गीकरोति, फलवत्सन्निधावफलं तदङ्गमिति न्यायात्। तस्मादनङ्गमपि प्रयोजनं परीक्षाया मूलं स्वर्ग इव सेतिकर्तव्यताकस्य यागाद्यनुष्ठानस्येति सिद्धम्[5] ॥२४॥

॥ परिशुद्धिः ॥

पूर्वाङ्गत्वाविशेषेऽपि[6] संशये सति प्रयोजनानुसंधानात् ततः प्रयोजनस्यापकर्ष इत्युक्तम्। प्रयोजनमनुसंधाय च तत्साधनीभूतन्यायमनुसन्धित्सतो दृष्टान्तानुसरणमिति दृष्टान्तादस्योत्कर्ष उद्देशे। सैव संगतिरिहापीति आह—**उद्देशेति**॥

अर्थशब्दस्य लक्षणेऽकिञ्चित्करत्वादाधिक्यं मन्वानस्तात्पर्यमाह—**अत्रेति**। अर्थपदं **भाष्यकारेण** अनूद्यापि न विवृतमित्यत आह—**ससाधनाविति**। नन्वेवं सत्युत्तरभाष्यविरोधः, तदाप्तिहानोपायमनुतिष्ठतीत्यत्र तच्छब्देनार्थस्य परामर्शात्। सुखदुःखाप्तिहानोपायमिति च प्रकृतसंगतेरित्यत आह—**न चेति**। अत्र च **टीकायां यद्यपि तथापीति** पदचतुष्टयमध्याहरन्ति। **लोक्यत इत्यादि**। तथा च प्रामाणिकत्वादेव प्रयोजनं न वक्तव्यमिति वाक्यार्थः। नन्वेवं सति प्रमाणमपि न व्युत्पाद्यम्। तच्च

---

१. °पन्नताऽनवस्था C २. न्या. सू. २।१।१८ ३. प्रवृत्तौ J ४. मिति किंतु J ५. युक्तम् J ६. विशेषि A

त्वया व्युत्पादितमित्यत आह—न च प्रमाणमीदृशमिति । यथा चेति । तथा च प्रमाणोपपन्नं न वाच्यमिति वदतः स्वचरितविरोध इत्यर्थः ॥

कथमस्य प्रयुक्तौ साधनत्वं सतोऽसतो वा ? असतोऽपि स्वज्ञानद्वारा व्यापारान्तरेण वा ? क्व च प्रयोजयति, स्वात्मन्येव वा स्वसाधने वा ? कथं च व्यापकं[1] स्वरूपेण, कर्मविद्याद्वारा वेति परीक्षासाध्यमित्यर्थः । न ब्रूमः प्रयोजनं न्यायस्य अङ्गमुपकारकम्, किं तु प्रयोजनवान् न्यायस्तद्गताचिन्ताङ्गीकरोतीति । यावद् वाक्यं न समाप्यते तावदेव । ननु चिन्तापि नाङ्गम् । न हि न्यायान्निर्णयश्चानिर्णयश्च । न च निर्णयादन्यत् प्रयोजनं न्यायस्य । तस्मात् किमनेन चिन्तितेनेति शंकामपनेतुमाह—मुख्यमित्यादि । गौणं प्रयोजनं मुख्यस्यैव प्रयोजनस्य कृते उपादीयते । मुख्यमपि यद्यन्योपकारार्थमुपादीयेत, मुख्यतामेव जह्यात् । एतदेव हि मुख्यस्य मुख्यत्वम्, यदनन्यार्थतया पुरुषापेक्षितत्वम् । न च निर्णय एवमित्यर्थः । वाक्यशेषमाह—प्रयोजनवांस्त्विति । मुख्यप्रयोजनवानेव न्यायो गौणप्रयोजननिर्णयकारणतयोपादेयो यतः, अतस्तद्गतां मुख्यप्रयोजनगतां चिन्तामभिसन्धानमङ्गीकरोति अङ्गतया अपेक्षते । एतदुक्तं भवति, यद्यपि न प्रयोजनं न्यायस्याङ्गं साध्यत्वात्, तथापि तदभिसन्धानमङ्गम् तदन्तरेण न्यायस्याप्रवृत्तेः । निष्फलस्यापि च स्वयं फलवन्न्यायप्रवर्तकतया तत्सन्निधेः । यथा स्वर्गस्य यागानङ्गस्यापि अभिसन्धानं स्वयमफलमपि यागप्रवृत्तिं प्रति कारणतया संनिधीयमानमङ्गमिति । एतदेवोपसंहारव्याजेनाह—तस्मादिति । अन्ये तु, किं तु मुख्यमित्यवच्छिद्य व्याचक्षते, प्रधानमुद्देश्यमिति यावदिति । तदाप्येवमेवोत्तरत्र नेयमिति । अक्षरार्थस्तु वार्त्तिकस्य या खलु निष्प्रयोजना चिन्ता प्रयोजनाभिसन्धानशून्यः संशयो नासौ न्यायस्त प्रवर्तक इति स्फुटत्वान्नोक्तः ॥२४॥

लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

॥ भाष्यम् ॥

[2]लोकसामान्यमनतीताः लौकिकाः, नैसर्गिकं वैनयिकं बुद्ध्यतिशयम् अप्राप्ताः । तद्विपरीताः परीक्षकाः, तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते, तथा परीक्षका अपि, सोऽर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति, दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति, अवयवेषु चोदाहरणाय कल्पत इति ॥२५॥

---

१. व्यापादकं A २. °साम्यमन° Cvar

॥ वार्त्तिकम् ॥

**लौकिकपरीक्षकाणामिति सूत्रम्** ॥२५॥ बुद्धिसाम्यविषयोऽर्थो दृष्टान्त[1] इति सूत्रार्थः । एवं चाकाशावरोध[2] इति । यदि पुनरेवमवधार्येत लौकिकानां परीक्षकाणां च यो विषयः स दृष्टान्त इत्यलौकिकार्थो न दृष्टान्तः स्यादाकाशादिः । उदाहरणत्वेन तु लौकिकपरीक्षकविषयस्याभिधानं न[3] पुनर्लौकिकपरीक्षकाणामेवेति ॥

**सोऽयं दृष्टान्तः** सारूप्यव्युत्पत्त्यर्थो वा स्यात्, असिद्धसाधनार्थो वा ? यदि तावत् सारू[4]प्यव्युत्पत्त्यर्थो, नोपमानाद्भिद्यते । अथासिद्धसाधनार्थो नोदाहरणाद् भिद्यते । यद्युपमानं प्रमाणेऽन्यर्भावः । अथोदाहरणमवयव इति । न पृथग्दृष्टान्तोऽस्तीति । इदं तूत्तरमप्रतिसमाधेयमिति पश्यामः । कस्मात् ? त्रयस्याप्यपरिज्ञानात् । एवं ब्रुवता न दृष्टान्तो नोपमानं नोदाहरणं विज्ञातमिति । सारूप्यव्युत्पत्त्यर्थं तावदुपमानं न भवतीति वर्णितम् । दृष्टान्तः सारूप्यव्युत्पत्त्यर्थः । असिद्धसाधनार्थो वेति दृष्टान्तो न भवति । उदाहरणार्थमुदाहरणं वर्णयिष्यन्तो[5] वक्ष्याम इति ॥२५॥

॥ टीका ॥

क्रमप्राप्तं दृष्टान्तं लक्षयति—**लौकि—न्तः** ॥२५॥ दृष्टान्त इति लक्ष्यनिर्देशः, शेषं लक्षणम् । साध्यसाधर्म्यात् तद्धर्मभावित्वेनार्यते[6] तथा साध्यवैधर्म्यादतद्धर्मभावित्वेनार्यते[7] यः सोऽर्थस्तस्मिन् । तथा च नातिव्याप्तिः । उदाहरणसूत्राच्चेदृशविशेषप्रतिलम्भः । **लोकसामान्यम्** किं तदित्यत आह—**नैसर्गिकमिति** । शास्त्रपरिशीलनलब्धजन्मा बुद्ध्यतिशयो वैनयिकः । तद्रहिता लौकिकाः प्रतिपाद्या इति यावत् । **तद्विपरीताः** तदुभयसंपन्नाश्च **परीक्षकाः** प्रतिपादका इति यावत् कथाबहुत्वाच्च बहुवचनम् । तदनेन वादिप्रतिवादिनौ दर्शितौ, तयोर्बुद्धिसाम्यं व्याचष्टे—**यथा यमर्थमिति** । लक्षणप्रयोजनमाह—**दृष्टान्तविरोधेनेति** । दृष्टान्तस्य विरोधो विरुद्धत्वं साध्यविकलत्वादि । **प्रतिपक्षा** इति प्रतिपक्षासाधनानि । **समाधिः** अभूतदोषारोपस्य प्रतिषेधः । लक्षितश्च दृष्टान्त उदाहरणलक्षणाय **कल्पते** घटते इति भाष्यम् । अत्र वार्त्तिककारो लौकिकपरीक्षकस्वरूपमविवक्षितमिति मन्वान आह—**बुद्धिसाम्येति** । अविवक्षायाः प्रयोजनमन्वयव्यतिरेकाभ्यामाह—**एवं चेति** । परेषां[8] दृष्टान्तलक्षणाक्षेपमुपन्यस्य दूषयति—**सोऽयं दृष्टान्त** इति । दृष्टान्तस्य प्रयोजनमाह—**दृष्टान्तः सारूप्य-**

---

१. विषयो दृष्टान्तः C २. बोधः Cvar ३. न तु C ४. ऽर्थस्तदा C
५. वर्णयन्तो C; द्रः न्या. सू. १।१।३६ ६-७. ऽर्थ्यते C ८. दृष्टान्त om J

व्युत्पत्त्यर्थः । यथा आक्षेप्त्रोक्तं तत्तदक्षरमनूद्य दूषयति—असिद्धसाधनार्थो वेति । न खल्वसिद्धः साध्येन साधनस्याविनाभावो दृष्टान्तेन साध्यते इत्यर्थः ॥२५॥

॥ परिशुद्धिः ॥

संशये प्रयोजने च सति क्व पुनरेतत् साध्यसम्बद्धं साधनमुपलभेय, यदुपादायैतत्साधयेयमिति जिज्ञासाक्रमानुरोधेन प्रयोजनानन्तरं दृष्टान्तस्योद्देशः । सैव चात्रापि संगतिरित्याह—क्रमेति ॥

न च सामान्यलक्षणमन्तरेण विशेषलक्षणावतार इति तत्सूचकं सूत्रं तथैव व्याचष्टे —साध्यसाधर्म्यादिति । [1]अत्रान्वयव्यतिरेकवति प्रकारद्वयेऽपि साध्यसाधनयोरविनाभावसिद्धिरेव फलं प्रतीयते । तथा चाविनाभावविषयतया[2] अर्च्यते यः, सोऽर्थो दृष्टान्त इति सामान्यलक्षणलाभः । [3]विशेषे तु टीका स्फुटैव । नन्वेवंरूपोऽर्थ इति कुत एतदित्यत आह—उदाहरणेति । क्षीरनीरवदविवेचितानि सांव्यवहारिकाणि प्रमाणानि निसर्गः । तद्भवो नैसर्गिकः । [5]खलितैलवद् विवेचितानि दुर्निरूपार्थगोचराणि प्रमाणानि विनयः । स एव वैनयिकः । तमाह—शास्त्रेति । सारूप्यव्युत्पत्त्यर्थ इति वार्त्तिके सारूप्यग्रहणमविनाभावमात्रोपलक्षणपरमित्यभिसंधायाह—दृष्टान्तस्य प्रयोजनमाहेति । न खल्विति । अपि तु वस्तुस्थित एव ज्ञाप्यत इति शेषः । [6]तदेतच्छलेन सामान्यलक्षणमाविष्कृतम् ॥२५॥

॥ इति न्यायपूर्वाङ्गलक्षणप्रकरणम् ॥

॥ न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥

॥ भाष्यम् ॥

अथ सिद्धान्तः । इदमित्थम्भूतश्चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धम् सिद्धस्य संस्थितिः सिद्धान्तः । संस्थितिरित्थम्भावव्यवस्था—धर्मनियमः । स खल्वयम्—

**तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥**

तन्त्रार्थसंस्थितिः तन्त्रसंस्थितिः । तन्त्रमितरेतराभिसम्बद्धस्यार्थसमूहस्योपदेशः शास्त्रम् । अधिकरणानुषक्तार्थसंस्थितिरधिकरणसंस्थितिः ।

---

१ समर्थ्य JA　२ अत्र हि MA　३ स्मर्यते N　४ विशेषेणि प्रमाणानि निसर्गः M　५ खल॰ JA　६ तदेवं A

अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः । तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः ॥ २६ ॥

॥ वार्त्तिकम् ॥

इदमित्थंभूतं चेति भाष्यम् । इदमिति सामान्यतोऽधिगममाह[1] । इत्थंभूतं चेति विशेषतः । एतदुक्तं भवति, सामान्यविशेषवदर्थाभ्यनुज्ञा सिद्धान्त इति । अस्यार्थस्य प्रदर्शनार्थं **तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः** इति सूत्रम् ॥२६॥

किं पुनरिदं सूत्रं लक्षणार्थमाहो विभागार्थमिति ? किं चातः ? यदि लक्षणार्थं तन्त्राधिकरणग्रहणं न कर्तव्यम्, एतावद्भवत्वभ्युपगमव्यवस्था सिद्धान्त इति । अथ विभागार्थम् ? सर्व[2]तन्त्रप्रतितन्त्रग्रहणं कर्तव्यम्, प्रतिज्ञादिवत् । यथा

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः[3] ॥

इति समस्ताभिधानम्, एवं सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितिरिति वक्तव्यम्। लक्षणार्थं च सूत्रान्तरं वक्तव्यम् ॥ २६ ॥

॥ टीका ॥

अत्र भाष्यकारः सिद्धान्तसामान्यलक्षणमपठित्वैव तात्पर्यं[4] व्याचष्टे—**अथ सिद्धान्तः** इत्यादिना । तत्र **इदमित्थंभूतमिति** वार्त्तिककारो व्याचष्टे—**इदमिति सामान्यत** इति । भाष्ये च[5] संस्थितिरित्थंभावव्यवस्थेति सामान्योपक्रमस्य अभ्युपगमस्य प्रमाणतो विशेषपर्यन्ततापरिसमाप्तिः संस्थितिरित्यर्थः । अत्रैवार्थे **सूत्रम्** इत्याह वार्त्तिककारः—**अस्यार्थस्येति** ॥

**तन्त्रा—न्तः** ॥२६॥ सूत्रार्थमाक्षिपति—**किं पुनरिति** । **लक्षणार्थं चेति** । सामान्यलक्षणार्थम्, न खलु सामान्यलक्षणमन्तरेण शक्यो विभाग इत्युक्तम् ॥ २६ ॥

॥ परिशुद्धिः ॥

एवं न्यायपूर्वाङ्गप्रकरणं समर्थ्य परिकलितसामर्थ्यं साधनं यत्रोपनेयं स सिद्धान्तापरनामा न्यायस्याश्रयोऽवसरप्राप्तत्वादुच्यत इति । **अथ सिद्धान्त** इति भाष्यं स्फुटार्थम् । सूत्रमपठित्वा व्याख्यानं तु कुत इत्यत आह—[6]**अत्रेति** । भाष्यकारस्य

१. अवगम॰ C २. सर्वतन्त्रग्रहणं C ३. न्या. सू. १.१.१० ४. अपठित्वावतार्य J ५. तु C ६. तत्रेति M

रीतिरियम्, स्वप्रतिभया स्वतन्त्रसूत्रविवरणं भाष्यमिति लक्षणादिति भावः। **संस्थिति-रित्थम्भावव्यवस्थेति** भाष्यं दृष्ट्वा इदमिति [1]सामान्याभ्युपगमे सिद्धान्तभ्रमः स्यात्, अतो व्याचष्टे, **भाष्ये चेति** ॥

अर्थाभ्युपगमोऽभ्युपगतो वार्थः सिद्धान्तः, विशेषणविशेष्यभावं प्रति कामचारादिति च प्रथम सूत्र एवोक्तम्, अतो न ग्रन्थचतुष्टयस्यापि मिथो विरोधः ॥ २६ ॥

॥ भाष्यम् ॥

तन्त्रभेदात् तु खलु—

**स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसं-स्थित्यर्थान्तरभावात् ॥ २७ ॥**

[2]तत्रैताश्चतस्रः संस्थितयोऽर्थान्तरभूताः ॥ २७ ॥

॥ वार्त्तिकम् ॥

**सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्**[3] इत्यस्य[4] सूत्र-स्यान्योऽर्थो वक्तव्यः। अथेदं विभागार्थम्? तथापि पूर्वसूत्रं परित्यज्यम्[5]। अथ विभक्तानां पुनर्विभागः? **त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः** इति व्याहतम्। विभागश्च नियमार्थः। विभक्तानां [6]पुनर्विभागः किमर्थः? यदि नियमार्थः, आद्येन सूत्रेण कृतत्वात् न प्रयोजनमस्तीति। तस्मात् पूर्वमुत्तरं वा सूत्रमनार्षमिति। नानार्षम्, आद्यस्य लक्षणार्थत्वादुत्तरस्य च[7] विभागार्थत्वादिति। विभागस्तु[8] नियमार्थ इत्युक्तम्। एतेन[9] अनेकधा भिन्नस्य सिद्धान्तस्य चतुर्धा संग्रह इति नियमं दर्शयति। अथाद्यं सूत्रं कथम्? लक्षणार्थमिति। तन्त्राधिकरणानामर्थानामभ्युपगम इति सूत्रार्थः। तन्त्रमधि-करणं येषामर्थानां [10]ते भवन्ति तन्त्राधिकरणाः, तेषामभ्युपगमसंस्थितिरित्थंभावव्यवस्था धर्मनियमः सिद्धान्तो भवतीति। किमुक्तं भवति? योऽर्थोऽशास्त्रितः[11] तस्याभ्युपगमो न सिद्धान्त इति ॥ २७ ॥

॥ टीका ॥

समाधत्ते—**नानार्षमिति**। लक्षणार्थत्वं [12]सामान्यलक्षणार्थत्वम्। तन्त्र्यन्ते

१. सामान्याद्युप॰ M २. ता एताः J ३. ॰धिकरणा॰ om C ४. इति च J
५. परित्यज्यताम् C ६. पुनः om C ७. च om C ८. ॰श्च C ९. एतेन om J
१०. भवति ते तन्त्रा॰ C ११. न शास्त्रितः C १२. तेन सामां॰ J

व्युत्पाद्यन्ते प्रमेयाण्यनेनेति तन्त्रं प्रमाणम् । तदेवाधिकरणम् आश्रयो ज्ञापकत्वेन येषामर्थानां ते तथोक्ताः । **अशास्त्रितः** अप्रामाणिक इत्यर्थः । आभिमानिकं च प्रामाणिकत्वम्, तेन सिद्धान्तभेदिनामर्थानां सर्वेषां न प्रामाणिकत्वप्रसङ्गः । तदेवं भाष्यकारेण व्याख्याय सामान्यलक्षणं पठितम् । एवं व्याख्यानपूर्वकमेव विभागसूत्रं पठति—**तन्त्रार्थसंस्थितिरिति** । तन्त्रग्रहनेन च सर्वतन्त्रप्रतितन्त्रयोरुपादानम् । [1]उभयोरपि तन्त्रत्वात् । तदिदमुक्तम्—**तन्त्रभेदात् त्विति** । अनवधारितार्थपरिग्रह इति । साक्षाच्छास्त्रे नोपात्तो यथा मनस इन्द्रियभाव इति ॥ २७ ॥

॥ परिशुद्धिः ॥

ननु यदि तन्त्रं प्रमाणमभिमतम्, कथं व्यतिरेकमाह—**योऽर्थो न शास्त्रित** इत्यत आह—**अशास्त्रितोऽप्रामाणिक** इति । [2]नन्वेवं बौद्धसिद्धान्ता न सिद्धान्ताः स्युरप्रामाणिकत्वात्, तथा च व्यतिक्रमेऽपि तेषां [3]नापसिद्धान्तो भवेदित्यत आह—**आभिमानिकं चेति**[4] । एतच्चाग्रतो **वार्त्तिककार** एव तत्प्रत्ययादभ्युपगम इति वदन् स्फुटीकरिष्यतीति[5] ॥ २७ ॥

॥ भाष्यम् ॥

तासाम्—

**सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥**

यथा घ्राणादीनीन्द्रियाणि, गन्धादय इन्द्रियार्थाः, पृथिव्यादीनि भूतानि, प्रमाणैरर्थस्य[6] ग्रहणमिति ॥ २८ ॥

॥ वार्त्तिकम् ॥

**सर्वेषां संप्रतिपत्तिविषयः सर्वतन्त्रसिद्धान्तः**, यथा प्रमाणानि प्रमेयसाधनानीति । न दृष्टान्तात् सर्वतन्त्रसिद्धान्तो भिद्यते, तत्राप्यविप्रतिपत्तिरिहापीति ? भिद्यत इत्याह, दृष्टान्तस्तु[7] वादिप्रतिवादिभ्यामेव निश्चितः, न चैवं[8] सर्वतन्त्रसिद्धान्त इति । अनुमानागमयोराश्रयो दृष्टान्तो न[9] सर्वतन्त्रसिद्धान्त इति । यद्यनुमानागमयोराश्रयो दृष्टान्त इति प्रत्यक्षेऽपि प्रसङ्गः । प्रत्यक्षमप्यनुमानागमयोराश्रयः, तत्कारणत्वात् । अर्थो[10]

१. तयोरपि C २. नत्वेवं J ३. नापिसि° A ४. चेति M ५. वा १।१।३१ ६ प्रमेयस्य J ७. °न्तो हि C ८. न पुनरेवम् C ९. नैवम् C १०. यदि om C

दृष्टान्तोऽवगम्यमानत्वात्[1]। यः प्रत्यक्षस्य विषयः सोऽर्थो दृष्टान्त इति। अधिगतः अर्थः[2] कथ्यते इत्यनुमानागमयोराश्रयः। अधिगमसाधनं च[3] प्रत्यक्षम्। तस्मान्न प्रत्यक्षे प्रसङ्गः ॥ २८ ॥

॥ टीका ॥

**सर्व—न्तः** ॥२८॥ यद्यपि घ्राणादिषु भौतिकत्वाभौतिकत्वादयो[4] विप्रतिपत्तयः, तथापि इन्द्रियत्वे नास्ति विप्रतिपत्तिरिति। तदेतद् वार्त्तिककारो व्याचष्टे—**सर्वेषामिति**। अत्र चोदयति—**न दृष्टान्तादिति**। परिहरति—**भिद्यत** इति। न चैवं सर्वतन्त्रसिद्धान्तः, तस्य सर्वैरेव निश्चितत्वादिति, **अनुमानागमयोरिति**। संबन्धग्रहणाश्रयावनुमानागमौ, यत्र च संबन्धग्रहः स दृष्टान्त इत्यर्थः[5] ॥ २८ ॥

**समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥**

॥ भाष्यम् ॥

यथा नासत आत्मलाभः, न सत आत्महानम्, निरतिशयाश्चेतनाः देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेष इति साङ्ख्यानाम्।

पुरुषकर्मादिनिमित्तो[6] भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते उत्पन्नं निरुध्यत इति योगानाम्॥ २९ ॥

॥ वार्त्तिकम् ॥

सामान्यविशेषतद्वतां नियमेनाभ्युपगमः प्रतितन्त्रसिद्धान्त इति। यथा भौतिकानि इन्द्रियानीति योगानाम्, अभौतिकानीति सांख्यानामिति ॥ २९ ॥

॥ टीका ॥

**समा—न्तः** ॥ २९ ॥ **समानशब्द** एकपर्यायः। **नैयायिकानां हि समानं तन्त्रं न्यायशास्त्रम्**, परतन्त्रं च **सांख्यादिशास्त्रम्**। **चेतना** आत्मनः **निरतिशया** अपरिणामिनो न केनचिद् धर्मेणोपजनापायधर्मेण युज्यन्ते। प्राकृतेषु च देहादिषु[7] **तत्कारणेषु** महदहङ्कारपञ्चतन्मात्रभूतसूक्ष्मेषु **विशेषो**ऽतिशय इत्यर्थः। तदेतत् सूत्रं

१. अर्थो° °त्वात् om C २. दृष्टान्तोऽधि° C ३. तु C ४. °त्वादौ C
५. No Pariśudddhi on I. 1.28 ६. कर्मनिमि° J ७. देहादिषु om C

वार्त्तिककृद् व्याचष्टे—सामान्येनेति। योगानाम् एव, सांख्यानाम् एवेति नियमः ॥ २९ ॥

॥ परिशुद्धिः ॥

ननु सदृशतन्त्रासिद्धोऽप्यर्थः क्वचिदभ्युपगम्यमानः सिद्धान्तो यथा प्राभाकरे नियोगो वाक्यार्थः, [1]न्याये उपमानं प्रमाणमित्यत आह—समानशब्द एकपर्यायः। यथा तरुवृक्षशब्दौ समानार्थाविति। तथाप्यनेकसम्बन्धापेक्षया एकमपि समानशब्दवाच्यं भवतीत्यत आह—नैयायिकानां हीति। व्यतिरेकप्रधानं चैतत्। एकत्र कुत्रचित् सिद्धो न[2] सर्वत्रसिद्ध इत्यर्थः। एतावत्येव लक्षणे सिद्धे परतन्त्रासिद्धपदमिमर्थं स्फुटयितुम्[3]। अन्यथा सर्वतन्त्रसिद्धोऽपि समानतन्त्रसिद्ध एवेति भ्रमः स्यादिति ॥२९॥

यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥

॥ भाष्यम् ॥

यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते, न तैर्विना सोऽर्थः सिध्यति तेऽर्था [4]यदधिष्ठानाः, सोऽधिकरणसिद्धान्तः। यथा [5]देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति[6]। अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वम्, नियतविषयाणीन्द्रियाणि, स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुणव्यतिरिक्तं द्रव्यम्, गुणाधिकरणमनियतविषयाश्चेतना इति। पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति। न तैर्विना सोऽर्थः[7] सम्भवतीति ॥ ३० ॥

॥ वार्त्तिकम् ॥

वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति अस्योदाहरणं भाष्ये, [8]इन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति ॥३०॥

॥ टीका ॥

यत्—न्तः ॥३०॥ यस्यार्थस्य साध्यस्य वा हेतोर्वा सिद्धौ इति विषयसप्तमी, न तु निमित्तसप्तमी, द्वयोर्ज्ञायमानयोर्निमित्तनैमित्तिकभावायोगात्[9]। तेन यस्मिन्नर्थे

---

१. अत्रन्यायशब्देन वैशेषिको बोध्यः। २. सिद्धो तेन M ३. स्फुटयितुं M ४. °र्थास्तदधि° J ५. देह° om J ६. न्या. सू. ३।१।१ ७. पूर्वोऽर्थः J ८. यथेन्द्रिय° C ९. °त्वायोगात् C

ज्ञायमाने तदनुषङ्गिणोऽर्थास्तदन्तर्भाविनो गम्यन्ते[1], सोऽर्थः साक्षादधिक्रियमाणस्तदनुषङ्गिणां चाधारः तदाश्रयत्वात् तत्सिद्धेः, स पक्षो वा भवतु हेतुर्वा [2]अनेन रूपेण अधिकरणसिद्धान्तः। पक्षस्तावद् [3]यथा विवादाध्यासितमुपलब्धिमत्कारणमुत्पत्तिमत्त्वाद् वस्त्रादिवदिति। अत्र हि पृथिव्यादिगतेनोत्पत्तिमत्तेन उपलब्धिमत्पूर्वकत्वं तद्गतं साध्यमानं स्वसिद्ध्यन्तर्गतानुषङ्गिसर्वज्ञत्वाद्युपेतमेव सिध्यति, नान्यथेहोपलब्धिमत्पूर्वकत्वस्य सिद्धिरिति। भाष्ये हेतुप्रतिसन्धानं सिध्यत् अनुषङ्ग्यर्थान्तरान्वितं सिध्यतीत्युदाहृतम्। तदेतत्सर्वावरोधार्थं **वार्त्तिककृद्** आह—**वाक्यार्थेति**। हेतुरीदृशः पक्षश्च वाक्यार्थ इत्यर्थः। पूर्वोऽर्थो यः साक्षादधिकृतः तस्य सिद्धावन्तर्गत इति भाष्यार्थः॥३०॥

## ॥ परिशुद्धिः ॥

एवं वाचनिकसिद्धान्तद्वयं लक्षयित्वा तल्लिङ्गत्वादभिप्रायस्याभिप्रायिकसिद्धान्तद्वयोपक्रमे न्यायप्रधानत्वादस्य शास्त्रस्य न्यायानुषङ्गिणं तावदाह—**यत्सिद्धावित्यादि सूत्रम्**॥३०॥

एतच्च **भूषण**प्रभृतयो द्विधा व्याचक्षते। यस्यार्थस्य सर्वज्ञत्वादेर्विशेषस्य सिद्धौ क्षित्यादेः सकर्तृकत्वस्य [4]प्रतिक्रियमाणस्य सिद्धिः स सर्वज्ञत्वादिर्विशेषोऽधिकरणसिद्धान्तः। अथ वा यस्य सकर्तृकत्वादेः सिद्धावन्तर्भूता अन्येऽभिप्रायप्रक्रान्ताः सर्वज्ञत्वादयोऽपि[5] विशेषाः सिध्यन्ति सोऽधिकरणसिद्धान्त इति। तदत्र पक्षद्वयेऽपि फलतो न कश्चिद् विशेष इति मन्वानः श्लिष्टं भाष्यं व्याचष्टे, **साध्यस्य वा हेतोर्वेति**। प्रथमपक्षे साध्यविशेषस्य हेतुविशेषस्य वेत्यर्थः। द्वितीये तु सुगमम्। यत्सिद्धावित्यत्र निमित्तविषयभावप्रतिभासनाद् व्याख्यातृविप्रतिपत्तेश्च सप्तम्यर्थे सन्देहः, तमपाकरोति—**विषयसप्तमीति**। उपपत्तिमाह—**द्वयोरिति**। इदानीमेकं व्याख्यानमुपादाय स्फुटभाष्यानुसारेण तावदाह—**तेनेति**। ननु च पक्षो वा हेतुर्वा कण्ठत एव नियततन्त्राभ्युपगमात् प्रतितन्त्रसिद्धान्तान्न भिद्यत इत्यत आह—**अनेन रूपेणेति**। यद्यपि स्वरूपतोऽस्य वाचनिक एवाभ्युपगमः, तथाप्यनेन रूपेणभिप्रायिक एवेत्यतस्ततो भिद्यत इत्यर्थः। उदाहरति—**पक्षस्तावदिति**। ननु प्रतीतमेव कर्तृमत्त्वं क्षित्यादेरपर्यवस्यत् सर्वज्ञत्वादिविशेषमाक्षिपति। ततो न व्याख्यातविषयसप्तम्युदाहणमिदमित्यत आह—**अत्रेति**। नन्वेतदन्तर्भा-

१. °र्भावीनि ज्ञायन्ते C २. तेन C ३. यथा om C ४. °प्रक्रिय J ५. अपि om J

वमन्तरेण किमुपलब्धिमत्पूर्वकत्वमेव प्रत्येतुं न शक्यत इत्यत आह—**नान्यथेति**। न हि यथा तार्णपार्णत्वादिसंदेहेऽपि वह्निनिश्चयसंभवः, तथा परमाण्वाद्यदृष्टान्ताभिज्ञानाभिज्ञत्वसंदेहे तत्प्रयोक्तृत्वविनिश्चयसंभवः, ज्ञानचिकीर्षैकविषयप्रयत्नवत्त्वमेव हि प्रयोक्तृत्वं कर्तृत्वमिति वोच्यते। तच्च ज्ञानं द्व्यणुकाद्यदृष्टपर्यन्तपक्षीकरणे यदि सर्वविषयं न सिध्येत्, न सिध्येदेवेति। तस्माद् यथा गङ्गायां घोष इत्यत्र तीरलक्षणामन्तरेण गङ्गापदार्थो न घोषपदार्थमन्वेति तथा सकर्तृकपदार्थोऽपि [1]तत्कारणपरमाण्वाद्यभिज्ञमनुपस्थाप्य न क्षित्यादिपदार्थमन्वेतीति प्रतीत्यपर्यवसानमेवेत्यर्थः। न चैवं केवलव्यतिरेकिविध्वंसः, अभिप्रायाव्यासस्य[2] तद्विषयत्वादित्युक्तम्, वक्ष्यते चेति। तदेवं प्रथमं व्याख्यानं भाष्यानुसारेण समर्थ्य द्वितीये **वार्त्तिकं** स्फुटमित्याह—**तदेतदिति**। **सर्वावरोधार्थं** साध्यानुषङ्गिहेत्वनुषङ्ग्यवरोधार्थम्। एतदेव स्फुटयति—**हेतुरीदृश** इति ॥३०॥

॥ भाष्यम् ॥

**अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥**

यत्र किञ्चिदर्थजातमपरीक्षितमभ्युपगम्यते, [3]अस्तु द्रव्यं शब्दः, स तु[4] नित्योऽथानित्य इति? द्रव्यस्य सतो अनित्यता नित्यता वा तद्विशेषः[5] परीक्ष्यते, सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाय च प्रवर्तत इति ॥ ३१ ॥

॥ वार्त्तिकम् ॥

**अपरीक्षिताभ्युपगमादिति** सूत्रम्। अपरिक्षितोऽसूत्रितः[6]। योऽर्थः सूत्रेषु नोपनिबद्धः शास्त्रे चाभ्युपगतः सोऽभ्युपगमसिद्धान्त इति।[7] यथा **नैयायिकानां** मन इन्द्रियमिति। **वैशेषिकाणां नैयायिकाणां** च श्रोत्रमाकाशमिति। अपरीक्षितः शास्त्रानभ्युपगतः। **स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च** प्रवर्तते इति। तन्न युक्तम्, कुतः?[8] परावज्ञानस्यायुक्तत्वात्। यदि तावत् परस्यासामर्थ्यं बुद्ध्वा नायं समर्थ इत्येवं[9] प्रवर्तते, तदानेन न परः प्रतिपादितो भवति, किं तु विप्रतिपादितः। यश्चाज्ञः किं तस्य प्रतिपादयितव्यम्? अथ परिज्ञातसामर्थ्यं पुरुषमवजानाति? तदपि

---

१. तत्करण° A २. °प्रायव्यासस्य A ३. अस्ति Cvar ४. तु किं J ५. च विशेषः J ६. °सूत्रित इति C ७. इति om J ८. कुतः? परा° C ९. एवं om C

न, अतिशयबुद्धिमतोऽवज्ञानस्यायुक्तत्वात्। तस्मात् नायं सूत्रार्थोऽशास्त्रिताभ्युपगमः सिद्धान्त इति ॥

सर्व एवायं पक्षः स्वमुखेनार्थापत्त्या वाभिधीयते[1] इति किमनेनातिविस्तृतेनेति केचित्। [2]तत्पर्याय एव सिद्धान्त इत्यपरे। पक्षस्य किलायं पर्यायः सिद्धान्त इति। पक्षः सिद्धान्तपर्याय इति[3] न बुद्ध्यामहे। सिद्धान्त इत्युपपन्नप्रमाणकोऽयमर्थ इति तत्प्रत्ययादभ्युपगमः पक्ष इत्यन्यतरवादिसंप्रतिपन्नस्यान्यतरं[4] प्रति कर्मतया वस्तुनो यदुपादानं स पक्षः। यश्च कारकशब्दो यश्च वस्तुशब्दो नैतौ पर्यायौ, [5]तद्यथा परशुश्छेदनमिति। परशुरिति कदाभिधीयते? यदा पुरुषव्यापारनिरपेक्षं वस्तु सन्निधीयमानतयावतिष्ठते। छेदनमिति च यदोद्यम्योद्यम्य दारुणि निपात्यते तदाभिधीयते। तावेतौ छेदनपरशुशब्दौ वस्तुनः क्रियासंबन्धासंबन्धापेक्षौ[6] प्रवर्तेते इति। तथा सर्वे कारकशब्दा एवं न द्रव्यमात्रे न वा क्रियामात्रे प्रवर्तन्ते। किं तु क्रियासाधने क्रियाविशेषयुक्त इति। कारकशब्दश्च पक्षो न सिद्धान्तः, स कथं पर्यायो भविष्यतीति? सर्वतन्त्रसिद्धान्तश्च पक्षपर्याय इति। अहो, पर्यायशब्दे[8] कौशलं भदन्तस्य, पक्षो विचारणायामिष्टोऽर्थः इति चाभिधीयते, अविचारणीयश्चार्थः पक्षेऽन्तर्भवतीति चित्रम् ॥

अथ पुनः सर्वतन्त्रसिद्धान्तं न[9] प्रतिपद्यते, तेनापि सर्वतन्त्रसिद्धान्तं निह्नुवानेन तदसत्त्वप्रतिपादको न्यायोऽभ्युपेयः[10]। यश्चासौ न्यायस्याभ्युपगमः स सर्वतन्त्र सिद्धान्त इति व्याहतं भवति सर्वतन्त्रसिद्धान्तो नास्तीति। अथ न्यायमपि न प्रतिपद्येत, अनिवृत्तो व्याघातः वचनेऽवचने च। यदि तावत् न्यायो नास्तीति ब्रवीति, प्रतिपादयति च नास्ति चेति व्याहतम्। अथ ब्रवीति न अवचनेऽस्यार्थो न सिध्यति, तस्मात् सर्वतन्त्रसिद्धान्तो नास्तीति संभ्रमव्याहतम्[11]। इदं च तावद् भवान् प्रष्टव्यो जायते किं पक्षः सिद्धान्तसामान्यं भवति, अथ संग्रहः पक्षशब्देन सिद्धान्तस्य, अथ सिद्धान्तस्य पक्षशब्दः पर्याय इति? तद् यदि सिद्धान्तसामान्यम्, तन्नास्त्यव्यापकत्वात्। न हि पक्षः सर्वतन्त्रसिद्धान्तं व्याप्नोति असाध्यत्वात्। यथा सत्ता द्रव्यगुणकर्माणि व्याप्नोतीति व्यापकत्वात् सामान्यं भवति, न चैवं पक्ष इति। पर्यायशब्दोऽपि न भवतीत्युक्तम्। यदि च पक्षः सिद्धान्त इति पर्यायः, सर्वतन्त्रसिद्धान्तः साध्यो जायते। सर्वतन्त्रसिद्धान्तः साध्यश्चेति व्याघातः। अर्थापत्तितोऽधिकरणसिद्धान्तस्याभेद इति चेत्? अथापि मन्येथा अर्थापत्ति-

---

१. विधी° C　२. पक्षपर्याय C　३. सिद्धान्तः पक्षपर्यायोऽयमिति C　४. °वादिवि प्रति° C　५. अन्यथा C　६. क्रियासंबन्धापेक्षौ C　७. तर्हि C　८. °शब्देषु C　९. नैव C　१०. अभिधेयः C　११. °व्याकृतम् C

तोऽधिकरणसिद्धान्तो न भिद्यते, भिद्यते[1] । वाक्यार्थप्रतिपत्तौ तद्विपरीतवाक्यार्थप्रतिपत्तिः अर्थापत्तिः, वाक्यानुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति ॥ ३१ ॥

॥ टीका ॥

अथाभ्युपगमसिद्धान्तसूत्रम्—अप–न्तः ॥३१॥ तद् वार्त्तिककारो व्याचष्टे–**अपरीक्षितोऽसूत्रित** इति, सूत्रितस्य प्रायेण परीक्षासंबन्धात्, मनसो हीन्द्रियत्वेनासूत्रितस्यापि इन्द्रियत्वाभ्युपगमः प्रमाणाधिकरणो यतः, तस्मादयमभ्युपगमसिद्धान्तः । सूत्रं चैवं योजनीयम्, असूत्रिताभ्युपगमात् हेतोर्यतस्तद्विशेषपरीक्षणं क्रियते[2], तस्माद् विशेषपरीक्षणात् ज्ञायते असूत्रितमप्यभ्युपगतं सूत्रकारेण । सोऽयमस्याभ्युपगमोऽभ्युपगमसिद्धान्त इति ॥

एवं स्वमतेन सूत्रं व्याख्याय भाष्यकारव्याख्यानं दूषयति–**शास्त्रानभ्युपगत** इति । प्रमाणीकृतेन शास्त्रेणाननुज्ञातः प्रमाणानधीन इत्यर्थः । प्रमाणतन्त्राभ्युपगमसंस्थितिरिति हि सिद्धान्तसामान्यलक्षणम्, न च प्रमाणानधीनाभ्युपगमस्तदन्वेतीति नायमीदृशोऽभ्युपगमसिद्धान्तो भवितुमर्हतीति हृदि निधायायुक्ततापि दर्शिता । अज्ञं प्रत्यसदाचारत्वात् प्रामाणिकं च पुरुषं प्रत्यशक्यत्वात् **बुद्धिमतोऽवज्ञानस्यायुक्तत्वात्** अशक्यत्वादित्यर्थः । **सर्व एवायं पक्ष** इति । सर्वतन्त्रप्रतितन्त्रसिद्धान्तौ तावत् साक्षादभ्युपगम्यमानौ स्वमुखेनैव पक्षतयाभिधीयेते । अधिकरणाभ्युपगमौ[3] च साक्षात् अनभ्युपगम्यमानावप्यर्थादभ्युपगन्तव्याविति अर्थापत्त्या पक्षावित्यर्थः । ननु यद्युपपन्नः प्रमाणतया अभ्युपगमः सिद्धान्तः, तर्हि सिद्धान्तभेदिनामर्थानां प्रामाणिकत्वेन विरुद्धधर्मसमालिङ्गिता भावाः प्रसज्येरन्नित्यत आह—**तत्प्रत्ययात्** । तस्य प्रमाणोपपन्नकर्मत्वस्य प्रत्ययादभिमानादित्यर्थः । **पक्ष** इति । पचि व्यक्तीकरणे इत्यस्माद् व्युत्पन्नम् । **कर्मतया** व्यज्यमानतया वा उपादानं स्वार्थस्य **पक्ष** इति पदम् । उपादीयतेऽनेनेति व्युत्पत्त्या । **क्रियासाधन** इति प्रधानक्रियासाधने । **क्रियाविशेषयुक्त** इति अवान्तरव्यापारयुक्ते तेन हि प्रधानक्रियायां कारकाणां वैचित्र्यं भवतीति । **यश्चासौ न्यायस्याभ्युपगम** इति । यावदभ्युपगतं न्याय्यस्य साधनं न्याय इति, तावभ्युपगतं भवति प्रमेयसाधनं प्रमाणमिति । न च धर्मिणि अनभ्युपगते तदाश्रयोऽभ्युपगतो भवति । तस्मादुभयथापि सर्वतन्त्रसिद्धान्तानपह्नव इत्यर्थः । **अथ संग्रहः पक्षशब्देनेति**, यथा **दण्डिशब्देन** दण्डसंबन्धोपहितसीमानः समानासमानजातीयाः सर्वे संगृह्यन्ते, तथा पक्ष-

---

१. न भिद्यते, C २. भवति J ३. तु C

शब्देनापीत्यर्थः अयं तु कल्पः सर्वतन्त्रसिद्धान्ताव्यापकत्वकथनेनैवार्थादपाकृत इति न पृथक् निराकृतः। पक्षशब्दो हि व्यज्यमानत्वोपाधिनिबन्धनप्रवृत्तिः, न च व्यज्यमानत्वमस्ति निसर्गव्यक्ते सर्वतन्त्रसिद्धान्त इति भावः। **वाक्यार्थप्रतिपत्ताविति**। पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यस्य[1] दिवाभोजननिषेधोऽर्थः। तस्मात् तद्विपरीतरात्रिभोजनविधिरर्थापत्तिर्लोकसिद्धा। सा च न यथा प्रमाणान्तरफलं तथा द्वितीये निवेदयिष्यते[2]। तदनेन प्रबन्धेन भदन्तदिग्नागोदितानि दूषणानि निराकृतानि ॥३१॥

॥ परिशुद्धिः ॥

वार्त्तिककारीयाभ्युपगमसिद्धान्तोदाहरणे सामान्यलक्षणं योजयति—**प्रमाणाधिकरणो यत इति**। ननु भाष्यमत एव सूत्रं स्फुटार्थमित्यत आह—**सूत्रं चैवमिति**। इन्द्रियत्वेनासूत्रितस्यापि मनस इन्द्रियत्वं परीक्षितं सूत्रकृता ॥

ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्[3] ॥

इति ॥ अत्र हि यथा रूपादिज्ञानविशेषसाधनानि चक्षुरादीन्युपपद्यन्ते, तथा सुखादिज्ञानसाधनं मनोऽप्युपपद्यते। मनःपरिहारे वा सर्वेन्द्रियविलोपः प्रसज्यत इत्यभिहिते पुनः सूत्रकारेण रूपादिज्ञानं चक्षुरादिसाधनमस्तु निःसाधनमेव तु सुखादिज्ञानमित्याशङ्क्य सूत्रितम्—

नियमश्च निरनुमानः[4]

इति। तदिदमसूत्रितस्य विशेषस्य परीक्षणमभ्युपगमादेवोपपद्यते। यदि ह्यनभिमत एवायमर्थोऽस्य, कथं परीक्ष्यं व्यवस्थापयेदित्यर्थः। इदं च [5]स्वाभिमतोन्नयनप्रकाराविष्करणं सूत्रकृतः [6]शिष्यहिततयेत्यतो लक्षणार्थमाह—**सोऽयमिति** उक्तार्थानुषङ्गिणः अर्थस्याभ्युपगमोऽभ्युपगमसिद्धान्त इत्यर्थः। ननु भाष्यकाराभिमतस्याभ्युपगमसिद्धान्तस्य तल्लक्षणयोगे [7]किमयुक्तत्वेन ? अयोगे च तदेवोच्यताम्। तथापि किमयुक्तत्वेनेत्यत आह—**प्रमाणतन्त्रेति**। तमिमं विभागलक्षणप्रपञ्चं सर्व एवायं पक्ष इति पूर्वपक्षवार्त्तिकविवरणव्याजेन संकलय्याह—**सर्वतन्त्रेत्यादि** ॥ २१ ॥

॥ इति न्यायाश्रयसिद्धान्तलक्षणप्रकरणम् ॥

---

१. इत्यस्य C २. न्या. सू. २।२।६ ३. न्या. सू. ३. १. १७ ४. न्या. सू. ३. १. १८ ५. °मतोन्नायक° M ६. वार्त्तिकं च शिष्य° M ७. किमुक्तत्वेन AM.

॥ न्यायलक्षणप्रकरणम् ॥

॥ भाष्यम् ॥

अथावयवा :—

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥**

दशावयवानेके नैयायिका [१]वाक्ये सञ्चक्षते, जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति । ते कस्मान्नोच्यन्त इति ? तत्राप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्तिका जिज्ञासा । अप्रतीयमानमर्थं कस्माज्जिज्ञासते ? तं तत्त्वतो [२]ज्ञातं हास्यामि वोपादास्य उपेक्षिष्ये वेति । ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थः तदर्थमयं[३] जिज्ञासते । सा खल्वियमसाधनम् अर्थस्येति । जिज्ञासाधिष्ठानं संशयश्च[४] व्याहतधर्मोपसङ्घातात् तत्वज्ञाने प्रत्यासन्नः । व्याहतयोर्हि धर्मयोरन्यतरत्तत्त्वं भवितुमर्हतीति । स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति । प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि, सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति । प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति । संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधेन[५] तत्त्वज्ञानाभ्यनुज्ञानार्थम्, न त्वयं साधकवाक्यैकदेश इति । प्रकरणे तु जिज्ञादय समर्था अवधारणीयार्थोपकारात् । [६]तत्त्वार्थसाधकभावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति ॥ ३२ ॥

॥ वार्त्तिकम् ॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥३२॥** अवयवानां विभागोद्देशार्थं सूत्रम् । विभागोद्देशस्तु[७] नियमार्थः । किं नियन्तव्यम् ? न[८] दशावयवं न[८] त्र्यवयवं च वाक्यम् । एके तावद् ब्रुवते दशावयवं वाक्यम्, अपरे त्र्यवयवमिति । उभयव्युदासात् पञ्चैवेति नियमज्ञापनार्थं[९] प्रतिज्ञादीनां विभागोद्देश इति । कथं पुनर्जिज्ञासादयः अवयवा न भवन्ति ? पराप्रतिपादकत्वात् । परप्रतिपादका ये ते[१०] वाक्यस्याङ्गभूता इतरेतरासंप्रत्यायितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति तेऽवयवाः । वाक्याङ्गत्वमवयवार्थः । किं पुनर्वाक्यम् ? यस्य प्रतिज्ञादिभिरुपकृतस्य विशेषावस्थापनमर्थः तद्

१. वाक्यस्य J २. ज्ञात्वा J ३. ॰मयं तत्त्वं J ४. संशयो J ५. ॰षेधे J
६. अर्थसा॰ J ७. ॰श्च C ८. न om C ९. उभयनियमज्ञापनार्थः C १०. ते om C

वाक्यम् । वाक्यार्थं च[1] संहत्यैते पञ्च[2] निष्पादयन्तीत्यवयवा इत्युच्यन्ते, न पुनर्जिज्ञासादयः परप्रतिपादका इत्यतो न वाक्यस्यावयवा इति । निश्चितत्वाच्च, निश्चितश्च साधयिता भवति । न तस्य जिज्ञासासंशयौ स्तः । प्रयोजनमपि साधनादेव गम्यते । शक्यप्राप्तिश्चेति । न ह्यशक्यमप्रयोजकं वा कश्चित् साधयतीति । तस्मात् प्रयोजनशक्यप्राप्ती अपि न वाक्यावयवौ ॥

**प्रकरणे तु जिज्ञासादयः समर्था** इति भाष्यम् । प्रकरणमेते उत्थापयन्ति । न हि जिज्ञासादीनन्तरेण प्रकरणस्योत्थापनमस्तीति प्रकरणोत्थापका [3]नावयवा जिज्ञासादयः । परप्रतिपादकत्वात् तु प्रतिज्ञादीनामयमधिकार इति ते [4]व्यपदिश्यन्ते । त्र्यवयवम् अपि वाक्यं यथा न भवति, तथोपनयनिगमनयोरर्थान्तरभावं प्रतिपादयिष्यन्तो वर्णयिष्यामः[5] ॥ ३२ ॥

॥ टीका ॥

**प्रति—वा: ॥३२॥ वार्त्तिककारः** सूत्रतात्पर्यमाह—**अवयवानामिति** । नन्ववयवसामान्यलक्षणम् अन्तरेणाशक्यो विभागोद्देशः, तद्विशेषलक्षणं च । न चेदं सामान्यलक्षणं विभागपरत्वादित्यत आह—**सूत्रम्**, विभागपरमप्येतदर्थादवयवसामान्य लक्षणं सूचयतीति **सूत्रम्** । अन्यपरादपि वाक्यात् प्रतीयमानोऽर्थोऽपेक्षित स्वीक्रियत एवेति शाब्दाः । तत्रावयवपदादेव सामान्यलक्षणमवगम्यते । अवयवत्वेनैकवाक्यता दर्शिता । सा च पदानां [6]परस्परमसंप्रत्यायितापेक्षितसंबन्धयोग्यार्थप्रत्ययेन भवति । तस्मात् तथाविधार्थप्रत्यायनमेव प्रतिज्ञादीनामवयवसामान्यलक्षणं सिद्धमिति **सूत्रमित्यनेन** दर्शितं **वार्त्तिककृता** इति । विभागोद्देशतात्पर्यमाह—**विभागेति** । त्र्यवयवग्रहणम् उपलक्षणार्थम्, द्व्यवयवमित्यपि द्रष्टव्यम् । अत्र **भाष्यं तत्राप्रतीयमान** इति । सामान्येनावगतधर्मिणि विशेषणाग्निमत्त्वादिना सन्दिग्धे, अग्निमत्त्वादितत्त्वावधारणं प्रत्ययः । तस्यार्थः प्रयोजनं हानोपादानोपेक्षाबुद्धयः । [7]**तस्य प्रवर्त्तिका** उत्पादिका **जिज्ञासा** प्रत्ययसाधनानुसरणद्वारेण प्रत्यासत्तिः संशयतत्त्वज्ञानयोर्विशेषगता[8] न तु स्वरूपगता, संशयानन्तरया जिज्ञासया संशयस्य व्यवधानात् । शक्यं प्रमेयम् । तस्मिन् प्राप्तिः शक्तता प्रमाणानां प्रमातुश्च । सा च स्वरूपसहकारिभ्यां द्वेधा । तामिमां **भाष्यकारोऽनया** वचोभङ्ग्या दर्शयति—**प्रमातुः प्रमाणानीति** । **प्रतिज्ञादिवदिति** । वैधर्म्यदृष्टान्तः ।

१. च om C २. एते पञ्च om J ३. न om J ४. उपदि॰ C ५. वर्णयन्तो वक्ष्यामः C; द्रः वा १।१।३९ ६. परस्परासंप्र॰ C ७. अस्य C ८. विषयगता K

**प्रतिपक्षोपवर्णनमिति** । यदि शब्दो नित्यः स्यात्, न स्यात् कृतक इति अनित्यत्वस्य नित्यत्वं प्रतिपक्षः । तस्मिन् [1]हेत्वभावोपवर्णनं न चायमकृतक इति । तदुपवर्णनप्रतिषेधे सति **तत्त्वज्ञानाभ्यनुज्ञानार्थम्** । [2]तत्त्वं ज्ञायतेऽनेनेति तत्त्वज्ञानं प्रमाणम् । तदभ्यनुज्ञानार्थं **संशयव्युदासः** तर्कापरनामा । व्युदस्यते हि तेन[3] प्रमाणाभ्यनुज्ञानद्वारेण[4] इतिकर्तव्यताभूतेन संशय इति । तदेतद् भाष्यजातं प्रश्नपूर्वकं वार्त्तिककृद् व्याचष्टे—**कथं पुनरिति** । **न पुनर्जिज्ञासादयः परप्रतिपादकाः** शब्दादवगताः सन्तः । अथ मा भूवन् परप्रतिपादकाः, स्वप्रतिपादका एव कस्मात् न भवन्तीत्यत आह—**निश्चितत्वाच्चेति** । **साधनादेव गम्यते** [5]प्राप्यते, प्राप्तं च ज्ञायत इत्यर्थः । **शक्यप्राप्तिश्च** प्राप्यते ज्ञायत इत्यर्थः । तत् किं सर्वथैवानङ्गं जिज्ञासादय इत्यत उक्तं **भाष्यकृता, प्रकरणे तु जिज्ञासादयः समर्था इति** । तदनुभाष्य व्याचष्टे—**प्रकरणे त्विति** । प्रकरणं कथाप्रवृत्तिः । तदुत्थापका **जिज्ञासादयोऽवयवा** अङ्गान् इत्यर्थः । ते च जिज्ञासादय उत्पन्नाः प्रकरणस्योत्थापकाः स्वरूपेण, न पुनः स्वज्ञानेन येन [6]शब्दप्रतिपाद्याः सन्तः प्रकरणेऽप्यङ्गं भवेयुः, यथा प्रतिज्ञादयः स्वज्ञानेन स्वार्थान् प्रतिपादयन्तः । तस्मात् सर्वथैव जिज्ञासादिवाचकपदप्रयोगोऽनर्थक इति भावः । अतएव आह—**परप्रतिपादकत्वादिति** । तुशब्दो जिज्ञासादिभ्यो व्यवच्छिनत्ति । **त्र्यवयवमपि** इत्यपिना द्व्यवयवनिषेधं[7] समुच्चिनोति । **उपनयनिगमनयोः** इत्यत्र प्रतिज्ञाया अपीति द्रष्टव्यम् ॥३२॥

॥ परिशुद्धिः ॥

एवं [8]च यत्र न्यायलक्षणं करणमुपनेयम्, तत्प्रकरणं समर्थ्य, उपनेयन्यायप्रकरणम् आरभ्यत इति स्फुटार्थं **भाष्यम्—अथावयवा** इति । अतः [9]सिद्धवत् सूत्रं प्रत्याहरति—**प्रति—वाः** ॥३२॥

**एकवाक्यता** विशिष्टैकार्थधीरूपकार्यसंबन्धः । विशिष्टश्चार्थोऽत्र प्रकृतत्वात् [10]समस्तरूपोपपन्नं लिङ्गम् । संशयः कथासु विप्रतिपत्तिज एव । स चानुविधेयस्थेयगतो, यथायोगं विचार्यवस्तुगोचरस्तज्ज्ञानगोचरश्चेति विचारमात्रे तु सार्वहेतुकः, स्वपरनिष्ठश्च । प्रयोजनं कथासु प्रतीतिजयौ । अन्यत्र प्रकृतोपयोगिनोऽज्ञातस्य ज्ञानं ज्ञापनं च । जिज्ञासा

१. उप° om C २. तत्त्वं om J ३. ह्यनेन C ४. प्रमाणेति° C ५. प्राप्यते om C ६. स्वशब्द° C ७. °प्रतिषेध C ८. च om A ९. सिद्धं M J १०. सस्वरूपो° A

कथासु अनुविधेयस्थेयानाम् । अन्यत्र स्वगता[1] शक्यप्राप्तिः सर्वत्र पदपदार्थवाक्यप्रमाणतदाभासपाटवम् । संशयव्युदासं तु सम्यगित्यभिधायैकपक्षपरिग्रहं केचित् मन्यन्ते । स चादौ विप्रतिपत्त्या पश्चात् प्रतिज्ञया गतार्थ इति मत्वा तर्काभिप्रायेण व्याचष्टे— **यदि शब्दो नित्यः स्यादिति** । व्युदस्यते हि तेन संशयः फलतः स्वरूपतश्च । तदाह—**प्रमाणाभ्यनुज्ञानद्वारेणेति** । संशयो हि द्वे कोटी परिस्पृश्य वर्तमानो जिज्ञासामपि तथाभूतामेव जनयति । न्यायस्तु [2]श्रोत्रियवद्विरुद्धधर्मसंकरमनिच्छन् कुलबधूमिव एककोटिनियतामेव जिज्ञासामनुरुध्यते । तदेवं तावन्तरा वर्तमानस्तर्क एकस्यां कोटौ प्रमाणबाधितं कञ्चिदर्थमाहरन् तद्गतामिच्छां विच्छिद्य द्वितीयकोटौ नियमयति । सेयं ज्ञेयेच्छा नियतैककोटिका प्रमाणाभ्यनुज्ञेत्युच्यते । एनां च जनयता तर्केण संशयफलं प्रबलेच्छा तदैव व्युदस्यते । तद्द्वारेण प्रमाणं प्रवर्तयता संशयस्वरूपमपीति । तदेतन्न्यायप्रवृत्तेरुत्पत्त्यङ्गपञ्चकमुत्पत्तिमात्रेण, न तु ज्ञप्तिमपेक्षते । अतो नैतस्य ज्ञापकचिन्ता क्रियते । उत्पत्तिचिन्तैवोपयोगित्वात् तत्र तत्र कृता, करिष्यते च[3] । प्रतिज्ञाद्यर्थास्तु ज्ञाता एव न्यायमुपकुर्वन्तस्तत्फलसिद्धावुपयुज्यन्ते । अतस्तेषां ज्ञापकचिन्ता क्रियत इति ॥३२॥

॥ भाष्यम् ॥

तेषां तु यथाविभक्तानाम्—

**साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥**

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा साध्यनिर्देशः । अनित्यः शब्द इति ॥ ३३ ॥

॥ वार्त्तिकम् ॥

तेषां त्ववयवत्वेन सामान्येन संगृहीतानामितरेतरविशेषकं लक्षणमुच्यते । **साध्यनिर्देशः प्रतिज्ञेति** ॥३३॥ तत्र प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः । तस्य निर्देशः प्रतिज्ञा[4] परिग्रहवचनम् । उदाहरणम्, **अनित्यः शब्द इति** ॥

सिद्धत्वात् धर्मिणो न साध्यत्वमिति केचित् । धर्मी किल [5]शब्दलक्षणः सिद्ध एव । सिद्धश्च साध्यो न भवतीति । नैष दोषः, प्रज्ञापनीयधर्मविशिष्टस्येति वचनात् । न

---

१. परगतापि M; सुगता A २. श्रोत्रियो विरुद्ध° M ३. °वोपयुक्तत्वात् सूत्रकृता करिष्यति M ४. प्रतिज्ञा om J ५. धर्म° C

ब्रूमो धर्मिमात्रं साध्यम्, अपि तु प्रज्ञापनीयधर्मविशिष्टो धर्मी[1] साध्यः। यदि प्रज्ञापनीयो, न विशेषणम्। अथ विशेषणम्, न प्रज्ञापनीयः। नासिद्धं विशेषणं भवतीति सिद्धेनायं विशिष्यते [2]नासिद्धेनेति। सत्यम्, असिद्धमप्रज्ञातं[3] विशेषणं न भवति। प्रज्ञातं त्विदमनित्यत्वं घटे शब्दस्य साध्यमिति। एवं तर्हि शब्दस्यानित्यत्वं साध्यं न शब्द इति? शब्दस्येति विशेषणात् न दोषः। शब्दस्येति ब्रुवता नानित्यत्वमात्रं साध्यत्वेनाभ्यनुज्ञायते, न धर्मिमात्रम्। किं तर्हि? धर्मिणः शब्दस्य प्रज्ञातस्य अनित्यत्वस्य चान्यधर्मत्वेन[4] योऽयं विशेषणविशेष्यभाव इतरेतरनियामकत्वेन नियमः स साध्यः। स चोभयाश्रयो भवति। उभयाश्रयत्वे सति किमुक्तं भवति? धर्मी विशेषणं धर्मो वा विशेषणमिति, शब्दस्यानित्यत्वम् अनित्यत्वस्य वा शब्द इति? धर्मी विशिष्यते इति युक्तम्। सामान्यतोऽधिगतत्वात् विशेषतोऽनधिगतत्वाच्च विशेषप्रतिपादकत्वाच्चानुमानस्य न च पुनर्धर्मस्य सामान्याधिगमोऽस्ति। न नास्ति। किमयं धर्मः शब्दस्य उतान्यस्य घटस्येति[6]। एवं तर्हि शब्दस्यानित्यत्वमित्ययमर्थः साध्यः। तस्य च न कृतकत्वादियोग इति युक्तम्। प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः। तस्य निर्देशः प्रतिज्ञा।

उभयावधारणप्राप्तावन्यतरावधारणे च दोषः। यदि साध्यनिर्देशः प्रतिज्ञेति प्रतिज्ञालक्षणम्, ततः पूर्वोत्तरे द्वे अवधारणे न कल्प्येते। कथम्? साध्यनिर्देश एव प्रतिज्ञेति प्रतिज्ञावधृता, न साध्यनिर्देशः। प्रतिज्ञा अन्यथा नास्ति, साध्यनिर्देशोऽन्यथाप्यस्तीति प्राप्तम्। ततश्च साध्यनिर्देशो न प्रतिज्ञा अतो न साध्यनिर्देशो लक्षणम्,[7] व्यतिरेकित्वादिति। अथ साध्यनिर्देशः प्रतिज्ञैवेति साध्यनिर्देशोऽवधृतः न प्रतिज्ञा, साध्यनिर्देशोऽन्यथा नास्ति, प्रतिज्ञान्यथाप्यस्तीति। एवमपि साध्यनिर्देशो न प्रतिज्ञालक्षणम्, अव्यापकत्वात्। यदपि व्यतिरेकि तदप्यलक्षणम्, यथा विषाणित्वं गोः। यदप्यव्यापकं तदप्यलक्षणं यथा गन्धवत्त्वं द्रव्यस्य। अथ पूर्वोत्तरेऽवधारणे न क्रियेते, तथापि किल वाक्यमनर्थकं भवति, न चान्या गतिरस्ति। तस्मात् साध्यनिर्देशः प्रतिज्ञेति न युक्तम्॥

सर्वस्मिन् वाक्येऽवधारणमिति[8] तु न बुध्यामहे। तद् यथा, गोपालकेन मार्गेऽपदिष्टे एष पन्थाः श्रुघ्नं गच्छतीति नावधारणस्य विषयं पश्यामः। अवधारणस्य तु विषयः सामान्यश्रुतौ नियमः। येन वाक्येन समानश्रुत्या अनेकोऽर्थो गम्यते, तत्रातिप्रसक्तावतिप्रसङ्गनिराकरणार्थमवधारणमिति, न पुनः साध्यनिर्देशः प्रतिज्ञेत्युक्ते क्वचित्

---

१. इति C २. न साध्येनेति C ३. असिद्धम् om C ४. प्रज्ञातस्य नित्यत्वस्या धर्मत्वेन Cvar. ५. उक्तं भवति om J ६. घटस्येति om J ७. आवधृतातो न साध्यनिर्देशो om J ८. असाधारणमिति Cvar

प्रसङ्गोऽस्ति यन्निराकरणायावधारणं क्रियेत। सर्वत्र[1] चावधारणं कुर्वाणो लोकं बाधते। यत्र च विशेषणस्यावकाशः तत्रावधारणस्यापीति नायं दोषः। पूर्वोत्तरेऽवधारणे न कल्प्येते इति॥

ननु च साध्यनिर्देशः प्रतिज्ञेत्युक्ते साध्ययोर्हेतुदृष्टान्तयोरपि प्रसङ्गः। यथा अनित्यः शब्दश्चाक्षुषत्वात्, नित्यः शब्दोऽस्पर्शत्वात् बुद्धिवच्चेति। न सूत्रार्थापरिज्ञानात्। साध्यनिर्देशः प्रतिज्ञेति प्रज्ञापनीयधर्मविशिष्टस्य धर्मिणः परिग्रहवचनम्। न च चाक्षुषत्वं प्रज्ञापनीयधर्मविशिष्टस्य धर्मिणः परिग्रहवचनम्, अपि तु धर्मनिर्देशोऽयं चाक्षुषत्वादिति। तथा बुद्धेर्नित्यत्वमिति[2]। अथ पुनः साध्यनिर्देशग्रहणादसाध्यनिर्देशनिवृत्तिः? साध्यनिर्देशग्रहणात् किलासाध्यनिर्देशो निवर्त्यते। असाध्यं च द्वेधा सिद्धमनुपपद्यमानसाधनं च। तत्र साध्यनिर्देश [3]इत्यनेनोभयं निवर्त्यते सिद्धमनुपपद्यमानसाधनं च। तत्रानुपपद्यमानसाधनं शब्दाचाक्षुषत्वं बुद्धिनित्यत्वं च। तस्मात् न तत्र प्रसङ्गः। अथ पुनः कृतकत्वाद्यन्यतरपक्षसिद्धं साधनं साध्यतयोपादीयते[4] तदा कृतकत्वादेः साध्यनिर्देशस्य प्रतिज्ञात्वं प्राप्तमिति॥

नैष दोषः, विकल्पानुपपत्तेः। यदि तावदेवं ब्रवीति कृतकत्वं साध्यमिति, तदा न[5] सूत्रार्थापरिज्ञानादिति परिहारः। अथ कृतकः शब्द इत्येतत् साध्यमित्येवं प्रत्यवतिष्ठते, तदाभ्युपगम एव दोषत्वेन दर्शित इति न किञ्चिद् बाध्यते। यच्चेदमुच्यते, असाध्यनिर्देशनिवृत्तिद्वारेण साध्यनिर्देशः प्रतिज्ञेत्युच्यते इति, तद्विधीयमानप्रतिषिध्यमानशब्दार्थाभ्युपगमात् नियमो न युक्तः। क्वचिद् वाक्ये विधीयमानोऽर्थोऽभिधीयते, क्वचित् प्रतिषिध्यमान इति। एकान्तवादिनस्तु दोषः। यथा न प्रतिषिध्यमान एव पदार्थो भवति तथोपरिष्टात् वक्ष्याम इति। साध्यनिर्देश इति च प्रतिज्ञायां साध्ययोः हेतुदृष्टान्तयोः प्रसङ्गः इति। न प्रसङ्गः, सिद्धान्तविशेषणत्वात् साध्यशब्दस्य, सिद्धान्तविशेषणोऽयं साध्यशब्दो न साध्यमात्रम्। तथा च कः प्रसङ्गो हेतुदृष्टान्तयोः? सिद्धान्तश्चानन्तरोक्त्या साध्यशब्दस्य विशेषणं भवति सिद्धान्तानन्तरमवयवाभिधानात्। यद्यनन्तरोक्त्या सिद्धान्तो विशेषणं तन्निर्देशः प्रतिज्ञेति कार्यम्? न, सर्वतन्त्रसिद्धान्तनिराकरणार्थत्वात्। यदि तन्निर्देशः प्रतिज्ञेत्यभिधीयते[6] सर्वतन्त्रसिद्धान्तोऽपि प्रकृतत्वात् तच्छब्देनानुकृष्येतेति तन्निर्देशोऽपि प्रतिज्ञा भवेदिति[7]। अतः साध्यग्रहणेन साध्य-

१. च सावधा° C २. °त्वमपि C ३. इत्यनेन वचनेनो° C ४. °सिद्धं साध्यतयाप्युपाददीत C ५. न om C ६. °त्युच्यते C ७. °ज्ञेति स्यात् C

सिद्धान्तः संबध्यते, न [1]सर्व इति । सामर्थ्यात् सर्वतन्त्रसिद्धान्तनिराकरणमिति चेत् ? यद्यप्ययं सामान्यशब्दः तन्निर्देशः प्रतिज्ञेति, तथापि सामर्थ्यात् सर्वतन्त्रसिद्धान्तो निराक्रियते, सर्वतन्त्रसिद्धान्तस्यासाध्यत्वात्, इतरस्य च प्रतितन्त्रादेरवस्थायां साध्यत्वादिति । उदाहरणम्, ब्राह्मणान् भोजयेति । यथा अशेषब्राह्मणभोजनस्याशक्यत्वात् सामर्थ्यान्नियम इति । यदि सामर्थ्यमाश्रीयते[2] समस्तस्यानभिधानम् , तन्निर्देशः प्रतिज्ञा इत्येतदपि न कर्तव्यम् । प्रतिज्ञा प्रतिज्ञेति वक्तव्यम् । सामर्थ्यतो नियमो गम्यत इति । मा वोचः, किं नो बाध्यत इति । कथं न बाध्यते ? यदभ्युपगतं तन्निवर्तते, तन्निर्देशः प्रतिज्ञेति । जिज्ञासादिविशेषणं वा[3] न प्रसङ्गः साध्यनिर्देशः प्रतिज्ञेति । जिज्ञासादिभिः प्रकरणोत्थापकावयवैर्विशेषितमिदं वाक्यं साध्यनिर्देशः प्रतिज्ञेति । यस्मिन्नर्थे जिज्ञासादयः सोऽर्थः साध्य इति, तस्य निर्देशः प्रतिज्ञेति । तथा च हेतुदृष्टान्तयोः कः प्रसङ्गः ? अर्हत्यर्थे वा कृत्याभिधानम् । साध्यनिर्देशः प्रतिज्ञेत्यर्हत्यर्थे कृत्यः । साधनमर्हतीति साध्यः । तस्य निर्देशः प्रतिज्ञा । न च हेतुदृष्टान्तौ साधनार्हावतोऽपि न प्रसङ्गः ॥

कर्मकरणयोर्धर्मभेदात् वा, अन्यः कर्मधर्मोऽन्यश्च करणधर्म इति । कर्तुरीप्सिततमं कर्म[4] इति कर्मधर्मः, साधकतमं करणम्[5] इति करणधर्मः । न चेतरस्य धर्म इतरधर्मो भवितुमर्हतीति । कर्मनिर्देशश्चायं साध्यनिर्देशः प्रतिज्ञेति । करणनिर्देशश्चाक्षुषत्वादिति । अतोऽपि न प्रसङ्गः । साध्यासिद्धसिद्धभेदाद् वा । अन्यत् साध्यम् । अन्यत् सिद्धम् । अन्यच्चासिद्धमिति । साध्यमन्यतरपक्षसंप्रतिपन्नमन्यतरं प्रति कर्मतया यदुपादीयते । उभयपक्षासंप्रतिपन्नमसिद्धम् । उभयपक्षसंप्रतिपन्नं सिद्धमिति । तेन यथा सिद्धमित्युक्ते न साध्ये नासिद्धे च प्रसङ्गः, तथा साध्यमित्युक्ते नासिद्धे सिद्धे च प्रसङ्गः इति । अथाप्रसक्तमपि चोद्यते सर्वेऽर्थाः सिद्धा अपि प्रतिज्ञात्वेन चोदनीया भवन्ति । अथवा साध्यनिर्देशः प्रतिज्ञेति प्रतिज्ञाद्यवयवविषयो योऽर्थः स साध्यः । यः प्रतिज्ञादीनामवयवानां विषयो [6]धर्मी प्रसिद्धधर्मविशिष्टः स धर्मान्तराधिकरणत्वेन साध्यते, तथा च हेतुदृष्टान्तयोः कः प्रसङ्गः ।

न चेदयं प्रसङ्गोऽस्ति तस्मादिष्टग्रहणमनर्थकम्, साध्यनिर्देशः प्रतिज्ञेति किल साध्यस्येष्टग्रहणेनाविशेषितत्वात् । साध्ययोर्हेतुदृष्टान्तयोः प्रसङ्ग इति मन्यमानैः कैश्चित्-अन्यथा पक्षलक्षणानि क्रियन्ते । तद्यथा

१. सर्वतन्त्रसिद्धान्त इति C २. °स्थीयते C ३. °षणाद् वा C ४. पा° सू° १।१।४९ ५. पा° सू° १.४.४२ ६. धर्मो C

पक्षो यः साधयितुमिष्टः

इति । अत्रेष्टग्रहणं न कर्तव्यम्, अनर्थकत्वात्[1] । साध्यपदेन हेतुदृष्टान्ताभासोक्तेर्निराकृतत्वात् तन्निराकरणार्थमिष्टग्रहणमयुक्तम् । कर्मग्रहणाच्च प्राप्तमेतदिष्टमीप्सितमिति चानर्थान्तरम् । अथाप्यनिष्टपक्षव्युदासार्थमिष्टग्रहणं क्रियेत, अर्थतः किलास्यानिष्टम् । नेष्टं तद् भवति यत् स्ववचनादिना विरुद्धमिति । यथा अवाचकाः शब्दा इति । अवाचकत्वं च शब्दानां प्रतिज्ञायते, शब्दा एवार्थप्रत्यायनायोच्चार्यन्त इति व्याहतम् । अनुष्णोऽग्निरिति प्रत्यक्षविरोधः ॥

अश्रावणः शब्द इति प्रत्यविरोधं केचिद् वर्णयन्ति । तदयुक्तम् । इन्द्रियवृत्तीनामतीन्द्रियत्वात् । इन्द्रियवृत्तयोऽतीन्द्रियाः । इदमनेनेन्द्रियेण गृह्यते, नेदमनेनेति [2]च कस्यचित् प्रत्यक्षमस्ति, अपि तु[3] तद्भावाभावानुविधानात् । रूपादिज्ञानैरिन्द्रियवृत्तयोऽनुमीयन्ते । तस्मात् नेदमुदाहरणम् । उदाहरणं त्वनुष्णोऽग्निरिति युक्तम् ॥

आगमविरुद्धमपि वैशेषिकस्य नित्यः शब्द इति । [4]इदमपि नागमविरुद्धमिति पश्यामः । न हि वैशेषिकेण शब्दानित्यत्वमागमतः प्रतिपन्नम्, अपि त्वनुमानात्

कारणतो विकारात्[5] ॥

इत्येवमादेः एतदप्यनुमानविरुद्धमेव । अथ सूत्रकारवचनात् प्रतिपन्नम् इत्यागमविरोधः ? ननु च नित्यो घट इत्ययमप्यागमविरोधः प्राप्तः । तस्मात् ब्राह्मणेन सुरा पेयेत्यागमविरोधः । प्रसिद्धिविरुद्धं तु न बुद्ध्यामहे कोऽयं प्रसिद्धिविरोध इति । प्रसिद्धिः प्रत्यक्षादीनां प्रमाणानामन्यतमेनार्थप्रतिपत्तिः । तद् यथा अचन्द्रः शशीति । तस्मात् पूर्वप्रमाणविरोध एवान्तर्भवतीति न प्रसिद्धिविरोधाभिधानेन पृथक् प्रयोजनं पश्यामः । शक्यं तु वक्तुं[6] सर्व एवायं प्रसिद्धिविरोध इति । एतदर्थनिराकरणार्थमिष्टग्रहणं पठन्ति ॥

एतच्च सर्वं न युक्तमिति पश्यामः । कथम् ? स्वार्थापवादादिदोषाणां प्रतिज्ञादोषत्वेनाभ्युपगमात् । सर्व एते स्वार्थापवादादिदोषाः प्रतिज्ञादोषत्वेन संभवन्ति, न पक्षदोषत्वेन । कथमिति ? अर्थस्य तादवस्थ्यात् । यथाभूतोऽर्थोऽभिधीयमानः तथाभूत एवानभिधीयमान इति । वचनमपि तर्ह्येवमेवेति चेत् ? वचनेऽप्येते दोषा मा भूवन् । सत्यं नामी अर्थदोषाः, न वचनदोषाः, किं तु पुरुषदोषाः । ये हि कर्तृदोषास्ते क्रियाद्वारेण उद्भाव्यन्ते इति क्रियायां कर्तृदोषानुपचर्य दुष्टा क्रियेत्युच्यते । एवं

---

१. ग्रहणं तावदनर्थकम् C २. न C ३. प्रत्यक्षं किं तु C ४. यथेदम् C
५. वै. सू. २.२.२४ ६. प्रतिपत्तुं C

वक्तृदोषान् वचने उपचर्य दुष्टं वचनमित्युच्यते। मुख्यस्तु नार्थे दोषाः, न वचने दोषा इति। अर्थस्य स्वक्रियासु सामर्थ्यात् सर्वोऽर्थः स्वस्यां स्वस्यां क्रियायां समर्थः। स तु स्वक्रियाव्यतिरेकेण क्रियान्तरे विनियुज्यमानः कर्तुरेवाकौशलं प्रकाशयति। एवं वचनमपि स्वस्मिन् स्वस्मिन्नर्थे समर्थं विषयान्तरेषु प्रयुज्यमानं वक्तुः संमोहं प्रकटयति॥

अथ[1] प्रतिज्ञायाः पक्षविषयत्वात् प्रतिज्ञादोषाः पक्षदोषा इत्युच्यन्ते। नैतद् युक्तम्, हेत्वादिदोषाणामपि पक्षदोषत्वप्रसङ्गात्। एवं सति हेत्वादयोऽपि पक्षविषया इति कृत्वा हेत्वादिदोषा अपि पक्षदोषा[2] एव। ततश्च दूषणं पक्षदोषा इति वक्तव्यम्। न पुनर्दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानीति। अथ वाच्यवाचकभावेन नियमो भविष्यति, न साध्यसाधनभावेनेति? नैतद् युक्तम्, प्रमाणाभावात् साधनविषयत्वेन व्यवतिष्ठते पक्षो वचनविषयत्वेन च। तत्र वाच्यवाचकभावनियमाद् वचनदोषाः पक्षे भवन्तु, मा भूवन् साध्यसाधनभावात्। साधनदोषाः पक्षदोषा इति न प्रमाणमस्ति। वचनदोषाश्च पक्ष उपचर्यन्त इति। न हि संभवे सत्युपचारो लभ्यते। तद्यथा मञ्चाः क्रोशन्तीति क्रोशनक्रियाया मञ्चेष्वसंभवात् लौकिकप्रयुक्तवाक्यान्वाख्यानं कुर्वता मञ्चस्थाः पुरुषा इति स्थानिषु पुरुषेषु मञ्चशब्दमारोप्य प्रमाणासंभवेनोपचारः क्रियते मञ्चाः क्रोशन्तीति। न पुनः [3]प्रतिज्ञादोषाः प्रतिज्ञायां न संभवन्ति। यतः तत्रासंभवन्तोऽवश्यमन्वाख्येयतया व्यवस्थिताः पक्षे उपचर्येरन्निति। आकस्मिकं च मुख्यार्थव्यतिक्रमं कुर्वाणेन यदुक्तं नैयायिकहेतुप्रतिषेधेनाकस्मिको मुख्यार्थव्यतिक्रमो लभ्यते इति तद् व्याहन्येत॥

अथेष्टग्रहणेन लौकिकोऽर्थोऽभिधीयते इष्टमभिप्रेतमिति[4]। अयमप्यर्थः साधनादेव गम्यते। न हि कश्चिदनिष्टं साधयति। योऽप्यनिष्टभयात् साधयति तस्याप्यनिष्टनिवृत्तिरिष्टेति नानिष्टं साधयति। तस्मादिष्टग्रहणमनर्थकम्। एवं विचारणायामिष्टोऽर्थः पक्ष इत्यत्रापीष्टग्रहणं न कर्तव्यम्[5]। का चेयं विचारणा? यदि साधनदूषणप्रयोगः, तत्रानेकार्थसन्निपाते न ज्ञायते कथमिष्टमिति? किं साध्यत्वेन, [6]उत साधनत्वेन; दूषणत्वेन उत दूष्यत्वेन [7]इति। अथ संशयो विचारणा? तद्यथा आत्मनोऽस्तित्वनास्तित्वविचारणायामिति। आत्मनोऽस्तित्वनास्तित्वसंशय इति यावदुक्तं भवति, तावदिदमुक्तं भवति आत्मनोऽस्तित्वनास्तित्वविचारणायामिति। संशयो विचारणापदस्य नार्थः, नापि विचारणा

१. अथ om C २. भवन्तु C ३. प्रतिज्ञादिदोषाः C ४. °प्रेतमपि मे मतमिति C
५. °ग्रहणमनर्थकम् C ६. उत om C ७. वेति C

संशयपदस्य। विचारणा हि नाम संशयोत्तरकालभाविनी साधनदूषणप्रयोगरूपा अन्यतराधिकरणनिर्णयावसाना सा न संशय इति। संशयः पुनरनवधारणात्मकः प्रत्यय इति। न वादे संशयो भवति, उभयोर्निश्चितत्वात्। निश्चितौ हि वादं कुरुत इति॥

एतेन

साध्यत्वेनेप्सितः पक्षः

इत्यपि प्रत्युक्तम्। ईप्सितग्रहणस्य चानिष्टनिराकरणार्थत्वात्

विरुद्धार्थानिराकृतः।

इति न वक्तव्यम्। पक्षो यः साधयितुमिष्टः इत्यत्रेष्टग्रहणेनानिष्टपक्षनिराकरणमिति इहापि ईप्सितग्रहणादनिष्टपक्षनिरास इत्युत्तरकारिकार्द्धं न कर्तव्यम्, विरुद्धार्थानिराकृत इति। अथ विरुद्धार्थानिराकृत इत्यनेनानिष्टाः पक्षदोषा निराक्रियन्ते, ईप्सितग्रहणं तर्हि व्यर्थम्। अथोभयमीप्सितग्रहणं विरुद्धार्थानिराकृत इति च पक्षदोषाणां निराकर्तृ, तथापि पक्षो यः साधयितुमिष्ट इत्यत्रापि विरुद्धार्थानिराकृत इति कर्तव्यम्। सर्वथैते पक्षलक्षणे विचार्यमाणे एकस्य न्यूनत्वमन्यस्याधिक्यं ख्यापयत इति। स्वयं साध्यत्वेनेप्सित इति च स्वयंग्रहणं न कर्तव्यम्। किं कारणम्? कर्मणः कर्त्रपेक्षत्वात्, यथा कर्ता वृक्षं छिनत्तीत्युक्ते स्वयमिति गम्यते, न ह्यन्यस्य च्छेद्यो वृक्षोऽन्यश्छिनत्तीति[१], एवं यस्य साध्यः स एव साधयितेति स्वयमिति गम्यते। सोऽयं परस्याक्षराधिक्यदोषान् विचिन्वानः स्ववचनप्रयोगे संमूढ इति॥

यदपि वादविधानटीकायां साधयतीति शब्दस्य स्वयं परेण च तुल्यरूपत्वात्[२] स्वयमिति विशेषणम्, साधयतीति किलायं शब्दः प्रयोज्ये प्रयोक्तरि च तुल्यरूपो भवतीति। सत्यम्, तुल्यरूप एष शब्दो न पुनः साधारणप्रयोगे प्रयोजनं पश्यामः। अत एवं वक्तव्यम्, पक्षो यः साधयितुमिष्ट इति। तत्त्वभाक्तयोश्च तत्त्वसंप्रतिपत्तिः प्रयोक्तर्यसंप्रतिपत्तिः, यद्यप्ययं तुल्यरूपः शब्दस्तथापि प्रयोज्य एव संभवति साधयतीति। न प्रयोक्तरि भाक्तत्वात् प्रयोज्ये चाञ्जसत्वात्। तुमुनश्च समानकर्तृकेष्वेव नियमात्। साधयितुमिति तुमुनः प्रयोगोऽयम्। स चायं समानकर्तृकेष्वेव दृष्टः। तद्यथा स्नातुं गच्छामीति। न पुनरनुन्मत्त एवं ब्रूयात् स्वयं यामीति। तथेहापीति। यद्यपि साधयति शब्दस्तुल्यरूपस्तथापि तुमुना विशेषितत्वात् प्रयोक्तर्यनतिप्रसङ्गः।[3] यदपि स्वयं शब्देन च शास्त्रानपेक्षमभ्युपगमं दर्शयतीति अत्रोक्तम्, किमुक्तम्? परावज्ञानस्यायुक्तत्वात्

१. °च्छेद्यमन्य° C २. तुल्यत्वात् C ३. प्रयोक्तर्यप्रसङ्गः J

इत्येवमादि । किं पुनः शास्त्रं यदनपेक्षमभ्युपगमं दर्शयति ? ननु च शास्त्रं प्रत्यक्षानुमानाभ्यामविरुद्ध[1] आगमः, तदनपेक्षमभ्युपगमं दर्शयतीति ब्रुवता अप्रमाणकमर्थमभ्युपैतीत्युक्तं भवति[2] । यश्चाप्रमाणकोऽभ्युपगमो नासावभ्युपगन्तुं स्वस्थात्मना युक्तः, नापि प्रतिपादयितुं शक्य इति ॥

यद्यपि **वादविधौ** साध्याभिधानं प्रतिज्ञेति प्रतिज्ञालक्षणमुक्तं तदप्युभयथा दोषात् न युक्तम् । कथमिति ? यदि तावत् पूर्वप्रकृतपक्षमपेक्षमाणेनेदमुच्यते साध्याभिधानं प्रतिज्ञेति, तदा साध्यग्रहणं व्यर्थम्[3] । प्रकृतः पक्षस्तच्छब्देनाभिसंभन्त्स्यत इति तदभिधानं प्रतिज्ञेति वक्तव्यम् । अथ पक्षानपेक्षं स्वतन्त्रमेतत् लक्षणम्, तथापि यो **नैयायिक**-प्रतिज्ञायां दोष उक्तः स इह प्रसक्तः । यस्तु तत्रभवता परीहारः क्रियते, ममापि स एव परिहारो भविष्यतीति न[4] युक्तम्, [5]तस्य मयानभ्युपगमात्, भवताचाभ्युपगतत्वात् । यथा नाम कश्चित् परं ब्रूयात् माता ते बन्धकी स्त्रीत्वादिति, स तस्योत्तरं ब्रूयात् न बन्धकीत्वे स्त्रीत्वं हेतुः किंतु स्वपुरुषव्यतिरेकेण पुरुषान्तरसंबन्ध इति । स्त्रीत्वाद् बन्धकीत्वं ब्रुवाणस्य स्वस्या[6] मातुर्बन्धकीत्वमपरिहार्यम् । अथ परपुरुषसंबन्धं हेतुमभ्युपेयात् स्त्रीत्वाद् बन्धकीत्वं व्याहतं भवति, तथा भवतोऽपीति व्याघातः साध्ययोर्हेतुदृष्टान्तयोर्निर्देशः प्रतिज्ञा प्राप्नोति । तस्मादपेतसर्वदोषमिदं वाक्यं साध्यनिर्देशः प्रतिज्ञेति ॥ ३३ ॥

॥ टीका ॥

**साध्य—ज्ञा** ॥३३॥ परिगृह्यतेऽनेनेति परिग्रहः । स च वचनं चेति **परिग्रहवचनम्** । उदाहरणम् **अनित्यः शब्दः** इति । तदाक्षिप्य **वार्त्तिककारः** समाधत्ते—**सिद्धत्वादिति** । अग्निमानेव नातद्वान् नास्याग्निनेदानीमयोगः । स च पर्वतेऽग्निमति साध्यमाने विशेषणविशेष्ययोः परस्परसंबन्धलक्षणो[8] नियमोऽर्थात् सिध्यति । न तु साक्षादयोगव्यवच्छेद एव साध्यः, लिङ्गस्यान्यापोहविषयत्वानभ्युपगमात् । **तस्य निर्देश** निर्दिश्यतेऽनेति [9]प्रतिज्ञावाक्यमुच्यते ॥

अत्रान्ययोगव्यवच्छेदं वाक्यार्थं मन्वानो **भदन्तः** प्रतिज्ञालक्षणमतिव्याप्त्यव्याप्तिभ्याम् आक्षिपति—**उभयेति** । उभयोरवधारणयोः प्राप्तौ संशयेन[10] किमिदमवधार्यते किं

---

१. °क्षागमाभ्याऽद्धम् C २. भवति om C ३. °ग्रहणानर्थक्यम् C ४. वक्तव्यम् C ५. तस्य om C ६. स्वस्याः om C ७. निर्देश्य C ८. °लक्षणे नियमे J ९. हि प्रति° C १०. संशये C

चेदमिति प्रसक्ताविव्यर्थः। **प्रतिज्ञावधृतेति** । यत [1]एवकरणं न ततोऽन्यत्रावधारणम् इति हि शाब्दा इति भावः। **व्यतिरेकित्वादिति** व्यभिचारादित्यर्थः। समाधत्ते —**सर्वस्मिन् वाक्ये** इति। संसर्गो वाक्यार्थ इत्युत्सर्गः। क्वचित् पुनरन्ययोगव्यवच्छेदोऽपीति। **सामान्यश्रुतौ नियमः** इति। यथेन्द्रियार्थसन्निकर्षोत्पन्नमित्युक्ते ज्ञानं सुखादि च सामान्येन प्राप्तम्। तत्र ज्ञानग्रहणं न विधायकम्, प्राप्तत्वात्। अतः सुखादिव्यवच्छेदफलं विज्ञायते। यदि त्वस्मद्दर्शनमतिक्रम्य सर्वत्रावधारणं करोति, ततोऽस्य लोकविरोध इत्याह —**सर्वत्र चेति**। तत् किं लोके न क्वचिदवधारणम् इत्यत[2] आह—**यत्र चेति**। चोदयति—**ननु चेति**। सिद्धप्रतिपक्षः[3] साध्यशब्दस्यार्थ इत्यभिप्रायः। परिहरति – **न सूत्रार्थेति**। सर्वसन्देहेष्विदमुपतिष्ठते [4]व्याख्यानतोऽर्थप्रतिपत्तिरिति भावः। चोदकः स्वाभिप्रायमुद्घाटयति—**अथ पुनरिति**। **असाध्यनिर्देशः** सिद्धनिर्देशः। तस्य **निवृत्तिः** साध्यशब्दादवगम्यते, न तु प्रज्ञापनीयोऽर्थ इत्यर्थः। परिहरति—**असाध्यं चेति**। भवेदेतद् यदि सिद्धमात्रमसाध्यं स्यात्। अपि त्वनुपपद्यमानं साधनं सिद्धिर्यस्य तदप्यसाध्यम्। तथा चासिद्धस्य चाक्षुषत्वादेर्निवृत्तिरित्यर्थः। पुनश्चोदयति—**अथ पुनरिति**। न कृतकत्वादि [5]सिद्धं नाप्यनुपपद्यमानसाधनम्। नापि कृतकत्वादि पराङ्गत्वेनोपात्तं येनाप्रज्ञापनीयं स्यादित्यर्थः। परिहरति—**नैष दोष** इति। **प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनम्** इति सूत्रार्थः, न पुनर्धर्ममात्रपरिग्रहवचनमिति। अभ्युपगम्य व्यवच्छेदं शब्दार्थमेतदुक्तम्, परमार्थतस्त्वनियमः क्वचित् संसर्गः, क्वचिद् व्यवच्छेद इत्यत आह—**यच्चेदमिति**। इतोऽपि नासिद्धयोर्हेतुदृष्टान्तयोः प्रसङ्ग इत्याह—**साध्यनिर्देश इति च प्रतिज्ञायामिति**। प्रमाणतन्त्र खल्वभ्युपगमः सिद्धान्तः। न च चाक्षुषत्वादिषु प्रमाणमूलता, तदभिमानोऽपि बाधकादपाकृत इति। ननु यदि सर्वतन्त्रसिद्धान्तातिरिक्तानां सिद्धान्तान्तराणां साध्यत्वं तर्हि साध्येनैव चरितार्थत्वाद् अपार्थकं पृथगभिधानमेतेषामिति, अत उक्तम्—**अवस्थायामिति**। विमत्यवस्थायाम्, सर्वतन्त्रे तु विमतिरशक्येत्युक्तम्। परिहारान्तरमाह—**जिज्ञासादीति**। **विभागसूत्रेण** प्रकरणोत्थानहेतवो वाक्यावयवतया निराकार्यत्वेन[6] जिज्ञासादयो बुद्धिस्थीकृताः। तेन यत्र जिज्ञासादयः स साध्यः। न च चाक्षुषत्वादिषु प्रमाणबाधितेषु सन्ति त[7] इत्यर्थः। परिहारान्तरमाह—**अर्हत्यर्थ** इति॥

---

१. एवकारः J  २. °मित्यत्र C  ३. प्रतिक्षेपः C  ४. विशेष for अर्थ J
५. साध्यं C  ६. °र्थतया C  ७. एते C

अपरमपि [1]परिहारमाह—**कर्मकरणयोर्वेति** । एवं तावद् व्युत्पत्त्याद्यालोचनया[2] साध्यशब्दस्य न हेतुदृष्टान्तयोः प्रसङ्ग इत्युक्तम् । संप्रति लोक एवातिस्फुटास्तिस्रो विधा अर्थानाम्, कृतमत्र सूक्ष्मानुसरणेनेत्याह—**साध्यासिद्धसिद्धभेदादिति** । अन्यतरासिद्धयोर्हेतुदृष्टान्तयोः प्रसङ्गो मा भूदिति कर्मतया ते उपादीयन्त इत्युक्तम् । **उभयपक्षेति** पक्षशब्दो [3]वर्गवचनः । संप्रतिपन्नमुभयोर्वर्गयोरित्यर्थः । परिहारान्तरमाह **अथ वेति** । अवयवानामेतत् प्रकरणम् । तेषां च प्रधानैकार्थप्रत्यायनेनैकवाक्यताम् आपन्नानामवयवभावः । यत्प्रत्यायनोद्देशेन ते प्रवर्तन्ते तत्प्रधानम् । धर्मी च सिसाधयिषितधर्मविशिष्टः । तथा च न साक्षात् तत्प्रत्यायनाय ते विभवन्तीति तदर्थं साधने व्याप्रियन्ते । तेन सिषाधयिषितधर्मविशिष्टो धर्मी तेषां प्रधानं विषयश्च । प्रधानं च प्रथमं बुद्धौ विपरिवर्तते इति साध्यशब्देन स एवोच्यते, न तु हेतुदृष्टान्तावप्रधाने इत्यर्थः ॥

तदेवमदुष्टमस्मल्लक्षणमिति यदस्मल्लक्षणमनेन दोषेण भङ्क्त्वा भदन्तेन अन्यथा लक्षणं प्रणीतम्, तदेव दुष्टमित्याह—**न चेदयमिति** । ननु यत्र साध्यपदम् अस्ति भवतु तत्रेष्टग्रहणमनर्थकम्, न त्वस्मिंस्तदस्तीति कथमिष्टग्रहणमनर्थकतमित्यत आह—**कर्मग्रहणाच्चेति** । मा भूत् साध्यपदम् । अस्ति तु पक्षपदम् । तदपि हि [4]पच्यमानं व्यज्यमानं साध्यमेवाह—तच्च कर्म, [5]कर्म चेप्सितमिति प्राप्तुमिष्टमित्यर्थः । चोदयति—**अथाप्यनिष्टेति**, नन्वनिष्टः पक्ष इति विप्रतिपिद्धमित्यत उक्तम्—**अर्थतः किलेति** । वस्तुव्यवस्थापनाय प्रवृत्तस्य तादृशं नेष्टमित्यर्थः ॥

बौद्धपक्षमुपन्यस्यन्नेव मध्ये तदभिमतं किञ्चिन्निराकरोति—**अश्रावण** इति । कृतव्याख्यानमेतत् प्रथमसूत्रे[6] । **अपि त्वनुमानतः**

**कारणतो विकारात्[7]** ॥

**इत्येवमादेः[8]** । न हि व्यङ्ग्यं व्यञ्जकं कारणमनुविधीयते[9] । नो खलु महती प्रदीपे घटो महान् अल्पे वा अल्प इति । महति तु कारणे महान् शब्द इति । तस्मात् कारणतो विकारात् कार्यः शब्दः, यथा महद्भिः स्थूलपिण्डैरारब्धोऽवयवी महानिति । तदनेन प्रत्ययभेदभेदित्वं हेतुरुपलक्षितो भवति, आदिशब्देन च[10] सतः शब्दस्य

**अभिव्यक्तौ दोषात्[11]** ॥

१. °हारान्तरम् J २. °दिपर्यालो° C ३. थद्ववचनः C ४. पुाव्य° C ५. कर्म om C ६. पृ: ५११।१५ ७. वै. सू. २.२.३४ ८. विकारादेः C ९. विधत्ते C १०. च om C ११. वै. सू. २.२.३५

इत्येवमादयो ग्राह्याः। दोषश्च दर्भेध्मादिवदुपयुक्तानामृचां निरिष्टिकत्वेन पुनरनुपयोगः[१], कार्यत्वे पुनरन्यत्वेन न निरिष्टिकत्वामित्यर्थः। यद्यप्यागमोऽपि शब्दानित्यत्वेऽस्ति यथा

सोमं राजानमसृजत ततस्त्रयो वेदा असृज्यन्त ॥

इति। तथापि

नासदासीन्नो सदासीदाम्नाय एव खल्वयमग्र आसीत् ॥

इति नित्यत्वेऽप्यागमदर्शनात् अनिश्चयादनुमानस्यैवात्र प्रामाण्यम्। तथा चानुमानविरोध इति। **प्रसिद्धिविरोधं तु न बुध्यमाहे** प्रमाणविरोधाद् भेदेन। अबोधमाह—**कोऽयं प्रसिद्धिविरोध** इति। एकग्रन्थेनाह—**प्रसिद्धिः प्रत्यक्षादीनामिति**। अचन्द्रः शशीति। यदि चन्द्रे शशिशब्दवाच्यत्वं[२] निषिध्यते, तदा लोकव्यवहारावगतान्वयव्यतिरेकप्रभवानुमानविरोधः। अथ विकल्पज्ञानगोचरत्वनिषेधः, ततो भवतां स्वसंवेदनप्रत्यक्षविरोधः। अस्माकं तु मानसप्रत्यक्षविरोध इति सर्वथा न प्रमाणादन्या प्रसिद्धिरिति। तदेवं बौद्धपक्षमुपन्यस्य तदुक्तान्युदाहरणानि दूषयित्वा बौद्धपक्षमुपसंहरति—**एतदर्थेति** ॥

तदेतद् दूषयति—**एतच्चेति**। वस्तु हि यादृशं स्वकारणादुत्पन्नं तादृशमेव तत्। न तस्यान्यथाभाव इति न तत्र दोषो निविशते। तद्विषयाणि पदान्यपि प्रत्येकम् अदुष्टान्येव। या पुनः पौरुषेयी दृष्टमन्यत्रार्थमन्यत्र समारोप्य भ्रान्त्या वा परविप्रलम्भाय वा प्रतिज्ञादिरूपेण वाक्यक्रिया, सा स्ववचनविरोधादिशालिनी दुष्टा। तद्द्वारेण पुरुषो निगृह्यते, नार्थो न पदानीति। **स्वार्थापवादः** स्ववचनविरोधः कर्तृदोषो भ्रमो वा विप्रलम्भो वा क्रियायामुपचर्यते। न च[३] क्रियायां भ्रमो वा विप्रलम्भो वा, तयोरभिप्रायभेदतया पुरुषधर्मत्वात् क्रियाया वस्तुबाधनात् पुरुषाभिप्रायावगतिरिति **क्रियाद्वारेणेत्युक्तम्** ॥

चोदयति—**अथ प्रतिज्ञाया इति**। तदेतदतिप्रसङ्गेन दूषयति—**नैतद् युक्तं हेत्वादीति। न पुनर्दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानीति**[४]। त्रैरूप्यसंपन्नो हेतुः पूर्णः। स त्रिषु रूपेष्वन्यतमेन रूपेण रहितो न्यूनोऽसिद्धो वा विरुद्धो वा अनैकान्तिको वा भवतीति सोऽयं न्यूनतादोषो हेतोः। अवयवदोषश्च प्रतिज्ञादोषः स्ववचनविरोधादिः। हेतुदोषोऽसिद्धत्वादिः एवमुदाहरणदोषः साध्यविकलत्वादिः। उत्तरदोषो जातिः प्राप्त्यप्राप्तिसमादिः। तस्याक्षेप उपादानं स्वीकार इति

१. पुनरुप॰ C २. चन्द्रशब्द॰ J ३. तु J ४. वान्तरदोष॰ Cvar

यावत् । भावोऽप्रतिभादिः । स हि वादिनो वा प्रतिवादिनो वाभिप्रायः । तस्योद्भावनानि दूषणानीति । **न हि संभवे सत्युपचार** इति । प्रतिज्ञागता हि दोषा यदि तद्गतत्वेन उद्भाव्यमाना न वादिनो निग्रहमापादयेयुः, ततस्तत्र निष्प्रयोजनत्वेनासंभवात् पक्ष [1]एवोपचर्येरन्, पारयन्ति तु प्रतिज्ञागतानि दूषणानि निग्रहितुं वादिनमिति । सोऽयं प्रतिज्ञादोषाणां प्रतिज्ञायां संभव इति । कस्मात् पुनर्मञ्चस्था इत्येवं न प्रयुञ्जते इत्यत उक्तम्—**लौकिकप्रयुक्तवाक्यान्वाख्यानम्**[2] । न, अनादिर्लोकप्रयोगो नियोज्यः पर्यनुयोज्यो वेत्यर्थः ॥

स्यादेतत् । इष्टग्रहणमनक्षरारूढमप्यभिप्रायव्याप्तं साध्यं[3] तथा स्यादित्येवमर्थं यथा परार्थाश्चक्षुरादय इति । अत्र हि [4]पारार्थ्यमात्रमक्षरारूढम् । न च तन्मात्रमस्य साध्यम्, अपि त्वात्मपारार्थ्यम् । तच्च नोच्चारयति मा भूदनन्वयो हेतुः संघातत्वादिति । तस्मात् तदवरोधायेष्टग्रहणमित्याह—**अथेष्टग्रहणेनेति** । परिहरति—**अयमप्यर्थः साधनादेव गम्यते** । प्रतिज्ञाप्रयोगादेव गम्यते[5] । अयमभिसन्धिः । वचनलिङ्गा हि वक्त्रभिप्राया भवन्ति । यत्परं च वचनं स वचनार्थः । तात्पर्यं चास्य क्वचिद् वाच्ये क्वचिल्लक्ष्य इति सर्व एवासौ वचनार्थः । यस्तु नैवंविधः कथमसौ वचनार्थः ? कथमसौ[6] वाद्यभिप्रायव्याप्त इत्यवगन्तव्यम् ? न च क्वचिदपि पक्षः प्रतिज्ञापदवाच्यः, तस्य वाक्यार्थत्वेन लक्ष्यत्वाद् एवेति । **अनिष्टनिवृत्तिरिष्टेति** । तत्साधनमन्विष्यमाणमपि तदानीमिष्टमेव । तत्र [7]प्रयत्नानुपपत्तेरिच्छापूर्वकत्वात् तस्येति । **अथ संशयो विचारणेति** । ततश्च संशयविषय इष्यमाणो जिज्ञास्यमानश्च साध्य एव भवति, न साधनादिरित्यर्थः ॥

स्थानान्तरीयं च भदन्तस्य लक्षणम्,

साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृतः ॥

इति दूषयति—**एतेनेति** । अत्रापि हि साध्यपदादूर्ध्वं वृथाक्षरचतुष्टयमिति । तथा

पक्षो यः साधयितुमिष्टः

इत्यत्रापि [8]वसुबन्धुलक्षणे विरुद्धार्थानिराकृतग्रहणं न कर्तव्यम् । एतदुक्तं भवति—न केवलमस्माकमेतद् विरुद्धार्थानिराकृतपदमनर्थकं प्रतिभाति, समानतीर्थानामपि तथा विभाति, यतस्तैर्नोपात्तमिति । **अत एवं वक्तव्यं पक्षो यः साधयितुमिष्ट** इति । यद्यप्यत्रापि प्रयोज्यप्रयोजकव्यापारयोः साधयितुमिति समानम्, तथापि तुमुना य एव

१. एव om J २. प्रयुक्त° om J, वाक्यार्थान्वा° C ३. साध्यं om K
४. परार्थमात्रम° C ५. प्रतिज्ञा° गम्यते om C ६. वचनार्थः ? कथमसौ om C
७. °नुत्पत्ते C ८. च सुबन्धु° C

साधयिता वादी स एवैषितेत्युक्तं भवति । न पुनर्वादिनो नियोक्ता साधयिता वादी चैषितेति । एषितृत्वं च वादिनो ध्रुवं कृत्वैतदुच्यते, यदा पुनरेषितृत्वमपि प्रयोजके संचार्यते, तदा स्वयंग्रहणेनाप्यप्रतीकार इत्यभिप्रायः तत्त्वभाक्तयोश्चेति । सिद्धः साध्यस्य प्रयोजकः कर्ता । स हि सिध्यन्तं साध्यं साधयति वादी तस्मिन्नियं साधना समवेता । यस्तु तस्यापि प्रयोजकस्तृतीयस्थानपतितो न तस्मिन् साधना समवैतीति । यः कारयति स करोत्येवेति कथञ्चिदस्य भक्त्या कर्तृत्वम्, तच्चायुक्तं सति मुख्ये कर्तरीत्यभिप्रायः । [1]आञ्जसत्वं मुख्यत्वम् । पूर्वाभिप्रायस्थितमर्थमुद्घाटयति[2]—तुल्यनश्चेति । अत्रोक्तं भाष्यकारीयाभ्युपगमसिद्धान्तनिराकरणावसरेऽप्रमाणकमर्थमिति । यस्तावत् शास्त्राविरुद्धोऽर्थः प्रमाणसिद्धः स शास्त्रीय एव शास्त्राभ्युपेतप्रमाणसिद्धत्वात्, तं व्युत्पादयन् न शास्त्रं बाधते । यस्तु प्रमाणीकृतवैशेषिकतन्त्रः शब्दनित्यत्वं साधयति सोऽनवधेयवचनः न हेत्वभिधानं यावत् परिषत्प्रतिवादिभ्यां नीयते, अपि तु प्रतिज्ञोच्चारणानन्तरमेव निगृह्यते । यस्तु वैशेषिकतन्त्राध्ययनमात्राद् वैशेषिकत्वमात्मनो दर्शयित्वा शब्दनित्यतां प्रतिजानीते नासौ प्रमाणीकृतवैशेषिकतन्त्र इति न निगृह्यते इति । यश्चाप्रमाणकोऽभ्युपगम इति । अभ्युपगम्यत इत्यभ्युपगमः । तदभिधानं प्रतिज्ञेति वक्तव्यमिति । साध्यग्रहणात् तद्ग्रहणस्य लाघवादित्यर्थः । यस्तु तत्रभवता नैयायिकेन इति प्रकृतमुपसंहरति—तस्मादपेतेति ॥ ३३ ॥

॥ परिशुद्धिः ॥

परिगृह्यतेऽनेनेति स्वीक्रियत इत्यर्थः । तेन साध्यतया स्वीक्रियमानस्यार्थस्य[3] वचनं प्रतिज्ञेति सूत्रार्थः ॥

अपोह्य भेदः सिद्धान्तो जिज्ञासा साधनार्हता ।
कर्मधर्मश्च लोकश्च प्रस्तावश्च नियामकाः ॥

इति अतिप्रसङ्गसमाधिवार्तिकस्य प्रपञ्चसंक्षेपः[4] । न हि व्यङ्ग्यमित्यादि । यथा च नेयं भ्रान्तिः तथा द्वितीये निवेदयिष्यते । तदालोकेति, चन्द्रशब्दोऽयं शशिवाचकः प्रयोज्यवृद्धं प्रति असति वृत्त्यन्तरे तत्प्रत्ययजनकत्वात् । तत्प्रत्ययजनकश्चायं स्वप्रत्ययेन तद्गोचरव्यवहारहेतुत्वादिति । हेतुदोषोऽसिद्धत्वादिरेवेति । असिद्धत्वाद्यर्थत्वमित्यर्थः । एवमुत्तरत्र यस्तु नैवंविधो न वाच्यो न लक्ष्य इत्यर्थः । ननु तथापि वाच्यवल्लक्ष्योऽपि

---

१. आञ्जस्यं C २. अर्थम् om C ३. अर्थस्य om J A ४. वार्त्तिकप्रपञ्चस्य J A ५. °रेवमिति Tat

पक्ष एवेति दर्शयितुमिष्टग्रहणं भविष्यतीत्यत आह—न च क्वचिदपीति । भवेदेवं यदि विधाद्वयं स्यात्, न त्वेतदस्तीत्यर्थः । एतच्चान्विताभिधाननिराकरणेन द्रष्टव्यम् । न त्वशक्यत्वासदाचारत्वे अवधीर्य शास्त्रानपेक्षमभ्युपगच्छन्तो दृश्यन्ते । न च सामान्यलक्षणायोगः ॥

तन्त्राधिकरणाभ्युपगमसंस्थितिः[1]

इत्यस्य[2] कथाधिकरणाभ्युपगमसंस्थितिरित्येवमप्यविरोधात् । तस्माद् यथाभाष्यमेव ज्याय इत्यत आह—यस्तावदिति । एतेन वार्त्तिककारीयोऽभ्युपगमसिद्धान्तस्तावदुचित इति दर्शयता छलतः पञ्चमसिद्धान्तापत्तिर्दर्शिता । न ह्ययमेतेष्वन्तर्भवतीति सतीर्थ्यानाम् । परान् प्रति तु दोषमाह—यस्त्विवति । यदि हि प्रमाणीकृतशास्त्रविरुद्धोऽप्यर्थोऽभ्युपगम्यमानः सिद्धान्ततामुपयायात्, न वादिनो कदाचिदप्यपसिद्धान्तेन निग्रहो भवेत् । यत्र यत्र प्रामादिकेऽप्यर्थे शास्त्रविरोधश्चोद्येत तत्र तत्राभ्युपगमसिद्धान्तोऽयं ममेत्येवमपि निस्तारात् परावृत्त्य च तेनैव निरनुयोज्यानुयोगेन निग्रहे कथासमाप्तौ तद्व्युत्पादनप्रयासस्याप्यभावात् । न चैवमस्त्विति वाच्यम् । शास्त्रप्रामाण्याभ्युपगमतद्विरुद्धार्थाभ्युपगमयोर्विरोधस्य दुर्वारत्वात् । [3]शास्त्रप्रामाण्याभ्युपगमे तदसमानार्थस्य स्ववचनस्य प्रामाण्याभ्युपगमविरोधात् । तदनुगुणस्य प्रामाण्याभ्युपगमे तद्व्याहताभिधायिनः पुनरपसिद्धान्तापातात् । तस्मात् न हि शास्त्राश्रया वादा भवन्तीति स्वप्नविलापः इत्यर्थः ॥ ३३ ॥

॥ भाष्यम् ॥

## उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥

उदाहरणेन सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः । साध्ये प्रतिसन्धाय धर्ममुदाहरणे च प्रतिसन्धाय तस्य [4]साधनतावचनं हेतुः । उत्पत्तिधर्मकत्वादिति । उत्पत्तिधर्मकमनित्यं दृष्टमिति ॥ ३४ ॥

॥ वार्तिकम् ॥

हेतोरवसरप्राप्तस्य लक्षणापदेशद्वारेण सूत्रम्—उदाहरणसाधर्म्यादिति ॥३४॥ उदाहरणेन साधर्म्यमुदाहरणसाधर्म्यम् । किं पुनरुदाहरणम् ? वक्ष्यमाणकम् । तेन साधर्म्यं समानधर्मता । यो धर्मः साध्ये भवति तथाभूत एवोदाहरणेऽपीति, न पुनः

---

१. न्या. सू. १. १. २६ २. वादाधि॰ M ३. ॰ण्यानभ्युप॰ M ४. साधनभाववचनं J

स एव, अन्यधर्मस्यान्यत्रावृत्तेः । न हि अन्यस्य धर्मोऽन्यत्र वर्तते, किं तु तत्तुल्यः स एवेत्युच्यते ॥

यदि पुनः साधर्म्यं हेतुरित्येतावन्मात्रमुच्येत[१] भवत्वेवं विवक्षितार्थसिद्धिः, अनिष्टप्रतिषेधस्तु न स्यात् । साधर्म्यमात्रं [२]हेतुरित्येतावता अनिष्टप्रतिषेधो न स्यादित्यतोऽनिष्टप्रतिषेधार्थमुदाहरणसाधर्म्यग्रहणम् । उदाहरणसाधर्म्यग्रहणादनुदाहरणसाधर्म्यमर्थात् निराकृतं भवति । अवधारणेन वा निराक्रियते । उदाहरणेनैव साधर्म्यमुदाहरणसाधर्म्यम्[३], न पुनरनुदाहरणेनापि साधर्म्यमेव उदाहरणेन[४], न पुनर्वैधर्म्यमपीति । कस्य पुनरुदाहरणेन साधर्म्यम् ? कस्यान्यस्य [५]पुनः स्यात्, साध्यस्य प्रकृतत्वात् प्रत्यासत्तेश्च । प्रकृतं प्रत्यासन्नं च साध्यम् । तस्मात् उदाहरणसाधर्म्यं साध्यस्य । अत्रापि च साध्येन[६] साधर्म्यमिति साधर्म्यमेवेत्यवधार्यते, [७]न पुनः साध्यस्यैव । किं पुनरनेनावधारणेन लभ्यते ? साध्यैकदेशवृत्तिरहेतुरिति, [८]एतत् लभ्यते । सोऽयं हेतुः साध्योदाहरणाभ्यां प्रतिसंहितः । किं पुनरस्य प्रतिसन्धानम् ? साध्ये व्यापकत्वम्, उदाहरणे च [९]संभवः । एवं द्विलक्षणस्त्रिलक्षणश्च हेतुर्लभ्यते । उदाहरणेनैव साधर्म्यमित्येवं ब्रुवतानभ्युपगतविपक्षस्याप्युदाहरणेनैव साधर्म्यमिति द्विलक्षणोऽपि हेतुर्भवतीत्युक्तम् । यदा पुनर्विपक्षमभ्युपैति तदाप्युदाहरणेनैव साधर्म्यं नानुदाहरणेनेति त्रिलक्षणो हेतुरित्युक्तं भवति । [१०]तत्र द्वावन्वयव्यतिरेकिणौ यथा वैशेषिकस्य अनित्यः शब्दः कृतकत्वात् सामान्यविशेषवतः अस्मदादिबाह्यकरणप्रत्यक्षविषयत्वाच्चेति[११] । द्वावन्वयिनौ यथा सर्वानित्यतावादिनः अनित्यः शब्दः प्रमेयत्वात् अमूर्तत्वाच्चेति । तदेवमन्वयव्यतिरेकभेदवान् अन्वयभेदवांश्चतुःप्रकारो हेतुरित्युक्तं भवतीति । तदेवं हेतुस्वरूपावधारणाद् हेत्वाभासा निराकृता भवन्ति । तत्रोदाहरणेनैव साधर्म्यमिति[१२] विपर्ययहेतोरनैकान्तिकस्य च निराकरणम् । साधर्म्यमेवोदाहरणेनेत्यनेनावधारणेन साध्यावृत्तिः साध्यैकदेशवृत्तिश्च निराक्रियत[१३] इति । तत्र तावद् विपर्ययहेतुरश्वोऽयं विषाणित्वात् । गौर्विषाणित्वादित्यनैकान्तिकः[१४] । साध्यावृत्तिश्चाक्षुषत्वादनित्यः शब्द इति । साध्यैकदेशावृत्तिरनित्याः परमाणवो गन्धवत्त्वादिति । स्वरूपतस्तर्हि अनैकान्तिकादिग्रहणं न कर्तव्यम् । यद्यनेन हेतुलक्षणेन एवं भाव्यमानेनार्थादनैकान्तिकादयो[१५] निराक्रियन्ते, नन्वनैकान्तिकः सव्यभिचार[१६] इत्येवमादिसूत्राना-

१. °मुच्यत इति J २. हेतुरित्यतो C ३. उद°र्म्यं om C ४. उदाहरणेन om C ५. पुनः om J ६. साध्यस्य J ७. न °स्यैव om C ८. एतत् om C ९. असंभव C १०. तदेवं द्वावप्यन्व C ११. °द्वेति C १२. °त्यनेन C १३. °कृत C १४. द्रः वै. सू. ३.१.१२ १५. °हेत्वादयो C १६. न्या. सू. १.२.५

रम्भः । नातिप्रसक्तस्य नियमार्थत्वात् अनेकधा हेत्वाभासा भिन्ना इति तेषां नियमज्ञापनार्थमनैकान्तिकादिग्रहणमिति ॥

उदाहरणसाधर्म्याच्च किमन्यत् साध्यसाधनमित्येके । न किलोदाहरणसाधर्म्यव्यतिरेकेण [1]अन्यत् साध्यसाधनमस्तीत्यत एवं सूत्रं कर्तव्यम्, उदाहरणसाधर्म्यं हेतुरिति । अथ पुनः साध्यसाधनशब्दोपादानमुदाहरणसाधर्म्यविशेषणार्थम्, एवमपि पञ्चम्यपदेशो निरर्थक इति । न हि भवति नीलादुत्पलमिति । अन्ये तु पञ्चम्यपदेशानर्थक्यमन्यथा वर्णयन्ति । अर्थान्तरे दृष्टत्वात् इहानर्थक इति । अर्थान्तरे किल पञ्चमी दृष्टा, यथा ग्रामादागच्छति ।[2] न [3]पुनरुदाहरणसाधर्म्यव्यतिरेकेणान्यत्[4] साध्यस्य साधनम् अस्तीत्यतः पञ्चम्यपदेशोऽनर्थक इति । [5]साध्यसाधनविशिष्टं चोदाहरणसाधर्म्यं हेतुरिति ब्रुवाणेनाभिधेयो हेतुरित्युक्तं भवति । तथा च साध्यनिर्देशः प्रतिज्ञेति व्याहतं भवति । न चाभिधानाभिधेयात्मकः समुदायो दृष्ट इति [6]नोभयेषामवयवत्वम् । तत्र त्वेष दोषो न [7]परिहारवाक्यं प्रयोजयति, तेनैवाशाकृतत्वात् । उदाहरणसाधर्म्यात् साध्यसाधनवचनं हेतुरित्येवं व्याचक्षाणेन समस्त एव दोषोऽपाकृतो भवतीति । अतो न परिहारवाक्यं[8] प्रयोजयति । साधर्म्यस्य व्यभिचार्यव्यभिचारित्वाद् विशेषणयोगो न तद्वचनस्यापकारकत्वात् । यत् तत्प्रकारवत् तद् विशेष्यते, साधर्म्ये चैतदस्ति न च वचसीति । वचसः [9]प्रकारवत्त्वं न संभवतीति न बुद्ध्यामहे, यथैवार्थः प्रकारवान् तथा वचोऽपीति । [10]अर्थः कथं प्रकारवान्? उभयथाभावात्, यस्मादसावर्थ उभयथा भवति, नित्योऽनित्यः, मूर्तोऽमूर्तश्च, वचनमपि तद्वदुभयथा भवतीति तुल्यं नित्यानित्यमूर्तामूर्तशब्दाभिधेयम् इति । दृष्टश्च शब्दे विशेषणप्रयोगः । यथा किमयमाह, गौरित्ययमाह इति । इतिपरतया शब्दः शब्दान्तराद् व्यवच्छिद्यते । स्वयं वचनविशेषकाणि बहूनि वाक्यानि प्रयुक्तानि । तद्यथा स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति । अथ वचनं नैव विशिष्यते[11], सिद्ध्यसिद्ध्यर्थं वचनं वाद इत्येवमादि व्याहतम् । सोऽयं सूक्ष्मेक्षिकया परस्य दोषानभिदधानो लोकादप्यपभ्रष्ट इति ॥

यदप्यर्थान्तरे दृष्टत्वादिहानर्थकः[12] पञ्चम्यपदेश इति? एवं ब्रुवाणः स्वसिद्धान्तं बाधते । न हि भवन्तः सेनावनादीन्यर्थान्तरभूतानि प्रतिपद्यन्ते । अथ च पञ्चम्यप-

---

१. अन्यत् om C २. °मादिति C ३. °रिहोदा° C ४. अन्यत् om C ५. °विशिष्टे चोदाहरणे साधर्म्यहेतुत्वेन ब्रुवाणो नाभि° C ६. नैवोभ° C ७. °हारान्तरं C ८. °हारान्तरं C ९. कारकत्वं न भग्न° C १०. वचनमपीति, अर्थस्तावत् C ११. नैवंविधमिति C १२. °दित्यन° C

देशो भवति वनादयं वृक्ष आनीतः सेनातोऽश्व इति। दृष्टश्च तन्त्रान्तरे पञ्चम्यपदेशः अनर्थान्तरे

सन्धिविग्रहाभ्यां षाड्गुण्यं संपद्यते।

इति। अनभ्युपगतार्थान्तरविपक्षस्य च हेतुर्विपक्षाद् विशेष इति पञ्चम्या अर्थान्तरवाचकत्वं कुतः? यदप्युदाहरणसाधर्म्यस्येति वक्तव्यम्, नोदाहरणसाधर्म्यादिति तदपि न, विवक्षातः कारकशब्दप्रयोगात्। यदा साधर्म्यमभिधीयमानतया विवक्षितं भवति, तदा उदाहरणसाधर्म्यस्येति युक्तम्। यदा तूदाहरणसाधर्म्यस्य निमित्तभावो वचनेऽपि विवक्षितः, तदोदाहरणसाधर्म्यादिति निमित्तपञ्चमी युक्ता। कथं पुनरुदाहरणसाधर्म्यस्य निमित्तभावः? सति भावात्, यस्मादुदाहरणसाधर्म्यं बुद्ध्वा विवक्षाप्रयत्नवायूदीरणताल्वाद्यभिघातादयः शब्दस्य निमित्तं भवन्ति। अतः पारम्पर्येणोदाहरणसाधर्म्यमपि निमित्तमिति। तस्मात् पञ्चम्यभिधानमेव ज्यायः॥

उदाहरणम्, अनित्यः शब्द उत्पत्तिधर्मकत्वादिति। उत्पत्तिधर्मकमनित्यं स्थाल्यादि दृष्टमिति। किं पुनरिदमनित्यं नाम? यस्यानित्यत्वमस्ति[1], तदनित्यम्। अथानित्यत्वं किम्? [2]उभयान्तपरिच्छिन्नवस्तुसत्तासंबन्धः, सत्ता वा तद्विशेषणा। अथोत्पत्तिधर्मकं किम्? उत्पत्तिर्धर्मो यस्य स उत्पत्तिधर्मा। उत्पत्तिधर्मैवोत्पत्तिधर्मकः। का पुनरियमुत्पत्तिः? असद्विशेषणस्य सतोऽत्यन्तमभावभावप्रतिषेधः। यदसद्विशेषणं सद्भवति तत् पूर्वं नासीत् पश्चाद् भवतीति गम्यते, तस्य [3]नात्यन्तमभावो नात्यन्तं च भाव इति प्रतिषेधो यः स उत्पत्तिशब्दार्थः। सत्ता चैवंविशेषणा। वाक्यार्थाभ्यनुज्ञानाच्च पदार्थाभ्यनुज्ञानम्[4]। यो वाक्यस्यार्थोऽभूत्वा भवतीति स पदस्यार्थ उत्पद्यते इति। सा उत्पत्तिर्धर्मो यस्य स भवत्युत्पत्तिधर्मक इति॥ ३४॥

॥ टीका॥

अवान्तरसंगतिं प्रदर्शयन् प्रतिज्ञावचनस्य साधनाङ्गत्वमपि दर्शयति—**हेतोरवसरप्राप्तस्येति**। प्रतिज्ञानन्तरं हेतुवचनस्यावसरः। तथा हि परप्रत्यायनाय वचनम् उच्चारयन्ति प्रेक्षावन्तः। तदेव च परे बोधयितव्या यद् बुभुत्सन्ते। तथा सत्यनेनापेक्षिताभिधायिना[5] परो बोधितो भवति। नो खल्वाम्रान् पृष्टः कोविदारानाचक्षाणः प्रष्टुरवधेयवचनो भवति। अनवधेयवचनश्च[6] कथं प्रतिपादको नाम? यथा च माठर

१. अस्ति om C २. °न्ताव° C ३. तस्यात्यन्तमभावोऽत्यन्तं C ४. °र्थोऽभ्यनुज्ञानो भवति, C ५. °धानात् C ६. °वचनस्य C

समिधमाहरेति गुरुणा प्रेषित [1]एषोहमाहरामीत्यनुक्त्वा तदर्थं यदायं दात्रार्थं[2] गृहं प्रविशति, तदास्मै कुप्यति गुरुः आः शिष्यापसद छान्दसवचर[3] माठर मामवधीरयसीति ब्रुवाणः । एवमनित्यं शब्दं बुभुत्समानायानित्यः शब्द इत्यनुक्त्वा यदेव किञ्चिदुच्यते कृतकत्वादिति वा, यत् कृतकं तदनित्यमिति वा, कृतकश्च शब्द इति वा तत् सर्वमस्यानपेक्षितम् आपाततोऽसंबद्धाभिधानबुद्ध्या[4], तथा चानवहितो न बोद्धुमर्हतीति । यत् कृतकं तत् सर्वमनित्यं यथा घटः, कृतकश्च शब्दः इति वचनमर्थसामर्थ्ये नैवापेक्षितशब्दानित्यत्वनिश्चायकमित्यवधानमत्रेति चेत्—न, परस्पराश्रयत्वप्रसङ्गात्[5] । अवधाने हि सति अतोऽर्थे निश्चयः । तस्माच्चावधानमिति । न च परिषत्प्रतिवादिनौ प्रमाणीकृतवादिनौ यदेतद् वचनं संबन्धाय प्रतीक्षेते[6], तथा च सति न हेत्वाद्यप्यपेक्षेताम् , तद्वचनादेव तदर्थनिश्चयात् । अनित्यः शब्द इति त्वपेक्षित उक्ते कुत इत्यपेक्षायां कृतकत्वादिति हेतुरुपतिष्ठते । सोऽयं पञ्चावयवप्रयोगे च तल्लक्षणे च प्रतिज्ञानन्तरकाल एवावसरो हेतोः । तदेवं हेतोरवसरप्राप्तस्य सामान्यलक्षणापदेशद्वारेण तद्विशेषलक्षणसूत्रम्—

उदा–तुः ॥३४॥ श्रुत्यर्थाभ्यामुभयलक्षणसूचनात् सूत्रम् । [7]अत्र हेतुरिति लक्ष्यनिर्देशः । स च विभागोद्देशे वाक्यावयव इति वचनरूपः । तस्य सामान्यलक्षणं साध्यसाधनमिति साध्यतेऽनेनेति व्युत्पत्त्या यद्यपि पारार्थ्यापन्नं कृतकत्वादिकमर्थम् आह, तथापि तस्य वचनात्मकहेतुसामानाधिकरण्यानुपपत्तेर्विषयि कृतकत्वादित्यादिकं वचनमुपलक्षयति । यदि च[8] वचनं हेतुरित्युच्येत तत्साध्येन समभिव्याहृतं प्रतिज्ञा स्यात् । अथ वचनमित्येतावदुच्येत, तदातिव्याप्तिः स्यात् । उपचारे तु न क्वचित् प्रसङ्गः । उपनयादपि साधनं न पराङ्गतया गम्यते, किं तु प्रातिपदिकार्थप्रधानतया स्वनिष्ठमिति न तत्रापि प्रसङ्गः । हेत्वाभासाश्च न साधनमिति साधनपदेनैव निराकृताः । न्यायवाक्यावयवत्वादेव[9] च न शब्दे[10] प्रसङ्गः । तदेवं समानासमानजातीयव्यवच्छेदकत्वं सिद्धं सामान्यलक्षणस्य । इदं चार्थम् । श्रौतं तु विशेषलक्षणम् । हेतुरिति यद्यपि सामान्यपदम्, तथापि प्रकरणादन्वयव्यतिरेकिहेतुविशेषपरं[11] द्रष्टव्यम् । तेन हेतुरिति लक्ष्यनिर्देशः । परिशिष्टं तु लक्षणम् ॥

तदेतद् भाष्यकृद् व्याचष्टे—**उदाहरणेनेति** । साधर्म्यपदव्याख्यानं **सामान्यादिति** । साध्यसाधनपदव्याख्यानं **साध्यस्य धर्मस्येति** । साध्यस्येति धर्मिमात्रे बुद्धिर्मा

---

१. एवमाच° J २. दात्राय om C ३. °वत्तर C ४. °धानम्, C ५. °श्रयत्वात् J ६. वचनमनुसन्धाय प्रयतिष्येते C ७. अत्र च C ८. तु J ९. °त्वेन C १०. नान्यशब्दे C ११. विशेष° om C

भूदित्यत उक्तं धर्मस्येति । धर्मसहितस्य धर्मिण इत्यर्थः । एतदेव स्फुटयति—**साध्ये प्रतिसन्धायेति** । उदाहरणसाधर्म्यात् साध्यस्येत्यनेनान्वयपक्षधर्मत्वे अन्वयव्यतिरेकपक्षधर्मत्वानि च दर्शितानि । साध्यसाधनमित्यत्र च साध्यग्रहणेनाबाधितविषयत्वासत्प्रतिपक्षत्वे सूचिते, तद्विपरीतस्य साधनानर्हत्वादिति ॥

तदेतद् वार्त्तिककारो व्याचष्टे—**उदाहरणेनेति । यो धर्मो धूमादि—साध्ये भवति स तथाभूत एवोदाहरणेऽपीति** । उदाह्रियत इत्युदाहरणं दृष्टान्तधर्मी तस्मिन् न पुनः स एव । कुतः ? **अन्यधर्मस्येति** । यदि तर्हि नान्यस्य धर्मोऽन्यत्र[1] वर्तते, कथं तर्हि समानता ? सा हि तत्त्वान्यत्वविरोधिनीत्यत आह—किं तु तत्तुल्यः स एवेत्युच्यते[2], यथा तानेव शालीन् उपयुंक्ते[3] तानेव तित्तिरीनीति तदनेन **सामान्याद्** इति भाष्यं व्याख्यातम् ॥

उदाहरणग्रहणप्रयोजनमाह—**यदि पुनरिति** । साधर्म्यमात्रत्वं[4] हि विरुद्धे चासाधारणे सव्यभिचारे चास्तीति तेषामपि वचनं हेतुः स्यात् । तेषामपि यथास्वं साधारणत्वादित्यनिष्टमित्यर्थः । ननु तथापि सव्यभिचारेऽप्युदारणसाधर्म्यमिति कथं निवर्त्यते[5] इत्यत आह—**उदाहरणेति** । विशिष्टविधानस्य शेषनिषेधोऽर्थसिद्ध इत्यर्थः । पक्षान्तरमाह—**अवधारणेन वेति** । साधर्म्यादित्यतो विशेषेण सर्वसाधर्म्यप्राप्तौ उदाहरणसाधर्म्यमपि प्राप्तमेवेति विधानानर्थक्यं परिसंख्यायकं सदवधारणार्थमेव भवति । तदवद्योतनाय च एवकारः **साधर्म्यमेव** इत्यत्र साध्यपदं योजनीयम् । तेन साध्यैकदेशासिद्धिमपाकरिष्यति । पृच्छति—**कस्य पुनरिति** । उत्तरम्—**कस्यान्यस्येति** । अत्रैव हेतुद्वययाह—**प्रकृतत्वात् प्रत्यासत्तेश्च** । साध्यं खल्वत्र प्रकृतं प्रधानम्, तदुद्देशेन अवयवानां प्रवृत्तेः। साध्यसाधनमिति च पदेन सन्निधापितमिति तदेव द्वितीयम् अवधारणं स्फुटीकरोति—**अत्रापि चेति** । **साध्ये प्रतिसन्धाय** इति भाष्यार्थमाह—**साध्योदाहरणाभ्यामिति । द्वाविति** । सपक्षव्यापकाव्यापकावित्यर्थः । **अनैकान्तिकस्य चेति** । साधारणस्य असाधारणस्य चेत्यर्थः । **एवं भाव्यमानेनेति** । परिभाव्यमानेन । **नातिप्रसक्तस्येति**, परिसख्यायकं हेत्वाभासलक्षणं न विधायकमित्यर्थः ॥

एतत् किल हेतुलक्षणं **भदन्तो** दूषयांबभूव

**साधनं यदि साधर्म्यं न वाक्यांशः,**

**न ह्यर्थः पञ्चावयववाक्यस्यावयवः ।**

**न पञ्चमी ।**

---

१. नान्यस्य धर्मोऽन्यत्र C　२. एवोच्यते C　३. भुङ्क्ते C　४. °त्रं हि C

यदि साधनसाधर्म्ययोरत्यन्ताभेदो यदि वा सामान्यविशेषभावेन कथञ्चिद् भेदः उभयथापि न पञ्चमी, साधनसामानाधिकरण्येन प्रथमाप्रसङ्गात्। अत्यन्ताभेदे चैकतरपदाप्रयोगात्।

वाक्यं चेत्

ततः पञ्चम्युपपद्यते। साधनं हि वाक्यरूपं साधर्म्यादर्थादुत्थितं यतः।

तद्विशेष्यं स्यात्

न हि वाक्यमेवार्थादुत्थितम्, अपि तु विवक्षाद्यपीति[1]। न विशेष्यम्, कुतः?

साधनत्वादसंभवः॥

अर्थसमुत्थानामपि ज्ञानविवक्षादीनामप्रसङ्गः, असाधनत्वादिति।

न तत्रापि द्विधा दोषात्

साक्षाद् वा साधनं पारम्पर्येण वा? यदि पारम्पर्येण, वक्तृज्ञानं तर्हि साक्षात् साधर्म्यसमुत्थं पारम्पर्येण च श्रोतुः साध्यविज्ञानसाधनं हेतुः स्यात्। अथ साक्षात् साधनम्, तर्हि श्रोतृज्ञानं पारम्पर्येण साधर्म्यसमुत्थं साक्षात् साधनं हेतुः स्यात्।

प्रकृते त्वन्यसंभवः।

यदि तु पञ्चावयववाक्यस्य प्रकृतत्वात् ज्ञानादिव्यवच्छेदः, तथाप्यन्यसंभवः[2], उपनयस्यापि साधर्म्यसमुत्थत्वात्।

स्वलक्षणेन बाधा चेन्न विकल्पादिसंभवात्॥

तस्मात् षष्ठ्यस्तु तत्रापि विशेषणमनर्थकम्।

साधर्म्यस्य हेतुरित्येतावन्मात्रं वक्तव्यमिति॥

तदेतद् दिग्नागदूषणमुपन्यस्यति—**उदाहरणसाधर्म्याच्चेति**। यद्यर्थात्मकं साधर्म्यमेव साधनमुच्यते तदैतद् दूषणमित्यर्थः। यदि पुनरर्थात्मकस्य साधर्म्यस्यार्थात्मकमेव साधनं सामान्यमुच्यते, तत्राह—**अथ पुनरिति**। तदिदमुक्तं भदन्तेन—न पञ्चमी॥

**अन्ये त्विति** त्वेतदन्यथा व्याचक्षत इत्याह—**अन्ये त्विति**। विशेषातिरिक्तं न सामान्यं नाम किञ्चिदस्ति, तस्य कल्पनामात्रत्वाद् भेदस्य च वस्त्वधिष्ठानत्वादित्यभिप्रायः। दोषान्तरमाह—**साध्यसाधनेति**। यदा हि साध्यसाधनं नामोदाहरणसाधर्म्यादतिरिक्तं नास्ति किं तु शब्दमात्रमवशिष्यते, तदोदाहरणसाधर्म्यमनेनाभिधेयत्वेन विशेषणीयम्। तथा च **साध्यनिर्देशः प्रतिज्ञा** इत्यनेन विरोधः। अनेन ह्यवयवः शब्दात्मकः प्रतिज्ञा

---

१. विपक्षा॰ Cvar    २. ॰प्यन्यस्य तथा संभवः J

लक्ष्यते। हेत्वादिसमुदायापेक्षया चावयवो भवति। न चामिधानाभिधेयात्मकः समुदायो दृष्ट इति। तस्मात् समुदायाभावात् **नोभयेषामवयवत्वम्**। तदिदमुक्तम्—**न वाक्यांश इति**। तदेतल्लक्षणं व्याचक्षाणैरस्माभिः परिहृतमिति न परिहारान्तरं प्रयोजयतीत्याह—**तत्र त्विति**। उक्तं यथा हेतुपदसन्निधौ साधनपदं हेतुपदे प्रवर्तते, न चोपनयप्रसङ्गः, तस्य प्रातिपदिकार्थमात्रप्रधानत्वेन हेतुभावाप्रकाशकत्वादिति॥

अत्र चोदयति—**साधर्म्यस्येति**। साधर्म्यस्य लिङ्गस्य [1]कृतकत्वादिहेतुपदवाच्यस्य [2]व्यभिचारित्वादियोगादुदाहरणविशेषणयोगो न पुनः साध्यसाधनपदवाच्यस्य कृतकत्वादित्यादेर्हेतुवचनस्येत्यर्थः। तदुक्तं **भदन्तेन**—तत्रापि विशेषणमनर्थकं वचने अपीत्यर्थः। तदेतद् दूषयति—**वचस इति**। वचनमपि दर्शनभेदेन उभयथापि भवति, यथा **मीमांसकानां** नित्यं वचनम्, **वैशेषिकाणा**मनित्यमिति। केषाञ्चिदमूर्तः शब्दः, केषाञ्चित् मूर्त इति। यथाहुः

वायुरापद्यते शब्दताम्

इति। तथा प्रातिस्विकमपि भेदं सर्वेषामेव शब्दानामितिकरणो दर्शयतीत्याह—**दृष्टश्चेति**। स्वचरितविरोधमाह—**स्वयमिति**। **अनभ्युपगतेति**। अनभ्युपगतोऽर्थान्तरं विपक्षो यस्य हेतोरनित्यत्वे साध्ये कृतकत्वादेः स तथोक्तः। यदभ्युपगतं **भदन्तेन** तस्मात् षष्ट्यस्त्विति तद् दूषयति—**यदपीति**। **विवक्षातः कारकशब्दप्रयोगादिति**। कारकत्वेन संबन्धित्वं लक्षणीयम्[3], क्रियाकारकभावगर्भत्वात् संबन्धित्वस्य। न तु षष्ठी वा [4]हेतुपञ्चमी वा कारकविभक्तिरिति। अत्र **भाष्यकारेण** शुद्धं हेतुवचनमुदाहृतम्—**उत्पत्तिधर्मकत्वादिति** तस्य चोदाहरणसाधर्म्यसमुत्थत्वज्ञापनायोदाहरणमपि दर्शितम् **उत्पत्तिधर्मकमनित्यं दृष्टमिति**॥

तत्र **भाष्यकारेण** शुद्धं हेतुवचनमुदाहृतम्। तत्प्रतिज्ञापदेन पूरयित्वा **वार्त्तिककृद्** आह—**उदाहरणमिति**। अत्र पृच्छति—**किं पुनरिति**। सतो विनाशो वा अनित्यत्वम्, तद्योगो वा? तच्चोभयमयुक्तम्, न हि सदसतोः कश्चिदस्ति संबन्धः, असमानकालत्वात्। ततश्चानित्यः शब्द इति सामानाधिकरण्यं न स्यात्[6]। अपि च शब्दस्य भूत्वा यदभवनम्, न तदेव पिठरस्य। न ह्यभवनत्वं नामास्ति सामान्यम्, येन दृष्टान्तो न साध्यविकलः स्यात्। न च सामान्यातिरिक्तं सादृश्यं वस्त्वन्तरं

१. °दित्यादिहेतु° C २. व्यभिचार्यव्यभि° C ; आदि om C ३. उपलक्षितम् C ४. हेतु° om C ५. शुद्धं om J ६. °दिति C

दृष्टमिष्टं वा । तस्मात् [1]मृष्टाशेयमनित्यत्वं साध्यमिति भावः । गूढधिय उत्तरम्— **यस्यानित्यत्वमस्ति तदनित्यम्** । स्वाभिप्रायेण पृच्छति— **अथेति** । उत्तरवाद्यभिप्रायमुद्घाटयति—**उभयान्तेति** । अपरान्तेति वक्तव्ये उभयान्तग्रहणेन पूर्वान्तनिवेशनं हेतोरुत्पत्तिमत्त्वस्यात्यन्तिकीं प्रत्यासत्तिमविनाभावोपयोगिनीं दर्शयितुमिति । अवच्छेदकत्वं चोपलक्षणत्वम्[2], न तु विशेषणत्वम् । तच्चापरान्तस्य भिन्नकालस्य संबद्धस्यापि विरोधितया बुद्धिस्थस्य संभवति । [3]तथा च यैवापरान्तावच्छिन्नस्य सत्ता पिठरस्य [4]सैवापरान्तावच्छिन्नस्य शब्दस्यापि । एवं सत्तासमवायोऽपि तद्विधयोः पिठरशब्दयोः समानः । विरोधिभावः[5] पश्चाद्भावश्चाभावमात्रात् प्रध्वंसस्य विशेषः । पृच्छति—**अथोत्पत्तीति** । न तावदुत्पन्नस्योत्पत्तिर्धर्मः, तदाप्युत्पद्यत इति प्रत्ययप्रसङ्गात् । नाप्यनुत्पन्नस्य असतो धर्मित्वायोगादिति भावः । गूढधिय उत्तरम्—**उत्पत्तिरिति** । उक्ताभिप्रायवान् पुनः पृच्छति—**का पुनरियमिति** । उत्तरम्—असद्विशेषणस्य सतोऽत्यन्तमभावभावप्रतिषेधः असदिति प्रागभावमाह, विशेषणत्वं च प्रागभावस्य उपलक्षणत्वम् । तच्च भिन्नकालस्यापि बुद्धिस्थतामात्रेणोक्तम् । तेनासद्विशेषणस्य सत इत्येतावतैव पूर्वान्तपरिच्छिन्नस्य सत्तासंबन्धः सत्ता वा तद्विशेषणोत्पत्तिर्दर्शिता । यश्चेदृशस्तस्य गगनवत् नात्यन्तं संभवः,[6] नापि[7] गगनकुसुमवदत्यन्ताभाव[8] इति स्वरूपमुक्तमुत्पत्तिमुपलक्षयितुम् । उपलक्षणोपलक्ष्ययोश्चाभेदविवक्षया सामानाधिकरण्यम् । न चैवं लब्धोत्पत्तिनि वस्तुनि उत्पद्यत इति प्रत्ययप्रसङ्गः[9] । लभ्यमानोत्पत्तिनि तदवयवेषु तदुत्पादनानुकूलव्यापारावेशलब्धपूर्वापरीभावेषु तत्प्रयोगस्य लोके दर्शनात् । तस्मात् पूर्वान्तावच्छिन्नवस्तुसत्तया तत्संबन्धेन वा तस्यैव वस्तुनोऽपरान्तावच्छिन्ना[10] सत्ता वा तत्संबन्धो वा ज्ञाप्यते इति [11]सर्वं रमणीयम् ॥

ननु भाष्यकृद् अभूत्वा [12]भवतीत्यस्य वाक्यास्यार्थमुत्पत्तिं वक्ष्यति[13], त्वं पुनरसद्विशेषणस्य सतोऽत्यन्तमभावभावप्रतिषेध इत्यस्य वाक्यस्यार्थमुत्पत्तिम् । [14]अतः कुतो न विरोध इत्यत आह—**वाक्यार्थेति** । य एवार्थो भाष्यकारेण उत्पत्तिशब्दार्थतयाभ्यनुज्ञातोऽङ्गीकृतः, स एवास्माभिरपि । नात्यन्तमभावभावप्रतिषेध उत्पत्तिः[15], अपि त्वसद्विशेषणस्य सतः सत्ता वा तत्संबन्धो वेत्युक्तमित्यर्थः ॥ ३४ ॥

---

१. मृषाशेषम° C २. °त्वं उपलक्षकत्वम् J ३. तथा च om J ४. °न्तपरिच्छिन्नस्य J ५. भावे J ६. °न्तं भावः J ७. नापि om C ८. °वद्वानात्य° C ९. प्रत्यय° om C १०. °न्नता तत्सं° C ११. सर्वं om J १२. भावित्वमि° C. १३. न्या. भा. ५.१.३७. १४. तत् C १५. °स्योत्पत्तिः C

## ॥ परिशुद्धिः ॥

इह प्रतिज्ञार्थः सर्वथैव कथासु नोपयुज्यते,[1] अर्थोपलब्ध्या युक्तोऽप्यन्यथैव लब्धः ? आद्ये विप्रतिपत्तिमपि न विभावयेत् । अविभावयंश्च तां कथमिव प्रतिवदेत् ? अप्रतिवदतश्च वचनं कथं कथाशरीरतामियात् ? तथा च कथकः कथं निगृह्येत, निगृह्णीयाद् वेति न संप्रतीतिर्न च विजयो गर्दभीक्षीरमथनवदनर्थकः प्रयासः । नापि द्वितीयः, स हि विवादाद् वा अवयवान्तराद् वा ? विवादादपि व्यवहिताद् वा, अवयवान्तरैकवाक्यतापन्नाद् वा ? अवयवान्तरादपि साक्षाद् वा, आक्षेपतो वेति ? न तावदाद्यः, आसत्तेः अभावादेकवाक्यत्वानापत्तेः । आपत्तौ वा आन्तरालिकासाधनाङ्गवचनेन निगृह्येत । अनिग्रहे वा परः पर्यनुयोज्योपेक्षणमासादयेत् । द्वितीये त्वविवाद एव । वयमपि हि पराभ्युपेतपक्षविपरीतां कोटिमुपनीय तत्सिद्धयेऽवयवान्तरमभिदध्यादिति ब्रूमः । न ह्येवंभूतकोट्युपदर्शनव्यतिरेकेण प्रतिज्ञायाः शृङ्गमस्ति । नापि तृतीयः, न हि हेत्वादिभिः चतुर्भिः प्रतिज्ञार्थोऽभिधीयत इति वक्ष्यामः । नापि चतुर्थः, स ह्यपेक्षाकाले वा, अन्यदा वेति । तत्र प्रथममुररीकृत्याह—**तथाहीति** । यद् बुभुत्सन्ते [3]यदेति शेषः । प्रतिपन्नविवादविषया हि तन्निर्णयहेतुं साधनमनुबुभुत्सामहे । न तु तन्निर्णयहेतुभूतसाधनावबोधवन्तो विवादविषयं निर्णयस्य निर्णयरूपमन्तरेण निरूपयितुमशक्यत्वात् । तदनिरूपणे तत्साधनस्यापि तथात्वेनाशक्यनिरूपणत्वात् । अनिरूपितस्य चैषितुमशक्यत्वात् । तथा च तस्यैव प्रथमाभिधाने प्राप्तेऽन्यस्याभिधानानवकाशात् आक्षेपस्यापि कुतोऽवकाश इति ? नन्वपेक्षितानभिधानेऽप्यपेक्षितं कुर्वाणः कथमनवधेयवचनो[4] नामेत्यत आह—**यथा चेति** । यत्रापेक्षितमन्यथापि शक्यसंपादनम्, तत्रापि तदनभिधाने विपरीतबुद्धिः[5] किमङ्ग यत्र वचनेनैवापेक्षितसिद्धिरित्यर्थः **अन्यदेति** पक्षमुपस्थापयति[6] । **यत् कृतकमित्यादि** । दूषयन्ति—**न परस्पराश्रयप्रसङ्गादिति** । यो हि येन यत् साधयितुम् उद्यतः स तत्सामग्रीमप्रतिकूलयन्नेव तथा कर्तुमर्हति । यथाकालमपेक्षिताभिधानं च वाक्यसामग्री, तदनादरे तूदाहरणीयोदाहरणक्रमनियममपि नाद्रियेत, प्रतिपाद्यापेक्षानियमानुरोधेन तत्र तथेति चेत् ? तदिहापि समानम् । तथा च तत्कालातिक्रमेणाक्षेपोऽपि नोपयोगी, शिरोमुण्डनान्तरं नक्षत्रपरीक्षावत् । उपयोगो वा परस्पराश्रयप्रसङ्गः अयक्षाराधनसाध्यधनेन यक्षाराधनवदित्यर्थः । कथं तर्हि,

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्[7] ।

---

१. अर्थोपयुक्तो° J, अथोपयुक्तो A　२. परं M　३. तदेपि M　४. °धेयो A　५. वचनानभि° A, °सिद्धिः M　६. °मुत्थापयति A　७. न्या. सू. २।१।६८

इत्यादौ प्रतिज्ञामनभिधायैव उदाहरणाद्युपादानमित्यत आह—**न चेति**। तथापि हेत्वभिधानेन किं तत्स्वरूपस्योपनयेनैव साक्षादभिधानादित्यत आह—**अनित्यः शब्द इति त्वपेक्षित उक्त** इति। तत्राप्याकांक्षैव विजयते। न ह्यनित्यः शब्द इत्युक्ते कृतकत्वानित्यत्वव्याप्तौ वा कृतकत्वस्य वा शब्दधर्मिसंबन्धे श्रोतुराकांक्षा किं नाम कुत एतत्प्रतिपत्तव्यमिति स्यात्। इयं चापेक्षासाधनत्वाभिव्यञ्जकविभक्त्यन्तेभ्यः कृतकत्वादित्यादिपदेभ्य एव निवर्तत इत्यर्थः। अत एव गमकत्वादेतस्य मार्गस्य सर्वशास्त्रकारा एवमेवोपाददते। **सौगतोऽपि** हि

मानं तु द्विविधं मेयद्वैविध्यात्॥
असन्तोऽक्षणिकाः तस्यां क्रमाक्रमविरोधतः॥

इति प्रत्यक्षरं प्रतिज्ञाहेतू उपादाय व्यवहरति। कथायां तु परवञ्चनार्थं तावुपेक्षते। शास्त्रं तदिति चेत्। अथ शास्त्रे किमनर्थकमभिधीयते? तत्रास्ति वा प्रतिज्ञादेः किञ्चित् प्रयोजनमिति? आद्ये, साधु परव्युत्पादकत्वमस्य निरर्थकं प्रलपतः। द्वितीये तु शब्दोच्चारणस्य नार्थगतेरप्यधिकं प्रयोजनं नाम, प्रथमोपक्रमे विवरणशंकाया अप्यभावादिति॥

ननु सामान्यलक्षणमन्तरेण न विशेषलक्षणावसर इत्यत आह—**श्रुत्यर्थाभ्यामिति**। साध्यते निश्चीयतेऽनेनेति। नत्वेवं सति लिङ्गमुक्तं स्यात्। तथा च कथं वाक्यावयव इत्यत आह—**यद्यपीति**। नन्वलमुपलक्षणेन यावता वचनमेव साधनमस्तु, साध्यते प्रतिपाद्यते तेनापि हि स्वार्थ इत्यत आह—**यदि त्विति**। एवं हि साध्यसाधनं साध्यप्रतिपादकं वचनमित्यर्थः। तथा च प्रतिज्ञैव हेतुः स्यात्। अथ साध्यपदं विहाय साधनं प्रतिपादकं वचनमित्यर्थः, तत्राह—**अथेति**। तदेतदर्थान्तराविवक्षायां दूषणमुक्तम्। यदि त्वेवं क्रियेत लिङ्गप्रतिपादनद्वारेण साध्यसाधनं निश्चायकं वचनमिति। तदा अश्रुताध्याहारः। उदाहरणसाधर्म्यादितिसहितस्य त्वव्याप्तिरलाभो वा सामान्यलक्षणस्येति द्रष्टव्यम्। एवं च व्याख्याने वचनपदमसूत्रस्थमेव **टीकाकृता** स्वयमुपनीय विरोधातिव्याप्ती कुतः शंकिते इति शंका निवर्तते। ननु तथाप्युपनये प्रसङ्ग इत्यत आह—**उपनयादपीति**। साध्यसाधनवचनमित्यत्र हि साधनत्वविशिष्टार्थवचनम् इत्यर्थो गम्यते। न चोपनयः। कोष्ठगत्या तथाभूतार्थगोचरोऽपि तथाभूतमभिधत्ते, साधनत्वाभिव्यञ्जकविभक्तिविशेषशून्यत्वात्। अतएव कुत इत्याकांक्षा। तथाचायं कृतक इत्यस्मान्न निवर्तते, अपि तु कृतकत्वादित्यस्मादेव। तर्हि किंभूतमुपनयात् प्रतीयत इत्यत आह—**किं त्विति**। स्वनिष्ठं साधनत्वादिधर्मरहितम्। कुतः? प्रातिपदिकार्थ-

प्रधानतया। तत्परतया[1] तावन्मात्राभिधायकविभक्तिमतः प्रयुक्तत्वादिति शेषः। एतदुक्तं भवति, न हि हेतुवदुपनयोऽपि कुत इत्याकांक्षाया प्रवर्तते, अपि तूदाहरणेन व्याप्तौ प्रदर्शितायाम्। भवतु तावदेतत्, तथापि प्रकृतो विवादविषयः किं व्याप्तधर्मविशिष्टो न वेत्यपेक्षायां[2] सा च तथा चायं कृतक इत्यनेनैव परं निवर्त्यते, न तु कृतकत्वादित्यनेन। तस्मान्न हेतूपनययोरर्थतो रूपतः प्रयोजनतो वा संकर इत्यर्थः॥

ननु च वचनलक्षणायां यद्यपि ज्ञानेऽर्थे वा न प्रसङ्गः[3], तथापि साध्यसाधनमिति कृतकत्वमत्र हेतुरित्यादौ वचन एव प्रसङ्गः। एतस्यापि तथाभूतार्थप्रतिपादकत्वादित्यत आह—**न्यायवाक्येति**। अनेनाकांक्षौपयिकता दर्शिता। न च कुत इत्याकाङ्क्षायां साध्यसाधनमिति वा कृतकत्वं हेतुरिति वा वचनमौपयिकम्। अतो नैवंभूतेषु प्रसंग इत्यर्थः। तेन विशेषपरत्वेन हेतुरिति लक्ष्यनिर्देशो नानुपपन्न इति शेषः। **विशिष्टविधानस्येति**। न क्वचित् प्रदेशो साधर्म्यं हेतुलक्षणत्वेन[4] विहितम्, येनेह सविशेषणतया विशेषणमात्रोपसंक्रान्तो विधिः स्यात्। नाप्यत्र विशेषणशून्यस्यैव साधर्म्यस्योपादानम् येन तावन्मात्रगोचरो विधिर्भवेत्, परस्परस्वतन्त्रोभयर्थत्वे वाक्यभेदाच्च। तस्मात् अनन्यगतिकतया लोहितोष्णीषवद् विशिष्टविधिरेवायम्। तथा च अलोहितोष्णीषवदनुदाहरणसाधर्म्यस्यार्थसिद्धः प्रतिषेध इत्यर्थः। **पक्षान्तरमाहेति**। [5]अभ्युपगमस्याप्यविशिष्टसाधर्म्यमात्रविधानेऽपि न दोष इति भावः॥

ननु यद्यविशिष्टविधानेनैव प्रकृतसिद्धिः, किमुदाहरणग्रहणेन? न चेत् किमविशिष्टविधानेनेत्यत आह—**साधर्म्यादित्यत** इति। परिसंख्या [6]अतिप्रसक्तिनिवर्तनमपाकरिष्यति। तदुदाहरणप्रदर्शनेन परिसंख्यायकं हेत्वाभासलक्षणम्। परिसंख्या परिवर्जनबुद्धिः। विशेषतो ज्ञातानां[7] तेषां स्ववाक्ये परिवर्जनादिमुखेन भवत्वित्येतदर्थमर्थलब्धमपि कण्ठोक्त्याभिधीयते। तल्लक्षणमित्यर्थः। न विधायकं न सर्वथैवालब्धविधायकमित्यर्थः। सुगमो **दिग्नाग**भङ्गः। हेतावुदाहर्तव्ये प्रतिज्ञोक्तिः किमर्थमित्यत आह—**अत्रेति**। उदाहृते हेतौ लक्षणं योजयितुं हेत्वर्थे च विवेचयितव्ये प्रसङ्गात् प्रतिज्ञार्थं विवेचयितुमिति भावः। तथापि प्रध्वंसस्य नानात्वात्[8] जात्यादेरुपसंग्राहकस्य वा भावात् कथं व्याप्त्यादिसिद्धिः? उपलक्ष्याभेदमात्रेण च तत्सिद्धौ कुण्डलवता देवदत्तेन साध्यो व्यवहारो दण्डवतापि साध्येतेत्यत आह—

१. तत्परतया om JA २. °त्माकांक्षायां° M ३. अर्थेऽपि न प्रसङ्गः M
४. °देशसाधर्म्यहेतु° A ५. °गमस्याविशिष्ट° M, गम्यापि A ६. निवर्तने अपा° M
७. ज्ञात्वा J ८. नान्योत्वात् M

**विरोधीति** । यथा ह्यभावमात्रस्य भावप्रतियोगितयैवौपाधिकसामान्यसंबन्धादेकव्यवहार-हेतुत्वं तथा तद्विशेषस्यापि पूर्वापरेतरेराश्रयान्तरभावप्रतियोगितया तत्तद्व्यवहाराविरोध इत्यर्थः । न चैवं लब्धोत्पत्तिनीति । सर्वत्र हि धात्वर्थोपरक्ता भावना आख्यातार्थः[1] । भावना च कारकव्यापारः । उत्पद्यते घट इत्यत्र तु घटो न कारकमसत्त्वात् । ततश्च अकारकस्यैव कारकैरत्यन्तसन्निधेस्तथोपचारो वा कारकाणामेव कार्यशब्दोपचारो वा । उभयथापि व्यापारावेशसमय एवाख्यातप्रयोगो न तु धात्वर्थमात्रावेशसमये । न हि पक्वे धात्वर्थमात्रमुपादाय पच्यत इति प्रयुज्यते लोकैः । तत् कस्य हेतोः ? व्यापारावेशाभावात् । तथेहापीति ॥३४॥

॥ भाष्यम् ॥

किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते । किं तर्हि ?

**तथा वैधर्म्यात् ॥ ३५ ॥**

उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः । कथम् ? अनित्यः शब्दः उत्पत्तिधर्मकत्वात् । अनुत्पत्तिधर्मकं नित्य[2] दृष्टम् आत्मादय इति ॥३५॥

॥ वार्त्तिकम् ॥

**किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते । किं तर्हि ? तथा वैधर्म्यात् ॥३५॥** अत्रापि उदाहरणवैधर्म्यादित्युदाहरणेनैव वैधर्म्यं नानुदाहरणेनेति । वैधर्म्यमेव चोदाहरणेन[3], न साधर्म्यमपीति । उदाहरणम्, अनित्यः शब्दः उत्पत्तिधर्मकत्वात् । अनुत्पत्तिधर्मकं नित्यं दृष्टम् आत्मादय इति **भाष्यम्** । एतत्तु न समञ्जसमिति पश्यामः, प्रयोगमात्रभेदात् । प्रयोगमात्रं हि भिद्यते नार्थ इति । न च प्रयोगमात्रभेदाद् वस्त्वन्तरं भवितुमर्हति । उदाहरणमात्रभेदाच्च । उदाहरणमात्रं केवलं भिद्यते आत्मा घट इति । यदि चोदाहरणभेदाद् भेदो भवति, तथा वैधर्म्यादिति न पठितव्यम् । किं कारणम् ? उदाहरणभेदादेव भेदो गम्यते । उदाहरणसूत्रं च भेदकमस्ति तद्विपर्ययाद् वा विपरीतमिति । तस्मात् नेदमुदाहरणं न्याय्यमिति । उदाहरणं तु नेदं निरात्मकं जीवच्छरीरम् अप्राणादिमत्त्वप्रसङ्गादिति[4] । यदुभयपक्षसंप्रतिपन्नमप्राणादिमत्, तत् सर्वं निरात्मकं दृष्टम् । न चेदमप्राणादिमद्भवति[5] । तस्मान्नेदं निरात्मकमिति ॥

---

१. °तार्थाः A २. यथा आत्मादि द्रव्यमिति C ३. °मेवोदा° C ४. इति om J ५. भवति om J

सोऽयमवीतः परपक्षप्रतिषेधाय भवतीति[1]। तावेतौ वीतावीतहेतू लक्षणाभ्यां पृथगभिहिताविति। तत्र स्वरूपेणार्थपरिच्छेदकत्वं वीतधर्मः। अवीतधर्मः पुनः परपक्षप्रतिषेधेनैव [2]प्रवर्तत इति। एकस्य विधीयमानोऽर्थः, इतरस्य प्रतिषिध्यमानः। कथं पुनरयमवीतोऽर्थपरिच्छेदक इति? अथ योऽभ्यनुज्ञातो [3]वीतोऽर्थपरिच्छेदकः स कथम्? वीतोऽन्वयादिति चेत्? वीतो हेतुरन्वयेन प्रतिपादयति। अथ प्रमेयत्वं कस्मान्न हेतुः, यद्यन्वयस्यैतत् सामर्थ्यम्? व्यभिचारात् प्रमेयत्वं न हेतुः? न तर्ह्यन्वयः प्रतिपादकः, अपि त्वव्यभिचारः। यदि चाव्यभिचारात् हेतुरर्थं प्रतिपादयति, तदा अचोद्यमेतत् कथमवीतः प्रतिपादक इति अवीतस्यापि व्यतिरेकाव्यभिचारित्वात् प्रतिपादकत्वमिति। कथम्? यावदप्राणादिमत् तत् सर्वं निरात्मकं दृष्टमिति, अप्राणादिमत्त्वं च जीवच्छरीरात् निवर्तते। तस्मात् तदव्यभिचारि निरात्मकत्वमपि निवर्त्स्यतीति। अथ पुनरप्राणादिमत्त्वनिवृत्तिमेव प्रतिपद्यते[4] न पुनर्निरात्मकत्वस्य? न युक्तमेवं भवितुम्। किं कारणम्? पक्ष एवं सति व्यभिचारो दर्शितः स्यात्। पक्षव्यभिचारदर्शने च सति शक्यं वक्तुम्। अन्वयिनि तु हेतौ शब्दे नित्यत्वमस्तु सति कृतकत्वे इति। तस्मात् यथान्वयिनोऽन्वयसंबन्धाव्यभिचारः प्रतिपादकः, तथा व्यतिरेकिणोऽपि विपर्ययसंबन्धाव्यभिचार[5] इति। एतेन यथा वीतहेतोरव्यभिचारिण एकस्य धर्मस्य दर्शनादितरधर्मानुमानम्, एवमवीतहेतावपि एकधर्मनिवृत्तिदर्शनादितरधर्मनिवृत्त्यनुमानमिति॥

सर्वात्मकत्वप्रसङ्ग इति चेत्—न, विकल्पानुपपत्तेः। यद्येकधर्मनिवृत्तिदर्शनादितरधर्मानिवृत्तिरनुमीयते, तन्निवृत्त्या च सात्मकत्वं सिध्यतीति मन्यसे, एवं सति[6] सर्वात्मकं शरीरं प्राप्नोति। किं कारणम्? अप्राणादिनिवृत्तेरडित्थादिनिवृत्तिप्रतिपादकत्वात्। नेदमडित्थवच्छरीरमप्राणादिमत्वप्रसङ्गात्। [7]एवमडवित्थादिप्रतिषेधोऽपि वक्तव्य इति। तच्च नैवम्, विकल्पानुपपत्तेः। इदं तावद् भवान् पृष्टो व्याचष्टाम्, किमवधारितकार्यस्वभावः पदार्थो डित्थशब्दवाच्यः, आहोस्वित् नेति। यद्यवधारितकार्यस्वभावः, संज्ञाभेदमात्रमात्मा स इति। अथानवधारितकार्यस्वभावः, तस्य व्यावृत्तिरशक्या प्रतिपादयितुम्। व्यावृत्तिप्रधानं चेदं वाक्यम्। तस्मादवीतहेतोरर्थमबुद्ध्वा सर्वात्मकता चोद्यत इति॥

यदि तर्हि असाधारणो धर्मो हेतुर्नित्या पृथिवी गन्धवत्त्वादित्येवमादयोऽपि हेतवः[8] प्राप्नुवन्ति। न, हेत्वर्थापरिज्ञानात्। सत्यम्, असाधारणो वैधर्म्यहेतुः न

१. °र्थ एव भवति C २. भवति J ३. वीतः om C ४. °त्तिरेव प्रतिपाद्यते C
५. व्यतिरेकाव्यभि° C ६. च C ७. अडित्थादि° C ८. इत्यादयो हेतवः C

पुनर्वैधर्म्यं व्यभिचारि । गन्धवत्त्वं च[1] नित्यानित्यव्यभिचारि । तस्मादन्वयिनो व्यतिरेकिणश्च नान्वयव्यतिरेकौ हेतुभावे निमित्तम्[2], किं त्वन्वयव्यतिरेकयोरव्यभिचार इति । यः पुनरसाधारणो धर्मः पक्ष एव केवलं यस्य तत्तुल्यविपक्षौ न स्तः, स कस्मात् न हेतुः, यथा सर्वं नित्यं सत्त्वात् ? सत्यमयमसाधारणो न तु व्यावृत्तः । अव्यावृत्तेर्न हेतुरिति । एतेन यः पक्षैकदेशवृत्तिरविद्यमानसपक्षविपक्षः स न हेतुरित्युक्तं[3] भवति, यथा सर्वं नित्यममूर्तत्वादिति । यः पक्षैकदेशे वर्तते अविद्यमानसपक्षो विपक्षाच्च निवर्तते यथानभ्युपेतनित्यपक्षस्य नित्ये वाङ्मनसे श्रावणत्वादिति, स कस्मात् न हेतुः ? अयमपि न हेतुः, सूत्रार्थेनापोदितत्वात्, सूत्रार्थस्तथावैधर्म्यादिति । अत्र च वैधर्म्यमुदाहरणेनैव । वैधर्म्यमेव चोदाहरणेन न पुनरिदं वैधर्म्यमेव । तस्मात् न प्रसङ्गः इति । एवमनयोर्वीतावीतहेत्वोः पृथगर्थप्रतिपादकत्वस्य आकुमारं[5] प्रसिद्धेः, यदुक्तं वीतावीतौ न पृथक्प्रतिपत्तिहेतू इति तत् संमूढेनोक्तम् ॥

हेतुर्विपक्षाद् विशेष इत्यन्ये । अन्ये त्वन्यथा हेतुलक्षणं व्याचक्षते, हेतुर्विपक्षाद् विशेष इति । यदि पुनरेतावन्मात्रमुच्यते हेतुर्विशेष इति ? किं स्यात् ? विशेषमात्रं हेतुः स्यात् । साधर्म्यमात्रनिराकरणं च स्यात । साधर्म्यमात्रनिराकरणे विशेषमात्रपरिग्रहे च इष्टानिष्टसंग्रह[6] इति । अतोऽनिष्टहेतुनिराक्रियायै विपक्षग्रहणम् । विपक्षाद् यो विशेषः स हेतुः । विपक्षाद् विशेषो हेतुरित्येतावति चोच्यमाने विपक्षाद् विशेषमात्रस्य हेतुत्वम् । स चानेकभेदः । तन्निवृत्त्यर्थं विपक्षादेवेत्यवधार्यते । अवधारणे चैतस्मिन् विपक्षैकदेशवृत्तिरेकोऽनुषज्यते गौर्विषाणित्वादिति[7] । स हि विपक्षादेव विशेष इति । नायमनेनावधारणेन निराक्रियते इति [8]तन्निवृत्त्यर्थं द्वितीयमवधारणं [9]विपक्षाद् विशेष एव । न त्वयं विशेष एव, विपक्षैकदेशवृत्तित्वात् सामान्यमपि । तदेवमाभ्यामवधारणाभ्यामन्वयव्यतिरेकी त्रिलक्षणो हेतुर्लभ्यते इति ॥

सत्यमेकस्त्रिलक्षणो हेतुर्लभ्यते । [10]सपक्षैकदेशवृत्तिश्च एकः त्रिलक्षण एव निराक्रियते । कथम् ? आद्येनावधारणेन विपक्षादेव यो विशेषः स हेतुरिति ब्रुवता यस्तुल्यैकदेशवृत्तिः स निवर्तितो भवति । न ह्ययं विपक्षादेव विशेषः, किं तु सपक्षैकदेशादपि । विपक्षैकदेशवृत्तिप्रतिषेधात् समानादपि पक्षात् यो विशेष एव स न हेतुरित्युक्तं भवति । यथा अश्वोऽयं विषाणित्वात्[11] इति । न पुनरयं प्रयत्नानन्तरीयक-

---

१. तु J २. ॰भावनि॰ C ३. भवति om J ४. ॰पगतनि॰ C ५. ॰दकत्व माकु॰ J ६. ॰ग्रहणम् J ७. द्रः वै. सू. ३.१.१७ Bibl ८. ॰न्निराक्रियायै C ९. विशेष एव च विपक्षात् C १०. समानपक्ष॰ C ११. द्रः वै. सू. ३.१.१६ Bibl.

त्वादिर्विशेष एव न भवति, अपि तु पक्षैकदेशवृत्तित्वात् सामान्यमपि । यद्येवं विपक्षादेव यो विशेषः स हेतुरित्येतदवधारणं बाधितं भवति । न तावदयं प्रयत्नानन्तरीयकत्वादिर्विपक्षादेव विशेषः, किं तु तत्तुल्यैकदेशादपि । अथाश्रूयमाणेनाप्यर्थेनावधारणेऽर्थवती ? तत्तुल्यैकदेशवृत्तिवत् साध्यैकदेशवृत्तेरपि हेतुत्वप्रसङ्गः । येनैव सामर्थ्येन तत्तुल्यैकदेशवृत्तिर्लभ्यते तेनैव सामर्थ्येनानुमेयैकदेशवृत्तिरपि हेतुः प्राप्तः । यथा अनित्याः परमाणवः गन्धवत्त्वादिति । ते एतेऽवधारणे यदि तावद् यथाश्रुते[1] भवतः, तत इष्टः प्रयत्नानन्तरीयकत्वादिर्न हेतुः । अथान्यथा [2]श्रूयेते, अन्यथा इष्टः प्रकल्प्येते अभिप्रेतार्थसिद्ध्यर्थम् , तथाप्यभिप्रेतप्राप्तिवदनिष्टोऽपि गन्धवत्त्वादिर्लभ्यते इति उभयं च लक्षणदोषः, अभिप्रेतहानिरनिष्टप्रसङ्गश्च । नैष दोषः वृत्तौ विशेषितत्वात् । अनिष्टस्य गन्धवत्त्वादेः प्राप्तिरिति न दोषः, यस्माद् वृत्तावाह, यो धर्मः पक्षस्येति अनेन चाक्षुषत्वादिः पक्षासंभवी निराक्रियते, पक्षैकदेशवृत्तिस्तु कथम् ? न ह्यसौ पक्षधर्मो न भवति । [4]तथा विपक्षैकदेशवृत्तिर्न विपक्षस्य न धर्म इति । तस्मादन्यथा निराकरणे यत्नः कर्तव्यः इति । न कर्तव्योऽवधारणान्निवृत्तेः, अवधारणादेकदेशवृत्तिर्निवर्तिष्यते । किं पुनरत्रावधार्यते ? किं धर्म एव पक्षस्य, उत पक्षस्यैव धर्मः ? अस्तु तावद् धर्म एव पक्षस्येति, किं पुनरस्यावधारणस्य सामर्थ्यम् ? किमनेन संभवो ज्ञाप्यते, उतासंभावो [5]निवर्त्यते ? उभयथापि नावधारणस्य सामर्थ्यमस्ति संभवज्ञप्तेरसंभवनिवृत्तेश्चावधारणमन्तरेणाप्यधिगतेः । न चैकदेशवृत्तिर्निराक्रियते इति व्यर्थमवधारणम् । अथ पुनर्व्याप्तिरस्यावधारणस्यार्थः धर्म एव पक्षस्येति, न पुनरधर्मोऽपि । यः पुनः पक्षैकदेशवृत्तिरसावधर्मोऽपि । सत्यमनेनैकदेशवृत्तिर्निराक्रियते इति । एतस्मिन्नपि एकं सन्धित्सतोऽन्यत् प्रच्यवते । भवत्वेकदेशवृत्तेर्निराकरणं सपक्षे सिद्धे एतत् पदं किमर्थमारभ्यते ? कथं पुनरिदमनारभ्यम् ? यस्माद् व्याप्त्यर्थेनावधारणेन चरितार्थमेतत् । धर्म एव पक्षस्येति पक्षो नियतः, धर्मोऽनियतः । तस्यानियतस्य व्याप्त्यतिव्याप्तिभ्यां तत्तुल्यविपक्षगतिः तत्र विपक्षे नास्तीति [6]प्रसृतस्य प्रतिषेधो भवतु । सपक्षे सिद्धे इत्येतत् पदं मा भूत् । अथ पुनरिदमवधारणमन्यथा क्रियते पक्षस्यैवेति, एवमप्युत्तरे[7]द्वेऽपि पदे सपक्षे सिद्धो विपक्षे नास्तीति च बाधिते भवतः । कथम् ? सपक्षे सिद्ध इत्येतदवधारणार्थबाधितं पक्षस्यैव धर्मः सपक्षे च सिद्ध इति । न हि लोक एवं-

---

१. °श्रुती J  २. श्रूयते C  ३. प्रकल्प्यते C  ४. यथा C  ५. व्यावर्तते C
६. प्रसक्तस्य C  ७. °भ्यनन्तरे C

प्रकाराणि वाक्यानि प्रवर्तन्ते देवदत्तमेव भोजय यज्ञदत्तं चेति । उत्तरं च[1] पदं विपक्षे नास्तीति गम्यमानत्वात् न कार्यम् । केन गम्यमानत्वादिति ? अवधारणेन, पक्षस्यैव धर्मः [2]स नान्यस्येति गम्यते [3]एतदिति विपक्षे नास्तीत्येतत् न कर्तव्यमिति । न च पक्षैकदेश वृत्तिर्निराक्रियत इति यदर्थमवधारणं स एवार्थो हीयते इति । अथ पुनः सपक्षे सिद्ध इत्येतदपि पदमवधारणार्थमेवारभ्यते, सपक्ष एव सिद्धः, सिद्ध एव च सपक्ष इति । किं पुनरस्मिन् पदेऽवधारणेन लभ्यते ? यदि संभवः, सोऽनवधारितोऽपि गम्यते सपक्षे सिद्ध इति । अथ व्याप्तिः, तज्जातीयस्यैकदेशवृत्तिरहेतुरिति प्राप्तम् । अथ सपक्ष एव सिद्ध इति, तथापि पूर्वोत्तरे पदे व्याहते भवतः, पक्षस्य धर्मो विपक्षे नास्तीति अवधारणार्थबाधितत्वात् पूर्वमनारभ्यं गम्यमानत्वादुत्तरमपि । अथ विपक्षे नास्तीत्येतदप्यवधारणार्थमेवेति ? अत्रापि किमवधार्यते विपक्ष एव नास्तीति, नास्त्येव विपक्ष इति । यदि विपक्ष एव नास्ति, तदा गौर्विषाणित्वादिति हेतुः प्राप्तः । एष हि विपक्ष एव नास्ति । अथ विपक्षे नास्त्येवेति न[4] पुनर्मध्यमस्य पदस्यानारम्भः ? कथं पुनर्मध्यमस्य पदस्यानारम्भ इति[5] ? तत्र पूर्वपदं व्याप्त्यर्थमुत्तरं पदं विपक्षैकदेशवृत्तिप्रतिषेधार्थम् । अथ सपक्षे सिद्ध इत्येतत् पदं किमर्थमारभ्यते इति ? यदि संभवार्थं व्याप्त्यर्थेनाद्येनावधारणेन संभवो लभ्यते इति व्यर्थम् । तदेतस्मिन् लक्षणे वृत्त्या सह विचार्यमाणेऽनिष्टहेतूपनिपातो वा इष्टहेतुपरित्यागो वाभिप्रेतग्रस्तहानिर्वेति दोषाः ॥

हेतुर्विपक्षाद् विशेष इति च यदा सौत्रान्तिकपक्षमाश्रित्य लक्षणं विचार्यते, तदा विपक्षासंभवात्हेतुर्विपक्षाद् विशेष इति च विपक्षार्थो वक्तव्यः । न ह्यसति [6]विपक्षे विपक्षार्थं पश्याम इति । न चासति पञ्चम्याः प्रयोगः संभवति । विपक्षादिति पञ्चमीविषयो वक्तव्यः । असति च विपक्षे नाधिकरणार्थः संभवतीति विपक्षे नास्तीति सप्तम्यर्थो वक्तव्यः । विपक्षासंभवे च[7] सति पक्षतज्जातीयव्यापकत्वात् कृतकत्वादेः विशेषोऽर्थश्चिन्त्यः, कृतकत्वादिति तदा[8] साधारणत्वात् सामान्यं न विशेष इति । तदेतल्लक्षणं स्वसिद्धान्तेनासङ्गतत्वादलक्षणमिति । यद्यपि हेतुवार्त्तिकं ब्रुवानेनोक्तं सप्तिकासंभवे षट्प्रतिषेधादेकद्विपदपर्युदासेन त्रिलक्षणो हेतुरिति । तदप्ययुक्तम्, द्विपदलक्षणयुक्तयोर्हेतुत्वात् तत्र किल सप्तिका संभवति, पक्षस्यैव धर्मः, समान एव पक्षे सिद्धो विपक्षे नास्ति । पक्षस्य धर्मः समाने च सिद्धः पक्षस्य धर्मो विपक्षे नास्ति । समाने एव च सिद्धः विपक्षे नास्ति, पक्षस्य धर्मः समाने च सिद्धो विपक्षे च नास्तीति ।

---

१. तु C २. सामान्य° C ३. एवेति C ४. न om J ५. कथम्° इति om C ६. विपक्षे om C ७. च om C ८. °दिस्त° J

तदेवं सप्तिकासंभवे सति षट्प्रतिषेधमुक्त्वा यदयं त्रिपदपरिग्रहेण त्रिलक्षणस्य हेतुतां शास्ति, तेनैकद्विपदपर्युदासं ज्ञापयतीति । तच्च नैवम् । [1]द्विपदलक्षणयुक्तयोर्हेतुत्वादिति । अनभ्युपगतानित्यपक्षस्य[2] कृतकत्वादित्ययं द्वाभ्यां लक्षणाभ्यामुपयुज्यते, प्रयत्नानन्तरीयकत्वादिति चानयोर्हेतुभावो न स्यात् । यश्चायं व्यतिरेकी हेतुः, नेदं निरात्मकं जीवच्छरीरमप्राणादिमत्त्वप्रसङ्गादित्येवमादिः स न हेतुः स्यात् [3]पदद्वयोपयोगादिति । तस्मात् हेतुर्विपक्षाद्विशेष इत्येतल्लक्षणं विचार्यमाणमनभिमतस्य वा हेतुत्वमापादयति, इष्टं वा बाधते ग्रंथं वा निराकरोति, शास्त्रं वा बाधते इति ॥

तत्र यः सन् सजातीये द्वेधा चासंस्तदत्यये ।

इत्यन्ये । [4]अनेन सन् सजातीये द्वेधा चेति सन् सपक्षे द्वेधा[5] चासंस्तदत्यय इत्यसपक्षे नास्तीति । एतावता च किल लक्षणेन त्रिलक्षणो हेतुर्लभ्यते इति यथाश्रुति न लभ्यते । यदि तावदेतल्लक्षणं यथाश्रुति भवति पक्षे विद्यत इति केनैतत् लभ्यते ? ननु चोक्तं हेतुः तदाभासो वा प्रायः पक्षधर्म एवेति[6] । उक्तमेतत्, न पुनरनेन पक्षधर्मो हेतुरिति लभ्यते, किं त्वपक्षधर्मो न हेतुः न हेत्वाभास इति । अथाप्यर्थतो लभ्येतापक्षधर्मो न[6] हेतुर्न हेत्वाभास इत्ययं यदि वाक्यार्थो भवति, अर्थाद् गम्यते हेतुर्हेत्वाभासश्च पक्षधर्म इति । सत्यम्, अर्थात् पक्षधर्मो गम्यते न तु व्यापको नियतो लभ्यते इति । अपक्षधर्मनिवृत्तिमात्रत्वेन च संभवमात्रं लभ्यते इति । तच्च द्वेधा, व्यापकमव्यापकं च । तत्राव्यापकोऽनिष्टो हेतुः प्राप्तः । न प्राप्तः पक्षधर्म एवेत्यभिधानाद् यः पक्षस्य धर्म एव स हेतुः[7], न त्वयं पक्षधर्म एव एकदेशवृत्तित्वात् । न, अवधारणस्यान्यार्थत्वात् । अन्यार्थमवधारणं भवन्तः कल्पयन्ति । किमर्थम् ? हेतुहेत्वाभासनियमज्ञापनार्थम् । तदवधारणमन्यार्थं सत् कथमव्यापकं निवर्तयिष्यति ?

अथोभयकारि भवत्यव्यापकनिवृत्त्यर्थं च हेतुहेत्वाभासनियमज्ञापनार्थं च, तथापि सन् सजातीये द्वेधा चेत्यकरणीयम् । कथम् ? व्याप्त्यर्थेनावधारणेन [8]पक्षो नियतो धर्मस्त्वनियत इति । अनियतस्य व्याप्त्यव्याप्तिभ्यां धर्मस्य द्वौ राशी शिष्यमाणौ सजातीयः, तदत्ययश्च । तत्रातिप्रसक्तेरसंस्तदत्यय इति युक्तम् । सन् सजातीय इति किमर्थम् ? यदि संभवार्थम्, तन्न, अनियमात् । व्याप्त्यव्याप्त्योः संभवो गम्यते इति किमनेन सन् सजातीय इति ? द्वेधा चेति सर्वथा न वक्तव्यम् । इदं तावद् गम्यमानत्वात्

---

१. °पद° om C २. °गतनित्य° J ३. द्विपदोप° C ४. अनेन om J
५. चेति···द्वेधा om C ६. एव भवति C हेतुर्न for न C ७. हेतुः प्राप्तः C
८. पक्षोऽपि धर्मश्च C

सन् सजातीय इति न [1]वक्तव्यम् । सच्छब्देन व्याप्त्यव्याप्त्योः सामान्येनाभिधानाद् द्वेधा चेति प्रमत्तवाक्यम् । अथ मन्येत सन् सजातीय इत्यवधारणार्थमारभ्यत इति ? अवधारणार्थो युक्त आरम्भः, अवधारणं [2]तु न युक्तम् । कथमिति ? यदि तावदेवम् अवधार्यते सन्नेव सजातीय इति, [3]प्रयत्नानन्तरीयकत्वं ते न हेतुः । यस्मात् प्रयत्नानन्तरीयकत्वं सदसदपि[4] द्विधा चेति एतदवधारणार्थबाधितम् । न हि भवति ब्राह्मणमेव भोजय क्षत्रियं चेति । अथ सजातीय एव सन्नित्यवधार्यते, तथापि पूर्वोत्तरे बाधिते भवतः । कथम् ? एकमवधारणार्थबाधितम्, एकं गम्यमानत्वात् । अथ पुनर्द्वेधा चेत्यवधारणार्थम् ? अत्रापि किमवधार्यते, किं सजातीय एव द्विधा, द्विधैव सजातीय इति ? यदि तावत् सजातीय एव द्विधा नान्यत्र पक्षे न[5] तदत्यये तद् द्विधेत्युक्तं भवति । यद्येवं सन् सजातीये इति न कर्तव्यम्, प्राप्त्यर्थेनावधारणेनाद्ये पदे सजातीये संभवस्योक्तत्वात् । द्विधा चेत्यन्यपदे द्विधा निवृत्तिपरत्वात् । द्विधा चेत्यभिधानात् संभवो गम्यत इति सन् सजातीय इति सर्वथा न वक्तव्यम् । सजातीय एव द्विधा चेत्यनेनैवावधारणेन [6]पक्षे व्याप्तिर्लभ्यते इति धर्म एव पक्षस्येति व्याप्त्यर्थमवधारणमित्ययुक्तम् । अथ मा भूत् सर्वपदावधारणव्याघात इति नावधारणम्, तथापि मध्यमे द्वे पदे अपि न कर्तव्ये । सोऽयं [7]गड्डप्रवेशाक्षितारकाविनिर्गमन्याय इति । अथ पुनर्द्विधैव सजातीय इति । तथापि [8]कृतकत्वं न हेतुः, न ह्यसौ सजातीये द्विधैव इति । त्रिलक्षणं च हेतुं ब्रुवाणेन स्वसिद्धान्तोपात्तयोर्द्विपदयुक्तयोर्हेत्वोरहेतुत्वमुक्तं भवति ।[9] व्यतिरेकी च न हेतुरिति प्राप्तम् । नैव हेतुरिति चेत् [10]कुतस्तस्य हेतुत्वे यत्न इत्यनुत्तरम् । अथ पुनरवधारणानि नैव क्रियन्ते, तथापि पक्षैकदेशवृत्तिरनैकान्तिकश्चानुषक्तः इति । एतेन

ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुः ।

इति प्रयुक्तम् । अनेन चाव्यापकादिर्हेतुर्लभ्यत इति उक्तोत्तरमेतदपीति । असंस्तदत्यय इत्येतदपि विपक्षे नास्तीत्यनेन समानमिति ॥

तादृगविनाभावीधर्मोपदर्शनं हेतुरित्यपरे । तादृशा विना न भवतीत्यनेन किल द्वयं लभ्यते, विपक्षासत्त्वं तादृक्सत्त्वं च । उपदर्शनग्रहणेन किल [11]पक्षधर्मो लभ्यते इत्येवं किल त्रिलक्षणप्रविभावितात्मा पक्षो लभ्यत इति । यत् तावत् तादृगविनाभावि-

१. कर्तव्यम् C २. तु om C ३. ०कत्वादिस्ते C ४. ०त्वादिः सन्नसन्नपि C ५. न om C ६. पक्षवृत्तिः C ७. गृहप्र० C ८. कृतकत्वादिः C ९. त्वमिति प्राप्तम् C १०. कुतः C ११. पक्षे सत्त्वं C

ग्रहणाद् विपक्षेऽसत्त्वं तादृक्सत्त्वं च लभ्यत इति तत् न युक्तम्। तादृशा विना न भावीति एतस्माद् वचनाद् विपक्षेऽसत्त्वं गम्यते, तादृशे तु संभव इत्येतत् कुतः। न ह्ययं नियमो यो विपक्षे नास्ति सोऽवश्यं तज्जातीयेऽस्तीति। एवं च सति श्रावणत्वाद्यपि हेतुः प्राप्तः। श्रावणत्वाद्यपि तादृशा विना न भवतीति। भवतु तावत् तादृगविनाभाव्यभिधानात्[1] तत्तज्जातीये संभवः, स पुनः पक्षे संभवतीत्येतत् कुतः ? ननूपदर्शनग्रहणादेतत् लभ्यते इति ? न लभ्यते, उपदर्शनग्रहणस्याभिधानार्थत्वाद् उपदर्शनग्रहणमभिधानार्थम्। उपदर्श्यतेऽनेनेति, न पुनरस्यैतत् सामर्थ्यमस्तीति पक्षेऽन्यत्र चेति। क्व पुनरन्यत्र स्यात् ? यत्र संभवः। क्वचास्य संभवः ? तज्जातीये। तस्मादेतदुक्तं भवति तज्जातीयाविनाभाविनः तज्जातीय एवाभिधानं हेतुरितिः। एवं च ते चाक्षुषत्वं हेतुर्भवति। न हि चाक्षुषत्वम् अनित्यत्वेन विनाभवतीति। उपेत्य वा भवतु तादृगविनाभाविनो धर्मस्य पक्ष उपदर्शनमिति। तथापि पक्षैकदेशवृत्तिं केन निराकरोषि ? उपदर्शनग्रहणेनेति चेत्—न, तस्य संभवमात्रज्ञापनार्थत्वात्। अथ मन्येत उपदर्शनग्रहणेन व्याप्तिर्लभ्यत इति न युक्तम्, उपदर्शनग्रहणस्य संभवमात्रज्ञापनार्थत्वात्। उपदर्शनग्रहणेन संभवमात्रं गम्यते, पक्षे स पुनर्व्यापक इति न युक्तम्। अथात्रापि केनचित् न्यायेनावधारणानि क्रियेरन् तान्यव्यापकहेतुनिराकरणेऽसमर्थानीति पूर्ववत् प्रसङ्गः॥

यत् त्विदमुदाहरणमेतस्मिन् प्रयत्नानन्तरीयकत्वादिरनित्यस्याग्नेर्धूम इति। तत्र धूमस्तावदग्नेर्न प्रतिपादक इत्युक्तम्। प्रयत्नानन्तरीयकत्वमप्यहेतुः। कुतः ? प्रयत्नानन्तरीयकत्वस्य पक्षावृत्तित्वात्। न हि प्रयत्नानन्तरीयकत्वं शब्दधर्मः। न हि कश्चिच्छब्दः प्रयत्नानन्तरीयकोऽस्ति, संयोगविभागशब्दयोनित्वात् शब्दस्य[2]। अथ पारम्पर्येण प्रयत्नः शब्दकारणम्। पारम्पर्येण सर्वेऽर्थाः शब्दकारणमिति विशेषणमयुक्तं प्रयत्नानन्तरीयकत्वादिति। अनित्यः शब्दो यतस्तदुत्पत्तेरिति [3]वक्तव्यम्। यच्चेदं प्रयत्नानन्तरीयकत्वं शब्दस्यानित्यत्वे कारणं भावाभिधानेनोच्यते, किं पुनस्तत् ? किं जन्म, उतोपलब्धिरिति ? यदि तावत् जन्म, [4]जन्मैव समर्थमिति प्रयत्नानन्तरीयकग्रहणं व्यर्थम्। न हि भवत्यनित्यः शब्दो देवदत्तकृतकत्वादिति। अत एवं वक्तव्यं जन्मवत्त्वादिति। यदि चेदं जन्म व्यभिचारि भवेत्, ततः प्रयत्नानन्तरीयकत्वग्रहणमर्थवत्। किं कारणम् ? व्यभिचारिणि विशेषणान्यर्थवन्ति भवन्तीति। अथोपलब्धिः प्रयत्नानन्तरीयकत्वादित्यनेन भावाभिधानेनोच्यते, एवमप्युपलब्धेरेव सामर्थ्यमस्तीति व्यर्थं विशेषणम्।

१. भाविग्रहणे C २. द्रः वै. सू. २।२।३६ ३. कर्तव्यम् J ४. जन्मैव g

न ह्युपलभ्यमानं द्वेधा भवति नित्यमनित्यं च, प्रयत्नानन्तरमन्यथा चेति। अथ ब्रूषे प्रयत्नानन्तरमुपलभ्यमानं युष्माकं घटत्वं नित्यमिति, त्वयैवैतद् व्यभिचारितमिति शब्दानित्यत्वानुमितौ प्रयत्नानन्तरीयकत्वं न हेतुः, अव्यापकं च प्रयत्नानन्तरीयकत्वम्, शब्दराशेः पक्षीकृतत्वात्। अथ शब्दविशेषं पक्षीकृत्योच्यते, तत्राप्याद्य एव प्रयत्नानन्तरीयकत्वं संभवति। न द्वितीयादिष्विति अव्यापकत्वमनिवृत्तम्। अथ यः प्रयत्नानन्तरीयकः [1]शब्दः सोऽनित्य इति? तथाप्यन्यो हेतुर्वक्तव्यः। हेतोः पक्षविशेषणत्वेन-उपात्तत्वात्॥

यदप्युक्तमप्रयत्नानन्तरीयकस्य त्रयी गतिरिति, किञ्चिन्नित्यमाकाशादि एकेषाम्, किञ्चिदनित्यं विद्युदादि, किञ्चिदसदेवाकाशकुसुमादि। इदं तन्महानैयायिकत्वं महावादित्वं च यत् तावदसदप्रयत्नानन्तरीयकं च किञ्चिच्चेति चित्रम्। नित्यं तु किञ्चिद् भवति, न पुनरप्रयत्नानन्तरीयकम्। न ह्याकाशमप्रयत्नानन्तरीयकमिति शक्यं वक्तुम्, अप्रयत्नानन्तरीयकस्य जन्मविशेषणार्थत्वात्[2]। न चाकाशस्य जन्मास्ति। तस्मात् न प्रयत्नानन्तरीयकं नाप्यप्रयत्नानन्तरीयकमाकाशमिति। एतेनाभावो व्याख्यातः। अभावेऽप्येवमेवेति। तदेवमेतानि न हेतुलक्षणानि संभवन्तीति इदमेवार्षं हेतुलक्षणं न्याय्यमिति॥ ३५॥

॥ टीका ॥

सूत्रान्तरमवतारयति—**किमेतावदिति**। **तथा—त्** ॥३५॥ अत्र यदि वैधर्म्यादित्युच्यते ततः सकलकेसरादिमत्पदार्थपक्षीकरणेनाश्वत्वं यदा विषाणित्वेन साध्यते तस्यास्ति पक्षवैधर्म्यमिति हेतुः स्यादित्यत आह—**उदाहरणेन वैधर्म्यमिति**। विपक्षेणेत्यर्थः। तथापि यदा शरीरमात्रं पक्षीकृत्य सात्मकत्वं साध्यते प्राणादिमत्त्वेन, तदास्ति तस्योदाहरणेन वैधर्म्यमिति सोऽपि हेतुः स्यादित्यत आह—**एवेति**। न चैतावता [4]सपक्षे सत्त्वप्रसङ्गः, सपक्षस्याभावात्। अवधारणस्य च व्याप्त्या पक्षसत्त्वेनोपपत्तेरिति। तथापि अन्वयव्यतिरेकिणो हेतोरनैकान्तिकस्य विपक्षैकदेशव्यापिनः संग्रहः स्यात्। यथा अनित्यः शब्दः, उत्पत्तिधर्मकत्वाद् अनित्यो मूर्तत्वादित्यत आह—**वैधर्म्यमेव चोदाहरणेनेति** विपक्षोदाहरणेनेत्यर्थः। भाष्यकारीयमुदाहरणं निगदेनोपन्यस्यति—**अनित्यः शब्दः**। इति। नित्यमनुत्पत्तिधर्मकं दृष्टमिति योजना। तदेतद्

१. शब्दः om C २. °विशेषितत्वात् C ३. न्याय इति J ४. सपक्षत्वप्र° C

दूषयति—**एतच्चेति** । मा भूत् प्रयोगमात्रभेदाद् भेदः, उदाहरणभेदाद् भेदो भविष्यतीत्यत आह—**उदाहरणमात्रभेदाच्चेति** ॥

तदेतद् भाष्यकारीयमुदाहरणं दूषयित्वा स्वकीयमुदाहरणमाह—**उदाहरणं त्विति** । प्राणादिना च स्वकारणं [1]प्रयत्नेच्छाद्युपलक्षयति—**यदुभयपक्षसंप्रतिपन्नं** निरात्मकं [2]घटादि तत्सर्वमप्राणादिमद् दृष्टम् इति [3]व्यत्यासेन योजना । [4]प्राणादिकारणेच्छादि-कारणरहितं यदित्यर्थः । **तस्मात् नेदमिति** । नेच्छादिसमवायिकारणरहितम् । यश्चासौ इच्छादिसमवायिकारणं पृथिव्यादिविलक्षणो द्रव्याणां नवमः, स आत्मेत्युच्यते इत्यर्थः । अन्वयिव्यतिरेकिणस्तद्विवेकस्य[5] च तन्त्रान्तरप्रसिद्धेन नाम्ना [6]तन्त्रान्तरप्रसिद्धतां दर्शयति—**सोऽयमवीत** इति । विविधेन प्रकारेण इतः प्राप्तो वीतः, पक्षव्यापकत्वे सति सपक्ष-व्याप्त्या अव्याप्त्या च, तस्मादन्योऽवीत इति ॥

गूढाभिसन्धिः पृच्छति—**कथं पुनरिति** । गूढाभिसन्धेरुत्तरम्—**अथ योऽभ्यनुज्ञात** इति । यथा वीतस्यार्थपरिच्छेदकत्वं तथैवावीतस्येत्यर्थः । प्रष्टा स्वाभिप्रायम् उद्घाटयति[7]—[8]**अन्वयादिति** । गृहीताविनाभावो हि हेतुः साध्येन तस्य परिच्छेदकः, स च दृष्टान्तधर्मिणि हेतुसाध्यधर्मयोर्दर्शने सत्यविनाभावो दृष्टो भवति । न च सात्मकत्वं क्वचिद् दृष्टम्, तत् कथं तेनाविनाभावदर्शनं प्राणादिमत्त्वस्य, दर्शने वा[9] नावीतः किं तु वीत एवेत्यर्थः । उत्तरवादी प्रष्टारं पृच्छति—**अथ प्रमेयत्वमिति** । प्रष्टा आह—**व्यभिचारादिति** । उत्तरवाद्याह—**न तर्ह्यन्वय** इति । स एवैकग्रन्थेनाह—**यदि चेति** । तदेवमुत्तरवादिना स्वाभिप्राय उद्घाटितः । पृच्छति—**कथम्** । अव्यभिचारित्वं व्यतिरेकिण इति । अव्यभिचारमाह—**यावदिति** । अत्रापि यावन्निरात्मकं तत् सर्वम् अप्राणादिमद् दृष्टमिति व्यत्यासेन योजना, साध्यविपर्ययस्य व्याप्तत्वात् । व्यापकनिवृत्तौ च व्याप्यं निवर्तते, यथा वृक्षत्वनिवृत्तौ शिंशपात्वम् आरादुपलभ्यमानादेकशिलामयादचल-प्रदेशादित्यर्थः । यदि पुनरेवमुच्यते निवर्ततामप्राणादिमत्त्वं जीवच्छरीरात् प्राणादिमत्त्वस्य प्रमाणत उपलब्धेर्मा निवर्तिष्ट नैरात्म्यम्, तस्माद् व्यभिचारादहेतुरिति[10] शङ्कते—**अथ पुनरिति** । निराकरोति—**न युक्तमेवमिति** । किं जीवच्छरीरे साध्ये नैरात्म्यनिश्चयाद् व्यभिचार उत तत्सन्देहात्? यदि निश्चयात्, कृतं व्यभिचारेण,

१. प्रयत्नाद्यु° C २. घटादि om C ३. विपर्ययेण C ४. °च्छारहितं C
५. तद्व्यतिरेकिणश्च C ६. °न्तरसिद्धान्तं C ७. °प्रायमाविष्करोति C ८. वीतोऽन्व° C
९. च C १०. °तुत्वमित्याश° J

बाधितविषयत्वेनैव हेतोरपाकरणात्। अथ सन्देहात्, तथा सत्यन्वयिनोऽप्यहेतुत्वे सर्वानुमानोच्छेदप्रसङ्ग इत्यर्थः॥

शङ्कते—सर्वात्मकत्वप्रसङ्ग इति चेत्? निराकरोति—न, विकल्पानुपपत्तेः। शङ्कावाक्यं विभजते—यदीति। न तावदयमात्मा नाम प्रमाणेन क्वचिदुपलब्धः, यस्य प्रतिषेधो नैरात्म्यमवगम्येत, तदुपलम्भे वा कृतमनया कुसृष्ट्या। तस्मात् कल्पयित्वात्मानमप्रामाणिकं तत्प्रतिषेधस्य घटादावप्राणादिमत्त्वेन व्याप्तिं गृहीत्वा जीवच्छरीरे व्यापकस्याप्राणादिमत्त्वस्य निवृत्त्या नैरात्म्यस्य व्याप्यस्य निवृत्तेरात्मा अवगन्तव्यः। एवं च सति कल्पनाकोपस्यापरिमेयत्वात् यद् यदेव कल्प्यते तत्तदभावस्य घटादौ सुलभत्वाद् अप्राणादिमत्त्वेन व्याप्तेर्जीच्छरीरेऽप्राणादिमत्त्वस्य व्यापकस्य निवृत्तेरात्मसद्भाववत् सकलकाल्पनिकडित्थादिमत्त्वप्रसङ्ग इत्यर्थः॥

निराकरणवाक्यं विभजते—तच्च नैवम्। कस्मात्—विकल्पानुपपत्तेः। विकल्पयति—किमिति। अयमर्थः। प्राणादयो हीच्छाद्यन्वयव्यतिरेकानुविधायिभावाभावतया इच्छादिकार्याः, अक्षणिकत्वे च व्यवस्थिते कार्यं समवायिकारणापेक्षमितीच्छादीनां समवायिकारणेन [1]भवितव्यम्, कार्यत्वाद् घटादिवत्, शरीरेन्द्रियादीनां च समवायिकारणत्वनिषेधे सति यद् इच्छादीनां समवायिकारणं परिशिष्यते, तद् द्रव्यमात्मेति च क्षेत्रज्ञ इति च जीव इति चाख्यायते। तदस्य विशेषतोऽनवगतस्यापीच्छादिसमवायिकारणतया सामान्यरूपेणावधारितस्य शक्यः प्राणादिरहितेषु घटादिष्वभावः प्रतिपत्तुम्। निरात्मकशब्देनापि चायमेवार्थ उच्यते। अनेन प्राणादिलक्षणकार्याभावेन घटादौ नैरात्म्यलक्षणकारणाभावस्य व्याप्तिरवधारिता। सोऽयं जीवच्छरीरे कार्यस्याभावो व्यापको निवर्तमानः स्वव्याप्यं तत्कारणाभावमादाय निवर्तते इति सिद्धं जीवच्छरीरे प्राणकारणम्, स चात्मेति। यदि च डित्थादयोऽपि [2]तादृशाः, तदा आत्मनो नामान्तराणि नार्थान्तराणि। नामानि च लोकतन्त्राणि, न त्विच्छातन्त्राणीति[3]। अवधारितं कार्यं प्राणाद्युपलक्षितमिच्छादि यस्य सोऽवधारितकार्यः, स एव स्वभावो यस्य स तथोक्तः। एतदुक्तं भवति। सामान्यतस्तावदिच्छादीनां कार्यत्वेनान्वयव्यतिरेकिणा हेतुना समवायिकारणवत्त्वमनुमितम्। उभयसिद्धश्च घटादाविच्छादिकारणाभावः। येऽपि हि नैरात्म्यवादिनो बुद्धिं वा भूतपरिणामभेदं वा इच्छादिकारणमाचक्षते, तेऽपि घटादौ न तदातिष्ठन्ते। तस्मादुभयसिद्धनैरात्म्या घटादयः। तेषु चेच्छादिकार्याभावेन नैरात्म्यं

---

१. भाव्यमिति C  २. तथा C  ३. न °णीति om C

व्याप्तम् । सोऽयं जीवच्छरीरे कार्याभावो व्यावर्तमानः कारणाभावं व्यावर्तयति । न च कार्येणैव कारणमनुमीयतां जीवच्छरीरे, किं व्यतिरेकिणा,

ऋजुमार्गेण सिध्यन्तं को नु वक्रेण साधयेत्

इति वाच्यम्, कारणमात्रस्य ततः सिद्धेरित्युक्तम् । परिशेषाद् विशेषसिद्धिरिति चेत्? स एव व्यतिरेकीत्युक्तम् ॥

यदि हि पृथिव्यादिसमवायिकारणा इच्छादयो भवेयुः, घटादिष्वपि प्रसज्येरन् । तस्माद् घटादिष्विच्छादिकार्यनिवृत्त्या द्रव्याष्टकातिरिक्तकारणनिवृत्तिर्व्याप्ता दृष्टेतीच्छादयः शरीरे दृश्यमाना व्यापिकां स्वनिवृत्तिं निवर्तयन्तो व्याप्यद्रव्याष्टकातिरिक्तकारणाभावनिवृत्तिमुखेन नवमं द्रव्यं साधयन्ति । न चैषां बुद्धिरेव समवायिकारणम्, द्रव्यस्यैव समवायिकारणत्वनियमाद् बुद्धेश्चाद्रव्यत्वात् । यथा च भूतानां परिणतिभेदो न कारणं तथा हि तृतीये उपपादयिष्यते[1] । व्यतिरेकमुखेनापि प्राणादेः सात्मकत्वेनान्वयसिद्धौ न केवलव्यतिरेकीति चेत्? न स्वाभाविकं साध्येन प्रतिबन्धमन्वयव्यतिरेकिणि व्यासेधामः, किं तु सपक्षाभावेन विधिमुखेनास्य प्रतिबन्धं निराकुर्मः । एतावतैव चान्वयिनो भिद्यते । न च पक्ष एव सपक्षः, जिज्ञासितविशेषस्य ज्ञातविशेषादन्यत्वात् । शरीरादिषु च सत्सु नैरात्म्यनिषेध एवात्मसद्भावः, असन्निषेधस्य सद्भावलक्षणत्वात् । सपक्षाभावस्तु नैरात्म्येनाप्यव्यपदेश्य इति कथं नैरात्म्यनिषेधेन व्यपदिश्यताम्? असतोऽधिकरणत्वायोगादित्युक्तम् ॥

एतेन परैः यदुक्तम्,

सपक्षाव्यतिरेकी चेद् भवेद्धेतुरतोऽन्वयी ।
नान्वयव्यतिरेकी चेदनैरात्म्यं न सात्मकम्[2] ॥

इति, तदनेन निराकृतम् । एतच्चास्माभिरन्वयिहेतुसमर्थनेन स्फुटीकृतम्[3] । तस्मात् सर्वमवदातम् ॥

विपक्षव्यतिरेकमात्रेण व्यतिरेकिणो गमकत्वं मत्वा चोदयति—यदि तर्हीति । परिहरति—न, हेत्वर्थापरिज्ञानादिति । न वैधर्म्यमात्रेण गमकत्वम्, अपि त्वव्यभिचारिणा । स चात्राव्यभिचारो नास्तीत्यर्थः । ननु मा भूद् गन्धवत्त्वं हेतुर्व्यतिरेकव्यभिचाराद् अनित्यादिवन्नित्यादप्यस्य व्यतिरेकात्, यस्य तु पक्ष एव केवलं न तु

१. न्या. सू. ३।२।३८ २. प्र. वा. ४.२४४ ३. टी. १।१।५

सपक्षविपक्षौ, न तस्य व्यतिरेकव्यभिचारोऽस्तीति स कस्मात् न हेतुरिति चोदयति—**यः पुनरिति**। परिहरति—**सत्यमिति**। व्यतिरेकधर्मोऽव्यभिचारो नासति व्यतिरेके संभवति, असतोऽधिकरणत्वायोगादित्युक्तत्वादिति[1]। प्रत्युदाहरणान्तरं दर्शयति—**एतेनेति**। एतेन विपक्षाभावात् ततो व्यावृत्त्यभावेनेत्यर्थः। चोदयति—**यः पक्षैकदेश इति**। यदि हि पक्षैकदेशवृत्तिरपि विपक्षाभावात् न व्यतिरेकी हेतुः, तर्हि यस्य पक्षैकदेशवृत्तेरपि सतो [2]विपक्षनिवृत्तिरस्ति स हेतुः प्रसज्येत। अस्ति खल्वस्योदाहरणवैधर्म्यमेवेति व्यतिरेकिहेतुलक्षणमित्यभिप्रायः। परिहरति—**अयमपि न हेतुः**, कस्मात? **सूत्रार्थेनापोदितत्वात्**। तं सूत्रपाठपूर्वकं दर्शयति—**सूत्रार्थ इति**। अत्र च येन पक्षैकदेशवृत्तेर्व्यतिरेक्याभासस्य निराकरणं तदवधारणं प्रथमं दर्शितम्। **उदाहरणेनैव वैधर्म्यं** नानुदाहरणेन पक्षेणापि। अस्य तु पक्षेणापीति व्यतिरेक्यपि न हेतुः, न पुनर्वैधर्म्यमेवेति **सूत्रार्थः**। तथा सति सव्यभिचारमात्रस्य निवृत्तिः स्यात्, न तु पक्षैकदेशवृत्तेरित्यर्थः॥

संप्रति [3]वासुबन्धवं हेतुलक्षणं दूषयितुमुपन्यस्यति[4]—**हेतुर्विपक्षाद्विशेष इत्यन्ये**। एतद् व्याचष्टे—**अन्ये त्विति**। **साधर्म्यमात्रनिराकरण** इति। यस्य कस्यचित् साधर्म्यस्य निराकरणे। विपक्षसाधर्म्यनिराकरणे तावदिष्टस्य संग्रहः। यदा तु सपक्षादिसाधर्म्यनिराकरणम्, तदा अनिष्टस्य विरुद्धादेः संग्रहः। उपलक्षणं चैतत्। **इष्टानिष्टसंग्रह** इति, इष्टपरित्याग इत्यपि द्रष्टव्यम्। **स चानेकभेद** इति। सपक्षादपि विशेषे सति विपक्षाद् विशेषः, पक्षादपि विशेषे सति विपक्षाद् विशेषः, विपक्षमात्राद् वा[5] विशेषः इति प्रकाराः। [6]तत्र पूर्वयोः प्रकारयोर्यथाक्रममसाधारणस्य चासिद्धस्य च हेतुत्वप्रसङ्ग इति। **तन्निवृत्त्यर्थं विपक्षादेव** इत्यवधार्यते। द्वितीयमवधारणमवतारयितुमाह—**अवधारणे चेति**। विपक्षादेवेत्यनेनावधारणेन विशेषोऽवधारितः, न विपक्षः। स चायं विशेषे चाविशेषे च प्रसृत इति विपक्षैकदेशवृत्तेरपि पक्षसपक्षसाधारणस्य हेतुत्वप्रसङ्गः। **तन्निवृत्त्यर्थं द्वितीयमवधारणं विशेष एवेति**। उपसंहरति—**तदेवमिति**॥

तदेतदव्यापकत्वेन[7] दूषयति—**सत्यमेक** इति। अत्र चोदयति—**विपक्षैकदेशवृत्तिप्रतिषेधादिति**। विशेष एवेत्यवधारणेन विपक्षैकदेशवृत्तिः गौरयं[8] विषाणि-

१. °क्तमिति C २. विपक्षानि° JK ३. वासुबन्धवं om C ४. उपन्यस्य दूषयति C ५. वा om C ६. अत्र C ७. °दातिव्या° J ८. गौरियं C

त्वादिति[1] हेतुत्वेन प्रतिषिद्धः। तस्मादेतस्मिन्नवधारणे सत्येव विपक्षादेवेत्यवधारणीयम्। तथा च विपक्षादेव यो विशेष एव स हेतुः। सपक्षात्तु **यो विशेष एव स न हेतुरित्युक्तं भवति**। यथा च **अश्वोऽयं विषाणित्वात्**[2] इति सपक्षाद् विशेष एवेति हेतुत्वेन प्रतिषिद्धो भवति। यस्तु सपक्षैकदेशवृत्तिः **प्रयत्नानन्तरीयकत्वादिः** स **सपक्षाद् विशेष एव न भवति, अपि तु सामान्यमपीति**। [3]न तस्याहेतुत्वमवधारितमिति हेतुरेवासावित्यर्थः। परिहरति—**यद्येवमिति**। यदि सपक्षादपि यो विशेषः स सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिर्हेतुः, एवं [4]सति विपक्षादेवेति **अवधारणं बाधितं भवति**। शङ्कते—**अथेति**। न विपक्षादेवेत्येतन्मात्रमवधार्यते येन सपक्षैकदेशवृत्तिः प्रयत्नान्तरीयकत्वादिर्न हेतुः स्यात्, अपि तु यो विशेष एव स हेतुरिति प्राप्ते विपक्षादेवेति नियम्यते, तेन [5]सावधारणस्य विशेषस्य विपक्षवृत्तेर्हेतुत्वं प्रतिषिद्धं भवति यथा अश्वोऽयं विषाणीत्वादिति। यः पुनर्विशेषश्चाविशेषश्च सपक्षे हेतुः, तस्य हेतुत्वेऽपि न विपक्षादेवेति बाधितं भवति। यद्यपि चैवं सत्यपि[6] सपक्षैकदेशवृत्तेर्हेतुत्वं न श्रुतम्, तथापि विपक्षादेवेत्यनेनावधारणेनानिषिद्धमित्यनुमतमेव। तेन चाश्रुतेनार्थेनार्थवती अवधारणे इत्यर्थः॥

निराकरोति—**एवं चेति**। यथा तत्तुल्यैकदेशवृत्तेरविहितमपि हेतुत्वमनिषेधादनुमतम्, एवं पक्षैकदेशवृत्तेरपीति सोऽपि हेतुः स्यादित्यर्थः। पुनः प्रत्यवतिष्ठते—**नैष दोष** इति। पक्षधर्मत्वे सति विशेष एव [7]विपक्षादेवेति नियमे कुतः पक्षैकदेशवृत्तेः प्राप्तिः, अपक्षधर्मत्वात् तस्येत्यर्थः। परिहरति—**यो धर्मः पक्षस्येत्यनेनेति**। **पर** आह—**न कर्तव्य** इति। दूषयितुमवधारणं विकल्पयति—**किं पुनरिति**। प्रथमं कल्पं गृह्णाति—**अस्तु तावदिति**। एतमपि दूषयितुं विकल्पयति—**किं पुनरस्येति**। **सामर्थ्यं** प्रयोजनाभिसंबन्धः [8]संभवज्ञापनपक्षेऽज्ञापननिवृत्तिः प्रयोजनम्, असंभवनिवृत्तिपक्षे तु अत्यन्तायोगव्यावृत्तिः फलम्। यथा नीलं सरोजं भवत्येवेति। विकल्प्य दूषयति—**उभयथापीति**। युक्त्यन्तरमाह—**न चेति**। अत्यन्तायोगो निषिद्धो भवति, न त्वयोग इत्यर्थः। शङ्कते—**अथेति**। विशेषणसंगतो ह्येवकारोऽयोगं व्यवच्छिनत्ति। यथा चैत्रो धनुर्धर एवेति। हेतुर्विशेषणं चेन अपक्षधर्म एवेति। तस्मात् सिद्धं

---

१. द्रः वै. सू. ३.१.१७ Bibl २. द्रः वै. सू. ३.१.१६ Bibl ३. तस्य हेतुत्वमवधारितम् C ४. सति om C ५. साधारणस्य C ६. अपि om C ७. विपक्षादेव om C ८. संबन्धज्ञा° K

पक्षैकदेशे वृत्तेर्निराकरणमित्यर्थः । निराकरोति—**सत्यमिति** । शेषमनुमानसूत्रे व्याख्यातप्रायमिति नेह व्याख्यातम् ॥

**हेतुर्विपक्षाद् विशेष इति च यदा सौत्रान्तिकपक्षमिति** । यदा त्वनित्यत्वहेतौ लक्ष्ये लक्षणं विचार्यते इति विपक्षशब्दार्थो वाच्यः[1] । ननु च नित्यो विपक्ष इत्यत आह—**न ह्यसतीति** । न हि निरुपाख्यमाख्यायत इत्यर्थः । न चास्यापादानत्वं नाप्यधिकरणत्वं येन पञ्चमी वा सप्तमी वा[2] प्रयुज्येतेति आह—**न चासतीति** । न चासतो विपक्षाद् व्यावृत्त्यभावेन विशेषोऽपीत्याह—**विपक्षासंभवे चेति** । **पक्षस्यैवेति** । अत्र चैवकारास्त्रय पदान्तरानपेक्षत्वं सूचयन्ति । पक्षस्यैव धर्म इति हेतुलक्षणे असाधारण एव हेतुः स्यात् । **समान एव सिद्ध** इति तु हेतुलक्षणे[3] अश्वस्य विषाणित्वे साध्ये गोत्वादिर्हेतुः[4] स्यात् । **विपक्ष एव नास्तीत्युच्यमाने** अनित्यः शब्दः[5] प्रमेयत्वादित्ययं हेतुः स्यात् । तस्मात् त्रयः पक्षाः हेयाः । तथा च **पक्षस्य धर्मः समाने च सिद्धः** इत्यत्र सव्यभिचारो हेतुः स्यात् । **पक्षस्य धर्मो विपक्षे च**[6] **नास्ती**त्यत्रासाधारणो हेतुः स्यात् । **समाने च सिद्धो विपक्षे च नास्ती**त्यत्र अनित्यः परमाणुः कृतकत्वादिति हेतुः स्यादिति त्रयः । सप्तममभिमतं पक्षमाह—**पक्षस्येति** । शेषं सुबोधम् ॥

**अत्र दिग्नागेन**

> **सपक्षे सन्नसन् द्वेधा पक्षधर्मः पुनस्त्रिधा ।**
> **प्रत्येकमसपक्षे च सदसद्द्विविधत्वतः ॥**

इति नव पक्षधर्मान् हेतुतदाभासान् दर्शयित्वा

> तत्र यः सन् सजातीये द्वेधा चासंस्तदत्यये ।
> स हेतुर्विपरीतोऽस्माद् विरुद्धोऽन्यत्वनिश्चितः ॥

[7]इत्यनेन हेतुतदाभासविवेको दर्शितः । तस्यार्थः । यः पक्षधर्मः स सपक्षे सन् असन् द्वेधा इति[8] त्रिविधः, स पुनरसपक्षे सदसद्द्विविधत्वतः प्रत्येकं त्रिधा भवतीति । पक्षधर्मः **सपक्षे सन्** विपक्षे **सदसद्द्विविधत्वतस्त्रिधा** । पक्षधर्मः सपक्षेऽसन्[9] विपक्षे सदसद्द्विविधत्वतस्त्रिधा, पक्षधर्मः सपक्षे द्वेधा विपक्षे सदसद्द्विधत्वतस्त्रिधेति[10] । अत्रोदाहरणम्,

१. वक्तव्यः J २. प्रसज्येत C ३. नरस्य J ४. °दिति हेतुः J ५. अप्रमेयत्वादित्ययं J ६. नास्तीत्युच्यमाने C ७. अनेन om C ८. त्रिविधः om C ९. द्वेधा for असन् C १०. °धापक्षधर्मः …त्वतः त्रि° om C

प्रमेयकृतकानित्यकृतश्रावणयत्नजाः ।
अनित्ययत्नजास्पर्शा नित्यत्वादिषु ते नव ॥

नित्यत्वादिषु साध्येषु प्रमेयत्वादयो नव हेतुतदाभासाः । तेषां यथासंख्यं नित्यत्वादीनि[१] साध्यान्युदाहरन्ति,

नित्यानित्यप्रयत्नोत्थमध्यमत्रिकशाश्वताः ।
अयत्नानित्यनित्याश्च प्रमेयत्वादिसाधनाः ॥

तदेतेषु हेतुतदाभासेषु हेतुर्निर्धारितो येन तदुपन्यस्य **वार्त्तिककारो** व्याचष्टे—**तत्र य** इति । तदेतद्दूषयति—**यथाश्रुतीति** ।

तत्र यः **सन् सजातीये द्वेधा** चासंस्तदत्यये इत्येतावन्मात्रात् न लभ्यते इत्यर्थः । चोदयति—**ननु चोक्तमिति** उक्तं **दिग्नागेन**,

साध्यधर्मो यतो हेतुस्तदाभासाश्च भूयसा ।

इति । तदेतत् परिहरति—**उक्तमेतदिति** । न पुनः पक्षधर्म एवेत्यर्थः, अवधारणम् अबुद्ध्वा शङ्कते—**अथापीति** । अवधारणार्थलाभेनोत्तरमाह—**सत्यमर्थादिति** । ननु अपक्षधर्मत्वनिवृत्त्यैव पक्षव्यापकत्वं[२] गम्यते, न ह्यव्यापको भवत्यपक्षधर्मत्वनिवृत्तिमानित्यत आह—**अपक्षधर्मनिवृत्तिमात्रत्वेन चेति** । अत्यन्तनिवृत्तिनिषेधेन वृत्तिमात्रं स्यात् नैकान्तिकी वृत्तिरित्यर्थः । चोदयति—**न प्राप्त इति** । परिहरति—**नावधारणस्येति** । हेतुहेत्वाभासावेव पक्षधर्मौ नान्य इति नियमज्ञापनार्थमवधारणमिष्टं भवद्भिरित्यर्थः ॥

शङ्कते—**अथोभयेति** । निराकरोति—**तथापि सन् सजातीय इति** । तदेतत् पूर्वमेव व्याख्यातप्रायम् । **द्वेधा चेति सर्वथा न वक्तव्यमीति** । सन् सजातीय इत्यस्योपादानेऽनुपादाने चेत्यर्थः, । सन् सजातीय इति नोपादातव्यमिति यदुक्तम्, तत्र शङ्कते—**अथ मन्येतेति** । निराकरोति—**अवधारणेति** । यद्यवधारणं युज्येत अवधारणार्थो युक्त आरम्भः स्यात्, तदेव त्वयुक्तमित्यर्थः । **आद्ये पद इति** । पक्षस्य धर्म एव इत्येतस्मिन् पद इत्यर्थः । **अन्यपदे इति** । अन्ये पदे ययोः पक्षधर्मत्व-विपक्षासत्त्वयोस्ते तथोक्ते । तत्र द्वैविध्यं निराक्रियत इति । **सन् सजातीयेति सर्वथेति** । सजातीये द्वेधा चेति पदोपादाने चानुपादाने चेत्यर्थः । **सजातीय एव द्विधेत्यनेनैवेति** हेतुतदाभासयोरौत्सर्गिके पक्षधर्मत्वे स्थित इत्यर्थः । शङ्कते— अथ

१. °दीति C   २. ननु पक्ष° ·········पक्षाव्यापकत्वं C

**मा भूदिति** सजातीय एव द्विधेति नावधारणमित्यर्थः । निराकरोति—**तथापीति** । सन् सजातीये द्विधेति मध्यमपदे इत्यर्थः । तदेवं सजातीये एव द्विधेत्यवधारणं दूषितम् । संप्रति द्वितीयमवधारणं शङ्कते—**अथ पुनरिति** । निराकरोति—**तथापीति** । तथापि पक्षैकदेशवृत्तिरपि हेतुः प्रसक्तः । यदि च तदत्यय एवेति नावधार्येत ततोऽनैकान्तिकोऽपि हेतुः स्यादिति दोषः ॥

**दिग्नागस्यैव** प्रदेशान्तरहेतुलक्षणम्—**ग्राह्यधर्मः** पक्षधर्मः । **तदंशेन** तस्यैव पक्षस्यांशेन साध्यधर्मसामान्येन, **व्याप्तो हेतुरिति** । [1]तदेतद्धेतुलक्षणमुपन्यस्यास्मिन् पूर्वोक्तं दोषमतिदिशति—**एतेनेति** । अतिदेशमेव स्फुटयति—**अव्यापकादिरिति** । यथाश्रुतलक्षणे[2] पक्षाव्यापकस्य हेतुत्वम्, तदंशेन व्याप्त[3] इत्यस्य विवरणालोचनेन सपक्षे सत्त्वं विपक्षाच्च व्यावृत्तिरित्यर्थः । तथा च पूर्वोक्तदोषानुषङ्ग[4] इत्यर्थः । सिंहावलोकितन्यायेन दूषयति—**असंस्तदत्यय इतीति** ॥

अन्येषां हेतुलक्षणं दूषयितुमुपन्यस्यति—**तादृगिति** । तदेतद्व्याचष्टे—**तादृशेति** । **किल**कारोऽरुचौ । **पक्षधर्म** इति च हेतोरभिधानम् । तेन त्रिलक्षणप्रविभावितात्मा[5] हेतुरित्यर्थः । दूषयति—**यत् तावदिति** । **श्रावणत्वाद्यपीति** । तदुक्तोऽसाधारण इत्यर्थः । यस्तु [6]तादृगविनाभावीति विपक्षे सत्ताप्रतिषेधात् [7]सपक्षे सत्त्वं गम्यते एव,[8] विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वादिति मन्येत, तं प्रत्याह—**भवतु तावदिति** । एकदेशाभ्यनुज्ञानेऽपि विशेषनिषेधस्योपपत्तेर्न समस्ताशेषाभ्यनुज्ञाने प्रमाणमस्तीत्यभिप्रायः । चोदयति—**ननूपदर्शनग्रहणादिति** । परिहरति—**न तल्लभ्यत** इति । **न हि चाक्षुषत्वमिति** । **बौद्धानां** रूपत्वादिजातेर्नित्याया अभावाद् न चाक्षुषत्वमनित्यत्वेन विना भवतीत्यर्थः । यस्तु मन्येत विशेषनिषेधस्य शेषमात्राभ्यनुज्ञाहेतुत्वेनागृह्यमाणविशेषत्वात् पक्षसत्ताभ्यनुज्ञानम्, तथा चोपदर्शनपदेन पक्षे हेतोः सत्तोपदर्शनं भवतीति तं [9]प्रत्युपेत्याह—**उपेत्य वेति** । सुबोधम् ॥

तदेवं लक्षणं दूषयित्वा तदुदाहरणं दूषयति—**यत्त्विदमिति** । एतस्मिन् हेतुलक्षणे इत्यर्थः । **प्रयत्ननान्तरीयकत्वं** प्रयत्नकारणकत्वं तत् साक्षात् पारम्पर्येण वा ? तत्र प्रथमे कल्पे दूषणमाह—**प्रयत्नानन्तरीयकत्वस्येति** । द्वितीयकल्पमाशंक्य

१. तदेव तद्धे॰ C २. ॰ग्रहणे J ३. ॰शेऽतिव्याप्तम् C ४. दोषप्रसङ्गः C ५. प्रविभागात्मा C ६. तादृशा विना न भवतीति C ७. पक्षे ८. एव om C ९. प्रत्याह C

दूषयति—**अथेति** । प्रयत्नग्रहणमपार्थकमित्यर्थः । भावप्रत्ययवाच्यं विकल्प्य दूषयति—**यच्चेदमिति** । **एवमप्युपलब्धेरेवेति** । न हि बौद्धराद्धान्ते किञ्चिदुपलभ्यमानं नित्यमस्ति, येनोपलब्धिर्विशेष्येत इ[1]त्यभिप्रायः । **प्रयत्नानन्तरमन्यथा चेति** । यत्[2]तावदुपलब्धिकर्म तत्सर्वं प्रयत्नादेव पुरुषव्यापारादेवोपलभ्यते नान्यथेत्यर्थः । शङ्कते—**अथेति** । [3]अस्माकं **नैयायिका**नामिति भावः । उत्तरम्—**त्वयैवेति** । अस्मद्दर्शनं चेदास्थाय त्वया बौद्धेनोच्यते, ततः प्रयत्नग्रहणेनाप्यनैकान्तिकत्वं तदवस्थमेवेत्यर्थः । **अव्यापकं चेति** । न हि दवदहनाभिघातप्रस्फुटद्वेणुदलविभागजन्मा ठात्कारोऽस्मदादिप्रयत्नकार्य[4] इत्यर्थः । शङ्कते—**अथेति** । वर्णात्मकमित्यर्थः निराकरोति—**तत्रापीति** । पारम्पर्येणापि प्रथम एव वर्णः प्रयत्नानन्तरीयकः, न द्वितीयादयः । अतिपारम्पर्याश्रयणे त्वतिप्रसङ्गः, प्रायेण तस्य तत्र तत्र सुलभत्वादिति भावः[5] । शङ्कते—**अथ य इति** । विशेषः प्रयत्नानन्तरीयकत्वं धर्मिविशेषणम्, प्रयत्नानन्तरीयकत्वं सामान्यं च हेतुरित्यर्थः । निराकरोति—**तथाप्यन्य इति** । न हि भवतामस्माकमिव विशेषातिरिक्तमस्ति सामान्यं वस्तु सद्[6] यो हेतुः स्यात् । न च कल्पनारोपितं हेतुः सम्यग्ज्ञानस्य भवितुमर्हति, न चात्यन्तासतः कल्पनापि संभवतीति भावः ॥

तदेवमुदाहरणं दूषयित्वा प्रसङ्गेन परेषामुदाहरणविचारं दूषयति—**यदप्युक्तमिति** । यत् खल्वसत्[7] सर्वसामर्थ्यरहितं तदाश्रितानाश्रितभावाभावधर्मवन्न भवतीत्यर्थः । **नित्यं तु किञ्चिद् भवतीति** । तस्य धर्मयोगः संभवत्येव, न त्वस्याप्यप्रयत्नानन्तरीयकत्वं त्वप्रत्ययाभिधेयं हि जन्म, तत्[8] प्रयत्नेन प्रयत्नादन्येन वा विशेषणीयम्, यस्य तु जन्मैव नास्ति तस्य तद्विशेषणं दूरोत्सारितमित्यर्थः । **एतेनाभाव इति** । **नैयायिका**भिमतोऽप्यभावो व्याख्यातः । तस्यापि हि प्रागसतः स्वकारणेन[9] समवाय इति जन्म नास्तीति न तद्विशेषणयोग इत्यर्थः । प्रकृतमुपसंहरति—**तदेवमिति** ॥ ३५ ॥

## ॥ परिशुद्धिः ॥

ननु न सपक्षताभावोऽत्र सूत्रे श्रूयते, नाप्यार्थोऽवधारणस्य च व्याप्त्या । पक्षे सत्त्वेनोपपत्तेरैकान्तिकं सपक्षे सत्त्वं मा प्रसांक्षीत् । पाक्षिकं तु प्रसक्तमेव । तथा च केवलव्यतिरेकिलाभेऽपि नान्वयव्यतिरेकी निराकृतः । एवं सपक्षाभावेऽपि पक्षव्यापकस्य

१. इत्यर्थः C  २. यावत् C  ३. युष्माकं C  ४. °प्रयत्नसाध्यः C
५. भावः om C  ६. अस्ति वस्तु सामान्यं सद् C  ७. असत् om C
८. तत् om C  ९. °कारणे J

विपक्षैकदेशवृत्तेस्तदवस्थैव प्रसक्तिरित्याह—**तथापीति** । उदाहरणेनैवेत्यवधारणस्य पक्षव्याप्तिपरस्य सपक्षाभावप्रदर्शनौदासीन्यमाविष्कर्तुमनित्यो मूर्तत्वादित्युदाहृतम् । वस्तुतस्तु, नेदं निरात्मकं जीवच्छरीरं मांसादिमयत्वात् इत्यसंकीर्णमुदाहरणं द्रष्टव्यम् । एतद्द्वयमपि निराकर्तुं **वैधर्म्यमेव चोदाहरणेनेति** पूर्वावधारणेन पक्षव्याप्तौ लब्धायां वैधर्म्यमेवेत्यनेन साधर्म्यरूपता निराकृतावयमर्थः स्यात् । पक्षस्य व्यापको धर्मस्तदितरवैधर्म्यरूप एवेति तथा चोभयोरपि कः प्रसंगः ? केवलमसाधारणः प्रसज्यते । स च विपक्षोदाहरणेनेति विशेषयता सपक्षाभावप्रदर्शनेन निरस्तः । यदि हि सति [1]सपक्षेअन्वयो विवक्षितः तदा तथा वैधर्म्यादित्यनारम्भमेव, पूर्वलक्षणेनैव गतार्थत्वात् । व्यतिरेकश्चेद् विवक्षितो विपक्षेणेति व्यर्थम् । तस्माद् वैधर्म्यावधितया उपात्तं विपक्षपदं सपक्षाभावप्रतिपत्तिफलमेवेत्यर्थः ॥

ननु तथापि वैधर्म्यादित्यत्र तथाशब्दार्थ उदाहरणेनेति । उदाहरणं च सपक्षोऽपि भवतीति कथं विशेषलाभ इत्याशङ्क्य व्याचष्टे—**विपक्षेति** । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति भाव इति तत्र तत्रोक्तमित्यर्थः । नन्ववधारितकार्यस्वभावोऽर्थः केवलव्यतिरेकिसाध्योऽन्यथातिप्रसङ्गादिति वक्ष्यति, तथाभूतश्चात्र प्राणाद्यपेक्षया प्रयत्नः । तस्मिंश्च साध्ये सिद्धसाधनं व्यतिरेक्यसंभवश्च स्वशरीरे प्राणस्य प्रयत्नपूर्वकत्वावधारणेन स्वपक्षान्वयस्यापि संभवादित्यत आह—**प्राणादिनेति** । तथाप्यस्मदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इत्यत आह—**प्राणादिकारणेच्छादिकारणरहितमिति** । परशरीरे पक्षप्रविष्टे हेतुसिद्ध्यर्थं विपक्षीभूते च घटादौ साध्यरहिते हेतुव्यतिरेकसिद्ध्यर्थं तथोक्तमित्यर्थः । नन्विच्छादिसमवायिकारणविरहनिषेधेन तद्वत्त्वं सिध्येत् । तथा च पुनरपि नात्मसिद्धिः । न च केवलव्यतिरेकी तावन्मात्रस्यान्वयेनैव सिद्धेरित्यत आह—**यश्चेति** । अन्वयिना हि तत्कारणमात्रं सिद्धम्, अनेन तु तदेव पृथिव्यादिविलक्षणं सिध्यतीति न निरवकाशो व्यतिरेकी । न च नात्मसिद्धिः, तथाभूतस्य तस्यैवात्मशब्दवाच्यत्वादित्यर्थः । [2]**गृहीताविनाभावो हीत्यादीना** व्याप्त्यसिद्धिर्दर्शिता । पक्षधर्मतासिद्धिरप्यनयैव दिशोहनीया । जिज्ञासितधर्मविशिष्टस्य पक्षत्वात्, सन्दिग्धस्य च जिज्ञास्यत्वात् विशेषस्मरणे च संशयात्, अनुपलब्धचरे च तदभावादिति ॥

द्विधा हि प्रकृतव्यतिरेकिगतिः, कार्यं कार्यवत्ता च । तत्र कार्यमनुमानलक्षणे

---

१. पक्षे A २. गृहीत्वा A

दर्शितम् । तद् यथा, इच्छादयो द्रव्याष्टकातिरिक्तद्रव्याश्रिताः, तदनाश्रितत्वे सति कार्यत्वादिति । इह तु कार्यवत्ता दर्शिता नेदं निरात्मकं जीवच्छरीरं नेच्छादिसमवायिकारणीभूतद्रव्यविशेषरहितमित्यर्थः । इच्छादिमत्त्वात् इच्छादिरूपकार्यवत्त्वादित्यर्थः । तदेतदुभयमत्रैवान्तर्भाव्य व्युत्पादयन् प्रथमतस्तावत् कार्यं प्रधानीकृत्याह—**अयमर्थ** इति । इच्छादिकार्याः सन्तस्तान्[१] गमयन्ति । तेऽप्यनित्यतया कार्या इति शेषः । किं चात इत्याह—**अक्षणिकत्व** इति । हेतोर्विशेषणासिद्धिं निराकरोति—**शरीरेन्द्रियेति** । न शरीरेन्द्रियमनःस्वन्यतमस्मिन्नेते समवयन्ति, मानसैकप्रत्यक्षत्वादिति निषेधे सतीत्यर्थः । [२]निश्चोद्यश्चैष केवलव्यतिरेकी । एवं प्रथममुपपाद्य तदीयाप्रसिद्धविशेषणत्वसंशयानुपपत्ती साधारणन्यायेन निराकुर्वन्नेव द्वितीयमुपपादयति—**तदस्येति** । एतच्च तत्रैव स्फुटीकृतम् । ननु यदि नाम सामान्यत इच्छादिसमवायिकारणमात्रव्यावृत्तिर्घटादौ प्रतिपन्ना किमायातं नैरात्म्यस्येत्यत आह—**निरात्मकशब्देनापीति** ॥

एवमर्थगतिं परिशोध्य **वार्त्तिकं** योजयित्वा द्वितीयं प्रधानीकृत्याह—**एतदुक्तं भवतीति** । शङ्कते—**न चेति** । ईश्वरानुमान इव पक्षधर्मतावलेनैव विवक्षितो विशेषः सेत्स्यतीत्यर्थः । [३]नन्वन्वयिना विशेषं साधयता केवलव्यतिरेकिणः किं खण्डितम्, येनायं तस्मिन् [४]सम्भवत्येवोदास्ते, खण्डने वा, [५]अथ तेनैव विपर्ययस्यापि वक्तुं सुकरत्वादित्यत आह—**ऋजुमार्गेणेति** । व्याप्तिर्हि सिद्धिमार्गः । तस्यापरिवर्त एव ऋजुत्वम्, परिवर्तस्तु वक्रतेत्यर्थः परिहरति—**कारणमात्रस्येति** । उक्तमत्र यथास्मिन्नर्थे पक्षधर्मता न प्रभवति । आभिप्रायिकोह्यर्थस्तद्गोचरः[६] । स चाभिप्रायेण व्याप्यते, यत्सिद्धिमन्यरेण शब्दार्थः प्रत्येतुं न शक्यते । न च द्रव्याष्टकातिरिक्तमप्रतीत्य तेषां समवायिकारणमेव प्रत्येतुं न शक्यते । न हीच्छादीन् प्रति पृथिव्याः समवायिकारणत्वे तेषां [७]तद्वृत्ता अभिधीयमाना विरुध्यते । यथा द्व्यणुकादिकारणज्ञाने तेषां [८]परिदृष्टसामर्थ्यकारकप्रयोक्तृलक्षणकर्तृपूर्वकत्वं शब्दोपात्तमित्यर्थः ॥

पुनः शङ्कते—**परिशेषादिति** । आश्रितत्वं तावदेतेषामन्वयिन एव सिद्धम् । द्रव्याष्टकाश्रितत्वनिषेधोऽप्यन्वयिन एव सिध्यति[९] । तत्किमपरमवशिष्यते यत्केवलव्यतिरेकिणा सेत्स्यतीत्यर्थः । उत्तरम्—**स एवेति** । अयमर्थः । पूर्वस्माद् आश्रितत्वं सिद्धं

---

१. सन्तः स्यानं M २. निर्देश्यश्चै कवल° M ३. अन्वयिना M ४. सत्येवो° M
५. अर्थ om M ६. पक्षधर्मतागो° M ७. तद्वत्ताविधी° M ८. °कारणचक्रप्र° M
९. °त्वानिषेधो A; सेत्स्यतीति M

तदन्यस्मादपि द्रव्याष्टकानाश्रितत्वम् । तदतिरिक्तार्थाश्रितत्वसिद्धिस्तु नैकस्मादपि । तदभावे चानयोरपि विरोध एव । तस्मादर्थाद् [1]अष्टातिरिक्ताश्रितत्वसिद्धिः स चार्थस्तावन्नान्वयः । न हि द्रव्याष्टकानाश्रितत्वे सति यदाश्रितम्, तदतिरिक्तद्रव्याश्रितमित्यस्त्यन्वयः । वक्रोक्तिकश्चान्वयी[2], केवलव्यतिरेकिप्रपञ्च एव विवक्षाभेदात् । तस्मात् व्यतिरेक एवार्थः, तद्वान् परिशेषो व्यतिरेकीति सुष्ठूक्तम् ॥

इदानीं विशेषणसिद्धये प्रमाणं सूचयति—**यदि हीति** । विपर्ययेण प्रयोगः । शरीरेन्द्रियाणि नेच्छादिसमवायिकारणानि भूतत्वाद् घटादिवदिति । ननु यत्र द्रव्याष्टकातिरिक्तद्रव्याश्रिता इति प्रतिज्ञा, तत्र युक्तमेतत् । यत्र तु नेदं निरात्मकमिति तत्र निरात्मकशब्देनापि अयमेवार्थ उच्यत इति वदता इच्छादिसमवायिकारणविरहनिषेध एव प्रतिज्ञार्थः स्वीकृतः । तथा च कथमष्टद्रव्यातिरिक्तेच्छादिसमवायिकारणवत्ता शरीरस्य इत्याशङ्कामुपसंहरन्नेव परिहरति—**तस्मादिति** । अत्रापि पृथिव्यादिविलक्षणेच्छादिसमवायिकारणवत् जीवच्छरीरमिति प्रतिज्ञार्थः । [3]तत्समवेतेच्छादिकार्यवत्त्वादिति हेत्वर्थः । ननु तथापि—बौद्धं प्रति सिद्धसाधनं [4]भवत्येव, सोऽपि पृथिव्याद्यतिरिक्तमेवेच्छादीनाम् उपादानमिच्छतीत्यत आह—**न चैषामिति**[5] । स्थैर्ये सतीति शेषः ॥

ननु तथापि घटादिभ्यो निरात्मकेभ्य इच्छादिव्यतिरेकः किं तथाभूतद्रव्यव्यावृत्तिकृतः ? किं वा भूतानामेव परिणतिभेदव्यावृत्तिकृत इति सन्दिग्धोपाधिकत्वादगमक एवेत्यत आह—**यथा चेति** । **व्यतिरेकमुखेणापीति** । यदि साध्येनास्य क्वचिदप्यन्वयो नास्ति, तदा विरुद्ध एवायमित्यर्थः । **न स्वाभाविकमिति** । न वयमस्योपेयमन्वयं व्यासेधामोऽपि तूपायमित्यर्थः । तथापि नास्यान्वयिनो भेद उपेयभूतेनाप्यन्वयेनान्वयित्वादित्यत आह—**एतावतैवेति** । ननु वस्तुतः साध्यधर्मवानेव धर्मी सपक्षः । स च तथाज्ञातो व्यवह्रियते परम् । ततश्च तदन्वितोऽपि हेतुरन्वयव्यतिरेक्येव । अज्ञैस्तु तथा न व्यवह्रियत इत्यन्यदेतदिति शङ्कते—**न च पक्ष एवेति** । व्यवहारहेतुरन्वयश्चिन्त्यते, न तु व्यवहार्य इत्याशयवान् परिहरति—**जिज्ञासितेति** ॥

ननु यद्यस्य सपक्षव्यतिरेकाप्रतिषेधः, कथं नासाधारण्यम् ? तत्प्रतिषेधश्चेत् कथं नान्वयः ? अथ तत्प्रतिषेधेऽपि तावन्मात्रमेव नान्वयः, एवं तर्हि सपक्षवत् पक्षेऽपि नैरात्म्यप्रतिषेधेऽपि नात्मसद्भाव इति पराक्षेपं परिहृत्य तद्ग्रन्थं पठति **शरीरादिष्विति** ।

---

१. अष्ट° om A   २. °यः न हि केवल······श्चान्व° om M   ३. तदस° A
४. भवत्येव om JA   ५. चैवमिति A

विपक्षे हि सति सत एव कस्यचिद् व्यतिरेकः प्रतीत इति प्रमाणेन प्रतीत इति प्रतिपादितम् । तस्य च प्रमाणप्रतीतस्य व्यतिरेकस्य पक्षेऽपि सत्येव निषेधः प्रमाणेन क्रियत इति युक्ता निषेधलक्षणा विधिसिद्धिः । सपक्षस्तु न केनचित् प्रमाणेन प्रतीत इति न तत्रान्वयव्यतिरेकतन्निषेधाः परमार्थतः केनचित्प्रमाणेन शक्यते प्रत्येतुम् । तत्कथं विधिनिषेधयोरन्यतरप्रसक्तिरित्यर्थः ॥

**सपक्षाव्यतिरेकी चेत्** सपक्षव्यतिरेकनिषेधवानित्यर्थः । **अन्वयी** सपक्षान्वयी । अथैवमपि नान्वयी, अपि तु व्यतिरेक्येव ।[1] अथ सपक्षव्यतिरेकनिषेधस्यापि व्यतिरेकनिषेधमात्रपर्यवसायितयान्वयापर्यवसानादिति मन्यसे, तदा पक्षेऽपि नैरात्म्यनिषेधेऽपि[2] तावन्मात्रपर्यवसायितया न सात्मकत्वपर्यवसानमिति **वार्त्तिकार्थः** । तदेतन्निराकृतम् अवस्तुनि पारमार्थिकविधिनिषेधानभ्युपगमात् । तथापि स्ववचनविरोधप्रतिहतमेतदित्यत आह—**एतच्चास्माभिरिति** । न तस्य व्यतिरेकव्यभिचारोऽस्ति, तस्य व्यतिरेकधर्मतया तदभावेऽनुपपत्तेरित्यर्थः । **परिहरतीत्यादि** । व्यभिचारवदव्यभिचारोऽपि तद्धर्म एव सोऽपि कथं तदभावे भवेदित्यर्थः । **ततो व्यावृत्त्यभावेनेति** व्यावृत्तिनिरूपणाभावेनेत्यर्थः । आगामि**वार्त्तिक** भ्रमनिरासार्थं स्फुटमपि व्याचष्टे—**अत्र चेति** । भ्रमं निवारयति—**न पुनरिति** । नन्वेतावत्येव सूत्रार्थे को दोषः स्यादित्यत आह—**तथा सतीति** । **शेषमनुमानलक्षण** इति सपक्षे सिद्ध इत्यादि वृत्तिपदान्तरदूषणशेषम् ॥

**सौत्रान्तिकेति** **वैभासिक**मतव्युदासार्थम् । तन्मते नित्यस्याप्याकाशादेरकार्यस्यापि संभवात् । यदाहुः

आकाशं द्वौ निरोधौ च त्रयमेतदसंस्कृतम्

इति । सदृशक्षण [3]सभागसन्तानलक्षणनिरोधभेदेन निरोधौ द्वौ विनाशौ ययोरप्रतिसंख्याप्रतिसंख्यानिरोधाविति परिभाषा ॥

अत्र **दिग्नागेन**

**सपक्षे सन्नित्यादिना**

हेतुतदाभासान्, तदुदाहरणार्थं

**नित्यानित्येत्यादिना**

साध्यवर्गं

---

१. अथ om M.　२. नैरात्म्या° J　३. समभागसन्ततिलक्षणनिरोधभेदेनेति J

**प्रमेयेत्यादिना**

साधनवर्गं

सपक्षः खं घटो बुद्धिर्वियद्गगनमम्बरम् ।
तडिद्व्योम्नी तडित्कुम्भौ परमाणुर्वियत् तथा ॥

इति सपक्षवर्गं

कुम्भो वियत् तडिद्व्योम्नी घटः कुम्भस्तडिद्घटौ ।
कुम्भो वियद् घटो बुद्धिर्विपक्षोऽस्य यथाक्रमम् ॥

इति विपक्षवर्गं प्रपञ्च्य

**तत्रेत्यादिना**

हेतुर्निर्धारितः । तत्र प्रपञ्चं विहाय यावन्मात्रेण हेतुर्निर्धार्यते तावदुपन्यस्यति—अत्रेति ॥३५॥

**साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥३६॥**

॥ भाष्यम् ॥

साध्येन साधर्म्यं समानधर्मता । साध्यसाधर्म्यात्कारणात्तद्धर्मभावी दृष्टान्त इति । तस्य धर्मस्तद्धर्मः । तस्येति साध्यस्य । साध्यं च द्विविधम् धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वम्, धर्मविशिष्टो वा धर्मी अनित्यः शब्द इति । इहोत्तरं तद्ग्रहणेन गृह्यत इति । कस्मात्? पृथग्धर्मवचनात् । तस्य धर्मस्तद्धर्मः । तद्धर्मस्य भावस्तद्धर्मभावः । स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः तद्धर्मभावी । यस्मिन् दृष्टान्ते साध्यसाधर्म्यादुत्पत्तिधर्मकत्वात् साध्यस्य धर्मोऽनित्यत्वं भवति स दृष्टान्तः[1] । साध्यसाधर्म्यादुत्पत्तिधर्मकत्वात्तद्धर्मभावी भवति, स चोदादहरणमिष्यते । [2]स्थाल्यादि द्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टमिति। तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम् । तच्च भूत्वा

१. तद्धर्मभावी…स दृष्टान्तः only in J २. MM Phaṇibhūṣaṇa on the strength of N. Vār adds स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टमिति । This gives the required instance of udāharaṇa and is supported by N. Bh. I. i. 39, though not by any manuscript.

न भवति, आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनमनित्यत्वं साध्यम्। सोऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद् व्यस्थित उपलभ्यते। तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोति, शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति। उदाह्रियतेऽनेन[1] धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ॥३६॥

॥ वार्त्तिकम् ॥

साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणमिति सूत्रम् ॥ ३६ ॥ अस्योदाहरणोपलक्षणमर्थः। साध्यस्य साधर्म्यं साध्येन समानधर्मता। अत्रापि साध्येनैव साधर्म्यमेव। न पुनरसाध्येनापि, साधर्म्यमेव साध्येन न पुनर्वैधर्म्यमपि। यस्मात् साध्यसाधर्म्यात् तद्धर्मभावी भवति। किं कुतश्चित् साध्यसाधर्म्यात् तद्धर्मभावी न भवति? न भवत्यपि, यथा अमूर्तत्वादेः कर्मणः। तस्माद् साध्यसाधर्म्याद् [2]यस्तद्धर्मा भवति, स भवति तद्धर्मभावी। सोऽयं दृष्टान्तः साध्यसाधर्म्यात् तद्धर्मभावित्वेन विशेषणेन युज्यमान उदाहरणं भवति, उदाह्रियतेऽनेन धर्मयोः साध्यसाधनभावः इत्युदाहरणम् ॥

ननु च करणकारकपरिग्रहात् वचनमुदाहरणम्, दृष्टान्तश्चार्थः, न चानयोः सामानाधिकरण्यं युज्यते, न हि विषाणादिमदित्यभिधानं गवा समानाधिकरणं भवति? नैष दोषः, वचनविशेषणत्वेन दृष्टान्तस्योपादानात्, न स्वतन्त्रो दृष्टान्त उदाहरणम्। किं तु साध्यसाधर्म्यात् तद्धर्मभावित्वे सति अभिधीयमान इति। तद्धर्मभावीति। तस्य धर्मस्तद्धर्मः, तस्येति साध्यस्य। साध्यं द्वेधा भवति धर्मो धर्मी च। एकदा धर्मो विशेषणत्वेन, अन्यदा धर्मो विशेषणत्वेनेति। तस्येति धर्मिग्रहणं युक्तम्, [3]पृथग् धर्मस्य ग्रहणात्। यस्माच्च धर्मिणो धर्मा उत्पत्तिधर्मकत्वादयो न धर्मस्य, धर्मे च [4]साध्ये उदाहरणसाधर्म्यादिति व्याघातः। न हि धर्मस्योदाहरणेन किञ्चित् साधर्म्यम्, किं तु धर्मिणः। साध्यसाधर्म्यं चोदाहरणस्य धर्मिण[5] एव। साध्ये चोपसंहारो धर्मिण्येव। तस्माद् धर्मी साध्य इति। तस्य धर्मिणः साध्यस्य यो धर्मः[6], स यस्मिन् दृष्टान्ते भवति विद्यते, स दृष्टान्त उदाहरम्। उदाहरणं स्थाल्यादि द्रव्यमिति। तदुत्पत्तिधर्मकं चानित्यं दृष्टमिति ॥३६॥

---

१. तेन T २. यत्र तद्धर्मो C ३. न, पृथग् C ४. साध्यम् K ५. धर्म्यंशः C ६. धर्मः साध्यः C

॥ टीका ॥

हेतावुक्ते नाव्याप्तोऽसौ साध्यधर्मेण हेतुभावे व्यवतिष्ठते, न च व्याप्तिप्रदर्शनमुदाहरणमन्तरेणेति हेतुलक्षणानन्तरं क्रमप्राप्तमुदाहरणलक्षणमाह—साध्य--रणम् ॥३६॥ सूत्रमित्युदाहरणसामान्यलक्षणमप्यनेन सूचितमिति[1] दर्शितम्। अस्य तात्पर्यमाह—अस्येति, दृष्टान्तोऽर्थरूपो नोदाहरणस्य वचनात्मकस्य स्वरूपतो लक्षणं संभवति। तस्मात् स्वाभिधायकवचनोपलक्षकत्वेन लक्षणत्वं सामानाधिकरण्यं च भजत इत्यभिसन्धिनोक्तम्—उदाहरणोपलक्षणमिति। अनेन च समानजातीयेभ्यः प्रतिज्ञादिभ्यः असमानजातीयेभ्यश्च प्रमाणादिभ्य उदाहरणं व्यवच्छिन्नं भवति। साध्येन साधर्म्यम् इत्यादि भाष्यम्। तस्यार्थः, साध्येन धर्मिणा शब्देन, साधर्म्यं दृष्टान्तस्य स्थाल्यादेः, कृतकत्वं हेतुः। तद्धयनित्यत्वेन[2] साध्ये च शब्दे दृष्टान्ते च स्थाल्पादौ समानम्। तस्मात् कारणत् प्रयोजकात्, तद्धर्मभावी तस्यैव साध्यस्य शब्दस्य यो धर्मो धर्मान्तरम्, येन विशिष्टः शब्दः सिषाधयिषितोऽनित्यत्वेन, तदनित्यत्वं तद्धर्मः। स एव भावस्तद्भावः।[3] सोऽस्यास्तीति तद्धर्मभावी, स्थाल्यादिरनित्यत्वधर्मवानिति[4] यावत्। तेन तादृशा दृष्टान्तेनोपलक्षितं तद्विषयं वचनमुदाहरणमिति ॥

तत्र वार्त्तिककारः सूत्रपदं व्याचक्षाण एव फलतो भाष्यं व्याचष्टे—साध्येति। उदाहरणसाधर्म्यादित्यस्य व्याख्यानं साध्यसाधर्म्यादित्यत्रापि योजयति—अत्रापीति। साध्यशब्देनैव कृतकत्वं साधर्म्यं दृष्टान्तस्य, नासाध्येन विपक्षेणाकाशादिना नित्येन, ततो हि कृतकत्वं व्यावृत्तमिति। तथा च सव्यभिचारो व्यवच्छिन्नो भवति। साधर्म्यमेवेति भागासिद्धो व्यवच्छिन्नः। यस्मात् साध्यसाधर्म्यात् तद्धर्मभावी भवति[5], सोऽयं दृष्टान्त उदाहरणमिति, यावद् वाक्यं न समाप्यते, तावदर्धोक्त एव पृच्छति—किं कुतश्चिदिति। अवधारणद्वययोगिनः साध्यसाधर्म्याद् दृष्टान्तोऽवश्यमेव तद्धर्मभावी भवतीति गतार्थं तद्धर्मभावीत्येतदिति भावः। उत्तरम्—न भवत्यपीति। यथा नित्ये शब्दे साध्ये अमूर्तत्वादेः साध्येन शब्देन कर्मणः साधर्म्यात् कर्म न तद्धर्मभावि भवति, नित्यं न[6] भवतीत्यर्थः। साध्येनैवेत्यवधारणेनैव एतदुदाहरणं प्रत्युक्तमिति। शिष्योपाध्यायश्यामत्वमैत्रतनयत्वादयोऽत्रौपाधिकसंबन्धा उदाहार्याः। हेतुलक्षणे तु सामान्यलक्षणापेक्षं विशेषलक्षणमिति नातिव्याप्तिः। अत्र[7] च

---

१. सूच्यत इति J २. °त्वम्, तद्धति नित्य° C ३. तद्भावः om J ४. °धर्म° om J ५. भवतीत्येतत् C ६. भवति नित्यं न om K ७. च om C

साध्यसाधर्म्यग्रहणेन साधनविकलमनुदाहरणं भवतीत्युक्तं भवति। यथा नित्यः शब्दः अमूर्तत्वात् परमाणुवदिति। तद्धर्मभावीत्यनेन [1]च साध्यविकलं परास्तम्। यथा नित्यः शब्दो मूर्तत्वात् कर्मवदिति। एतेनोभयविकलमपि [2]पराकृतम्। यथा नित्यः शब्दः अमूर्तत्वाद् घटवदिति। पञ्चम्युपादानेन च साध्यसाधर्म्यप्रयुक्तं तद्धर्मभावित्वं यत्र वचने प्रदर्श्यते तदेवोदाहरणं नान्यदिति दर्शितं भवति। प्रयोजकत्वं च साध्यसाधर्म्यस्य हेतोः स्वाभाविकः संबन्धो व्याप्यत्वमिति यावत्। प्रयोज्यत्वं च साध्यसाधर्म्यस्य व्यापकत्वमेव[3]। तेनाप्रदर्शितान्वयविपरीतप्रदर्शितान्वययोरनुदाहरणत्वमुक्तं भवतीति। तद्यथा अनित्यः शब्दः उत्पत्तिमत्त्वात्, पटवदिति। यो योऽनित्यः, स [4]सर्व उत्पत्तिमान् यथा घट इति[5]। समाख्यानिर्वचनसामर्थ्यात् सामान्यलक्षणमप्यनेन सूचितमित्याशयवता भाष्यकृता समाख्याया निरुक्तिः कृता[6]। तां **वार्त्तिककारो** दर्शयति—**उदाह्रियतेऽनेनेति**॥

चोदयति—**ननु चेति**। परिहरति—**नैष दोष इति**। वचनस्य विशेषणत्वेनोपलक्षणत्वेनेत्यर्थः। **अभिधीयमान** इति च अभिधानोपलक्षणपरम्, नाभिधेयपरम्, असामानाधिकरण्यदोषस्य तादवस्थ्यात्। **तद्धर्मभावीति** सूत्रावयवव्याख्यानपरं **भाष्यम्**—**तस्य धर्म** इत्यादि। अत्र चोत्तरमिति गुढाभिप्रायम्[7]। तदेतद् **भाष्यम्** अनुभाष्य व्याचष्टे—**तस्य धर्म** इति। तस्य धर्मस्तद्धर्म इति हि धर्मस्य संबन्धित्वेन पृथग्वचनम्। न च धर्म एव धर्मस्य, नापि धर्मान्तरं धर्मस्य, किं तु धर्मिण इत्यर्थः। अनेन **भाष्यकारीयामनुपपत्तिमुक्त्वा वार्त्तिककारः** स्वकीयामप्याह—**धर्मे च साध्य इति**। अनेन हेतूदाहरणोपनयलक्षणैर्व्याघात[8] उक्तः। **भाष्यम्**—**साध्यसाधर्म्यादुत्पत्तिधर्मकत्वादिति**, तद् व्याचष्टे—**तस्य धर्मिण इति**[9]। **तद्धर्मभावी भवतीति**, तदनुपपन्नम्, न हि कृतकत्वात् स्थाल्यादेरनित्यत्वं भवति[10], जायते बीजादिवाङ्कुर इत्यत उक्तम्—**भवति विद्यते**॥३६॥

## ॥ परिशुद्धिः ॥

प्रयोगे किं सौत्र एव क्रमो ग्राह्यः, क्रमान्तरं वेति सन्देहमुदाहरणस्य प्रयोजनं दर्शयन् निवारयति—**हेताविति**। यतो नाव्याप्तो नाप्रतीतव्याप्तिको हेतुभावे व्यवतिष्ठते

---

१. परिहृतम् C　२. तु J　३. °मिति यावत् C　४. सः C　५. इति चेति J
६. पृ. ५६१.४; १२　७. गुढाभि° K; पाठाभि° C J　८. लक्षणसूत्रैः J　९. उत्पत्तिधर्मकत्वादिति तद्व्याचष्टे—तस्य धर्मिण इति om J　१०. भवति om J

साध्यसिद्धावेकाग्रीभवति, अतो व्याप्तेर्बुभूत्सितत्वात् सैव प्रतिपादयितुं युज्यत इति शेषः। तथाप्युदाहरणस्य कोऽवसर इत्यत आह—**न चेति** ॥

प्रतीतसामर्थ्यं हि साधनं साध्ये उपनयन्ति। न तूपनीय पश्चात् सामर्थ्यं जिज्ञासन्त इति सर्वलोकसिद्धमिति संगतिसंक्षेपः। तथापि सामान्यलक्षणविभागौ विना नावसरो विशेषलक्षणस्येत्यत आह—**सूत्रमितीति**। ननूदाहरणोपलक्षणमप्रकृतमपि[1] कस्मादुपादीयते? कस्माच्च विभ्यता लक्षणं प्रकृतमपहीयत[2] इत्यत आह—**दृष्टान्त** इति। प्रकृतलक्षणसिद्ध्यर्थमेवोपलक्षणाभिधानमिति नोभयदोष इत्यर्थः। **अनेनेत्यादिना** व्यवच्छेद्यसमानासमानजातीयप्रदर्शनं सूचितसामान्यलक्षणाभिप्रायम्। तच्च दृष्टान्तवचनम् उदाहरणमिति द्रष्टव्यम्[3]। विशेषलक्षणपक्षे तूदाहरणविशेषो लक्ष्यः। उदाहरणं सपक्षोदाहरणमित्यर्थः। शेषं लक्षणम्। तेन हि समानजातीयाद् विपक्षोदाहरणाद् विजातीयाच्च प्रतिज्ञादेरिदं व्यवच्छिद्यत इति बोद्धव्यम्। विशेषलक्षणं च श्रौतम्। तद्व्याख्यानभाष्यमनूद्य व्याचष्टे—**साध्येनेति**। तेन तादृशेन दृष्टान्तेन साधनधर्मप्रयुक्तसाध्यधर्मवता उपलक्षितं विषयतया तद्विषयं वचनमुदाहरणं सपक्षोदाहरणमित्यर्थः ॥

यस्मादित्यादिवार्त्तिकं यद्यपि केऽपि नानुमन्यन्ते, तथापि वाक्यशेषभूतेनाप्यनेन भवितव्यमिति मन्यमानः तदन्तर्भाव्यैव शङ्कामुत्थापयति—**यस्मादिति**। इयं चाशङ्का तैरागामिवार्त्तिकं दृष्ट्वा साध्येनैवेत्यवधारणाक्षेपिकेति बुद्धम्। तच्च मन्दप्रयोजनम्, हेतुलक्षणरीतिमतिदिशतैव तत्प्रयोजनस्य दर्शितप्रायत्वात्। मा भूच्चावधारणसमर्थनेऽपि तद्धर्मभाविग्रहणानर्थक्यशङ्कारोपस्थितिरिति मत्वा व्याचष्टे—**अवधारणेति**। तथापि शङ्कानुरूपं नोत्तरमित्यत आह—**शिष्योपाध्यायेति**। अयमर्थः। साध्येनैव साधर्म्यमिति विशेष्यसंगत एवकारोऽन्ययोगं व्यवच्छिनत्ति, न तु साधर्म्यस्याप्रयोजकत्वमपि। न च पक्षसपक्षाभ्यामन्येन मैत्रतनयत्वादेर्योगः सन्दिग्धोऽपि। न च पक्षोऽपि विपक्ष इति तत्र तत्र दर्शितमेव। साधर्म्यमेवेत्ययमपि विशेषणसंगत एवकारोऽयोगं व्यवच्छिन्द्यात्, न तु तस्याप्रयोजकत्वमपि। न ह्यप्रयोजकस्यायोगव्यवच्छेदो विरुध्यते। प्रयोजकतायां तु दर्शितायां तथाभूतस्यायोगव्यवच्छेदे प्रकृतसिद्धिः। एवं च सति प्रथममवधारणं मन्दप्रयोजनमपि परशुच्छेद्यतां को वा नखच्छेद्ये सहिष्यत इति न्यायेन दर्शितम्। अप्रयोजके तूदाहर्तव्ये अनैकान्तिकोदाहरणं द्वयोरप्युभयकोटिस्पर्शाविशेषादिति। नन्वेवं सति हेतुलक्षणं न्यूनमप्रयोजकाव्युदसनादित्यत आह—**हेतुलक्षणे त्विति**।

---

१. अधिकृतमपि M   २. स लक्षणं प्रकृतमपि M   ३. मन्तव्यम् M

उभयविकलप्रदर्शनेनाश्रयविकलमपि प्रदर्शितप्रायम् । यथा, यत् क्रमयौगपद्यरहितं तदसत् । यथा वाजिविषाणमिति । एवमर्थद्वारकमुदाहरणाभासचतुष्टयं दर्शयित्वा शब्दद्वारकं द्वयं दर्शयितुं पीठमारचयति—**पञ्चमीति** ॥३६॥

## तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

### ॥ भाष्यम् ॥

दृष्टान्तउदाहरणमिति प्रकृतम् । साध्यवैधर्म्यादतद्धर्मभावी च दृष्टान्त उदाहरणमिति । अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यमात्मादि,[1] सोऽयमात्मादिर्दृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी—योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन् न भवतीति । अत्रात्मादौ दृष्टान्त उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति, उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति । साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् । वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम् । पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति । उत्तरस्मिन् दृष्टान्ते[2] ययोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकतरस्य भावादितरस्य भावं[3] साध्येऽनुमिनोतीति । तदेतद्धेत्वाभासेषु न सम्भवतीत्यहेतवो हेत्वाभासाः । तदिदं हेतूदाहरणयोः सामर्थ्यं परमसूक्ष्मं दुःखबोधं पण्डितरूपवेदनीयमिति ॥३७॥

### ॥ वार्त्तिकम् ॥

**तद्विपर्ययाद् वा विपरीतम्** ॥ ३७ ॥ साध्यवैधर्म्यादतद्धर्मभावी च दृष्टान्त उदाहरणमिति । उदाहरणमवीतहेतौ द्रष्टव्यमिति ॥

अन्ये तु साध्यसाधर्म्यात् तद्धर्मभावित्वं दृष्टान्तस्येति सूत्रं पठन्ति । तेषां त्वयमभिप्रायः, दृष्टान्तोदाहरणयोर्मा भूदैक्यमिति । किं पुनस्तद्धर्मभावित्वम् ? साध्य-

---

१. नित्यं दृष्टमात्मादिद्रव्यमिति J २. पुनः for दृष्टान्ते J ३. एकस्याभावादितरस्याभावं K

साधनाभ्यां योगः । साध्यसाधनयोगे [1]सति तद्धर्मभावी भवति । अतो भावाभिधानेन साध्यसाधनाभ्यां योगोऽभिधीयते इति । एतच्च सूत्रमपरे दूषयन्ति । अस्माकं तु नायं सूत्रपाठः । तस्मात् नायं दोष इति । एतस्मिन्नपि पाठे किल भाविग्रहणमनर्थकम् । कस्मात् ? सर्वावयवानां साध्यधर्मभावित्वात् । यस्मात् किल सर्व[2] एवावयवाः साध्यधर्मभाविनो भवन्ति भावयन्ति गमयन्तीति । अयं च न सूत्रार्थ इति ॥

अन्ये तु तद्धर्मभावीत्येतत् पदमन्यथा निराकुर्वन्ति । तद्धर्मभावी भवन्नुष्णभोजिन्यायेन वा भवेत् ? दण्डिन्यायेन वा भवेत् ? तद्यदि तावदुष्णभोजिन्यायेन उष्णं भोक्तुं शीलमस्येत्युष्णभोजी, एवं[3] तद्धर्मं भावयितुं शीलमस्येति तद्धर्मभावी । अत्रापि भावयितुं गमयितुमिति यावदुक्तं स्यादिति नायं सूत्रार्थ इति न किञ्चिदेतत् । दण्डिन्यायस्तु दण्डो यस्यास्ति स दण्डी । तद्धर्मभावो यस्यास्ति स भवति तद्धर्मभावी । तत्र भाविग्रहणमनर्थकं तद्धर्मभावीति । कथमिति ? तद्धर्मश्चासौ भावश्चेति तद्धर्मभावः । स यस्यास्ति स भवति तद्धर्मभावीति । एवं सति विशेष्यविशेषणभावानुपपत्तेः तद्धर्मीति[4] युक्तम् । न हि तद्धर्मश्च स्यादभावश्च यतो विशेषणविशेष्यभावः [4]समर्थः स्यादिति । अतस्तद्धर्मीति किल वक्तव्यम् । न वक्तव्यम् । तद्धर्माणामुभयथा भावात् । उभयथा भवन्ति तद्धर्माः, विधीयमानाः प्रतिषिध्यमानाश्च । तत्रान्वयिनि वाक्ये विधीयमानधर्मवान् दृष्टान्त उदाहरणम् । तथा स्थाल्यामुत्पत्तिधर्मकत्वं चानित्यत्वं च भावौ विद्यमानौ धर्माविति । तस्मात् तद्धर्मश्चासौ भावश्चेति युक्तं सामानाधिकरण्यम् । यत् पुनरेतत् तद्धर्मीति वक्तव्यम्, एतदपि न परिज्ञातम् । न हि बहुव्रीहौ पुनर्मत्वर्थीयो लभ्यते इति । अथावश्यं वयं शिक्षयितव्याः, तत एव च तद्धर्मेति वक्तव्यम्[5] । सन्ति चैवंवादिनो येषां कृतकत्वानित्यत्वेऽभाव इति । तन्निराकरणार्थं चेदमुक्तम्, तद्धर्मश्चासौ भावश्चेति युक्तं सामानाधिकरण्यम्[6] ॥

तदेतस्मिन्नवयवत्रये एवं लक्षणेनोपपादिते तेषां च त्रयो दुर्विहिता इत्यनेन वाक्येन महानैयायिकत्वमात्मनः ख्यापितं भवति ॥

तथा सिद्धो दृष्टान्त इति अन्ये । कः पुनरस्यार्थः ? यथा साध्यः साधयितुमिष्टः, तथा यः सिद्धो नित्यत्वेन[7] यथा च स एवं साध्यो[8] विशिष्टः प्रत्ययभेदभेदित्वेन,

१. च for सति C २. एव om C ३. एवं om C ४. तद्धर्मभावीति C समर्थितः C ५. एवं च वक्तव्यम् । G ६. युक्तं°ण्यम् om C ७. तथायमसिद्धोऽनित्य° C ८. स एव साध्यो om J

तथा च यः सिद्धः स दृष्टान्तः साध्यसाधनवानिति । अत्र विस्फूर्जतापि स्वसिद्धान्तम् अपरित्यजता कृतकत्वानित्यत्वयोर्न शक्यः संबन्धो दर्शयितुम्, कृतकत्वानित्यत्वयोः काल-भेदाद् वस्तुन्यवस्थानाच्च । अन्यदा कृतकत्वमन्यदा चानित्यत्वमिति । यदा च वस्तु न तदा प्राक्प्रध्वंसाभावौ स्त इति । एतेन तयोः [1]संबन्धनिदर्शनं दृष्टान्त इति प्रत्युक्तम् ।

साध्येनानुगमो हेतोः साध्याभावे च नास्तिता

इति च ॥३७॥

॥ टीका ॥

वैधर्म्योदाहरणस्य लक्षणम्—**तद्वि-तम्** ॥ ३७ ॥ अनुवृत्तेन पूरयित्वा सव्याख्यानं सूत्रं पठति—साध्यवैधर्म्यादतद्धर्मभावी [च] दृष्टान्त उदाहरणमिति । सात्मकतया साध्येन जीवच्छरीरेण वैधर्म्याद् घटादेर्दृष्टान्तस्य सात्मकत्वसाधर्म्यविरहादिति यावत् । तस्य साध्यस्य जीवच्छरीरस्य धर्मः प्राणादिमत्त्वं तद्धर्मः । स एव भावस्तद्धर्मभावः । सोऽस्यास्तीति तद्धर्मभावी । न तद्धर्मभावी अतद्धर्मभावी, प्राणादिरहितो घटादिरिति यावत् । एतदुक्तं भवति, यत्र घटादौ साध्यधर्माभावप्रयुक्तः साधनधर्माभावः, स घटादिर्वैधर्म्यदृष्टान्तः । तद्विषयः शब्द उदाहरणमिति । सूत्रस्थश्च वाशब्दः समुच्चये वेदितव्यः, व्यतिरेकविषयत्वाद् वैधर्म्योदाहरणस्येति । अत्र **भाष्यकारेण** अन्वयव्यतिरेकी पूर्वसूत्रोदाहृतोऽत्राप्युदाहृतः । साधन-धर्माभावप्रयुक्तत्वं च साध्यधर्माभावस्योक्तम्, तच्चायुक्तम् । अन्वयव्यतिरेकिणि हेतौ सत्यपि वैधर्म्ये साधर्म्योदाहरणमेवोचितम्, तत्र तत्पूर्वकत्वाद् वैधर्म्यप्रतीतेः ऋजु-मार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगात् । व्याप्यव्यापकभावश्च यादृशो भावयोः, तदभावयोस्तद्विपरीतो बोध्यव्यः[2] । अन्यथा सपक्षैकदेशवर्ती न हेतुः स्यादिति मन्यमानो **वार्तिककार आह—उदाहरणमवीतहेताविति** । तच्चास्माभिः सूत्रं योजयद्भिः उक्तमिति ॥

अत्र **आचार्यदेशीयाणाम्** अनार्षसूत्रपाठदूषणं नास्माकमार्षसूत्रपाठेऽस्तीति प्रतिपिपादयिषुराचार्यदेशीयानां पाठमभिप्रायं चाह—**अन्ये त्विति** । आर्षे हि पाठे सामानाधिकरण्याद् दृष्टान्तस्यार्थरूपस्य शब्दरूपेणोदाहरणेनैक्यं स्यात् । यदा तु दृष्टान्तस्योदाहरणमिति पाठः, तदा नायं दोषः । दूषणं चापरेषाम्, यथा न दृष्टान्तस्य

१. संबन्धि C २. द्र: श्लो. वा. अनुमान, १२१-२

उदाहरणेन सामानाधिकरण्यम्, एवं [१]तद्धर्मभावित्वस्यार्थरूपस्य, स्वविषयवचनोपलक्षणत्वेन तु सामानाधिकरण्यं दृष्टान्तेऽपि तुल्यम्। तस्मादार्षमेवास्त्विति। आर्षेऽपि पाठे परोक्तं दूषणमुपन्यस्यति—**एतस्मिन्नपीति**। उपहासे किलकारः। ण्यन्ताद् भवतेस्ताच्छील्ये णिनिना भावीति व्युत्पन्नम्। तथा च तद्धर्मकारित्वमर्थः। न च ज्ञापनादन्या क्रिया संभवतीति गमकत्वम्। तच्च सर्वेषामवयवानामभिन्नमिति साधारणत्वात न वक्तव्यमित्यर्थः। [२]तदेतदभ्युपगमेनैव परिहरति—**नायमिति**॥

**अन्ये तु** तद्धर्मभावीत्येतद् विकल्प्य दूषयन्तीत्याह—**अन्ये त्विति**। तत्र प्रथमकल्पे दूषणमाहुः—**तद् यदीति**। नायं **सूत्रार्थः** सर्वावयवसाधारण्यादिति। तस्मात् न किञ्चिदेतत् तद्धर्मं भावयितुं शीलमस्येति। द्वितीयकल्पे दूषणमाहुः—**दण्डिन्यायस्तु** इति।

संभवे व्यभिचारे च स्याद् विशेषणमर्थवत्,

न संभवमात्रे इत्यर्थः। तदिदं परेषां दूषणं दण्डिन्यायमालम्ब्य परिहरति—**न वक्तव्यमिति**। संभवव्यभिचाराभ्यां समर्थं विशेषणमित्यर्थः। **न बहुव्रीहाविति**। अन्यपदार्थविवक्षयैवेनिराश्रीयते। सा च बहुव्रीहिणैव लभ्यत इति कृतमत्रेनिनेत्यर्थः। सुहृद्भावेन चेद्, अत एवाह—**अथावश्यमिति** प्रयोजनान्तरं भावीग्रहणस्यान्वाचिनोति—**सन्तीति**॥

अत्र च [३]**वसुबन्धुना** प्रतिज्ञादयस्त्रयोऽवयवा दुर्विहिता अक्षपादलक्षणेनेत्युक्तम्, तद् दूषयति—**तदेतस्मिन्निति**॥

तदेवमुदाहरणलक्षणमुपपाद्य परेषां लक्षणं दूषयितुमुपन्यस्य व्याचष्टे—**यथा सिद्ध** इति। **यथा च स एव साध्यो विशिष्टः प्रत्ययभेदभेदित्वेनेति**, प्रत्ययः कारणम्, तदेतत् साध्यसाधनवत्त्वं दृष्टान्तस्य **बौद्धराद्धान्ते**ऽव्यापकम्, स्थाल्यादौ दृष्टान्ते कृतकत्वानित्यत्वरूपसाध्यसाधनवत्त्ववैकल्यात्। प्रागभावो हि स्थाल्याः कृतकत्वं प्रध्वंसाभावश्चानित्यता राद्धान्ते **बौद्धानाम्**। न चैवमुभयं स्थाल्यामस्ति, तस्याः स्वाभावविरोधित्वादिति दूषयति—**अत्र विस्फूर्जतापीति**। **एतेनेति**, अव्यापकत्वेन निदर्श्यतेऽस्मिन्ननेन वेति निदर्शनम्॥

साध्येनानुगमो हेतोः साध्याभावे च नास्तिता।

---

१. तद्धर्म॰ om C २. ॰दनभ्युप॰ K ३. सुबन्धुना C

इति च प्रत्युक्तम् कृतकत्वानित्यत्वयोः स्थाल्यामसंभवदर्शनादव्यापकत्वेन। अस्मद्दृष्टान्ते तु यथा तयोः स्थाल्यादौ संभवः तथोक्तं हेतुलक्षणसूत्र इति। भाष्ये पण्डितरूपवेदनीयमिति प्रशस्तपण्डितवेदनीयमित्यर्थः ॥ ३७ ॥

॥ परिशुद्धिः ॥

सव्याख्यानं परिवर्तितपदम्। उदाहरणं विपक्षोदाहरणम्। यद्यप्यतद्धर्मभावित्वात् साध्यवैधर्म्यवान् दृष्टान्त उदाहरणमिति व्यत्ययो युज्यते, तथाप्यार्जवानुरोधाद् यथाश्रुति व्याचष्टे—सात्मकतयेति[1]। अतएव पदानि विभज्य संकलितमर्थमाह—एतदुक्तं भवतीति। अत्रापि साध्यसाधनोभयाव्यावृत्ता आश्रयविकलश्चेति[2]। अर्थद्वारकमाभासचतुष्टयं व्युदस्तम्, यथा नित्यः शब्दः श्रावणत्वात्। यत् पुनर्न नित्यं तदश्रावणं दृष्टम्, यथाकाशम्, यथा ध्वनिः, यथा शब्दत्वम्, यथा शशविषाणमिति। शब्दद्वारकं च द्वयमनुपदर्शितव्यावृत्तिकम्, विपर्ययोपदर्शितव्यावृत्तिकं चेति। यथा नेदं निरात्मकं जीवच्छरीरमिच्छादिमत्त्वात्, घटवदिति। यत् पुनरिच्छादिमन्न भवति, तन्निरात्मकं यथा घट इति चेति। सूत्रस्थश्चेति। समुच्चये स्वरूपसमुच्चये। न केवलं साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्, अपि तु तद्विपर्ययाद् विपरीतं चेत्यर्थः। न पुनर्विषयसमुच्चये। एकस्मिन् विषये निरपेक्षत्वसापेक्षत्वाभ्यां वृत्तिर्विकल्पसमुच्चयौ। न चैवमत्र। कुतः [3]व्यतिरेकिविषयत्वाद् वैधर्म्योदाहरणस्येति। मात्रेति पूरणीयम्। उपलक्षणं चैतत्, अन्वयिविषयत्वात् साधर्म्योदाहरणमात्रस्येत्यपि द्रष्टव्यम्। तथाप्यन्वयव्यतिरेकिविषयतया समुच्चयविकल्पौ भविष्यतः, यथा [4]भाष्यकृदुदाहरणमित्याशङ्कानिराकरणवार्त्तिकं योजयितुमाह—अत्रेति। सर्वत्र हि अन्वयपूर्विकैव व्यतिरेकप्रतिपत्तिः, प्रतियोगिनिरूपणमन्तरेणाभावस्यानिरूपणात् ॥

इयांस्तु विशेषः, केवलव्यतिरेकिणि सामान्यतोऽन्वयव्यतिरेकिणि तु विशेषतोऽपि। यथा च केवलव्यतिरेकी सत्यपि सामान्यान्वये न तेनोपसंहर्तुं शक्यः, तथोक्तम्। [5]अन्वयव्यतिरेकिणा तु व्यतिरेकोपसंहारेण यावानर्थः साध्यः, तावानन्वयोपसंहारेणैव सिद्धः इत्यधिकं तावत् तदभिधानम्। पुनरुक्तं च। नियमवतोरन्वयव्यतिरेकयोरेकतरसिद्धावन्यतरसिद्धेरर्थापन्नत्वात्। यद्येवम्, केवलव्यतिरेकिण्यपि तर्हि व्यतिरेकसिद्धावन्वयसिद्धिः अप्यर्थात्। तथा च न केवलव्यतिरेकीति। सत्यम्, सिध्यत्यन्वयो न तु सपक्षे, किं तु

१. यथाविभज्य J २. °धनतदुभयव्यावृत्तमाश्रयविकलं वेति M ३. व्यतिरेकि··· तथाप्यन्वयि left M ४. दाहरदित्या° J ५. °रेकेण तु M

पक्ष एवेति विशेषः। स चोपेयो नोपाय इत्युक्तम्। नन्वन्वयव्यतिरेकिणोऽपि पक्षादेव व्यतिरेकप्रत्ययो मा भूदित्येतदर्थं विपक्षे नियमो दर्शयितुमुचितः। न, तत्र हेतूपसंहारेणैव शङ्काया निवर्तितत्वात्। नन्वेवं सति केवलान्वयिन्यपि अर्थाद् व्यतिरेकसिद्धिप्रसङ्गः। तथा च न केवलान्वयीति चेत्—न, अविशेषविधित्वात्। यत्र हि सपक्षतदितरौ स्तः, तत्र विशेषविधौ [1]शेषनिषेधो गम्यते, यथा नित्यानित्यप्रतीतौ। अनित्य एव कृतकत्वमित्युक्ते अर्थाद् गम्यते न नित्य इति। न चाभिधेयानभिधेयकोटिद्वयसंभवो, यतोऽभिधेय एव प्रमेयत्वमित्युक्ते गम्यतां नानभिधेय इति। अतएवान्वयव्यतिरेकिणि व्याप्यव्यापकयोरन्ययोगायोगव्यवच्छेदेन व्याप्तिनिरूपणम्। केवलान्वयिनि तु व्याप्तिक्रियामुपादायात्यन्तायोगव्यवच्छेदेनेति नैवकारार्थचोद्यावकाशः॥

नन्वधिकपुनरुक्तभिया मा भूत् समुच्चयो, विकल्पस्तु भवेदित्यत आह—**ऋजुमार्गेणेति**। न हि केवलव्यतिरेकिणीवान्वयव्यतिरेकिण्यप्यन्वयाद् व्यतिरेको विशेषः। किं नाम ? स एवार्थः। तथा चान्वयं प्रतीत्य तन्निषेधो व्यतिरेकः प्रत्येतव्यः। उपलभ्य च तन्निषेधं स एवान्वयः ? सोऽयं प्राक् यदि पक्ष एव प्रतिपन्नः किमधिकं व्यतिरेकेण साधितम् ? सपक्षे चेत्। स एव पक्षे किं नोपसंहृतः ? न ह्ययमसाधको, नापि प्रथमं बुद्धावुपनिपतितो, नापि न ऋजुरिति, सपक्षाद्धि कृकाटिकाभङ्गेन विपक्षगमनम्, विपक्षाच्च तथैव पक्षागमनमिति वक्रो मार्गः। पूर्वस्तु सपक्षादभिमुखमेव पक्षसंक्रान्तिरितृजुः। न च वक्ररुचेर्नेदमनिष्टमिति वाच्यम्, असांव्यवहारिकत्वप्रसङ्गात्। न हि घटमानयेति वक्तव्येऽनघटं न मानैषीरिति वक्तारो भवन्ति[2]। यथा स्वयमन्वयमप्रतीत्य व्यतिरेकाप्रतिपत्तिः, तथा तमप्रतिपाद्य तदभावप्रतिपादनमशक्यमित्यवश्यमन्वयोक्तौ तदेवाधिकं[3] पुनरुक्तं च। अनुक्तौ तु न व्यतिरेकस्याभिधीयमानस्यापि प्रतिपत्तिरित्यपार्थकमिति। एवमुदाहरणयोर्विशेषव्यवस्थां दर्शयता वाशब्दस्य व्यवस्थितविभाषावचनत्वेऽपि सङ्गतिरित्यपि दर्शितम् ॥३७॥

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥३८॥**

॥ भाष्यम् ॥

**उदाहरणापेक्ष उदाहरणतन्त्र उदाहरणवशः। वशः सामर्थ्यम्। साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टम्, तथा च शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते।**

---

१. विशोषनि M २. °घटमानयेति···वदन्ति M ३. °देव बाधकं M

साध्यवैधर्म्ययुक्ते पुनरुदाहरणे आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टम्, न च तथानुत्पत्तिधर्मकः शब्द इति, अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते। तदिदमुपसंहारद्वैतमुदाहरणद्वैताद्भवति। उपसंह्रियते अनेनेति चोपसंहारो वेदितव्य इति ॥३८॥

## ॥ वार्त्तिकम् ॥

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥३८॥**

एवं चायं कृतक इति[1]। यथा तथेति प्रतिबिम्बनार्थम्। किं पुनरत्र प्रतिबिम्बनम्? दृष्टान्तगतस्य धर्मस्याव्यभिचारित्वे सिद्धे तेन साध्यगतस्य तुल्यधर्मतोपदर्शनम्। तथा[2] चायं कृतक इति। साध्ये वा संभव उपनयार्थः। ननु च कृतकत्वादित्यनेन संभव उक्तः? नोक्तः, साध्यसाधनभावमात्रनिर्देशात्[3]। साध्यसाधनभावमात्रनिर्देशः कृतः[4], कृतकत्वात् अनित्यः शब्दो भवति। तत् पुनः शब्दे कृतकत्वमस्ति नास्तीत्युपनयेन संभवो गम्यते। अस्ति च शब्दे कृतकत्वमिति। स यदा साधर्म्येणोदाहरणं तदा तथेति, यदा वैधर्म्येण तदा न तथेति ॥३८॥

## ॥ टीका ॥

स्वप्रतिपत्तौ व्याप्तिस्मरणानन्तरं तथा चायं न तथेति वा परामर्शज्ञानोत्पादादुदाहरणवचनस्य च व्याप्तिप्रतिपादकत्वात्[5] परामर्शज्ञाने हेतोरुपनयस्योदाहरणपूर्वकत्वनियमात् उदाहरणानन्तरमुपनयं लक्षयति—**उदा—यः** ॥३८॥ अपेक्षापदं **भाष्यकृद्** व्याचष्टे —**उदाहरणतन्त्र** इति। **उदाहरणवशः**। वश्यत इति वशः, वशिन उदाहरणस्य वश्य इत्यर्थः। एतदेव कर्मणो भावं निष्कृष्य विवृणोति—**वशः सामर्थ्यम्**। वश्येन उदाहरणस्य फलेन उपनयेनाभिसंबन्ध इत्यर्थः। तथात्वातथात्वयोर्विषयं विभजते—**साध्यसाधर्म्ययुक्त** इति। ननु हेतोरुपसंहार उपनयो न साध्यस्य। तथा चानुपपन्नः साध्यस्योपसंहार इत्यत उक्तम्—**साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमिति**। उदाहरणसिद्धव्याप्तिकहेतुमत्तया साध्यमुपसंह्रियते न स्वरूपेणेत्यर्थः। अत्राप्युदाहरणापेक्ष उपसंहार उपनय इति सामान्यलक्षणम्। तथा न तथेति[6] सामान्यलक्षणापेक्षे विशेषलक्षणे इति बोध्यव्यम् ॥

---

१. एवं...इति om J २. °धर्मता एवं C ३. °मात्र° om C ४. कृतकत्वम् J
५. परामर्शज्ञानहे° J ६. तथेति चेति C

अत्र केचित् आहुः हेतुवचनादेव सोदाहरणात् साध्यसिद्धेरसाधनाङ्गमुपनय इति। तन्निराकर्तुमाह वार्त्तिककारः—यथा तथेति[1] प्रतिबिम्बनार्थम्। तदेतत् प्रश्नपूर्वकं विभजते—किं पुनरिति। तदनेन व्युत्पन्नाव्युत्पन्नतया परेषामनियतप्रतिपत्तिसाधनत्वात्[2] स्वप्रतिपत्त्यनुसारेण परे बोधयितव्याः। व्याप्तिस्मरणानन्तरोत्पन्नलिङ्गपरामर्शपूर्वकश्च स्वयमनुमेयार्थप्रत्यय इति तथैव परे बोध्यन्ते। तथा च परामर्शज्ञानहेतोरुपनयस्य सिद्धमर्थवत्त्वम्। न च यथा लिङ्गपरामर्शज्ञानान्वयव्यतिरेकानुविधानम् अनुमेयज्ञानस्य, तथा दधिभक्षणाद्यनुविधानमपि, येनातिप्रसङ्गश्चोद्येतेति। प्रयोजनान्तरम् उपनयस्याह—साध्ये वा संभव इति। चोदयति—ननु चेति। यद्यपि साधनतया कृतकत्वमुक्तम्, प्रतिज्ञानन्तरं प्रतिपत्त्रा साधनस्यैवापेक्षितत्वत्, तथापि तन्नासिद्धं तत्र साधनत्वेन व्यवतिष्ठत इति स्वसिद्धिमाक्षिपति सामर्थ्यादिति भावः। परिहरति—नोक्त इति। यत्परः शब्दः स शब्दार्थ इति शाब्दाः। साधनत्वपरश्च कृतकत्वादिति सामर्थ्यात्। आक्षेपे तूदाहरणमपि न प्रयोक्तव्यम्। [3]अस्यापि साधनसामर्थ्यादाक्षेपात् अव्याप्तस्य साधनत्वायोगात् तद्विधस्यापि प्रमेयत्वादेः शब्दनित्यत्वादौ साधनत्वभ्रमेण प्रयोगोऽसिद्धेऽपि[4] तुल्य इति व्याप्तिप्रदर्शनार्थोदाहरणप्रयोगवद्धेतोः सिद्धत्वप्रतिपादनाय उपनयस्यापि प्रयोग इति रमणीयम् ॥३८॥

## ॥ परिशुद्धिः ॥

संगतिं करोति—उदाहरणानन्तरमिति। आनन्तर्यमेवकुत इत्यत आह—परामर्शेति। एतदेव कुत इत्यत आह—उदाहरणेति। विषयभूतयोर्व्याप्तिपक्षधर्मतयोर्नियतपौर्वापर्यप्रतिपत्तित्वेन[5] विषयविषयिणोरप्युदाहरणोपनययोः पौर्वापर्यनियम इत्यर्थः। ननु नावश्यं ज्ञानक्रमनियमं तद्वचनक्रमनियमोऽनुरुध्यते, विपर्ययेणाप्यभिधानदर्शनादित्यत आह—स्वप्रतिपत्ताविति। व्याप्तिपक्षधर्मताज्ञाने हि अनुमित्युपयोगिनी। ते च यथा स्वस्योत्पद्येते तथा परस्याप्युत्पादनीये, स्वप्रतिपत्त्यनुसारेण परावबोधनात्। स्वयं च व्याप्तिज्ञानादिन्द्रियादिसहायात् पक्षधर्मतावगमो न तु विपर्ययः। ततः परस्याप्युदाहरणवचनेन व्याप्तिज्ञानमुत्पाद्य तत्सहचरितेनोपनयवचनेन पक्षधर्मताप्रत्यय उत्पादनीयः, केवलस्य व्याप्तिस्मरणस्य तदनुत्पादकत्वात्। इन्द्रियादिस्थानीयस्य चापरस्य

१. तथा न तथेति K २. °प्रतिसाध° C ३. अत्रापि C ४. असिद्धोऽपि C
५. विषय° om AJ

अभावात् । तस्मादर्थसिद्धः पौर्वापर्यनियम उदाहरणोपनययोरित्यर्थ इति अन्ततः फक्किका योज्येति ॥

**तथात्वातथात्वयोरिति** । तथात्वेनोपसंहारस्यातथात्वेनोपसंहारस्येत्यर्थः ।[1] हेतोः उपसंहारः साध्यधर्मिणीति शेषः । **अत्रापीति** । यथाश्रुत्यर्थाभ्यामुदाहरणसूत्रम् उभयमुपलक्षयति, तथेदमपि **सूत्रम्** इत्यर्थः । तत्रार्थं तावदाह—**उदाहरणेति** । साध्यस्य हेतुमत्तयेति प्रकृतम् । श्रौतं विशेषलक्षणद्वयमाह—**तथेति** । उदाहरणातिदेशे-नैव वाशब्दोऽपि सौत्रो व्याख्यातः । **व्युत्पन्नाव्युत्पन्नतयेति** । यद्यपि पाञ्चरूप्योपपन्न-लिङ्गानुसन्धानं व्युत्पन्नस्यापि प्रतिपत्तिसाधनं नियतमेव, तथापि प्रतिसन्धानं प्रत्यनियमः, संस्कारतारतम्येनोद्बोधकस्यानियमात्, तेन तस्य दुरुन्नेयत्वात्[2] कृतृरासदिवादिवद् अव्युत्पन्नं प्रत्यनङ्गत्वाच्च ।[3] यावता यादृशा वोपायेन स्वयमर्थः प्रतीतः, तावत्तादृगुपाय-प्रतिपादनेन पर प्रतिपाद्यः । तस्य स्वात्मन्येवोपायतया प्रमाणसिद्धत्वादित्यर्थः । एतदेव **न च यथेत्यादिना** दर्शितम् ॥

ननु वचनेन स्वबोधसंक्रान्तिः प्रतिपादनम्, सचार्थः प्रतिपाद्यः स्वशब्देन यः शब्दान्तरेणाक्षिप्तोऽपि न[4] । उपनयार्थस्तु हेतुनैवाक्षिप्त इति चोद्यार्थमाह—**यद्यपी-त्यादि** । एतावदत्र स्यादुपनयार्थं व्युत्पन्नः स्वयं वा ऊहेत, हेतुवचनाद् वा प्रतिपद्येत, तदाक्षेपतो वा निश्चिनुयात् ? आद्यो **व्युत्पन्नेत्यादिना** दूषितः । द्वितीयं दूष-यति—**यत्पर इति** । तृतीयं दूषयति—**सामर्थ्यादिति** । अथैवं मन्वीथा यद्यपि कृतकत्वादिति[5] साधनपरं वचनम् तथापि द्विधा हि तत्परता शब्दानाम्, उपपन्नतया उपपादनीयतया च । तत्र प्रथम उपपन्नतया स्वार्थमवबोधयन् तन्नान्तरीयकमर्थमाक्षि-पति, यथा जितं नकुलेनेति सिद्धावस्थायां सर्पपराजयम् । द्वितीयस्तु उपपादनीयतया स्वार्थं प्रतिपादयन्नपि कथं तन्नान्तरीयकमप्यर्थमाक्षिपेत्, यथा स एव नकुलविजयः साधनीयावस्थायाम् । तथात्वे वा प्रतिज्ञैव सर्वमाक्षिपेदिति गतं हेतुनापि । तस्मात् साधनत्वेनोद्दिष्टेऽपि कृतकत्वे ताद्रूप्यस्यासिद्धत्वात् न तेन व्याप्तेराक्षेप इति नानर्थकम् उदाहरणम् । नन्वेतत् समानमुपनयेऽपीत्याशयवानाह—**तद्विधस्यापीति** । एतेन निगमनं व्याख्यातम् ॥३८॥

---

१. हेतोरुप°……त्यर्थाभ्यां om M २. द्रः टी. ५.२.११ ३. यावता यादृशो वोपायेन तावत्तदृगु° A ४. नय A ५. परवंचनं A

॥ भाष्यम् ॥

द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसंहारद्वैते च समानम्—

**हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥ ३९ ॥**

साधर्म्योक्ते वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। निगम्यन्ते अनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम्। निगम्यन्ते समर्थ्यन्ते संबध्यन्ते। तत्र साधर्म्योक्ते तावद्धेतौ वाक्यम्, अनित्यः शब्द इति प्रतिज्ञा। उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यमित्युदाहरणम्। तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः। तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। वैधर्म्योक्तेऽपि, अनित्यः शब्दः। उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम्। न च तथाऽनुत्पत्तिधर्मकः शब्दः। किं तर्हि ? उत्पत्तिधर्मकः। तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति ॥

अवयवसमुदाये च वाक्ये संभूयेतरेतराभिसंबन्धात्प्रमाणान्यर्थं[2] साधयन्तीति। संभवस्तावत्, शब्दविषया प्रतिज्ञा, आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानादनृषेश्च स्वातन्त्र्यानुपपत्तेः। अनुमानं हेतुः, उदाहरणे [3]संदृश्य प्रतिपत्तेः। तच्चोदाहरणभाष्ये व्याख्यातम्। प्रत्यक्षविषयमुदाहरणम्, दृष्टेनादृष्टसिद्धेः। उपमानमुपनयः, तथेत्युपसंहारात्, न च तथेति चोपमानधर्मप्रतिषेधे विपरीतधर्मोपसंहारसिद्धेः। सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति ॥

इतरेतराभिसंबन्धोऽपि—असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्त्तेरन्। असति हेतौ कस्य साधनभावः प्रदर्श्येत ? उदाहरणे साध्ये च कस्योपसंहारः स्यात् ? कस्य चापदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनं स्यात् इति ? असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत ? कस्य वा साधर्म्यवशादुपसंहारः प्रवर्तेत ? उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मो नार्थं साधयेत्। निगमनाभावे चानभिव्यक्तसंबन्धानां प्रतिज्ञादीनामेकार्थेन प्रवर्तनं तथेति प्रतिपादनं कस्येति[4] ॥

---

१. किं तर्हि ? उत्पत्तिधर्मकः om CT २. अर्थान् C ३. सादृश्यप्र° C
४. °र्थं न प्रतीयेतार्थप्रतिपादकत्वमिति J

अथावयवार्थः । साध्यस्य धर्मस्य धर्मिणा संबन्धोपपादनं[1] प्रतिज्ञार्थः । उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकभाववचनं हेत्वर्थः । धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थः । साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थः । उदाहरणस्थयोर्द्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम् ॥

न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते । अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते । व्यवस्थिते हि [3]खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वेन उपादानं न साधर्म्यमात्रस्य, न वैधर्म्यमात्रस्य वेति[4] ॥ ३९ ॥

॥ वार्त्तिकम् ॥

**हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्** ॥३९॥ प्रतिज्ञायाः पुनर्वचनमिति, प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणोपपत्तौ [5]साध्यविपरीतप्रसङ्गप्रतिषेधार्थं यत् पुनरभिधानं तत् निगमनमिति । न पुनः प्रतिज्ञाया एव पुनर्वचनमिति । किं कारणम् ? प्रतिज्ञा साध्यनिर्देशः, सिद्धनिर्देशो निगमनमिति[6] । एतस्मिन् सूत्रार्थे परस्यावकाशो नास्तीति । अभ्युपेत्य तद्दोषनिराचिकीर्षया वाक्यमुपक्षिप्यते,

उपनयनिगमने तु[7] नावयवान्तरे अर्थाविशेषात्

इति । इदं तावद् वाक्यं यथाश्रुति न केनचिदर्थेन संबध्यते । अथ हेतूपनयावेकत्वेन पक्षीकृत्यार्थाविशेषादिति हेतुः ? स विपक्षवृत्तित्वाद् विपर्ययहेतुः अर्थाविशेषस्यैकत्वेऽदर्शनादिति नानात्वे च दर्शनादिति । यथा बहूनां घटानामेकोऽर्थः [8]अवधारणादिर्न चैकत्वमिति । अथैकप्रयोजनकत्वेन पक्षीकृत्य ब्रूयादेकत्वमेकप्रयोजनत्वमिति, तथापि हेतुर्नास्ति, प्रतिज्ञार्थेनाक्षिप्तत्वात् हेतूपनययोरेकोऽर्थ[9] इति प्रतिज्ञार्थः । अर्थाविशेषादिति हेत्वर्थोऽपि स एव । अन्यश्च हेत्वर्थः, अन्यश्चोपनयार्थ इति । असिद्धोऽप्ययं हेतुः । तद् वर्णितम्,

पक्षधर्मत्वसंबन्धसाध्योक्तेरन्यवर्जनम् ।

इत्येतदनेनैव प्रत्युक्तम् ॥

---

१. °न्धोपादानं C  २. साध्यस्य om J  ३. तु C ; च J  ४. चेति J
५. साध° om J  ६. न पुनः.........निगमनमिति om C  ७. तु om C
८. जलाहरणादिः C °र्थोद्धारणादिः C var.  ९. °रेकार्थत्वमिति C

यदपि, यथा तथेत्युपसंहारे कृते तथेत्यनेन शब्देन सर्वसामान्यं वा, कृतकत्वसामान्यं वाभिधीयते ? कृतकत्वविशेषो वा ? सर्वसामान्यं तावत् न युक्तम्, तथेति व्यपदेशाशक्यत्वादिति । कृतकत्वविशेषोऽपि न युक्तः, अन्यथा शब्दस्य कृतकत्वात् । परिशेषात् कृतकत्वसामान्यम् । तच्च हेतुनैवोक्तमिति––तदप्ययुक्तम्, उपनयस्योपमानार्थत्वात् । उपमानार्थ उपनय इति । तच्चोपमानं न सर्वथा साध्यसाधनभावमाश्रित्य प्रवर्तते इति यत्किञ्चिदेतत् । कृतकत्वसामान्यं तु शब्दसन्निधावभिधीयते इति चित्रमिदम् । कृतकत्वं शब्दसन्निधावभिधीयत इति । शब्देन च विशिष्यमाणं कथं सामान्यं भविष्यति ? तस्मात् सामान्यविशेषवान् हेतुरिति गतार्थत्वाच्च[1] नोपनय इत्येतदनेन[2] प्रत्युक्तम् । यदप्युक्तं [3]यथाशब्दो घटशब्दसहितो दृष्टान्त एवेति, तदप्ययुक्तम्, यथा तथेत्युपमानमेतत् । उपमानं चोपनयो न दृष्टान्त इति ॥

एतेन निगमनं प्रत्युक्तम् । ते एते वीतावीतवाक्ये पञ्चावयवे न पुनरेकमन्वयिव्यतिरेकि चेति ॥३९॥

॥ टीका ॥

निगमनलक्षणावतारपरं **भाष्यं द्विविधस्य पुनरिति** । साधर्म्येण वैधर्म्येण द्विविधानामपि हेतूदाहरणोपनयानां **समानं** निगमनलक्षणमित्यर्थः । **हेत्व–नम्** ॥३९॥ **तस्मादिति** । हेत्वपदेशात् तद्धेतुकम् **अनित्यः शब्द** इति प्रतिज्ञाया पुनर्वचनम् । यद्यपि च सिद्धनिर्देशो निगमनम्, साध्यनिर्देशश्च प्रतिज्ञा, तथापि यस्यैव प्रतिज्ञायां साध्यत्वमासीत्, तस्यैव निगमने सिद्धत्वमित्यवस्थावन्तमेकमाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते । तथा च पुनर्वचनमप्युपपन्नम् । तदेतद् **भाष्यकारो** व्याचष्टे—**साधर्म्योक्त** इति । व्युत्पादयति—**निगम्यन्ते** इति । साधर्म्यवैधर्म्ययोः प्रतिज्ञातः प्रभृति निगमनान्तं प्रयोगमाह—**तत्रेति** । [4]अत्र प्रथमसूत्रवदेव यथास्वमवयवेषु प्रमाणानां परमन्यायं स्तोतुं संभवमाह—**अवयवसमुदाये चेति** । **आप्तोपदेशस्येति** ।

सदेव सोम्येदमग्र आसीत् ।

इत्यादेराप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानात् । ननु कस्मात् प्रतिज्ञैवाप्तोपदेशो न भवति, कृतमस्या आगमान्तरविषयत्वेनेत्यत आह—**अनृषेश्चेति** । **अनुमानं हेतुः** । **स्यादेतत्** । द्वितीयं लिङ्गदर्शनं हेतुः । न च तदनुमानम् । तृतीयस्योपनयविषयस्य

---

१. च om C २. इत्यनेन C ३. यथाशब्दो……तदप्ययुक्तम् om C
४. तच्च for अत्र C ५. छान्दोग्योप॰ ६।२।१

लिङ्गदर्शनस्य तथाभावादित्यत आह—उदाहरण इति । उदाहरणे दृष्टान्तधर्मिणि । साध्यसाधनयोः प्रतिबन्धं संदृश्य[1] सम्यग् दृष्ट्वा लिङ्गस्य प्रतीतेः ॥

एतदुक्तं भवति—यद्यपि त्रयाणामपि लिङ्गदर्शनानां सस्मृतीनामनुमानत्वम्, तथापि तदेकदेशे मध्यमेऽपि लिङ्गदर्शने समुदायोपचारादनुमानव्यपदेश इति । प्रत्यक्षविषयम् उदाहरणम् । कस्मात् ? दृष्टेन उदाहरणे प्रतिबन्धेन अदृष्टस्य[2] साध्यधर्मिण्यनुमेयस्य सिद्धेः । यदि पुनर्न मूलं प्रत्यक्षमास्थीयेत, अव्यवस्थया नादृष्टं सिध्येदिति भावः । निगमप्रयोजनं प्रतिपादयति—सर्वेषामिति । प्रतिज्ञादीनामुपनयान्तानामेकोऽर्थः स्वभावप्रतिबद्धं लिङ्गं वा अनुमेयं वा, तस्य प्रतिपत्तिः, तस्यां सामर्थ्यप्रदर्शनं निगमनमिति । तदनेनैकार्थत्वं दर्शितम् । द्विविधं च[3] प्रयोजनम् । तत्रावान्तरं स्वभावप्रतिबद्धलिङ्गप्रतीतिः । परमं च साध्यप्रतीतिरिति ॥

संप्रति विभागे साकांक्षत्वं दर्शयति—इतरेतराभिसंबन्ध इति । अभिसंबन्धेन फलेनाकांक्षामुपलक्षयति—असत्यामिति । प्रधानं हि प्रतिज्ञापदम् । तदुत्तरकालं हि साधनाकांक्षायां प्रतिज्ञामाश्रित्य हेतुपदं प्रवर्तते । न पुनः प्रथममेव हेत्वपेक्षेति हेतुलक्षणेऽस्माभिरुपपादितमिति[4] । हेतुपदविरहे आकांक्षां दर्शयति—असति हेताविति । उदाहरणाभावेऽपेक्षामाह—असत्युदाहरण इति । उपनयाभावेऽप्यपेक्षामाह—उपनयं चान्तरेणेति । निगमनाभावेऽप्यपेक्षामाह–निगमनाभावे चेति । अवयवानां प्रातिस्विकं प्रयोजनमुक्तमपि शिष्यहिततया भाष्यकारः प्रतिपादयति—अथेति । [5]पञ्चावयवप्रतिपादनप्रयत्नस्य प्रयोजनं दर्शयति—न चैतस्यामिति । कथं पुनः प्रक्रमत इत्याह—अव्यवस्थाप्येति । व्यवस्थापिते [6]तु न जातेरवसर इत्याह—व्यवस्थिते हीति ॥

अत्र केचित् आहुः निगमनमसाधनाङ्गम् । कथम् ? प्रतिज्ञया गतार्थत्वादिति । तन्मतम् अपाकर्तुं वार्त्तिककारः सप्रयोजनं निगमनं दर्शयति—प्रतिज्ञाविषयस्यार्थस्येति । चतुर्भिः खल्ववयवैर्हेतोस्त्रीणि रूपाणि द्वे वा प्रतिपादिते, न त्वबाधितविषयत्वासत्प्रतिपक्षितत्वे । पञ्चसु वा चतुर्षु वा रूपेषु हेतोरविनाभावः परिसमाप्यते । [7]तस्मादबाधितविषयत्वासत्प्रतिपक्षितत्वरूपद्वयसंसूचनाय निगमनम् । तदिदमुक्तम्—विपरीतप्रसङ्गप्रतिषेधार्थमिति । बाधने प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति । सोऽयं प्रतिज्ञाविषयार्थस्य अशेषप्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयस्यार्थस्य सिद्धतया पुनर्वचनेन

१. सादृश्यं C २. अदृष्टे C ३. हि C ४. प्रतिपा॰ C ५. ॰व्युत्पादन॰ J
६. तु om C ७. ॰विषय॰ om C

निगमनेन प्रतिषिध्यते । न च प्रतिज्ञावचनादेव तत्सिद्धिः, तस्य साध्यपरत्वात् । न चान्यपरादप्याक्षेपात् सिद्धिः [1]हेत्वादिपदाप्रयोगवैयर्थ्यप्रसङ्गात्, प्रतिज्ञात एव सर्वाक्षेपसंभवात्[2] । तस्माद् रूपद्वयप्रतिपादनार्थं निगमनम् । यथा च त्रैरूप्यातिरिक्तमेतद्रूपद्वयं तथोपपादितम् अस्माभिः प्रथमसूत्रे । हेत्वाभासेषु च शेषं दर्शयिष्यत इति । एतस्मिन् सूत्रार्थे परस्य प्रतिज्ञायां निगमनं गतार्थं मन्यमानस्य अवकाशो नास्तीति ॥

यस्तु मन्येत न हेतोरविनाभावसिद्धिमन्तरेण सिद्धनिर्देशो निगमनं भवति, न च पाञ्चरूप्यं विना अविनाभावसिद्धिः । निगमनाच्च तत्सिद्धौ न सिद्धनिर्देशो निगमनम्, अपि तु तदपि साध्यनिर्देश एवेति, तं प्रत्युपेत्य तद्दोषनिराचिकीर्षया परेषां वाक्यमुपक्षिप्यते । परेषां वाक्यं पठति—**उपनयनिगमने त्विति** । दूषयति—**इदं तावदिति** । यथाश्रुति हि निगमनोपनययोरभेदं साधयति, अर्थगतं चाविशेषं हेतुमाह—तच्चैतदालोकतमसोरैक्यं काकस्य कार्ष्ण्यादिवदापतितम् । शङ्कते—**अथ हेतूपनयाविति** । उपलक्षणं चैतत्, प्रतिज्ञानिगमने इत्यपि द्रष्टव्यम् । अर्थाविशेषादिति चाविशिष्टार्थत्वादित्युन्नेतव्यम् । तथा च संबन्ध इति शङ्कितुरभिप्रायः । अत्रापि दोषमाह—**स विपक्षेति** । पुनः शङ्कते—**अथैकप्रयोजनत्वेनेति** । निराकरोति—**तथापीति** । सिध्यत्येकप्रयोजनत्वे साध्ये हेतोरविरोधः, हेतुस्तु न प्रतिज्ञार्थादतिरिच्यते इत्यर्थः । **तद् वर्णितमिति** । अन्यश्च हेत्वर्थोऽन्यश्चोपनयार्थ इत्येतद् वर्णितमित्यर्थः । एतेनोपनयनिगमनप्रयोजनाभिधानेन ये त्र्यवयवं वाक्यमाहुः, तन्मतमपि परास्तमित्याह—**पक्षधर्मत्वेति** ॥

यच्च परैः उपनये दूषणं विकल्प्याभ्यधायि तत् तावदुपन्यस्यति—**यदपि यथा तथेति** । **सर्वसामान्ययोगे हि तदेव स्यात्, न तु तथेति** । **अन्यथा शब्दस्य कृतकत्वादिति** । न हि यथा घटः कृतकः, तथा शब्दोऽपि कृतकः, घटशब्दयोरभेदप्रसङ्गादित्यर्थः । तस्मात् सामान्यप्रतिषेधे विशेषप्रतिषेधे च कृतकत्वं सामान्यं परिशिष्यते । तस्य च यथातथाभावयोरभावात् कृतकत्वादित्येव स्यात् । तथा च न हेतोर्व्यतिरेक उपनयः स्यादित्याह—**परिशेषादिति** । तदेतत् परेषां दूषणं निराकरोति—**तदप्ययुक्तमिति** । यथा तथेति वाक्यमुपमानैकदेशमुपमानमुपचारात् । उपमानमर्थो यस्य सोऽयमुपमानार्थ उपनयः । तस्य भावस्तत्त्वं तस्मात् । तच्चोपमानं न सर्वथा साध्यसाधनभावमाश्रित्य प्रवर्तते । साध्ये शब्दे साधनस्य कृतकत्वस्य स्थालीगतस्य यः सर्वथाभावः स्थालीत्वाद्येकार्थसमवायः तमाश्रित्य न प्रवर्तते । तथा च शब्दस्थाल्योः

---

१. हेत्वादिप्रयोगवैयर्थ्यप्र° C  २. सर्वाक्षेपात् J

अभेदप्रसङ्गाद् यथा तथेत्येव न स्यात् । तस्मात् स्थालीस्थप्रकारान्तरव्युदासेन कृतकत्व-सामान्यमात्रसाधारण्येन यथा तथेत्युपमानोपपत्तिरित्यर्थः । नन्वेवमपि कृतकत्वसामान्यमात्रं शब्दे स्यात्, न तु यथा तथाभावः, तथा च न हेतोरतिरेक इत्युक्तमित्यत आह— कृतकत्वसामान्यं त्विति । न हि जातु शावलेयसन्निधौ गोत्वसामान्यमात्रं भवति, अपि तु विशेषसहितम् । तथा च [1]यथातथाभाव उपपन्न इत्यर्थः ॥

एतेन यत् परैरुपनयस्य दृष्टान्तादभिन्नत्वं वर्णितम्, तदपि परास्तमित्याह— गतार्थत्वादिति । अनेनोपमानसमानत्ववर्णनेन । एतदेव विभजते— यदप्युक्तमिति । व्याप्तिप्रदर्शनविषयो दृष्टान्तः दृष्टव्याप्तिकस्य हेतोः साध्यधर्मिण्युपसंहार उपनय इति महान् भेद इत्यर्थः । एतेन निगमनं प्रतिज्ञायाः समानाभिधेयत्वेऽपि प्रतिज्ञार्थत्वेन प्रत्युक्तम्, प्रतिज्ञायाः साध्यपरत्वात् निगमनस्य च[2] विपरीतशङ्कानिवृत्तिपरत्वादिति । प्रयोजनभेदसामान्यमात्रविवक्षया एतेनेत्युक्तम् । अत्र भाष्यकारेण एकस्मिन्नन्वयव्यति-रेकिण्येव वीतावीतवाक्ये पञ्चावयवे उदाहृते । तत्र कदाचिद् भ्रान्तिः स्यादेकोदाहरणतया द्वे अपि वाक्ये परस्परापेक्षे एवेति, तन्निराकरणायाह—ते एते इति । न पुनरन्वयि व्यतिरेकि चेत्येकं वाक्यमित्यर्थः ॥ ३९ ॥

॥ परिशुद्धिः ॥

ननु यथा हेत्वनुरोधेन तदुपसंहार उपनये द्विविधः, तथा साध्यानुरोधेन तदुप-संहारोऽपि द्विविध एव प्राप्तः । अवश्यं च साध्येन द्विविधेनैव भाव्यम्, साधनानुरोधात्। न ह्यन्विताद् व्यतिरेकः साक्षात् सिध्यति, व्यतिरिक्ताद् वान्वयः, लिङ्गस्यान्यापोहविषय-त्वानभ्युपगमात् । तस्मात् प्रतिज्ञानिगमनयोरपि द्वैविध्यं प्राप्तमिति कुतो नाभिहितं इति सूत्रकृता प्रतिज्ञालक्षणे शङ्कितुमुचितमपि ग्रन्थलघिम्ने सुखप्रतिपत्तये वा । इह शङ्का-भाष्यम्—द्विविधस्येति । तद् व्याचष्टे—साधर्म्यवैधर्म्येति । हेत्वादीनामवयवानां येषां यत्संबन्धि निगमनं तस्य समानमेकं लक्षणम् ॥

न हि विधिनिषेधयोः प्रतिज्ञातयोर्निषेधविध्युपसंहारे प्रतिज्ञायाः पुनर्वचनमिति लक्षणं लगति, येनातिप्रसङ्गभिया सूत्रकृत् [3]तन्नियमयेदित्यर्थः । एतेन प्रतिज्ञापि व्याख्याता । न ह्यन्वयिव्यतिरेकिणोर्हेत्वोः व्यतिरिक्तान्वितप्रतिज्ञाने साध्यनिर्देश इति-लक्षणं लगति, तयोस्तदसाध्यत्वात् । तस्माद् विवक्षितोऽप्ययमर्थो न सूत्रितो न्याय-लभ्यत्वात् । अतएव तत्र वार्त्तिकम्—अनित्यः शब्दो, नेदं निरात्मकमिति । तत्

१. यथाभावः C २. च om C ३. तत् om MA

किं कृतकत्वादित्यादिक एव हेतूपदेशः कर्तव्यः ? नेत्याह—तस्मादिति। न च वाच्यं तथैव किं न स्यात्, अनुपसंहारत्वप्रसङ्गात्। तथा च पूर्वोक्तरूपानुसन्धानविपरीतप्रसङ्गनिवारणयोरलाभे[1] निगमनानर्थक्यात्। सर्वनाम्नो महिमा च यत् पूर्वोक्तानुसन्धानम्। उपसंहारस्यैष च गुणो यद् विपरीतकल्पनाविलोपनं नाम। न चानयोरन्यतराप्रतीतावपि साध्यसिद्धिः। एवं च सत्यवश्यकर्तव्यतया तस्मादिति कृते कृतकत्वादिति मन्दप्रयोजनम्, विवरणमात्रतया तु भाष्यकारेणोक्तम्, ये तु निपुणम्मन्याः सर्वनाम्ना हेतुवत् प्रतिज्ञाभिधानमपि मन्यन्ते, तेषां तथाशब्दः स्वरूपवचनो वा स्यात्, प्रकारवचनो वा ? आद्ये तस्मात् स इत्यर्थः स्यात्। तथा च निगमनाभासोऽयं लक्षणायोगादर्थायोगाच्च। द्वितीये तु तादृश इत्यर्थः स्यात्। तथापि न तेनैव तादृशत्वम्, अन्यसादृश्यपरामर्शे तु न निगमनलक्षणयोगः[2]। अथ यथोक्तः तथेत्यर्थः, तथापि कथं तथेति नित्यसापेक्षत्वादनुपसंहारत्वम् ? गम्यमानत्वात् अवचने प्रतिज्ञायाः पुनर्वचनमिति लक्षणायोगः। प्रतिपादनमात्रपरमेतदिति चेत् ? निगमनानर्थक्यम्। ओमिति चेत् ? तत्र वक्ष्याम इत्याशयवानाह—अनित्यः शब्द इति प्रतिज्ञायाः पुनर्वचनमिति। आरम्भोपसंहारतयैव चानयो रूपाविशेषे साध्यसिद्धनिर्देशता। पटारम्भोपसंहारयोरिव पटारम्भकास्तन्तव एव एत इति। वचनमिति। अतएव न पौनरुक्त्यविरोधावित्याह—यद्यपीति। तदिदमुक्तम्, यस्यैव साध्यत्वमासीदित्यादि। न ब्रूमः सिद्धस्य निर्देशो निगमनमपि तु सिद्धतया निर्देश इति। तथैव ततः पाञ्चरूप्यप्रतीतेः न ह्युपपादनीयतया निर्देशः साधनस्य रूपान्तरसम्पदमाक्षेप्तुमप्यलमित्युक्तम्। तदेतदबुद्ध्वा यस्तु मन्यते इत्यादि तं प्रत्यभ्युपेत्येति ॥ ३९ ॥

॥ इति न्यायलक्षणप्रकरणम् ॥

## ॥ न्यायोत्तराङ्गलक्षणप्रकरणम् ॥

### ॥ भाष्यम् ॥

अत[3] ऊर्ध्वं तर्को लक्षणीय इति अथेदमुच्यते—

**अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥४०॥**

अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते[4] जानीयेममर्थमिति। अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति, किं स्वित्

१. ॰निराकरणयो M २. ॰लक्षण॰ om A ३. इतः K ४. तावत्प्रवर्तते J

इत्थमाहोस्विन्नेत्थमिति । विमृश्यमानयोर्धर्मयोरेकतरं[1] कारणोपपत्त्या अनुजानाति, सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति । कारणोपपत्त्या स्यादेवमेतत् नेतरदिति ॥

तत्र निदर्शनम्, योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते, तं तत्त्वतो जानीयेति जिज्ञासा ।[2] स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः । विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते, तमनुजानाति। यद्ययमनुत्पत्तिधर्मकः ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता। दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम्, उत्तरोत्तरापाये च तदनन्तराभावादपवर्ग[3] इति स्यातां संसारापवर्गौ । उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम् । उत्पन्नः खलु ज्ञाता देहेन्द्रियविषयबुद्धिवेदनाभिः[4] संबध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् । उत्पन्नश्च भूत्वा न भवतीति, तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति, तदेवमेकस्यानेकशरीरयोगः[5] शरीरवियोगश्चात्यन्तं न स्यादिति, यत्र कारणमनुपपद्यमानं पश्यति, तन्नानुजानाति । सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते ॥

कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति ? अनवधारणात् । अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या, न त्ववधारयति न व्यवस्यति न निश्चिनोति एवमेवेदमिति । कथं तत्त्वज्ञानार्थं इति ? तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद्[6] भावितात्प्रसन्नादनन्तरं प्रमाणसामर्थ्यात् तत्त्वज्ञानम् उत्पद्यत इत्येवं तत्त्वज्ञानार्थं[7] इति ॥

सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात्[8] प्रमाणसहितो वादेऽपदिष्ट[9] इति । अविज्ञाततत्त्वेऽर्थे[10] इति यथा सोऽर्थो भवति तस्य तथाभावस्तत्त्वमविपर्ययो याथातथ्यम् ॥ ४० ॥

॥ वार्त्तिकम् ॥

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः इति सूत्रम् ॥४०॥ अस्यार्थः

---

१. °रेकं C २. जिज्ञासते K ३. °त्तरापायाद° TC ४. °विषय° om TC
५. शरीरादिवि° J ६. °क्षणानुग्रहे C ७. इत्येवं तत्त्वज्ञानार्थः om J ८. प्रमाणानुग्रहात् J
९. उपदिष्टः J १०. °ज्ञाततत्त्वमनुजानाति C

पूर्ववत् । अविज्ञाततत्त्वेऽर्थे इति । यथा सोऽर्थो भवति सोऽस्य तथाभावस्तत्त्वम् । एतस्मिन् अविज्ञाते सामान्यतोऽधिगते[१] । कुतः पुनरेतत् सामान्यतोऽधिगतमिति[२] ? अविज्ञाततत्त्वेऽर्थे इत्यभिज्ञानात् । यस्मादयमाह—अविज्ञाततत्त्वेऽर्थे इति, तेन ज्ञापयति, सामान्यमवगतमिति[३] । यदि पुनः सामान्यमपि नाधिगतं स्यात्, न ब्रूयात् अविज्ञाततत्त्वे इति । अविज्ञात इत्येवं ब्रूयादिति ॥

अविज्ञाततत्त्व इति समासोऽयम् । न[४] चावगम्यते किमविज्ञातं तत्त्वं येन, उताविज्ञातं तत्त्वं यस्येति । कश्चात्र विशेषः ? यद्यविज्ञातं तत्त्वं येन सोऽयमविज्ञात-तत्त्वः परिच्छेत्ता, तस्मिन्नविज्ञाततत्त्वे परिच्छेत्तरि तदवगमार्थमूहस्तर्क इति प्राप्नोति । अथाप्यविज्ञातं तत्त्वं यस्य [५]तद्वस्त्वविज्ञाततत्त्वम्, तस्मिन्नविज्ञाततत्त्वे इति षष्ठी-विग्रहेणातियुक्तमेतत् । न, विशेषहेत्वभावात्[६] । नात्र विशेषहेतुरिति किमयं तृतीया-विग्रहेण समास उत षष्ठीविग्रहेणेति ? षष्ठीविग्रहेणेति[७] युक्तम्, अर्थग्रहणसामर्थ्यात् । यस्मादयमाह[८] अविज्ञाततत्त्वेऽर्थे इति, अर्थश्चार्यमाणत्वात् कर्म, तेन ज्ञापयति षष्ठी-समासोऽयं न तृतीयाविग्रह इति, अर्थग्रहणमन्तरेणापि सामर्थ्यतोऽधिगतेः[९] । अविज्ञातं तत्त्वं यस्येत्यनुक्तेऽप्यर्थे गम्यत एवैतदर्थ इति । एवमपि समासे सन्देहतादवस्थ्यम् । मा भूत् समासो वाक्यमेवास्तु अविज्ञातं तत्त्वं यस्येति[१०] । भवत्येवमभीष्टार्थप्राप्तिः, लाघवार्थं तु समासकरणम् । अनुक्तेऽप्यर्थशब्दे सामर्थ्यतो गम्यते अविज्ञातं तत्त्वं यस्येति । अत्रोक्तं सन्देह एव स्यादिति । समस्तानभिधानप्रसङ्गाच्च । यदि च सामर्थ्यम् आश्रित्यार्थग्रहणं प्रतिषिध्यते, तदेवं युक्तमूहस्तर्क इति । सामर्थ्यतः शेषं गम्यत इति । तस्मादर्थग्रहणं ज्ञातृनिराकरणार्थमिति ॥

अविज्ञाततत्त्व इति न वक्तव्यम्, गम्यमानत्वात् । कारणोपपत्तितस्तत्त्वज्ञानार्थम् ऊहस्तर्क इत्युक्ते गम्यते एतत्, अविज्ञातं तत्त्वं यस्येति[११] । अत्र तावदुक्तं समस्तानभि-धानप्रसङ्गादिति । मा भूत् समस्ताभिधानम्, किं नो बाध्यते ? न, बुद्धिधर्मनिरा-करणार्थत्वात् । उभयथा [१२]खल्वर्थेषूहो भवति विज्ञाततत्त्वे चाविज्ञाततत्त्वे चेति । तत्र तावद् विज्ञाततत्त्व ऊहः शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशा बुद्धिधर्मा इति तत्त्वमवधृतं विजानाति, विज्ञातमूहते इति । किमुक्तं भवति ? योऽसावर्थः पूर्वम्

१. ज्ञाते C २. अवगत॰ C ३. सामान्यतोऽधि॰ J ४. चार्थो C
५. तदवि॰ C ६. ॰भावान्नार्थाधिगमः C ७. षष्ठीविग्रहेणेति om C ८. अयमाह om C
९. सामान्यतोऽव॰ C १०. तत्त्वमस्येति C ११. अस्येति C १२. खल्वयमूहो C

अनेन विज्ञातस्तमेवोहत इति पूर्वानुभूतार्थपरिच्छेद[1] ऊह इत्युच्यते, न त्वयं तर्कः। यः पुनरविज्ञाततत्त्वेऽर्थे भवति ऊहः, स तर्क इति ॥

षष्ठ्यभिधानमधिकरणार्थासंभवादविज्ञाततत्त्वस्यार्थस्येति वक्तव्यम्। अविज्ञाततत्त्वोऽर्थो ज्ञायमानः कर्म भवति। कर्मणि च षष्ठ्येव ज्यायसी। यथा घटस्य विज्ञानमिति। न, विभक्तिव्यत्ययात्। षष्ठीस्थल एवैषा सप्तमी द्रष्टव्या। यथा अन्यत्र,

इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतुः[2] ॥

इति विभक्तिव्यत्ययः। कस्मात्? यदि व्यत्ययेन कश्चिदर्थो लभ्यते, युक्तो व्यत्ययः। यथा तस्मिन्नेव इषावयुगपत् संयोगविशेषा इति अधिकरणार्थः। इषोरपि येऽवयवाः, तेषामपि ये संयोगविशेषास्तेऽपि कर्मान्यत्वे हेतुरिति। न पुनरिह विभक्तिव्यत्ययेन फलं पश्यामः। तस्मात् न युक्तो विभक्तिव्यत्यय इति। न न युक्तः, सामान्याधिगतस्य विशेषज्ञापनार्थम्। यस्यैव सामान्यमधिगतं तद्वर्तिनो विशेषा अप्यवगन्तव्या इति। ते च विशेषाः संयोगिनः समवायिनश्च भवन्तीति ॥

कारणोपपत्तित इति। प्रमाणोपपत्तितः। उपपत्तिः संभवः। संभवति एतस्मिन्नर्थे प्रमाणमिति [3]भवेदयमर्थ इति। उदाहरणम्, योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं तत्त्वतो जानीयेति किमयमुत्पत्तिधर्मकोऽथानुत्पत्तिधर्मक इति [4]यावदेकतरमनुजानातीति भाष्यम्। अनुत्पत्तिधर्मकेनानेन भवितव्यमिति य ऊहः स तर्क इति। नन्वेवत् तत्त्वज्ञानमेव, किमुच्यते तत्त्वज्ञानार्थमिति? नेदं तत्त्वज्ञानमनवधारणात्। न ह्ययमवधारयति एवमेवेति। किं त्वनुत्पत्तिधर्मकेण ज्ञात्रा भवितव्यमिति प्रमाणविषयमभ्यनुजानाति। कथं पुनरयं तत्त्वज्ञानार्थो भवति? प्रमाणविषयविवेचनात्। प्रमाणविषयमनेन विविनक्ति अयमर्थो युक्त इति। प्रमाणानि पुनः प्रवर्तमानानि तर्कविविक्तमर्थं तथाभूतमधिगमयन्तीति ॥

ऊहः संशयनिर्णयाभ्यां न भिद्यते इति केचित्। अयं किलोहः संशयो वा स्यात् निर्णयो वा? यदि संशयस्तदा तेन संगृहीत इति पृथक् न पठितव्यः। अथ निर्णयः, तदा तेन संगृहीत इति ॥

अपरे तु अनुमानं तर्क इत्याहुः। हेतुस्तर्को न्यायोऽन्वीक्षा इत्यनुमानमाख्यायते इति ॥

अपरे त्वनुमानमेव तर्कं युक्त्यपेक्षं वर्णयन्ति ॥

---

१. भूतपरिच्छेदकः C २. वै. सू. ५.१.१६ ३. तावद॰ J ४. यावत् om C

यत्तावन्निर्णयसंशयाभ्यां नोहो भिद्यते इति तन्न प्रत्ययस्वरूपानवबोधात्[1]। अविज्ञाततत्त्वेऽर्थे भवतीति सामान्येनाक्षिप्तो भवान्। सत्यमविज्ञाततत्त्वे भवतीति, न पुनः प्रत्ययस्वरूपं व्यज्ञायि भवता। अनवधारणात्मकः प्रत्ययः संशयः किं स्विदिति। अवधारणात्मकः प्रत्यय एवमिदमिति निर्णयः। अयं तु संशयात् प्रच्युतः कारणोपपत्ति-सामर्थ्यात्। न संशये कारणोपपत्तिरस्ति। निर्णयं चाप्राप्तो विशेषादर्शनात्। विशेष-दर्शनात् निर्णयो भवति। न चास्मिन् विशेषदर्शनमस्ति। एतेनानुमानं तर्क इत्येतदपि प्रत्युक्तं विशेषादर्शनादिति। किं पुनरस्य स्वरूपम्? भवेदित्येष प्रत्यय इत्येतदस्य स्वरूपमिति ॥

यैरप्यनुमानं युक्त्यपेक्षं तर्क इत्युच्यते, तैरप्यनुमानात् तर्कभेदः स्वयमेवोक्तः[2]। युक्तिः प्रमाणोपपत्तिः। [3]तामपेक्ष्यमाणो यः प्रत्ययः स तर्क इति केवलं संज्ञाभेदमात्रम्। अथ न प्रमाणोपपत्तिर्युक्तिः, अनुमानं युक्त्यपेक्षमित्यपेक्षासामर्थ्यं वक्तव्यम्। स्वविषया-धिगमे चानुमानं किमपेक्षते? अथेतरप्रमाणापेक्षा युक्तिरित्युच्यते? एवमप्यनुग्रहार्थो वक्तव्यः। कथं प्रत्यक्षागमाभ्यामनुमानमनुगृह्यते इति? अथानुमानस्य प्रत्यक्षागमैक-विषयत्वम्? तत्रापि कः तर्कः? त्रीण्येतानि प्रमाणान्येकविषयतया प्रतिसंहितानीति भवेत्, अवधारणप्रत्ययौ भिन्ननिमित्तौ विशेषवत्त्वात् प्रत्यक्षानुमानप्रत्ययवत् ॥

अनुमानं तर्कः लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वात् अनुमानवदिति। न तर्कस्वरूपानव-बोधात्। नैव लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षस्तर्कः। कथमिति? द्वयस्यानधिगतेः। यत्र [4]खलु द्वयमधिगम्यते धर्मी साधनधर्मश्च, तत्रानुमानं प्रवर्तते। यत्र पुनर्धर्मिमात्राधिगतिः, न लिङ्गाधिगतिरस्ति स तर्कविषयः। तस्मात् लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वमयुक्तम्[5]। अनुमानं च धर्मिगतधर्मोपलब्ध्या[6] प्रवर्तते न पुनस्तर्कः। तर्कस्त्वन्यगतधर्मदर्शनेनापि प्रवर्तते, यथा भवितव्यमनेन पुरुषेण, [7]यथा अस्मिन् देशे अश्वा वाह्यन्ते इति अश्ववाहनं न न पुरुषधर्मः। सोऽयमन्यगतधर्मोपपत्त्या स्थाणुव्यवच्छेदमात्रमूह इति। सोऽयं तर्कः प्रमाणानि संधत्त इति प्रमाणसहितो वादेऽपदिष्टः, न पुनरयं प्रमाणमपरिच्छेद-कत्वादिति ॥४०॥

॥ टीका ॥

अत्र भाष्यं तर्कलक्षणावतारपरम्—**अत ऊर्ध्वमिति**। उद्देशक्रमानुसारेण। **अवि-तर्कः ॥ ४० ॥** तर्कप्रवृत्तिक्रममाह—**अविज्ञायमानतत्त्वेऽर्थे** इति यद्यपि संशयस्य

---

१. ॰नवधारणात् J २. एव om C ३. प्रमाणोपपत्ति for ताम् C ४. खलु om C ५. अनुपपन्नम् C ६. ॰लब्धौ C ७. तथा J

पश्चादेव जिज्ञासा भवति, तथापि जिज्ञासायाः परस्तादपि संशयो भवति। स चात्र विवक्षितः, तर्कप्रवृत्त्यङ्गत्वात्। तर्केण हि प्रसङ्गापरनाम्ना द्वयोः पक्षयोरेकतरनिषेधेनैकतरः प्रमाणविषयतया अभ्यनुज्ञातव्य इति विषयप्रत्यासत्त्या तर्कप्रवृत्तिं प्रत्यङ्गता संशयस्येति। कारणोपपत्त्येति व्याचष्टे—**संभवत्यस्मिन् कारणं प्रमाणमिति**। अत्र च कारणमित्यस्य व्याख्यानं **प्रमाणमिति**। उपपत्तिव्याख्यानं **संभवतीति**। अनुज्ञाव्याख्यानम्।—**एवमेतत्, नेतरदिति**। एतदुक्तं भवति, यस्मिन् विषये प्रमाणं प्रवर्तितुमुद्यतं तद्विपर्ययाशङ्कायां न तावत् प्रमाणं प्रवर्तते, न यावदनिष्टापत्त्या विपर्ययाशङ्का अपनीयते। तदपनय एव च स्वविषये प्रमाणसंभव इति चोपपत्तिरिति [2]व्याख्यायते। तया प्रमाणस्योपपत्त्या इतिकर्तव्यतया [3]प्रमाणविषयमभ्यनुजानत्या विशोधिते विषये प्रमाणमप्रत्यूहं प्रवर्तते। न चोपपत्तिरेवास्तु निश्चयहेतुः कृतं प्रमाणेनेति वक्तव्यम्। उपपत्तेः स्वतन्त्राया आश्रयासिद्धतया स्वतो निश्चयायोगात्। तदुपपादितं प्रथमसूत्रे इति॥

उदाहरणमाह—**निदर्शनमिति**। **स्वकृतस्य कर्मण** इत्यादिना **पूर्वस्य कारणमि**त्यन्तेन संसारो दर्शितः। **उत्तरे**त्यादिना **अपवर्ग** इत्यन्तेनापवर्गः। तेन संसारापवर्गाविच्छन्तौ वादिप्रतिवादिनौ प्रति आत्मनित्यत्वविषयं प्रमाणं प्रवर्तमानमनेन तर्केणानुगृह्यत इति प्रमाणविषयविपर्ययाननुज्ञैव च प्रमाणविषयाभ्यनुज्ञा, अनिष्टप्रसक्त्या विपर्ययस्यैव[4] साक्षात् निवर्तनात्। अत एवान्ते भाष्यकार उपसंजहार[5]—**यत्र कारणम् अनुपपद्यमानं पश्यति, तत् नानुजानातीति**॥

ननु यदि तर्क एवमेतत्, नेतरदित्येवमाकारः, कथं पुनरयं तत्त्वज्ञानार्थो न तु तत्त्वज्ञानमेवेतेति देशयति—**कथं पुनरिति**। परिहरति—**अनवधारणादिति**। पर्यायैर्निश्चयादत्यन्तभेद उक्तः। **भावितात्** चिन्तितात्, अत एव **प्रसन्नात्** निर्मलादिति। **प्रमाणसामर्थ्यादिति** तर्कस्य स्वातन्त्र्यमपाकरोति। स्यादेतत्—यदि न तर्कस्तत्त्वनिश्चयसाधनमपि तु प्रमाणमेव, हन्त भोः किमर्थं तर्हि वादे प्रमाणतर्कसाधनेत्युक्तमित्यत आह—**सोऽयं तर्क** इति। व्यक्त्यभिप्रायेण **प्रमाणानीति**। प्रमाणविषयविपर्ययाशङ्काविघटितानि प्रमाणानि **प्रतिसंदधान** इत्यर्थः॥

**वार्त्तिककारः** सूत्रतात्पर्यमाह—**अस्येति**। समानजातीयात् संशयादेरसमानजातीयात् चेच्छादेर्व्यवच्छिद्यते। यद्यपि संशयजिज्ञासे अप्यविज्ञाततत्त्वेऽर्थे प्रवर्तेते,

१. प्रमाणं om C २. चाख्या° J ३. प्रमाणस्यास्यनुज्ञातस्य C ४. °प्रसज्यविप° C ५. °एव भाष्ये उपसंहारः C

तथापि न कारणोपपत्तित इति तयोर्व्यवच्छेद इति । तत्त्वं व्याचष्टे—**यथेति** । समानासमानजातीयव्यवच्छिन्नमविपरीतं रूपं तत्त्वमित्यर्थः । चोदयति—**कुतः पुनरिति** । न हि सामान्यज्ञानविधायकं पदमत्रास्तीत्यर्थः । परिहरति—**अविज्ञातेति** । विशेषनिषेधः शेषाभ्यनुज्ञाहेतुरित्यर्थः । विमृशति—**अविज्ञाततत्त्व इति समासोऽयमिति** । अवधारयति—**षष्ठीविग्रहेणेति** । **युक्तम्** उपपन्नम् । तृतीयाविग्रहेण त्वनुपपन्नमित्यर्थः । संशयवाद्याह—**विशेषहेत्वभावादिति** । युक्तमिति प्रतिज्ञामात्रेणोच्यते, न त्वत्र हेतुः अभिधीयत इति भावः[1] । युक्तत्वे हेतुमाह—**युक्तमर्थग्रहणसामर्थ्यादिति** । अन्यश्चोदयति—**अर्थग्रहणमन्तरेणापीति** । ज्ञेयेन हि ज्ञानं निरूप्यते न ज्ञात्रा, तस्य साधारण्यादिति सामर्थ्यमित्यर्थः । निगूढाभिसन्धिः परिहरति—**एवमपीति** । तस्याभिसन्धिभेदमुररीकृत्य चोदयति—**मा भूत् समास इति** । उत्तरवाद्याह—**भवत्येवमिति** । नाद्यापि अनेन स्वाभिप्रायो दर्शित इति मत्त्वा पुनश्चोदयति—**अनुक्तेऽपीति** । उक्तपरिहारपूर्वं स्वाभिप्रायमुद्घाटयति—**अत्रोक्तमिति समस्तानभिधानप्रसङ्गाच्चेति** स्वाभिप्रायोद्घाटनम् । एतदुक्तं भवति, सामर्थ्यप्राप्तस्यानभिधानेऽतिप्रसङ्ग इति न सामर्थ्यमाश्रित्य लक्षणे संशयो निराकरणीय इति तन्निराकरणार्थमर्थग्रहणं कर्तव्यमिति ॥

अत्र चोदयति—**अविज्ञाततत्त्व इति न वक्तव्यमिति** । न हि तत्त्वे ज्ञाते तत्त्वज्ञानार्थिता भवति । तस्माद् गम्यते अविज्ञाततत्त्व इति भावः । गुढाभिसन्धिरुक्तं परिहारं स्मारयति—**अत्र तावदुक्तमिति** । अविदिताभिप्रायश्चोदक आह—**मा भूदिति** । अस्तूहस्तर्क इत्येतावदेवेत्यर्थः । उत्तरवादी स्वाभिप्रायमुद्घाटयति—**न बुद्धिधर्मेति** । यद्यपि नास्माकं राद्धान्ते शुश्रूषादयो बुद्धिधर्मा बुद्धितत्त्वस्यैवाभावात्, तथाप्यात्मगुणा अपि सांख्याभिप्रायेण [2]बुद्धिगुणा उक्ताः । एतदुक्तं भवति, यद्यूहस्तर्क इत्येतावदुच्येत, यदि वा तत्त्वज्ञानार्थमूहस्तर्क इत्येतावन्मात्रम्, ततो विज्ञातेऽपि तत्त्वे[3] य ऊहः पूर्वानुभूतपरिच्छेदात्मा जायते पुनस्तत्त्वज्ञानार्थं सोऽपि तर्कः स्यात् । तस्मात् अविज्ञाततत्त्व इति वक्तव्यमित्यर्थः । यद्यपि कारणोपपत्तित इत्येतस्मादयमर्थोऽपि गम्यत एव, तथापि कारणोपपत्तेरेवैवंरूपत्वं नाविज्ञाततत्त्वग्रहणमन्तरेण भवति । तथा हि अधिगतपरिच्छेदात्माप्यूहः कारणस्योपपत्त्या संभवेन [4]जायते, कारणसंभवे [5]कार्यस्य अभावात् । न त्वसावविज्ञाततत्त्व इति ततो व्यवच्छेदः । तथा च सति प्रमाणमपि तर्कः

---

१. इत्यर्थः C २. बुद्धिगुणा बुद्धितत्त्व° C ३. विज्ञाततत्त्वेऽपि C ४. ज्ञायते C ५. °स्यासत्त्वात् C

स्यात् । अत उक्तं कारणोपपत्तित इति । उक्ते सति प्रयोजनानुसरणम्, न त्विह लाघवादरः सूत्रकारस्येति मन्तव्यम् ॥

चोदयति—षष्ठ्यभिधानमिति । परिहरति—न विभक्तिव्यत्ययादिति । यथान्यत्र कणभुजः सूत्रे । विप्रतिपन्नः पृच्छति—कस्मात् ? प्रष्टैवैकग्रन्थेनाह—यदि व्यत्ययेनेति । परिहरति—न न युक्त इति । सामान्येनाधिगतस्य विशेषेण ज्ञापनार्थम् । नित्यत्वादयो विशेषाः समवायिनो वह्न्यादयश्च धूमादिसंयोगिन इति । शेषं सुगमम् ॥

देशयति—ऊहः संशयनिर्णयाभ्यामिति । केचित् सिद्धान्तैकदेशिनः अनुमानं तर्क इत्याहुः । अन्ये त्वनुमानमेव युक्त्यपेक्षं विपर्ययेऽनिष्टप्रसङ्गापेक्षं तर्क इति वर्णयन्ति । तत्र प्रथमं चोदकं प्रत्याह—यत् तावदिति । आक्षिप्त आक्षिप्तहृदयः, न तु तर्कप्रत्ययस्वरूपं चेतयत इत्यर्थः । विशेषदर्शनादिति विशेषदर्शनात् निश्चयः प्रमाणेन भवति न तर्केण, तदनुज्ञानमात्रत्वात् तर्कस्येत्यर्थः । चोदकं निराकृत्य सिद्धान्तैकदेशिनं निराकरोति—एतेनेति । यदि संशयात् प्रच्युतो निर्णयं चाप्राप्तः, तर्हि तस्य स्वरूपं वक्तव्यमिति पृच्छति—किं पुनरिति । उत्तरम्—भवेदिति, प्रमाणविषयाभ्यनुज्ञेत्यर्थः । द्वितीयमेकदेशिनं निराकरोति—यैरपीति । [1]युक्तिरिह प्रमाणोपपत्तिः । तज्जन्मा च प्रत्ययस्तर्क एव । स चानुमानमिति त्वयोच्यते । अस्माभिस्तु तर्क इति संज्ञाभेदमात्रमित्यर्थः । शङ्कते—अथेति । निराकरोति—अनुमानमिति । [2]प्रसङ्गोपपत्त्यतिरिक्ताया युक्तेरनिरूपणाद् अपेक्षार्थो[3] वक्तव्यः । न ह्यपेक्षणीयमन्तरेणापेक्षा शक्या निरूपयितुमिति भावः । ननु यदेव किञ्चित् स्वविषयाधिगमे अनुमानमपेक्षते सैवापेक्षणीया युक्तिरनुमानस्य भविष्यतीत्यत आह—स्वविषयधिगमे चेति ॥

शङ्कते—अथेति । निराकरोति—एवमपीति । यद्युत्पत्तौ प्रत्यक्षागमापेक्षम् अनुमानम्, न वक्तव्यं युक्त्यपेक्षमिति, सर्वस्यानुमानस्य तथाभावेनाव्यभिचारेण विशेषणायोगादिति भावः । पुनः शङ्कते—अथानुमानस्येति । निराकरोति—तत्रापीति । एवमपि तर्को नार्थान्तरं स्यात् । अनुमानभेदस्य चेदृशस्य प्रमाण एवान्तर्भाव इति भावः । उक्तमर्थं प्रमाणयति—भवेदिति । भवेदितिप्रत्ययोऽवधारणप्रत्ययश्चेत्यर्थः । चोदयति—अनुमानमिति । विपर्ययोऽनिष्टप्रसङ्गो व्यतिरेकि लिङ्गम् । तच्चागृहीत-

१. युक्तिर्हि C　२. प्रमाणोप° C　३. युक्त्यर्थो C

संबन्धे लिङ्गिनि न प्रवर्तत इति लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वादप्राणादिमत्त्वप्रसङ्गादिति-वदनुमानमेवेत्यर्थः। परिहरति **न तर्केति**। युक्तं व्यतिरेकिणि जीवच्छरीरे धर्मिणि प्राणादिमत्त्वस्य साधनधर्मस्य दर्शनात्, न तु यद्युत्पत्तिमान् आत्मा अभविष्यत्, न संसारापवर्गावुपपत्स्येतामित्यत्रात्मनि धर्मिणि साधनधर्म उत्पत्तिरस्ति [1]यद्दर्शनतः संस्कारोद्बोधे सति लिङ्गलिङ्गिसंबन्धस्मृतिर्भवेदित्यर्थः। न केवलं प्रसङ्गसाधनं साध्यधर्मिण्यसिद्धम्, अपि त्वन्यगतमेव[2] प्रसङ्गहेतुः। न त्वनुमानमन्यगताद् धर्मात् प्रवर्तते, तस्मादनुमानादस्य स्फुटो भेद इत्याह—**अनुमानं चेति**। भाष्यव्याख्यानं **सोऽयमिति** ॥४०॥

॥ परिशुद्धिः ॥

एवं न्यायस्वरूपप्रकरणं समर्थ्य तदुत्तराङ्गप्रकरणस्यावकाशः तत्रापीतिकर्तव्यतायत्तत्वात् फलस्येति[3] तर्कोऽवसरप्राप्त इति संगतिभाष्यमवतार्य पूरणेन तदर्थमाह—**उद्देशेति** ॥

**अभ्यनुज्ञातव्यो** नियतजिज्ञासाविषयीकर्तव्यः। **विपर्ययाशङ्केति**। तत्फलं जिज्ञासा ग्राह्या। उभयकोटिसमसंशयप्रभवसमजिज्ञासामपनीय[4] नियतविषयां जनयता तर्केण प्रमाणविषयोऽभ्यनुज्ञातो भवति। तेनायं **सूत्रार्थः**, प्रमाणाभ्यनुज्ञाव्यापारेण फलसिद्धौ व्याप्रियमाण ऊहस्तर्क इति। स चापादितसन्देहे सन्देहापन्ने च प्रवर्तत इति ज्ञापनार्थमविज्ञाततत्त्व इत्युक्तम्। **कारणोपपत्तिः** प्रमाणाभ्यनुज्ञा। तस्याश्च तर्कव्यापारभूतायाः स्वरूपमुक्तमिति नातिप्रसङ्गः। एवंव्यापारश्चोहः प्रसङ्ग इत्येवेति तथैव **टीकाकृता** उक्तम्। स चाहार्यहेतोरुत्पद्यत इति [5]ज्ञापनार्थं कारणोपपत्तित इति पदं तदर्थतयापि क्वचिद् व्याख्यातम्। तदस्य विषयोऽविज्ञाततत्त्वः। कारणमाहार्य-लिङ्गोत्थाप्यो व्यापारः प्रमाणाभ्यनुज्ञा। फलं प्रमाणपरतन्त्रस्य सतः फलवत्सन्निधावफलं तदङ्गमिति न्यायेन तत्त्वनिर्णयः। [6]स्वरूपमनिष्टप्रसङ्गः। स चात्माश्रयेतरेतराश्रयचक्रकानवस्थाप्रमाणबाधितार्थप्रसङ्गभेदेन पञ्चविधः। एते हि एकत्र भवन्तोऽन्यतरम् अभ्यनुजानन्ति। एतत्सर्वं प्रतिपिपादयिषोर्वाक्यलाघवेऽनादरः[7] **सूत्रकृतः**। अतएव **विवरणकाराणां** संकुलानीव वचांसीति तदत्र निपुणेन प्रतिपत्त्रा भवितव्यम्। तथा

---

१. यद्दर्शनं वा J २. °गत एव C ३. इति om AJ ४. प्रभवां जिज्ञा° M
५. ज्ञापनार्थं om JA ६. तस्य च स्व° *Sārasamgraha* p. 186 ७. अत्यादरः M

हि व्यापारव्यापारिणोरनिष्टापत्त्येत्यादिना भेदं व्युत्पाद्याभेदं विवक्षन्नाह—[1]तया प्रमाणस्योपपत्त्येति । तर्ककारणे कारणोपपत्तिपदं संचार्य तत्कार्यभूततर्कादभेदं विवक्षन्नाह— न चोपपत्तिरेवेति । प्रपञ्चितं चैतत् प्रथम सूत्र एव टीकाकृता इति कृतं प्रपञ्चेनेति ॥४०॥

॥ भाष्यम् ॥

एतस्मिंश्च तर्कविषये—

**विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥४१॥**

स्थापना साधनम्, प्रतिषेध उपालम्भः । तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ[2] व्यतिषक्तावनुबन्धेन प्रवर्त्तमानौ पक्षप्रतिपक्षावित्युच्येते । तयोरन्यतरस्य निवृत्तिः एकतरस्यावस्थानमवर्जनीयमवश्यम्भावित्वात्[3] । यस्यावस्थानं तस्यार्थावधारणं निर्णयः ॥

नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीति एको हि प्रतिज्ञातमर्थं तं[4] हेतुतः स्थापयति प्रतिषिद्धं चोद्धरति द्वितीयस्य । द्वितीयेन[5] स्थापनाहेतुश्च प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते । स निवर्त्तते । तस्य निवृत्तौ[6] योऽवतिष्ठते तेनार्थावधारणं निर्णयः[7] ॥

उभाभ्यामेवार्थावधारणमित्याह । कया युक्त्या ? एकस्य संभवो द्वितीयस्यासम्भवः । तावेतौ सम्भवासम्भवौ विमर्शं सह निवर्त्तयत उभयसम्भवे । उभयासम्भवे[8] त्वनिवृत्तो विमर्श इति । विमृश्येति विमर्शं कृत्वा । सोऽयं विमर्शः पक्षप्रतिपक्षाववद्योत्य न्यायं[9] प्रवर्तयतीत्युपादीयत इति । एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोधव्यम्[10] । यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः सम्भवतः तत्र समुच्चयः, हेतुतोऽर्थस्य तथाभावोपपत्तेः । यथा क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः संभवति तत् क्रियावत्, यस्य न संभवति तदक्रियमिति । एकधर्मिस्थयोश्च विरुद्धयोः धर्मयोरयुगपद्भाविनोः कालविकल्पः, यथा तदेव द्रव्यं क्रियायुक्तं क्रियावत्, अनुत्पन्नोपरतक्रियं पुनरक्रियमिति ॥

---

१. तथा Ṭīkā C २. °श्रितौ J ३. °स्थानमवश्यम्भावि CT ४. तम् om C J ५. °येन तु प्रतिवादिना J ६. तस्मिन् निवृत्ते J ७. °धारणमिति J ८. वाऽनिवृत्तो CT ९. न्यायं om J १०. धर्मयोर्वेदितव्यम् J

न चायं निर्णये नियमः विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं[1] निर्णय इति, किं तर्हि ? भवति खल्विन्द्रियार्थसन्निकर्षादुत्पन्नप्रत्यक्षेऽर्थावधारणं[2] निर्णय इति, परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं[3] निर्णयः । शास्त्रे वादे च विमर्शवर्जम् ॥ ४१ ॥

॥ इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथमाह्निकम् ॥

॥ वार्त्तिकम् ॥

एतस्मिंश्च तर्क विषये विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति सूत्रम् ॥ संबन्धोऽर्थश्च पूर्ववदिति । विमृश्येति विमर्शं कृत्वा । पक्षात् प्रतिपक्षाच्च पक्षप्रतिपक्षाभ्याम् । पक्षशब्देन पक्षविषयं साधनमुच्यते । प्रतिपक्षशब्देन[4] प्रतिपक्षविषयस्य साधनस्योपालम्भः । ताभ्यां साधनोपालम्भाभ्यां यदर्थावधारणं स निर्णय इति ॥

क्व पुनरयं नियमः ? किं तावन्निर्णये ? आहोस्वित् पक्षप्रतिपक्षाभ्याम् ? अथ विमृश्यैवेति ? यदि विमृश्य पक्षप्रतिपक्षाभ्यामेव निर्णय इति निर्णये नियमः, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्यस्य व्याघातः । एतेन विमृश्यैवेति प्रत्युक्तम् । अथ पक्षप्रतिपक्षाभ्यां निर्णय एव ? उभयाश्रयो निर्णयः प्राप्नोति । तर्कविषये नियमो नान्यत्र । योऽयं तर्कस्य विषयः, एतस्मिंश्च तर्कविषये विमृश्य पक्षप्रतिपक्षाभ्यामेव निर्णयो भवति । न पक्षप्रतिपक्षाभ्यां नियमो न निर्णये[5] विमृश्यैवेति सामान्यनिर्णयलक्षणमेतत् । कुतोऽयं नियमस्तर्कविषय इति ? तर्कस्यानन्तरोद्देशात् तर्कविषये नियमः । अन्यथापि च निर्णयस्य भावात् न निर्णयभाव इति । अथ निर्णयस्य किं लक्षणम् ? अर्थपरिच्छेदः अवधारणं निर्णय इति । सोऽयं निर्णयः प्रमाणविषये भवन्नेकशश्च प्रमाणैः क्रियते संहत्य च । तर्कविषये संहत्य, अन्यत्रैकशश्चेति । शास्त्रे वादे च विमर्शवर्जम् । वादे पक्षप्रतिपक्षाभ्यामेव । न शास्त्रे वादे वा विमर्शोऽस्ति उभयोर्निश्चितत्वात्, शास्त्राभ्युपगतपदार्थस्य निश्चितत्वाच्च ॥

पक्षप्रतिपक्षशब्देन[6] साधनोपालम्भयोर्ग्रहणमित्ययुक्तं प्रमाणाभावात् । पक्षप्रतिपक्षशब्देन साधनोपालम्भावुच्येते इति किं प्रमाणम् ? कस्मात् पुनर्यथाश्रुति न भवति ? पक्षप्रतिपक्षयोः कर्मत्वात् । न च कर्मार्थपरिच्छेदकं परिच्छेद्यत्वात् । तस्मात् पक्षप्रतिपक्षशब्देन परिच्छेदकयोः साधनोपालम्भयोर्ग्रहणम्, तयोरकर्मकत्वात् । तयोरेव कस्मात् न

१. ॰भ्यामेवार्था॰ J २. त्विन्द्रियार्थसन्निकर्षोत्पन्न॰ CT ३. ॰भ्यामेवार्था॰ J
४. पक्षविषयसा॰ J ५. ॰भ्यामेव निर्णयो C ६. ॰पक्षग्रहणेन J

ग्रहणम् ? एवमेव च वक्तव्यम्, विमृश्य साधनोपालम्भाभ्यामर्थावधारणं निर्णय इति । एवं स[१] सुविस्पष्टोऽर्थो भवति । न च लाघवकृतः कश्चिद् विशेष इति न एकविषयज्ञापनार्थत्वात् । यद्विषयौ साधनोपालम्भौ तद्विषयो निर्णयः । अन्यथा हि साधनोपालम्भाभ्यां निर्णय इत्युक्ते न ज्ञायते तत् क्व निर्णय[२] इति । पक्षप्रतिपक्षशब्दाभ्यां च साधनोपालम्भयोर्ग्रहणं तद्विषयस्य[३] चेति । अर्थग्रहणं तर्हि न कर्तव्यम्, गम्यमानत्वात् । केन ? विमृश्य पक्षप्रतिपक्षाभ्यामवधारणमित्युक्ते गम्यतेऽर्थस्येति । तस्मादर्थग्रहणं न कर्तव्यम् । न, न कर्तव्यम् । श्रुतिसामर्थ्यादन्यतरनिर्णयज्ञापनार्थं गम्यमानमप्यर्थग्रहणं यत् करोति, तेन ज्ञापयत्यन्यतरस्मिन् पक्षे निर्णय इति ॥

पक्षप्रतिपक्षाभ्यामर्थावधारणमित्ययुक्तम्, एकस्मादधिगतेः । नेदं पक्षप्रतिपक्षाभ्यां[४] संहताभ्यामवधारणम्, किं तर्हि ? एकस्माद् योऽवतिष्ठते इति । उभाभ्यामेवेत्याह कथमिति ? उभयनिवृत्तावनिवृत्तो विमर्शः, उभयावस्थाने चानिवृत्त इति । यदा त्वेकोऽवतिष्ठते एको निवर्तते, तदा निर्णय इति । अतः संहत्योभौ पक्षप्रतिपक्षौ निर्णयहेतू इति । एतस्मिन् विषये कदा निर्णयो भवति ? किं प्रथमे, उत द्वितीये, उत तृतीये इति ? सर्वत्र भवति अर्थस्य तथाभावात् । अथ वा तृतीय इति युक्तम् । कथमिति ? एकस्तावत् साधनेन पक्षमवस्थापयति, द्वितीयः साधनं बुद्ध्वा निवर्तते, साधनाभासं वा बुद्ध्वा साधनदोषोद्भिभावयिषया प्रवर्तते[५] । तं निवर्त्य साधनं ब्रवीति । प्रथम इदानीं[६] निश्चितं साधनमिति यदि बुद्ध्यते, न प्रवर्तते । अथ दूषणाभासमिति बुद्ध्यते, तत्त्वोद्भावनार्थं प्रवर्तते । तन्निवृत्त्या च द्वितीयपक्षसाधनमपि निवर्तते । किं कारणम् ? प्रथमपक्षसाधनस्य निर्दोषत्वात् । निर्दोषे च प्रथमपक्षसाधने न द्वितीयस्य अवकाश इति निवर्तते द्वितीयः पक्ष इति । योऽत्रावतिष्ठते तस्मिन्निर्णयः । स च[७] निर्णयः संभवासंभवाभ्यां पक्षप्रतिपक्षयोः संहत्य क्रियत इति ॥

निर्णयोऽनुमानमिति केचित् । केचिद् वर्णयन्ति निर्णयोऽनुमानमेव न पदार्थान्तरम् इति । न, लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वादनुमानस्य । निर्णये च तदभावः प्रमाणफलत्वात् । प्रमाणमनुमानम् । प्रमाणफलं तु निर्णयः । निर्णयः स्वविषय एव । अनुमानं तु स्वविषयेऽन्यत्र च । यथा धूमदर्शनं धूमपरिच्छेदे नानुमानमपि तु निर्णयः । यदा च परिच्छिनत्ति धूमेन तदानुमीयतेऽनेनेत्यनुमानम् । अग्निपरिच्छेदः फलम् ।

१. सति f r स C २. ज्ञायते क्व पुनर्नि° C ३. °भ्यां साधनोपालम्भयोर्यत् ग्रहणं विषयस्य J ४. कस्मा° सहिता° C ५. प्रवर्तते, तस्मिन् [तं ?] निवर्त्य C ६. निवृत्तं J ७. सोऽयं C

[1]यदि भावसाधनमाश्रित्योच्यतेऽनुमानं निर्णय इति तदाभ्यनुज्ञया वर्तितव्यम् । यदा तु करणसाधनमाश्रित्योच्यते अनुमानं निर्णय इति, तदा प्रतिषेधो वचनीयः, कार्यकारणयोर्भेदात् । कारणमनुमानं कार्यो निर्णयः । तस्मात् नानुमानं निर्णय इति ॥४१॥

॥ इति औद्द्योतकरे न्यायवार्त्तिके प्रथमाध्यायस्य प्रथमाह्निकम् ॥

॥ टीका ॥

नैतन्निर्णयमात्रस्य लक्षणम्, अपि तु परीक्षाप्रयोजनस्य । स च निर्णयभेदो[2] विमर्शानन्तरोत्पन्नतर्कसहायप्रमाणनिबन्धनस्तर्कविषय एवेति निर्णयभेदलक्षणमिति नाव्यापकं तत्र तल्लक्षणमिति दर्शयितुं **भाष्यकारो** निर्णयलक्षणमवतारयति—**एतस्मिंश्च तर्कविषये** ॥

**विमृ—यः** ॥४१॥ अत्र पक्षप्रतिपक्षयोः कर्मतया न निर्णयसाधनत्वमित्यनुपपत्त्या साधनोपालम्भौ वादसूत्रगतौ लक्षणीयाविति तावेव तावद् **भाष्यकृद्** विभजते—**स्थापना साधनम्, प्रतिषेधः** साधनस्य **उपालम्भः** । लक्षणानिबन्धनं संबन्धमाह—**तौ साधनोपालम्भाविति** । यद्यप्युपालम्भो न प्रतिपक्षाश्रितः, तथापि तदुद्देशेन प्रवृत्तस्तदाश्रित इत्युच्यते । मुख्यपदोपादानोल्लङ्घनेन[3] लाक्षणिकपदोपादानलभ्यं [4]प्रयोजनमाह—**व्यतिषक्ताविति** । अर्थग्रहणसामर्थ्यलभ्यमेकतरनिर्णयावसानत्वम् आह—**अनुबन्धेन प्रवर्तमानाविति** । एतच्च **वार्त्तिके** स्फुटीभविष्यति । तमेव साधनोपालम्भयोः परस्परानुबन्धं दर्शयति—**तयोरन्यतरस्येति** । यस्य साधनस्य वा उपालम्भस्य वावस्थानम्, तस्य साधनस्य वा उपालम्भस्य वा योऽर्थः पक्षः प्रतिपक्षो वा तस्यावधारणमित्यर्थः ॥

अत्र पक्षप्रतिपक्षप्रयोगाद् वादे संशयोऽस्तीति [5]वादभ्रान्त्या चोदयति—**नेदमिति** । **एक** इति वादी । **प्रतिज्ञातमर्थं हेतुतः स्थापयति** । **द्वितीयस्य** प्रतिवादिनः **प्रतिषिद्धं** प्रतिषेधं वाद्युक्तस्य हेतोर्दूषणमिति यावत् । **उद्धरति** दूषणाभासीकरोति । **द्वितीयेन तु प्रतिवादिना** वाद्युक्तस्य हेतोः स्थापनाहेतुत्वं प्रतिषिध्यते । **तस्यैव** वादिनः प्रतिवाद्युक्तदूषणप्रतिषेधहेतुश्च प्रतिवादिनैवोद्ध्रियते । स वादिनो वा प्रतिवादिनो वा हेतुर्वोपालम्भो वा[6] **निवर्तते** । तस्मिन् निवृत्ते **योऽवतिष्ठते**

---

१. यदा च C  २. निर्णयो C  ३. °दानातिल° J  ४. अर्थमाह J
५. वाद° om C  ६. हेतुश्चोपलम्भश्च C

एकः, तेनार्थनिर्णयः, न द्वाभ्याम्। तस्मादयुक्तं पक्षप्रतिपक्षाभ्यामिति। न तावत् संशयविषये निर्णये वादिप्रतिवादिनौ स्तः, तयोर्निश्चितयोरेव प्रवृत्तेः॥

अभ्युपेत्य [1]तु परिहरति—**उभाभ्यामिति**। वादिनः साधनस्य **संभवः** प्रतिवादिन उपालम्भस्य **असंभवः**। एवं प्रतिवादिनः साधनस्य संभवो वादिन उपालम्भस्यासंभव इति। **विमृश्येति विमर्शं कृत्वेति**। अनुपादेयोऽपि विमर्शः कार्यत्वात् कृतिव्याप्य उक्तः। विमृश्येतिपदोपादानस्य प्रयोजनमाह—**सोऽयमिति**। **अवधीत्य** नियमेन विषयीकृत्येत्यर्थः। एकधर्मिस्थयोरित्यस्य व्यतिरेकमाह—**यथा क्रियावदिति**। विरुद्धयोरित्यस्य कालभेदेन व्यतिरेकमाह—**एकधर्मिस्थयोश्चेति**। न निर्णयमात्रस्येदं लक्षणमपि तु परीक्षाविषयस्येत्याह—**न चायं निर्णय इति**। अर्थावधारणं निर्णय इत्येतावन्मात्रं लक्षणमिन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षे भवतीति योजना। हृदि व्यवस्थितमभ्युपगममुद्घाटयति—**शास्त्रे वादे चेति**। न हि ज्योतिष्टोमादीनां स्वर्गादिसंबन्धनिर्णये आगमेन कर्तव्ये विमर्शोऽस्ति, नापि वादजल्पवितण्डासु विमर्शः, निश्चितयोरेव [2]वादिप्रतिवादिनोस्तत्र प्रवृत्तेरित्यर्थः॥

**वार्त्तिकम्—संबन्धोऽर्थश्च पूर्ववत्**। संबन्ध उद्देशक्रमेण तर्कानन्तर्यलक्षणः। अर्थश्च प्रयोजनम्। समानासमानजातीयव्यावृत्तिरित्यर्थः। **शेषं भाष्यव्याख्यानेन** गतम्। ननु भवतु पक्षशब्दलक्षितस्य साधनस्य निर्णयं प्रति [3]करणत्वम्, प्रतिपक्षलक्षितस्य तु तद्दूषणस्य न साक्षात्साधकत्वमित्यत आह—**प्रतिपक्षाच्चेति** हेतुत्वं पारम्पर्येणेत्यर्थः। **पक्षप्रतिपक्षाभ्यामिति**। साधनदूषणाभ्यामित्यर्थः॥

लक्षणमाचिक्षिप्सुर्विकल्पयति—**क्व पुनरयमिति**। अत्र **पक्षप्रतिपक्षाभ्यामेवेति** प्रथमः कल्पः, तदा हि यत एवकारः[4] ततोऽन्यत्रावधारणमिति निर्णये नियमो भवेत्। **निर्णय एवेति** द्वितीयः कल्पः, तदा हि पक्षप्रतिपक्षाभ्यामित्यत्र नियमः। **विमृश्यैवेति** च तृतीयः, तदापि निर्णये नियमः। तत्र प्रथमं कल्पमाक्षिपति—**यदि विमृश्येति**। एतस्मिन् [5]विकल्पे निर्णयः पक्षप्रतिपक्षविमर्शातिलङ्घनेनान्यत्र न प्रवर्तेत इति प्रत्यक्षं प्रमाणं निर्णयफलं न स्यात्। न हि तत्र पक्षप्रतिपक्षौ, नापि विमर्श इति प्रत्यक्षलक्षणं बाध्यते[6] इत्यर्थः। तृतीयकल्पमाक्षिपति—**एतेनेति**। व्याघातेनेत्यर्थः। द्वितीये कल्पे दूषणमाह—**अथ पक्षेति**। तदा निर्णयस्यानियमात् पक्षप्रतिपक्षौ च

१. तु om C २. वादिप्रति° om C ३. कारणत्वम् C ४. °कारकरणं C
५. किल कल्पे C ६. बाधते J

तदभावश्चेति तदुभयम्, तदाश्रयः **निर्णयः प्राप्नोति**। तथा चाव्यापकं लक्षणम् इत्यर्थः। प्रथमं कल्पमालम्ब्य समाधत्ते——**तर्कविषय** इति। न निर्णयमात्रस्येदं लक्षणम्, अपि तु निर्णयविशेषस्येत्यर्थः। **न निर्णय** इति न निर्णयमात्र इत्यर्थः। **अथ निर्णयस्य किमिति** [1]निर्णयमात्रस्येत्यर्थः। **एकशश्च प्रमाणैरिति** प्रत्यक्षादिभिः। **संहत्य च प्रमाणैरिति** साधनदूषणसमाधानैरित्यर्थः। पक्षप्रतिपक्षाभ्यामेव वादे निर्णयो न तु विमर्शः। शास्त्रे तु निर्णय एव न तु तत्र[2] शास्त्रातिरिक्तं साधनान्तरमाश्रीयत इत्यर्थः॥

**पक्षप्रतिपक्षाभ्यामिति**। लक्षणायां हि येन [3]यत् लक्ष्यते तदवच्छेदकतया तदपि बुद्धौ सन्निधीयते। ततश्च तेन नियमो भवति लक्ष्यमाणस्य, यथा गङ्गायां घोष इति। गङ्गासंबन्ध्येव तीरं घोषेणान्वीयते, न त्वकूपारतीरमपीति। चोदयति——**अर्थेति**। परिहरति——**न नेति**। अर्थग्रहणे क्रियमाणे काल्पनिकत्वं प्रतिषिध्यते, न चाकल्पितं विरुद्धधर्मवदित्येकतरनिर्णयः। **नेदं पक्षप्रतिपक्षाभ्यामित्यादि** चोद्यभाष्यं व्याचष्टे—**पक्षप्रतिपक्षाभ्यामिति**। **उभाभ्यामित्यादि** परिहारभाष्यं व्याचष्टे—**उभाभ्यामेवेत्याहेति**। पृच्छति—**एतस्मिन्निति**, **प्रथमं** साधनम्, **द्वितीयं** दूषणम्, **तृतीयं** समाधानम्। उत्तरम्—**सर्वत्र**। कदाचित् प्रथमे कदाचिद् द्वितीये कदाचित् तृतीये इत्यर्थः। अवश्यं तु तृतीय इत्याह——**अथ वेति**। उभयत्र कल्पे प्रश्नः—**कथमिति**। उत्तरम्—**एकस्तावदिति**। [4]**तं निवर्त्य** वादिनः साधनं दूषणेन निवर्त्य प्रतिवादी स्वपक्षे **साधनं ब्रवीति**। **प्रथम** इति वादी॥

**निर्णयोऽनुमानमेवेति केचित्**। तथा हि तृतीयलिङ्गदर्शनं प्रत्यक्षफलं निर्णयः। तदेव चानुमानमतो निर्णयो नानुमानादतिरिच्यते इत्यर्थः। परिहरति—**न लिङ्गलिङ्गीति**। यदि निर्णयमात्रमनुमानमुच्येत, तदा न तस्य सर्वस्य लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वमिति। यदि तु लिङ्गपरामर्शो निर्णयः, तस्य चास्ति लिङ्गलिङ्गिसंबन्धापेक्षेति[5] तत्राह—**प्रमाणफलत्वात्**। सामान्यव्याप्तो विशेषः सामान्यनिवृत्त्या निवर्तते, शिंशपात्वमिव वृक्षत्वनिवृत्त्या[6]। न च फले प्रमितिरूपे निर्णये प्रमाकरणत्वं [7]फलत्वे नास्तीति नानुमानत्वं तद्विशेष इत्यर्थः। इतश्चानुमानात् निर्णयो भिद्यते इत्याह—**निर्णयः स्वविषय एवेति** न हि निर्णयो निर्णयत्वेन प्रतिपत्त्यनुबन्धिभूताद्[8] विषयादन्यत्र, अनुमानं तु तत्र [9]चान्यत्र

१. निर्णयसामान्यस्ये C २. तत्र om C ३. यत् om C ४. °तं निवर्त्य... प्रथम इति वादी only in J ५. °पेक्षित्वमिति C ६. °वृत्तौ °वृत्तौ C ७. फले C ८. °बन्धीभूताद् J ९. चान्यत्र om J

च। [1]यदानुमेयोऽग्निरेव हेयत्वादिभिः परिच्छिद्यतेऽग्निज्ञानेनानुमानेन, यदा तु धूमज्ञानेनाग्निरनुमीयते तदान्यत्र चेति[2] गमयितव्यम्। शेषमतिरोहितम् ॥४१॥

॥ इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां
प्रथमाध्यायस्य प्रथमाह्निकम् ॥

## ॥ परिशुद्धिः ॥

एवं साधनसम्पत्तौ दर्शितायां सोऽयं परिकरबन्धः किमवधिकः किंपरश्चेति जिज्ञासायां निर्णयोऽवसरप्राप्तः। तत्रार्थावधारणं निर्णय इति वक्तव्ये तर्कैकविषयताप्रतिपादनं भाष्यकृतः कोपयुज्यत इत्यत आह—**नैतदिति**। अव्याप्तिभियैवमुक्तम् इत्यर्थः ॥

मुख्यातिक्रमे बीजमाह—**अत्रेति**। यद्यपि [3]वादगतौ लक्षणीयाविति प्रकृतानुपयोगि, तथापि यदिह साधनोपालम्भशब्दौ विवृणोति, वादे च पक्षप्रतिपक्षशब्दौ विवरिष्यति, तेन जानीमोऽर्थसन्निधेः शब्दार्थसन्निधेः [4]सुप्रतिपदमिति मत्वा भाष्यकारस्य तद्गतलक्षणैवाभिमतेति हृदि निधाय तदनुरोधेनोक्तम्—**वादसूत्रगताविति**। **लक्षणानिबन्धनं** नियतं बन्धनं नियामकमित्यर्थः। ननु नायं कथानिर्णयो लक्ष्यते, तत्कुतो वादिप्रतिवाद्युपक्रमेण चोद्यमित्यत आह—**अत्रेति**। **वादेति** कथोपलक्षणम्। अथ कथानिर्णयलक्षणमेवेदं किं न स्यात्? येन चोद्यपरिहारावपि संगतौ स्यातामित्यत आह—**न तावदिति**। शङ्कायाः शङ्कितत्वात् न तथेत्यर्थः। कृतं तर्हि परिहारेणेत्यत आह—**अभ्युपेत्य त्विति**। अयमर्थः, यद्यपि परीक्षायां न वादिप्रतिवादिनौ स्तः, पृच्छोपक्रममात्रेण द्वितीयोपयोगात्, संभवेऽपि तयोर्विषयमात्राख्यानपर्यवसानात्, स्थेयस्यैव परीक्षकत्वम्, तथापि पूर्वपक्षोत्तरपक्षं प्रत्याकलितनिष्कर्षभेदेन चतुष्पादव्यवहारप्रदर्शनात्[6] फलतो न कश्चिद् विशेषः, एकवक्तृकत्वेऽपि तावत एव व्यापारकलापस्य विचारेऽपि विद्यमानत्वात्। तस्माद् यद्यप्यनिपुणश्चोदकस्तथापि चोद्यं सावकाशमेवेति यथाश्रुतमेव **अभ्युपेत्य परिहरतीति**। ननु [7]कथं शास्त्रे संशयानपेक्षो निर्णयो **मीमांसाया** वैयर्थ्यप्रसङ्गादित्यत आह—**नहीति**। शास्त्रमेव हि तत्र विचार्यते। तत्र च संशयो न प्रतिषिध्यते, तन्निर्णयस्य परीक्षासाध्यत्वात्। तदर्थनिर्णये तु शास्त्रेण

१. यथा C २. °त्रेति C ३. वादसूत्रगतौ M ४. सुप्रतिपादकर्मिति M ५. संशयांकित° M ६. प्रवर्धनात् J, प्रवर्तनात् M ७. कथं न M

कर्तव्ये कुतः संशयः ? शास्त्रार्थस्य सर्वथानुपलब्धचरतया संशयानास्पदत्वादित्यर्थः अथ कथानिर्णये संशयः किं न स्यात् ? कथमन्यथा चतुर्थे भाष्यकृद् एव वादस्य संशयव्युदासं फलं वक्ष्यतीत्यत आह—**निश्चितयोरेवेति** । वादात् पूर्वं सन्दिग्धावपि प्रवृत्तिकाले निश्चितावेवाभिमानात्, नान्यथा तयोः पक्षप्रतिपक्षपरिग्रहसंभव इति भावः । ननु भाष्यकारेण चोद्योपसंहारे योऽवतिष्ठते तेन निर्णय इति वदता ताभ्यामिति तृतीया दर्शिता । सा च पक्षाच्च प्रतिपक्षाच्चेति वदता वार्त्तिककृता अवधीरिता कया शङ्कयेत्यत आह—**नन्विति** । तत् किं वादसमानयोगक्षेमतया शास्त्रेऽपि पक्षप्रतिपक्षाभ्यामेव निर्णयः ? न चैतत् संभवतीत्यत आह **शास्त्रे तु निर्णय एवेति** । न विमर्शो नापि पक्षप्रतिपक्षावित्यर्थः । तदेवाह—**न त्विति** । यत् तदुक्तं वार्त्तिके स्फुटीभविष्यतीति, तदाह—**अर्थग्रहण इति** । ननु चतुःपञ्चादिकक्षापि क्वचित् कथा भवति, तत् कथं कक्षात्रये नियम इत्यत आह—**प्रथमं साधनमिति** । कक्षा-सहस्रमप्यत्रैवान्तर्भवतीति । अनन्तर्भावे त्वर्थान्तरत्वप्रसङ्गः । न हि साधनदूषणतदुद्धार-बहिर्भावः प्रकृतोपयोगीत्यर्थः ॥ ४१ ॥

॥ इत्यौदयन तात्पर्यपरिशुद्धौ प्रथमाध्याये प्रथमाह्निकम् ॥

॥ इति न्यायोत्तराङ्गप्रकरणम् ॥

## ॥ प्रथमाध्याये द्वितीयाह्निकम् ॥

## ॥ कथालक्षणप्रकरणम् ॥

### ॥ भाष्यम् ॥

तिस्रः कथा भवन्ति, वादो जल्पो वितण्डा चेति । तासाम्—

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात्, अस्त्यात्मा नास्त्यात्मेति । नानाधिकरणस्थौ विरुद्धावपि[1] न पक्षप्रतिपक्षौ; यथा नित्य आत्मा, अनित्या बुद्धिरिति । परिग्रहोऽभ्युपगमव्यवस्था । सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः । तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः । प्रमाणतर्कसाधनः प्रमाणतर्कोपालम्भश्च[2] । प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति । साधनं स्थापना । उपालम्भः प्रतिषेधः । तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च तावद्[3] यावदेको निवृत्त एकतरो व्यवस्थित इति । निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति ॥

जल्पे निग्रहस्थानविनियोगाद्वादे तत्प्रतिषेधः । तत्प्रतिषेधे च कस्यचिदभ्यनुज्ञानार्थं सिद्धान्ताविरुद्ध इति वचनम् । सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध[4] इति विरुद्धस्य[5] हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञा वादे । पञ्चावयवोपपन्न इति हीनमन्यतमेनाप्यवयवेन न्यूनम्[6] हेतूदाहरणाधिकमधिकम्[7] इति चैतयोरभ्यनुज्ञानार्थमिति ॥

अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम् । अन्यथोभावपि पक्षौ स्थापनाहेतुना प्रवृत्तौ वाद इति स्यात् । अन्तरेणापि चावयवसंबन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम्, तेनापि

---

१. अपि only in J २. प्रमाण°पालम्भश्च om C; च om T ३. तावत् only in J ४. न्या. सू. १. २. ६ ५. विरुद्धस्य only in J ६. न्या. सू. ५. २. १२ ७. न्या. सू. ५. २. १३

कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति[१] वचनाद्विनिग्रहो जल्प इति[२] मा विज्ञायि, छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्पः, प्रमाणतर्कसाधनोपालम्भो वाद एवेति स[३] मा विज्ञायीत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति ॥ १ ॥

॥ वार्तिकम् ॥

तिस्रः कथा भवन्ति—वादो जल्पो वितण्डेति। नायं कथानियमः, किं तु[४] विचारवस्तुनियमः। यद् वस्तु विचार्यते तत् त्रेधा विचार्यते। तत्र विचारः—वादो जल्पो वितण्डा च[५]। तत्र गुर्वादिभिः सह वादः। विजिगीषुणा जल्पवितण्डे। तत्र यथोद्देशं लक्षणापदेश इति वादस्य लक्षणमुच्यते। तत्र प्रमाणतर्कसाधनोपालम्भो वाद इत्यादि सूत्रम् ॥१॥

तत्र वादः पक्षप्रतिपक्षपरिग्रहः कौ पुनरेतौ पक्षप्रतिपक्षौ? वस्तुधर्मावेकाधिकरणौ विरुद्धावेककालावनवसितौ वस्तुधर्माविति। वस्तुविशेषौ वस्तुनः सामान्येनाधिगतत्वात् विशेषतोऽनधिगतत्वाच्च विशेषावगमनिमित्तो विचारः, तस्माद् वस्तुधर्मौ [६]तद्विशेषौ एकाधिकरणाविति। नानाधिकरणौ तु[७] विचारं न प्रयोजयतः, उभयोः [८]प्रमाणेनोपपत्तेः। तद् यथा अनित्या बुद्धिर्नित्य आत्मेति। अविरुद्धावप्येवमेव[९]। यौ विरुद्धौ तौ विचारं प्रयोजयतो नाविरुद्धाविति। तद् यथा क्रियावद् द्रव्यं गुणवच्चेति। एककालाविति भिन्नकालयोर्न विचारप्रयोजकत्वं [१०]प्रमाणेनोपपत्तेः। यथा क्रियावद् द्रव्यं निष्क्रियं चेति कालभेदेनेति[११]। अनवसिताविति—अनिश्चितौ विचारं प्रयोजयतो नावसिताविति, निर्णयोत्तरकालं विचाराभावात्। तावेतौ विरुद्धावेवंविशेषणौ धर्मौ पक्षप्रतिपक्षौ। तयोः परिग्रहः इत्थंभावनियमः, एवंधर्मायं धर्मी नैवंधर्मेति। सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः। अस्य च[१२] कथामार्गत्रयेऽपि समानत्वात् विशेषणार्थं प्रमाणतर्कसाधनोपालम्भ इति। प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति। अस्मिन् भवतीति[१३]। अस्मिन्निति सप्तमीनिर्देशो विषयज्ञापनार्थः। अस्मिन्—विचारे ॥

कथं पुनस्तर्केण साधनमुपालम्भश्च[१४] अप्रमाणात्मकत्वात्, प्रमाणानुग्राहकत्वात्[१५]।

---

१. न्या. सू. १.२.२ २. जल्प इति om J ३. स only in J ४. किं तर्हि ? C ५. °ण्डेति C ६. तत् om C ७. तु om C ८. प्रमाणोप° C ९. एव om C १०. प्रमाणोप° C ११. °दे सति C १२. च om J १३. अस्मिन्……इति om J १४. अप्रमाणत्वात् C १५. प्रमाणा° त्वात् om J

न प्रमाणसंगृहीतस्तर्को न प्रमाणान्तरमित्युक्तम्[1] । सोऽयमप्रमाणात्मकः सन् कथं सिद्ध्युपालब्ध्योः[2] कारणं भविष्यति ? न ब्रूमः तर्कः सिद्ध्युपालब्ध्योः कारणम्, अपि तु प्रमाणविषयविवेचनात् तर्कः प्रमाणान्यनुगृह्णाति । तर्कविविक्तं विषयं प्रमाणानि प्रवर्तमानानि परिच्छिन्दन्ति । सोऽयं प्रमाणानामनुग्राहकत्वात् प्रमाणसहितो वादेऽपदिष्ट इति । साधनमुपालम्भश्चास्मिन् भवतीति, किं तावत्, सिद्धिः साधनमुपालम्भनमुपालम्भः । अथ साध्यतेऽनेनेति साधनम्, उपालभ्यते अनेनेति उपालम्भः ? यदि तावद्[3] भावसाधनौ साधनोपालम्भशब्दौ, तदा प्रमाणैस्तर्केण च न युक्तौ प्रमाणानां तर्कस्य च पराप्रतिपादकत्वात् । प्रमाणान्यात्मप्रतिपत्तिसाधनानि, परप्रतिपादनार्थश्चायं विचारः । तस्मात् न प्रमाणैस्तर्केण च सिद्ध्युपालब्धी भवतः । अथ करणसाधनौ[4], तथापि पञ्चावयवोपपन्न इति पृथग् न पठितव्यम् । किं कारणम् ? प्रमाणतर्कसाधनोपालम्भ इति करणसाधनेन पदेनावयवार्थस्योक्तत्वात् । न, अन्यार्थत्वात् पञ्चावयवोपपन्न इत्यस्यान्योऽर्थः । तथा च वक्ष्यामः ॥

[5]अथैतौ साधनोपालम्भशब्दौ[6] भावसाधनौ किंविषयौ प्रमाणैस्तर्केण च क्रियेते ? ननूक्तं पक्षप्रतिपक्षविषयाविति । पक्षविषयं साधनम्, प्रतिपक्षविषय उपालम्भ इति । सत्यमुक्तम्, न पुनर्युक्तम्[7] । का पुनर्युक्तिहानिरत्र ? उपालम्भस्य प्रतिपक्षाविषयत्वात् प्रमाणतर्कसाधना सिद्धिः पक्षस्य भवतु, न पुनरुपालम्भस्य प्रतिपक्षो विषयः । न ब्रूमः प्रतिपक्षविषय उपालम्भ इति, किं तु साधनविषयः । प्रतिपक्षस्य यत् साधनं तद्विषय उपालम्भ इति । कथं पुनः प्रतिपक्षसन्निधावपदिश्यमान[8] उपालम्भशब्दः प्रतिपक्षव्यतिरेकेण साधनेन संबध्यते, सामर्थ्याद् असामर्थ्याच्च । यदुपालम्भयोग्यं तदुपालभ्यते, न च प्रतिपक्ष उपालम्भयोग्यः । कथमिति ? उपालभ्यमानस्यानुपालभ्यमानस्य च वस्तुनस्तथाभावात् । [9]यथाभूतं च वस्तूपालभ्यमानं तथाभूतमेवानुपालभ्यमानम् । साधनेऽपि तर्हि तुल्यम् । साधनमपि करणम्, तदपि स्वरूपं न कदाचित् जहाति । तस्मात् साधनस्याप्युपालम्भो न युक्तः ॥

एवमेतत् नोपालम्भः करणे कर्मणि च[10], कर्मकरणयोः[11] स्वविषये सामर्थ्यात् । सर्वं कर्म स्वविषये समर्थम्, करणमप्येवम् । तस्य तु विषयान्तरे न सामर्थ्यमस्ति । यच्च [12]विषयान्तरेऽसमर्थं न तेन कर्मणः करणस्य वा वैगुण्यम् । कस्य तर्ह्ययमुपालम्भः ?

१. पृ: ४.१५ २. °द्ध्युपालम्भयोः C ३. तावद् om J ४. °साधनः J ५. अथैतो K ६. °लम्भौ J ७. °क्तमुक्तम् C ८. °वुप° C ९. तथाभूतमेव C १०. न कर्मणि C ११. कर्मणः C १२. तद्विष° J

[1]योऽयं निगृह्यते । कश्च निगृह्यते ? पुरुषः । अप्रतिपत्तिविप्रतिपत्ती पुरुषस्य, न कर्मणो न करणस्य । सोऽयं प्रतिपादयिता असमर्थयोः कर्मकरणयोरुपादानात् निगृह्यते । प्रतिपत्तापि यथाभिहितपदार्थाप्रतिपत्त्या विप्रतिपत्त्या चेति[2] । सोऽयं पुरुषधर्मो वचनद्वारेणोद्भाव्यत इति वचन उपचर्य पुरुषधर्मं वचनमुपालभ्यत इति । कथं पुनरयमर्थः सूत्रपदेषु[3] लभ्यते ? लभ्यत इत्याह । कथम् ? प्रमाणतर्कसाधनः [4]पक्षः प्रमाणैस्तर्केण च साधनस्योपालम्भः प्रमाणतर्कसाधनश्च प्रमाणतर्कसाधनोपालम्भश्च प्रमाणतर्कसाधनोपालम्भः । एकस्य साधनशब्दस्य गम्यमानार्थत्वात्[5] लोपः, यथोष्ट्रमुखी कन्येति ॥

अथ प्रमाणतर्कसाधनोपालम्भ इत्यनेन पदेन जल्पवितण्डाभ्यां कथं वादो विशिष्यते ? नन्विदं पक्षप्रतिपक्षपरिग्रहवत् त्रयाणामपि समानं भवति । न समानम्, वादे प्रमाणतर्कसाधनोपालम्भस्य नियमात्[6] प्रमाणतर्कसाधनोपालम्भ एव वादः, छलजातिनिग्रहस्थानसाधनोपालम्भे जल्पवितण्डे । यथा विषाणित्वं गवि गवये च समानमपि संवृतकण्ठतया सास्नादिमत्तया च विशिष्यमाणमुभौ गोगवयौ विशिनष्टि, तथा प्रमाकतर्कसाधनोपालम्भ इति ॥

छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानाद् वादे निग्रहस्थानप्रतिषेधो विशेषविधानात् । ततश्च [7]नोपालम्भो वाद इति । प्रमाणतर्कसाधनोपालम्भ इत्यभिधानाद् वादेऽपि निग्रहस्थानानीत्यदोषः । उपालम्भश्रवणात्[8] समस्तनिग्रहस्थानप्रसक्तेः[9] संज्ञाभेदमात्रम् । यद्युपालम्भग्रहणात् वादेऽपि[10] निग्रहस्थानानि विद्यन्त इति मन्यसे, ननु संज्ञाभेदमात्रम् । जल्पाद् वादस्य न विशेषः । तत्रापि निग्रहस्थानानीहापीति । न, उत्तरयोः [11]पदयोर्नियमार्थत्वात् । यस्मादेवोपालम्भशब्देन समस्तानि निग्रहस्थानानि लभ्यन्ते, अत एव नियमार्थे उत्तरे पदे आरभ्येते सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्च । सिद्धान्ताविरुद्ध इत्यनेन किल पदेन विरुद्धो हेत्वाभासो लभ्यते । तन्न, अन्यतोऽधिगतेः । अन्यत एवायं लभ्यते । पञ्चावयवोपपन्न इति पञ्चग्रहणात् न्यूनाधिके लभ्येते । अवयवग्रहणात् तदाभासा लभ्यन्ते इति लभ्यमानस्यार्थस्य पुनरभिधानेन सूत्रकारेण पिष्टं[12] पिष्टं स्यात् । तस्मात् नायमर्थः । अथ किमिदं पदं सिद्धान्ताविरुद्ध इत्यनर्थकमेव ? नानर्थकम्, अपसिद्धान्तावरोधार्थत्वात्[13]

---

१. अयम् om C २. विप्र° चेति om C ३. °पदेन C ४. पक्षः om C ५. अर्थ° om J ६. नियतत्वात् C ७. अनुपा° C ८. ग्रह° C ९. °प्रसक्तौ C १०. अपि only in J ११. पदयो only in J १२. °धाने पिष्टं C १३. °रोधात् C

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः[१] ॥

इति । सोऽनेनावरुध्यते । तस्मात् नानर्थकम् । कस्मात् पुनरयं नियमो वादेऽवयवाभासा[२] अपसिद्धान्तश्च निग्रहस्थानमिति । गुर्वादिभिः सह वादोपदेशात् नियमः । यस्मादयं तत्त्वबुभूत्सुर्गुर्वादिभिः सह त्रिविधं फलमाकांक्षन् वादं करोति ततोऽस्य तत्त्वबुभूत्सावतस्तावत् साधनं वक्तव्यम् यावदनेन ज्ञातमिति[३], अप्रतिद्वन्द्वित्वात् । प्रतिद्वन्द्विना च सह न वादः, किं तु जल्पः, तत्र समस्तनिग्रहस्थानप्रयोग इति युक्तम् । प्रमाणतर्कसाधनोपालम्भ इत्यभिधानात् उभयोः सिद्धयसिद्धिप्रसङ्गः । यदि प्रमाणतर्कसाधनोपालम्भो वाद उभयोर्वादिप्रतिवादिनोः प्रमाणतर्कसाधनोपालम्भाभिधानेऽधिकार इत्युभयमतसिद्धयसिद्धिप्रसङ्गः[४] । नैष दोषः, अप्रतिज्ञानात् । नेदं प्रतिज्ञायते उभयोर्वादिनोः प्रमाणानि सन्तीति अपि[५] तु ताभ्यां साधनं वक्तव्यमित्येतन्नियम्यते[६] । न पुनः साधनमेवैतद् भवतीति दूषणमप्येवम् ॥

अपरे तु स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति वादलक्षणं वर्णयन्ति । अत्र च पक्षविशेषणार्थमुपात्तयोः स्वपरशब्दयोरनुपपत्तिर्विकल्पानुपपत्तेः समासासंभवाच्च । एतौ खलु स्वपरशब्दौ परिग्रहवर्जनार्थौ वा स्याताम् ? साधनीयदूषणीयार्थौ वा ? पूर्वोत्तरपक्षार्थव्यवस्थापकौ वा ? पक्षप्रतिपक्षावद्योतकौ वा ? प्रथमद्वितीयपक्षाभिधायकौ वा ? एकस्य वानेकविशेषणाभिसंबन्धिनोऽनेकशब्दाभिधानमिति ॥

तत्र परिग्रहपरिवर्जनार्थता तावदनुपपन्ना, किमोऽर्थासंभवात् । न हि[७] परिग्रहार्थतायां किमोऽर्थः संभवति, कस्यायं स्वो भविष्यति, कश्च स्वार्थ इति स्वीकरणं परिग्रहार्थः । यः स्वीकरोति[८], तस्य स्व इति । एतदेव चिन्त्यते किं तत् स्वीकरणम् इति । ममेति प्रत्ययोत्पत्तिकारणभावाभावौ स्वपरशब्दार्थः । निर्दिष्टः स्वार्थो न पुनरस्य स्वम्[९] । न हि शास्त्रकारस्य स्वः परो वा संभवति यदर्थमिदं स्यात् । यच्च यस्य स्वं भवति तत् तस्य [१०]सिद्ध्यर्थं कश्चिदुपकारं करोति, न पुनः स्वामिनः पक्षेण कश्चिदुपकारः क्रियते । तस्मात् परिग्रहवर्जनार्थौ तावत् स्वपरशब्दौ न भवतः ॥

साधनीयदूषणीयार्थौ स्वपरशब्दाविति चेत् ? अथापीदं स्यात् साधनीयः स्वपक्षो दूषणीयः परपक्ष इति, अहो शब्दार्थकौशलम् । साधनीयः साध्यः स्यात् । साधनीयः स्वपक्ष इति कुत एतत् ? लक्षणं चैतत् पक्षस्य, साधयितुमिष्टः पक्ष इति । साधनीय-

१. न्या. सू. ५.२.२३ २. °भासो C ३. ज्ञातव्यमप्र° C ४. पक्ष for मत C
५. तूभाभ्यां C ६. इति om C ७. हि om C ८. यस्य स्वीकारो भवति C
९. स्वार्थः C; नरस्य स्वम् Cvar. १०. सिद्धयर्थं J

शब्देनापि तदेवोच्यते । व्यवच्छेदार्थं चेदमुच्यते स्वपक्षः परपक्ष इति । परपक्षाचायं स्वशब्देन [1]व्यवच्छिद्यमानो न [2]समानमर्थं शक्नोति वक्तुम् । व्यर्थं वा विशेषणम् । सामान्यशब्दा अपि विशेषे वर्तन्ते इति दृष्टमेतत् । न ते सामान्यशब्दा ये विशेषेषु वर्तन्त इति । किं तु प्रकरणादिभेदानुविधायिनो विशेषशब्दा एव ते[3] । अपि च साधनीयः पक्षः स्वपक्षः, दूषणीयः पक्षः परपक्षः इत्येतदपि न बुध्यामहे । साधनस्य[4] पक्षविषयत्वात् साधनीयः पक्षः स्वो[5] भवतु, दूषणं तु न किञ्चित्[6] परपक्षेण संबध्यते, परपक्षस्य तादवस्थ्याद् । अथ दूषणस्य को विषयः ? कस्यचित् स्थापना विषय इति किञ्चिद् दूषणं स्थावनया संबध्यते किञ्चित्[7] स्वपरपक्षाभ्यामसंबद्धमेव । कतमत्[8] पुनर्दूषणं स्थापनया संबध्यते ? का चेयं स्थापनेति ? स्थापना नाम पञ्चावयवं पक्षसाधकं वाक्यम् । वाक्यदोषो दूषणम् । तद् वाक्यं न्यूनं चाधिकं[9] च भवति, अवयवाभासोपपन्नं च । तदुद्भावनं दूषणम् । एतत् स्थापनया संबध्यते, तद्विषयत्वात् । शेषं तु दूषणं न स्थापनया न स्वपरपक्षाभ्यां संबद्धम् उत्तरदोष आक्षेपभावाश्चेति । सत्यम्, न साक्षात् पक्षस्य दूषणेनाभिसंबन्धः, स्थापनानिवृत्तिद्वारेण तु प्रवर्तमानं दूषणं न पक्षं निवर्तयति[10] स्थापनानिवृत्तेः परपक्षं दूषयतीत्युच्यते उपचरितशब्दप्रयोगो लक्षणेऽनुपपन्नः, लक्षणस्य तत्त्वविषयत्वात् । तत्त्वव्यवच्छेदकं लक्षणम् । न पुनरुपचरितशब्दप्रयोगेण व्यवस्थास्ति । यदि पारम्पर्येण प्रवृत्त्या प्रवर्त्तमानं दूषणं परपक्षं निवर्तयति, तदैव युक्तं कर्तुं [11]परपक्षासिद्ध्यर्थं वचनं वाद इति । एवमभिधीयमाने किं भविष्यति ? लघु च सूत्रं भवतीत्युभयोश्च साधनदूषणयोः पारम्पर्येण परपक्षासिद्ध्यर्थतेति । अत्र माभूदुभयत्र पारम्पर्यमिति स्वरूपत एवं सूत्रं[12] वक्तव्यम्, पक्षस्थापनयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति । एवं हि विस्पष्टता लक्षणस्य, यथाविषयं चापि संबन्ध इति । स्थापनयापि न सर्वं दूषणं संबध्यत इति दोषतादवस्थ्यम् । न दोषतादवस्थ्यं कस्यचित् संभवात् । किञ्चिद् दूषणं स्थापनया संबध्यत इत्युक्तम्[13] । सामान्याभिधानेऽपि सामर्थ्यात् नियमः । तस्मात् इदमप्यनुपपन्नं साधनीयदूषणीयार्थौ स्वपरशब्दाविति ॥

स्वपरशब्दौ पूर्वोत्तरपक्षार्थौ भविष्यत इति यदुक्तं भवति[15] पूर्वपक्षोत्तरपक्षाविति

---

१. व्यवच्छेद्य° C २. समानार्थं C J ३. ते om C ४. साधनीयशब्दस्य C ५. स्वो om J ६. कदाचित् C ७. स्थापनया° किञ्चित् only in J ८. पुनः om C ९. च om C १०. न° निवर्तयति om J ११. °पक्षसि° C १२. सूत्रम् om C १३. उक्तम् om C १४. अपि om C १५. पूर्वोत्तर° C

तदुक्तं भवति स्वपरपक्षाविति । न युक्तमेतदपीति, साधनदूषणयोर्नियमाभ्युपगमात्

**ते साधनदूषणैः**

इत्येतस्मिन् सूत्रे साधनदूषणयोर्नियमाभिधानम्, स्वपक्षे साधनं परपक्षेदूषणमिति । एतस्मिंश्च नियमे उत्तरपक्षविषयं दूषणं प्राप्नोति । तेनोत्तरपक्षवादी स्वमेव पक्षं दूषयतीति प्राप्तम्[1] । स्वपक्षश्चोत्तरपक्षवादिनः पूर्वपक्षादन्य इति स्वपरशब्दाभ्यां च[2] पूर्वोत्तरपक्षयोरभिधानमिति न पदार्थो न परिभाषा न च[3] रूढिः ॥

एतेन पक्षप्रतिपक्षार्थता प्रथमद्वितीयपक्षार्थता च व्याख्याता ॥

एक एवायं पक्ष इति विशेषणद्वययोगात् साध्यतया दूष्यतया च विशेष्यमाणः स्वपरपक्षशब्दवाच्य इति । युक्तमेतत् । द्विवचनं तु न युक्तम्, एकस्यानेकविशेषणयोगो न प्रतिषिध्यते । द्विवचनं तु न भवतीति ब्रूमः । न ह्येकस्यानेकविशेषणाभिसंबन्धे सति द्विवचनबहुवचने भवतः । न हि देवदत्तं छत्रदण्डाभ्यां संबद्धं समुपलभ्य वक्तारो भवन्ति छत्रिदण्डिनावागताविति । तदेवं विकल्पानुपपत्तेः स्वपरशब्दानुपपत्तिः ॥

समासासंभवाच्च । स्वपरपक्ष इति समासपदमेतत् । तत्र तावत् विशेषणविशेष्यस्वरूपानवधृतेर्न[4] षष्ठीसमासः । यत्र खलु[5] षष्ठी समस्यते तत्र विशेषणं विशेष्यात् पृथगवधार्यते, यथा राजपुरुष इति । भेदाच्च । यत्र च विशेषणविशेष्यभावो भवति, तत्र भेदो दृष्टो राजपुरुषवदेव । असत्यपि भेदे दृष्ट इति चेत्[6] ? असत्यपि भेदे दृष्टः षष्ठीसमासः तद् यथा सेनापतिः पानकाङ्गमिति । तच्च न, अनभ्युपगमात् । को हि[7] स्वस्थात्मा पानकमङ्गेभ्यो नार्थान्तरं प्रतिपद्यते, सेनां च सैनिकेभ्य इति । यथा च सेनादीन्यर्थान्तरभूतानि तथोक्तं गुणगुविवाद इति । अथ मन्यसे स्वार्थः स्वशब्दस्यार्थः, साधनीयार्थश्च[8] पक्षशब्दस्येति ? तन्न, अपोदितत्वात् । यथा स्वार्थवाचकः स्वशब्दो[9] न भवति तथोक्तम् । तस्मात् न षष्ठीसमासः । एतेन कर्मधारयः प्रत्युक्तः, स्वश्चासौ पक्षश्चेति विशेषणस्वरूपासिद्धेर्भेदाभावाच्च । एतेन बहुव्रीहिरपि प्रत्युक्तः, साधयितृविषयं च साधनं प्राप्नोति । अतो न बहुव्रीहिः । ननु च साधनीयार्थता स्वार्थः पक्षविशेषणत्वेन संभवति ? न संभवति, पर्यायत्वात् । साधनीयः पक्ष इति पर्याय एव । न च पर्यायशब्दैः समानाधिकरणो बहुव्रीहिर्वा संभवति । न हि भवति

---

१. °तो नोत्तरपक्षं बाधयतीति प्राप्तम् Kvar　२. च om C　३. च om J
४. °नवगतेर्न C　५. पुनः C　६. असत्यपि° चेत् om J　७. सुस्थात्मा पानकशब्दार्थं° C
८. °योऽर्थश्च C　९. स्व° om C

वृक्षतरु छिनत्तीति । विरोधाच्च । यदि तावदयं पक्षशब्दः स्वपक्षाद् भिद्यते,

परपक्षवचनं प्रतिज्ञा

इति व्याघातः । किं कारणम् ? प्रतिज्ञायाः स्वपक्षविषयत्वात् । अथाभिन्नः, तथापीदं न प्राप्नोति

स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः

इति । न चान्यः समासः संभवति । न चेदं वाक्यम् । तस्मात् स्वपरपक्षयोरिति असारमेतत्[1] ॥

आस्तां तावत् स्वपरशब्दार्थो विशेषणविशेष्यभावश्च स्वपरशब्दयोः । अथ समासः कस्मात् न क्रियते स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वाद इति ? किमेवं कृते भविष्यति ? स एवार्थो लाघवं च ॥

अत्र केचित् परिहारं ब्रुवते, यदि किल समासः क्रियते, उभयाश्रिते सिद्ध्यसिद्धी प्राप्नुतः[2] । न, दोषतादवस्थ्यात् । नायं दोषोऽसमासकरणेन परिह्रियते, कथमिति ? स्वपक्षसिद्ध्यसिद्ध्यर्थं [3]वचनम्, परपक्षस्य च सिद्ध्यसिद्ध्यर्थं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थमिति । न, असामर्थ्यात् । न ह्ययं समासः समर्थः स्वपक्षस्य परपक्षस्य च सिद्ध्यसिद्ध्यर्थमिति । कस्मात् ? व्याहतत्वात् । यदि सिद्ध्यर्थं यतते असिद्ध्यर्थमिति व्याघातः । यद्यसिद्ध्यर्थं यतते सिद्ध्यर्थमिति व्याघातः । यच्चसामर्थ्यात् न समासः । समासेऽपि तर्ह्यसामर्थ्यात् नोभयपक्षसिद्ध्यसिद्धिप्रसङ्गः ॥

एकवचनबहुवचनप्रसङ्ग इति अन्ये । यदि किल समासः क्रियेत समासोऽनभिव्यक्तवचनभेदः, तस्माद् वचनभेदव्यक्तिनिमित्तमसमासः[4] । कथं नाम ? स्वपरपक्षयोरेव[5] सिद्ध्यसिद्ध्यर्थं वचनं वादः स्यात्, न स्वपरपक्षाणां न स्वपरपक्षस्येति । न, असंभवात् । एकस्य तावत् सिद्ध्यसिद्ध्यर्थं वचनं नैवास्ति । स्वपरपक्षाणां[6] साधनम् अनुमानमेकमिति कथाप्येषा नास्ति । अतोऽस्थाने आशङ्का ॥

अनित्यः समासविधिरिति अपरे । अपरे [7]पुनः समासविधेरनित्यतां वर्णयन्त एवमाहुः, नायमवश्यं विधिः सर्वत्र समास इति । क्वचित् समासो भवति,[8] क्वचिच्च वाक्यम्[9] । यथा राज्ञः पुरुषः राजपुरुष इति[10] । [11]यदि उभयप्राप्तिः, असमासः

---

१. एतत् om C २. भवतः C ३. वचनम् om J ४. °क्तोऽस° C ५. एव om C ६. साधनमेकानु° J ७. पुनः om C ८. भवति om C ९. क्वचिदसमासो J १०. इति च समास C ११. उभयप्राप्तौ J

कस्मात्? अनित्यः समासविधिरित्येवं ब्रुवतैतदुक्तं भवति प्राप्तमुभयम्, अथोभयप्राप्तौ कस्मादसमास इति? समासः कस्मादित्यनिवृत्तोऽनुयोगः। नानिवृत्तो लाघवार्थत्वात्। समासे लाघवम्, असमासे गौरवम्। [1]अर्थगत्यर्थं च शब्दानामुपादानमिति गुर्वभिधाने प्रयोजनं वाच्यम्। वर्णे गुरुलाघवानभ्युपगम इति चेत्—नायं परिहारोऽनुयोगस्यानिवृत्तेः। [2]वर्णे गुरुलाघवानुयोगं न प्रतिपद्यामहे इति चेत्[3]—न निवर्ततेऽनुयोगः। कस्मादिति। शास्त्रत्वेन च वादविधानमभ्युपगम्यते, न च वर्णे गुरुलाघवमाश्रीयते इति न युक्तम्॥

सिद्ध्यसिद्ध्यर्थमित्येतदपि न युक्तम्[4]। कस्मात्? द्वेधानुपपत्तेः। अयं खलु सिद्धिशब्दः कल्प्यमानो द्वेधा कल्प्येत व्यक्तावुत्पत्तौ वा। तत्र तावदुत्पत्तौ युज्यते, प्रतिज्ञादिकस्य साधनस्य साधनभावहानिप्रसङ्गात्। न हि प्रतिज्ञादिसाधनेन वस्तूत्पाद्यते, किं तु विद्यमानप्रकाशकत्वं साधनार्थः। स हीयते। सिद्धावुत्पत्तौ कल्पितायामिति व्यक्ताविति चेत्—न, अधिकरणाधारत्वात्। अथ मन्यसे सिद्धिर्व्यक्तिः नोत्पत्तिः? युक्तमेतत्, उत्तरं तु व्याहतं भवति, अधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति। ये चैते अधिकरण प्रत्यायनलक्षणे सिद्ध्यसिद्धी, ते अधिकरणे वर्तमाने कथं पक्षस्य भवत इति षष्ठ्यर्थो वाच्यः। नायं दुर्वचस्तद्विषयत्वात्। तयोः सिद्ध्यसिद्ध्योः पक्षो विषयः, अतस्तद्विषयत्वात् तस्येति। न युक्तमेतत्। ये ते सिद्ध्यसिद्धी पक्षविषये, ते किं तावत् पक्षे सिद्धे उतासिद्धे? यदि तावत् सिद्धे, नाधिकरणप्रत्यायनं सिद्धिः। किं तर्हि? यतस्तत्प्रत्यायनं सा सिद्धिः। कुतश्च तद्भवति? अर्थस्य तथाभावात्, यस्मात् सोऽर्थस्तथा भवति[5]। कथं तथा भवति[6]? यथा प्रमाणैरुपसंपन्न[7] इति। यत् तत् प्रमाणाविसंवादित्वम्[8], स तथाभावः। अथासिद्धे पक्षेऽधिकरणप्रत्यायनं भवति? साधनप्रयोगात् प्रागधिकरणप्रत्यायनं भवतीति[9] वादवैयर्थ्यं स्यात्। पक्षस्य सिद्धिः अधिकरणप्रत्यायनं भवतु[10], असिद्धिस्तु कथम्? न हि परपक्षासिद्धिर्दूषणेन क्रियत इत्युक्तम्। स्थापनानिवृत्तेरुपचार इति चेत्—स्यान्मतिः दूषणं प्रयुज्यमानं साक्षात् स्थापनां निवर्तयति। स्थापनानिवृत्तेस्तु परपक्षनिवृत्तिरुपचर्यते इति। न, प्रयोजनाभावात्। न हि प्रयोजनमन्तरेण[11] मुख्यार्थव्यतिक्रमो लभ्यते, अपि तु प्रमाणासंभवेनोपचारो मञ्चाः

---

१. अनुग॰ C　२. वर्णगुरुलाघवं J　३. चेत् om J　४. ॰मिति चायुक्तम् J
५. भवति om J　६. भवति om J　७. अभिसंबद्ध C　८. यत्प्रमाणैः C　९. अस्तीति C
१०. भवतु om C　११. व्यतिक्रमेण J

क्रोशन्तीति यथा । लोकप्रयुक्तशब्दविषयश्चोपचारः[1] लोकगत्या शब्दार्थः । न चेदं लौकिकं वाक्यं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः ॥

अपरे तु प्रतिज्ञातार्थज्ञापनं पक्षस्यासिद्धिं वर्णयन्ति । [2]तद् यद्यधिकरणविषयम्, न निवर्तते प्रसङ्गः । कथम् ? पक्षस्यासिद्धिरिति सिद्धिवत् प्रसङ्गः । तस्मात् सिद्ध्यसिद्धी पक्षधर्माविव, यत एतद् भवति सिद्धः पक्षोऽसिद्धश्चेति । एवं सति द्रष्टृस्थे सिद्ध्यसिद्धी[3] इति व्याघातः । यदि सिद्ध्यसिद्धी पक्षधर्मौ द्रष्टृस्थे सिद्ध्यसिद्धी इति व्याहतं भवति । अथ मा भूद् व्याघात इति द्रष्टृस्थे एव ते ? तथापि पक्षस्य व्यक्त्यव्यक्ती सिद्ध्यसिद्धी इति व्याहतं भवति[4] । अथ तथातथाते पदार्थस्य सिद्ध्यसिद्धी ? तथाप्यधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति व्याहतं भवति । के पुनरेते व्यक्त्यव्यक्ती ? वस्तुधर्मावभिधानप्रत्ययहेतू, यत [5]एतावभिधानप्रत्ययौ व्यक्तोऽव्यक्तश्चेति भवतः, ते व्यक्त्यव्यक्ती इति ॥

अर्थशब्दानुपपत्तिर्विकल्पानुपपत्तेः । अर्थशब्दः खलु प्रवर्तमानस्त्रेधा प्रवर्तते, उद्देशप्रयोजनाभिधेयविषयत्वेन[6] । उद्देशे तावदर्थशब्दो, यथा ब्राह्मणार्थं भक्तमिति । एवं च[7] चतुर्विधवाक्यासंग्रहः । प्रयोजनेऽर्थशब्दः, किमर्थमागतोऽसीति । अभिधेय अर्थशब्दो यथा गौरित्यभिधानस्य कोऽर्थः इति । तत्र तावदुद्देशे संभवति, युक्तायुक्तत्वेन[8] विशेषितत्वात् । स्वपक्षस्य युक्तत्वेन परपक्षस्यायुक्तत्वेनेत्येवं विशेषिते कुत उद्देशेऽर्थशब्दः[9] ? न ह्ययं युक्तायुक्तत्वशब्दो[10] दूषणाभासे साधनाभासे वा संभवतीति साधनयोगो युक्तता, दूषणयोगोऽयुक्ततेति । अथ पुनः पदार्थस्य तथात्वातथात्वे युक्तायुक्तत्वे, युक्तत्वं तथाभावोऽयुक्तत्वमतथाभाव इति ? तथापि [11]तयोः कर्मतया उपादानात् युक्तत्वेनाधिकरणप्रत्यायनमयुक्तत्वेन चेति[12] व्याघातः । न हि प्रत्याय्यं प्रत्यायनं संभवतीति । अथ प्रयोजनेऽर्थशब्दः, तथापि साधनदूषणाभासवादिनोऽवादिता प्राप्नोति[13] । किं कारणम् ? साधनदूषणाभासयोः सिद्ध्यसिद्ध्यप्रयोजनत्वात् । न हि साधनदूषणाभासयोः सिद्ध्यसिद्धी प्रयोजनम् । एवं च तद्वादी [14]न वादी स्यात् । तथा चावादी निगृह्यत इति दोषः । अथाभिधेयेऽर्थशब्दः[15], अभिधानस्वभावानवधृतेः ? न[16] युक्तमेतदपि, न हि ग्रन्थकारभाष्यकाराभ्यां विशेषितमेवंप्रकारमभिधानं सिद्ध्य-

१. °शब्दार्थवत् C २. तद् व्यधि° Cvar ३. सिद्ध्यसिद्धी om J, Cvar ४. भवति om J ५. एव ताव° C ६. °भिधेयभेदविष° J ७. च om C ८. त्वेनेति C ९. उद्देशशब्दार्थः C १०. °युक्तशब्दो C ११. उभयोः C १२. वेति C १३. स्यात् C १४. अवादी C १५. °शब्दप्रयोगः C १६. °धृतेरित्य° C

सिद्ध्योर्वाचकमिति । ननु च[1] विशेषितम्, येन सिद्ध्यसिद्धी अभिधीयेते तत् तयोर्वाचकमिति । सत्यमुक्तम्[2] । एवं तु सिद्ध्यसिद्धी इत्येतेऽभिधाने वादः प्राप्तः । न चान्यः अर्थशब्दस्य विषयः[3] । तस्मादर्थशब्दोऽप्ययुक्तः ॥

सिद्ध्यसिद्ध्यर्थं वचनं वाद इति ब्रुवाणेन न पूर्वोत्तरमवलोकितम् । नैयायिकहेतुप्रतिषेधेन विशेष्यं वचनमित्यभ्युपगतम्[5] । इदं पुनः सूत्रं समस्तं वचनविशेषणार्थमिति व्याघातः । तदेवमेतानि सूत्रपदानि विचार्यमाणानि स्वतन्त्रव्याघातकानीति लोकं च बाधन्त इति[6] ॥

एवं तावत् सौत्राणि पदानि स्वेन न्यायेनासंबद्धानि । यथा च वृत्तिपदानि असंबद्धानि तथेदमुच्यते । स्वस्य पक्षस्येति स्वार्थासिद्धेरयुक्तम्, स्वार्थश्च प्रतिषिद्धः । अतोऽयुक्तं स्वस्य पक्षस्येति । यदपि षष्ठीसप्तमीद्विवचनयोस्तुल्यरूपत्वात् षष्ठ्यर्थज्ञापनार्थं स्वस्य पक्षस्येति, तदप्ययुक्तम्, अधिकरणार्थासंभवात् । न हि पक्षव्यतिरेकेण पक्षे किञ्चित् साध्यं संभवति । तस्मादयुक्तः[7] सप्तम्यर्थः । तदप्रसक्तौ विशेषणानर्थक्यमिति ॥

युक्तायुक्तत्वानुपपत्तिश्च विकल्पानुपपत्तेः । युक्तायुक्तत्वे खलु साधनदूषणे वा स्याताम्, साधनदूषणाभ्यां वा योगः, पदार्थस्य वा तथातातथात इति । तत्र तावत् साधनदूषणे युक्तायुक्तत्वे । कस्मात् ? साधनदूषणयोः पृथगभिधानात् ।

ते साधतदूषणैः

इत्यत्र पृथगुक्ते साधनदूषणे, युक्तायुक्तशब्दाभ्यां च साधनदूषणयोरभिधानमिति ।

ते साधनदूषणैः

इति सूत्रम्[8] अनुच्चार्यं चरितार्थत्वादिति । अथ मन्यसे तयोरेव युक्तायुक्तयोर्विशेषणार्थं

ते साधनदूषणैः

इति ? न, प्रथमाभिधानप्रसङ्गात् । यदि युक्तायुक्तत्वविशेषणार्थं

ते साधनदूषणैः

इति सूत्रम्, प्रथमैव न्याय्या, ते साधनदूषणानीति । न हि विशेषणविशेष्यभावे भवति नीलमुत्पलैरिति । योग इति चेत् ? अथ साधनदूषणाभ्यां योगो युक्तायुक्तत्वे इत्येवं चेन्मन्यसे ? तन्न, अनिर्देशात् । न साधनदूषणाभ्यां योगो निर्दिष्ट एवंविध इति ।

---

१. च om C २. सत्ययुक्तम् J ३. शब्दस्यार्थ इति C ४. पूर्वमुत्तरं वानालोचितम् C ५. ०गमसिद्धम् C ६. स्वतन्त्रघातीनि J ७. ०दप्रसक्तः C ८. उद्वार्यं J ; उच्चार्यं Cvar

अनिर्देशादयुक्तमेतत् । साधनेन योग इति च कदा भवति, यदासौ निर्णितः पदार्थः, तदा च न साधनस्यार्थः कश्चिदस्तीति न युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति व्याघातः[१] । अतो न युक्तो[२] योगः । अथ पदार्थस्य तथात्वातथात्वे युक्तायुक्तत्वे ? तदपि न करणार्थासंभवात् । ये तथात्वातथात्वलक्षणे युक्तायुक्तत्वे, ते व्यवच्छेद्ये, न[३] व्यवच्छेदस्य साधने । तस्मात् करणार्थो नास्ति । अतो युक्तायुक्तत्वस्येति युक्तं वक्तुमिति ॥

अधिकरणप्रत्यायनमिति च न युक्तम्[४] । शास्त्रसंबंधासंगतत्वात् । शास्त्रसंबन्धं कुर्वाणेनोक्तं सन्देहविपर्ययप्रतिषेधार्थः शास्त्रस्यारम्भ इति । एतन्निरपेक्षेणेदमभिधीयते[५] अधिकरणप्रत्यायनं सिद्धसिद्धी इति । न च प्राश्निकेषु संशयविपर्ययौ स्तः परिच्छेदकत्वात् । तस्मात् न प्राश्निकाः प्रत्याय्या इति । [६]यच्चोक्तं प्राश्निकप्रत्यायनादेव [७]प्रतिवादिप्रत्यायनं कृतं भविष्यतीति[८], किं कारणम् ? [९]तत्प्रत्यायनात् प्रतिवादिप्रत्यायनम् । प्रतिवादी किल स्वपक्षरागात् सन्तमप्यर्थं न प्रतिपद्यते । [१०]सन्तमर्थं न प्रतिपद्यते चेति व्याहतमुच्यते । कथं चान्यथा प्रतिपन्नः सन्नित्यभिधीयते ? अथ प्रतिपद्यमानोऽपि परस्य न कामकारं ददाति, तथापि न प्रतिपद्यत इति व्याहतम्[११] । यच्च प्राश्निकप्रत्यायनात् तत्प्रत्यायनमिति, तदपि न, प्रतीतेः कारणभेदात् । प्राश्निकप्रतीतेरन्यानि कारणानि, अन्यानि प्रतिवादिप्रतीतेरिति । न चान्यविषयस्य करणस्यान्यत्र क्रियेति । नियमाभावाच्च । न चायं नियमः, प्राश्निकप्रत्यायनार्थं एव वादः । प्राश्निकानन्तरेणापि गुर्वादिभिः सह वादो दृष्ट इति । यदा तु नायं तत्त्वबुभुत्सुः लाभपूजाख्यातिकामो वादमारभते, तदा प्राश्निकैः प्रयोजनमस्तीति । सत्यमस्ति प्रयोजनम् । वादस्तु न भवतीति । न, त्रैविध्यानभ्युपगमात् । एक एवायं कथामार्गः । तस्य प्रयोजनं तत्त्वावबोधो लाभादयश्च । न, प्रतिषेधात् । प्रतिसिद्धः स्तुतिमानलाभलिप्सोर्वादः । यदपीदमुच्यते, न त्रैविध्यानभ्युपगमादिति, नानभ्युपगमायत्तः पदार्थसद्भावः, अपि तु सद्भावे सत्यभ्युपगम इति । यथा च त्रैविध्यं कथामार्गस्य तथा लक्षणभेदात् । वादात् जल्पवितण्डयोर्भेदमुपदर्शयिष्यामः[१२] । तस्मादज्ञात्वा विशेषमुच्यते त्रैविध्यानभ्युपगमादिति ॥

यच्चोक्तं पक्षसिद्धिविषयं प्रत्यायनं पक्षसिद्धिशब्देनोपचरितम् , यथा शून्यताविषयः समाधिः शून्यतेति । न कामत उपचारो लभ्यते, अपि तु प्रमाणासंभवेन । लोक-

१. व्याघातात् C २. युक्तः om J ३. न तु J ४. चायुक्तम् J ५. तन्नि॰ ॰दमुच्यते C ६. यच्चोक्तं om J ७. प्रति॰ om C ८. तत्प्रत्यायनाद्वादिप्रत्यायनं भविष्तीति added C ९. तत्प्र॰ प्रत्यायनम् only in J १०. सन्तमप्यर्थं न प्रतिपद्यते इति C ११. व्याहतमुच्यते C १२. उपपादयि॰ C द्र. वा. १.२.२

प्रयुक्तशब्दान्वाख्यानमुपचारः । उक्तं च नोपचरितशब्दप्रयोगो लक्षणे उपपन्न इति । तदर्थं वचनमित्येतदपि किल चतुर्विधवाक्यज्ञापनार्थमुक्तम् साधनं साधनाभासो दूषणं दूषणाभासश्च संभन्त्स्यत[1] इति । तदयुक्तम्, युक्तायुक्तत्वेनेति विशेषितत्वात् । एवं विशेषिते एतस्मिन् कुतश्चतुर्विधवाक्यसंग्रह इति ? अधिकरणं पुनर्यो वादिप्रतिवादिभ्याम् अधिकृत इत्यत्राधिकरणार्थो[2] वक्तव्यः । न हि वादे प्राश्निकाधारं किञ्चिदस्तीति । प्रत्यायनाधारत्वादधिकरणमिति चेत् ? नोक्तोत्तरत्वात् । उक्तोत्तरमेतत्, पक्षविषयं प्रत्यायनं न प्राश्निकविषयमिति । तस्मिन् सति भावादिति चेत्—न, अन्यथापि दर्शनात् । अन्यथापि गुर्वादिभिः सह दृष्टो वाद इति । तद् वादे परीक्षा का कस्य क्वेति वक्तव्यम् । साधनदूषणप्रयोगः पक्षस्थापनाविषयो वादः । तस्य परीक्षा साधनदूषणतदाभासपरिज्ञानम् । तदर्थमधिकारः,[3] तस्मिन्निति सप्तम्यर्थो नास्ति । यदपि प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि [4]वादप्रसङ्ग इति चोद्यं कृत्वा प्रतिसमाधानमुक्तम्[5], तत्सिद्ध्यसिद्धिभ्यां साक्षात् पारम्पर्येणासंबन्धात् युक्तायुक्तविशेषणाच्चासंबद्धमुत्तरेण त्वसङ्गतपदार्थाभिधायिनो दत्तः स्वहस्तः, पूर्वापरयोरसंबन्धादिति । यदि त्वसंगतस्याप्युत्तरं वाच्यं तत एवं वक्तव्यम्, न सूत्रार्थापरिज्ञानादिति । तदेतत् सूत्रं विचार्यमाणं सहवार्त्तिकं न युक्त्या संगच्छत इति यथान्यायमेवास्तु ॥१॥

॥ टीका ॥

नितान्तदक्षिणश्लक्ष्णधियो गृह्णन्त्वमत्सराः ।
वाचस्पतिगिरामर्थतत्त्वानि विबुधा इव ॥

उद्देशक्रमप्राप्तं [6]वादलक्षणपरं सूत्रम् अवतारयितुं **भाष्यम्—तिस्रः कथा भवन्तीति** । तदयुक्तम्, बृहत्कथादीनां तिसृषु कथासु अनन्तर्भावात् । न च सामान्यलक्षणाभिधानमन्तरेण [7]विशेषलक्षणावसरोऽस्ति, वादादयश्च कथाविशेषा इत्यत आह **वार्त्तिककारः—तिस्रः कथा भवन्तीति** । नायं कथामात्रनियमो येन बृहत्कथादीनाम् अकथात्वं स्यात्, अपि तु यन्नानाप्रवक्तृके विचारे वसति तद् विचारवस्तु । विचारविषया[8] वाक्यसंदृब्धिः[9] कथेति यावत् । तस्याः कथाया[10] एष नियमः तिस्र एवेति । तथा च नानाप्रवक्तृकविचारविषया वाक्यसंदृब्धिः कथेति सामान्यलक्षणं

१. संपत्स्यते C २. अत्र om C ३. अधिकार उभयोः C ४. वाद° om J
५. कृत्वा° उक्तम् om J ६. °लक्षणसूत्रं C ७. °तारोऽस्ति K ८. विचार[वस्तु]विषया C
९. वाक्यसंदृब्धिः om J १०. तस्यां कथायां C

पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितमित्येतदप्यर्थादुक्तं भवतीति द्रष्टव्यम्। **यद् वस्तु विचार्यते** इत्यर्थाभिधानमात्रम्, न तु विचारवस्त्वित्यस्य विवरणम्। वादादिष्वधिकारिणः पुरुषानाह—**तत्र गुर्वादिभिरिति**। वादलक्षणस्यानन्तर्ये हेतुमाह—**तत्र यथोद्देशमिति** ॥

**सूत्रमिति**। सामान्यलक्षणमप्यनेन सूच्यत इत्युक्तं भवति। **एकाधिकरणस्थावित्यादि** भाष्यं प्रश्नपूर्वकं व्याचष्टे—**काविति**। वस्तुधर्माविति विभजते—**वस्तुधर्माविती** ति। धर्मशब्दो विशेषे। तदनवसायाद् वस्तुनः सामान्यतोऽवसाय उक्तो भवति। तदिदमाह—**वस्तुनः सामान्येनेति**। अविरुद्धावप्येवं न विचारं प्रयोजयत इत्यर्थः। प्रमाणतर्कसाधनोपालम्भपदस्य तात्पर्यमाह—**अस्येति**। अनेन **तस्य विशेषणम् इत्यादि** भाष्यं व्याख्यातम्। यद्यपि वितण्डायामपि पक्षप्रतिपक्षपरिग्रहोऽस्ति, तथापि प्रतिपक्षसाधनं नास्ति तस्याः [१]स्थापनाहीनत्वात्। यद्यपि च जल्पेऽपि [२]पक्षप्रतिपक्षसाधनमस्ति, तथापि न प्रमाणमूलैरवयवैस्तर्केण च साधनोपालम्भाविति जल्पवितण्डभ्यां प्रमाणतर्कसाधनोपालम्भग्रहणेन व्यवच्छेदः। यथा चैतत् तथोपरिष्टादुपपादयिष्यते ॥

आक्षिपति—**कथं पुनस्तर्केणेति**। समाधत्ते—**न ब्रूम** इति। तर्कस्येतिकर्त्तव्यतारूपस्य प्रमाणानुग्राहकतया प्रमाणमूला अवयवास्तर्कमूला अपि भवन्ति। तथा च तर्कस्यापि साधनोपालम्भहेतुभावः सिद्धो भवतीत्यर्थः। विकल्प्याक्षिपति—**साधनम् उपालम्भश्चास्मिन्निति**। परं प्रति हि सिद्ध्युपालब्धी विवक्षिते। न च ते प्रमाणतर्काभ्याम्, तयोः स्वप्रतिपत्तिहेतुत्वात्। **अवयवार्थस्य** अवयवशब्दार्थस्येत्यर्थः। उभयथाभिमतत्वेऽपि करणसाधनपक्षं [३]कक्षीकृत्य तावत् समाधत्ते—**न, अन्यार्थत्वादिति**। अन्यप्रयोजनत्वादित्यर्थः। यदा तु भावसाधनौ तदा पृच्छति—**अथैताविति**। विप्रतिपन्नस्य प्रश्नः। न प्रतिपक्षविषय उपालम्भो नापि तत्साधनविषयः, तयोर्वस्तुनोः स्वकारणादुत्पन्नयोः सदा तद्रूपत्वेन पुरुषधर्मोपालम्भानास्पदत्वादित्याक्षेपार्थः। **समाधत्ते—एवमेतदिति**। धर्मी धर्मविशिष्टः पक्षः प्रतिपक्षो वा कर्म, तस्य विषयः। तस्य धर्मिणो वास्तवं तादृशत्वमतादृशत्वं वा करणस्य तु कर्मैव विषयः। तत्र च[४] कर्मकरणे समर्थे एव, नासमर्थे। अन्यविषये तु पुरुषस्ते नियुञ्जानोऽसमर्थीकरोतीति। सोऽयं पुरुषस्यापराधो न कर्मकरणयोः। यथा आकाशे निशातमसिं व्यापारयतः पुरुषस्यापराधो नाकाशस्य शब्दे समर्थस्य, असेर्वा निशातस्य दारुणि समर्थस्य।

---

१. साधनहीन° C २. पक्ष° om J ३. कुक्षी°C ४. च om C

तस्मादौपचारिकः साधनस्योपालम्भो न मुख्यः। मुख्यस्तु पुरुषस्यैव। वचनद्वारेण तूद्भाव्यते पुरुषस्येति। **वचन** उपचर्यते न तु पक्षे पक्षद्वारेणानुद्भावनादिति सिद्धम्। यथायमर्थः सूत्रपदेभ्यो लभ्यते तथा प्रश्नपूर्वकं दर्शयति—**कथं पुनरिति**॥

यदुक्तं प्रमाणतर्कसाधनोपालम्भग्रहणं वादस्य जल्पवितण्डाभ्यां विशेषणार्थमिति, तत्र प्रकारं पृच्छति—**अथेति**। प्रष्टैवाह—**नन्विदमपीति**। उत्तरम्—**न समानमिति**। नियममाह—**प्रमाणतर्कसाधनोपालम्भ एव वादः**। एवकारेण छलादिसाधनोपालम्भत्वं वादस्य व्यवच्छिद्यते, तथा च जल्पवितण्डाभ्यां व्यवच्छेदः। एतदुक्तं भवति, तर्कानुगृहीतप्रमाणमूला अवयवाः परमार्थतो भवन्तु मा भूवन्, वादिप्रतिवादिनोस्त्वभिप्रायो [1]भवतु प्रमाणमूला अवयवा इति। एतावतैव प्रमाणतर्कसाधनोपालम्भता वादस्य वीतरागकथात्वेन तत्त्वनिर्णयावसानत्वात्। जल्पवितण्डयोस्त्वप्रमाणमूलत्वं विदुषापि प्रतिवादिना छलादिभिः प्रत्यवस्थेयम्, एकान्तपराजयाद् वरं संशयोऽस्त्वितीच्छता विजिगीषुणा। यथा चास्य शास्त्रे व्युत्पादनं नासदृशं यथा चैष सतामाचारः, तथा जल्पलक्षणे वक्ष्यामः[2]॥

**जल्पे निग्रहस्थानविनियोगाद्** इत्यादि भाष्यम्। तदनुपपन्नम्। उपालम्भग्रहणादेव वादेऽपि निग्रहस्थानस्य लब्धत्वादित्यत आह **वार्तिककारः—छलजातीति**। असत्युपालम्भग्रहण इत्यभिप्रायः[3]। चोदयति—**समस्तेति**। यद्युपालम्भग्रहणस्य निग्रहस्थानविधानं प्रयोजनम्, हन्त भो न जल्पाद् वादस्य विशेषः, कृतं चोत्तराभ्यां पदाभ्यामित्यर्थः। परिहरति—**नोत्तरयोरिति**। **नियमः** परिसंख्या। तदनेन **कस्यचिदभ्यनुज्ञानार्थमिति** भाष्यं व्याख्यातम्। **सिद्धान्ताविरुद्ध** इत्यत्र भाष्यव्याख्यानमुपन्यस्य दूषयति—**सिद्धान्ताविरुद्ध इत्यनेन किलेति**। भाष्यमते दूषिते पृष्ट्वा स्वमतेन व्याचष्टे—**अथ किमिदं पदमिति**। पृच्छति—**कस्मात् पुनरिति**। उत्तरम्—**गुर्वादिभिरिति**। न खल्वप्रतिभाद्युद्भावना तत्वप्रतिपत्तावुपयुज्यते, अधिकं तु न यद्यपि तत्त्वप्रतिपत्तिं साक्षाद् व्याहन्ति, तथापि तत्प्रयोजनानुसरणे परः प्रतिपत्ता समाकुलितबुद्धिर्न तत्त्वं प्रतिपत्तुमर्हतीत्यधिकस्यापि तत्त्वप्रतिपत्तिविघातहेतुत्वमिति। **तत्त्वबुभुत्सुरिति** जिगीषुतां निराकरोति, न हि [4]**गुर्वादिषु** जिगीषासंभवः, **त्रिविधं फलमिति**। अनधिगततत्त्वावबोधः संशयनिवृत्तिरध्यवसिताभ्यनुज्ञानमिति फलानि त्रीणि। प्रतिद्वन्द्विनि तु न वादः, अपि तु जल्पवितण्डे। चोद-

---

१. भवति C  २. वा. १.२.२  ३. इत्यर्थः C  ४. °दिभिर्जि° C

यति—**प्रमाणतर्केति**। पारमार्थिकात् तर्कसहितात् प्रमाणादेकस्मिन् विषये साधनोपालम्भयोः संभवे विरुद्धधर्मसमालिङ्गितमेकदा वस्तु प्रसज्यत इत्यर्थः। परिहरति—**नैष दोष** इति। वादेऽभिप्रायो नियम्यते वादिप्रतिवादिनोः प्रामाणिकधिया साधनोपालम्भौ ताभ्यां प्रयोक्तव्यौ, नाप्रामाणिकधिया जल्पवितण्डयोरिव। न पुनर्वस्तु नियम्यत इति। तथा च वादे [१]अबुद्धिपूर्वं छलादिप्रयोगे तदुद्भावनमपि संभवति, तावदेव चोद्भाव्यं यावत्यनुद्भाविते तत्त्वप्रतिपत्तिव्याघातः, यस्मिंस्त्वनुद्भावितेऽपि न तत्त्वप्रतिपत्तेर्व्याघातः, [२]तत्प्रयुक्तमपि नोद्भावनीयम्। एतच्च पञ्चमेऽध्याये निपुणतरमुपपादयिष्यते॥

साधनोक्तं प्रकारं दूषणेऽप्यतिदिशति—**दूषणमप्येवम्**। पूर्वस्मिन् प्रयोजने स्थिते **भाष्यकारः** प्रयोजनान्तरमन्वाचिनोति—**अवयवेष्विति**। न हि पञ्चावयवोपपन्नत्वं[३] प्रमाणं च तदनुग्राहकं च तर्कमन्तरेण भवतीति पञ्चावयवोपपन्नत्वादेव प्रमाणतर्कप्रतिलम्भे साधनोपालम्भयोर्व्यतिषङ्गज्ञापनायावश्यं साधनोपालम्भग्रहणं तावत् कर्तव्यम्, अन्यथैकः [४]स्वस्थानस्थित एव शब्दस्यानित्यत्वं प्रति पञ्चावयवोपपन्नं वाक्यं प्रयुङ्क्ते, अपरोऽपि तादृशः शब्दनित्यतां प्रति तादृशमेव वाक्यं प्रयुङ्क्ते इति सोऽपि वादः प्रसज्येत। साधनोपालम्भविशेषणाय च प्रमाणतर्कग्रहणं [५]कृतमिति भावः। प्रयोजनान्तरम् अन्वाचिनोति—**अन्तरेणापि चेति** वादः पञ्चावयवोपपन्न इत्येकः कल्पः। प्रमाणतर्कसाधनोपालम्भ इति च द्वितीय इत्यर्थः। प्रयोजनान्तरमन्वाचिनोति—**छलजातीति। विनिग्रहो जल्पो मा विज्ञायि।** वादगतनिग्रहस्थानरहितो[६] मा विज्ञायित्यर्थः। तद्विज्ञाने कीदृशोऽर्थो भवतीत्यत आह—**छलजातिनिग्रहस्थानेति**। वादगतो निग्रहो न जल्पे, जल्पगतश्च निग्रहो न वाद इति स मा विज्ञायि। इष्यते हि वादगतोऽपि[७] निग्रहो जल्पे। सोऽयमिष्टोऽर्थो ग्रन्थाधिक्यात् प्रमाणतर्कग्रहणात् लभ्यत इत्यर्थः॥

तदेवं स्वाभिमतं वादलक्षणं व्याख्याय [८]वासुबन्धवं लक्षणं दूषयितुमुपन्यस्यति—**अपरे त्विति** स्वपक्षस्य सिद्धिः परपक्षस्य चासिद्धिः, तदर्थं वचनं वाद इत्यर्थः। दूषयति—**अत्र चेति**। प्रथमं हेतुं विभजते—**एताविति**। पूर्वः पक्षोऽयुक्तः, पक्ष उत्तरस्तु युक्त इत्यर्थः। एकस्य वा शब्दस्य धर्मिणोऽनेकनित्यानित्यविशेषणाभि-

१. बुद्धिपूर्वम् C २. तत्र प्र° C ३. °पपन्नं C ४. सुस्थान° C ५. कर्तव्यमिति C ६. निग्रहरहितो J ७. अपि om C ८. सौबन्धवं C var

संबन्धिनः पुरुषाभिसन्धिभेदात् अनेकशब्दाभिधानम्, स्वपरशब्दाभिधानमित्यर्थः । **एतदेव चिन्त्यते किं तत्स्वीकरणमिति** । न तावद् भूमिधनादिष्विव स्वोचितासु अर्थक्रियासु यथेष्टविनियोगयोग्यत्वं स्वत्वमर्जनापादितमनित्यत्वादिना प्रतिज्ञाते शब्दादौ संभवतीत्यर्थः । चोदयति—**ममेति** प्रत्ययोत्पत्तिकारणत्त्वं स्वत्वम्, अकारणत्वम् अस्वत्वमिति । दूषयति—**निर्दिष्ट** इति । यथेष्टविनियोगयोग्यत्वमेव ममेति प्रत्यय-कारणत्वम्[1], नान्यत् । न चैतन्नित्यत्वादिना प्रतिज्ञाते शब्देऽस्ति शास्त्रकारस्येत्यर्थः । अपि चोपकारकत्वेन व्याप्तं सत्वं गोघटादिषु तथा दर्शनात्, पक्षात् निवर्तमानमुपकार-कत्वं स्वत्वमपि स्वव्याप्यं निवर्तयति वृक्षत्वमिव शिंशपात्वमित्याह—**यच्च यस्येति** । द्वितीयं कल्पम् आशङ्कते—**साधनीयेति** । निराकरोति—**अहो शब्दार्थेति** । विशेष्यपदात् अनतिरिक्तार्थं विशेषणपदमित्यर्थः । अपि चेदं विशेषणपदं[2] विशेष्यं सामान्यतः प्रसृतं विशेषेऽवस्थापयति न वा ? अवस्थापयतीति चेत् ? न साधनीयमात्रार्थता[3] स्वपक्ष-शब्दस्य, न चेद् विशेषणं व्यर्थमित्याह—**व्यवच्छेदार्थं चेदमिति** । ननु च विशेष्य-शब्दो विशेषणयोगात् विशेषे वर्तमानोऽपि सामान्यशब्द एव, ततश्च शक्नोति समानमर्थं वक्तुमिति चोदयति—**सामान्यशब्दा अपीति** । परिहरति—**न ते सामान्यशब्दा** इति । **अपि च साधनीयः पक्ष इति** । विरुद्धोपदर्शनेन स्फुटा प्रतीतिर्भवतीति अयुक्तप्रतिपादनार्थं युक्तस्याप्युपन्यास इति । यदि न पक्षेण दूषणं संबध्यते कस्तर्हि तस्य विषय इति शङ्कते—**अथ दूषणस्येति** । उत्तरम्—**कस्यचिदिति** । **उत्तरदोषः** जात्युद्भावनम् । आक्षिप्यन्त इत्याक्षेपाः । के ते भावाः ? अप्रतिभाविक्षेपादयः । **नैते** स्वपरपक्षाभ्यां संबध्यन्ते नापि स्थापनयेति । चोदयति—**सत्यमिति** । परिहरति—**उपचरितेति** ।

नर्ते प्रयोजनादिष्टं मुख्यशब्दार्थलङ्घनम्

इति हि गाथा भवतामित्यर्थः । अपि चोपचारश्चेत् । लक्षणे[4] ततो वरमेवं क्रियतां लक्षणं लाघवायेत्याह—**यदि चेति** । शङ्कते—**अथेति** । निराकरोति—**स्वरूपत** इति । मुख्यत इत्यथः । चोदयति—**स्थापनयापीति** । परिहरति—**न दोषेति** । ननु न दूषणमात्रं संबध्यते, असिद्ध्यर्थमिति च दूषणमात्राभिधानम्, तत् कुतो विशेष-प्रतिलम्भ इत्यत आह—**सामान्याभिधानेऽपीति** । तृतीयं कल्पं दूषयितुमुपन्यस्यति—**स्वपरशब्दाविति** । एतदपि । [5]सूत्रान्तरविरोधेन दूषयति—**न युक्तमेतदपीति** ।

१. °कारणं C   २. विशेष्यं om C   ३. स्वशब्दस्य C   ४. ततो om C
५. सूत्रान्तरेण C

ते साधनदूषणैः स्वपरशब्दाः[1] संबध्यन्ते

इति सूत्रे हि नियमेन स्वपक्षे साधनं परपक्षे दूषणमुक्तम्, तथा चोत्तरपक्षे दूषणीय एवेति उत्तरपक्षवादिनापि दूषणीयः[2]। एवं पूर्वपक्षोऽपि साधनीय एवेति, उत्तरपक्षवादिनोऽपि साधनीयो न दूषणीयः स्यादित्यर्थः। अपि चायुक्तस्य पूर्वपक्षस्य[3] साधणं युक्तस्य चोत्तरपक्षस्य दूषणमिति विपरीतप्रसङ्ग इत्याह—**स्वपक्षश्चोत्तरपक्षवादिनः पूर्वपक्षात्** अयुक्तपक्षात् अन्यः युक्त इत्यर्थः। **न पदार्थः** नावयवार्थः[4]। एतेन सूत्रान्तरनियमाभिधानव्याघातेनेत्यर्थः। **व्याख्याता** निराकार्यत्वेन। षष्ठं कल्पं दूषयितुमुपन्यस्यति—**एक एवायमिति**। दूषयति—**युक्तमेतत्** एकस्यानेकं विशेषणम्॥

द्वितीयं हेतुमुपन्यस्तं व्याखातुं स्मारयति—**समासेति**। न केवलं विशेष्यात् पृथक् स्वार्थो विशेषणं नावधार्यते, अपि त्वन्यस्मादपि न भिद्यते इत्याशयवानाह—**भेदाच्चेति**। चोदयति—**असत्यपि भेद** इति। न केवलं पत्युर्विशेष्यात् सेना न भिद्यतेऽपि तु ततोऽन्येभ्योऽपि हास्तिकाश्वीयरथपदातिभ्य इति। एवं पानकमपि न केवलं तदङ्गेभ्यो जीरकादिभ्यः, अपि त्वन्येभ्योऽपि फलसलिलादिभ्य इति। परिहरति—**तच्च नेति**। उक्तं विस्मृत्य[5] शङ्कते—**अथ मन्यसे स्वार्थ** इति। उक्तस्मारणेन निराकरोति—**तन्नेति**। एतेनैव च[6] कर्मधारयबहुव्रीही अपीत्याह—**एतेनेति**। अपि च स्वः पक्षो यस्य साधयितुः स तथोक्तः। तथा च साधयितृविषयं स्यादित्याह—**साधयितृविषयं चेति**॥

ननु मा भूद् यथेष्टविनियोगयोग्यार्थता स्वशब्दस्य, साधनीयार्थता तु भविष्यति, यथा च समासोपपत्तिरिति चोदयति—**ननु चेति**। षष्ठीसमासपक्षोक्तं दोषं स्मारयति—**न संभवतीति**। अपि च [7]पक्षात् स्वपक्षभेदे सूत्रान्तरव्याघातोऽभेदे वा एतस्य व्याघात इत्याह—**विरोधाच्चेति**॥

अपि च वाक्यसमासयोः समासो ज्यायान् लाघवादित्याह—**आस्तां तावदिति**। **न ह्ययं समर्थः समास** इति। सिद्ध्यसिद्ध्यर्थमित्ययं समासः स्वपरपक्षयोः प्रत्येकं न संबन्धार्थ इत्यर्थात् कस्यचित् सिद्धिः कस्यचिदसिद्धिरित्यर्थः। परिहरति—**यद्यसामर्थ्यात् न समासः** सिद्ध्यसिद्ध्यर्थमिति। **समासेऽपि तर्हीति**। स्वपक्षपरपक्षसिद्ध्यसिद्ध्ययर्थमिति समासेऽपीत्यर्थः॥

१. °रेव स्वपरपक्षाः J २. °णीयम् C ३. पूर्वस्य पक्षस्य C ४. °र्थ इत्यर्थः C ५. प्रस्मृत्य C ६. एव च om C ७. साक्षात्स्वपक्षस्य भेदे C

एकवचनबहुवचनप्रसङ्गोऽपि नास्त्यसामर्थ्यादिति चोद्यसमाधानाभ्यां दर्शयति—**एकवचनेति**। अनित्यत्वेऽपि समासविधेः समास एव विग्रहात् ज्यायानिति चोद्यसमाधानाभ्यां दर्शयति—**अनित्य इति**। भवतु गौरवमेवमपि[1] को दोष इत्यत आह—[2]**अर्थगत्यर्थं चेति**। लघुनोपायेनाशुसिद्धौ गुर्वभिधानमनर्थकम्। यथाहुः,

अक्के[3] चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥

इति अनर्थकप्रयोगश्चानपेक्षितः शिष्यैरिति तेषामशासनात् न शास्त्रं स्यात्, तदिदम् उक्तम्—**शास्त्रत्वेनेति**॥

सिद्धयसिद्धयर्थमित्येतदपि दूषयति[4]—**सिद्धयसिद्धयर्थमित्येतदपि न युक्तमिति**। **तन्न तावदिति**—तदिति तयोर्मध्य इत्यर्थः। **अधिकरणप्रत्यायनमिति** प्राश्निकप्रत्यायनमित्यर्थः। कुतो व्याहतमित्यत आह—**ये चैते इति**। **चो** यस्मादर्थे, अधिकरणे वर्तते पक्षस्येति व्याहतमित्यर्थः। चोदयति—**नायमिति**। सिद्धिर्ज्ञानं तस्य पक्षो विषयः, आश्रयास्तु प्राश्निका इत्यर्थः। विकल्प्य दूषयति—**न युक्तमेतदिति**। न तावत् ज्ञानं पक्षविषयं प्राश्निकाधिकरणं चेति बौद्धराद्धान्ते संभवति, ज्ञानस्यानाधारत्वात् विषयिविषयभावस्य [5]चातात्त्विकत्वात्। तस्मादन्या सिद्धिः। तत्रेदमुपतिष्ठते—**किं तर्हीति**। सिद्धियोगात् सिद्धः पक्षो भवति। प्रमाणयोगस्य सिद्धिः। सैवार्थस्य [6]तथाता। तस्यास्तु प्राश्निकानां प्रतीतिर्भवति। तस्मात् न प्राश्निकप्रतीतिः पक्षस्यासिद्धिरिति विरोधः। यस्मात् सोऽर्थस्तथा भवति तस्मात् तथाभावादधिकरणप्रत्यायनं भवतीति द्वितीयं कल्पमाशङ्कते—**अथासिद्ध इति**। यावत् पक्षविषयं साधनं न प्रयुज्यते तावद्यद्यधिकरणप्रत्यायनं[7] ततः साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं साधनदूषणप्रयोगोऽनर्थकः। दूषणान्तरमाह—**पक्षस्येति**। न प्रयोजनमन्तरेणेदानीन्तनानामस्मदादीनां मुख्यार्थशब्दस्यातिक्रमोऽवाचकपदप्रयोगेण लभ्यते इत्यर्थः। यथाहुः,

अस्मादायत्ते [8]शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे इति॥

स्यादेतत्। मञ्चस्थाः क्रोशन्तीति वक्तव्ये विनापि प्रयोजनं मञ्चाः क्रोशन्तीत्युपचारो दृष्ट इत्यत आह—**अपि तु प्रमाणासंभवेनेति**। प्रमाणासंभवेनापि त्विति योजना।

---

१. एवम् om C २. अनुगत्यर्थं C ३. अर्के J ४. सिद्धय° दूषयति om J ५. च om C ६. तथा C ७. तावदधि° C ८. शब्द° om J

नन्विहापि विनापि प्रयोजनं प्रमाणासंभवमात्रेणोपचारो मञ्चाः क्रोशन्तीतिवद्भविष्यतीत्यत आह—[1]**लोकप्रयुक्तेति** लोकप्रयुक्तशब्दार्थवत् । उपचारोऽपि लौकिको न प्रयोजनाभावेन शक्योऽपवदितुं न लोकः पर्यनुयोज्यो यतः । [2]इदानीन्तनस्तु अस्मदादिप्रयोगः प्रयोजनाभावे न[3] शक्यः पर्यनुयोक्तुमित्याशयेनाह—**न चेदं लौकिकमिति** ॥

**अपरे त्विति** । न दूषणविषयत्वमसिद्धिर्येन न पक्षेण संबध्येत, अपि त्वज्ञानम् । तच्च पक्षविषयमेवेति न मुख्यार्थलङ्घनमित्यर्थः । अत्रापि पूर्वोक्तं प्रसङ्गमाह—**तद् यदीति** । तस्मात् पक्षस्येतीच्छता सिद्ध्यसिद्धिज्ञानाज्ञाने पक्षधर्मविवाभ्युपगन्तव्ये । यतः तयोः पक्षधर्मत्वात् एतद्भवति सिद्धः पक्षोऽसिद्धश्चेति[4] । अस्तु तर्ह्येवमित्यत आह—**एवं सतीति** । नैव[5] द्रष्ट्राधारता ज्ञानस्य विषयता च बौद्धराद्धान्ते संभवतीति भावः । शङ्कते **अथ मा भूदिति** । अस्ति खल्वालयज्ञानं यदुपाश्रित्य षडपि प्रवृत्तिज्ञानानि जायन्ते । तस्मादालयप्रत्ययो द्रष्टा । तत्स्थे एव सिद्ध्यसिद्धी । न पक्षस्य तद्विषयत्वात् तस्यापीति चेत्, कः पुनरयं विषयभावः[6] ? तत्कारणत्वमिति चेत् ? चक्षुरादीनामपि ज्ञानकारणानां विषयत्वप्रसङ्गः । असतश्चाकारणस्य अविषयत्वप्रसङ्गः । ज्ञानप्रकाश्यत्वं विषयत्वमिति चेत—न, ज्ञानेनार्थे प्रकाशाजननात् तस्मात् ज्ञानस्य तदसमवायिनः तदविषयस्य च[7] द्रष्टृस्थतैवेति सिद्धम् । निराकरोति—**तथापीति** । पुनः शङ्कते—**अथ तथातथाते** इति प्रमाणयोग इत्यर्थः । निराकरोति—**तथापीति** । तत्त्वं जिज्ञासुः पृच्छति—**के पुनरेते इति** । सुहृद्भावेनोत्तरमाह—**वस्तुधर्माविति** । यद्यपि प्रमाणयोगायोगौ प्रमेयस्य च प्रमातुश्च, साधनासंबन्धे कर्तृत्वानुपपत्तेः, तथापि प्रमेयस्य प्राधान्यात् तत्रैवाभिधानप्रत्ययाविति प्रमेयधर्मावुच्येते व्यक्त्यव्यक्ती, न तु प्रमातृधर्माविति । [8]सिद्ध्यसिद्ध्यर्थमिति **अर्थशब्दानुपपत्तिः** । कस्मात् ? **विकल्पानुपपत्तेः** । विकल्पमाह—**अर्थशब्दः खल्विति** । इह सूत्रे धननिमित्तादिवचनतार्थशब्दस्य न संभवतीति त्रयमवशिष्यत इति त्रेधा प्रवर्तत इत्युक्तम् । साधनं साधनाभासो दूषणं दूषणाभास इति चतुर्विधं वाक्यम् । प्रथमकल्पमपाकरोति—**तत्र तावदिति** । तदिति तेषु मध्य इत्यर्थः ॥

ग्रन्थान्तरे[9] युक्तायुक्तत्वेन विशेषणात् चतुर्विधवाक्यसंग्रहार्थो ह्युद्देशे अर्थशब्दो व्याख्यातः । न च युक्तायुक्तत्वविशेषणे चतुर्विधवाक्यसंग्रहो भवति साधनाभाससंबन्धिनः पक्षस्य युक्तत्वाभावात् दूषणाभाससंबन्धिनश्च प्रतिपक्षस्यायुक्तत्वाभावादित्यर्थः ।

---

१. लोकप्रयुक्तेति om C २. इदानीं तु नास्म° C ३. भावेन C ४. °द्धः पक्षः C ५. एव om C ६. विषयविषयिभावः K ७. च om C ८. सिद्धय° om C ९. °न्तरेण C

अथ न साधनादियोगोऽपि तु साध्यधर्म एव साधनानपेक्षो युक्तायुक्तत्वमिति शङ्कते—**अथ पुनरिति**। निराकरोति—**तथापीति**। कुतो व्याघात इत्यत आह—**न हीति**। यदि प्रत्यायनं सिद्धिः प्रतीतिः, तथापि सा प्रत्याय्या[1] न संभवति। अथ करणम्? तथापि कर्म करणं न संभवतीति व्याघात इत्यर्थः। द्वितीयं कल्पमाशङ्क्य निराकरोति—**अथ प्रयोजन** इति। प्रयोजनं कार्यम्। तत्र कारणाभासाद् भवितुमर्हति। न हि वह्निरिति गृहीतः खद्योतो दहति पचति वेत्यर्थः। तृतीयं कल्पमाशङ्क्य निराकरोति—**अथाभिधेय** इति। **ग्रन्थकारः सूत्रकारः**। **एवं त्विति**। एवं सति सिद्धिशब्दोऽसिद्धिशब्दश्च वादः स्यात्। ननु धननिमित्तादयः अप्यर्थशब्दवाच्याः सन्ति, ते कस्मादिह न गृह्यन्ते इत्यत आह—**तत्र सूत्रे। न चान्योऽर्थशब्दस्य विषयः** संभवति, न हि सिद्धिर्धनं वा स्वपरपक्षयोः[2] साधनं वा निवृत्तिर्वा संभवतीत्यर्थः। अपि च वचनविशेषणपक्षे[3] स्वशास्त्रव्याघात इत्याह—**सिद्ध्यसिद्ध्यर्थं[4] वचनं वाद इति ब्रुवाणेनेति**। **नैयायिक**हेतुदूषणं पूर्वमिदं सूत्रम् उत्तरम्। उपसंहरति—**तदेवमिति**। **तन्त्रं** शास्त्रम्। **लोकं च बाधन्त** इति। अवाचकपदप्रयोगात् साधनदूषणाभासवादिनश्च वादित्वेन लोकसिद्धस्यावादित्वापादनात् सिद्ध्यसिद्धिशब्दयोश्च वादत्वापादनार्थत्वादित्यर्थः॥

सूत्रं दूषयित्वा वृत्तिं दूषयति—**यथा चेति**। **स्वस्य पक्षस्येति**[5]। स्वस्यात्मीयस्य पक्षस्य। न हि पक्षव्यतिरेकेण पक्षाधारं साध्यं ज्ञानमन्यद् वा सिद्धिशब्दाभिधेयं संभवति, ज्ञानस्य पुरुषाधारतया अनाधारतया वा पक्षाधारत्वानुपपत्तेः, पक्षस्य तु भवेत् केनचित् संबन्धेन यादृशतादृशेनेत्यर्थः। **ते साधनदूषणैः इत्यत्र पृथगुक्ते साधनदूषणे**। युक्तायुक्तत्वाभ्यां[6] ते युक्तायुक्तत्वे। **साधनदूषणैरिति**। न हि कर्म करणं भवतीत्यर्थः। अपि च युक्तायुक्तार्थाभ्यामभेदे साधनदूषणपदमनर्थकं ते इत्यनेनैव युक्तायुक्तत्वावमर्षिणा गतार्थत्वादित्याह—**युक्तायुक्तत्वशब्दाभ्यां[7] चेति**। अथ न पर्यायता, अपि तु सामान्यविशेषभावः युक्तायुक्तत्वे सामान्यम्, साधनदूषणे च विशेष इति शङ्कते—**अथ मन्यसे इति**। निराकरोति—**न प्रथमेति**। उभयव्यभिचारे विशेषणविशेष्यभावे कामचारादुत्पलैरित्युक्तम्। द्वितीयं कल्पमाशङ्क्य दूषयति—**योग इति चेदिति**। न खलु योगो नाम बौद्धानां साध्यसाधनवृत्तिर्दूष्यदूषण-

१. प्रत्याय्यं C २. कारणं J ३. विशेषपक्षे C ४. °र्थं च C ५. स्वस्य पक्षस्येति om J ६. °युक्तार्थाभ्यां C ७. °युक्तशब्दाभ्यां C

वृत्तिर्वा कश्चिदस्तीत्यर्थः। अपि च सांवृतोऽपि योगः साध्यसाधनज्ञानाधीननिरूपणतया नानिरूपिते साध्ये निरूपितो भवति, निरूपणं च निर्णय इति योगनिरूपणात् प्राक् साध्यनिर्णयात् कृतं योगनिरूपणेन साध्यनिर्णयार्थेनेति। युक्तायुक्तत्वेन करणेनाधिकरणप्रत्यायनमिति व्याघात इत्याह—**साधनेनेति**। भवति ज्ञायते। तृतीयं कल्पमाशङ्क्य निराकरोति—**अथ पदार्थस्येति**। युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति युक्तायुक्तत्वयोः करणत्वं दर्शितम् तत् तथात्वातथात्वपक्षे न संभवति, कर्मत्वात्। तदिदमुक्तम्—**ते व्यवच्छेद्ये** परिच्छेद्ये, **न तु व्यवच्छेदस्य** परिच्छेदस्य साधने इति ॥

अधिकरणप्रत्यायनमिति दूषयति—**अधिकरणेति**। **शास्त्रसंबन्धः प्रयोजनेनेति**। चोदयति—**प्राश्निकप्रत्यायनादिति**। कश्चित् चोदकं[1] पृच्छति—**किं कारणम्**[2]? **तत्प्रत्यायनादिति**। चोदकस्योत्तरम्—**प्रतिवादि किलेति**। सिद्धान्त्याह—**सन्तमप्यर्थं न प्रतिपद्यत** इति। न खल्वाध्यात्मिकशक्तिसंपन्नः समाहितः समग्रे साधनप्रयोगे सति[3] सन्तमर्थं न प्रतिपद्यत इति संभवतीत्यर्थः। तथाविधेनापि चेत् प्रतिपत्त्रा सोऽर्थोऽन्यथा प्रतिपन्नः, कथमसौ तथा सन्नित्यभिधीयते इत्याह—**कथं चेति**। शङ्कते—**अथ जिगीषुतया प्रतिपद्यमानोऽपीति**। **कामकारोऽनुज्ञा**। निराकरोति—**तथापीति**। न प्रतिपद्यते प्रतिपद्यमान इति व्याहतम्। न चायमनुज्ञानिषेधो न प्रतिपद्यते इति वादे वीतरागकथात्वेन[4] जिगीषाया अभावादिति भावः। **यच्च प्राश्निकप्रत्यायनादिति**। अन्यदीयेन करणेनान्यः प्रतिपद्यत इति सुभाषितम्। **अन्यविषयस्येति** अन्याश्रितस्येत्यर्थः। **न चायं नियम** इति। न वादे प्राश्निकानामुपादानम्, दैवागतानां तु न वर्जनमित्यर्थः। वादस्य जल्पवितण्डाभ्यामभेदम् अभिप्रेत्य चोदयति—**यदा तु नायमिति**[5]। आशयस्थितमर्थमनभ्युपगच्छन् परिहरति—**सत्यमिति**। स्वाभिप्रायं दर्शयति—**न त्रैविध्येति**। दूषयति—**न भवद्भिरेव प्रतिषेधादिति**। त्रैविध्यानभ्युपगमादिति दूषयति—**यदपीति** ॥

यच्चोक्तं **वृत्तौ** पक्षसिद्धिविषयम्, एतदपि दूषयितुमुपन्यस्यति—**यच्चोक्तमिति**। **न कामतः** विना प्रयोजनमिति। विनापि प्रयोजनं प्रमाणासंभवेनापीति योजना। **सूत्रोक्तं** दूषणं **वृत्तौ** आह—**तदर्थं वचनं** सिद्ध्यसिद्ध्यर्थमित्यर्थः। अधिकरणं दूषयति—**अधिकरणमिति**। **न हि वादे**[6] **प्राश्निकाधारमिति**। प्राश्निका एव तावद् वादे न सन्ति, अभ्युपेत्य उक्तमिति। शङ्कते—**प्रत्यायनाधारत्वादिति**। सिद्धिः प्रत्यायनं

१. चोदकः C २. किं कारणम् ? only in J ३. सति om J ४. °कथात्वात् C
५. न om J ६. स्व° om C

तदाधाराः प्राश्निका इत्यर्थः । निराकरोति—नेति । **शङ्कते—तस्मिन्निति ।** दैवमिलिते प्राश्निके सतीत्यर्थः । निराकरोति—नेति । न हि दैवमिलितं कारणम्, मा भूद् गर्दभोऽपि धूमस्य कारणमिति भावः । चोदयति, यदि प्राश्निका न सन्ति **तद्वाद** इति । तयोर्वादिप्रतिवादिनोर्वादस्य परीक्षा का कस्य च तयोर्वादस्य क च, असौ परीक्षा प्राश्निकाभावे हि वादतत्परीक्षातदधिकरणानामज्ञानमित्यर्थः । परिहरति—**साधनेति** । वीतरागौ हि वादिप्रतिवादिनावेव वादस्वरूपज्ञानं च तत्परीक्षां च कर्तुं शक्नुतः, तत् किमत्र प्राश्निकैः ? साधनप्रयोगः पक्षविषयः, दूषणप्रयोगः स्थापनाविषयः इति वादस्वरूपम् । साधनदूषणतदाभासानां परितो ज्ञानं परीक्षा । तदर्थं [2]परीक्षार्थं तस्मिन् वादेऽधिकारो वीतरागयोरेव वादिप्रतिवादिनोः[3] । तदिदं क्वेति विप्रश्नस्योत्तरम् । तस्मात् सप्तम्यर्थोऽधिकरणार्थः पराभिमतः प्राश्निक इति यावत् । स नास्ति वादिप्रतिवादिनोरेव वीतरागयोः कथासमाप्तेरित्यर्थः ॥

यदपि **वृत्तौ** चोदितं यदि सिद्ध्यसिद्ध्यर्थं वचनं वादः, ततः[4] प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि रथ्यावादे[5] प्रसङ्ग इति तदप्यतिनिर्बीजमित्याह—**यदपीति** । न हि प्रियाप्रियवचसः साक्षात् पारम्पर्येण वा सिद्ध्यसिद्ध्यर्थता, नापि साधनदूषणयुक्तायुक्तत्वविशेषणसंबन्धः तस्मादेवंवादी नोत्तरार्हः । न ह्युन्मत्ताय कश्चिदनुन्मत्त उत्तरमाह, ब्रुवाणो वा सोऽप्युन्मत्तः स्यात् । तदिदमुक्तम्—**दत्तः स्वहस्त** इति । पूर्वं सिद्ध्यसिद्ध्यर्थमिति, अपरं युक्तायुक्तत्वमिति, उभयोरप्यनेन चोद्येनासंबन्धात् । यदि त्ववश्यम् उत्तरं वाच्यम्, ततो वरमेवं वक्तव्यमित्याह—**यदि त्विति** । सेयं सूक्ष्मेक्षिका परैरिह कृतेति [6]तदनुबन्धेन **वार्त्तिककृता**पि कृतेति ॥१॥

## ॥ परिशुद्धिः ॥

एवं प्रथमाह्निके साङ्गोपाङ्गो न्यायस्तावल्लक्षितः । स च परार्थोऽपि पृच्छोपक्रमप्रतियोगिन्येकवक्तृके[7] विचारे विविच्य प्रवर्त्तनीयः । तत्र च सिद्धिपरत्वम् । न्यायस्य दूषणोपक्रमप्रतियोगिनी तु नानाप्रवक्तृके कथानाम्नि क्रियाव्यतिहारे प्रवर्त्य विवेचनीयः । तत्र चोपालम्भपरत्वं तस्य । एवं च प्रवर्तनीयविवेचनीयसिद्धिपरसाङ्गन्यायलक्षणं प्रथमाह्निकार्थः । द्वितीयाह्निकार्थस्तु प्रवर्तनविवेचन उपालम्भपरपदार्थलक्षणमिति युक्त इदानीं

१. वादे om C २. परीक्षार्थं om C ३. वादिनोः C ४. तदा C
५. रथ्यातथावादे K ६. तन्निर्वन्धेन C ७. °वस्तुके M

तस्यारम्भः। तत्रापि [1]प्रवर्त्यविवेचनीयद्वारेण प्रवृत्तिप्रकारत्वाच्च कथायाः प्रथमं कथाप्रकरणमारभ्यते। यद्यपि च कथा साक्षात् नोद्दिष्टा, तथाप्यसंगतिभिया **भाष्यकारः** तदुपसंग्रहेणैव वादादीन् विभजते। अन्यथा हि वादादिलक्षणस्य पूर्वापरप्रकरणाप्रवेशात् आह्निकाप्रवेशो शास्त्रबहिर्भावप्रसङ्गः। अथ **सूत्रकृतैव** कथा कथं साक्षात् नोद्दिष्टा, विवक्षितफले एकानेकत्वानुरोधेन सामान्यविशेषयोर्यथायथमुद्देशात्? तद् यथा चतुर्षु [2]प्रमैव विवक्षितं फलमिति प्रमाणत्वेन, सैव द्वादशविषयिणी विवक्षितेति प्रमेयत्वेन, हानमेव विवक्षितमिति सुखं दुःखत्वेन। इह तु तत्त्वनिर्णयः, जल्पे स्वशक्तिपराशक्तिख्यापनम्, वितण्डायां पराशक्तिमात्रप्रख्यापनं च फलानि विवक्षितानि। तानि च न कथामात्रसाध्यानीति विशेषत एवोद्देशः। तत्र यौगिकं कथाशब्दमुपादायानवसरदुस्थतया **भाष्यम्** आक्षिप्य **वार्त्तिकेन** समाधत्ते—**तदयुक्तमित्यादिना**। नायं कथाशब्दो योगमात्रानुरोधी, अपि तु सत्येव तस्मिन् रूढिनियत इति। अनवसरदोषं परिहरन्नाह—**अपि त्विति**। ननु पूर्वपक्षोत्तरपक्षबलाबलनिरूपणं विचारः, स च न कथाया आश्रयः किं तु विषय इत्यत आह—**विचारविषयेति**। **प्रौढगौडनैयायिकमते** चतस्रः कथाः।

स प्रतिपक्षस्थापनाहीनो वितण्डा[3]।

इत्यत्र जल्पवद् वादस्यापि परामर्शात्। पुरुषाभिप्रायानुरोधेन चतुर्थोदाहरणस्याप्युपपत्तेरिति **सानातनिः**। एक एवायं कथामार्ग इति **बाह्याः**। ते द्वे अपि तिस्र एवेति नियमयता निराकृते। तत्त्वबुभुत्सुकथा च वितण्डा चेति व्याहतम्। न हि प्रथमसाधननिवृत्तावेव तत्त्वनिर्णयः, निःसाधनस्य तस्यानुपपत्तेः। नापि प्रतिपक्षसाधनमनिवर्त्य प्रथमस्य साधनत्वावस्थितिः, शङ्कितप्रतिपक्षत्वात्। यदि तु प्रतिपक्षसाधनमनिरूप्यैव विजिगीषुवितण्डावत् तावतैव वादिनौ कृतिनौ, न तर्हि तत्त्वबुभुत्सू। एवं च यदि विजिगीषुः, कथमप्रतिभाद्यनुद्भावनम्। न च विजयतत्त्वनिर्णयाभ्यां फलान्तरमवशिष्यते कथायाः, यदर्थं वादवितण्डा। अनुत्पन्नस्य हि तत्त्वनिर्णयस्योत्पादनम्, उत्पन्नस्य पालनम्, पालितस्य च विनियोगः। स च स्वयमभ्यासः, कारुणिकतया परव्युत्पादनम्। एतच्च सर्वं कथात्रयपर्यवसितम्, नाप्येककथानिर्वाह्यमिति॥

नन्वेतावतापि न सामान्यलक्षणं विभावितमित्यत आह—**तथा चेति**। नानाप्रवक्तृको मिथः कर्मतया युद्धवदालिङ्गनवच्च। एतेन वाक्यसंदब्धिर्महावाक्यमुक्तं स्यात्,

---

१. प्रवर्त्यं विवेचनीयत्वात् निग्रहादीनां प्रवृत्ति° M    २. प्रतिमैव A
३. न्या. सू. १.२.३

मिथः कर्मतया साकाङ्क्षत्वात्, विजयाद्यनेकप्रयोजनवत्त्वाच्चेति । वक्त्रोश्च प्रशब्देन प्रकर्षो दर्शितः । स च कथारूपमहावाक्यनिर्वाहकत्वम् । तथा च स्वस्थः सर्वजन-प्रत्ययानपलापी मतमात्रावलम्बी अवहितोऽकलहकारश्चेति कथाधिकारिणो दर्शिताः । विपर्ययेण हेया इति । वसतीति निरुक्तिभङ्गभयादाह—[1]अर्थाभिधानेति वादेति । अनधिकारिणो हातुमिति भावः । तेऽपि प्रकृतोक्तिकोऽविप्रलम्भको यथाकालस्फूर्तिकः अनाक्षेपको युक्तिसिद्धसंप्रत्ययी चेति पञ्च वादे उपादेयाः; विपर्ययेण हेयाः । एवं-भूताश्च शिष्यादय एव प्रायेणेति त एवोक्ताः । एवं च सति हेयान् विहाय यो यथाभूतः स तथाभूतेन वक्तुमर्हति । तथा सति कथा महावाक्यसिद्धौ फलसिद्धेः । न हि युयुत्सुरिरंसू प्रतिपद्य चिरं असिद्धं संभूय समीहितं साधयतः । यथोद्देशमिति । तत्त्वप्रतिपत्तिहेतुत्वाद् वादस्यादावुद्देशः ॥

वार्त्तिकमुपवेशयितुं पीठमारचयति—तदनवसायादिति । एवमिति । अतिदेशार्थमाह—न विचारमिति । श्रुतिव्यवच्छेद्यतया वितण्डां तावद् व्यवच्छिनत्ति—यद्यपीति । तात्पर्यव्यवच्छेद्यतया इदानीं जल्पं व्यवच्छिनत्ति—यद्यपि चेति । प्रमाणमूलैः प्रमाणमूलाभिमतैर्नियमेनेति शेषः । नाभिप्रायनियमः श्रूयत इत्यत आह—यथा चैतदिति । साधने च तर्कस्य प्रमाणापेक्षा, उपालम्भे तु केवलोऽपि समर्थः, प्रतितर्कप्रतिहतस्यासाधनत्वात् । आगामिनं भावसाधनत्वस्वीकारमिव दृष्ट्वा प्राह[2]—उभयथेति । तद्गताक्षेपस्तु[3] उद्देश एव प्रमाणतर्कशब्दस्य साधनोपालम्भशब्दवत् स्ववाचकलक्षणया वा, शब्दावान्तरव्यापारतया वा शब्दप्रतिपादिततया वा समर्थितप्रायः । ततः सिद्धवदाह—यदा त्विति । अपराधप्रतिपादनं ह्युपालम्भः । न च अचेतनोऽपरा-ध्यति, नापि प्रतिपाद्यते, किं तु पुरुषः । तदिदमुक्तम्—पुरुषधर्मोपालम्भेति । कर्मकरणयोर्हि प्रधानव्यापारः, फलमेकमेव । तद्द्वारा च विषयः । प्रकृते कर्मकरणयोरपि कर्मैव । इयांस्तु विशेषः, यत् कर्मत्वदशायां शब्दादेरनित्यत्वं धर्मो जिज्ञासिततया, विषयत्वदशायां तु वस्तुतयेत्याशयवान् यथाश्रुतवार्त्तिकानुरोधेन व्याचष्टे—धर्मीति । अन्यथा तु विषयः शक्तिविषयः शक्यं कार्यमिति यावदित्येवमपि सुगममेतत् । अत्र हि

जल्पे निग्रहस्थानविनियोगादित्यादिभाष्ये

न हिंस्यात् सर्वभूतानि ।

इतिवद् वादे सर्वनिग्रहस्थानप्रतिषेधे

१. अर्थमात्रेति A २. प्राह om J ३. °पेक्षस्तु M

अग्नीषोमीयं पशुमालभेत

इतिवत् सिद्धान्ताविरुद्ध इत्यादिविशेषविधिरित्यर्थः स्फुटः प्रतीयते । वार्तिककारस्तु रागतः सर्वपञ्चनखभक्षणप्राप्तिवत् उपालम्भग्रहणात् सर्वनिग्रहस्थानप्राप्तौ

पञ्च पञ्चनखा भक्ष्याः

इतिवत् परिसंख्यानार्थमुत्तरपदारम्भ इति व्याख्यातवान् । तदेतदतिकुशलतया मिथः अविरोधयन्नाह—**जल्प इति** । तथापि नियमार्थे इत्यसंगतम् । पाक्षिकव्यवच्छेदफलो हि नियमः । न चात्राप्रतिभादि पाक्षिकम्, उपालम्भपदेन निराशङ्कमेव प्रतिपादितत्वात् इत्यत आह—**नियमः परिसंख्येति** । अयमर्थः, यद्यपि

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते ॥

इति भेदो दर्शितः, तथाप्यल्पीयानयमिति मन्यमानेन परिसंख्यायामपि नियमपदं प्रयुज्यते, इतरव्यवच्छेदलक्षणस्य फलस्याविशिष्टत्वादिति । इह वादे चतुर्धा निग्रहस्थानगतिः । किञ्चिदसंभावनीयमेव यथा, हानिः सन्न्यासो निरर्थकमर्थान्तरमविज्ञातार्थमपार्थकमिति षट्कम् । किञ्चित् संभवदप्यनुद्भाव्यमेव यथा, प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमिति सप्तकम् । किञ्चित् तूद्भाव्यमात्रं यथा, विरोधोऽप्राप्तकालं न्यूनमधिकं पुनरुक्तमयथानुभाषणमपसिद्धान्त इति सप्तकम् । किञ्चिच्च कथावसानिकं यथा, हेत्वाभासो निरनुयोज्यानुयोगश्चेति द्वयमिति । तत्र हान्यादीनामशक्तिसंगुहनप्रकारत्वात्, तत्त्वबुभुत्सुतया च वादे तदभावात् तेषामसंभवः । संभवतामनुद्भावने हेतुमाह—**न खल्विति** । कथामपर्यवसाययतामप्युद्भावने हेतुमाह—**अधिकं त्विति** । तत्त्वप्रतिपत्तेः साक्षाद् व्याघातो विपरीतप्रतिपत्तिर्यथा, हेत्वाभासानुद्भावने निरनुयोज्यानुयोगानुद्भावने च पारम्पर्यव्याघातो व्यासङ्गादीना[1]तत्सामग्रीप्रतिरोधः । तत्राधिकानुद्भावने प्रथमो यदि न स्यात्, तथापि द्वितीयः स्यादेव । तथा हिं, विरोधे योग्यताविरहः । अप्राप्तकाले आकांक्षाविरहः । न्यूने आकांक्षितासमभिव्याहारः । स चानासक्तिविशेषः । अधिके अनाकाङ्क्षितसमभिव्याहारः । पुनरुक्तेऽप्येवम् । सोऽप्याकाङ्क्षाविरहविशेषः । अयथानुभाषणे उक्ताप्रतिसन्धानम् । अपसिद्धान्ते संमुखप्रमाणबाधाक्रान्तिरिति आकाङ्क्षायोग्यतासत्तिमत्तया प्रतिसंहितं प्रमाणान्तराप्रतिहतं च वाक्यं तत्त्वप्रतिपत्तेरङ्गम्, नान्यथा । तस्मादेतदर्थमिदमुद्भाव्यमिति ॥

---

१. तत् om A

तदेतत् सर्वमभिप्रायं नियमयतः **सूत्रकारस्य** संमतं **सूत्रादेव च** लभ्यते । **वार्त्तिककृता** तु न्यूनादिचतुष्टयमुदाहरणार्थं दर्शितम्, न तु नियमः कृत इति व्याजेन दर्शयति—**तथा चेति** । ननु व्यतिसङ्गो व्यतिहारः । स च साधनोपालम्भवानित्येतावतैवोक्ते गम्यते । ततः प्रमाणतर्कग्रहणमतिरिच्यत इत्यत आह—**पूर्वस्मिन्निति** । तथाप्यस्मिन् पक्षे किमस्य प्रयोजनमित्यत आह—**साधनोपालम्भविशेषणाय चेति** । अनुविधेयस्थेयसभ्यपुरुषवती जनता सभेत्युच्यते । तत्रानुविधेयस्य यथाशक्ति यथानियमं संमानासंमानव्यञ्जकं कर्म । नैतद् वादे । तत्र हि तत्त्वबुभुत्सुतया स्वयमवाततत्त्वज्ञः तत्त्वज्ञानिनमुपासीत । स्थेयानां तु वादस्थानकथाविशेषव्यवस्थापनं पूर्वोत्तरवादस्थापनं विवदमानयोर्गुणदोषावधारणं भग्नप्रतिवादिप्रबोधनं लोके निष्पन्नकथाफलप्रतिपादनं च कर्माणि । एतदर्थं च तत्र प्राश्निकोपयोगो यद् वादिनौ कारणग्रहेण एवं कर्तुमशक्तौ । न चैवं वादे । तत्र तयोरेव वीतरागतया शक्तत्वादित्याशयवानाह—**न वादे प्राश्निकानामिति** । तत् किं परिवर्जनमेव तत्र तेषाम् ? नेत्याह —**दैवागतानां त्विति** । संवादेन प्रामादिककथाभासशङ्कामपनेतुं नतूक्तकर्माणि कारयितुमिति भावः ॥ १ ॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥**

॥ भाष्यम् ॥

यथोक्तोपपन्न इति, प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः । छलजातिनिग्रस्थानसाधनोपालम्भ इति, छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति एवंविशेषणो जल्पः ॥

न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य सम्भवति, प्रतिषेधार्थतैवैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते वचनविघातोऽर्थविकल्पोपपत्त्या छलम्[1] इति, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः[2] विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्[3] इति । विशेषलक्षणेष्वपि यथास्वमिति । न चैतद्विजानीयात्प्रतिषेधार्थतयैवार्थं साधयन्तीति, छलजातिनिग्रहस्थानोपालम्भो जल्प इत्येवमप्युच्यमाने[4] विज्ञायत एतदिति ॥

---

१. न्या० सू० १.२.१०   २. न्या० सू० १.२.१८   ३. न्या० सू० १.२.१९

४. °स्थानसाधनोपा° ल्प एवमुच्य° J

प्रमाणैः साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्गभावः[1] स्वपक्षरक्षणार्थत्वात्[2], न स्वतन्त्राणां साधनभावः। [3]यत्तत्प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रस्थानानामङ्गभावो [4]रक्षणार्थत्वात्। तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्ति। तथा चोक्तं तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्[5] इति। यश्चासौ[6] प्रमाणैः [7]प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि [8]प्रतिषेधविघातात्सहकारीणि भवन्ति। तदेवमङ्गीभूतानां छलादीनामुपादानं जल्पे, न स्वतन्त्रणां साधनभावः। उपालम्भे तु स्वातन्त्र्यमप्यस्तीति ॥ २ ॥

॥ वार्त्तिकम् ॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥२॥** समस्तं वादलक्षणं छलजातिनिग्रहस्थानसाधनोपालम्भश्च जल्प इति। यथोक्तोपपन्न इति न युक्तम्, जल्पे निग्रहस्थाननियमस्यानभ्युपगमात्, यद्येवमुच्यते[9] प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति, न युक्तमेवं भवितुम्। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति च पदयोरुपालम्भग्रहणात्[10] समस्तनिग्रहस्थानप्रसक्तौ नियमार्थत्वात्। नियमार्थे एते पदे सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति। जल्पे च नियन्तव्यं न किञ्चिदस्ति। तस्मात् नियमार्थे एते पदे नातिदेष्टव्ये इत्यतो न वक्तव्यं यथोक्तोपपन्न इति। नैष दोषः, [11]संभवतोऽतिदेशात्। यदत्र संबध्यते तदतिदिश्यते। किं च संबध्यते? प्रमाणतर्कसाधनोपालम्भ इत्येतत्। तस्मात् यथोक्तोपपन्न इति लक्षणमात्रस्यातिदेशः। यथान्यत्र,

[12]अनेकद्रव्येण द्रव्येण समवायाद् रूपविशेषाच्च रूपोपलब्धिः[13] ॥
अनेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्[14] ॥

इति न [15]रूपविशेषोऽतिदिश्यते, अपि त्वनेकद्रव्येण द्रव्येण समवायमात्रं[16] स्वगतो विशेषः[17] सामर्थ्यात्, तथेहापि यत् समर्थं तदतिदिश्यते। समर्थं च लक्षणम्। तस्मात् लक्षणमतिदिश्यते। न नियमार्थे पदे, नियन्तव्यस्याभावात् ॥

---

१. छलादीनामङ्ग° J २. स्वपक्ष° om J ३. यत्र प्र° J ४. स्वपक्षरक्ष° T
५. न्या० सू० ४. २. ५ ६. असौ om J ७. °पक्षसाधनस्यो° J ८. प्रतिषेध्यवि J
९. उच्येत C १०. °श्रवणात् C ११. संभवादति C १२. °द्रव्यद्रव्येग C
१३. वै. सू. ४.१.६ १४. वै. सू. ४.१.१० १५. स्वरूप° C १६. द्रव्यद्रव्यसम° C
१७. स्व° शेषः om J

अथ वा [1]यथोक्तेनोपपन्नेनोपपन्नो यथोक्तोपपन्नोपपन्न इति प्राप्ते गम्यमानत्वादेकस्योपपन्नशब्दस्य लोपः, यथा गोरथ इति। केन पुनरयं गम्यत इति? उक्तं सामर्थ्येनेति। न हि नियमार्थयोः पदयोर्जल्पे संभवः, तस्मात् न ते अतिदिश्येते इति। भाष्यमिदानीं कथम्? न सूत्रपाठानुक्रमज्ञापनार्थत्वात् भाष्यस्य, एतस्मिन् सूत्रे यदुपपन्नं लक्षणत्वेन तदतिदिश्यत इति। छलजातिनिग्रहस्थानैर्न कस्यचित् साधनम् उपालम्भो वा युक्तः, अयुक्तोत्तरत्वात्। छलं तावत् न साधनाय नोपालम्भाय[2] वालम्। कस्मात्? अयुक्तोत्तरत्वात्। अयुक्तमुत्तरं छलेनाभिधीयते, यच्चायुक्तमुत्तरं तन्नालं साधनायोपालम्भाय वेति[3]। एवं जातिः। अङ्गभाव इति चेत्? अथापीदं स्यात् यत् तत् प्रमाणतर्कैः साधनं [4]यश्चोपालम्भः तस्यैतानि प्रयुज्यमानानि छलजातिनिग्रहस्थानानि रक्षणार्थत्वादङ्गं भवन्तीति एतदप्ययुक्तोत्तरत्वादेवानुपपन्नम्[5]। किमर्थं तर्हि प्रयोगः, यद्येतानि छलजातिनिग्रहस्थानानि साधनोपालम्भयोर्न साधनं नाङ्गं वा,[6] किमर्थमेषामुपपादनमिति? साधनविघातार्थम्। साधनं विहनिष्यामीत्यनया धियापह्नतः प्रवर्तते। यत्र चैतानि छलजातिनिग्रहस्थानानि प्रयुज्यन्ते, न स वादः। न पुनरेतत् अभिधीयते छलजातिनिग्रहस्थानानि साधनमङ्गं चेति[7] साधुसाधनोपादाने च परेणाकुलीकृतबुद्धिः[8] छलादीनि प्रयुङ्क्ते कदाचिच्छलादिभिराकुलीकृतस्य परस्य पराजयोऽपि स्यादिति। न पुनरेतानि तत्त्वबुभुत्सुना वक्तव्यानि, किं तु विजिगीषुणेति। सोऽयं पक्षप्रतिपक्षपरिग्रहश्चछलजातिनिग्रहस्थानप्रयोगाप्रयोगाभ्यां भिद्यमानो वादो जल्पो वितण्डा च भवति॥

अत्रापि विरुद्धौ धर्मावेकाधिकरणस्थाविति समानम्। विरुद्धयोर्धर्मयोरेकाधिकरणत्वानुपपत्तिरुभयात्मकवस्तुस्वभावासंभवात्[9]। यदि विरुद्धावेकाधिकरणौ धर्मौ भवतः, [10]नन्वेकं वस्तूभयस्वभावं प्राप्तम्। न चैतदस्ति। तस्मात् न विरुद्धौ धर्मावेकाधिकरणाविति। न, अध्यारोपितस्वरूपधर्मसंप्रतिपत्त्या तदुपपत्तेः। [11]एकस्तु धर्मः स्वरूपतः, एकस्त्वध्यारोपितस्वरूपप्रवृत्तिः। तस्मादुभयधर्मा धर्मीति सिद्धम्[12]। एकधर्मिस्थौ विरुद्धार्थावित्येतदपि[13] न बुध्यामहे, को विरुद्धार्थ इति। न स्वरूपविपर्ययोपपत्तेः। स्वरूपमात्रविपर्ययो विरोधः, न पुनर्बाधा वध्यघातकभावो वेति॥ २॥

---

१. यथोक्तोप° C  २. साधनोपालम्भाय C  ३. छत्रम्, तत्र साधनोपालम्भायेति C
४. यो वा C  ५. °दप्युक्तोत्तरत्वादनुप° C  ६. साधनमङ्गं C  ७. °मङ्गानि वेति C
८. °णाकुलितबुद्धिः C  ९. °रुभयस्व° C  १०. तदैकं C  ११. °एकस्तत्र C  १२. युक्तम् C
१३. °द्धवेतदपि J

## ॥ टीका ॥

उद्देशक्रमानुरोधेन वादलक्षणानन्तरं जल्पं लक्षयति—**यथो—ल्पः** ॥२॥ अत्रापि समानजातीयाभ्यां वादवितण्डाभ्यामसमानजातीयेभ्यः प्रमाणादिभ्यो व्यवच्छेदो जल्पस्य[१] सूत्रार्थः। यथोक्तोपपन्नपदार्थं व्याचष्टे—**समस्तमिति**। चोदयति—**यथोक्तोपपन्न इति न युक्तमिति**। **निग्रहस्थाननियमस्य** प्रमाणतर्कसाधनोपालम्भाभिप्रायनियमस्य च जल्पेऽभावात्, भावे वा वादजल्पयोरभेदप्रसङ्गात्, वादलक्षणस्य च[२] जल्पव्यापकत्वेन व्यभिचारप्रसङ्गाद् यथोक्तोपपन्न[३]इत्येतदनुपपन्नमित्यर्थः। परिहरति—**नैष दोष** इति। उक्तमात्रमिह संभवात् योग्यतासंभवाद् गृह्यते, न त्वनुक्तोऽर्थलभ्यो नियमः। न ह्यसौ सूत्रपदश्रवणमात्रात् प्रतीयते, अपि तु तदर्थे प्रतीते तस्यान्यतः सिद्धौ सत्यां[४]गम्यत इति प्रमाणतर्कसाधनोपालम्भ इत्येतदतिदिश्यत इति उक्तमात्रोपलक्षणपरम्। तेन प्रमाणतर्कसाधनोपालम्भः पञ्चावयवोपपन्नः सिद्धान्ताविरुद्धः पक्षप्रतिपक्षपरिग्रह इत्येतस्य[५]वादपदवर्जं **समस्तस्य** लक्षणस्यातिदेशः। नियमस्त्वार्थो न संबध्यत इति सिद्धम्। **लक्षणमात्रस्येति** उक्तमात्रस्य, नार्थस्य नापि लक्ष्यपदस्येत्यर्थः। अत्रैव दृष्टान्तमाह—**यथान्यत्र वैशेशिकतन्त्रे**। **न नियमार्थे पदे** इत्युपलक्षणम्, न प्रमाणतर्कसाधनोपालम्भपदलभ्यो[६]ऽभिप्रायनियम इत्यपि द्रष्टव्यम् ॥

पक्षान्तरमाह—**अथ वेति**। यथा गोभिर्युक्तो रथो गोरथ इति युक्तपदलोप इति। **न [७]हि नियमार्थयोरिति** एतदप्युपलक्षणं पूर्ववदेव। इह वादलक्षणं पठता **भाष्यकारेण** नियमोऽप्यतिदिष्ट इति मन्वानश्चोदयति—**भाष्यम् इदानीमिति**। परिहरति—**न सूत्रेति**। जल्पलक्षणानुकूलो यः पाठक्रमः, [८]ततोऽर्थस्वरूपमात्रं प्रतीयते न त्वार्थोऽर्थ इत्यर्थः। **यदुपपन्नम्** उक्तमात्रमित्यर्थः। [९]अत्र **भाष्यकारेण** छलादीनां निषेधार्थतया साधनाङ्गभावमाक्षिप्य परपक्षविघातेन स्वपक्षरक्षणादङ्गभाव इति दर्शितम्। तदेतद् **वार्त्तिककार** आक्षिपति—**छलजातिनिग्रहस्थानैरिति**। तत् किं निग्रहस्थानान्यप्ययुक्तानि, न चैतच्छक्यमित्यत आह—**छलं तावदिति**। छलजात्योराक्षेप्ययोः[१०] संपातायातानि निग्रहस्थानानीत्यभिप्रायः। **भाष्योक्तं** समाधिमाशङ्कते—**अङ्गभाव इति चेत्** इति। निराकरोति—**एतदपीति**। न हि सहस्रेणाप्यन्धैः पाटच्चरेभ्यो गृहं रक्ष्यत इत्यर्थः ॥

---

१. जल्पस्य om C  २. च om C  ३. इत्ययुक्तमि॰ C  ४. नियम्यते C  ५. पदलक्ष्यवर्जं C  ६. ॰लभ्ये C  ७. हि only in J  ८. यतो॰ K  ९. तत्र C  १०. आक्षिप्तयोः C

एवमाक्षिप्ते पार्श्वस्थः पृच्छति—**किमर्थं तर्हीति**। सिद्धान्तिन उत्तरं **साधनेति**। वादे तावद् यद्यपि न साधनविघातसमर्थानि, तथापि तेषां तत्त्वम् अविद्वान् एभिरहं[1] **साधनं विहनिष्यामीत्यनया बुद्ध्या अपहृतः** व्यामोहितः प्रवर्तते[2]। तस्माद् वादे प्रमेणोपादानमेतेषामित्यर्थः। यत्र त्वेषां तत्त्वं विद्वान् प्रवर्तते, न स वादः, किं तु जल्पो वितण्डा वेत्याह—**यत्र चैतानीति**। ननु जल्पवितण्डयोः प्रयोगात् साधनभङ्गः का[3]स्यादत आह—**न पुनरिति**। ननु यदि न साधनभङ्गं वा, कस्मात् तर्हि जल्पवितण्डयोरेषां प्रयोग इत्यत आह—**साधुसाधनोपादाने चेति**। साधुसाधनोपादाने च वादिना कृते परेण प्रतिवादिना जिगीषुणाकुलितबुद्धिर्द्राक् पारमार्थिकमुत्तरमप्रतिपद्यमानश्छलादीनि प्रयुङ्क्ते। किमर्थमित्यत आह—**कदाचिदिति**। यथाकथञ्चित् प्रयोगेण। तदनेन प्रकारेण तत्त्वसंरक्षणार्थत्वात् [4]नासदाचारः। न च शास्त्रकाराणां छलादिव्युत्पादनमसदृशम्, न च [5]खटचपेटाद्यभिधानप्रसङ्गः, वाग्युद्धे[6] तेषामप्रसङ्गादिति। **न बाधेति**। नैकेनापरं तदैवापोद्यत इत्यर्थः। शेषं सुगमम् ॥२॥

॥ परिशुद्धिः ॥

उभयसाधनवत्त्वसाधर्म्याद् वादानन्तरं जल्पोद्देशसिद्धिः। तत्सिद्धौ सत्यां संगतिम् आह—**उद्देशेति**। ननु जल्पस्योभयसाधनवत्त्वासंभवान्न वितण्डाव्यवच्छेदः। तथा हि यदि पूर्वसाधनं दूषितम्, निगृहीतस्तर्हि वादी, जितं द्वितीयेन। निवृत्ता कथा। न दूषितं चेत्—उत्तराभासवचनेन चावचनेन च निगृहीतस्तर्हि द्वितीयो, जितं प्रथमेन, निवृत्ता कथेति नास्ति द्वितीयसाधनावसर इति। नैतदेवम्। यथा हि वादे स्वसाधनस्थितौ परसाधननिवृत्तौ च तत्त्वनिर्णयो न विपर्यये, तथा जल्पेऽपि स्वसाधनस्थितौ परसाधननिवृत्तौ च विजयो विपर्यये भङ्गः। उभयस्थितिनिवृत्त्योः परिषदेव विजयते। तदयं जल्पप्रवृत्तिक्रमः वादिनि साधनमात्रं प्रयुज्य संक्षेपतो विस्तरतो वा आभासान् उद्धृत्य विरते सति उच्यमानग्राह्यनिग्रहाप्राप्तौ आभासबहिरुक्तग्राह्यनिग्रहालाभे तद्वचनार्थमवगम्यानूद्य दूषयित्वा प्रतिवादीस्वपक्षे स्थापनां प्रयुञ्जीत। अप्रयुञ्जानस्तु [8]दूषितपरपक्षोऽपि न विजयी। श्लाघ्यस्तु स्यादात्मानमरक्षन् परघातीव वीरः। तस्मिन्नप्येवं विरते सति अनुक्तोच्यमानग्राह्यनिग्रहालाभे तद्वचनमवगम्यानूद्य दूषणाङ्गं प्रति दूष्या-

---

१. प्रस्य C　२. प्रवर्तते om C　३. स्युरिति J　४. जल्पे सदा° K ; ना° om C　५. घटापटाद्य° C ; खटचपेटा = बद्धमुष्टिप्रहारः ॥　६. वाग्वादे J
७. निवृत्ता कथा om J　८. °पर° om J

भासबहिरुक्तग्राह्यनिग्रहालाभे प्रथमवादी स्थापनांशं दूषयेत् । अदूषयंस्तु रक्षितस्वपक्षोऽपि न विजयी । श्लाघ्यस्तु स्यात् वञ्चितपरप्रहार इव तमप्रहरमाणः । अनुक्तोच्यमानग्राह्याभासबहिरुक्तग्राह्यनिग्रहलाभे तु तावतैव कथाविरतिर्न साधनविचारावकाशः । शरसन्धानसमय एव यो मूर्च्छितः तद्बाणवारणतत्प्रहरणानुष्ठानवद् विफलत्वात् । तत्रानुक्तग्राह्यमप्रतिभादि । उच्यमानग्राह्यमप्राप्तकालादि । आभासबहिरुक्तग्राह्यं प्रतिज्ञाविरोधादि । एष्वसत्सु आभासचिन्ता । ततः पुनः प्रतिदूषणोक्तौ आभासबहिःप्रतिज्ञाहान्यादि । एतच्च [१]पञ्चमे प्रपञ्चनीयमिति ॥

यद्यपि निग्रहस्थानपदेनाविशेषात सर्वप्राप्तौ सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति पदद्वयातिदेशो मन्दः, तथापि **गोर्बलीवर्दन्यायेनापि** यथाश्रुतभाष्योपपत्तौ कृतं तद्भङ्गेनेति मन्यमानो **भाष्यं वार्त्तिकेन**[२] समञ्जसयन्नाह—**उक्तमात्रमित्यादि** । यद्यप्यपराधसंगूहनार्थं प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञासंन्यासहेत्वन्तरार्थान्तरनिरर्थकाविज्ञातार्थविक्षेपापसिद्धान्तानामुपादानं संभवति, तथापि न सर्वनिग्रहोपादानसंभवः । अपि च प्रमादस्खलितेऽपि छलादिभिरेव प्रत्यवस्थातुमुचितम्, निग्रहस्थानापेक्षया तेषामनुद्भटापराधत्वात् । तस्मादुद्भाव्यतयैवामीषां सर्वेषामवतारः । तथा च नायुक्तत्वमित्यभिप्रायवानाह—**तत् किमिति** । साधुसाधनोपादाने च वादिना कृत इत्युपलक्षणम् । परेण साधुसाधनोपादाने च कृत इत्यपि द्रष्टव्यम् । ननु भाष्यं दूषयित्वा किमधिकमभिहितम् ? तेनापि तत्त्वरक्षणार्थत्वप्रतिपादनादित्यत आह—**तदनेन प्रकारेणेति** । प्रकारे भाष्यम् असंगतम्, न तु प्रयोजने । ततस्तदप्येवमेव[४] नेयमिति । छलादिव्युत्पादनं [५]प्रयोज्यतयेति शेषः ॥२॥

**स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥**

**॥ भाष्यम् ॥**

स जल्पो वितण्डा भवति । किं विशेषणः ? प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्त्तत इति ॥

अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा ? यद्वै खलु [६]तत्परप्रतिषेधलक्षणं

---

१. पञ्चमे पश्चमे A २. भाष्यवार्त्तिकं A ३. प्रतिज्ञान्तर om J ४. एव om J
५. प्रयोजनतयेति J ६. तत् प्रतिपक्षप्रति° J

वाक्यं स वैतण्डिकस्य पक्षः, न त्वसौ साध्यं कञ्चिदर्थं प्रतिज्ञाय स्थापयतीति। तस्माद्यथान्यासमेवास्त्विति ॥ ३ ॥

॥ वार्त्तिकम् ॥

**स प्रतिपक्षस्थापनाहीनो वितण्डा ॥३॥** प्रतिपक्षस्थापनाहीन इति द्वितीयपक्षस्थापनाहीन इति[1]। यावदुक्तं भवति द्वितीयपक्षवादी वैतण्डिको न कञ्चित् पक्षं स्थापयतीति ॥

**अपरे** तु ब्रुवते—दूषणमात्रं वितण्डेति। दूषणमात्रमिति मात्रशब्दप्रयोगात् वैतण्डिकस्य पक्षोऽपि नास्तीति। अयुक्तं चैतत्, चतुर्वर्गस्याभ्युपगमात्। दूषणमभ्युपगच्छन् दूष्यमभ्युपैति अयथार्थावबोधं प्रतिपद्यते प्रतिपादयितारं प्रतिपत्तारं च। दूषणमात्राभ्युपगमे सति सर्वमेतत् न स्यात्। दूषणमात्राभिधानात्[2] शेषमर्थतोऽवगम्यत इति चेत्[3] ? वितण्डा वितण्डेत्येव वक्तव्यम्। यया वितण्ड्यते सा वितण्डेत्यनुगतार्थया संज्ञयैव परस्य पक्षस्य प्रवृत्तिव्याघातः[4] क्रियत इति। तस्मात् यथान्यासमेवास्तु[5] न्याय्यम् ॥३॥

॥ टीका ॥

उद्देशक्रमानुरोधेन जल्पानन्तरं वितण्डालक्षणमाह—**स—ण्डा** ॥३॥

पूर्ववादिपक्षापेक्षया प्रतिवादिन आत्मीय एव पक्षः प्रतिपक्षः। तस्य स्थापना साधनम्। [6]तया हीनः। तदनेन जल्पाद् व्यवच्छिनत्ति। तदेतदाह **भाष्यकारः—स जल्प** इति। **तयोरेकतरं** प्रतिवादी आत्मीयं पक्षं **न स्थापयतीति। परपक्षप्रतिषेधेनेति।** तत्स्थापनाप्रतिषेधेनेत्यर्थः। स्यादेतत्। यथा प्रतिवादिनः पक्षो वादिपक्षापेक्षया प्रतिपक्षः, एवं वादिपक्षोऽपि प्रतिवादिपक्षापेक्षया प्रतिपक्ष इत्युभयपक्षस्थापनाहीना वितण्डेति स्यात्, [7]इत आह—**वार्त्तिककारः—प्रतिपक्षस्थापनाहीन** इति, [8]द्वितीयपक्षस्थापनाहीन इति। प्रथमपक्षवादिनो हि स्थापनाया अभावे किं वैतण्डिक आहन्ति ? न च पक्षः शक्य आहन्तुम्। तस्मात् प्रथमपक्षवादिनोऽस्ति स्थापनेति द्वितीय एव पक्षः स्थापनाहीन इति सामर्थ्याद् युक्तमिति। अत्र **चोद्यभाष्यम् अस्तु तर्हीति।** स्थापनाया अभावे स्थाप्यः पक्षोऽपि[9] नास्ति। न ह्यन्यथा पक्षस्य

---

१. द्वितीय° इति om C　२. भ्युपगकात् C　३. चेत् om C　४. परप्रतिपत्तिविघातः C　५. अस्तु om J　६. यत्तया K　७. अतः C　८. द्वितीय° इति om C　९. अपि om C

पक्षत्वमिति भावः । परिहरति—**यद् वै खलु तदिति** । वैतण्डिकोऽपि हि वादी पारिशेष्यात् मत्पक्षः सेत्स्यतीति बुद्ध्या स्वपक्षमस्थापयन् परपक्षस्थापनामाहन्ति । तस्मात् **परपक्षप्रतिषेधलक्षणं वाक्यम् अस्य पक्षः** परपक्षनिषेधेन पारिशेष्यात् पक्षसिद्धिहेतुत्वादुपचारतः । तस्मादस्ति वैतण्डिकस्य पक्षः । न तु परपक्षप्रतिषेधादन्या स्थापना । तेनास्य पक्षोऽस्ति, नास्ति च[1] पक्षस्थापना । तदिदमुक्तम्—**न कश्चिदर्थं प्रतिज्ञाय स्थापयतीति** । पक्षत्वं तु [2]योग्यतामात्रेण, न तु स्थाप्यमानतयेति ॥

**अस्तु तर्हीति** भाष्यार्थमाह—**वार्त्तिककारः अपरे त्विति** । तस्मात् प्रतिपक्षहीनो वितण्डेति वक्तव्यमित्यर्थः । परिहरति—**अयुक्तं चैतदिति** । न तावदस्थाप्यमानस्यापि स्थापनार्हतालक्षणा पक्षता न युज्यते, तस्मात् न वैतण्डिको दूषणादन्यत् किञ्चिदभ्युपगच्छतीति । अनभ्युपगमात् पक्षोऽस्य नास्तीति वक्तव्यम् । तथा च चतुर्वर्गाभ्युपगमे विरोधोऽनभ्युपगमे वा नायं लौकिको न परीक्षक इति प्रसङ्ग इति भावः । [3]प्रतिपादयितुरयथार्थावबोधं प्रतिपत्तारं चात्मानमित्यर्थः । यस्तु मन्यते चतुर्वर्गाभ्युपगमेऽपि दूषणमात्रं वितण्डेत्येव वक्तव्यं लाघवायेति, तन्मतमुपन्यस्यातिप्रसङ्गापादनेन दूषयति—**दूषणमात्रेति** । समाख्यानिर्वचनसामर्थ्यादिव गम्यत इत्यर्थः । उपसंहरति—**तस्मादिति** । तदनेनार्थतो **यद् वै खल्वित्यादि भाष्यं** व्याख्यातम् ॥ ३ ॥

॥ परिशुद्धिः ॥

ननु वितण्डायाः प्रतिपक्षस्थापनाहीनत्वमसंगतम्, एकसाधनतायां पुरुषशक्तेरप्यनिरूपणात् । तथात्वे वा कृतं जल्पेन प्रयासबहुलेन, अन्ततः सत्प्रतिपक्षतयापि द्वितीयसाधनप्रवेशात् । नैतदेवम्, पुरुषशक्तिनिरूपणाविशेषेऽपि जल्पे [4]प्रत्यवेक्षापराघातोभयगोचरशक्तिनिरूपणात्[5], कृतविद्यक्षत्रियद्वययुद्धवत् । वितण्डायां तु दशरथदशाननतनयतमस्विनीयुद्धवत्, काकोलूकयुद्धवद् वा । एकस्य स्वप्रत्यवेक्षाशक्तिरपरस्य पराघातनैपुणं निरूप्यते । कथमयं विशेष इति चेत ? वादिनोरभिप्रायवशादनुविधेयस्थेयानुरोधात् वेति न किञ्चिदेतत् द्वितीयसाधनप्रवेशस्तु दूषणतया न प्रतिषिध्यते । अपि तु स्थापनात्वेन । न चायं नियमः, असिद्धत्वादुद्भावनेनापि कथापर्यवसानादिति, समाख्यानिर्वचनसामर्थ्यात् एव गम्यत इति । न चैवमस्त्विति वाच्यम्, जल्पेऽपि परपक्षाघातस्य गतत्वेनातिव्यापक-

---

१. तु C २. तद्योग्य° C ३. अव° om J ४. स्वप्रत्य° M
५. °गोचर° om JM

त्वात् । मात्रग्रहणात् तु तन्निवृत्तिरिति चेत्—न, तेन साधनानिवृत्तेः । तत्र साधनोपालम्भसमुदाये दूषणमात्रं वितण्डेत्येवमप्युपपत्तेरिति ॥ ३ ॥

॥ इति कथालक्षणप्रकरणम् ॥

॥ हेत्वाभासलक्षणप्रकरणम् ॥

॥ भाष्यम् ॥

हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः[1] । त इमे—

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता हेत्वाभासाः ॥ ४ ॥**

॥ वार्त्तिकम् ॥

हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदवभासमानाः त[3] इमे—**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालातीता**[4] **हेत्वाभासाः ॥ ४ ॥** किं पुनर्हेतुभिः अहेतुनां सामान्यम् येन हेतुवदाभासन्ते इति ? प्रतिज्ञानन्तरं प्रयोगः सामान्यम् । यथैव हेतवः प्रतिज्ञानन्तरं प्रयुज्यन्ते, एवं हेत्वाभासा अपीत्येतत्[5] सामान्यम् । अन्यतमलिङ्गधर्मानुविधानं वा । यद् वा यत्साधकस्य[6] लिङ्गस्य [7]त्रैलक्षण्यं धर्मस्तत्रैकतमधर्मानुविधानम्, द्विलक्षणस्यान्यतरधर्मानुविधानं वा विवक्षितम् । साधकासाधकत्वे तु विशेषः । हेतोः साधकत्वं धर्मः, असाधकत्वं हेत्वाभासस्य । किं पुनस्तत् ? समस्तलक्षणोपपत्तिः असमस्तलक्षणोपपत्तिश्च । कः पुनरस्य सूत्रस्यार्थः ? विभागोद्देशो नियमार्थ इत्युक्तम् ।[8] किं पुनरनेन विभागोद्देशेन नियन्तव्यम् ? अनेकधा प्रसृतस्य हेतुहेत्वाभासस्य[9] विस्तरः संक्षेप्तव्य इति ॥

कियता पुनर्भेदेनायं हेतुहेत्वाभासः प्रसृत इति ? कालपुरुषवस्तुभेदानुविधानेन अपरिसंख्येयः । सामान्यतः साध्यवस्तूपग्रहेण हेतुहेत्वाभासभेदः प्रपञ्चयमानः षट्सप्ततिशतम् । तत्र साध्यव्यापकधर्मभेदः षोडशधा । साध्यैकदेशवृत्तिधर्मोऽप्येवम् । एवं साध्यावृत्तिधर्मभेद इति । विशेषणविशेष्यासिद्धिभेदात् चतुःषष्टिः । एवं [10]समर्थासमर्थविशेषणविशेष्यभेदादिति ॥

---

१. सामान्याद्धेतु° om J २. समातीतकालाः J ३. ते om J ४. °मातीतकालाः C ५. °त्येव C ६. साधनस्य C ७. त्रैविध्यं तदेक° C ८. पृः १८३. २० ९. विसृतस्यहेत्वा° J १०. समर्था° om J

तत्र साध्यव्यापकधर्मभेदानां षोडशानामुदाहरणानि । तत्र

१. साध्यतज्जातीयान्यव्यापकः, प्रमेयत्वान्नित्योऽनित्यो वेति ।

२. साध्यतज्जातीयव्यापको विपक्षैकदेशवृत्तिः, गौरयं विषाणित्वात् ।

३. साध्यतज्जातीयव्यापको विपक्षावृत्तिः, अनित्यः शब्द उत्पत्तिधर्मकत्वात् ।

४. साध्यव्यापकस्तज्जातीयावृत्तिर्विपक्षव्यापकः, नित्य शब्द उत्पत्तिधर्मकत्वात् ।

५. साध्यव्यापकस्तज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिः, नित्यः शब्दः [1]सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वाद् द्व्यणुकवत् ।

६. साध्यव्यापकस्तज्जातीयविपक्षावृत्तिर्यथा नित्यः शब्दः सामान्यविशेषवत्त्वे सति श्रावणत्वात् घटादिवत् ।

७. साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षव्यापकश्च, अगौरयं विषाणित्वात्,

८. साध्यव्यापकस्तज्जातीयविपक्षैकदेशवृत्तिः, नित्यः शब्दोऽस्पर्शवत्त्वात् ।

९. साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः, अनित्यः शब्दः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् । सामान्यविशेषवत इति सामान्यविशेषसमवायानां निराकरणम् । अस्मदादिप्रत्यक्षत्वादिति परमाणूनाम् । बाह्यकरणप्रत्यक्षत्वादित्यात्मनः ।

१०. साध्यतज्जातीयव्यापकोऽविद्यमानविपक्षः[2] सिद्धान्तभेदाश्रयणेनैकान्तवादिनः, अनित्यः शब्द उत्पत्तिधर्मकत्वात् ।

११. साध्यव्यापकस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः, अनित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात् ।

१२. साध्यव्यापकस्तज्जातीयावृत्तिरविद्यमानविपक्षः, अनित्यः शब्दः श्रावणत्वात् ।

१३. साध्यव्यापकोऽविद्यमानसजातीयो[3] विपक्षव्यापकः, नित्यः शब्द उत्पत्तिधर्मकत्वात् ।

१४. साध्यव्यापकोऽविद्यमानसजातियो[3] विपक्षैकदेशवृत्तिः, नित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात् ।

१५. साध्यव्यापकोऽविद्यमानसजातीयो[3] विपक्षावृत्तिः, नेदं निरात्मकं जीवच्छरीरम्, अनिन्द्रियाधिष्ठानत्वप्रसङ्गात् ।

१६. पक्षव्यापकोऽविद्यमानसपक्षविपक्षः, सर्वं नित्यं प्रमेयत्वात् ।

---

१. °विशेषवत्त्वे सत्यस्म° C २. °न्तभेदेनै° C ३. °सजातिः J

त एते पक्षव्यापकाः षोडश । एषां पञ्च हेतवः । शेषाः हेत्वाभासाः । तत्रान्वयव्यतिरेकिणौ द्वौ विपक्षावृत्ती तृतीयनवमौ । एकान्तवादिनोऽन्वयिनावेव दशमैकादशौ । व्यतिरेकि[1] पञ्चदश इति ॥

अथ साध्यैकदेशवृत्तयः,

१. साध्यैकदेशवृत्तिस्तज्जातीयविपक्षव्यापकः, पृथिव्यप्तेजोवाय्वाकाशानि अनित्यानि अगन्धवत्त्वात् ।

२. साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिश्च, सामान्यविशेषवदस्मदादिबाह्यकरणप्रत्यक्षे वाङ्मनसे अनित्यत्वात् ।

३. साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षावृत्तिः, अनित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात् ।

४. साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिर्विपक्षव्यापकः, नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात् ।

५. साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिः[2], सामान्यविशेषवद् अस्मदादिबाह्यकरणप्रत्यक्षे वाङ्मनसे नित्यत्वात् ।

६. साध्यैकदेशवृत्तिस्तज्जातीयविपक्षावृत्तिः अनित्यः शब्दो विभागजविभागासमवायिकारणकत्वात्[3] ।

७. साध्यतज्जातीयैकदेशवृत्तिर्विपक्षव्यापकः, अनित्याः परमाणवोऽगन्धवत्त्वात् ।

८. साध्यतज्जातीयविपक्षैकदेशवृत्तिः, अनित्ये वाङ्मनसे अमूर्तत्वात् ।

९. साध्यतज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः, अनित्ये वाङ्मनसे [4]सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् ।

१०. साध्यैकदेशवृत्तिस्तज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयणेन, अनित्ये रूपविज्ञाने अमूर्तत्वाद् वेदनादिवत् ।

११. साध्यतज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः[5], अनित्ये चक्षुर्विज्ञाने अमूर्तत्वात् रूपादिवत् ।

१२. साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिरविद्यमानविपक्षः, अनित्ये [6]वाङ्मनसे श्रावणत्वात् ।

---

१. अनन्वयी J २. वृत्तिश्च J ३. °कारणत्वात् ४. सामान्यवतो° C ५. °विजातिः J ६. शब्दनभसी C

१३. साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षव्यापकः, नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात् ।

१४. साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षैकदेशावृत्तिः[1], नित्ये चक्षुर्विज्ञाने अमूर्तत्वात्[2] ।

१५. साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षावृत्तिः[3], नेदं निरात्मकं शरीरम् अनिन्द्रियाधिष्ठानत्वप्रसङ्गात् ।

१६. साध्यैकदेशवृत्तिरविद्यमानसपक्षविपक्षः, सर्वमनित्यं [4]मूर्तत्वादिति ।

एते च साध्यैकदेशवृत्तयः षोडश यथोक्ताः सर्वे हेत्वाभासाः ॥

अथ साध्यावृत्तयः,

१. साध्यावृत्तिस्तज्जातीयविपक्षव्यापकः, अनित्या पृथिवी अगन्धवत्त्वात् ।

२. साध्यावृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिश्च, अनित्यः शब्दः अश्रावणत्वात् ।

३. साध्यावृत्तिस्तज्जातीयव्यापको विपक्षावृत्तिः, अर्थः शब्दः अश्रोत्रग्राह्यसामान्यवत्त्वात् ।

४. साध्यतज्जातीयावृत्तिर्विपक्षव्यापकः, अर्थः शब्दः असामान्यवत्त्वात् ।

५. साध्यतज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिश्च[5], कारणवान् शब्दोऽनर्थत्वात् ।

६. साध्यतज्जातीयविपक्षावृत्तिः, नित्यः शब्दोऽसत्त्वात् ।

७. साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिर्विपक्षव्यापकः, अस्पर्शः शब्दो द्रव्यत्वात् ।

८. साध्यावृत्तिस्तज्जातीयविपक्षैकदेशवृत्तिः, कारणवान् शब्दो मूर्तत्वात् ।

९. साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः, आश्रयवान् शब्दश्चाक्षुषत्वात्, औलूक्यपक्षे ।

१० साध्यावृत्तिस्तज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयेण, अनित्यः शब्दोऽश्रावणत्वात् ।

११. साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः, अनित्यः शब्दो मूर्तत्वात् ।

१२. साध्यतज्जातीयावृत्तिरविद्यमानविपक्षः[6], अनित्यः शब्दोऽसत्त्वात् ।

---

१. °वृत्तिश्च C २. मूर्तत्वात् C ३. वृत्तिश्च C ४ अमूर्तत्वात् J ५. विपक्षवृत्तिश्च C ६. विजातिः J

१३. साध्यावृत्तिरविद्यमानसपक्षो[1] विपक्षव्यापकः, नित्यः शब्दोऽश्रावणत्वात् ।

१४. साध्यावृत्तिरविद्यमानसजातिर्विपक्षैकदेशवृत्तिः, नित्यः शब्दो मूर्तत्वात् ।

१५. साध्यावृत्तिरविद्यमानसजातिर्विपक्षावृत्तिः, नित्यः शब्दोऽसत्त्वात् ।

१६. साध्यावृत्तिरविद्यमानसपक्षविपक्षः[2], अनित्यं सर्वमसत्त्वात् ।

त एते षोडश साध्यावृत्तयो हेत्वाभासाः ॥

विशेषणविशेष्यासिद्धिभेदात् चतुःषष्टिर्भेदा[3] भवन्तीत्युक्तम् । तत् कथम् ? व्यापकाव्यापकविशेषणयोगात् । ये[4] साध्यव्यापकाः षोडश, ये च पक्षैकदेशवृत्तयस्त [5]एते विशेषणविशेष्यासिद्धिभेदेन चतुःषष्टिर्भवन्तीति ।

तत्र व्यापकानां तावदुदाहरणानि । अनित्यः शब्दोऽनभिधेयत्वे सति प्रमेयत्वात् इति विशेषणासिद्धः । प्रमेयत्वे सत्यनभिधेयत्वादिति विशेष्यासिद्धः । एवं सर्वेषु साध्यव्यापकेषु विशेषणविशेष्यासिद्धिभेदो वक्तव्यः[6] । तान्येव चोदाहरणानि साध्यैकदेशवृत्तीनां तूदाहरणम्, पृथिव्यप्तेजोवाय्वाकाशान्यनित्यानि अनभिधेयत्वे सति अगन्धवत्त्वात्, विशेषणासिद्धः । अगन्धवत्त्वे सत्यनभिधेयत्वादिति विशेष्यासिद्धः । एवं सर्वेषु साध्यैकदेशवृत्तिषु । एवमसमर्थविशेषणासमर्थविशेष्याश्चतुःषष्टिरेव द्रष्टव्याः, यथा अनित्यः शब्दः कृतकत्वे सति प्रमेयत्वात्, प्रमेयत्वे सति कृतकत्वादिति । एवं सर्वेषु साध्यैकदेशवृत्तिषु[7] । एवं सन्दिग्धविशेषणविशेष्यभेदा अपि द्रष्टव्याः, यथा मयूरशब्दोऽयं षड्जादिमत्त्वे सति अवर्णात्मकत्वात्, अवर्णात्मकत्वे सति षड्जादिमत्त्वात् । त एते उभयपक्षसंप्रतिपन्ना विद्यमानसाध्यधर्मा उदाहृता इति । एवमन्यतरासिद्धा इति[8] व्यापकाव्यापकभेदेन द्वात्रिंशकं शतम् । ते च [9]पुनर्व्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शतं द्रष्टव्याः । एवमप्रसिद्धाश्रयोभयान्यतरपक्षाप्रसिद्ध्या द्वात्रिंशकं शतम् । ते च पुनः पूर्ववदेव[10] द्वानवतं शतम् । यथाग्निमान् देशो धूमवत्त्वात् । अस्ति चात्मा इच्छादिगुणत्वात् । असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम्—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वात् । अव्यापकासमर्थविशेष्याणामुदाहरणम्—अनित्यः शब्द प्रत्ययभेदभेदित्वेनोपलभ्यमानत्वात्[11] । व्यधिकरणविशेष्याणामुदाहरणम्, अस्ति प्रधानं भेदानामन्वयदर्शनात् ।

---

१. सजातिः C २. °सजातिवि° C ३. भेदाः om C ४. य एव C ५. एते om C ६. °सिद्धभेदो द्रष्टव्यः C ७. शेषेषूदाहरणेषु C ८. इति om J ९. °व्यधिकरणसन्दि° C १०. पूर्ववद्भेदेन द्रष्टव्याः J ११. °भेदित्वे सत्युप° J

व्यधिकरणविशेषणानामुदाहरणम्, रूपरसगन्धस्पर्शशब्दाश्चन्दनशब्दादत्यन्तं विभिन्नार्थाः,[१] समुदायसमुदाय्यसंभवे सति तेन व्यपदिश्यमानत्वात्[२] । एतदेव व्यधिकरणविशेषण-विशेष्यस्योदाहरणं विपर्ययेण[३] ॥

अन्यथासिद्धोदाहरणम्, [४]अन्येषामभ्यासात् नित्यः शब्दः । सन्दिग्धाप्रसिद्ध-विशेषणानामुदाहरणं यथा, सन्दिह्यमानधूमादिभावेऽग्निमान् देशो धूमवत्त्वे सति प्रकाश-कत्वात् । विपर्ययेण सन्दिग्धविशेष्या[५] द्रष्टव्याः । एवं सन्दिग्धाप्रसिद्धाप्रसिद्धा उभयान्यतरासिद्धा व्यापकाव्यापकभेदेन चतुःषष्टिर्भवन्तीति । ते च पुनः पूर्ववद्भेदेन शतत्रयं चतुरशीतम् । एवमन्यथासिद्धभेदो द्रष्टव्यः । एवं विरुद्धविशेषणा विरुद्ध-विशेष्याश्च[६] सर्वत्र द्रष्टव्या इति । एषां तूदाहरणानि हेत्वाभासवार्त्तिके द्रष्टव्यानि, स्वयं चाभ्यूह्यानि । त एते हेतवो हेत्वाभासाश्चासङ्कीर्णविशेषणविशेष्यभेदेन द्वे सहस्रे द्वात्रिंशके । असिद्धादिसमुच्चयेनानन्तो भेद इति । साध्यावृत्तयस्त्वसत्त्वान्न विशेषण-योगिन इत्यतो नाभिधीयन्त इति । त एते[७] विद्यमानसाध्यव्यापकाव्यापकधर्माः प्रपञ्चत उक्ताः । तत्र मुख्यासिद्धभेदाः षोडश । त एते पक्षावृत्तयः । अनैकान्तिकाः त्वसङ्कीर्णा मुख्यतः षडेव । साध्यव्यापकवर्गे विरुद्धाश्चत्वार एव[८] । तस्मिन्[९] अन्तिमस्तु पक्षमात्रधर्मत्वादनुपसंहार्यः । शेषा हेत्वाभासाः । तेऽसिद्धानैकान्तिक-विरुद्धाव्यापकासिद्धभेदेन[१०] सङ्कीर्णा उदाहरणेषु स्वयमभ्यूह्या इति ॥

केचित् तु विरुद्धाव्यभिचारिणमनैकान्तिकं वर्णयन्ति । तन्न, असत्त्वात् । नायमस्तीत्युक्तम् । उपेत्य तस्य पञ्चविंशतिधा भेदं[११] पञ्चानां हेतूनां सरूपासरूपप्रति-बन्धात्[१२] पञ्च पञ्चका भवन्तीति । तेषां तु सर्वेषां नोदाहरणानि सन्तीति । तेन नोदाह्रियन्ते । त एते हेत्वाभासाः संक्षेपेणेयता[१३] भेदेन भेदवन्तः । तेषां संग्रहार्थं हेत्वाभासानां विभागोद्देशार्थं **सूत्रम्**[१४] । लक्षणत एव पञ्चत्वं गम्यत इति चेत् ? यान्येतानि पञ्च हेत्वाभासानां लक्षणसूत्राणि तैरेव पञ्चत्वं गम्यते इति नियमार्थं सूत्र-मनर्थकम् । नानर्थकम्, लक्षणस्येतरेतरव्यवच्छेदकत्वात् । [१५]इतरेतरव्यवच्छेदकं लक्षणम्, न पुनर्नियमार्थम् । न हि नियमो लक्षणेन गम्यते इति ॥४॥

---

१. °त्यन्ताभि° C २. व्यपदेशात् C ३. एतदेव° विपर्ययेण om J ४. अन्येषाम् om J ५. वक्तव्याः C ६. °विशेषणवि° C ७. °व्यापकाव्यापक° om J ८. एव om J ९. तस्मिन्नेव J १०. अव्यापकाव्यापकभे° J, तेऽसिद्धानैकान्तिका विरुद्धाव्यापक-प्रसिद्धाव्यापकभेदेन Cvar. ११. भेदः J १२. °प्रतिसंधानात् C var १३. °णैतावता C १४. °द्देशसू° J १५. इतरेतर° J om C

॥ टीका ॥

उद्देशक्रमानुरोधेन वितण्डानन्तरं हेत्वाभासेषु लक्षयितव्येषु अर्थाक्षिप्तसामान्यलक्षणमेषां विभागोद्देशपरं **सूत्रम्—सव्य-साः** ॥४॥

तद्व्याख्यानपरं भाष्यं समाख्यानिरुक्तिवशेन सामान्यलक्षणं प्रतिपादयन्[1] **वार्त्तिकारः** पठति—**हेतुलक्षणाभावादिति**। पृच्छति—**किं पुनरिति**। न ह्यन्यस्यान्यत्वमात्रेण सादृश्यम्, मा भूत् सर्वस्य सर्वेण सादृश्यमिति भावः। उत्तरम्—**प्रतिज्ञेति**। प्रयोगगतं सामान्यमुक्त्वा प्रयोज्यगतमाह—**अन्यतमेति**। अबाधितविषयतासत्प्रतिपक्षत्वे[2] सती अप्यविवक्षित्वा त्रैलक्षण्यद्वैलक्षण्याभिधानं द्रष्टव्यम्। शेषमतिरोहितम् ॥

षट्सप्ततं शतं गणयति—**तत्र साध्यव्यापकेति**। एतस्यां त्रिषोडश्यां साध्यव्यापकसाध्यैकदेशवृत्तिधर्मभेदात् षोडशीद्वयं विशेषणविशेष्यासिद्धिभेदात् चतुःषष्टिः। एवं समर्थासमर्थविशेषणविशेष्यभेदात्[3] चतुःषष्टिः। तदेतत् चतुःषष्टिद्वितयमष्टाविंशं शतं पूर्वया त्रिषोडश्या सह षट्सप्ततं शतम्। साध्यव्यापकानां धर्मविशेषाणामुदाहरणान्याह—**तत्रेति**। विपक्षव्याप्त्यव्याप्तिभ्यां प्रथमद्वितीयौ साधारणौ, तृतीयोऽन्वयव्यतिरेकी साध्यतज्जातीयव्यापको हेतुरेव। विपक्षव्याप्त्यव्याप्तिभ्यां चतुर्थपञ्चमौ विरुद्धौ हेत्वाभासौ। यत्र विपक्षे न वृत्तिस्तं दर्शयति—**द्व्यणुकवदिति**। षष्ठोऽविद्यमानसपक्षविपक्षोऽसाधारणः, अत एवाह[4]—**घटादिवदिति**। सप्तमाष्टमौ[5] विपक्षव्याप्त्यव्याप्तिभ्यां साधारणौ। नवमस्तु सपक्षैकदेशवृत्तिरन्वयव्यतिरेकी हेतुरेव। दशमैकादशौ सपक्षव्याप्त्यव्याप्तिभ्यामन्वयिनौ हेतू। द्वादशस्तु अविद्यमानविपक्षः असाधारणः। त्रयोदशचतुर्दशौ त्वविद्यमानसपक्षौ विपक्षव्याप्त्यव्याप्तिभ्यां विरुद्धौ। पञ्चदशोऽपि व्यतिरेकी हेतुरेव। षोडशस्तु [6]अविद्यमानसपक्षविपक्षोऽसाधारणः ॥

यदि बाह्यकरणप्रत्यक्षे वाङ्मनसे इति साध्येत [7]तदा नानित्यत्वं सपक्षव्यापकं स्यात्, सामान्ये बाह्यकरणप्रत्यक्षेऽभावात्। अतः साध्यधर्मं विशिनष्टि—**सामान्यविशेषवदिति**। **अनित्ये रूपविज्ञाने अमूर्तत्वादिति**। [8]रूपविज्ञानस्कन्धातिरिक्तानां वेदनासंज्ञासंस्कारस्कन्धानामनित्यतया सपक्षाणां व्यापकममूर्तत्वमिति[9]।

---

१. °णप्रतिपादकं C  २. °त्वासत्प्रतिपक्षितत्वे C  ३. °विशेषणभे° C  ४. आह om J  ५. असपक्ष° C  ६. °सपक्ष om C  ७. तदा om J  ८. °विज्ञान° om J  ९. °त्वादिति J

तज्जातीयैकदेशवृत्तित्वममूर्तत्वस्य दर्शयितुं यत्र न वर्तते तत्पुरःसरमुदाहरणं **रूपादिवदिति** ॥

**अनित्यः शब्दोऽश्रावणत्वात्** इति नित्ये शब्दत्वे न वर्तते । **अर्थः शब्द** इति, शब्दो धर्मी । अर्थ इति साध्यो[1] धर्मः, द्रव्यगुणकर्मणामन्यतम इत्यर्थः । यद्यश्रोत्रग्राह्यत्वादित्युच्येत, ततः सामान्यादिष्वनर्थेषु विपक्षेष्वपि वर्तेत । अत उक्तम्—**अश्रोत्रग्राह्यसामान्यवत्त्वादिति** । अश्रोत्रग्राह्यं च तत् सामान्यवच्चेति विग्रहः । ननु चाक्षुषत्वं विपक्षवृत्ति समवायस्यानाश्रितस्य चाक्षुषत्वादित्यत उक्तम्—**औलूक्यपक्षे** इति । **सिद्धान्तभेद** इति, **सौत्रान्तिकानाम्** इत्यर्थः । असमर्थविशेष्यस्योदाहरणम्—**कृतकत्वे सति प्रमेयत्वादिति** । असमर्थविशेषणस्योदाहरणम्—**प्रमेयत्वे सति कृतकत्वादिति** । निरपेक्षं खलु कृतकत्वमनित्यत्वे साध्ये समर्थम्, प्रमेयत्वं त्वन्यापेक्षम् असमर्थमित्यर्थः । तदेवं त्रिषोडश्या प्रकृत्याष्टचत्वारिंशद् भवन्ति हेतुहेत्वाभासाः[3] । व्यापकाव्यापकभेदेन तु द्विषोडशी यदा विशेषणविशेष्यासिद्धया चोभयसंप्रतिपन्नया असमर्थविशेषणविशेष्यतया[4] सन्दिग्धविशेषणविशेष्यतया चोभयसंप्रतिपन्नया विक्रियते तदा चतुःषष्टित्रयेण द्वानवतं शतं भवति । वाद्यसिद्धप्रतिवाद्यसिद्धतया उभयान्यतरसन्दिग्धतया च चतुःषष्टिद्वयेनाष्टाविंशकं शतमपरम् । तदिदम् **अन्यतरासिद्धा** इत्यनेन **वार्तिककृता** सूचितम्, द्वाभ्यामूना त्रिंशद् द्वात्रिंशदिति कथञ्चिद् व्युत्पत्त्या । **ते पुनर्व्यापका**व्यापका व्यधिकरणविशेषणविशेष्यव्यधिकरणसन्दिग्धविशेषणविशेष्यव्यधिकरणासमर्थविशेषणविशेष्यभेदेन चतुःषष्टित्रयेण **द्वानवतं शत**मपरम् ॥

एवमप्रसिद्धाश्रयविशेषणविशेष्या उभयान्यतरपक्षाप्रसिद्धया अष्टाविंशकं शतम् । अत्रापि द्वात्रिंशकमिति पूर्ववद् व्याख्येयम् । अन्यतरमात्रमत्र विवक्षितं न तु वादिप्रतिवादिभेदः । ते पुनरप्रसिद्धाश्रयाः पूर्ववद्भेदेन व्यधिकरणविशेषणविशेष्यसन्दिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन चतुःषष्टित्रये सति द्वानवतं शतम् । तदेवमनन्तराभ्यां द्वानवतशताभ्यां शतत्रयं चतुरशीतं यत् [5]तदेवाष्टाविंशकशताभ्यां द्वानवतेन च शतेन संपिण्डितं द्वात्रिंशदुत्तराष्टशती विकारभूता भवति । अष्टाचत्वारिंशत् प्रकृतयः पश्चात् निवेशनीया इति । उभयाप्रसिद्धाश्रयविशेष्यम् उदाहरति— **यथा अग्निमान् देशो धूमवत्त्वात्** । उक्तं हि प्राग् यथा

१. साध्यते J २. न विपक्षावृ° C ३. हेतु° om C ४. °तया उभयसम्प्रतिपन्नया C ५. °ष्टाचत्वारिंशक° C

न देशोऽग्निमत्तया साध्योऽपि तु धूमविशेष एवेति । [1]अन्यतरासिद्धाश्रयोदाहरणमाह— **अस्ति चात्मा इच्छादिगुणत्वादिति** । आश्रयासिद्धविशेषणादयोऽप्युहनीयाः । **असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम्** । असमर्थाश्च तेऽव्यापकाश्च, व्यधिकरणतया असिद्धाश्चेति विग्रहः । **अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वादिति** कृतकत्वस्यैव विशेष्यस्य सामर्थ्यादसमर्थमनित्यत्वे प्रयत्नानन्तरीयकत्वम्, अव्यापकं च स्तनयित्नुशब्दानामव्यापकत्वात् । व्यधिकरणतया असिद्धं च कोष्ठवायुताल्वादिक्रियाया एव प्रयत्नानन्तरीयकत्वम्, न [2]त्वाद्यस्यापि शब्दस्य, प्रागेव तु श्रोत्रसमवायिन इति । कृतकत्वे सति प्रयत्नानन्तरीयकत्वादिति चासमर्थाव्यापकासिद्धविशेष्याणामुदाहरणं द्रष्टव्यम् ॥

वैभवेन त्वसिद्धतावर्जमुदाहरति—**अव्यापकासमर्थविशेष्याणामुदाहरणम्— अनित्यः शब्दः प्रत्ययभेदभेदित्वेनोपलभ्यमानत्वात्**[3] । उपलभ्यमानत्वं हि नित्येऽप्यस्तीति व्यभिचारादसमर्थम् । कारणभेदभेदित्वमेव तु विशेषणं समर्थमव्यभिचारादिति । केवल**व्यधिकरणविशेष्याणामुदाहरणम्** अस्ति प्रधानं भेदानां गोघटादीनां सुखदुःखमोहात्मकत्वेनान्वयदर्शनादिति । अन्वयदर्शनं हि भेदाधिकरणतया न प्रधानाधिकरणमिति, व्यधिकरणमिति व्यधिकरणं विशेष्यम् । केवल**व्यधिकरणविशेषणानामुदाहरम्—रूपरसगन्धस्पर्शशब्दाः चन्दनशब्दादत्यन्तं विभिन्नार्थाः समुदायसमुदाय्यसंभवे सति** रूपादीनामर्थानां रूपादिशब्दानां च तेन चन्दनशब्देन व्यपदिश्यमानत्वात् । चन्दनस्य रूपादय इति समुदायसमुदाय्यसंभवो रूपादिषु व्यपदेशश्च रूपादिशब्देष्विति व्यधिकरणं विशेषणमित्यर्थः । तदनेन प्रपञ्चेन द्वात्रिंशदुत्तराष्टशती दर्शिता ॥

संप्रति द्वानवतशतयुग्मान्तरं दर्शयितुमुदाहरणमाह—**अन्यथासिद्धोदाहरणं नित्यः शब्दोऽभ्यासात्** । सेयं क्रियाभ्यावृत्तिर्यथा शब्दानित्यत्वेऽप्युपपद्यते तथा द्वितीये दर्शयिष्यते[4] । सिंहावलोकितन्यायेन व्यधिकरणविशेष्यं सन्दिग्धविशेषणमुदाहरति—**सन्दिग्धाप्रसिद्धेति** । विशेषणशब्दः तन्त्रेण विशेषणे विशेष्ये च कर्मकरणसाधनतया प्रयुक्तो वर्तते । तेन सन्दिग्धं विशेषणम् अप्रसिद्धं व्यधिकरणतया विशेष्यं येषां तेषामुदाहरणमित्यर्थः । यथा सन्दिह्यमाने धूमादिभावेऽग्निमान् देशो धूमवत्त्वे सति प्रकाशकत्वात्, धूमवत्त्वं विशेषणं सन्दिग्धम् । प्रकाशकत्वं च विशेष्यं व्यधिकरणम् ।

१. तरप्र° C २. ह्याद्य° J ३. भेदभेदेनो C ४. द्र: २।२।३०

तत् खलु वह्नेर्धर्मो न देशस्येति। अप्रसिद्धविशेषणसन्दिग्धविशेष्याणामुदाहरणं[1] दर्शयति—**विपर्ययेणेति**। अप्रसिद्धेत्यपि द्रष्टव्यम्। अग्निमान् देशः प्रकाशकत्वे सति धूमवत्त्वादिति ॥

संप्रति द्वानवतशतयुग्मान्तरं दर्शयितुं भूमिरचनां करोति—**एवमिति**। ये ये सन्दिग्धासिद्धा व्यापकाव्यापकभेदेन द्वात्रिंशत् त एवोभयान्यतरासिद्ध्या चतुःषष्टिर्भवन्ति ततः किमित्यत आह—ते चतुःषष्टितामापन्नाः **पूर्ववद्भेदेन** व्यधिकरणविशेषणविशेष्यसन्दिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन[2] तावच्चतुःषष्टित्रयमित्येकं द्वानवतं शतम्। अपरं चाश्रयासिद्धव्यधिकरणविशेषणविशेष्यसन्दिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन[3] द्वानवतं शतम्। तदिदं चतुरशीतं शतत्रयं सन्दिग्धासिद्धमाश्रित्य। अपरमपि द्वानवतशतयुग्मान्तरमन्यथासिद्धमाश्रित्याह—**एवमन्यथासिद्धभेदो द्रष्टव्यः** ॥

[4]अन्यथासिद्धभेदोऽपि हि व्यधिकरणविशेषणविशेष्यसन्दिग्धासमर्थविशेषणविशेष्यभेदात् चतुःषष्टित्रयमिति। पुनश्च स एवान्यथासिद्ध आश्रयासिद्धव्यधिकरणविशेषणविशेष्यसन्दिग्धासमर्थविशेषणविशेष्यभेदात् चतुःषष्टित्रयमिति द्वानवतशतयुग्मेन शतत्रयं चतुरशीतम्। अपरमपि द्वानवतशतयुग्मकमाह—एवं [5]**विरुद्धविशेषणा विरुद्धविशेष्याश्चेति**। विरुद्धविशेषणविशेष्या[6] अपि हि व्यधिकरणविशेषणविशेष्यसन्दिग्धासमर्थविशेषणविशेष्यभेदाच्चाश्रयासिद्धव्यधिकरणविशेषणविशेष्यसन्दिग्धासमर्थविशेषणविशेष्यभेदाच्च शतत्रयं चतुरशीतम्। तदेवमेभिस्त्रिभिश्चतुरशीतैः शतत्रयैर्द्विपञ्चाशच्छतोत्तरं सहस्रमेकम्, द्वात्रिंशदुत्तरया अष्टशत्या सहस्रमेकं चतुरशीतिसहिता च नवशती। तदेवं प्रकृतिभूताष्टाचत्वारिंशत्प्रक्षेपेण संपिण्डितं द्वात्रिंशे द्वे सहस्रे भवत इति ॥

**तत्र असत्वादिति**। पञ्चानां चतुर्णां वा रूपाणां संपत्तिरव्यभिचारः। स चैकस्मिन् विषये विरुद्धयोर्न संभवति, अन्ततोऽसत्प्रतिपक्षस्यैव रूपस्याभावादित्यर्थः। **पञ्चानां हेतूनामिति**। सपक्षव्याप्त्यव्याप्तिभ्यामन्वयी द्वेधा, व्यतिरेक्येकः, अन्वयव्यतिरेक्यपि सपक्षव्याप्त्यव्याप्तिभ्यां द्वेधेति पञ्च हेतवः। **पञ्चानां हेतूनां सरूपासरूपप्रतिबन्धात् पञ्च पञ्चका भवन्ति**। सरूपः अन्वयिनोऽन्वयी, व्यतिरेकिणो व्यतिरेकी, अन्वयव्यतिरेकिणोऽन्वयव्यतिरेकी। असरूपश्चान्वय्यादेर्व्यतिरेक्यादिः, तेन प्रतिबन्धः, एतदुक्तं भवति, अन्वय्यादावेकैकस्मिन् सरूपासरूपाः पञ्च हेतवः प्रतिबन्धका

---

१. °र्णं °ष्यमुदा J २. °सन्दिग्धासमर्थ° J ३. °सन्दिग्धासमर्थ° C ४. सिद्धोऽपि J ५. °विशेषणवि° C ६. °द्धविशेष्या C

इति पञ्चभिः पञ्चकैः पञ्चविंशतिर्विरुद्धाव्यभिचारिण इति । चोदयति—**लक्षणत एवेति** । परिहरति—**नानर्थकमिति** । यत्परो हि शब्दस्तत्रासौ प्रमाणम्, समानासमानजातीयव्यवच्छेदकं च लक्षणसूत्रमिति तत्रैव प्रमाणम् न त्वियत्तायामतत्परत्वात् । न चासावार्थी सतोऽप्यनुपयोगादलक्ष्यमाणत्वोपपत्तेः प्रमेयान्तरवदिति ॥४॥

## ॥ परिशुद्धिः ॥

एवं कथाप्रकरणं समर्थितम् । तस्याश्च शरीरं साधनं दूषणं च । तत्र साधनवादिना प्रथमतस्तदाभासपरिहारे दूषणवादिनापि सदुत्तरपरिग्रहे यत्नवता भवितव्यम् । सदुत्तरालाभे हि असदुत्तरावतार इति शिक्षार्थं हेत्वाभासाः प्रथमं छलादिभ्य उद्दिष्टा इति सैव संगतिरिहापीत्याह—**उद्देशेति** ॥

अत्र त्रिषोडश्यां व्यापकाव्यापकभेदेन या द्विषोडशी सा असिद्धविशेषणासिद्धविशेष्या समर्थविशेषणा समर्थविशेष्यसन्दिग्धविशेषणसन्दिग्धविशेष्यभेदेन विवक्षिता द्वानवतं शतं भवतीति । सैवासिद्धिसन्देहयोर्वादिप्रतिवादिसंबन्धादष्टाविंशतं शतं भवेत् । सैवान्यतरासिद्धया व्यधिकरणसमर्थसन्दिग्धविशेषणविशेष्यभेदात् द्वावनतं शतमपरं स्यात् । सैवोभयान्यतराश्रयासिद्धविशेषणविशेष्यसंबन्धादपरमष्टाविंशतं शतं भवेत् । सैवाश्रयासिद्धविशेषणाव्यधिकरणासमर्थसन्दिग्धविशेषणविशेष्यसंबन्धादपरं [1]द्वानवतं शतम् । सैव सन्दिग्धव्यधिकरणासमर्थसन्दिग्धविशेषणविशेष्यसंबन्धादपरं [2]द्वानवतं शतम् । इयमेवाश्रयासिद्धिप्रक्षेपेणापरं [3]द्वानवतं शतम् । सैव सन्दिग्धतां परित्यज्यान्यथासिद्धिमुपादायापरं द्वानवतं शतम् । इयमेवाश्रयासिद्धिप्रक्षेपेणापरं द्वानवतं शतम् । सैवान्यथासिद्धिं विहाय विरुद्धतामुपादायापरं द्वानवतं शतम् । अत्रैव पुनराश्रयासिद्धिं प्रक्षिप्यापरं द्वानवतं शतम् इति । सोऽयमसिद्धविरुद्धानैकान्तिकानां प्रपञ्चः । प्रकरणसमं प्रपञ्चयितुं वस्तुगतिं तावदाहेत्याह—**तन्नेति** । **अन्तत इति** । अगृह्यमाणविशेषदशायामित्यर्थः । कालात्ययापदिष्टस्तूद्देश एव प्रपञ्चितः इति ॥

अत्र चातीतकालो मन्दतमप्रयोगः, कालाभावात् । यस्य ह्यवसरो नास्ति, तस्यार्थक्रियां प्रति विचारतः सत्त्वं नास्तीति । मन्दतरप्रयोगस्त्वसिद्धः[4], सति स्वकाले[5] स्वयमेवाभावात् । यस्तु स्वयमेव नास्ति, तस्य [6]देशकालावस्थाविरोधसामर्थानां

---

१. द्वानवतं शतम् om J २. तथैव J ३. तथैव J ४. °प्रयोगः A
५. स्व° A ६. देशवत्त्वाव° J

नावकाशः। मन्दप्रयोगस्तु सत्प्रतिपक्षः, सतोः कालदेशवत्त्वयोरवस्थाभावात्। अवस्थाभावेऽविरोधसामर्थ्ययोरनवकाशात्। [१]सावकाशप्रयोगस्तु विरुद्धः, कालदेशावस्थासु सतीषु विरोधात्। यस्त्वेवं तस्य कुतः सामर्थ्यम्? प्रायःप्रयोगस्तु सव्यभिचारः, कालदेशावस्थाऽविरोधेषु सत्सु सामर्थ्यमात्राभावादित्यनेन हेतुना सव्यभिचारादिक्रमोद्देशः। यद् वा सुग्रहः सव्यभिचारः, विच्छेदमात्रसिद्धौ तत्सिद्धेः, उपदर्शितविपरीतग्रहणे तत्सिद्धिः। यत्नग्राह्यो विरुद्धः। अतियत्नग्राह्यः प्रकरणसमः, तदितरसमस्तरूपसम्पन्नमन्यदुपनीय तत्सिद्धेः। दुर्ग्रहोऽसिद्धः[३], असिद्धाश्रयोऽपि कश्चित् हेतुरिति परमतनिराकरणावष्टम्भेन तत्सिद्धेः। दुर्ग्रहतरः कालात्ययापदिष्टः, बाधकस्यानन्यथासिद्ध्या प्रामाण्यं व्यवस्थाप्य तत्सिद्धेरिति। तद्विवक्षया क्रमनियम इति ॥४॥

॥ भाष्यम् ॥

तेषाम्—

अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

व्यभिचार एकत्राव्यवस्थितिः[४]। सह व्यभिचारेण वर्त्तते इति सव्यभिचारः। निदर्शनम्—नित्यः शब्दोऽस्पर्शत्वात्। स्पर्शवान् कुम्भोऽनित्यो दृष्टः। न च तथा स्पर्शवान्[५] शब्दः। तस्मादस्पर्शत्वान्नित्यः शब्द इति। दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ गृह्येते[६], स्पर्शवांश्चाणुर्नित्यश्चेति। आत्मादौ च दृष्टान्ते उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः[७] इति अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति, अस्पर्शा च बुद्धिरनित्या चेति। एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात्साध्यसाधनभावो नास्तीति [८]लक्षणाभावादहेतुरिति ॥

नित्यत्वमप्येकोऽन्तः। अनित्यत्वमप्येकोऽन्तः। एकस्मिन्नन्ते विद्यत इति[९] ऐकान्तिको विपर्ययादनैकान्तिकः, उभायान्तव्यापकत्वादिति[१०] ॥ ५ ॥

॥ वार्त्तिकम् ॥

तेषाम्, अनैकान्तिकः सव्यभिचारः ॥५॥ एकस्मिन्नन्ते नियत ऐकान्तिकः, विपर्ययादनैकान्तिकः। कः पुनरयं व्यभिचारः? साध्यतज्जातीयान्यवृत्तित्वम्। यत खलु

---

१. सावकाशे A २. असतीषु विरोधाभावात् M ३. दुर्ग्रहोऽसिद्धः om M
४. °व्यवस्था J ५. शब्दः किं तर्हि? अस्पर्शः। तस्मात् J ६. दृश्येते K
७. न्या. सू. १।१।३४ ८. हेतुलक्ष° J ९. एकान्ते नियतः J १०. व्यापित्वा° J

साध्यतज्जातीयवृत्तित्वे सति अन्यत्र वर्तते तद् व्यभिचारि । तद्वृत्तित्वं व्यभिचारः । सर्वोऽयं पदार्थभेदोऽन्तद्वयेऽवतिष्ठते, अन्यत्र प्रमेयात्[१] । नित्यश्चानित्यश्च व्यापकश्चाव्यापकश्च इत्येवमादिः । तत्र यो हेतुरुपात्त उभावन्तावाश्रित्य प्रवर्तते सोऽनैकान्तिकः ॥

अनैकान्तिक इति किं पुनरयं पर्युदास उत प्रसज्यप्रतिषेध इति ? किं चात् ? यदि पर्युदासः, सर्वानैकान्तिकता, ऐकान्तिकादन्योऽनैकान्तिक इति ब्रुवतः[३] सर्वोऽनैकान्तिकः प्राप्तः । एवं चैको हेत्वाभास इति प्राप्तम् । अथ प्रसज्यप्रतिषेधः ? तथाप्यैकान्तिकाभावोऽनैकान्तिक इति प्राप्तम् । तस्य च[४] व्यभिचारोऽर्थो नास्तीति [५]अयुक्तोऽनैकान्तिको हेत्वाभासः । नायं पर्युदासपक्षः किं तु प्रसज्यप्रतिषेधः । [६]प्रसज्यप्रतिषेधेऽभाव इति चेत्—नाभावो धर्मविशेषकत्वात् । धर्मोऽयं विशिष्यते, य[७] एकान्ते सन्नियतो धर्म इति न भवति, न पुनरयमभावः । अभावे विशेषणविशेष्यासंभवात् नाभाव एकान्तसन्नियतो नानैकान्तिकः सन्नियत इति । कथम् ? अब्राह्मणवदिति । यथा अब्राह्मणशब्दः प्रसज्यप्रतिषेधविषयत्वेन प्रवर्तमानो यदुत्तरं पदं तत् प्रतिषेधति न पुनरयमभावं प्रतिपादयति, तथेहापीत्यदोषः ॥

उदाहरणम् । नित्यः शब्दः अस्पर्शत्वात् । शब्दस्यास्पर्शत्वमिति षष्ठ्या भेदः प्रदर्श्यते । किं पुनस्तत् ? स्पर्शानाधारस्य[८] स्वात्मसत्तानुभवोऽस्पर्शत्वम्, स्पर्शानाधारस्य सत्तासंबन्धो वा ? उभयं च शब्दव्यतिरिक्तमित्यर्थवती षष्ठी । कुतः पुनरेतत् ? तद्भावे भावात् तदभावेऽभावादिति । यत् खलु स्पर्शवत् सत्तामनुभवति, न तत्रास्पर्शशब्दः प्रयुज्यते । यच्चासत् तत्रापि न प्रयुज्यत इति । यदस्पर्शवत् सत्तामनुभवति[९] तत्र प्रयुज्यत इति । वाक्यार्थाभ्यनुज्ञानाच्च पदार्थाभ्यनुज्ञा, स्पर्शानाधारस्य वस्तुनः सत्तया संबन्ध[१०] इति यो वाक्यार्थः स एव अस्पर्शत्वशब्दस्यार्थः[११] । अतिदेशानुपपत्तिरनुक्तत्वादिति चेत्—अनैकान्तिकः सव्यभिचारः इति । न क्वचिदनैकान्तिक उक्तः । [१२]यत इहानैकान्तिकग्रहणात् सव्यभिचारो गम्यते, अतो न युक्तमनैकान्तिकः सव्यभिचार इति । नेदमयुक्तम्, लोकतस्तदधिगतेः । यद् वस्तु[१३] लोकतो न गम्यते तत्र शास्त्रमर्थवत् । यत् पुनर्लोकत एव गम्यते तत्रोपदेशोऽनर्थकः ।

१. अन्यत्र प्रमेयात् om J २. अन्यत्र प्रमेयत्वात् added J ३. ब्रूवतां भवतां C ४. च om C ५. अनुक्तो° J ६. °षेधो° C ७. यः om J ८. °नाश्रयस्य C ९. अस्पर्शं सत्तानुभावी C १०. सत्तासम्ब° C ११. °त्वमिति पदस्या° J १२. यतः om C १३. यत् पुनः C

लोकतश्चैतद् गम्यते उभयान्तसन्नियतोऽनैकान्तिक इति। यदि च यल्लोकतो गम्यते तदनुक्तमिति मन्यसे, दुःखादीन्यपि देशयितव्यानि, किमिदं दुःखमिति। तस्मात् [1]परिपेलवमेतदिति। अव्यापकत्वादलक्षणमेतदिति चेत्—अथापीदं स्यादनैकान्तिकलक्षणेन न सर्वोऽनैकान्तिको व्याप्यते यथा असाधारण[2] इति। न, अनेनैव संग्रहात्। कथमिति? व्यावृत्तिद्वारेणाभिधीयमानोऽयमुभयान्तव्यावृत्तेरनैकान्तिक इति॥

अपरे पुनः प्रकरणसममनैकान्तिक एवान्तर्भावयन्ति। कथमिति? [3]नित्य आत्मा शरीरादन्यत्वादिति। शरीरात् [4]किलान्यत् नित्यमनित्यं च दृष्टम्, अतोऽनैकान्तिक इति। तैस्तु न लक्षणव्यभिचारोऽवगतो नोदाहरणव्यभिचार इति। अनैकान्तिकः सव्यभिचारः इत्येतत् लक्षणं व्यभिचारिणः। यदि चानेन प्रकरणसमसंग्रहो भवति प्राप्तस्तावता[5] लक्षणस्य व्यभिचारः, न [6]पुनरुदाहरणव्यभिचारादनैकान्तिकलक्षणव्यभिचार इति। लक्षणस्य [7]तूभयं दोषः, लक्ष्याव्याप्तिरलक्ष्यव्याप्तिश्चेति। वक्ष्यमाणकं च प्रकरणसमस्य लक्षणमीक्षितव्यम्॥५॥

॥ टीका ॥

तदेवमर्थाक्षिप्तसामान्यलक्षणं विभागं दर्शयित्वा विशेषलक्षणमवतारयति भाष्यकारः, तेषां हेत्वाभासानां मध्ये अनै—रः॥५॥

अत्र चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्यलक्षणत्वेनावस्थितौ। यस्यानैकान्तिकपदार्थोऽप्रसिद्धः प्रसिद्धश्च सव्यभिचारपदार्थः, तं प्रत्यनैकान्तिक इति लक्ष्यनिर्देशः, सव्यभिचार इति लक्षणम्। यस्य तु सव्यभिचारपदार्थोऽप्रसिद्धः प्रसिद्धश्चानैकान्तिकपदार्थस्तं प्रति सव्यभिचार इति लक्ष्यनिर्देशः, अनैकान्तिक इति लक्षणम्। तत्र सव्यभिचार इति लक्षणपदं कक्षीकृत्याह भाष्यकारः व्यभिचार एकत्राव्यवस्थितिः। एतदुक्तं भवति। सव्यभिचारपदं निर्वचनसामर्थ्यात् लक्षणपदमिति[8]। अनैकान्तिकपदलक्षणपक्षे भाष्यकारोक्तम् अनित्यत्वमप्येकोऽन्त इत्यादि। तद् वार्त्तिककारः पर्युदासाभिप्रायेण व्याचष्टे—एकस्मिन्नन्ते नियत ऐकान्तिक इति। न हेतुरैकान्तिको येन तदन्यत्वेन हेत्वाभासमात्रसंग्रहादेकजातीयत्वेन[9] हेत्वाभासानां विभागसूत्रविरोधः स्यात्, किं त्वेकस्मिन्नन्ते यो नियतः स ऐकान्तिकः, तद्विपर्ययादनै-

१. परि° om C २. °रणम् C ३. अनित्यः C ४. अपि for किल C ५. °प्तस्तर्हि C ६. °भिचारोऽनै° C ७. द्वयं J ८. पद om J ९. मात्र om C

कान्तिकोऽनियतोऽनित्यत्वे च नित्यत्वे चान्वयेन च व्यतिरेकेण [1]चोभयपक्षगामीति यावत् । न चैवंभूता विरुद्धादयो हेत्वाभासा इत्यभिप्रायः । तदेवम् अनैकान्तिकः सव्यभिचारः इति स्थिते पृच्छति—कः पुनरिति । उत्तरम्—साध्यतज्जातीयेति । अवगत[2] एष व्यभिचार इति, अनैकान्तिकपदवाच्यतास्य कथमित्यत आह—सर्वोऽयमिति । प्रमेयपदार्थस्य तु सर्वव्यापिनो नान्तो व्यतिरेकोऽस्तीत्यत उक्तम्—अन्यत्र प्रमेयादिति ॥

अत्र बौद्धैः यद् विकल्प्य दूषणमुक्तम्, तदुपन्यस्यति—अनैकान्तिक इति । किं पुनरयमिति । ऐकान्तिको हेतुः । ततोऽन्यः सर्व एव हेत्वाभास इत्यर्थः । द्वितीयं [3]कल्पं दूषयति—अथ प्रसज्येति । तथापि हेतोरभावोऽनैकान्तिकः । न चासौ सव्यभिचारः । भावधर्मौ हि व्यभिचाराव्यभिचारौ नाभावे सर्वोपाख्याविरहिणि युज्येते इत्यर्थः । तदेतत् शाक्यदूषणं निराकरोति—नायं पर्युदासपक्ष इति । पर्युदासपक्षस्तावदस्माकमभिमत उपपन्नतरश्च, केवलमयं प्रसज्यप्रतिषेधवल्लभस्तमास्थाय[4] सर्वं दूषयतीति तमेवाङ्गीकृत्य सर्वत्र ब्रूम इत्याशयवतः समाधानम् । न पुनरत्राब्राह्मणादावपि वार्तिककारस्य प्रसज्यप्रतिषेधोऽभिमतः, किं तु पर्युदास एवेति । अभ्युपेत्य तु तत्रापि प्रसज्यप्रतिषेधाभिधानम् । न हि प्रसज्यप्रतिषेधोऽपि[5] तुच्छः, अपि तु कस्यचिद् वस्तुनोऽभावेन विशिष्टं किञ्चिदेव वस्त्वित्यर्थः ॥

अत्र भाष्यम्—निदर्शनं नित्यः शब्दोऽस्पर्शत्वात् इति । वैधर्म्ये दृष्टान्तम् आह—स्पर्शवानिति । अनित्यः कुम्भः स्पर्शवान् दृष्ट इति योजना । वैधर्म्ये व्याप्यव्यापकभावस्य वैपरीत्यादिति[6] वैधर्म्यव्यभिचारमाह—दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ गृह्येते । न हि यदनित्यं तत् सर्वं स्पर्शवद् बुद्ध्यादिभिर्व्यभिचारात् । साधर्म्येऽपि चैभिरेव[7] व्यभिचारो वक्ष्यत इतीह नोक्तः । ननु[8] मा भून्नित्यत्वं साध्यम्, अस्पर्शत्वमेवास्तु नित्यत्वस्य साध्यमित्यत आह—स्पर्शवांश्चाणुर्नित्यश्चेति । तथापि यदस्पर्शवन्न भवति, तन्नित्यमपि न भवतीति वैधर्म्यं व्यभिचरति, स्पर्शवतोऽप्यणोर्नित्यत्वादित्यर्थः । साधर्म्यव्यभिचारमाह—आत्मादौ चेति ॥

अत्र वार्तिककारोऽस्पर्शवत्त्वस्य हेतोः प्रश्नपूर्वकं स्वरूपं निष्कर्षति—किं पुनस्तत् अस्पर्शत्वं शब्दाद् भिन्नत्वमित्यर्थः । सत्ताविशेषणो वा समवायः, समवाय-

---

१. वोभय° C २. अवगतम् C ३. पक्षं C ४. आदाय C ५. अपि om C
६. व्यापकवैप° C ७. अप्येषः C ८. ननु च C

विशेषणा वा सत्ता, अन्वयव्यतिरेकाभ्यामित्यर्थः। वाक्यार्थे च पदप्रयोगोऽस्पर्श इति श्रोत्रियपदवदित्याह—**वाक्यार्थेति**। अनैकान्तिक इति लक्षणमिति पक्षे चोदयति—**अतिदेशेति**। यदि हि क्वचित् शास्त्रप्रदेशे अनैकान्तिकः कथितः, तद्देशातिलङ्घनेन अत्रातिदिश्यमानो विदितरूप इह सव्यभिचारं लक्षयेत्, न त्वस्य शास्त्रप्रदेशे क्वचिदपि कीर्तनमस्तीत्यर्थः। परिहरति—**नेदमिति**। लोकप्रसिद्धत्वेनोक्तप्रायमित्यर्थः। अन्वये-नैवोभयान्तसन्नियतोऽनैकान्तिक इति मन्वानः शङ्कते—**अव्यापकत्वादिति**। परिहरति—**नेति**[1]। **व्यावृत्तीति**। क्वचिदन्वयस्योभयान्तसंनियतता, क्वचिद् व्यतिरेकस्येत्यर्थः। एकेषां मतमुपन्यस्यति—**अपरे त्विति**। दूषयति—**तैस्त्विति**। नोदाहरणे व्यभिचाराल्लक्षणव्यभिचारो भवत्यन्यत्वात्। नो खलूदाहरणमाद्रियन्ते परीक्षकाः किं तु लक्षणमित्यर्थः॥ ५॥

॥ परिशुद्धिः ॥

ननु विभागसूत्रे सव्यभिचार इत्युद्दिष्टं पदमिह **भाष्यकारो** लक्षणत्वेनैव व्याचष्टे। एवं चोद्दिष्टं न लक्षितम्, लक्षितं च नोद्दिष्टमित्यत आह—**अत्र चेति**। तथापि लक्षणे वक्तव्ये पदनिरुक्तिः कोपयुज्यते इत्यत आह—**एतदुक्तं भवतीति**। किं त्वेकस्मिन्नन्ते[2] यो नियत इति अन्वयतो व्यतिरेकतो वा साध्येनैव सहचरितो दृष्ट इत्यर्थः। तद्विपर्ययादनैकान्तिकोऽनियतः साध्येनैव [3]सहितो न दृष्टः। [4]**उभयपक्षगामीति यावदिति** उभयपक्षप्रसञ्जक इत्यर्थः। एतेन साधारणासाधारणानुपसंहार्याः संगृहीता इति स्फुटम्। बोधाभासप्रसञ्जितामतिव्याप्तिमनेन व्याख्यानेन व्युदस्तामाह—**न चैवंभूता**। एतच्च तत्र तत्र वक्ष्यते। **तदेवमिति**। अनैकान्तिकपदवत् सव्यभिचारपदमपि व्याख्येयमित्यर्थः। नन्वेतावतैव सर्वं व्याख्यातम्, तत् किमपरमवशिष्यते यदर्थं **सर्वोऽयमित्यादि** वार्तिकमित्यत आह—**अवगतम्** इति। न नु **अन्यत्र प्रमेयादिति** असंगतम्। साध्यतद्विपर्ययौ ह्यन्तद्वयम्। न च तदस्य नास्ति। अथायमर्थः, न तत्रायमन्वयतो व्यतिरेकतो वा नियत इति। तथापि नायमेवैवंभूतः, सर्वेषामेवानैकान्तिकानामेवंरूपत्वात्। तदस्यैव वर्जनमनुपपन्नम्। उदाहरणमात्रार्थत्वान्न दोष इत्यपि न युक्तम्, नित्यश्चानित्यश्चेत्यादिसंग्राह्यकोटावनैकान्तिकस्याप्रदर्शनादित्यत आह—**प्रमेयपदार्थस्य त्विति**। तदयं वार्त्तिकार्थः, कश्चिद् धर्मः सर्वस्य

१. नेति om C  २. पक्षे A  ३. सहचरितो दृष्टः M  ४. उभय...प्रसञ्जकः om M

प्रमेयत्वादिलक्षणः, कश्चित् कस्यचिदेव नित्यत्वादिलक्षणः। तत्र सर्वस्य वा कस्यचिद् वा यो धर्मो हेतुतयोपात्त उभावन्तौ साध्यधर्मतद्विपर्ययौ आश्रित्य प्रसज्य प्रवर्तते धर्मिणि सोऽनैकान्तिक इति। व्यतिरेक्यव्यतिरेकितया धर्मद्वैविध्यप्रदर्शनेनानैकान्तिकस्य विषयविवेचनं सूचितम्। व्यतिरेकिण्येव हि धर्मे साध्येऽनैकान्तिकः संभवत्प्रयोगो[1] न त्वव्यतिरेकिणि। न नु पर्युदासाभिप्रायेणैव प्राक् व्याख्यातम्। तत् कथं तत्प्रतिषेध इत्यत आह--**पर्युदासपक्ष** इति। तथापि नाब्राह्मण इति प्रसज्यप्रतिषेधोदाहरणम्। न हि गोघटादावब्राह्मण इति वक्तारो भवन्ति, अपि तु क्षत्रियादावित्याह—**न पुनरित्यादि** सुबोधम् ॥ ५ ॥

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥**

**॥ भाष्यम् ॥**

तं विरुणद्धीति तद्विरोधी, अभ्युपेतं सिद्धान्तं व्याहन्तीति। यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्, न नित्यो विकार उपपद्यते। अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्। सोऽयं नित्यत्वप्रतिषेधादिति[2] हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते। कथम्? व्यक्तिरात्मलाभः। अपायः प्रच्युतिः। यद्यात्मलाभात्प्रच्युतो विकारोऽस्ति, नित्यत्वप्रतिषेधो नोपपद्यते। यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्वम्, तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात्प्रच्युतेः उपपत्तिः। यदात्मलाभात्प्रच्यवते तदनित्यं दृष्टम्। यदस्ति न तदात्मलाभात्प्रच्यवते। अस्तित्वं चात्मलाभात्प्रच्युतिरिति च[3] विरुद्धावेतौ धर्मौ न सह सम्भवत इति। सोऽयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्त्तते तमेव व्याहन्तीति ॥६॥

**॥ वार्तिकम् ॥**

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः** इति ॥६॥ कोऽस्य सूत्रस्यार्थः? अभ्युपगतार्थविरोधी विरुद्धः। एवं च सर्वानुक्तविरुद्धसंग्रहः। यावान् [4]कश्चिद् विरुद्ध-

१. संभवतत्प्र° A २. नित्यत्त्वप्रतिषेधात्। अपेतोऽपि अस्ति विनाशप्रतिषेधात्। न नित्यो विकार उपपद्यते इत्ययं J ; द्रः योगभाष्यम्, विभूति° १३ ३. लाभाच्च प्रच्युतिः J ४. कश्चन C

भेदः सर्वोऽसावनेन संगृहीतः, यस्मादभ्युपगतं बाधते, अभ्युपगतेन वा बाध्यते। नन्वेवमेको हेत्वाभासो विरुद्धः प्राप्नोति ? सत्यमेक एव हेत्वाभासो विरुद्धः। तस्य तु सामान्येन विरुद्धत्वेन संगृहीतस्य पञ्चधोपदेशः, यथा प्रमेयमित्यनेन षोडशपदार्था इति। पृथगभिधानं तर्हि विरुद्धस्य न कर्तव्यम् ? न न कर्तव्यम्। सामान्यतोऽधिगतस्य विशेषज्ञापनार्थम्, यथा प्रमेयस्यैव। तत्रानैकान्तादिर्हेत्वाभासो द्विरूपोऽनैकान्तिकादिर्विरुद्धश्च। एतस्मिंस्तु विरुद्धतैवेत्यसाधारणतया तृणोलपादिन्यायेन निष्कृष्याभिधीयते। तस्मादनैकान्तिकादिषु निमित्तद्वयसमावेशात् संज्ञाद्वयसमावेशः[1]। विवक्षिततज्जातीयान्यवृत्तित्वेनानैकान्तिकत्वम्, हेतुविषयस्वरूपबाधारूपेण तु विरुद्धः। एवं सर्वत्र। उदाहरणम्—तदेतत् त्रैलोक्यं व्यक्तेरपैति, नित्यत्वप्रतिषेधात्। अपेतमप्यस्ति विनाशप्रतिषेधादिति[2]। विनाशप्रतिषेधादित्यनेन वाक्येन नित्यमभ्यनुज्ञातं नित्यत्वप्रतिषेधादित्यनेन प्रतिषिद्धम्। एते ते वाक्ये परस्परार्थबाधिते, तयोश्च परस्परार्थबाधा विरोधः ॥

प्रतिज्ञाहेत्वोर्वा विरोधः। यो वा प्रतिज्ञाहेत्वोर्विरोधः, स विरुद्धहेत्वाभासः। ननु प्रतिज्ञाहेत्वोर्विरोधः[3] पृथगुपदिष्टो निग्रहस्थाने, [4]पृथक् च हेत्वाभासाः, तस्मात् न प्रतिज्ञाहेत्वोर्विरोधो वक्तव्य इति। नैष दोषः, उभयाश्रितत्वाद् विरोधस्य विवक्षातः अन्यतरनिर्देशः प्रतिज्ञाहेत्वोर्विरोध इति प्रतिज्ञाहेतू आश्रित्य उभयाश्रितो भवति, तत्र यदा प्रतिज्ञया विरोधो विवक्षितः, तदा प्रतिज्ञाविरोध इत्युच्यते। यदा प्रतिज्ञाया हेतुविरोधो हेतोर्वा प्रतिज्ञाविरोधकत्वं तदा विरुद्धो हेतुरिति। अतः प्रतिज्ञाविरोधो वा हेतुविरोधो वेत्यदोषः। हेतुविरोधोदाहरणम्, नित्यः शब्द उत्पत्तिधर्मकत्वादिति। प्रतिज्ञाविरोधस्योदाहरणम्, नास्त्यात्मेति। [5]प्रतिज्ञाहेतुविरोधोदाहरणम्, गुणव्यतिरिक्तं द्रव्यम्, अर्थान्तरस्यानुपलब्धेरिति। हेतुविरोधोदाहरणम्, नास्त्येको भावः समूहे भावशब्दप्रयोगादिति। समूह इति ब्रुवाणेनैकोऽभ्युपगतो [6]भावो भवति, एकत्वसमुच्चयो हि समूह इति ॥६॥

॥ टीका ॥

सिद्धा—द्धः ॥६॥ पृच्छति—कोऽस्य सूत्रस्येति। न खलु हेतुरचेतनः सिद्धान्तमभ्युपगच्छति, यश्चाभ्युपगच्छति चेतनो नासावन्यतमेन हेतुलक्षणेन युज्यते इति

---

१. द्वे संज्ञे J २. द्रः योगभाष्यम्, विभूतिपादः १३ ३. हेत्वोः om C
४. पृथक् क हेत्वाभासः C ५. हेत्वोर्वि J ६. भावो om J

न हेत्वाभासः। न च पक्षः सिद्धान्त इति तद्विरोधी न विरुद्धः स्यादिति भावः। उत्तरम्—**अभ्युपगतार्थविरोधी विरुद्धः** हेतुद्वारेण पुरुषस्याभ्युपगमो हेतावुपचरितः। अभ्युपगमविषयमात्रविवक्षया च[1] सिद्धान्तशब्दः प्रयुक्तो न पुनः सिद्धान्त एवेह विवक्षितः। तेन पक्षोऽभ्युपगमविषय इति तद्विरोधी हेत्वाभासः संगृहीतो भवति। विशेषविरुद्धस्य च न हेत्वाभासतेत्युक्तं भवति। न हि विशेषोऽभ्युपगमस्य विषयः, न खल्वयं प्रतिज्ञापदगोचरः, किं तु प्रतिज्ञार्थस्य सिद्ध्यनुषङ्गीति नाभ्युपगमगोचर इति भावः। ईदृशस्य सूत्रव्याख्यानस्य फलमाह—**एवं चेति**। ईदृशं व्याख्यानमन्तरेणानुक्तस्य विरुद्धस्येत्यर्थः। **अभ्युपगतेन वा[2] बाध्यत इति**, स्वरूपेण हेतुत्वेन वेत्यर्थः। तदनेन **तं विरुणद्धीत्यादि** भाष्यं व्याख्यातम्। चोदयति—**नन्वेवमिति**। यदि हेतुत्वबाधाद् विरुद्ध इत्युक्तः, हन्त[3], सव्यभिचारादयोऽपि विरुद्धाः। तेषामपि हि हेतुत्वं बाधितम्। अबाधे वा न हेत्वाभासा इति भावः। परिहरति—**सत्यमेक एवेति**। ईदृशाविरुद्धत्वेन तुल्यत्वेऽप्यवान्तरभेदविवक्षया पञ्चत्वम्। यथा प्रमाणादीनां प्रमेयत्वेन तुल्यत्वेऽपि प्रमाणप्रमेयादीनामवान्तरभेदविवक्षया षोडशत्वम्, यथा वा तृणविशेष एवासाधारणतया तृणोलप इत्याख्यायते[5], एवं विरुद्धविशेष एवासावनैकान्तिकादिर्विरुद्धानैकान्तिकादिपदवाच्य इत्यर्थः॥

अत्रोदाहरणभाष्यम्—**यथा सोऽयं विकार इति**। महदहंकारपञ्चतन्मात्रैकादशेन्द्रियभूतसूक्ष्ममहाभूतानि विकारः। तस्य व्यक्तिः धर्मलक्षणावस्थापरिणामः, तस्मादपाय इति। अत्र हेतुः **नित्यत्वप्रतिषेधादिति**। तस्य व्याख्यानम्—**न नित्यो विकार उपपद्यत इति**। **अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्। सोऽयं नित्यत्वप्रतिषेधादिति हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते**। एतदेव प्रश्नपूर्वकं विभजते—**कथमित्यादिना**। विरोधस्य द्व्याश्रयत्वात् सिद्धान्तेन विरुध्यते इत्यभिसंधाय[6] सिद्धान्तं व्याहन्तीत्युक्तमित्यर्थः। तदेतद् भाष्यं व्याचष्टे—**उदाहरणमिति**। ननु नित्यत्वप्रतिषेधादिति हेतुर्विनाशप्रतिषेधेन सिद्धान्तेन विरुद्ध इति[7] ब्रुवाणः शास्त्रविरोधमापादयति। तथा च कालात्ययापदिष्टो हेत्वाभासो न विरुद्ध इत्यत आह—**एते[8] ते वाक्ये परस्परार्थबाधिते**

१. °मात्र° & च om C २. वा om C ३. विरुद्धो हेतुः C ४. तादृश° C
५. °लपतया° व्याख्या C ६. इत्यभिसंधाय om J ७. विरुध्यत इत्येवं C
८. एते ते C

इति। दृढतरप्रमाणबाधितो हि हेतुः कालात्ययापदिष्टो भवति, यथा ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदित्ययं हेतुः

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः॥

इत्यादिभिरागमैरतिदृढैर्बाधितः कालात्ययापदिष्टतया हेत्वाभासो भवति। प्रकृते तु वाक्ये परस्परविरुद्धार्थतया न प्रतिष्ठां लभेते, न पुनरन्यतरदन्यतरेण शक्यं बाधितुं द्वयोस्तुल्यबलत्वात् तस्मात् नायं कालात्ययापदिष्ट इत्यर्थः॥

व्याख्यानान्तरमाह-**प्रतिज्ञाहेत्वोर्वा विरोध** इति। सोऽयं विकारो व्यक्तेरपैतीति प्रतिज्ञा नित्यत्वप्रतिषेधादिति हेतुना विरुध्यते। व्यक्तिमात्रादपैति, न तु विनश्यतीति हि प्रतिज्ञार्थः अपेतोऽप्यस्ति विनाशप्रतिषेधादित्यनेन व्याख्यातः। तथा च व्यक्तेरपैतीत्येनन विकारस्य नित्यत्वं प्रतिज्ञातं नित्यत्वप्रतिषेधादित्यनेन हेतुना विरुद्धं भवति। **स्वसिद्धान्तेनेति** स्वपक्षेणेत्यर्थः। अत्र चार्थे सुगमं भाष्यम्। अत्र **वार्त्तिककारः** चोदयति—**ननु प्रतिज्ञाविरोध** इति। प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध इत्यर्थः। परिहरति—**नैष दोष** इति। प्रतिज्ञाश्रितत्वं विरोधस्य विवक्षित्वा निग्रहस्थानेषु प्रतिज्ञाविरोधस्योपादानम्, हेत्वाश्रितत्वं तु तस्यैव विरोधस्य विवक्षित्वा हेत्वाभासेऽन्तर्भाव इति। **यदा प्रतिज्ञया हेतुविरोध** इति हेतोरप्यन्यतरासिद्धतया प्रतिज्ञया तुल्यबलत्वाभिप्रायम्। यदा तु[1] हेतुरुभयसिद्धो भवति, तदा हेतोर्वा प्रतिज्ञाविरोधकत्वमिति। उपसंहरति—**अत** इति। **हेतोर्विरोधोदाहरणम्**। विरोधकत्वं विरोधः। शब्दस्योत्पत्तिधर्मकत्वं प्रमाणविनिश्चितं नित्यत्वप्रतिज्ञां बाधत इत्यर्थः। प्रसङ्गात् हेत्वाभासातिरिक्तस्य प्रतिज्ञापदयोर्विरोधस्य निग्रहस्थानस्योदाहरणमाह—**प्रतिज्ञाविरोधस्येति**। तृतीयेऽध्याये चैष विरोध उपपादयिष्यते[2]। हेतोरन्यतरासिद्धतया समानबलयोः **प्रतिज्ञाहेत्वोर्विरोधोदारणं गुणेति**। **हेतुविरोधोदाहरणं नास्त्येको भाव** इति। उत्पत्तिमत्त्वं ह्यन्यतरासिद्धमपि शक्यसाधनमिति प्रतिज्ञार्थं व्याहन्ति, **समूहे भावशब्दप्रयोगादिति**[3] तु उभयसिद्धमेव प्रतिज्ञार्थं व्याहन्तीत्येतावता भेद इत्यर्थः॥ ६॥

॥ परिशुद्धिः॥

सूत्रे समानकर्तृकत्वाभावात् क्त्वाप्रत्ययानुपपत्त्या शब्ददोषमाह—**न खल्विति**।

---

१. यदि C  २. द्र: टी, ३. १. १.  ३. तु om C

अर्थदोषमाह—**न च पक्ष इति**। उपलक्षणं चैतत्। एतस्मिन् सति विरोधापसिद्धान्तौ निग्रहस्थाने निरवकाशे। तयोः सतोरयं वा **मीमांसकाभिमतो** विशेषविरोधोऽपि विरुद्धः स्यादित्यपि। **अभ्युपगमेति**। सिद्धान्तशब्देनात्र पक्षो विवक्षितोऽतो न प्रकृतहानं नाप्यपसिद्धान्तवैयर्थ्यमित्यर्थः। विशेषविरुद्धप्रसङ्गं निवारयति—**विशेषेति**। **अभ्युपेत्य** इत्यनेन प्रतिज्ञायेति विवक्षितम्, न त्वभिप्रेत्येति। न च विशेषः प्रतिज्ञायतेऽपि तु अभिप्रेयते न च तथाभूतेन विरोधोपलम्भसंभवोऽसिद्धिदशायामनुपलम्भेन सिद्धिदशायां सहोपलम्भेनानवसरपराहतत्वात्[1]। एवंभूतस्याभिप्रायगोचरत्वमपि कथमित्यपि न युक्तम्, [2]स्वार्थानुमानसमये प्रकृतोपपादकतया तत्सिद्धेः अनुपपादकस्तु विशेषो न सिध्यति। अतएव नाभिप्रायगोचरोऽपि। तदापि कथं सर्वथानुपलब्धचरः सिध्यतीत्यपि न वाच्यम्, आकाङ्क्षादिसंपत्तौ पदार्थानामिवापूर्वार्थप्रतिपादने व्याप्तिपक्षधर्मतामाहात्म्यस्यापह्नोतुमशक्यत्वात्। तस्माद् ययोरेव परस्परधर्मिपरिहारेण नियमवतोः स्थितिरूपलभ्यते, तयोरेव विरोधो नान्यथेत्यर्थः। अनुक्तश्च संगृहीतश्चेति विप्रतिषिद्धमित्यत आह—**ईदृशं व्याख्यानमिति**॥

स्यादेतत्, विरोधे हि हेतुर्न स्यात् साध्यं वा। आद्येऽसिद्ध एव। द्वितीये तु कालात्ययापदिष्टः। क्वेदानीं विरुद्धः? अन्यतरानिश्चयेऽपि सन्दिग्धासिद्ध इत्याशङ्क्योक्तं **वार्त्तिककृता यस्मादभ्युपगतं बाधत** इति। नासिद्धः, पक्षे निश्चितत्वात्। नापि कालातीतः, प्रमाणान्तरेण बलवता अबाधनात्, किं त्वयमेव सिसाधयिषितं बाधत इति **वार्त्तिकार्थः** सुगम एव। द्वितीयं **वार्त्तिकमभ्युपगतेन** बाध्यते इति। तदपि यद्यपि प्रतिज्ञार्थेन तद्बाधनेऽसिद्धः स्यात, तथापि विरोधस्यैव यत्रोद्भटत्वम्, तत्र तदुल्लङ्घनेन प्रयत्नसाध्यमसिद्धत्वं नोद्भाव्यमेव, दैवतस्तत्प्रतीकारे निरनुयोज्यानुयोगापत्तेः, विरुद्धद्वारेणैवासिद्धेरपि व्यवस्थापने तदुद्भावनस्यावश्यकत्वाच्चेति सुगमम्। उत्तरवार्त्तिकानुरोधेन तु व्याचष्टे—**स्वरूपेण हेतुत्वेन वेत्यर्थः**। **अत्रोदाहरणभाष्यमित्यादि**। **उक्तमित्यर्थ** इति। अन्तष्टीकायां भाष्यस्येति शेषः। विरोधनिग्रहस्थानादेतस्याभेदमाशङ्क्य यथा परिहृतं **वार्त्तिककृता**, तदनुरोधेन व्याख्यातम्। **प्रतिज्ञाश्रितत्वमिति**। विरोधवैभवेन चोदाहरणानि **वार्त्तिके**। वस्तुतस्तु स्वमते मानान्तरसिद्धस्यार्थस्यान्यथावचनमपसिद्धान्तः। वाक्यांशयोरेकार्थभावाभावविषयत्वेन व्याघातो विरोधः। विपर्ययव्याप्तत्वेन निश्चितो विरुद्धो हेत्वाभासः। स च विधिसाधने

---

१. °परहेतु° A २. स्वार्था......न वाच्यम् om M

स्वभावानुपलब्धिर्व्यापकानुपलब्धिर्व्यापकविरुद्धोपलब्धिरिति त्रिविधः । तद्यथा धूमवानयं योग्यस्य सतस्तद्वत्तया अनुपलभ्यमानत्वात्, निरग्निकत्वात्, जलाशयत्वादिति । निषेधसाधनेऽपि स्वभावोपलब्धिर्व्याप्योपलब्धिरिति द्विविधः । तद्यथा निरग्निकोऽयम्, तद्वत्तयोपलभ्यमानत्वात्, धूमवत्त्वादिति । सर्वश्चायं [1]विशेषणद्वारापि प्रतिसन्धेयः । यथा कृष्णागुरुदारुप्रभववह्निमानयम्, कटुकासुरभिविपाण्डुरधूमवत्त्वादिति संक्षेपः ॥६॥

**यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥**

॥ भाष्यम् ॥

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभावनवसितौ[2] प्रकरणम् । तस्य चिन्ता विमर्शात्प्रभृति प्राङ् निर्णयाद्यत्समीक्षणम्[3], सा जिज्ञासा[4] यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात् प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते[5] । प्रज्ञापनं त्वनित्यः शब्दो नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि[6] ॥

यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते, स संशयसमः सव्यभिचार एव । या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च[7] सा प्रकरणं प्रवर्तयति । यथा[8] शब्दे नित्यधर्मो नोपलभ्यते एवमनित्यधर्मः अपि । सेयमुभयपक्षविशेषानुपलब्धिः प्रकरणचिन्तां प्रवर्तयति[9] । कथम्? विपर्यये हि[10] प्रकरणनिवृत्तेः । यदि नित्यधर्मः शब्दे गृह्येत, न स्यात्प्रकरणम् । यदि वा अनित्यधर्मो गृह्येत, एवमपि निवर्त्तेत प्रकरणम् । सोऽयं हेतुरुभौ पक्षौ प्रवर्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते[11] ॥ ७ ॥

॥ वार्त्तिकम् ॥

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः** ॥७॥ कस्मात् प्रकरणचिन्ता? तत्त्वानुपलब्धेः । यस्मादुपलब्धतत्त्वेऽर्थे निवर्तते चिन्ता, तस्मात् सामान्येनाधिगतस्य या विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रवर्तयतीति[12] । उदाहरणम्

---

१. विशेषणविशेष्यद्वारा M २. उभौ om J ३. समीकरणम् J var ४. जिज्ञासा om J ५. समो भवति । न स निर्णयाय प्रकल्पते । J ६. यथा स्थाल्यादि J, CK add नित्यः शब्दो वा (वा om K) अनित्यधर्मानुपलब्धेः अनुपलभ्यमानानित्यधर्मकं नित्यं दृष्टमाकाशादि । ७. च om J ८. यथा च J ९. योजयति J १०. हि om J ११. °र्त्तयन्नान्यतरस्य निर्णयार्थं कल्पते इति J १२. प्रयोजयति C

नित्यः शब्दोऽनित्यधर्मानुपलब्धेः, [1]अनित्यः शब्दो नित्य धर्मानुपलब्धेः । अत एव प्रकरणमित्यतो न हेतुः । नन्वयं साध्याविशिष्ट एव यथा शब्दस्य नित्यत्वं साध्यं तथा अनित्यधर्मानुपलब्धिरपीति । नाविशिष्टः तस्यैव प्रकरणप्रवृत्तिहेतोर्धर्मस्य हेतुत्वेनोपादानात् । यत्र साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः यत्र पुनः प्रकरणप्रवृत्तिहेतुरेव स प्रकरणसमः ॥

ये तु संशयहेतुत्वात् प्रकरणसमानैकान्तिकयोरभेदं वर्णयन्ति, तेषां प्रत्यक्षानैकान्तिकप्रकरणसमानामभेदः प्राप्नोति प्रत्यक्षमपि संशयकारणमिति । समूहः संशयस्य कारणमित्यतो न प्रत्यक्षे प्रसङ्गः । सामान्यदर्शनं विशेषाव्यवस्था विशेषस्मृतिश्च समूह इति संशयस्य कारणम्[2] । नैकं प्रत्यक्षमतो न प्रत्यक्षे प्रसङ्गः । समूहः कारणमित्यभिधानादप्रतिषेधः । समूहः कारणमित्येवं ब्रुवता न प्रत्यक्षस्य संशयकारणत्वं प्रतिषिद्धं भवति, तस्मात् प्रसङ्गस्तदवस्थ एवेति ॥

उभयधर्मानुपलब्धावन्यतरधर्मोपादानं प्रकरणसमस्यार्थः, यत्र खलूभयविशेषानुपलब्धिस्तत्रान्यतरविशेषस्योपादानं यत्प्रकरणापनोदाय स प्रकरणसमो हेत्वाभासः, उभयविशेषानुपलब्धेरभिधानाशक्यत्वात् । न ह्युभयविशेषानुपलब्धिः शक्या प्रदर्शयितुम् । शरीरादन्यत्वं तु न सूत्रार्थः । न ह्ययं शरीरादन्यत्वमुपलभमानोऽपि यदा तत्त्वमुपलभते, तदा प्रवर्तत इति । यदा तु तत्त्वं नोपलभते शरीरादन्यत्वमुपलभमानोऽपि तदा प्रवर्तते इति । शरीरादन्यत्वं चानैकान्तिकम् । अतश्च न सूत्रार्थः ॥ ७ ॥

॥ टीका ॥

**यस्मा—मः** ॥७॥ प्रकरणशब्दार्थमाह भाष्यकारः **विमर्शाधिष्ठानाविति** । **विमर्शः** संशयः । तस्य विषयौ । **अनवसितौ** अनिर्णीतौ, तादृशयोरेव पक्षप्रतिपक्षशब्दवाच्यत्वात्, प्रक्रियते साध्यत्वेनाधिक्रियत इत्यनया[2] व्युत्पत्त्या **प्रकरणम्** । **चिन्ता**पदं व्याचष्टे—तस्य प्रकरणस्य **चिन्ता विमर्शात् प्रभृति प्राग् निर्णयात् समीक्षणम्** आलोचनं **जिज्ञासा** । **सा खलु** तत्त्वानुपलब्ध्या कृता । [3]नो खल्वयं नित्यधर्मान् नित्यत्वाविनाभाविनोऽनित्यधर्मान् वा अनित्यत्वाविनाभाविन उपलभमानस्तत्र सन्दिग्धे तद् वा[4] जिज्ञासते । सैव नित्यधर्मानुपलब्धिरनित्यधर्मानुपलब्धिर्वा विचित्राभिसन्धितया वादिना[5] निर्णयायापदिश्यमाना प्रकरणसमो हेत्वाभासः । कुतः ? **उभयपक्ष-**

१. अनित्यः लब्धेः om C   २. द्र. वै. सू. २।२।१६   ३. अनया om C
४. नैव खल्व° C   ३. तच्च C   ५. वादिनां C

**साम्यात्** यथा नित्यत्वपक्षेऽनित्यधर्मानुपलब्धिरेवमनित्यत्वपक्षेऽपि नित्यधर्मानुपलब्धिः। सेयं तत्त्वानुपलब्धिमात्रविवक्षयोभयपक्षसमा, प्रकरणसमा तु यथाप्रकरणमनिश्चायकम् एवमियमपीत्यर्थः। [1]व्युत्पत्तिनिमित्तमात्रं चैतत् प्रकरणसमपदस्य, प्रवृत्तिनिमित्तं तु सत्प्रतिपक्षत्वम्, अन्यथानैकान्तिकस्यापि प्रकरणसमत्वप्रसङ्गादिति। **प्रज्ञापनं** प्रज्ञाप्यते अनेनेति व्युत्पत्त्या निदर्शनमुक्तम्॥

अनैकान्तिकत्वशङ्कां सत्प्रतिपक्षस्यास्य[2] व्यवच्छिनत्ति—**यत्र समान** इति, संशयेन समः अनिश्चायकत्वादिति। एतदुक्तं भवति, न हि नित्यधर्मानुपलब्धिरुभयसिद्धे नित्येऽस्ति येन सव्यभिचारो भवेत्, नाप्यनित्यधर्मानुपलब्धिरुभयसंमतेऽनित्येऽस्ति येन सव्यभिचारो भवेत्। अपि तु परस्परमनयोः सत्प्रतिपक्षतयैव हेत्वाभासत्वमिति। यस्मात् प्रकरणचिन्तेत्युक्तं सूत्रकृता, तत्र यस्मादर्थं प्रश्नपूर्वकं दर्शयति **वार्त्तिककारः**—**कस्मादिति**। कारणत्वं तत्त्वानुपलब्धेर्व्यतिरेकेण दर्शयति—**यस्मादिति**। **अत एवेति** तत्त्वानुपलब्धेरित्यर्थः। चोदयति—**नन्वयमिति**। पक्षप्रतिपक्षौ हि प्रकरणम्। तौ च साध्यौ। ताभ्यां च समः साध्यसमः। तथा च साध्यसमात् हेत्वाभासात् न पृथग् निर्देश्यः प्रकरणसम[3] इत्यर्थः। परिहरति—**नाविशिष्ट इति**। यद्यपि प्रकरणसमशब्दो व्युत्पत्त्या साध्याविशिष्टेन समानार्थः, तथापि प्रवृत्तिनिमित्तमस्य सत्प्रतिपक्षत्वम्। न च तत्त्वानुपलब्धिः स्वयमसिद्धा, सा ह्युपलम्भनाभावेन सुलभेति भावः॥

परमतमनुभाष्यातिप्रसङ्गापादनेन दूषयति—**ये तु संशयहेतुत्वादिति**। चोदयति—**समूह इति**। यस्मिन् सति भवत्येव तत् कारणम्, समूहे सति च भवत्येव[4] नैकैकस्मिन्, तस्मात् नैकैकं कारणमिति भावः। परिहरति—**समूहः कारणमितीति**। न ह्यकारणानां समूहः कारणं भवितुमर्हति, अतिप्रसङ्गात्। न च समूहिवैलक्षण्यमन्तरेणाजानतः समूहस्य वैलक्षण्यम्। तस्मात् समूहिन एवान्योन्यसमवधानवन्तः कारणम्। तथा च प्रत्यक्षस्योपपन्नं संशयकारणत्वम्। न च यस्मिन् सति भवत्येव तत् कारणम्, अपि तु यस्मिन् सत्येव न त्वसतीति क्षणभङ्गभङ्गे[5] वक्ष्याम इति॥

ननूभयधर्मानुपलब्धिरुभयपक्षसाधारणीति सव्यभिचार एवेत्यत आह—**उभयधर्मानुपलब्धाविति**। नोभयधर्मानुपलब्धिरत्र[6] हेतुः, अपि तु एकधर्मानुपलब्धिः। न चासौ साधारणी, किं तु सत्प्रतिपक्षेत्यर्थः। **उभयविशेषानुपलब्धेः** प्रकरणसमत्वेन

१. °निमित्त° J २. अस्य om C ३. निर्देशः प्रकरणसमस्य C ४. °त्येवेति C
५. ३।२।१०-७ ६. अत्र om C

**अभिधानाशक्यत्वात्** प्रकरणसमस्योदाहरणान्तरं दूषयति—**शरीरादन्यत्वं त्विति**। **परेषां** किलोदाहरणं नित्य आत्मा शरीरादन्यत्वाद् आकाशवदिति। तत्र **शरीरादन्यत्वम्** उपलभमानो यदा तत्त्वं नित्यत्वमात्मनः प्रत्येति, न हि तदा जिज्ञासितुं नित्यत्वं प्रवर्तते। यदा तु तत्त्वं नित्यत्त्वं नोपलभते शरीरादन्यत्वमुपलभमानोऽपि तदा प्रवर्तते। तस्मादन्वयव्यतिरेकाभ्यां तत्त्वानुपलब्धिरेव प्रकरणचिन्ताप्रवर्तिका न शरीरादन्यत्वम्। तस्मात् नैतत् प्रकरणसमस्योदाहरणम्। अपि तु तत्त्वानुपलब्धिरेव। इतश्चैतन्न प्रकरणसमस्योदाहरणमित्याह—**शरीरादन्यत्वं चानैकान्तिकम्**। उपसंहरति—**अतश्च न सूत्रार्थः** न सूत्रविषयः। एवमन्यान्यपि सत्प्रतिपक्षोदाहरणान्यूहनीयानि ॥७॥

॥ परिशुद्धिः ॥

इह खलु हेत्वाभासानां तत्तयानुसंहितानां यथासंख्यं संशयो विवक्षितविपरीतज्ञानं जिज्ञासा अज्ञानं व्याप्तिबाधश्चेति फलानि। तत्र फलद्वारकं प्रकरणसमलक्षणमुपक्रम्यते—**यस्मादित्यादि**। तदेतद् भाष्यमुखेन व्याचष्टे—**प्रकरणेति**। यस्मात् प्रक्रियमाणार्थजिज्ञासामात्रं भवति स प्रकरसम इति संक्षेपः। तथाहि, पक्षे समबलबाधकसहप्रवृत्तेर्न तत्त्वनिर्णयः, प्रतिबलेन प्रतिरुद्धत्वात्। नापि [1]ततोऽनुसन्धानेनापि सहसा व्याप्तिबाधोऽनुगृह्यमाणविशेषतया समबलत्वात्। नाप्यज्ञानमेव पक्षे विद्यमानतयैककोटिप्रसञ्जकत्वात्। नापि विपरीतज्ञानम्, तेनाव्याप्तेः। नापि सन्देहः कोटिद्वयानुपनायकत्वात्।[2] तस्मादेकां कोटिमुपनयन्[3] समबलेन प्रतिरुद्धः कथमत्र निर्णयो भवत्विति जिज्ञासां जनयन् प्रकरणसम इतरेभ्यो भिद्यत इति। तच्च सत्प्रतिपक्षत्वं सिद्धोभयहेतुकमसिद्धोभयहेतुकं सिद्धसाध्योभयहेतुकं च। प्रथममरूपद्रव्यत्वोपलभ्यमानस्पर्शाधिष्ठानत्वयोः। तृतीयं श्रावणत्वकृतकत्वयोः। मध्यममिहोदाहरिष्यते। तदनुरोधेन व्याचष्टे—**सा खल्विति**। यद्यपि जिज्ञासामात्रमत्रोपयोगि, तथापि संशयानुवृत्तिनिवृत्त्योः जिज्ञासानुवृत्तिनिवृत्ती इति मत्वोक्तम्—**तत्र सन्दिग्धे तद्वा जिज्ञासते**[4] इति। ननु यत एव जिज्ञासा कथं तमेव प्रेक्षावान् तत्त्वनिर्णयाय प्रयोक्ष्यत इत्यत आह—**विचित्राभिसन्धितयेति**। पूर्वसमयो दुष्प्रत्ययो जातु प्रयोज्यबुद्धिरिति हि साधनोत्तराभासप्रयोगे हेतव इत्यर्थः। नन्वेकैकपक्षनियततया कथमुभयपक्षसाम्यमनुपलब्धेरित्यत आह—**सेयमिति**। ननु व्युत्पत्तिमाश्रित्य चेत् प्रकरणसमपदं प्रवर्तते कृतं तर्हि यस्मादित्यादि-

१. तत्त्वानुसन्धानेनापि सह व्याप्ति M. २. °त्थापकत्वात् M. ३. °नयता M
४. सन्दिग्धतत्त्वं M

लक्षणान्तरेणेत्यत आह—**व्युत्पत्तीति** । अथैतदेव प्रवृत्तिनिमित्तं किं न स्यादित्यत आह—**अन्यथेति** । अत्र **भाष्यकारेण** सव्यभिचारात् प्रकरणसमं भेदयता तस्य संशयहेतुत्वमस्य च प्रकरणप्रवृत्तिहेतुत्वमुक्तम् । तच्च संमुग्धम्[1], पक्षप्रतिपक्षौ प्रकरणम् इति प्राग्व्याख्यानात्, सूत्रविरोधाच्च । न हि यस्मात् प्रकरणमिति सूत्रमपि तु यस्मात् प्रकरणचिन्तेति । अत आह—**एतदुक्तं भवतीति** । **अपि तु सत्प्रतिपक्षतयैव हेत्वाभासत्वमिति** । जिज्ञासामात्रहेतुतया निर्णयानुत्पादकत्वादिति भावः । एतेन **भाष्ये** प्रकरणशब्दो जिज्ञासापर इत्युक्तम् । ननु नित्यधर्मानुपलब्धिः कादाचित्की विवक्षिता, सदातनी वा ? आद्या अनैकान्तिक्येव, आकाशादावपि कदाचिन्नित्यधर्मानुपलब्धेः । द्वितीया त्वसिद्धैव । न हि नित्यधर्मोपलब्ध्या शब्दे कदाचिदपि न भवितव्यम् इति प्रमाणमस्ति । तथा चासिद्धत्वं विहाय कुतः प्रकरणसमत्वमुद्भावयतीत्यत आह—**न च तत्त्वानुपलब्धिरिति** । अयमर्थः, यस्यैवं विशेषग्रहः, तस्य तावदसिद्ध एवायमित्यस्तु, यस्तूपलम्भाभावेन सुलभामनुपलब्धिं मत्वा विशेषमप्रतिसन्धाय प्रतिबलेन च प्रतिबन्धमुपन्यस्यति, तं प्रति किमयमाभासतां यातु न वा ? न तावन्न याति । तथा सति साधयेत्[2] । एवं च ततोऽगृहीतविशेषा द्वितीयापि साधयेदेव । न चैवम्, न चानाभासमसाधकमतिप्रसङ्गात् । न च तदानीं दोषान्तरमत्र परिस्फुरति, अन्यत्र प्रतिबलेन प्रतिबन्धादिति । यत्रापि युगपदनेकदोषपरिस्फुरणम्, तत्रापि सत्प्रतिपक्षत्वम् अप्युद्भाव्य[3] विरम्यते । न हि यावदस्ति तावदुद्भाव्यम्, अन्यत्र संभूय प्रतिज्ञायां सर्वत्रोद्भावननियमादिति । यद्यपि [4]प्रत्यक्षवत् तत्त्वानुपलब्धिरपि न केवला, अपि तु समानधर्मदर्शनादिसहितैव संशयकारणम् । तथा च चोद्यचुञ्चोरभिमतभ्रंसः, तथापि तमुपेक्ष्य स्वसिद्धान्तावरोधेन परिहरति—**न ह्यकारणानामिति** । **ननूभयेति** । एकस्मिन् पक्षे उभयपदं विहायापरस्मिन् व्यावृत्तिद्वारेति पदमध्याहृत्य फक्किकाबोधः, अपि तु तत्त्वानुपलब्धिरेवास्मदुक्ता प्रकरणसमोदाहरणमिति शेषः । एवं जिज्ञासाहेतुत्वाभावात् प्रकरणसमलक्षणायोगितया शरीरादन्यत्वं न तदुदाहरणमित्युक्तम् । इदानीं संशयहेतुतया अनैकान्तिकलक्षणायोगात् । तदुदाहरणमेवेदमित्याशयवानाहेत्याह—**इतश्चेति** । **केचित्** तु मन्यन्ते, [5]तत्त्वानुपलब्धिरेव परं प्रकरणसमो हेत्वाभासस्तन्निराकरणं सूचयति—**एवमन्यान्यपीति** । नागृह्यमाणविशेषदशायामनुपलब्ध्योरन्ययोर्वा धर्मयोः

---

१. संमुखम् A  २. साधयन् A  ३. अपि om M  ४. °चतुष्ट्वानु° M
५. तत्रा° J

कश्चित् विशेषो गृह्यमाणविशेषदशायां तु यथान्यस्यान्यत्र हेत्वाभासेऽन्तर्भावः तथानुपलब्धेरपीति सापि त्याज्या[1]। न चानुपलब्ध्योरात्यन्तिकमगृह्यमाणविशेषत्वम्। उभयोः सिद्धत्वे वस्तुन उभयानुभयात्मकत्वप्रसङ्गात्। एकस्यासिद्धत्वे वा कथमगृह्यमाणविशेषत्वमात्यन्तिकमुभयोरपि वास्तव्यामसिद्धौ पुनरुभयानुभयात्मकत्वप्रसङ्गादिति ॥७॥

साध्याविशिष्टः साध्यत्वात्साध्यसमः ॥ ८ ॥

॥ भाष्यम् ॥

द्रव्यं छायेति साध्यम्, गतिमत्त्वादिति हेतुः। साध्येनाविशिष्टः साधनीयत्वात् साध्यसमः। [2]अयमप्यसिद्धत्वात्साध्यवत्प्रज्ञापयितव्यः। साध्यं तावदेतत्—किं पुरुषवच्छायापि[3] गच्छति आहो स्विदावरकद्रव्ये संसर्पति[4] आवरणसन्तानादसन्निधिसन्तानोऽयं तेजसो गृह्यत इति। सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासन्निधिरेवाविच्छिन्नो[5] गृह्यत इति। आवरणं तु प्राप्तिप्रतिषेधः ॥ ८ ॥

॥ वार्त्तिकम् ॥

साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥ ८ ॥ साध्येनाविशिष्टो यः साधनधर्मः साध्यवत् प्रज्ञापयितव्यः स साध्यसमो हेत्वाभासः। तस्योदाहरणम्—द्रव्यं छाया गतिमत्त्वादिति। यथैव द्रव्यत्वं छायायाः साध्यं तथा गतिमत्त्वमपीति। गतिमत्त्वं देशान्तरे दर्शनादिति चेत्—अथापीदं स्यात् गतिमतीयं छाया देशान्तरे दर्शनादिति। यत् खलु देशान्तरेषूपलभ्यते तद् गतिमत् यथा कुम्भः। तथा च छाया। तस्माद् गतिमतीति। न, आश्रयासिद्धत्वात्, [6]एवमप्ययमाश्रयासिद्धो हेतुः। सति द्रव्यभावे छायाया देशान्तरे दर्शनं समर्थं स्यात्। द्रव्यभावश्चासिद्धः[7]। तस्मादाश्रयासिद्धेर्न हेतुः ॥

अभ्युपेत्य[8] देशान्तरे दर्शनम्, तस्यान्यथासिद्धेरसिद्धः[9]। यदेव[10] देशान्तरे दर्शनं छायायास्तदन्यथा संभवति। अन्यथा च भवन् नार्थं साधयतीति। कथमन्यथा? आवरणसन्तानादसन्निधिसन्तानस्तेजस इति। आवरके द्रव्ये सर्पति तेजसोऽसन्निधिविशिष्टं द्रव्यं यद् यदुपलभ्यते [11]तत्तत् छायेत्युच्यते ॥

१. त्याम्वा A　२. °प्यप्रसिद्धः J　३. अपि om J　४. स्विद् वावरके द्रव्ये सर्पति J　५. एव om J　६. अयम् om C　७. स्त्वसिद्धः C　८. अभि° om C　९. °सिद्धेः C　१०. यत्तु C　११. तत्तु C

सोऽयमसिद्धस्त्रेधा भवति, प्रज्ञापनीयधर्मसमानः, आश्रयासिद्धः, अन्यथासिद्धश्चेति। नित्यः शब्दोऽस्पर्शवत्त्वादित्येतत् नोदाहरणम्, न ह्यस्पर्शत्वं शब्दस्य ज्ञापनीयम्, नाश्रयासिद्धं नान्यथासिद्धमिति। यथा त्वस्माभिः सूत्रं वर्णितं यथा चोदाहृतम्, तथायमसंबद्धो दोषः। न सूत्रार्थो विज्ञातो नाक्षरार्थो न हेत्वाभासो न दृष्टान्ताभास इति ॥ ८ ॥

॥ टीका ॥

**साध्या—मः** ॥८॥ अत्र **साध्यसम** इति लक्ष्यनिर्देशः। **साध्याविशिष्ट** इति लक्षणम्। तदनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धानां संग्रहः, तेषामसिद्धत्वेन साध्याविशिष्टत्वात्। अत्र चासिद्धः साध्यसम इति वक्तव्ये साध्याविशिष्टग्रहणमन्यतरासिद्धस्यापि सिद्धेः प्रागहेतुत्वज्ञापनार्थम्। अन्यथात्यन्तासिद्ध एव साध्यसमो नान्यतरासिद्धः तस्य कदाचित् सिद्धेरिति भ्रान्तिः स्यात्। साध्याविशिष्टेन तु सोऽपि संगृहीत इति। नन्वेवं साध्याविशिष्टत्वेनान्यतरासिद्ध एव स्यात् नेतरे, तेषामसिद्धत्वेन साध्यविशेषाभावादित्यत उक्तं **सूत्रकृता**[2] **साध्यत्वादिति**। यदि हि साध्यं नासिद्धं भवेत् साध्यत्वादेव च्यवेत, न खलु सिद्धं साध्यते। तस्मात् साध्यत्वादसिद्धता। सा च कस्यचित् सर्वदा, कादाचित्की कस्यचिदिति सर्वेषामविशिष्टत्वमिति नाव्याप्तिः। नापि साध्यत्वस्यातिप्रसक्त्यातिव्याप्तिः हेत्वाभाससामान्यलक्षणापेक्षत्वात् तद्विशेषलक्षणस्येति **सूत्रार्थः**। **साधनीयत्वादिति भाष्य**गतं न साध्यत्वादित्यस्य व्याख्यानम्, अपि तु गतिमत्त्वस्यासिद्धत्वपरम् ॥

अत्र **वार्त्तिककारः सूत्रार्थं** व्याचष्टे—**साध्येनाविशिष्टो य इति**। साध्येन व्यभिचारो मा भूदित्यत आह—**साधनधर्म** इति। हेत्वाभाससामान्यलक्षणयोगे सति एतल्लक्षणमिति न व्यभिचार इति भावः। अत्र **भाष्यकारेण** स्वरूपासिद्धाश्रयासिद्धान्यथासिद्धानां साधारणमुदाहरणमुक्तम्—**द्रव्यं छाया गतिमत्त्वादिति**। तद्विभजते **वार्त्तिककारः द्रव्यं छायेति**। अत्र स्वरूपासिद्धतां तावदाह—**यथैवेति**। आश्रयासिद्धतामवतारयितुं गतिमत्त्वं छायायाः पञ्चावयवेन वाक्येन साधयति—**गतिमत्त्वमिति**। आश्रयासिद्धतामाह[3]—**नाश्रयासिद्धत्वादिति**। सत्या एव **छायाया देशान्तरे दर्शनाद् योऽस्या** गतिमत्त्वमनुमिनोति तं प्रत्याश्रयासिद्धं देशान्तरे दर्शनम्, तदाश्रयस्यासिद्धत्वात्[4]। तदिदमुक्तम्—**सति द्रव्याभाव** इति, सति सत्त्व

---

१. गृह्यते C २. सूत्रकृता J ३. °सिद्धमाह C ४. °श्रयासिद्ध° C

इत्यर्थः, न तावत् छाया सामान्यविशेषसमवायान्तर्भूता तस्या नित्यताभावात्। नापि कर्म, संयोगविभागासमवायिकारणत्वाभावात्। न गुणो द्रव्यासमवायात्। न मनोदिक्कालगुणः, तद्गुणानामप्रत्यक्षत्वात्। नाप्यात्मगुणो बाह्येन्द्रियप्रत्यक्षत्वात्। नापि नभोनभस्वतोः, तद्गुणानामचाक्षुषत्वात्। नापि तेजसः, तद्विरोधित्वात् तत्सहचरितगुणान्तरानुपलब्धेश्च। अतएव न पृथिवीपाथसोरपि। अपि च तद्गुणश्चाक्षुषो नालोकमन्तरेण शक्यग्रहः। छाया तु तमन्तरेण गृह्यते, तस्मिंस्तु सति न गृह्यते इति दुर्घटम्। नापि द्रव्यम्, तद्धि पृथिव्यादीनाममन्यतमद् भवेद् अन्यद् वा दशमम्। न तावदन्यतमम्, तद्गुणानामनुपलब्धेः, नाप्यन्यद् रूपवदिति युज्यते, तस्याद्रव्यस्य प्रत्यक्षत्वानुपपत्तेः, अस्पर्शवत्त्वादनारम्भकत्वेनानेकद्रव्यत्वाभावात्। तस्माद् भाभाव एव छाया न तु सतीति सिद्धम्॥

यस्तु मन्यते मा भूत् छाया सती, भवतु भाभावः तथापि नाश्रयासिद्धता देशान्तरदर्शनस्य भाभावाश्रयत्वादेवेति तं प्रत्यभ्युपेत्यान्यथासिद्धतया साध्यसमत्वमापादयति—**अभ्युपेत्येति**। स्वाभाविको हि संबन्धो हेतोः साध्येन सहानुमानाङ्गं नौपाधिक इति विवेचितमनुमानलक्षणे[2]। तदयमन्यथासिद्ध औपाधिकसंबन्धो भवति हेत्वाभासः। सेयं हेतोरसिद्धिर्द्विधा स्वरूपतो हेतुत्वेन च। स्वरूपतोऽपि द्वेधा, स्वत आश्रयासिद्ध्या च। न चैतावता सव्यभिचारादीनामपि हेतुत्वासिद्धेरसिद्ध एवान्तर्भावः सव्यभिचारत्वादिविशेषणेन तेषामतो भेदात्। अन्यथासिद्धस्य तु तद्विशेषणत्वायोगिनो हेतुत्वासिद्धिमात्रेण साध्यसमेऽन्तर्भाव इति सर्वमवदातम्। संकलयति—**सोऽयमिति**। त एतेऽसिद्धभेदा उदाहरणभेदेष्वपि द्रष्टव्याः, यथा नित्यः[3] शब्दः चाक्षुषत्वादिति [4]स्वयमसिद्धः। तनुभुवनादीनां न कर्ता ईश्वरोऽशरीरत्वादित्याश्रयासिद्धः। स श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यन्यथासिद्धः, अन्नपानपरिणतिभेदनिबन्धनत्वात् रूपभेदस्यान्यथासिद्धत्वमिति। **अयमप्यसिद्धत्वात्** इति भाष्ये अपिशब्देन आश्रयस्य छायाया [5]अपि सत्त्वेनासिद्धिः सूचिता॥

अत्र **भदन्तेन** इदं साध्यसमलक्षणमुदाहरणान्तरं कल्पयित्वा दूषितम्। इदं किलास्योदाहरणम्, नित्यः शब्दोऽस्पर्शत्वाद् बुद्धिवदिति[6]। तदेतत् त्रिधाप्यसिद्धं न भवतीति दूषयित्वा **भदन्तेन** शङ्कितम्, अथ साध्येनाविशिष्टो दृष्टान्तो यस्मिन् स

१. अनित्यत्वात् तस्याः C  २. पृः ३०९.१३  ३. अनित्यः J  ४. अयम् C
५. अपि om C  ६. इति om C

साध्याविशिष्टो हेत्वाभास इति बुद्धेर्दृष्टान्तस्य नित्यत्वेनासिद्धत्वात् इत्याशङ्क्य बहुव्रीह्य-भावेन दूषितम् । तदेतत् सर्वमनभ्युपगमेन **वार्त्तिककारो** दूषयति—**नित्यः शब्द इति** । यद्येतत् नोदाहरणं किमुदाहरणं को वा सूत्रार्थ इत्यत आह—**यथा त्वस्माभिरिति** । अयं भदन्तोक्तो दोष इत्यर्थः । कस्मादित्यत आह—**भदन्तेन सूत्रार्थो न विज्ञातः**, न हि सव्यभिचारोऽनेन लक्ष्यते येन सव्यभिचारमस्पर्शवत्त्वमस्योदाहरणं स्यात्, किं तु साध्यसमः । नापि व्यधिकरणबहुव्रीहिदूषणेनाक्षरार्थो ज्ञातः । नापि बुद्धिवदिति दृष्टान्ताभासमेव हेत्वाभासं कुर्वता हेत्वाभासदृष्टान्ताभासौ ज्ञातौ भदन्तेनेत्यर्थः ॥८॥

॥ परिशुद्धिः ॥

**तस्मात् साध्यत्वादसिद्धतेति** । साध्यतया असिद्धतया । साध्येनाविशिष्टः साध्याविशिष्टः । सा चासिद्धता कस्यचिदित्यादि सुगमम् । तदेवं शिष्यप्रतिपत्ति-लाघवाय वाक्यगौरवम् । वस्तुतस्तु असिद्धः साध्यसम इत्येतावदेव लक्षणमुक्तम् । असिद्ध इत्यस्यापि पक्षधर्मतया न निश्चित इत्यर्थः । परामर्शविषयः पक्षधर्मता । सा च स्वसाध्येन निरुपाधिसंबन्धस्य[1] पक्षसंबन्धः । तथापि च व्याप्तिनिश्चयसहितेन संबन्धिद्वयनिश्चयेन[2] निश्चीयते । व्याप्तिलिङ्गपक्षेषु[3] त्वेकतमानिश्चयेऽपि नेति । तत्र पक्षानिश्चयादाश्रयासिद्धः । लिङ्गस्यैवानिश्चयात् स्वरूपासिद्धः । व्याप्तेरनिश्चयादन्यथा-सिद्धः[4] । एतेषां चानिश्चयः सन्देहाद् वा, अभावनिश्चयाद् वेति न कश्चित् फलं प्रति विशेषः । एतेन व्योमपद्मं सुगन्धि पद्मत्वात् इत्यादयोऽपि संगृहीता भवन्ति । अन्यथा यः पक्षेऽसन्निति लक्षणेनैतल्लभ्यते । यथा हि, असति सपक्षे विपक्षे च प्रतिषेधः कर्तुं न शक्यते, तथा पक्षेऽपीति । **सत्या एवेति** । सत्येनाभ्युपगताया इत्यर्थः । तस्या नित्यत्वाभावादिति । तदसिद्धमिति चेत्—न, कदाचिदुपलम्भलक्षणेनापि अनित्यत्वेन साध्यसिद्धेः तेषां व्यञ्जकवैचित्र्येऽपि व्यक्त्याश्रयसंबन्धिनामुपलम्भमन्तरेणानुपलम्भ-नियमात् । उपलम्भे वा तत्त्वानुपपत्तेः । सदोपलम्भप्रसङ्गाच्च । तेजसाभिभूतत्वात् न तथेति चेत्—न, आश्रयानभिभवे तेषामनभिभवात् । तदभिभवे तु तेषामुपलम्भे तदुपलम्भप्रसङ्गात् । अतएव न भाऽभावस्य तद्व्यञ्जकत्वम् । तस्मात् कदाचिदुपलम्भ एवास्याः सामान्यादिरूपतां प्रतिक्षिपतीति । **नापि कर्मेति** । स्वाश्रयं प्राग्देशाद्

---

१. °पाधिमत्त्वस्य M २. °श्चयसहितेन M ३. व्याप्तिपक्षलिङ्गेषु M
४. व्याप्यत्वासिद्धः M

विभज्य देशान्तरं प्रापयत् कर्म तत्तायां व्यवतिष्ठते। नातोऽन्यथा, चलनव्यवहारस्यानाकस्मिकत्वात्, अन्यनिमित्ताभावात्। एवंभूतार्थान्वयव्यतिरेकानुविधानाच्च छायायास्त्वाश्रय एव तावन्नोपलभ्यते, प्रागेव तस्य विप्रयोजनसंप्रयोजने इत्यर्थः। **न गुणो द्रव्यासमवायादिति।** द्रव्यासमवेतं ह्यद्रव्यसमवेतं वा, असमवेतमेव वा स्यात्? उभयथापि गुणत्वे व्याघातः, सामान्यवतः स्वतन्त्रस्य द्रव्यत्वापत्तेः। निःसामान्यस्य गुणलक्षणव्याघातात्।

सामान्यवानगुणः[1]

इत्यादि हि तत्। गुणकर्मणां निर्गुणतया गुणस्य तत्र समवायविरोधेन तत्समवाये सामान्यरूपत्वोपपत्तेरित्यर्थः[2]। द्रव्यासमवायादिति। हेतुं साधयति—**न मन** इति। तेषां विशेषगुणविरहात् सामान्यगुणोऽयं भवेत्। तथा चाश्रयसहोपलम्भनियमे तदप्रत्यक्षतायां नियमादप्रत्यक्षत्वप्रसङ्ग इत्यर्थः॥

**नाप्यात्मगुण** इति। इयं हि बाह्यकरणप्रत्यक्षता इदन्तासामानाधिकरण्येन व्याप्ता। तदात्मगुणतामादाय निवर्तमानमनात्मगुणतायां विश्राम्यतीत्यर्थः। **नापि नभोनभस्वतोरिति।** चाक्षुषता हि गुणानां रूपिद्रव्यसमवायेन व्याप्ता। तच्च रूपित्वं गगनपवनाभ्यां व्यावर्तमानं चाक्षुषगुणसंबन्धमपि व्यावर्तयतीत्यर्थः। **नापि तेजसः** तद्गुणत्वं हि प्रतीतौ तदविरोधित्वेन व्याप्तम्, अन्यथा गुणिनः स्वगुणप्रतीतिपरिपन्थित्वे गुणस्य नित्यानुपलम्भप्रसङ्गात्, सति समवाये[3] उपलम्भविरोधात्, असति समवाये चासत्त्वात्। तच्चातो निवर्तमानं तद्गुणत्वमपि निवर्तयतीत्यर्थः। **तत्सहचरितगुणान्तरानुपलब्धेश्चेति।** अयमर्थः, न तावत् छाया तेजसो रूपमेतद्रूपस्य शुक्लभास्वरत्वनियमात्। न चेन्द्रनीलप्रभारूपवदाश्रयोपाधेरतथाभूतमिदमाभातीति[4] सांप्रतम्, शैलभूतलस्फटिकपद्मरागाद्याश्रयरूपोपाध्यननुविधानात्। तस्मात् गुणान्तरमेवेदं तस्येति वाच्यम्। तथा च चक्षुषोपलभ्यमानं न रूपमनन्तर्भाव्योपलब्धुं शक्यते, चक्षुषस्तथैव सामर्थ्याकलनादिति। **अत एवेति।** अयमर्थः, चक्षुर्मात्रग्राह्यतया तावच्छाया न गुणान्तरत्वेन शङ्कास्पदम्, रूपं तु संभाव्येत। तच्चोपलभ्यमानं पाथस उपलभ्य शैत्यद्रवत्वादिव्याप्तम्, अतादृशस्तोयत्वायोगात्। पृथिव्यास्तु उपलभ्यगन्धादिव्याप्तम्, अतथाभूतस्य पृथिवीत्वायोगात्। तच्च शैत्यगन्धादिसाहचर्यमतो निवर्तमानमनुपलम्भेन तद्गुणतामपि निवर्तयतीति। **अपि चेति।**

१. द्रः वै. सू. १।१।१६ २. रूपतापत्ते° J ३. सत्त्वसमये M. ४. इदमाभाति om J

अतैजसद्रव्यरूपग्रहणे हि बाह्यालोकव्याप्तस्यैव चक्षुषः सामर्थ्यमधिगतम् । न च यत्सहितस्य यस्य यत्र सामर्थ्यं तद्रहितेन तेन तत्करणम् । तथा सति वह्निरहितमप्यार्द्रमिन्धनं धूमं विदध्यादित्यर्थः ॥

विरोधकस्त्वधिक इत्याह—**तस्मिंस्त्विति** । एतेन पार्थिवं रूपमारोपितं तम इति निरस्तम्, बाह्यालोकसहकारिविरहे चक्षुषस्तथारोपेऽप्यसामर्थ्यात् तदेव हि धर्म्यन्तरे वा समारोप्येत पित्तपीतिमवत्, तत्रैव वा नियतदेशेऽवगम्यमाने अनियतदेशत्वमिति नेदीयस्यणीयस्यपि महत्त्ववत् । उभयथापि तत्प्रथममन्तरेणानुपपत्तिरेकत्रारोप्यत्वादन्यत्रारोपविषयत्वात् तस्यैव । न चालोकमन्तरेण रूपग्रहणे चक्षुषः [1]सामर्थ्यमित्युक्तम् । न चारोप्यारोपविषयाप्रथने भ्रान्तिसंभवः । न चोभयोरन्यतरस्मिन्नव्यापृतस्यैव चक्षुषो भ्रान्तिजनकत्वम्, न चायमचाक्षुषः [2]प्रत्ययः, तदन्वयव्यतिरेकयोरनन्यथासिद्धत्वादिति । **नापि द्रव्यमिति** । न पृथिव्यगन्धत्वात् । न जलमरसत्वात् । न तेजः अनुष्णत्वात्। न वायुरस्पर्शत्वात् । नाकाशमशब्दसमवायिकारणत्वात् । न दिक्कालौ परत्वापरत्वासमवायिकारणसंयोगानाधारत्वात् । नात्मा बुद्ध्यनाधारत्वात् । न मनो ज्ञानासमवायिकारणसंयोगानाधारत्वादित्यर्थः । **नाप्यन्यदिति** । नेदमद्रव्यं रूपिद्रव्यम्, अस्मदादिप्रत्यक्षत्वात् । अस्मदादिप्रत्यक्षं हीन्द्रियेण व्याप्तम् । तच्च नियतविषयसामर्थ्येन व्याप्तम् । तच्च विपक्षान्निवर्तमानमिन्द्रियं निवर्तयत् प्रत्यक्षत्वमपि निवर्तयतीत्यर्थः । **अस्पर्शत्वादिति** । नेदमनेकद्रव्यं द्रव्यमस्पर्शत्वात् । अस्पर्शता हि द्रव्यस्यानारभ्यतया व्याप्ता । सा च निषेध्यादनेकद्रव्यान्निवर्तमाना स्वव्याप्यं स्पर्शरहितत्वं गृहीत्वा तद्विपरीते विश्राम्यतीत्यर्थः । **अनारम्भकत्वेनेति** । अविद्यमानमारम्भकं यस्य तत् तथोक्तम् । तस्य भावस्तत्त्वमिति । एतेनाश्रयासिद्धिः परिहृता ॥

यत् तूक्तम्, मनसा द्रव्यान्तरानारम्भे वैयर्थ्यमुपाधिः, न [3]पुनरस्पर्शत्वम्, तत् किं वैयर्थ्यादनारम्भकत्वमुन्नीयते, अनारम्भकाद् वा वैयर्थ्यमिति ? न तावदाद्यः, सर्वोत्पत्तिमत्प्रयोजनस्यास्मदादिभिः पिशितलोचनैरनाकलनात् । तस्माद् यद्यारम्भकस्वभावत्वं [4]मनसस्तदा कदाचिदारम्भे प्रयोजनमपि किञ्चिद् भविष्यतीति । न चेत् तत्स्वभावकत्वं प्रयोजनसहस्रेणापि नारम्भः । स्वभावानुविधायीनि हि[5] प्रयोजनानि । न तु प्रयोजनानुविधायिनः स्वभावाः । प्रत्यक्षबाधस्तु तदा स्यात् यदि तम एवापह्नूयेत ।

---

१. सामर्थ्यमित्युक्तम्···व्यापृतस्यैव चक्षुषः repeated A  २. प्रत्ययः om A
३. पुनस्पर्शत्वं A  ४. मनसा A  ५. न हि A

द्रव्यत्वे प्रत्यक्षस्याजागरुकत्वात् , नीलिमगुणशालिनः प्रतीतेः । कथमेवमेतदिति चेत्— न, वस्तुतोऽस्य नीलत्वेऽचाक्षुषत्वप्रसङ्गात् । आलोकसहकारिण एव चक्षुषः तत्र सामर्थ्यावधारणादित्युक्तम् । शुक्लभास्वरविरोधितासाम्यात् तु तथा व्यवहारः । एवं तर्हि रक्तादिव्यवहारोऽपि प्रसज्यत इति चेत्—न, व्यवहारे हि सति निमित्तानुस्मरणात्[1] । न तु निमित्तमस्तीत्येव व्यवहारः यथा शषयोः शव्यवहारो **गौडानां** वर्णत्वनिमित्ताविशेषेऽपि न कादिव्यवहारः । अदृष्टादिसामग्रीविशेषान्नियमो नात्रापि दण्डवारितः इति । तत् किं न किञ्चिदेव च्छायेत्यत आह—**तस्माद् भाऽभाव एव च्छायेति** । न च वाच्यम् , सोऽपि कथमालोकमन्तरेण प्रतियोगिस्मरणाधिकरणग्रहणविरहे विधिमुखेन चाक्षुषो विषय[2] इति । यद्ग्रहे हि यदपेक्षं चक्षुस्तदभावग्रहेऽपि तदपेक्षमेव । एवं हि तदितरसामग्रीसाकल्यं स्यात् । तदिहाप्यालोकाभावे तदालोकापेक्षा स्यात् , यद्यालोकेऽपि तदपेक्षा भवेत् । न चैतदस्ति । प्रत्युत विरोध एव तस्मिन् सति हि तदभाव एव न स्यात् । किं तत्सापेक्षेण चक्षुषा गृह्येत दिवा च प्रतियोगिनः प्रभामण्डलस्य ग्रहे एव प्रदेशान्तरे तद्ग्रहणमिति न किञ्चिदनुपपन्नम् । अन्यदापि न रात्रिमप्रतिसन्धायान्धकारग्रहः । रात्रिज्ञानं च न दिवसमप्रतिसन्धाय । तथा हि निरस्तैतद्द्वीपवर्तिरविरश्मिजालः कालविशेषोऽत्र रात्रिरित्युच्यते । गिरिदरीविवरवर्तिनस्तु यदि योगिनो न तिमिरालोकिनः । तिमिरदर्शिनश्चेत्—नूनं स्मृतालोका इति । अधिकरणम् अपि दृष्टमनुमितं स्मृतं वा इहेदानीमन्धकार इति प्रत्ययात् । विधिमुखस्तु प्रत्ययोऽसिद्धः । न हि नञोऽप्रयोगमात्रेण विधित्वम् , प्रलयविनाशावस्थानादिषु व्यभिचारात् । नञर्थान्तर्भावेन वाक्यार्थे पदप्रयोगाददोष इति चेत् ? इहापि मात्सर्यमपनीय एषैव[3] रीतिरनुगम्यतामिति सुष्ठूपसंहृतम्—**तस्माद् भाऽभाव[4] एव च्छायेति**। देशान्तरप्राप्तिमत्त्वप्रयुक्तं हि गतिमत्त्वम् । न तु देशान्तरदर्शनप्रयुक्तम् तच्च प्रयोजकमिह निश्चितव्यावृत्ति । तथा हि स्वातन्त्र्येण देशान्तरप्राप्तौ वारकानुविधाननियमो न स्यात् । प्रभातुल्यत्वे तेजःप्रभाश्रयेषु रत्नविशेषेषु च्छाया दिवसे न स्यात् । छाययैवाभिभवे वा बहलतमे तमसि तेषामालोको न स्यात् । आलोकान्तरेणैवाभिभवे छायाया अप्युद्भवो न स्यादिति ॥

संकलयति—**सेयमिति** । **असिद्धिः** अनिरूपणम् । **न चैतावतेति** । वाच्यमिति शेषः । कुतः ? **सव्यभिचारत्वादीति** । अयमर्थः, यद्यपि तत्रापि

१. सरणात् J २. विषयः om J ३. तथैव M ४. भाव एव A

स्वाभाविकसंबन्धविरहादस्त्येव हेतुत्वासिद्धिः, न ह्यस्ति संभवः स्वभावप्रतिबद्धश्च सव्यभिचारादिश्चेति । तथापि न तावत् स्वरूपत आश्रयतो वा तत्रासिद्धिरुद्भावयितुं शक्यते, तयोर्निश्चितत्वात् । नाप्युपाधित उपाध्यपेक्षया व्यभिचारादेर्लघुप्रतिपत्तिकत्वात्, उपाधेस्तु तद्द्वारैव प्रतिपत्तेः । यदि च तेन दूषयितुं न शक्यते तद्द्वाराप्युपाधिरेवोद्भाव्येत । न चैतदस्ति । व्यभिचारादौ ह्युद्भाविते सुतरां निवर्तते । उपाधौ तु कदाचिद् विप्रतिपद्येत, तस्य दुरूहत्वादिति । अस्तु तर्हि [1]सव्यभिचारवत् अप्रयोजको नाम षष्ठो हेत्वाभासः, तस्याप्येवंरूपविशेषशालित्वादित्यत आह——**अन्यथासिद्धस्य त्विति** । भवेदेवम्, यद्यौपाधिकत्वं स्वाभाविकसंबन्धविरहादन्यत् । न त्वेतदस्ति । अनौपाधिकत्वं हि संबन्धस्य स्वाभाविकत्वम् । औपाधिकत्वं च तद्विरहः । तस्माद् विशेषान्तराभावात्, साध्यसमसमानलक्षणवत्त्वाच्च तत्रैव तस्यान्तर्भाव इत्यर्थः । **भाष्ये गतिमत्त्वादिति** सन्दिग्धः । **वार्त्तिके सती छाया गतिमती देशान्तरे दर्शनादिति** विशेषणद्वारा आश्रयासिद्धः । **अयमेव** सत्त्वं विहाय निश्चितोपाधिसहवृत्तिरन्यथासिद्धः । तदेतावन्त एवासिद्धभेदा इति भ्रमनिरासार्थमुदाहरति——**त एत** इति । **चाक्षुषत्वादिति** निश्चितासिद्धः[2] । **अशरीरत्वादिति** धर्मित एवाश्रयासिद्धः । **मैत्रतनयत्वादिति** संदिग्धोपाधिसहवृत्तिरन्यथासिद्धः ॥८॥

## कालात्ययापदिष्टः कालातीतः ॥ ९॥

### ॥ भाष्यम् ॥

कालात्ययेन युक्तो यस्यार्थैकदेशोऽपदिश्यमानस्य[3] स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम् नित्यः शब्दः संयोगव्यङ्ग्यत्वाद रूपवत् । [4]प्रागूर्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते, तथा च शब्दोऽप्यवस्थितो[5] भेरीदण्डसंयोगेन व्यज्यते, दारुपरशुसंयोगेन वा । तस्मात्संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः कालात्ययापदेशात् । व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति । सति [6]प्रदीपसंयोगे रूपस्य ग्रहणं भवति, न निवृत्ते संयोगे रूपं गृह्यते । निवृत्ते तु[7] दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले । सेयं शब्दस्य व्यक्तिः संयोगकालम्

---

१. °चारादिवत् A २. निश्चितस्वरूपा° A ३. °मानस्य हेतोः J ४. यथा प्रा° J ५. अपि om J ६. प्रदीपघटसं° J ७. तु in J alone

अत्येतीति न संयोगनिमित्ता[1] भवति । कस्मात् ? कारणाभावाद्धि कार्याभाव[2] इति । एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति ॥

अवयवविपर्यासवचनं न सूत्रार्थः । कस्मात् ?

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः[3] ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्[4] ॥

इत्येतद्वचनाद्विपर्यासेनोक्तो[5] हेतुरुदाहरणसाधर्म्यात्तथा वैधर्म्यात्साध्यसाधनं[6] हेतुलक्षणं न जहाति । अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति ॥

अवयवविपर्यासवचनमप्राप्तकालम्[7] इति च निग्रहस्थानमुक्तम्। तदेवेदं पुनरुच्यत इति, अतस्तन्न[8] सूत्रार्थः ॥ ९ ॥

॥ वार्त्तिकम् ॥

कालात्ययापदिष्टः कालातीतः ॥ ९ ॥ यस्यापदिश्यमानस्य कालात्ययेनैकदेशो युज्यते, स एकदेशात्ययात् कालात्यापदिष्टः कालातीत[9] इत्युच्यते । उदाहरम्— नित्यः शब्दः संयोगव्यङ्ग्यत्वात् इति । उपलब्धिकाले संयोगो नास्ति, सोऽयं संयोगो हेतुविशेषणत्वेनोपात्तः उपलब्धिकालमत्येति, यदोपलभ्यते तदा संयोगो नास्ति । दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ शब्दोपलब्धिरिति । नन्वयमनैकान्तिक एव संयोगव्यङ्ग्यत्वादिति । अनित्यमपि संयोगेन व्यज्यमानं दृष्टम्, यथा घट इति । न, संयोगव्यङ्ग्यत्वेनावस्थानस्य साध्यत्वात्—न ब्रूमो नित्यः शब्द इति, अपि त्ववतिष्ठतेशब्द [10]इत्ययं प्रतिज्ञार्थः । तथा च संयोगव्यङ्ग्यत्वादित्ययं हेतुर्नानैकान्तिकः । न ह्यनवस्थितं किञ्चित् संयोगेन व्यज्यमानं दृष्टमिमिति ॥

अवयवविपर्यासवचनमपि न सूत्रार्थः सामर्थ्यात् । न हि पश्चादभिधीयमानो हेतुरुदाहरणसाधर्म्यादित्येतत् हेतुलक्षणं जहाति । अजहद्धेतुलक्षणं न हेत्वाभासो भवितुमर्हतीति । अवयवविपर्यासवचनमप्राप्तकालम्[11] इति निग्रहस्थानमुक्तम् । तदेव पुनरुच्यते इति ॥

१. °निर्मिता C cf. वादन्यायटीका, पृ० १३७ २. द्रः वै. सू. १।२।१ ३. तत् J ४. अर्थतो° अकारणम् om J ५. इति न विप° J ६. °साधर्म्यात् साध्यसाधनं हेतुरिति तथा वैधर्म्यादित्येतत् हेतुलक्षणं J ; Cf. न्या. सू. १।१।३४-५ ७. न्या. सू. ५।२।११ ८. अतश्च न J ९. कालातीतः om J, १०. अयम् om C ११. न्या. सू. ५. २. ११

समीकृतेऽभिधानात् निग्रहस्थानमिति चेत् ? अथ मन्यसे यस्मात् समीकृते पक्षे पश्चादभिधीयते, ततो न निग्रहस्थानमिति । केन समीकृत इति वक्तव्यम् । हेत्वनभिधानेन । यदि हेत्वनभिधानेन समीकृतः, किमत्र हेनोरसामर्थ्यम् ? एतदस्यासामर्थ्यं यदयं पश्चादभिधीयते इति । नैतत् हेतोरसामर्थ्यं यदयं पश्चादभिधीयत इति, अपि तु वक्तुरिति । न हि स्वतन्त्रो हेतुः साधनम्, अपि तु साधयितृतन्त्रः । [1]तत्तन्त्रत्वात् न हेतुदोषः सामर्थ्याच्चेत्युक्तम् । तस्मादवयवविपर्यासवचनं न सूत्रार्थः, न समीकृताभिधानमिति ॥ ९ ॥

॥ टीका ॥

**काला—तः** ॥९॥ अत्र **कालातीत** इति लक्ष्यनिर्देशः, **कालात्ययापदिष्ट** इति लक्षणम् । हेतोरपदेशस्य हि साध्यसन्देहविशिष्टः कालः । यथाहु :—

नानुपलब्धे न निर्णीते न्यायः प्रवर्तते, अपि तु सन्दिग्धे इति[2] । परेऽप्याहुः

सन्दिग्धे हेतुवचनात्

इति । यत्र च प्रत्यक्षानुमानागमविरोधः, अनुष्णोऽग्निर्द्रव्यत्वादिति च अश्रावणः शब्दो गुणत्वादिति च, शुचि नरशिरःकपालं प्राण्यङ्गत्वादिति च, स सर्वः प्रमाणतो विपरीतनिर्णयेन सन्देहविशिष्टं कालमतिपततीति सोऽयं कालस्यात्ययेनापदिश्यमानः कालातीत इति । तथा चोदाहृतं

यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः सः ।

इत्यत्र **वार्त्तिककृता**[3] बाधाविनाभावयोः सहासंभव इति चात्र बौद्धानामाक्षेपोऽस्माभिः समाहितः । एवं व्यवस्थिते **भाष्यकारः** सूत्रं स्वपरमतश्लिष्टं व्याचष्टे—**कालात्ययेन संशयकालात्ययेन युक्तो यस्य** हेतोरपदिश्यमानस्यार्थैकदेशः[4] । धर्मविशिष्टो हि धर्मी हेतोरपदिश्यमानस्यार्थः । स [5]ह्यर्यते हेतुना, तस्यैकदेशः साध्यधर्मः । स हि धर्मिणि बलवता प्रमाणेन तद्विपरीतधर्मनिर्णयं कुर्वता संशयकालमतिपातितः । स तादृशो हेतुः कालात्ययापदिष्टः कालातीत इति स्वमतेनास्यार्थः । अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्यात् नोदाहृतम् ॥

**परमते** च[6] कालात्ययेन युक्तो यस्य हेतोरर्थरूप[7] एकदेशो हेतुविशेषणमिति यावत्, स कालात्ययापदिष्ट इति योजना । परमतेनैव निदर्शनमाह—**निदर्शनमिति** ।

---

१. तस्मात् C २. द्रः पृ. २.१६ ३. पृ. ३.८ ४. यस्यार्थैक॰ C ५. अर्थ्यते C
६. तु C ७. अनुरूपः C

नित्यत्वं चात्रावस्थानमात्रमभिमतमिति, न[1] घटादिभिरालोकसंयोगव्यङ्ग्यैर्व्यभिचारः । तदेतत् पञ्चावयवं वाक्यमुपन्यस्य संयोगव्यङ्ग्यत्वस्य हेतोरेकदेशस्य विशेषणस्य संयोगस्य व्यक्तिकालात्ययेन हेत्वाभासतामाह—**अयमहेतुरिति** । स पुनरयमसिद्धविशेषणतया हेत्वाभासः साध्यसम एवेति न पृथग्वाच्य इति स्थूलतया एष दोषो भाष्यकारेण नोद्भावितः ॥

यत् पुनः **भदन्तेन** कालातीतस्य व्याख्यानं कृतं प्रतिज्ञानन्तरं हि हेतोः कालः । तमतीत्य हेतुः पश्चादपदिश्यमानः कालातीतो भवति । तद् यथा, अनित्यः शब्दः घटादिवदित्युक्ते कस्मादित्यनुयुक्तो[2] हेतुं ब्रूते कृतकत्वादिति स कालातीत इति । तच्चैवं तेन दूषितम्—किं [3]निराकाङ्क्षे वादिनि एष प्रतिवादिनः प्रश्नः, आहो साकाङ्क्षे ? यदि निराकाङ्क्षे तदा न्यूनमेवास्य निग्रहस्थानम्, न हेत्वाभासस्तस्याप्रयोगात् । प्रयुक्तो हि हेतुस्तदाभासो वा स्यात् नाप्रयुक्तः । अथ साकाङ्क्ष एव वादिनि प्रतिवादिनः प्रश्नः, तथापि पश्चादप्यसौ हेतुः प्रयुक्तो हेतुरेव, न ह्यसौ तदा न स्वसाध्याविनाभूतः, अपक्षधर्मो वेति । तस्मात् न कालतीतो नामास्ति हेत्वाभास इति । तदेतद् **भदन्त**-दूषणम् एतद्व्याख्यानानभ्युपगमेन परिहरति—**अवयवविपर्यासवचनं त्विति** । अनभ्युपगमहेतुं पृच्छति—**कस्मादिति** । उत्तरम्—**यस्येति** । अर्थेन सामर्थ्येन संबन्धोऽर्थसंबन्धः । अपि च पौनरुक्त्यादपि नाभ्युपगम्यत इत्याह—**अवयवेति** ॥

[4]**यस्यापदिश्यमानस्य** इत्यादि [5]**पुनरुच्यत** इत्यन्तं **वार्त्तिकं** भाष्यव्याख्यानेनैव व्याख्यातम् । शङ्कते—**समीकृतेऽभिधानादिति** । अयमर्थः, नैतदप्राप्तकालेन निग्रहस्थानेन पुनरुक्तम्, अपि तु हेत्वाभास एव । स ह्यवयवविपर्यास उच्यते यत्रैकग्रन्थेनैव वादी प्रतिज्ञोदाहरणादि प्रयुज्य पश्चात् हेतुं प्रयुङ्क्ते, एष तु प्रतिज्ञोदाहरणे प्रयुज्य विरतः प्रतिवादिनानुयुक्तः पश्चात् हेतुं प्रयुङ्क्ते । तस्मात् न्यूनतादूषणेन पक्षे समीकृते पक्षमात्रतां नीते सिद्धावस्थातः प्रच्याविते पश्चादभिधानात् हेतोरेष कालातीतो हेत्वाभासः, न पुनरप्राप्तकालम् । **निग्रहस्थानमिति चेदिति** । निराकरोति—**केनेति** । यदि **हेत्वभिधानेन** न्यूनतया **समीकृतः** पक्षः **किमत्र हेतोरसामर्थ्यम्** ? न ह्यन्यदोषेणान्यो युज्यत इत्यर्थः । शङ्किता ब्रूते— **एतदस्येति** । निराकरोति—**नैतदिति** । न्यूनतया निगृहीतो यदि पश्चादभिधानेन निग्रहीतव्यः,

---

१. अन्यथा for न C २. हेतुं om C ३. विरते J ४. पृ. ३८८.६
५. पृ. ३९०.१०

ततो वाचेव निगृह्यतां न स्वयं पश्चादभिहित इति समर्थः शक्यो हेतुर्निग्रहीतुमिति नायं समीकृताभिहितत्वेनापि हेत्वाभास इत्यर्थः। उभयनिराकरणमुपसंहरति—तस्मादिति ॥९॥

॥ परिशुद्धिः ॥

अत्र यथाश्रुतभाष्यवार्त्तिकदर्शनात्[1] सर्वमसमञ्जसमिति मत्वा स्वव्याख्यां स्थानान्तरीयभाष्याद्युपन्यासेन संवदन्नाह—अत्रेत्यादिना। अक्षुण्ण इत्यादिना प्रतिषेध्यविधेयधर्मग्राहकप्रमाणबाधो दर्शितः। धर्मिग्राहकप्रमाणबाधस्तु घटो व्यापकः सत्त्वादाकाशवदिति प्रत्यक्षेण। परमाणुः सावयवो मूर्तत्वाद् घटवदित्यनुमानेन। मेरुः पाषाणमयः पर्वतत्वाद् विन्ध्यवदित्यागमेन। हेतुग्राहकप्रमाणबाधस्तु, जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शवत्वात् तेजोवदिति प्रत्यक्षेण। मनो विभुज्ञानासमवायिकारणसंयोगाधारत्वात् आत्मवदित्यनुमानेन। ब्राह्मणस्य राजसूयं कर्म, स्वर्गसाधनत्वात् अग्निष्टोमवदित्यागमेन। एवं नवविधोऽयमेकविधोपमानबाधेन संक्षेपतो दशविध इति। ननु बाधो नाम नाविनाभावभङ्गादपरः कश्चित्। सोऽपि न त्रैरूप्यप्रच्यवादन्य इत्यत आह—बाधेति। न हि बाधम् अव्यवस्थाप्यानैकान्तिकत्वमपक्षधर्मत्वं वावतारयितुं शक्यम्। अतोऽस्यावश्योद्भाव्यतयावश्याभ्युपगन्तव्यः, अन्यथा विरोधमपि नाभ्युपगच्छेत्। विरोधे हि हेतोरभावे स्वरूपासिद्धिः। साध्याभावेऽपक्षधर्मता दुर्निवारा। अथ विरोधस्यैव प्रथमं बुद्ध्यावुपनिपातात् तदुद्भावनमन्तरेण पक्षधर्मत्वस्योद्भावयितुमशक्यत्वाच्च सोऽवश्याभ्युपगन्तव्यः। तदेतत् समानमन्यत्रापीत्युक्तमित्यर्थः। यद्येवम्, भाष्यमिदानीं कथमित्यत आह—एवमिति। अथ यद्ययमर्थो भाष्यकारस्य विवक्षितः, किमिति नैतदनुरूपमुदाहरणमित्यत आह— अत्र चेति। तथाप्यैहिकमुदाहरणमसङ्गतमित्यत आह-- परमतेनैवेति। अथैतदुदाहरणं स्वमते पञ्चकोटिषु[2] कान्तर्भविष्यतीत्यत आह—स पुनरिति। तत् किमिति नोद्भावयांबभूव एवमित्यत आह—स्थूलतयेति। वार्त्तिकमिदानीं कथमित्यत आह--यस्यापदिश्यमानस्येत्यादि। भदन्तं[3] प्रत्येकदेशिनः परीहारः—समीकृतेऽभिधानादिति। तद् विवृणोति--अयमर्थ इति ॥ ९ ॥

॥ हेत्वाभासलक्षणप्रकरणम् ॥

---

१. °भाष्य° om J २. °कोटि° om J A ३. भवन्तं A

## ॥ छलप्रकरणम् ॥

### ॥ भाष्यम् ॥

अथ छलम्—

**वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥**

न सामान्यलक्षणे छलं शक्यमुदाहर्तुम्, विभागे तूदाहरणानि ॥ १० ॥

### ॥ वार्त्तिकम् ॥

**वचनविघातोऽर्थविकल्पोपपत्त्या च्छलम्** ॥१०॥ वचनविघातो यः क्रियते सामान्यशब्दस्य [1]विशेषानेकसंबन्धित्वे सति अविवक्षिताध्यारोपेण, छलं तद् वेदितव्यम् ॥१०॥

### ॥ टीका ॥

उद्देशक्रमानुरोधेन लक्षणक्रमस्य हेत्वाभासानन्तरं छलस्योद्देशात् छललक्षणस्यापि हेत्वाभासलक्षणानन्तर्यमाह **भाष्यकारः—अथ छलम्** ॥

**वच—लम्** ॥१०॥ यथा वक्तुरभिमतोऽर्थः ततो विरुद्धः अर्थः तस्य [2]कल्पः कल्पना, सैवोपपत्तिः तया । अथ लक्षणान्तर इव[3] छलस्य सामान्यलक्षणे कस्मादुदाहरणं न दीयत इत्यत आह—**न सामान्यलक्षणे** इति । सामान्यविशेषवत् सर्वमुदाहरणम्, निर्विशेषस्य सामान्यस्यासत्त्वेन केवलस्य सामान्यस्योदाहरणमशक्यमित्यर्थः । **विभागे त्विति** । विभज्यत इति विभागो विशेषलक्षणम्, तस्मिन् उदाहरणानि ॥१०॥

### ॥ परिशुद्धिः ॥

एवं यत्नेनोद्भावनीयपरिहरणीयहेत्वाभासप्रकरणं समर्थितम् । अथ साधनवादी प्रमादी[4] प्रतिवादी वा सदुत्तरसमाधानयोरपरिस्फूर्तौ तयोर्विजिगीषुः तदाभासमपि ब्रूयादिति तदाभासव्युत्पादनावसरः । तत्रापि जातेः स्वपक्षव्याघातापादकत्वेन जघन्यत्वात् छलस्य तु तात्पर्यतो दुष्टत्वेऽपि वचनतोऽदुष्टत्वादस्फूर्तिदशायामपि तदेव प्रयोक्तव्यम् । तस्याप्यस्फूर्तौ जातिरिति विशेषज्ञापनार्थं जातेः पूर्वं छलोद्देशः । सैव लक्षणेऽपि संगतिरिति भाष्यार्थमाह—**उद्देशेति** ॥

नन्वतिव्यापकमिदं लक्षणम् । अर्थवैचित्र्योपपत्त्या वचनविघातस्य जातावपि

---

१. अनेकविशेष° J  २. विकल्पः C  ३. °न्तरवत् C  ४. प्रमादी om A.

संभवादित्यत आह—यथा वक्तुरिति[1] । इह वाग्वृत्तिविपर्यासेन प्रत्यवस्थानं न तु तत्रेति भेद इत्यर्थः । ननु विभागो नोदाहृतः[2] तत्कथं विभागे तूदाहरणानीति भाष्यमित्यत आह—विभज्यत इति ॥१०॥

॥ भाष्यम् ॥

विभागश्च,

**तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं च ॥११॥**

॥ वार्त्तिकम् ॥

**तत् त्रिविधमिति** नियमार्थं पूर्ववत् अनेकधा भिन्नं छलं संगृह्यत इति ॥११॥

॥ टीका ॥

छलसामान्यलक्षणमभिधाय तद्विशेषलक्षणान्यभिधातुं प्रथमं तावत् न्यूनाधिकसंख्याव्यवच्छेदार्थं विभाग लक्षणसूत्रमवत्तारयति[3]—**विभागश्चेति** । विभज्यतेऽनेति विभागः सूत्रमुच्यते । तत् त्रि—च ॥ ११ ॥

॥ परिशुद्धिः ॥

यद्येवं कथं **विभागश्चेति** कृत्वा विभागसूत्रमेव पठतीत्यत आह—**विभज्यतेऽनेनेति** । उक्तिपूर्वकत्वात् तात्पर्यस्य तदनुसंधानपूर्वकत्वादुपचारस्योद्देशक्रमनियमः । तदनुरोधाच्च लक्षणक्रमनियमः ॥११॥

॥ भाष्यम् ॥

तेषाम्—

**अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥**

नवकम्बलोऽयं माणवक इति प्रयोगः । अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः । विग्रहे[4] तु विशेषो, न समासे[5] । तत्रायं छलवादी वक्तुः अभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति [6]तावदभिहितं भवतेति कल्पयति । कल्पयित्वा चासम्भवेन प्रतिषेधति, एकोऽस्य कम्बलः [7]कुतो नव कम्बला इति । तदिदं सामान्यशब्दे वाचि निमित्ते[8] छलं वाक्छलमिति ॥

---

१. चक्षुरिति A  २. विभागो नोक्तः M  ३. विभागमव° C  ४. च J
५. समासे नवकम्बल इति J  ६. एतदभि° J  ७. कुतोऽस्य J  ८. निमित्ते om CT

अस्य प्रत्यवस्थानम्—सामान्यशब्दस्यानेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम्। नवकम्बल इत्यनेकार्थाभिधानम्, नवः कम्बलोऽस्येति, नव कम्बला अस्येति च। एतस्मिन्प्रयुक्ते येयं कल्पना नवकम्बला अस्येत्येतद् भवताभिहितम्, तच्च न सम्भवतीति। एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः, यस्माद्विशेषोऽर्थविशेषेषु विज्ञायतेऽयमर्थोऽनेनाभिहित[1] इति। स च विशेषो नास्ति, तस्मान्मिथ्याभियोगमात्रमेतदिति ॥

प्रसिद्धश्च लोके शब्दार्थसम्बन्धोऽभिधानाभिधेयनियमनियोगः। अस्याभिधानस्यायमर्थोऽभिधेय[2] इति समानः सामान्यशब्दस्य, विशेषो विशिष्टशब्दस्य[3]। प्रयुक्तपूर्वाश्चेमे[4] शब्दा अर्थे प्रयुज्यन्ते, नाप्रयुक्तपूर्वाः। प्रयोगश्चार्थसम्प्रत्ययार्थः। अर्थप्रत्ययाच्च व्यवहार इति। तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात्सामान्यशब्दस्य प्रयोगनियमः। अजां ग्रामं नय, सर्पिराहर, ब्राह्मणं भोजयेति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते, सामर्थ्यात् [5]यत्रार्थक्रियादेशना सम्भवति तत्र प्रवर्तन्ते नार्थसामान्ये, क्रियादेशनासम्भवात्। एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः सम्भवति नवः कम्बलोऽस्येति, तत्र प्रवर्तते। यस्तु न सम्भवति नव कम्बला अस्येति, तत्र न प्रवर्तते। [6]सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्ते न कल्पत इति ॥ १२ ॥

॥ वार्त्तिकम् ॥

अविशेषाभि हतेऽर्थे इति सूत्रम् ॥१२॥ अविशेषाभिहितमिति सामान्यश्रुति वाक्यं पदं वा अविशेषाभिहितमुच्यते। वाक्यं सामान्यश्रुति यथा नवकम्बलोऽयमिति। पदं सामान्यश्रुति यथा[7] अश्वोऽश्व इति। अविशेषशब्दानभिधानं प्रयोगाभावात्। न ह्यविशेषशब्देन कस्यचिदभिधानं संभवति। न चास्य प्रयोगो युक्त इति। वाक्यं च सर्वमुच्चरद्विशेषमेव प्रत्याययतीति सामान्यप्रत्यायनमयुक्तम्। न, प्रकरणादीनन्तरेण श्रुतिमात्रात् तदुपपत्तेः। यदा प्रकरणादिनिरपेक्षं वाक्यमुच्चार्यते श्वेतो धावतीति, तदा वाक्यश्रुतिसामान्यात् श्रोतुः सन्देहः। संदेहे[8] सत्यविवक्षितमर्थमध्यारोप्य[9] प्रतिषेधति।

---

१. विशेषाद् विजानीमोऽयमर्थो भवताभि° J २. धेयोऽस्याभिधेयस्यायं शब्दोऽभिधानम् J ३. विशिष्टो विशेष° J ४. °श्चामी J ५. यत्रार्थे J ६. °पपन्नार्थ° J ७. अश्व इति J ८. सम्मोहः। सम्मोहे J ९. °तमेकम° J

एवं पदेऽपीति । अर्थग्रहणं शब्दनिराकरणार्थम् । अर्थविषयं छलं न शब्दविषयमिति । न ह्ययं प्रतिषेद्धुं शक्नोति[1] नायं नवकम्बलशब्द इति । तस्य प्रत्यवस्थानम् । ज्ञात्वा अज्ञात्वा वा प्रयोगात्[2] प्रतिषेधानुपपत्तिः । यदि तावत् नवकम्बलस्यार्थं बुद्ध्वा नायं नवकम्बल इति प्रत्यवतिष्ठते, तदार्थान्तरमाह, अन्यद् बुध्यते अन्यत् प्रतिषिध्यते इति । अथ पुनर्नैव नवकम्बलस्यार्थं बुध्यते तथाप्यज्ञानमिति ॥१२॥

॥ टीका ॥

तत्र च विशेषलक्षणमवतारयति । तेषां छलानां मध्ये वाक्छलं लक्ष्यते—अवि—लम् ॥१२॥ नवः कम्बलोऽस्येति एकत्र विग्रहः, नव कम्बला अस्येति[3]अपरत्र इति विग्रहे विशेषः । वाक्छलमिति शब्दार्थं व्युत्पादयति—वाचि निमित्ते छलं वाक्छलमिति । नवकम्बल इत्युभयत्रापि समानायां वाचि निमित्तभूतायामित्यर्थः । तदेतच्छलं पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम् । परवाक्ये पर्यनुयोगोऽस्येति चोक्तम् । तदत्र यथा पर्यनुयोगः, तथा दर्शयति शिष्यहिततया भाष्यकारः—अस्य प्रत्यवस्थानमिति । [4]उभयार्थप्रतिभाने [5]संभवत्पदार्थपरित्यागेनासंभवत्पदार्थकल्पनम् अयुक्तमित्यर्थः ॥

अथ प्रयोक्तापि कथं साधारणेन शब्देनार्थविशेषं बोधयति ? अबोधयंश्च कथं प्रतिपादको नाम इत्यत आह—प्रसिद्धश्चेति । संबन्धस्वरूपमाह—अभिधानाभिधेययोर्नियमः, अयमेव शब्दोऽस्यैवार्थस्येति । तत्र यः पुरुषस्य नियोगः अस्मादयमेव बोद्धव्य इत्येवमाकारः, किमतो यद्येवमित्यत[6] आह—प्रयुक्तपूर्वाश्चेति । तथापि किमित्यत आह—प्रयोगश्चेति । तामिमां भूमिरचनां प्रकृते योजयति—तत्रैवमर्थगत्यर्थ इति । एतदुक्तं भवति, न सङ्केतकरणावस्थायां वृद्धव्यवहारे वा कश्चित् शब्दः कञ्चिदर्थं शृङ्गग्राहिकया बोधयति, अपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारी विशेषे वर्तते । तस्मात् नैष प्रतिपादयितुरपराधो यदेष विशेषशब्दैर्विशेषं न[7] प्रतिपादयति, किं तु सङ्केतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्तते । तस्माद् यथासङ्केतं बोधयन् नापराध्यः प्रयोक्तेति सिद्धम् । सामर्थ्यमेव दर्शयति—यत्रार्थे क्रिया चोदनेति ॥

स्यादेतत् । अविशेषाभिहितेऽर्थे इति न युक्तम् न हि नवकम्बल इति पदं प्रकरणादिनिरपेक्षं कञ्चिदर्थमविशेषेणाभिधत्ते गवादिशब्दवत् । न हि संख्याविशेषे च

१. शक्यते J २. प्रयोगात् om J. ३. एकत्रेति J ४. प्रति om J ५. असंभवदर्थकल्पनमयुक्तम् C ६. इति om C ७. °शेषान् न C

नवीनत्वे चास्ति कश्चित् सामान्यविशेषो बाहुलेयादिष्विव गोत्वं यमभिदधीतेत्यत आह वार्त्तिककारः—सामान्यश्रुतीति। अभिहितिः अभिहितम् ऊच्चारणमिति यावत्। समानः शब्दो नार्थे सामान्यमित्यर्थः। अश्व इति नामपदमश्वत्वस्य वाचकम्, आख्यातपदं यदा कस्यचिदभिमुखं प्रयुज्यते अश्व इति, तदा वृद्धि गतोऽसीति प्रतीयते। चोदयति—अविशेषेति। समानो हि शब्दोऽभिधेये संशयमाधत्ते न त्वर्थमभिधत्त इत्यर्थः। परिहरति—न प्रकरणादीन् इति। श्वेतो धावतीति इतः सारमेयो द्रुततरं याति, श्वित्री [1]प्रक्षालयतीत्यर्थसन्देह इत्यर्थः। अर्थ इत्यस्य प्रयोजनमाह—अर्थग्रहणमिति। अविशेषश्रुतौ शब्दे सति अर्थे अर्थान्तरकल्पना, न शब्द इत्यर्थः। अस्य प्रत्यवस्थानमित्यादि भाष्यं व्याचष्टे—तस्येति। सुगमम् ॥ १२ ॥

## परिशुद्धिः

[2]अभिधावृत्तिसंचारो यत्र च्छले तद्वाक्छलमिति लक्षणार्थः, वाचीति विषयसप्तमी, भ्रमं निवारयति—वाचि निमित्त इति। नन्वेतत् सर्वच्छलसाधारणमित्यत आह—नवकम्बल इत्यादि। तदिदं वाक्छलमुत्तरदशायां नवविधम्। तद्यथा भूभृदयं वीर्यशाली महावयवत्त्वादित्यत्र धर्मिपदसंचारेण न नखप्रसूनाञ्चितकरपल्लवोऽयं नित्यकर्मकरत्वादित्यत्र साध्यपदसंचारेण। अजा गर्भवती रक्तविलोचनत्वादित्यत्रोभयपदसञ्चारेण। तदेतत् प्रतिज्ञाश्रयं त्रयम्। आढ्योऽयं नवकम्बलत्वादित्यत्रासिद्धत्वोद्भावनेन। गजोऽयं विषाणीत्वादित्यत्र विरोधोद्भावनेन। दुरालोकोऽसौ राजा तेजोमयत्वादित्यत्रानैकान्तिकत्वोद्भावनेन। तदेतत् हेत्वाश्रयं त्रयम्। द्रव्यं वायुः सावयवत्वात् अम्बरवदित्यत्र साधनविकलत्वेन[3]। असमदादिदुरासदाः तारका गगनेचरत्वात् पतङ्गवदित्यत्र साध्यविकलत्वेन। पशुरेष विषाणित्वाद् गोवदित्यत्रोभयविकलत्वेन[4]। तदेतद् दृष्टन्ताश्रयं त्रयम्। प्रत्युत्तरदशायां तु प्रतिपक्षसाधने नवविधमेव। अन्यत्र तु यावद्दूषणभेदम्। तद् यथा, अन्यथासिद्धोऽसिद्धश्चेति व्याघातः कथमपि सिद्धत्वात्। साध्यविपर्ययव्याप्तोऽयमिति, गुण एवान्यथा साध्याभेदप्रसङ्गात्। अम्बरेणानैकान्तिकमित्यसङ्गतम्, तस्याप्यनित्यत्वात्। नायं पक्षी कुतोऽस्य पक्षबाधसंभावनेत्यादि स्वयमूह्यम्। अस्य प्रत्यवस्थानमित्यादि भाष्यं न पूर्वसूत्रव्याख्यानं नोत्तरसूत्रपरं वेत्यत आह—तदेतच्छलमिति ॥ १२ ॥

---

१. निर्गेत्तीत्यर्थः C　२. अभिधानवृ° AJ　३. साध्यविकल्पेन M　४. विषयत्वेन A

सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना[1] सामान्यच्छलम् ॥१३॥

॥ भाष्यम् ॥

अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह सम्भवति ब्राह्मणे विद्याचरणसम्पदिति। अस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्या असम्भूतार्थकल्पनया[2] क्रियते यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति [3]ननु व्रात्येऽपि सम्भवेत्, व्रात्योऽपि ब्राह्मणः, सोऽप्यस्तु विद्याचरणसम्पन्नः। यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम्। यथा ब्राह्मणत्वं विद्याचरणसम्पदं क्वचिदाप्नोति क्वचिदत्येतीति। सामान्यनिमित्तं छलं सामान्यच्छलमिति।

अस्य च प्रत्यवस्थानम्—अविवक्षितहेतुकस्य विषयानुवादः[4] प्रशंसार्थत्वाद् वाक्यस्य। [5]तदत्रासंभूतार्थकल्पनानुपपत्तिः। यथा सम्भवन्त्यस्मिन् क्षेत्रे शालय इति। अनिराकृतमविवक्षितं च [6]बीजजन्म। [7]प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते। [8]सोऽयं क्षेत्रानुवादो, नास्मिन् शालयो विधीयन्त[9] इति। बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता। एवं सम्भवति ब्राह्मणे विद्याचरणसम्पदिति सम्पद्विषयो ब्राह्मणत्वं न सम्पद्धेतुः। न चात्र हेतुर्विवक्षितः। [10]विषयानुवादस्त्वयं प्रशंसार्थत्वाद् वाक्यस्य, सति ब्राह्मणत्वे सम्पद्धेतुः समर्थ इति। विषयं च प्रशंसता वाक्येन यथाहेतुतः फलनिर्वृत्तिर्न प्रत्याख्यायते। तदेवं सति [11]वचनविघातोऽसम्भूतार्थकल्पनया नोपपद्यत इति ॥ १३ ॥

॥ वार्त्तिकम् ॥

संभवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना[12] सामान्यच्छलम् ॥१३॥ सामान्यस्य विवक्षितार्थातिक्रमः अतिसामान्यम्। उदाहरणम्—विद्याचरणसंपन्नो ब्राह्मण इति। [13]परस्तु ब्राह्मणत्वं विद्याचरणसंपदो[14] हेतुरिति कृत्वा प्रत्यवतिष्ठते। स्तुत्यर्थे वाक्येऽन्यथाकारं प्रत्यवस्थानम्। उभयथा दोषो बुद्ध्वा अबुद्ध्वा वेति ॥१३॥

---

१. असद्भूतार्थ° J २. असद्भूतार्थ J ३. ननु om C ४. °र्थवादः J ५. °सद्भूतार्थ ६. बीजम् J ७. शालिनिवृ° J ८. क्षेत्रार्थ° J ९. विपद्यन्ते J १०. °र्थवादः J ११. °सद्भूतार्थ° J. १२. °द्भूतार्थ J १३. परन्तु ब्राह्मण्य° C १४. °सम्पन्नत्वे C

## ॥ टीका ॥

**संभव—लम्** ॥१३॥ **संभवतोऽर्थस्य** ब्राह्मणविशेषस्य [1]विद्याचरणसंपद्विषयत्वेन विद्याचरणसंपदमत्येति यत् सामान्यं ब्राह्मणत्वं व्रात्ये ब्राह्मणे, तस्य ब्राह्मणत्वस्यातिसामान्यस्य योगादसंभूतार्थकल्पनया[2] यः प्रतिषेधः तत् सामान्यच्छलम् । **अहो नु**[3] **खल्वयं ब्राह्मणो विद्याचरणसंपन्न** इति हि स्तुत्यर्थं वाक्यमभ्यनुजानतोक्तं **संभवति ब्राह्मणे विद्याचरणसंपदिति** [4]तदेतदपि वाक्यं स्तुत्यर्थमेव, न त्वस्य ब्राह्मणत्वात् हेतोर्विद्याचरणसंपद् विवक्षितेति । तत्र परो [5]हेत्वर्थमस्या विवक्षितमारोप्य वचनं विहन्तीति तदिदं सामान्यच्छलम् । **विषयानुवाद**[6] इति । संपद्विषयस्य ब्राह्मणत्वस्यानुवाद[7] इत्यर्थः । कस्य ? **अविवक्षितहेतुकस्य** पुंसः । तदेतद् **वार्त्तिककारो** व्याचष्टे—**सामान्यस्येति** । विवक्षितार्थमधिगतं सामान्यमित्यर्थः । शेषं सुबोधम्[8] ॥१३॥

## ॥ परिशुद्धिः ॥

यत्र तात्पर्यसंक्रान्तिस्तत् सामान्यच्छलमिति **सूत्रार्थः** । तच्च क्वचित् संभवविधिविशेष्येषु । यथा संभवद्विद्याचरणसंपदयं ब्राह्मणत्वात् । अनित्यः शब्दः । शतं द्विजातयो भोजिता इति । क्वचित् तु हेतुत्वोद्देशविशेषणेषु यथा ब्राह्मणादुपजातोऽयं ब्राह्मणत्वात् । अनित्यं कार्यं द्विजशतं भोजितमिति । तदेतत् सर्वं विवक्षितमाप्नोति चात्येति चोभयसमानं चेत्यतिसामान्यमुच्यते । एतन्निमित्तकं छलं सामान्यच्छलमिति । **भाष्यानुरोधात्** विशेषनिष्ठं व्याचष्टे—**संभवत** इति । तत्राद्यमुदाहरणं **स्फुटमेव** । द्वितीयं तु, अनित्यः शब्दः कृतकत्वादित्युक्ते घटोऽप्यनित्यः तर्हि कृतकत्वात् शब्दः स्यात् । तृतीयं तु, शतं द्विजातयो भोजिता इत्युक्ते शतसंख्यावच्छिन्ना अपि भोजिताः सनकादयो न द्विजातय इति । चतुर्थं तु, ब्राह्मणाज्जातोऽयं ब्राह्मणत्वादित्युक्ते संभावनाविषयोऽयमभिहितो न हेतुरिति । पञ्चमं तु, अनित्यं कार्यमनित्यत्वादित्युक्ते साध्याविशिष्टो हेतुरिति । षष्ठं तु, द्विजशतं भोजितमित्युक्ते द्विजा भोजिताः, न तु तद्गता शतसंख्येति । एवं प्रत्युत्तरदशायामप्येतत् षड्विधमेवेति ॥१३॥

**धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्** ॥१४॥

---

१. °संपदा C २. °दसद्भूतार्थ° J ३. नु om C ४. तदपि C ५. हेतुत्व° C ६. र्थवादः J ७. °र्थवादः J ८. शेषं सुबोधम् om C

॥ भाष्यम् ॥

अभिधानस्य धर्मो यथार्थंप्रयोगः। धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः। तस्य निर्देशे धर्मविकल्पनिर्देशे। यथा मञ्चाः क्रोशन्तीति अर्थसद्भावेन प्रतिषेधः मञ्चस्थाः पुरुषाः क्रोशन्ति, न तु मञ्चाः क्रोशन्ति ॥

का पुनरत्रार्थविकल्पोपपत्तिः? अन्यथा प्रयुक्तस्यान्यथार्थकल्पनं,[1] भक्त्या प्रयोगे प्राधान्येन कल्पनम् उपचारविषयं छलमुपचारच्छलम्। उपचारो नीतार्थः सहचरणादिनिमित्तेन, अतद्भावे तद्वदभिधानमुपचार इति ॥

अत्र समाधिः—प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरभ्यनुज्ञा प्रतिषेधो वा न च्छन्दतः। प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोके सिद्धः। सिद्धे प्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा न च्छन्दतः। यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते, यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा न च्छन्दतः। अथ गुणभूतम्? तदा[2] गुणभूतस्य। यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति, स्वमनीषया प्रतिषेधोऽसौ[3] भवति न परोपालम्भ इति ॥ १४ ॥

॥ वार्त्तिकम् ॥

**धर्मविकल्पनिर्देश** इति सूत्रम् ॥ १४ ॥ धर्मविकल्पनिर्देशशब्देनाभिधानधर्मो द्वेधा अभिधीयते, प्रधानो[4] भाक्तश्च। मञ्चा इति काष्ठसंघातेषु प्रधानो[5] मञ्चशब्दः, क्रोशनक्रियाया असंभवमीक्षित्वा स्थानिषु पुरुषेषु भाक्तः। सोऽयमभिधानाभिधेयव्यवहार एवं व्यवस्थितः[6]। य एतस्मिन्[7] अन्यथाकारं प्रतिषेधः तदुपचारच्छलम्। अस्यापि पूर्ववत् प्रतिषेधो ज्ञात्वा अज्ञात्वा वेति ॥ १४ ॥

॥ टीका ॥

**धर्म—लम्** ॥१४॥ शब्दस्य धर्मः प्रयोगः तस्य विकल्पो द्वैविध्यम्। द्विविधः प्रयोगः, प्रधानो भाक्तश्च। तत्रापि प्रधान औत्सर्गिकः, तस्य तु कुतश्चिदपवादाद्[8] भाक्तो भवति। तदेतदाह **भाष्यकारः**—**अभिधानस्य** शब्दस्य **यथार्थं प्रयोगो धर्मः** औत्सर्गिकः। तत् किमयमेव? नेत्याह—[9]**विकल्पो** द्वैविध्यम्। कोऽसौ द्वितीय इत्यत आह—उत्सर्गस्य तु कुतश्चिदपवादाद् **अन्यत्र दृष्टस्यान्यत्र प्रयोगः**।

१. °र्थपरिकल्पनं J २. तथा J ३. °मनीषिकाप्रतिषेधः स J ४. प्रधानं C ५. प्रधानं C ६. व्यवतिष्ठते C ७. °कारप्रति° C ८. क्वचिद्° ९. तस्य च वि° J

तदेवं [1]व्यवस्थितेन धर्मविकल्पेन **निर्देशे** वाक्ये, निर्दिश्यतेऽनेनेति व्युत्पत्त्या । तत्र भाक्तविवक्षायां मञ्चाः क्रोशन्तीति, अत्रार्थसद्भावेन प्रतिषेधः । तमेवार्थसद्भावमाह— **मञ्चस्थाः पुरुषाः क्रोशन्ति, न तु मञ्चाः क्रोशन्तीति** । वार्त्तिकमते त्वर्थसद्भावस्यैव प्रतिषेध इति व्याख्येयम् । ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगः, हन्त सर्वं सर्वत्र प्रयुज्येतेत्यत आह—**उपचारो नीतार्थः** प्रापितार्थः । सहचरणादिना निमित्तेनेति, अन्यत्र दृष्टस्याप्यन्यत्र प्रयोगः संबन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः । **न छन्दतः** न छद्मनेत्यर्थः । ननु यदि भाक्ततयाप्युपपत्तिः, न किञ्चित् जल्पाकभाषितं दुष्टं स्यात् । सर्वस्यैव यथाकथञ्चिद् भाक्तत्वेनोपपत्तेरित्यत आह—**प्रधानभूतस्येति** । भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धतया दृष्टान्तलाभाय । लोकसिद्ध एवोपचारः कर्तव्यो नापूर्वो विना प्रयोजनम्, लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः ॥

सूत्रव्याख्यानपरं **वार्त्तिकं धर्मविकल्पनिर्देशशब्देन** सूत्रस्थेन । अभिधानं प्रयोगः शब्दस्य धर्मो [2]भवन् द्विधाभिधीयते द्वैविध्यमाह—**प्रधानमिति सोऽयम् अभिधानाभिधेयव्यवहार** इति, अभिधानं शब्दः । अभिधेयो गम्यः । स च क्वचिद् वाच्यः, क्वचिद् भाक्त [3]इत्यर्थः ॥१४॥

॥ परिशुद्धिः ॥

उपचारवृत्तिव्यत्ययो यत्र तदुपचारच्छलमिति लक्षणार्थः । एतदप्युत्तरे नवविधम् । तद् यथा, अयं माणवकः सिंहः, अयं सिंहो राज्ञः, अयं पुरुषसिंहो राजशार्दूलस्येति प्रतिज्ञामाश्रित्य त्रयम् । वर्षासु नौसंचार्येयं भूमिर्गङ्गात्वात्, घोषाणां सुखवसतिहेतवस्ते देशा गङ्गात्वात्, स प्रदेशो घनकाशादिवनो[4] गङ्गात्वादिति हेतुमाश्रित्यत्रयम् । ये ध्वनिहेतवस्ते क्रोशन्ति यथा मञ्चाः, ये क्रोशन्ति ते ध्वनिहेतवो यथा मञ्चाः, ये क्रोशनप्रयोजनवन्तस्ते क्रोशन्ति यथा मञ्चाः, इति दृष्टान्तमाश्रित्य त्रयम् । प्रत्युत्तरे तु [5]प्रतिसाधने तावदेव । अन्यत्र तु यावद्दोषभेदम्[6] । तद्यथा, अशरीरत्वादिति हेतुरयमाश्रयासिद्ध इत्युक्ते नैवम्, हेत्वाश्रयस्याकाशस्य सिद्धत्वात् । न च हेतुरसिद्धत्वादीना दूष्यते अपि तु लिङ्गमेव । अतो निरनुयोज्यानुयोगो भवत इत्यादि **धर्मविकल्पनिर्देशशब्देनाभिधानधर्मो द्वेधाभिधीयत इति** [7]वार्त्तिकैकवाक्यताम् आपादयितुं भूमिं रचयित्वा यथाश्रुतभाष्यमुपेक्ष्य खण्डखण्डं व्याचष्टे—**शब्दस्येति** ।

१. व्यवस्थिते C २. भवन् om J ३. इति सुबोधम् C. ४. °शादिमान् M
५. प्रतिसन्धाने M ६. °द्दशभे° A ७. वाक्यैक M

द्यपि नेह स्फुटम् तथाप्येकत्र वस्तुसद्भावः प्रतिषिध्यते । नैव क्रोष्टारो मञ्चा इति परीक्षावार्त्तिकमनागतमवेक्ष्याह—वार्त्तिकमते त्विति ॥ १४ ॥

वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥

॥ भाष्यम् ॥

न वाक्छलादुपचारच्छलं भिद्यते, [1]तस्याप्यर्थान्तरकल्पनाया अविशेषात् । इहापि स्थान्यर्थो गुणशब्दः, प्रधानशब्दः स्थानार्थं इति कल्पयित्वा प्रतिषिध्यत इति ॥ १५ ॥

॥ वार्त्तिकम् ॥

वाक्छलमेवोपचारच्छलमिति सूत्रम् ॥ १५ ॥ एकत्वम् अविशेषात् । कोऽविशेषः ? इहाप्यर्थान्तरकल्पना तत्रापीति ॥ १५ ॥ ॥

॥ टीका ॥

परीक्षापर्वणः सन्निधानात् तदर्थं लक्षणपर्वण्यपि योग्यायै सूत्रकारः छलक्षणं परीक्षते—वाक्छ–त् ॥ १५ ॥ स्थान्यर्थो गुणशब्दो यो वस्तुतः स एव प्रधानशब्दः स्थानार्थ इति कल्पयित्वेति योजना । यथा हि वाक्छले नवीनार्थो नवशब्दः संख्या भेदे कल्पितः, तथेहापीति पूर्वः पक्षः ॥ १५ ॥

॥ परिशुद्धिः ॥

संगतिर्हि द्वेधा भवति, अन्तर्भावलक्षणा आनन्तर्यलक्षणा च । तत्र न तावत् पूर्वा छलपरीक्षासूत्राणां लक्षणस्याध्यायार्थत्वात् । अध्यायानन्तर्भूतस्य चाह्निकप्रकरणयोः अन्तर्भावात्, परीक्षात्वेन द्वितीयादावेवान्तर्भावार्हत्वाच्च । नाप्युत्तरा षोढाप्यत्र संभाव्यते, स्मारकाभावेन प्रसङ्गाभावात्, तया विनैव प्रकृतसिद्धेः, उपोद्घाताभावात्, जातिनिग्रहस्थानलक्षणावरोधेनावसराभावात्[2], उत्तरप्रबन्धं प्रति अकारणत्वेन हेतुत्वायोगात्, छलपरीक्षाया उत्तरत्राव्यवहारेणानिर्वाहकत्वात्, छलपरीक्षाजात्यादिलक्षणसूत्राणां प्रकृतोपयोग्यैककार्यायोगेन तन्निबन्धनाया अपि संगतेरभावादित्यत आह—परीक्षापर्वण इति । प्रासङ्गिकी संगतिः । प्रसङ्गश्च परीक्षापर्वसन्निधानेनोपोद्बलित इत्यर्थः॥

---

१. कस्मात् ? तस्या अर्थान्तर° J २. तया विनैव·····°सराभावात् om M

पृथक्सूत्रणात् साधर्म्यसहिताया विशेषानुपलब्धेश्च संशय । परीक्षितं सत्सु विवेचितं सुग्रहं सुपरिहरं छलं भविष्यतीति परीक्षाप्रयोजनं स्फुटीकृत्य पूर्वपक्षमाह—यथा हीति । लक्षणाभेदादेकत्वमित्यर्थः ॥१५॥

**न तदर्थान्तरभावात् ॥ १६ ॥**

॥ भाष्यम् ॥

न वाक्छलमेवोपचारच्छलं तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात् । कुतः ? अर्थान्तरकल्पनातः । अन्या ह्यर्थान्तकल्पना, अन्योऽर्थसद्भावप्रतिषेध इति ॥ १६ ॥

॥ वार्त्तिकम् ॥

**न तदर्थान्तरभावात्** ॥१६॥ अविशेषादित्यस्य हेतोरनेन **सूत्रेण** असिद्धतामुद्भावयति । कथमसिद्धिः ? एकत्र वस्तुसद्भावः प्रतिषिध्यते, नैव क्रोष्टारो मञ्चा इति, एकत्र वस्त्वभ्यनुज्ञाय कम्बलयोगमभ्युपगम्य कम्बलस्यानेकता धर्मः प्रतिषिध्यत इति । यत्र धर्मः प्रतिषिध्यते, यत्र च[1] धर्मी, [2]सोऽयमतिमहान् विशेषः ॥१६॥

॥ टीका ॥

सिद्धान्तसूत्रम्—न त–त् ॥ १६ ॥ **तस्य** उपचारच्छले **अर्थसद्भावप्रतिषेधस्य अर्थान्तरकल्पनातो** वाक्छलादित्यर्थः । सूत्रतात्पर्यमाह—**वार्त्तिककारः**—**अविशेषादित्यस्येति** । विधेयं वस्तु, मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते, मञ्चा इति त्वनूद्यते । अतएव

गुणे त्वन्यार्थकल्पना[3]

इति मञ्चा इत्येतदप्रधानमनूद्यतया[4] भाक्तम् । न तु क्रोशन्तीति

न विधौ परः शब्दार्थः

इति न्यायात् । तदिह विधीयमानं क्रोशनमेव वस्तु प्रतिषिध्यते, नैव मञ्चाः क्रोशन्तीति छलवाक्येन । नवकम्बलो देवदत्त इति वाक्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते । तत्र न विधेयस्य वस्तुनः कम्बलस्य सद्भावः प्रतिषिध्यते, किं तु तदेकदेशस्यानेकताया इति महान् भेद इति सिद्धान्तः ॥ १६ ॥

१. च om. C  २. अयम् om. J  ३. °न्याय्यकल्पना ?  ४. °नुवाद्यतया J

॥ परिशुद्धिः ॥

**न तदर्थान्तरभावादिति** सिद्धान्तसूत्रम्। तत्र च भाष्यम्—**अन्यार्थान्तरकल्पना, अन्योऽर्थसद्भावप्रतिषेध इति।** तदेतदविशदम्, अर्थान्तरकल्पनाया उभयत्रापि पूर्वपक्षे दर्शितत्वात्। अर्थसद्भावप्रतिषेधस्तु यथाकथञ्चित् सर्वसाधारणः अन्यथा वचनविघातत्वलक्षणक्षतेः[1]। परमार्थतस्तु न क्वचिदपि। वार्त्तिकं तु एकत्र धर्मः प्रतिषिध्यतेऽन्यत्र धर्मीति। एतच्चासिद्धम्। न ह्यत्र मञ्चा एव धर्मिणः प्रतिषिध्यन्ते। अपि तु कम्बलधर्मसंख्यावत् मञ्चधर्मः। क्रोशनमिहापि प्रतिषिध्यत इत्यत आह—**विधेयं वस्त्विति।** अत्रैवोत्तरशङ्कान्तरमपनयति—**किं त्विति।** तदेतत्समाधानं प्रकृतोदाहरणापेक्षं द्रष्टव्यम्। सर्वव्यापकं तु मुख्योपचारवृत्त्यनुगतत्वेन अनयोर्भेदकौ नियतौ धर्माविति ॥ १६ ॥

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥ १७ ॥**

॥ भाष्यम् ॥

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते किञ्चित्साधर्म्यात्। यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति। विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति। अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते, त्रित्वमपि न निवर्त्स्यतीति ॥ १७ ॥

॥ वार्त्तिकम् ॥

अथ [2]मनुषे किं नोऽनेन विशेषणेन, इहाप्यर्थान्तरकल्पना तत्रापीति **अविशेषे वा किञ्चित्साधाम्यादेकच्छलप्रसङ्गः ॥ १७ ॥** कोऽस्य सूत्रस्यार्थः ? विरोधः, द्वित्वमभ्यनुज्ञातं निवर्तत[3] इति। कतमेन पुनर्न्यायेन द्वित्वमभ्यनुज्ञातम्[4] ? [5]वाक्छलोपचारच्छलयोरेकत्वं ब्रुवता सामान्यच्छलमन्यदित्यभ्यनुज्ञातं भवति। विशेषणानर्थक्यं वा। यदि सर्वं छलमेकमेवेत्यभ्युपगमः, वाक्छलमेवोपचारच्छलं तदविशेषात्[6]। इति व्यर्थं विशेषणम्। कथमेकत्वप्रसङ्गः ? किञ्चित्साधर्म्याद् यद्यनर्थान्तरकल्पना, अविशेषादेकत्वम्। सर्वं छलमेकं प्राप्नोति किञ्चित्साधर्म्यादिति। किं पुनस्तत् ? वचनविघातः अर्थविकल्पोपपत्तिश्च [7]सर्वस्मिश्छल इति ॥ १७ ॥

---

१. लक्षणाक्षतेः A २. मन्यते C ३. ०ज्ञायमानं निवर्तयति C ४. ज्ञायमानम् C ५. वाक्छलमेवोपचारच्छलम्, तयो० C ६. न्या. सू. १।२।१५ ७. तत् सर्व C

॥ टीका ॥

अवि—ङ्गः ॥१७॥ किञ्चित्साधर्म्यात् त्रित्वाभावे द्वित्वस्याप्यभ्युपगतस्याभावप्रसङ्गः। ओमिति ब्रूवतो वस्तुत्वेन समस्तभेदोच्छेदप्रसङ्गः। भाष्यवार्त्तिके अतिरोहितार्थे ॥ १७ ॥

॥ परिशुद्धिः ॥

अवि—ङ्गः ॥१७॥

॥ इति छलप्रकरणम् ॥

॥ पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् ॥

॥ भाष्यम् ॥

[1]अत ऊर्द्धम्—

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते [2]सा जातिः। स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति। उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः[3] इत्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्। तथा उदाहरणवैधर्म्यात्साध्यसाधनं हेतुः[4] इत्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम्। प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ॥ १८ ॥

॥ वार्तिकम् ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥१८॥ साधर्म्येण प्रत्यवस्थानं वैधर्म्येण प्रत्यवस्थानं जातिरिति। [5]प्रथमपक्षानुयोगं दर्शयति, स्थापनायां सत्यां प्रतीपमवस्थानं प्रत्यवस्थानं प्रतिपक्षवदिति। सूत्रार्थस्तु यथाश्रुति, न पुनरुदाहरणसाधर्म्येण उदाहरणवैधर्म्येण वेति। किमर्थमिदमुच्यते ? [6]व्यापनार्थम्। यदि यथाश्रुति सूत्रार्थो भवति, [7]तदा सर्वजातयो व्याप्यन्ते येन केनचित् साधर्म्यं येन केनचिद् वैधर्म्यमिति। लक्षणे जातीनामव्यापकत्वं तु दोषः। भाष्ये [8]तूदाहरणसाधर्म्यमुदाहरणवैधर्म्यं चोदाहरणार्थमिति, यथा चोदाहरणेन एवमनुदाहरणेनापीति ॥१८॥

---

१. छललक्षणात् C　२. सः C　३. न्या. सू. १।१।३४　४. १।१।३५
५. °पक्षाप्रयोगं J　६. व्यापकार्थम् C　७. तदा om J　८. तु om C

## ॥ टीका ॥

उद्देशक्रमानुरोधेन जातिलक्षणक्रममाह **भाष्यकारः**–**अतः छललक्षणाद्**–**ऊर्ध्वम्**। **साध–तिः** ॥१८॥ प्रतीपमवस्थानं प्रत्यवस्थानम्, तथा सति छलस्य सम्यग्दूषणस्य च जातित्वप्रसङ्गः। अत उक्तम्—**साधर्म्यवैधर्म्याभ्यामिति**। न च च्छले साधर्म्य-वैधर्म्ये स्तः। न च सम्यग्दूषणं साधर्म्यवैधर्म्यमात्रात्, अपि तु [1]प्रयोगादिति। **प्रयुक्ते हेतौ** तदाभासे वा **यः प्रसङ्गो जायते स जातिरिति**। जल्पे हि वेदप्रामाण्यं विद्वांसं प्रति कुहेतुना यदा नास्तिकैरधिक्षिप्यते, सदुत्तरं चास्य यदा सहसा न प्रतिभाति तदेश्वराणां जनाधाराणां मा भूद् वेदाप्रामाण्यबुद्धिरिति जात्यापि प्रत्यवस्थेयम्। अन्यथे-श्वरचरितानुवर्त्तिनीनां प्रजानां विप्लवो भवेदिति। क्वचित् पुनरबुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोगः संभवति। **जायमानोऽर्थः** इति जातिपदव्युत्पत्तिनिमित्तं दर्शितम्। तदेतद् **वार्त्तिककारो** व्याचष्टे—**साधर्म्येणेति**। यथा पक्षे सति प्रतिपक्षः, एवं स्थापनायां सत्यां प्रत्यवस्थानमिति। **सूत्रार्थस्तु यथाश्रुति, न पुनरुदाहरण-साधर्म्येण यथाभाष्यं** बोध्यव्यः। यद्येवम्, **भाष्यं** तर्हि कथमित्यत आह—**उदहरणार्थमिति**। एवं वैधर्म्येण वेत्येतदपि। **यथाश्रुति** न पुनर्यथा**भाष्यम्** उदाहरणार्थं तदित्यर्थः। अस्य व्याख्यानस्य गुणाभिधानेन प्रश्नपूर्वकं प्रपञ्चमाह—**किमर्थमिदमिति** ॥ १८॥

## ॥ परिशुद्धिः ॥

यद्यप्यसदुत्तरतया जातेः छलप्रकरण एवान्तर्भावो युक्तः, तथापि प्रतिज्ञाहान्यादे-र्निग्रहस्थानस्यापि तथाभावात् तां संगतिमुपेक्ष्यार्थदूषणत्वाभिप्रायेण प्रयोगस्य साम्यादुत्तर-प्रकरणं [2]एवान्तर्भावः। तत्रान्तर्भूतायाश्च जातेः पृथक्करणे उद्देश एव प्रयोजनमुक्तम्, प्रतिज्ञाहान्याद्यपेक्षया चानुद्भटापराधतया परव्यामोहनहेतुत्वात् पराजयदशायां प्रयोक्तव्यत्व-ज्ञापनार्थं तस्मात् प्रागुद्देशः। [3]सैव संगतिरिहापीत्याह—**उद्देशेति** ॥

**छलस्य सम्यग्दूषणस्य च** इत्युपलक्षणम्, प्रतिज्ञाहान्यादेरित्यपि द्रष्टव्यम्। **न च छले** इत्युपलक्षणं तथैव, तथापि सम्यग्दूषणस्याव्युदासः, तस्यापि हेतुतो वैधर्म्येण हेत्वाभाससाधर्म्येण प्रत्यवस्थानरूपत्वादित्यत आह—**न चेति**। अयं च मात्रशब्दार्थो

---

१. प्रयोजकात् J  २. एव om A  ३. स च A

जातीनामवतारं [1]वादे प्रतिषेधता असदुत्तरत्वख्यापनेनैव **सूत्रकृता** सूचितः । **भाष्ये** जातिपद[2]व्युत्पादनप्रयोजनं दर्शयति—**जल्पे हीति** ॥ १८ ॥

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्** ॥ १९ ॥

॥ भाष्यम् ॥

विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः । विप्रतिपद्यमानः पराजयं प्राप्नोति । निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषयेऽप्यनारम्भः । परेण स्थापितं वा न प्रतिषेधति, प्रतिषेधं वा नोद्धरति । असमासाच्च नैते[3] एव निग्रहस्थाने इति ॥ १९ ॥

॥ वार्त्तिकम् ॥

**विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्** ॥ १९ ॥ अन्यथा स्थितस्यान्यथाभिहितस्य [4]अप्रतिपत्तिर्विप्रतिपत्तिः, स्वपरार्थोत्तरासंविचिरप्रतिपत्तिः । समर्थे साधने निग्रहस्थानप्राप्तौ कथमप्रतिपत्तिः विप्रतिपत्तिः[5] ? यदायं साधयिता समर्थेन साधनेनोपात्तेन परेण जात्यादिभिराकुलीकृतः[6] उत्तरं न प्रतिपद्यते, तदा कथमप्रतिपत्तिः कथं वा विप्रतिपत्तिरिति ? तदापि साधनस्यैव सामर्थ्यापरिज्ञानादसमर्थमेतत् साधनमित्यप्रतिपत्तिर्विप्रतिपत्तिरिति ॥ १९ ॥

टीका

**विप्र—नम्** ॥ १९ ॥ सूक्ष्मविषया [7]प्रतिपत्तिर्विपरीता । स्थूलविषया च कुत्सिता, कथमसौ निग्रहस्थानमित्यत आह—**विप्रतिपद्यमान** इति । अप्रतिपत्तिमाह—आरम्भविषय इति लाघवाय विप्रतिपत्त्यप्रतिपत्ती इति वक्तव्ये कस्मादसमासकरणमित्यत आह—**असमासाच्चेति** । विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिकं नाम जल्पे निग्रहस्थानमस्ति, तदपि ग्रन्थाधिक्येनावरुध्यत इत्यर्थः । आरम्भविषयेऽनारम्भ इत्यादि **भाष्यम्**, तद् व्याचष्टे—**स्वपरार्थोत्तरासंवित्तिरिति** । द्वेधा खल्वारम्भविषयेऽनारम्भो भवति, दूष्यं वा परोक्तं साधनं विप्रतिषेधहेतुं वा न प्रतिपद्यते । सेयं परार्थोत्तरासंप्रतिपत्तिः उत्तरग्रहणं साधनमप्युपलक्षयति । स्वार्थोत्तराप्रतिपत्तिस्तु साधनप्रतिषेधहेतू

१. वादे om A J　२. °पदप्रयोजनव्यु° J　३. नोभे J　४. अन्यथाप्रति° J
५. विप्रतिपत्तिः om J　६. आकुलितः J　७. विप्रति° J

परकीयौ प्रतिपद्य तत् प्रतिषेद्धुं [1]स्वकीयमुत्तरं न प्रतिपद्यत इत्यर्थः । चोदयति—स्वयं प्रयुक्ते वस्तुतः समर्थे साधने कथम् अप्रतिपत्तिर्विप्रतिपत्तिर्वेति द्रष्टव्यम् । परिहरति—तदापीति । समर्थसाधनज्ञानं साधनप्रतिपत्तिर्न साधनमात्रज्ञानमित्यर्थः ॥१९॥

॥ परिशुद्धिः ॥

निग्रहस्थानेनैव समस्तकथामुद्रणादर्थतोऽस्य पश्चादभिधानम् । तत् किमित्यत्र संगत्यनुसरणेनेत्याशयवान् सूत्रं प्रत्याहरति—विप्र—नमिति ॥ १९ ॥

यद्यपि लोकव्यवहारकथाव्यवहारयोः पुरुषस्यापराध एव निग्रहस्थानम् । अपराद्धो हि निग्रहं शास्ति खलीकारं प्राप्नोति । [2]अन्यत्र लोके शरीरविडम्बना । कथायां त्वपराधमात्रोद्भावानमात्रम् । अन्यत्र वादिनोः कामचारः । अपराधश्च कथायां विप्रतिपत्त्यप्रतिपत्तिभागद्वयपर्यवसितं तात्कालिकमतत्त्वज्ञानमेव । तथापि तस्य स्वरूपेणोद्भावयितुम् अशक्यत्वात्, निरर्थकापार्थकादिसामानाधिकरण्यानुपपत्तेश्च तदुन्नयनोपायोपलक्षणतया सूत्रं [3]व्याख्यातम् । तेन कथायां प्रवृत्तायां वादिनोरतत्त्वज्ञानज्ञापिका क्रिया निग्रहस्थानमिति सूत्रार्थः । एतच्च प्रतिज्ञाहान्यादिसामानाधिकरण्येन प्रयुक्तनिग्रहस्थानपदपदार्थालोचनया[4] । स्वरूपेण शक्योद्भावनप्रतिपादकवार्त्तिकदर्शनाच्च सुगमम्, भाष्येऽप्यनन्तरमेव स्फुटीभविष्यति ॥

स्यादेतत्, न प्रतिपत्तेर्विपरीतत्वादन्यत् कुत्सितत्वमित्यत आह—सूक्ष्मेति । [5]कथमसौ निग्रहस्थानमिति । कथमसौ स्वरूपतोऽप्रतीयमानैव सत्तामात्रेण निग्रहस्थानं भविष्यति ? न ह्यप्रतीतमेव परदारधर्षणं निग्रहाय पर्याप्तमित्यर्थः । विप्रतिपद्यमान इति । यतो विप्रतिपद्यमानः प्राप्तपराजयो भवति, अतः पराजयप्राप्तिद्वारेण उन्नेतुं शक्यते । अथ[6] पराजयप्राप्तिरेव का इत्यत उक्तम्—निग्रहस्थानं प्रतिज्ञाहान्यादि खलु स्पष्टम् पराजयप्राप्तिरिति भाष्यं स्फुटमित्यर्थः । यद्यप्यधिके विप्रतिपत्त्यप्रतिपत्ती संभवतस्तदसंभवे निग्रहस्थानत्वानुपपत्तेः, तथापि विप्रतिपन्नवस्तुगोचरत्वेन न तु तत्रेति[7] तदनिग्रहस्थानत्वभ्रमनिवारणार्थमसमासकरणमित्यर्थः[8] । अधिकं नामेत्युपलक्षणम्, पुनरुक्तमपि द्रष्टव्यम् । दूष्यं वा इत्यागामिपक्षापेक्षया वाशब्दः ॥१९॥

---

१. ॰षेधं J २. स तु लोक इति M ३. व्याख्येयम् M ४. लोचनायाः M ५. ॰मसौ निग्रहस्थानमिति कि॰ om A ६. अतः M ७. तत्त्रेति M ८. ॰करणानुसमानाधिकरण्यमित्यर्थः M

॥ भाष्यम् ॥

किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ[1] सिद्धान्तवद्भेद इत्यत आह—

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥२०॥

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्, तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम्। नानाकल्पो विकल्पः। विविधो वा कल्पो विकल्पः। तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम्। शेषस्तु विप्रतिपत्तिरिति ॥

त इमे प्रमाणादयः पदार्था उद्दिष्टा यथोद्देशं च लक्षिता यथालक्षणं च परीक्षिष्यन्त इति त्रिविधा [2]चास्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥२०॥

॥ वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य द्वितीयाह्निकम् ॥
समाप्तश्चाऽयं प्रथमोऽध्यायः ।

॥ वार्त्तिकम् ॥

ता एता जातयः कियत्यो भवन्ति, कियन्ति वा निग्रहस्थानानि [3]इति वस्त्ववधारणार्थमाह—तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् इति। ॥२०॥ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पाद् बह्वो जातयो बहुनि च निग्रहस्थानानि भवन्तीति। कतमा जातयः साधर्म्यप्रत्यवस्थानात् कतमाश्च वैधर्म्यप्रत्यवस्थानात् कतमानि निग्रहस्थानानि विप्रतिपत्तिविकल्पात् कतमानि वाप्रतिपत्तिविकल्पाद् भवन्तीति [4]प्रतियोगे विशेषलक्षणेषु उत्प्रेक्षणीयानीति। एते प्रमाणादयः पदार्था उद्दिष्टा लक्षिताश्च। यथोद्देशं च यथालक्षणं च परीक्षा वर्त्तिष्यत इति।

तन्त्रप्रतिज्ञासंसारस्तन्निवृत्तिश्च संविदा ।
उद्देशो लक्षणं चैव तत्त्वानामिह कीर्तितम् ॥ २० ॥

॥ इति औद्द्योतकरे न्यायवार्त्तिके प्रथमाध्यायस्य द्वितीयाह्निकम् ॥
॥ समाप्तः प्रथमोऽध्यायः ॥

॥ टीका ॥

**सूत्रान्तरमवतारयितुं भाष्यकार** आह—**किं पुनरिति**। यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदः, तथापि लक्षणाभेदाभिप्रायेणाभेद उक्तः। **तद्वि—**

---

१. भेद आहोस्वित् J २. तन्त्रार्थसमाप्तिर्वेदि° J ३. इत्यवधा° C ४. प्रतियोगं C

**त्वम्** ॥२०॥ **नाना कल्प** इति स्वरूपतः, **विविध** इति प्रकारतः। **यथालक्षणमिति** यथास्वरूपमित्यर्थः ॥

अध्यायार्थं संक्षिप्याह **वार्त्तिककारः—तन्त्रप्रतिज्ञेति**। **तन्त्रस्य** शास्त्रस्य **प्रतिज्ञा** प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति **सूत्रम्**। शास्त्रमेव हि तत्त्वज्ञानमिति। **संसारः** दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामिति। **तन्निवृत्तिश्च संविदा** उत्तरोत्तरापाये तदनन्तराभावाद् अपवर्ग इति। तस्माद् यः प्रमाणादिसूत्रेणोद्देशः, तत्परिकरो द्वितीयं **सूत्रम्, द्वाभ्यामुद्देशः**। **शेषं** सुबोधमिति ॥ २० ॥

॥ इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां

प्रथमाध्यायस्य द्वितीयाह्निकम् ॥

॥ समाप्तः[१] प्रथमाध्यायः ॥

## ॥ परिशुद्धिः ॥

**यथोद्देशमिति**—यथोद्देशक्रमं भवतु लक्षणम्, न तु लक्षणक्रमानतिक्रमेण[२] परीक्षा भविष्यति, प्रथमत एव व्यतिक्रमादित्यत आह—**यथालक्षणं यथास्वरूपमित्यर्थ** इति। नन्वेवं सति प्रथमद्वितीयसूत्रे तात्पर्यान्तरेणावष्टब्धत्वान्न त्रिविधशास्त्रप्रवृत्त्यन्तर्भाविनी। आर्थ्या वृत्त्या प्रथमसूत्रस्य उद्देशान्तर्भावेऽपि द्वितीयसूत्रमलग्नकम् असंगतिकत्वादित्यत आह— **तस्मादिति**। औपोद्घातिक्या संगत्या प्रथमोद्देशसङ्गतमेव द्वितोयसूत्रमर्थात्। श्रुत्या च प्रयोजनपरतयेति न प्रकरणासंगतिरित्यर्थः। **शेषं सुबोधमिति**। **कीर्त्यत**[३] इति कीर्तितम्। तथा च यथायोगमभिसंबन्ध इति सुखबोधमित्यर्थः ॥

अनभ्यासज्ञेयाच्छ्रुतिविवरगर्भेषु लघुतः
सुखग्राह्यान्मन्दैः कुसुमसुकुमारात् प्रथमतः।
मनः श्रीमद्वाचस्पतिवचनविन्यासविसरात्
त्रसत्यद्याप्येतन्मुहुरिव मुहुर्निर्वृतमपि[४] ॥ २० ॥

॥ इति पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम् ॥

॥ इत्यौदयनतात्पर्यपरिशुद्धौ प्रथमाध्यायस्य द्वितीयाह्निकम्

समाप्तः[४] प्रथमाध्यायः ॥

---

१. मङ्गलं महाश्रीः ॥ J २. लक्षणक्रमेग M ३. वार्तिकश्लोके कीर्तितमित्यत्र कीर्त्यत इति परिशुद्धिसंमतः पाठः। ४. °र्वृतमिव A; संवत् १६७४ समये ग्रहण शुदि ११ शुक्रवार लिखितं वाराणस्यां मोहन ब्राह्मण दुबे रघुनाथवाजपेयी कल्याण नातिपुत्रा चरंजीव १८२२ ग्रन्थसंख्या २५०० M